[' तदैक्षत ' इति ईक्षणस्य गौणत्वाशङ्का-परिहारौ]

अथ स्यात्—[1]न चेतनगतं मुख्यम्[1] ईक्षणम् इहोच्यते, अपि तु प्रधानगतं गौणमीक्षणम् ;

' तत्तेज ऐक्षत ' (छां. उ. 6-2-3)

' ता आप ऐक्षन्त ' (छां. उ. 6-2-4)

इति गौणेक्षणसाहचर्यात् । भवति च अचेतनेष्वपि चेतनधर्मोपचारः ; यथा—

' वृष्टिप्रतीक्षाः शालयः '

' [2]वर्षेण बीजं[2] प्रतिसञ्जहर्ष ' (वा. रा. सु. का. 26-6)

इति । 'अतः गौणमीक्षणम्' इति इमामाशङ्काम् अनुभाष्य परिहरति—

## गौणश्चेन्नात्मशब्दात् ॥ १-१-६ ॥

---

**अथेति** उत्तरसूत्रमवतारयितुम् ईक्षणस्य गौणत्वं शङ्कते । **चेतनगतम्**—चेतनत्वानुगुणम् । **इहेति** । प्रकरणम् आलोचनीयम् इति भावः । . **प्रधानगतम्**—अचेतनत्वानुगुणम् । .धानशब्दः, प्रथमेक्षणस्य तेजःप्रभृतिकार्याचिद्गतत्वायोगात् । प्रायदर्शनाय [' तत्तेजः ' 'ता आपः' इति] वाक्यद्वयमुपात्तम् । 'अग्र्यप्राय'न्यायोऽपि बाधकाभावे जीवतीति भावः । ' सेयं देवता ' इति देवताशब्दोऽपि अनेनैव न्यायेन, ' इमास्तिस्रो देवताः ' इतिवत्, अचिद्विषयत्वौचित्यात् न गौणत्वबाधकः इति भावः (श्रु.प्र.) ।

[अग्र्यप्रायन्यायः—'प्राये वचनाच्च' (पू.मी.सू. 2-2-12) इति सूत्रे] प्रधानकर्मप्राये वचनम्, प्रधानकर्मताम् उपोद्बलयति । यथा अग्र्यप्राये लिखितं दृष्ट्वा, ' भवेदयमग्र्यः ' इति

---

[सूत्रार्थः । **गौणः चेत्**—(सच्छब्दवाच्यान्वयी ईक्षधात्वर्थः न सङ्कल्पात्मको मुख्यः ; किन्तु अचेतनान्वययोग्यः सृष्ट्यौन्मुख्यरूपः) अमुख्यः इति कथनं तु, **न**—युक्तं न भवति, **आत्मशब्दात्**—(तस्मिन्नेव सच्छब्दवाच्ये वस्तुनि मुख्येक्षणान्वययोग्यचेतनार्थकस्य) ' आत्म'-शब्दस्य 'ऐतदात्म्यम्' इति प्रयोगात् ।]

सङ्कल्पस्त्वथ गौणः स्यात् सद्भवेदानुमानिकम् ।
इति चेन्नात्मशब्देन सच्छब्दो हि विशेष्यते ॥ (ब्र. प. मा. ६)

---

[1] चेतनगतमुख्यम्—ध [2] बीजं—द.

**यदुक्तम् — गौणेक्षणसाहचर्यात् , सतोऽपि ईक्षणव्यपदेशः, सर्गनियतपूर्वावस्थाभिप्रायो गौणः — इति,**

**तन्न ;**

**'ऐतदात्म्यमिदं [1]सर्वम् । तत्सत्यं', स आत्मा'** (छां. उ. 6-8-7)
**इति, सच्छब्दप्रतिपादितस्य 'आत्म'शब्देन व्यपदेशात् ।**

**एतदुक्तं भवति — 'ऐतदात्म्यमिदं सर्वं ....... स आत्मा' इति चेतनाचेतनप्रपञ्चोद्देशेन [2]सतः आत्मत्वोपदेशोऽयम् , न अचेतने प्रधाने सङ्गच्छते — इति ।**

**अतः तेजोऽबन्नानामपि परमात्मैव आत्मेति, तेजःप्रभृतयोऽपि शब्दाः परमात्मन एव वाचकाः । तथा हि—**

---

मतिः (पू.मी.शा.भा.) । श्रेष्ठप्रायलेख्ये लिखितस्य श्रेष्ठत्वम् अग्र्यप्रायन्यायः (भा.प्र.) । **चेतनधर्म**शब्दः, ईक्षणतुल्ययोगक्षेमहर्षादिधर्मान्तरसङ्ग्रहाय । लोके शास्त्रे च प्रयोगद्वयं दर्शितम् । शङ्कायाः उत्सूत्रत्वाभावात् **अनुभाष्य** इत्युक्तम् ।।

**ईक्षणव्यपदेशः** इति, प्रकृतः ईक्षतिः पुलिङ्ग'गौण'शब्दविशेष्यः, इत्यभिप्रायेणोक्तम् । 'गौण ईक्षतिर्न' इत्युक्ते, विशेष्यप्रतिक्षेपशङ्काव्युदासाय **यत्-तच्छब्दाभ्यां** विशेषणनिषेधपरत्वेन व्याख्यातम् । **सर्गेति** । गौणः अर्थः सर्गप्रागवस्था । तत्र नियतपूर्वत्वलक्षणं कार्यानुरूप्यं गुणयोगः इत्यर्थः । **तन्नेति** । यत् गौणत्वम् उक्तं तत् न इत्यर्थः । **सच्छब्देति** । 'ऐतदात्म्यम्' इत्यत्र **एतच्छब्दस्य**, 'स आत्मा' इत्यत्र 'सः' इति पदस्य च प्रकृतपरामर्शित्वात् इति भावः ।

**एतदुक्तमिति** । [उक्तवाक्ये] आत्मशब्दोऽपि, 'मृदात्मको घटः' 'घटस्य मृत् आत्मा' इतिवत् स्वरूपानतिरिक्तार्थः स्यात् इत्यत्रोत्तरम् । **चेतनाचेतनेति** । 'इदं सर्वम्' इति सर्वशब्दः चिदचिदात्मकजगद्गोचरः ; सर्वशब्दासङ्कोचस्य स्वतः प्राप्तत्वात् , 'सन्मूलाः सर्वाः प्रजाः' इति पूर्व-वाक्यैकार्थ्यात् , 'इदं सर्वमसृजत' 'सच्च त्यच्चाऽभवत्' 'विज्ञानं चाऽविज्ञानं च' इति श्रुत्यन्तरैकार्थ्याच्च इति भावः । **न अचेतने** इति । न हि चेतनस्य अचेतनेन स्वरूपैक्यं सम्भवति इत्यर्थः ।

---

[1] सर्वम् — द. न. [2] स त आत्मेत्यात्म — वा

'हन्ताऽहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छां. उ. 6-3-2)

इति परमात्मानुप्रवेशादेव तेजःप्रभृतीनां वस्तुत्वं तत्तन्नामभाक्त्वं चेति,

'तत्तेज ऐक्षत' (छां. उ. 6-2-4)

'ता आप ऐक्षन्त' (छां. उ. 6-2-4)

इत्यपि, मुख्य एव ईक्षणव्यपदेशः । अतः साहचर्यादपि,

'तदैक्षत' (छां. उ. 6-2-3)

इत्यत्र 'गौणत्वाशङ्का'[1] दूरोत्सारिता—इति सूत्राभिप्रायः ।। ६ ।।

[कारणवस्त्वसाधारणेन मोक्षप्रदत्वेन 'सतः' परमात्मत्वम्]

**इतश्च, न प्रधानं सच्छब्दप्रतिपाद्यम्—**

---

गौणेक्षणसाहचर्यम् अभ्युपगम्य दूषणम् उक्तम् । अथ तदेव नास्तीत्याह—**अत** इत्यादिना । **अतः**—चिदचिदात्मकप्रपञ्चं प्रति आत्मत्वात् । **तेजोऽबन्नानामपीति** अपि-शब्दस्य, 'न हि किञ्चिदपि अतदात्मकम्' इत्यभिप्रायः । यदाश्रयतया प्रथमम् ईक्षणम् मुख्यं, स एव, इति एवकाराभिप्रायः । **तेजःप्रभृतयोऽपीति** अपिशब्दस्य, सच्छब्दवत् इति भावः । **परमात्मन एवेति** । विशेष्यतया प्राधान्येन प्रतिपाद्यः परमात्मैव ; तेजःप्रभृतयस्तु द्वारमात्रम् इति भावः । **वस्तुत्वम्**—तद्रूपवस्तुत्वम् । तेजसो वस्तुत्वं—तेजस्त्वम्, अपां वस्तुत्वम्—अप्त्वम्, पृथिव्याः वस्तुत्वं—पृथिवीत्वम्, देवमनुष्यादीनां वस्तुत्वं—देवत्व-मनुष्यत्वादिकम् तत्तदवस्थाभाक्त्वम् इत्यर्थः । **नामभाक्त्वम्**—नामवाच्यत्वम् । **इतिशब्दः** हेतुपरः । [**अतः**—तेज आदिष्वपि ईक्षणस्य मुख्यत्वादेव ।] **साहचर्यादपि** इति **अपिशब्दः** गौणत्वशङ्काहेतुसमुच्चयपरः । **दूरोत्सारितेति** । गौणेक्षणसाहचर्ये सत्यपि, आत्मशब्दात् प्रथमेक्षणम् अगौणम्, आत्मशब्दादेव गौणेक्षणसाहचर्यम् असिद्धं च इत्यभिप्रायः ।

अस्मिन् अधिकरणे व्युत्पाद्यम्—प्रतिज्ञा-दृष्टान्तयोः हेत्वनाक्षेपकत्वं, मुख्यामुख्यार्थानुग्राहकेषु मुख्यानुग्राहकस्य अनुरोद्धव्यत्वं च—इति सूत्रद्वये स्पष्टम् (श्रु.प्र.) ।।६।।

**इतश्चेति** अवान्तरसाध्यविषयत्वशङ्का व्युदस्यते । कारणत्वौपयिकेक्षणधर्मनिरूपणेन परमात्मत्वं सतः समर्थितम् । अथ 'कारणं तु ध्येयः' इति कारणवस्त्वसाधारणमोक्ष-प्रदत्वधर्मणः परमात्मत्वं साध्यते इति सङ्गतिः ।

---

[1] गौणत्वादिशङ्का—अ, द.

# तन्निष्ठस्य मोक्षोपदेशात् ॥ १-१-७ ॥

[तन्निष्ठस्येति सूत्रस्य अर्थविवरणम्]

मुमुक्षोः श्वेतकेतोः,

'तत् त्वमसि' (छां. उ. 6-8-7)

इति सदात्मकत्वानुसन्धानम् उपदिश्य, तन्निष्ठस्य

'तस्य तावदेव चिरं यावन्न विमोक्ष्ये, अथ [1]सम्पत्स्ये[1]' (छां. उ. 6-14-2) इति 'शरीरपातमात्रान्तरायः ब्रह्मसम्पत्तिलक्षणो मोक्षः' इत्युपदिशति । यदि च प्रधानम् अचेतनं कारणमुपदिश्येत; [2]तदा तदात्मकत्वा[2]नुसन्धानस्य मोक्षसाधनत्वोपदेशः [3]नोपपद्यते[3] ।

'यथाक्रतुरस्मिँल्लोके पुरुषो भवति, तथेतः प्रेत्य भवति' (छां. उ. 3-14-1)

---

सूत्रे **तन्निष्ठस्य** इति पदं 'तस्य तावत्' इति श्रुतौ 'तस्य' इति पदस्य व्याख्यानम् ।

**मुमुक्षोः** इति पदेन अर्वाचीनफलकदृष्टिविधिसम्भवात्, चेतने कृत्स्नजगदुपादानतयोत्कृष्टप्रधानदृष्टिविधिरयम् इति शङ्का निरस्ता । **सदात्मकत्वेति** । सूत्रे तच्छब्दः, 'सदात्मकत्वोपदेशपर'तत्त्वमसी'तिवाक्यगततच्छब्दः प्रकृतसद्विषयः' इति ज्ञापनपरः, इत्यभिप्रायः । **अनुसन्धानशब्देन** निष्ठाशब्दार्थः उक्तः । **अन्तरायशब्देन** विलम्बो लक्ष्यते । शरीरपातावधि विलम्बः इत्यर्थः । **ब्रह्मसम्पत्तिलक्षण** इति । 'अथ सम्पत्स्ये' इति सम्पत्तेः, 'सता सोम्य तदा सम्पन्नो भवति' इति वाक्यान्तरप्रतिपन्नं ब्रह्मैव कर्मेति भावः । **मोक्ष** इति । सौत्रस्य 'मोक्ष'शब्दस्य शरीरपातपूर्विका ब्रह्मसम्पत्तिरेवार्थः, न तु शरीरपातमात्रम् इत्यभिप्रायः।

**यथाक्रतुरित्यादि** । तीर्थक्षेत्रसेवादिवत् शास्त्रबलात् अचिदुपासनस्य मोक्षोपयोगित्वं किं न स्यात्? इति शङ्कायामिदम् । उपासनानुरूपफलभाक्त्वं यथाक्रतुरिति श्रुत्यर्थः । ततश्च हेयोपासनात् हेयप्रहाणानुपपत्तिः ।

---

[सूत्रार्थः । **तन्निष्ठस्य**—सच्छब्दाभिधेयार्थोपासकस्य पुरुषस्य, **मोक्षोपदेशात्**—अपवर्गप्राप्तेः श्रुत्या ज्ञापनात्, (सच्छब्दाभिधेयम्; मोक्षजनकोपासनयोग्यः अर्थ एव, परं ब्रह्मैव, न प्रधानम् ।]

सदर्थोपासकस्यात्र मोक्षोक्तेर्ब्रह्म तद्भवेत् ।
प्रधानप्राप्तिरिति चेन्मुक्तिर्नानन्दतां भजेत् ॥ (ब्र.प.मा. ७)

---

1 सम्पत्स्यते—श 2 तदात्मकत्वा—इ 3 नोपपद्येत—वा

इति, तन्निष्ठस्य अचेतनसम्पत्तिरेव स्यात् । न च, मातापितृसहस्रेभ्योऽपि [1]वत्सलतरं[1] शास्त्रम्, एवंविधतापत्रयाभिहतिहेतुभूताम् अचित्सम्पत्तिम् उपदिशति ।

प्रधानकारण[2]वादिनोऽपि हि[2] प्रधाननिष्ठस्य मोक्षं नाऽभ्युपगच्छन्ति ।। ७ ।।

[अचेतनीभूतप्रधानज्ञानस्य हानार्थमुपदेश्यत्वाशङ्कापरिहारः]

इतश्च, न प्रधानम् ;

## हेयत्वावचनाच्च ।।१-१-८।।

[सूत्रार्थविवरणम्]

यदि प्रधानमेव कारणं [3]सच्छब्दाभिहितं भवेत्[3]; तदा मुमुक्षोः श्वेतकेतोः

---

**अचेतनसम्पत्तिः**—अचित्प्राप्तिः, संसारित्वम् । कर्मकृताचित्सम्बन्धो हि संसारः । सम्पत्तिशब्दस्य प्राप्त्यर्थत्वम्, 'तापत्रयाभिहतिहेतुभूताम् अचित्सम्पत्तिम्' इत्यनन्तरभाष्येण व्यक्तम् । **मातापित्रिति** । मातापितरौ एकस्मिन् जन्मनि ऐहिकपोषणमात्रपरौ । शास्त्रं तु अनेकेषु जन्मसु ऐहिकामुष्मिकसर्वविधरक्षणपरम् इति भावः । 'शास्त्रं हि वत्सलतरं मातापितृसहस्रतः' इति पुराणवचनं स्मारितम् । **न च....उपदिशति** इति । शास्त्रस्य प्रयोजनपर्यवसानं न स्यादिति भावः । एवं श्रुतिसिद्धन्यायविरोध-प्रयोजनपर्यवसानाभावाभ्यां मोक्षोपयोगित्वं निरस्तम् ।

**नाऽभ्युपगच्छन्तीति** । 'व्यक्ताव्यक्तज्ञविज्ञानात्' (सां. का. २) इति वदताऽपि साङ्ख्येन प्रधानस्य व्याधेरिव परिज्ञानमात्रं विवक्षितम् ; न तु उपासनम् इति भावः ।। ७ ।।

**इतश्च नेति** : 'तत्त्वमसि' इति न सदात्मकत्वानुसन्धानोपदेशः ; किन्तु 'स्थूलोऽहम्'

---

[सूत्रार्थः । **हेयत्वस्य**—(सच्छब्दाभिधेये मोक्षविरोधिताप्रयुक्तस्य) त्याज्यत्वस्य, **अवचनाच्च**—श्रुतौ अनुक्तत्वादपि हेतोः (सच्छब्दवाच्यम् हेयं प्रधानं न) ।।]

[(अथवा) **हेयत्वेन**—(मुमुक्षोः स्वस्मिन् कारणीभूतसदात्मकत्वानुसन्धानस्य) त्याज्यत्वेन, **अवचनाच्च**—अनुपदेशादपि, (सच्छब्दार्थः न प्रधानम्) ।।]

सच्छब्दवाच्यं न ध्येयं हेयत्वादित्यनुक्तितः ।
ध्येयत्वेनैव चोक्तत्वाद्ब्रह्मानन्दः सदुच्यते ॥ (ब्र. प. मा. ८.)

---

1 वत्सलतरं हि-अा, द. 2 वादिनोऽपि हि तथा-ध, वादिनोऽपि-न
3 सच्छब्दाभिहितं-च

तदात्मकत्वम्, मोक्षविरोधित्वात् [1]हेयत्वेनैव[1] उपदेश्यं स्यात् । न च तत् क्रियते, प्रत्युत [2]उपादेयत्वेनैव[2],

'तत्त्वमसि' (छां. उ. 6-8-7)

'तस्य तावदेव चिरम्' (छां. उ. 6-14-2)

इत्युपदिश्यते ॥८॥

[सच्छब्देन प्रधानप्रतिपादने एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधः]

इतश्च, न प्रधानम्—

## प्रतिज्ञाविरोधात् ॥१-१-९॥

प्रधानकारणत्वे, प्रतिज्ञाविरोधश्च भवति । वाक्योपक्रमे हि एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातम् । तच्च कार्य-कारणयोः अनन्यत्वेन, कारणभूतसद्विज्ञानात्

---

इत्यादिदेहात्मभ्रमानुवादः । अतः सच्छब्दवाच्याचेतनस्य मुमुक्षुणा ज्ञातव्यत्वं हानार्थम्—इति शङ्कया अनन्तरसूत्रसङ्गतिः इत्यभिप्रायः ।

प्रत्युतेति । 'स्थूलोऽहम्' इत्याद्यनुसन्धानस्येव, सदात्मकत्वानुसन्धानस्य न हेयत्वं प्रतिपाद्यते ; अपि तु उपादेयत्वमेवोच्यते । तच्च प्रधानपरत्वे अनुपपन्नम् ; प्रधान-प्रस्तावेषु 'जहात्येनाम्' इति, तस्य हेयत्वेनैव प्रतिपादनात् इत्यर्थः । [तथा च] परं प्रति न आनुकूल्याभावमात्रम् किन्तु प्रातिकूल्यं चाऽस्ति इत्याशयः (श्रु. प्र.) ॥ ८ ॥

प्रतिज्ञाविरोधादिति । उपक्रमविरोधे सति, उत्तरवाक्यगतहेतूनां दौर्बल्यात्, प्रधानमेव प्रतिपाद्यमिति शङ्कां परिहरति [सूत्रकारः] ।

प्रधानेति । त्वन्मतानुगुणत्वेन यदुक्तम्, तदेव त्वन्मतप्रतिकूलमिति सूत्रकारहृदयम् इति भावः । प्रतिज्ञातमिति । प्रतिज्ञावाक्ये सर्वशब्दाभावेऽपि 'कस्मिन्नु भगवो विज्ञाते, सर्वमिदं विज्ञातं भवति' 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते सर्वमिदं विज्ञातम्'

---

[सूत्रार्थः । प्रतिज्ञायाः—सच्छब्दवाच्यार्थविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः श्रुतिगतायाः, विरोधात्—सर्वानात्मकप्रधानकारणतावादे व्याघातप्रसक्तेः, (सच्छब्दबोध्यं प्रधानं, न भवति)।।

कारणस्य तु विज्ञानात्कार्यज्ञानं भवेदिति ।
प्रतिज्ञाया विरोधाच्च प्रधानं तु न कारणम् ॥ (ब्र. प. मा. ९)

---

[1] हेयत्वेन-थ, ध     [2] उपादेयत्वेन-थ

[1]तत्कार्यभूतचेतनाचेतन[1]प्रपञ्चस्य ज्ञाततयैव, उपपादनीयम् । तत्तु, प्रधानकारणत्वे चेतनवर्गस्य प्रधानकार्यत्वाभावात्, प्रधानविज्ञानेन चेतनवर्गविज्ञानासिद्धेः, विरुध्यते ॥ ९ ॥

[लयाधिष्ठानस्य कारणत्वोपपत्तिः]

इतश्च, न प्रधानम्—

## स्वाप्ययात् ॥१-१-१०॥

[1]तदेव[1] सच्छब्दवाच्यं प्रकृत्य आह—

'स्वप्नान्तं मे सोम्य विजानीहीति । यत्रैतत्पुरुषः स्वपिति नाम,

इति समानप्रकरणवाक्यैकार्थ्यात्, 'सर्वाः प्रजाः' इति वक्ष्यमाणस्वारस्याच्च '**सर्वविज्ञानं तिज्ञातम्**' इत्युक्तम् । [अत्र] सर्वविज्ञानं 'सर्वं मृण्मय'मितिवत्, न कार्यभूतसर्वाचिद्विज्ञानमेव ; 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः' इति सर्वशब्दसमानाधिकरणप्रजाशब्दस्वारस्यावगतानां चेतनानामपि सन्मूलतया ज्ञातव्यसर्वकार्यान्तर्भावात् इति भावः । **कार्य-कारणयोरिति** । न हि चिदचितोः इति भावः । **तत्कार्येत्यादि** । मृत्पिण्ड-तत्कार्यादिदृष्टान्तबलात् 'सन्मूलाः' इति वाक्ये प्रजाशब्दस्वारस्याच्च चेतनस्याऽपि कार्यतयैव ज्ञातृत्वं वक्तव्यमिति भावः देवदत्तज्ञानेन ग्रामविज्ञानवत् नात्र सर्वविज्ञानम् औपचारिकम् ; औपचारिकत्वे सर्वविज्ञानस्य लोकदृष्टत्वेन 'कथं नु भगवः ?' (छां.उ. 6–1–3) इति प्रश्नायोगात्, अनन्यभूतमृत्-तत्कार्यादिदृष्टान्तमुखेन मुख्यतयैव सर्वविज्ञानोपपादनदर्शनाच्च इति भावः ।। ९ ।।

**इतश्चेति** । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं कार्य-कारणभावनिबन्धनम् । सुषुप्तौ परमात्मनि चेतनस्य प्रलयश्च तन्निबन्धनः इति, कार्य-कारणभावनिबन्धनत्वसाम्यात् सङ्गतं सुषुप्तौ लयं हेतुत्वेनाऽऽह इत्यभिप्रायः (श्रु.प्र) ।

**तदेवेति** । जगत्कारणवस्तुविषय एव, अत्राऽपि सच्छब्दः इत्यभिप्रायः । अतः सच्छब्दस्य जीवोपस्थापकस्वशब्दसमानविषयत्वनिबन्धनार्थान्तरत्वशङ्काव्युदासः । **यत्रेति** ।

[सूत्रार्थः । **स्वाप्ययात्**—(जीवस्य सुषुप्तिकाले) स्वकारणे सच्छब्दवाच्ये लयस्य श्रुतौ कथनादपि, सच्छब्दवाच्यं **न अशब्दम्**—जीवकारणत्वान्वयायोग्यं प्रधानं, न भवति ॥]

कारणे लयवाक्याच्च स्वात्मनो लयकारणम् ॥
ब्रह्मैवेति प्रधानं तु सच्छब्देन न कथ्यते ॥ (ब्र.प.मा. १०)

[1] तत्कार्यभूताचेतन—थ. [1] तथैव—थ,

सता सोम्य तदा सम्पन्नो भवति । [1]स्वमपीतो[1] भवति ।
तस्मादेनं स्वपितीत्याचक्षते, स्वं ह्यपीतो भवति' (छां. उ. 6-8-1)

इति, सुषुप्तं जीवं सता सम्पन्नम्, 'स्वमपीतः—स्वस्मिन् प्रलीनः' इति व्यपदिशति । प्रलयश्च स्वकारणे लयः । न च अचेतनं प्रधानं, चेतनस्य जीवस्य कारणं [2]भवितुमर्हति[2]। [स्वमपीतो भवति—आत्मानमेव, जीवः अपीतो भवतीत्यर्थः । चिद्वस्तुशरीरकं तदात्मभूतं ब्रह्मैव [3]जीवशब्देन[3] अभिधीयते इति, नाम-रूपव्याकरणश्रुत्या उक्तम् । तत् जीवशब्दाभिधेयं ब्रह्म सुषुप्ति[4]कालेऽपि[4] प्रलयकाल इव नाम-रूप[5]परिष्वङ्गाभावात्[5] केवलसच्छब्दाभिधेयमिति,

'सता सोम्य तदा सम्पन्नो भवति, स्वमपीतो भवति' (छां. उ. 6-8-1)

इत्युच्यते । तथा समानप्रकरणे, नाम-रूपपरिष्वङ्गाभावेन प्राज्ञेनैव परिष्वङ्गात्,

'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद, नान्तरम्' (बृ. उ. 6-3-21)

इत्युच्यते । आमोक्षात् जीवस्य नाम-रूपपरिष्वङ्गादेव हि स्वव्यतिरिक्तविषयज्ञानोदयः सुषुप्ति[6]काले[6] हि नाम-रूपे विहाय सता संपरिष्वक्तः, पुनरपि [7]जागरदशायां[7] नाम-रूपे परिष्वज्य, तत्तन्नामरूपो भवतीति, श्रुत्यन्तरे स्पष्टमभिधीयते—

'यदा [8]सुप्तः[8] स्वप्नं न [9]कश्चन[9] पश्यति, [10]अथाऽस्मिन्[10] प्राण [11]एवैकधा[11] भवति' (कौषी. उ. 4-39)

---

यदेत्यर्थः । **स्वस्मिन् प्रलीन** इति । 'स्वम्' इति द्वितीया, 'सता' इति तृतीया च फलतः 'सति सम्पद्य' इति सप्तम्यनुगुणार्थे । व्यपदेशभेदस्तु धातुस्वभावभेदात् इत्यभिप्रायः । अपीतेः प्राप्तिरूपत्वात् 'स्वम्' इति द्वितीयानिर्देशः । 'ब्रह्म अप्येति' इति हि श्रुत्यन्तरम् । साहित्यसद्भावात् 'सता' इति तृतीयानिर्देशः । एवं सम्पत्ति-अप्ययशब्दयोः प्रलयपरतया ऐकार्थ्यम्, स्व-सच्छब्दयोश्च प्रलयस्थानपरतया ऐकार्थ्यं च उक्तम् । **प्रलयश्चेति** । कार्यतारूपविसदृशावस्थाप्रहाणेन कारणान्तर्भावो हि लयः । **अचेतनमिति** । अचित्त्वात् इत्यर्थः (श्रु. प्र.) ।

---

[1] स्वमपीतं—थ [2] भवति—आ [3] जीवशब्देनाऽपि—आ, वा,
[4] काले—द [5] विभागपरिष्वङ्गाभावेन—वा, परिष्वङ्गभावेन—इ [6] कालेऽपि—वा
[7] जागरणदशायां—आ, थ, जाग्रद्दशायां—वा [8] सुप्तः—आ, इ
[9] कथञ्चन—आ, इ, ख, ग, घ [10] अथ हास्मिन्—आ [11] एव हि एकधा—धः

'एतस्मादात्मनः प्राणा '[1]यथायतनं[1] विप्रतिष्ठन्ते' (कौषी. उ. 4-40)

[2]तथा[2]—

'त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा दंशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति' (छां. उ. 6-9-3)

इति ।] तथा [3]सुषुप्तं जीवम्[3]—

'प्राज्ञेनाऽऽत्मना सम्परिष्वक्तः' (बृ. उ. 6-3-21)

इति च वदति । तस्मात्, सच्छब्दवाच्यः परं ब्रह्म, 'सर्वज्ञः परमेश्वरः[4] पुरुषोत्तम एव । तदाह वृत्तिकारः—

'सता सोम्य तदा सम्पन्नो भवतीति सम्पत्त्यसम्पत्तिभ्याम् एतदध्यवसीयते । प्राज्ञेनाऽऽत्मना सम्परिष्वक्तः इति चाह' (बो. वृ.)

इति ॥१०॥

---

[कुण्डलितोऽयं भागः वेदान्तसारग्रन्थस्थः अर्थवैशद्याय अनुमन्धीयमानः क्रमेण श्रीभाष्ये एव प्रक्षिप्तः ।]

**तथा सुषुप्तमिति** । सृज्यदेहेन्द्रियानपेक्षेक्षणादिगुणकपरमकारणविषयत्वात् तत्संवादिश्रुत्यन्तरानुगुण्याच्च, नाऽत्र सच्छब्दः अतिसङ्कुचितज्ञानसूक्ष्मावस्थजीवमात्रविषयः इत्यभिप्रायः । **सर्वज्ञ**शब्दः जीवव्यावृत्त्यर्थम् । **प्राज्ञेनात्मना** इति हि श्रुतिः 'तदैक्षत' इत्येतत्संवादिनी । **परमेश्वर**शब्दः अप्ययेऽपि जीवनियन्तृत्वज्ञापनार्थम्, ईश्वरोत्तीर्णतत्त्वव्युदासार्थं च । **पुरुषोत्तम**शब्दः सुषुप्तपुरुषवैलक्षण्यपरः, देवताविशेषपरश्च । **सम्पत्त्यसम्पत्तिभ्यामिति** । 'सति सम्पद्य न विदुः सति सम्पत्स्यामह' इति 'सत आगम्य न विदुः, सत आगच्छामह इति' इत्युक्ताभ्यां सम्पत्तिनिर्गमाभ्यामित्यर्थः । तस्य सम्पत्तिर्नाम बहिर्मुखज्ञानप्रसरविरहितजीवरूपेण अवस्थानम् । निर्गमो नाम बहिर्मुखज्ञानप्रसरः । स्वाप्ययशब्देन असम्पत्तिरपि अभिप्रेतेति वृत्तिकारस्य भावः **स्व**शब्दः जीवविशिष्टपरमात्मपरः। अतः, 'स्वमपीतो भवति' इति श्रुतेः, मनुष्यादिनामरूपाभिमानरागलोभाद्यनुगुणबहिर्मुखज्ञानप्रसरवज्जागरितावस्थजीवविशिष्टः परमात्मा देव मनुष्यादिनामरूप-राग-द्वेष-लोभ-मोहाद्यौपाधिकबाह्याभ्यन्तराकाराभिमानकालुष्यविरहितजीवशरीरकः सन् आत्मन्यन्तर्भूतः इत्यर्थः । तस्मात् **स्वाप्ययः** औपाधिकाकारानभिमानवज्जीवविशिष्टतारूपकारणावस्थाश्रये स्वात्मनि अवस्थानम्, इत्युपपन्नम् । अवस्था च कादाचित्कधर्मः । **एतत्**—ब्रह्मकारणकत्वम् (श्रु.प्र) ॥ १० ॥

---

[1] यथायथं—आ [2] यथा—आ, तदा—वा [3] सुषुप्तं—द, [4] सर्वज्ञः—थ,

[ कारणं परमात्मैवेति श्रुत्यन्तरैरुपपादनम् ]

इतश्च, न प्रधानम्—

## गतिसामान्यात् ॥ १-१-११ ॥

'आत्मा वा इदमेक एवाऽग्र आसीत् नाऽन्यत् किञ्चन मिषत् । स ईक्षत लोकान्नु सृजा इति' । (ऐत.उ. 1-1)

'स इमाँल्लोकानसृजत' (ऐत. उ. 1-2)

'आत्मन आकाशः सम्भूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी' । (तै. उ. आन 1-2)

'[1]अस्य[1] महतो भूतस्य निःश्वसितमेतत्, यत् ऋग्वेदः' (सुबा.उ. 2) इत्यादिसृष्टिवाक्यानां या गतिः–प्रवृत्तिः, तत्सामान्यात्–तत्समानार्थत्वादस्य । [2]तेषु च[2] सर्वेषु, सर्वेश्वरः कारणमवगम्यते । तस्मात् अत्राऽपि [3]सर्वेश्वर एव[3] कारणमिति निश्चीयते ॥११॥

[प्रकृतश्रुतावेव सर्वेश्वरकारणत्वोक्तिप्रदर्शनम्]

इतश्च, न प्रधानम्—

---

आत्मा वा इत्यादिना 'गौणश्चेन्नात्मशब्दात्' इत्युक्तात्मशब्दवतीः श्रुतीः उदाहरति । प्रवृत्तिरिति प्रवृत्तिशब्दः बोधनव्यापारपरः ; 'भिन्नप्रवृत्तिनिमित्तानाम्' इत्यत्र प्रवृत्तिशब्दवत् । तत्समानार्थत्वादिति । समानत्वम् अर्थद्वारकम् इत्याशयः (श्रु. प्र) ॥ ११ ॥

---

[सूत्रार्थः । गतेः—अन्यान्योपनिषत्सम्बन्धिन्याः एतदुपनिषत्सम्बन्धिन्याश्च जगत्कारणीभूतार्थप्रतिपादनरीतेः, सामान्यात्—एकरूपतायाः अवश्यं वक्तव्यत्वात्, (एतदुपनिषदि जगत्कारणतया प्रतिपाद्यमानमपि परं ब्रह्मैव ॥]

कारणाख्यायिवाक्यानां या प्रवृत्तिः प्रदृश्यते ।
सद्वाक्यस्यापि तत्साम्यात्सच्छब्दार्थः परः पुमान् ॥ (ब्र. म. मा. ११)

---

[1] तस्य ह वा एतस्य च—वा [2] तेषु —वा [3] सर्वेश्वरः—ध

# श्रुतत्वाच्च ॥ १·१·१२ ॥

[1]श्रुतमेव हि[1] अस्याम् उपनिषदि[2]-अस्य सच्छब्दवाच्यस्य[2], आत्मत्वेन नाम-रूपयोर्व्याकर्तृत्वं, सर्वज्ञत्वं, सर्वशक्तित्वं, सर्वाधारत्वम्, अपहतपाप्मत्वादिकं, सत्यकामत्वं, सत्यसङ्कल्पत्वं च ;

'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छां. उ. 6-3-2)

'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' (छां. उ. 6-8-6)

'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' (छां.उ. 6-8-7)

'यच्चाऽस्येहाऽस्ति यच्च नाऽस्ति, सर्वं [3]तदस्मिन्[3] समाहितम्' (छां.उ. 8-1-3)

'[4]तस्मिन्[4] कामाः समाहिताः' (छां. उ. 8-1-5)

'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः' (छां. उ. 8-1-5)

इति। तथा च श्रुत्यन्तरणि--

---

**अनेन जीवेनेति,** आत्मत्वेन नामरूपयोर्व्याकर्तृत्वं, दर्शयति। 'तदैक्षत बहु स्याम्' इत्यादि वाक्येन सर्वज्ञत्व-सर्वशक्तित्वे पूर्वमेव दर्शिते, **सन्मूलाः** इति सूचिते च। **सदायतनाः** इति, **यच्चाऽस्य** इति च आधारत्वम्। **ऐतदात्म्यमिति,** धारकत्वं च आत्मत्वेनेति दर्शयति। न ह्यत्र कारणतया कार्याधारत्वमात्रं विवक्षितम् इति भावः। **यच्चेत्यादिकं,** सत्यकामत्वप्रतिपादनोपयुक्तं च। **एष आत्मा** इति अपहतपाप्मत्वादिगुणान् दर्शयति। **श्रुत्यन्तराणि** इति। [आवश्यकार्थस्फुटीकरणार्थानि इत्यर्थः।] नतु एतत्सूत्रविषयवाक्यत्वेन [उपादानमेतेषाम्]। अस्य

---

[सूत्रार्थः। **श्रुतत्वाच्च** (अस्यामेव उपनिषदि 'आत्मत एवेदं सर्वम्' इति) चेतनादेव जगदुत्पत्तेः श्रवणादपि ज्ञापकात् जगत्कारणप्रतिपादकसच्छब्दवाच्यं **अशब्दम्**—अनुमानगम्यतया सांख्याभिमतं प्रधानम्, **न**— न भवति ; (अपि तु परं ब्रह्मैव) ॥]

इदमात्मत एवेति श्रुतत्वादिह नो भवेत्।
प्रधानं कारणं किन्तु ब्रह्मैवास्य हि कारणम् ॥ (त्र. प. मा. १२)

---

[1] श्रुतमेवम्—घ, [2] सच्छब्दवाच्यस्य—थ, [3] तस्मिन्—थ, [4] अस्मिन्—आ, च

'न तस्य कश्चित् पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम् ।
स कारणं करणाधिपाधिपो न चाऽस्य कश्चिज्जनिता न चाऽधिपः' ॥ (श्वे.उ. 6-9)
'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदाऽऽस्ते'
(तै.आर.पु. 3-12-16)
'अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा' ( तै. आर. 3-11-3)
'विश्वात्मानं परायणम्' (तै.ना.उ. 11-3)
'पतिं विश्वस्यात्मे[1]श्वरम्[1]' (तै.ना.उ. 11-3)
'यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' ॥ (तै. ना. उ. 11-5)
'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको [2]नारायणः[2]' (सुबा.उ. 7)
इत्यादीनि ॥

[प्रधानस्य सच्छन्दाप्रतिपाद्यत्वनिगमनम्]

तस्मात्—जगत्कारण[3]वादिवाक्यं[3] न [4]प्रधानादि[4]प्रतिपादन[5]योग्यम्[5] । अतः सर्वज्ञः सर्वशक्तिः सर्वेश्वरेश्वरः निरस्त[6]निखिल[6]दोषगन्धः अनवधिकातिशयासंख्येय-[7]कल्याणगुणगणौघ[7]महार्णवः पुरुषोत्तमः नारायण एव, निखिलजदेककारणं जिज्ञास्यं ब्रह्म [8]इति[8]स्थितम् ॥

---

सूत्रस्य छान्दोग्योपनिषन्मात्रविषयत्वं 'श्रुतमेव ह्यस्यामेवोपनिषदि' इति दीपसारयोरप्युक्तम् । लिङ्गम्-शरीरम् ॥

सर्वज्ञत्वादयः सर्गादिकारणत्वोपयोगिगुणाः । निरस्तनिखिलेत्यादिना शोधकवाक्योक्ताः गुणाः उक्ताः । अनवधिकेत्यादिना पुरुषार्थत्वम्, ओघशब्देन गुणानाम् अन्यत्राऽपर्यवसायित्वम्, महार्णवशब्देन गुणेभ्योऽपि तदाश्रयस्य महत्त्वं च दर्शितम् । पुरुषोत्तम-नारायण-शब्दौ पुरुषसूक्तनारायणानुवाकसिद्धविशेषपर्यवसायित्वं कारण-शोधकवाक्यानां दर्शयन्तौ

---

1 श्वरं शाश्वतं शिवमच्युतम्—वा, 2 नारायण एव निखिलजगदेककारणम्—ध,
3 वादीनि वाक्यानि—श्रा, वादिवाक्यानि—वा 4 प्रधान—श्रा, वा 5 योग्यानि—श्रा,वा
6 समस्त—श्रा, इ. 7 कल्याणगुण—इ, कल्याणगुणौघ—थ, कल्याणगुणगण—भ
8 इति च—वा.

[एतेषां सूत्राणां ब्रह्माज्ञानवाद्यननुगुणत्वम्]

अत एव, निर्विशेषचिन्मात्रब्रह्मवादोऽपि, सूत्रकारेण, आभिः श्रुतिभिः निरस्तो वेदितव्यः ; 'पारमार्थिकमुख्येक्षणादि[1]गुणयोगि[1] जिज्ञास्यं ब्रह्म' इति स्थापनात् ।

निर्विशेषवादे हि साक्षित्वमपि अपारमार्थिकम् । वेदान्तवेद्यं [2]ब्रह्म[2] जिज्ञास्यतया प्रतिज्ञातम् । तच्च चेतनम् इति 'ईक्षतेर्नाऽशब्दम्' इत्यादिभिः सूत्रैः प्रतिपाद्यते । चेतनत्वं नाम चैतन्यगुणयोगः । अतः ईक्षणगुणविरहिणः प्रधानतुल्यत्वमेव ।

किञ्च—निर्विशेषप्रकाशमात्रब्रह्मवादे, तस्य [3]प्रकाशत्वमपि[3] दुरुपपादम्। प्रकाशो हि नाम स्वस्य परस्य च व्यवहारयोग्यतामापादयन् वस्तुविशेषः। निर्विशेषस्य वस्तुनः तदुभयरूपत्वाभावात् घटादिवत् अचित्त्वमेव ।

तदुभयरूपत्वाभावेऽपि तत्क्षमत्वमस्ति—इति चेत् ,

---

चिदचिद्विलक्षणत्वं तच्छरीरकत्वं दर्शयतः । **निखिलशब्देन** गगनादिकमपि कबलीकृतम् । **एक**शब्देन निमित्तोपादानत्वे अभिप्रेते ॥

**सूत्रकारेणेति** । न्यायनिबन्धनकृता इत्यभिप्रायः । **आभिः श्रुतिभिरिति** । न्यायानुगृहीताभिः विशदार्थाभिः श्रुतिभिः इति भावः । **निरस्तो वेदितव्य** इति । निरासः फलितः इत्यर्थः । **पारमार्थिकेति** । सदादिशब्दानां सांख्याभिमतप्रधानपरत्वव्यवच्छेदसिद्ध्यर्थम् ईक्षणादिगुण-तत्पारमार्थिकत्वविवक्षावद्भिः सूत्रैः निर्विशेषनिरासः फलितः इत्यर्थः ।

**निर्विशेषेति** । सच्छब्दोपस्थापितविमतिपदस्वरूपातिरेकेण साक्षित्वमपि अपारमार्थिकं त्वन्मते इत्यर्थः। ज्ञातृत्वाभावे साक्षित्वमपि न सिद्ध्यतीति प्रागेव उक्तमिति **अपि**शब्दाभिप्रायः। **वेदान्तेति** । न हि आरोपिताकारः तत्त्वावेदकप्रमाणविषयः । न च अर्वाचीनं ब्रह्म जिज्ञास्यतया प्रतिज्ञातमिति भावः। **चैतन्यगुणयोग** इति । ईक्षितृत्वं हि न चिद्रूपतामात्रम् इत्यभिप्रायः । **अत** इति। न ह्यत्र चिद्रूपतामात्रेण प्रधानव्यावृत्तिः सूत्रिता ; अपि तु ईक्षणगुणयोगेन । तत् अनभ्युपगच्छतः व्यावर्तकत्वाभावे व्यावृत्तिरेव न स्यात् इत्यर्थः ।

**व्यवहारयोग्यता**—व्यवहारप्रतिसम्बन्धिता । **तदुभयरूपत्वाभावात्** इति । स्वव्यवहारहेतुत्वपरव्यवहारहेतुत्वाभावात्, इत्यर्थः ।

---

[1] गुणगणयोगि--द. [2] ब्रह्म च--बा. [3] स्वप्रकाशत्वमपि—न.

[1]तन्न[1]; तत्क्षमत्वं हि तत्सामर्थ्यमेव। सामार्थ्यगुणयोगे हि निर्विशेषवादः परित्यक्तः स्यात्।

अथ–श्रुतिप्रामाण्यात् अयमेको विशेषः अभ्युपगम्यते—इति चेत्,

हन्त तर्हि! तत एव सर्वज्ञता, सर्वशक्तित्वम्, [2]सर्वेश्वरेश्वरत्वम्, सर्वकल्याण-गुणाकरत्वम्[2], सकलहेय[3]प्रत्यनीकता[3] इत्यादयः सर्वे अभ्युपगन्तव्याः। शक्तिमत्वं च कार्यविशेषानुगुणत्वम्। तच्च कार्यविशेषैकनिरूपणीयम्। कार्यविशेषस्य निष्प्रमाणकत्वे तदेक[4]निरूपणीयं शक्ति[4]मत्त्वमपि निष्प्रमाणकं स्यात्।

किञ्च—निर्विशेषवस्तुवादिनः वस्तुत्वमपि निष्प्रमाणम्। प्रत्यक्षानुमानागम[5]स्वानु भवाः[5] [6]सविशेषगोचराः[6]—इति पूर्वमेवोक्तम्। तस्मात् 'विचित्रचेतनाचेतनात्मकजगद्रूपेण बहु स्याम्' इति ईक्षणक्षमः, पुरुषोत्तम एव [7]जिज्ञास्यः[7]—इति सिद्धम् ॥१२॥

इति ईक्षत्यधिकरणम् ॥५॥

---

**निष्प्रमाणकत्वे**—स्वपरव्यवहारयोग्यतापादनाभावे। निरूपकाभावे निरूप्याभावः इत्यर्थः।

**वस्तुत्वम्**—तुच्छव्यावृत्तत्वम्। **स्वानुभवा** इति प्रत्यक्षान्तर्भूतस्याऽपि स्वानुभवस्य पृथक्प्रमाणत्वं परमताभ्युपगमेनोक्तम्। **सविशेषगोचराः** इति। वस्तुतः सविशेषभूतार्थ-गोचराः इत्यर्थः। वस्तुत्वं चिदचित्साधारणम्। तच्च तुच्छव्यावृतत्वम्। तत् न सिध्य-तीत्यर्थः ॥१२॥

[सूत्राणि—1. ईक्षते, 2. गौण, 3. तन्निष्ठस्य 4. हेयत्वा, 5. प्रतिज्ञा, 6. स्वाप्ययः 7. गति, 8. श्रुत.]

॥ इति ईक्षत्यधिकरणम् ॥५॥

---

[1] न—ध, [2] सर्वेश्वरत्वं, सर्वकल्याणगुणाकरत्वम्—आ, इ, थ, ध, सर्वेश्वरेश्वरत्वम्—द
[3] प्रत्यनीकत्वं—इ [4] निरूपणीयशक्ति—द [5] जन्यानुभवाः—ध [6] सविशेषविषयाः—ध
[7] जिज्ञास्यं ब्रह्म—ध, न

## आनन्दमयाधिकरणम् ॥ १-१-६ ॥ (सू. 13-20)

[अधिकरणार्थः — आनन्दमयः परं ब्रह्मैव ; न जीवः]

[आनन्दमयविद्याविचारः (तै.उ.आन. ५)]

[पूर्वोत्तराधिकरणयोः सङ्गतिप्रदर्शनम्]

एवं—[1]जिज्ञासितस्य[1] ब्रह्मणः चेतनभोग्यभूतजडरूपसत्त्वरजस्तमोमयप्रधानात् व्यावृत्तिः—उक्ता ।

इदानीं 'कर्मवश्यात् त्रिगुणात्मकप्रकृतिसंसर्गनिमित्तनानाविधानन्तदुःखसागर-निमज्जनेन अशुद्धात्, शुद्धाच्च प्रत्यगात्मनः अन्यत् निखिलहेय[2]प्रत्यनीक[2]निरतिशयानन्दं ब्रह्म' इति प्रतिपाद्यते ।

## आनन्दमयोऽभ्यासात् ॥ १-१-१३ ॥

[विषयोपक्षेपः]

तैत्तिरीयाः अधीयते—

'स वा एष पुरुषोऽन्नरसमयः' (तै.उ.आन. 1-1)

इति प्रकृत्य,

'तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योन्तर आत्माऽऽनन्दमयः'

इति ॥ (तै.उ.आन. 5-2)

---

एवमित्यादि। जगत्कारणस्य निरूपणीयत्वे चतुस्सूत्र्या सिद्धे, प्रत्यक्षादिसिद्धतया प्रसिद्ध्यतिशयात् अचेतने प्रथममवतरन्ती बुद्धिः, ईक्षणादिभिः, ततो व्यावर्त्य चेतनवस्त्वभिमुखीकृता । इदानीम् अचेतनापेक्षया प्रसिद्धिमान्द्येऽपि, परमात्मापेक्षया प्रसिद्धतरे अहंप्रत्ययसिद्धे प्रत्यगात्मनि अवतरन्ती बुद्धिः व्यावर्त्यते इत्यर्थः ।

---

[सूत्रार्थः । **आनन्दमयः**—तैत्तिरीयानन्दवल्लीगतानन्दमयशब्दवाच्यः अर्थः, (**इतरः न**—ब्रह्मणोऽतिरिक्तः जीवो न भवितुमर्हति ; किन्तु) ब्रह्मैव, **अभ्यासात्**—अभ्यस्यमाननिरतिशयानन्दवत्तायोग्यत्वात् ॥]

आनन्दमयशब्देन परमात्मा हि कथ्यते ।
ते ये शतमिति श्रुत्या त्वभ्यस्तानन्दवत्त्वतः ॥ (ब्र. प. मा. १३)

---

1 जिज्ञास्यस्य तस्य—थ, ध. 2 प्रत्यनीकं—भा.

[ संशयस्वरूपम् ]

तत्र सन्देहः—किम् अयम् आनन्दमयः, बन्ध-मोक्षभागिनः प्रत्यगात्मनः जीवशब्दाभिलपनीयात् अन्यः परमात्मा ? उत स एव ?—इति ॥

[सयुक्तिकः पूर्वपक्षः, सांख्यस्य]

किं युक्तम् ?

प्रत्यगात्मा—इति ।

कुतः ?

---

**तत्रेति।** शारीरत्वानन्दप्राचुर्याभ्यां संशय इत्यभिप्रायः । **जीवशब्दाभिलपनीयात्** इति पदं सद्विद्यायां 'जीवेनाऽऽत्मना' इति सामानाधिकरण्यम्, अत्र पूर्वपक्षोत्थानबीजम् इति सूचनार्थम् ॥

**तत्र सन्देहः** इति । किं कारणवादिनः सर्वे वेदान्ताः परिशुद्धप्रत्यगात्मस्वरूपपराः ? उत तद्विलक्षणपराः ? इति प्रथमविचारः । तदर्थम् आनन्दमयः किं परिशुद्धावस्थः प्रत्यगात्मा? उत परमात्मा ? इति । तदर्थम् इह प्रतिपन्नः शारीरसम्बन्धः किं जीवात्मासाधारणः ? उत न ? तदर्थं मयट् किं स्वार्थिकत्व-विकारार्थकत्वयोः अन्यतरवान् ? उत प्राचुर्यार्थः ? तदर्थं किं विकाराद्यर्थानुगुणहेतवो अनुरोद्धव्याः ? उत प्राचुर्याद्यर्थानुगुणहेतवः ? विज्ञानमयशब्दः किं विज्ञानमात्रपरः? उत जीवपरः ? तदर्थं तत्र मयट् किं स्वार्थिकः ? उत न ? तदर्थं 'विज्ञानं यज्ञं तनुते' इति विज्ञानशब्दः किं ज्ञानमात्रे वर्तते ? उत ज्ञानगुणके प्रत्यगात्मनि ? इति । पूर्वे कल्पाः पूर्वपक्षाः, इतरे तु सिद्धान्ताः ।

**पूर्वपक्षे फलफलिभावः**—यदा, विकारार्थत्वाद्यनुगुणहेतोः अनुरोद्धव्यत्वेन मयट् स्वार्थिकः, विकारार्थो वा भवति ; तदा, निरतिशयप्राचुर्याप्रतिपत्तेः आनन्दमात्रस्य जीवे सम्भवात्, स्वतः जीवानुगुणतया प्रतिपन्नस्य शरीरसम्बन्धस्य जीवासाधारणत्वे विरोधाभावात् आनन्दमयो जीवः। यदा च श्लोकस्थविज्ञानशब्दः विज्ञानमात्रपरः ; तदा विज्ञानमयशब्दस्यापि स्वार्थिकमयडन्तत्वेन विज्ञानमात्रपरत्वात्, विज्ञानशब्दस्य बुद्धिपरत्वसम्भवात् ; तदन्तर आनन्दमयः प्रत्यगात्मा—इति ।

**राद्धान्ते फलफलिभावस्तु**—यदा प्राचुर्यार्थानुगुणहेतोः अनुरोद्धव्यत्वेन 'आनन्दमयः'

"[1]तस्यैष[1] एव शारीर आत्मा" (तै.उ.आन. 6-1)

इति, आनन्दमयस्य शारीरत्वश्रवणात्। शारीरो हि शरीर[2]सम्बन्धी[2] जीवात्मा ॥

[पूर्वपक्षयुक्तेः अनुत्थितिः]

ननु च—जगत्कारणतया प्रतिपादितस्य [3]ब्रह्मणः[3] सुखप्रतिपत्त्यर्थम् अन्नमयादीन् अनुक्रम्य, तदेव जगत्कारणम् 'आनन्दमयः' इत्युपदिशति। जगत्कारणञ्च,

'तदैक्षत' (छां. उ. 6-2-3)

इति [4]ईक्षणश्रवणात्[4], सर्वज्ञः सर्वेश्वरः—इत्युक्तम् ॥

[पूर्वपक्षयुक्तिस्थिरीकरणम्]

सत्यमुक्तम्, [5]स तु[5] जीवात् नाऽतिरिच्यते।

'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य' (छां. उ. 6-3-2)

'तत्त्वमसि श्वेतकेतो' (छा. उ. 6-8-7)

इति, कारणतया निर्दिष्टस्य जीवसामानाधिकरण्यनिर्देशात्। सामानाधिकरण्यं हि

---

इत्यत्र मयट् प्राचुर्यार्थः ; तदानीम् आनन्दप्राचुर्यस्य निरवधिकतया अवगतस्य, श्रुतिविरुद्धाश्रुतोपाधिकल्पनाऽयोगेन स्वतो निरतिशयस्य जीवात्मनि असम्भवात्, तद्विरोधेन शरीरसम्बन्धस्य जीवासाधारणकर्ममूलत्वाभावाच्च, न आनन्दमयः प्रत्यगात्मा। यदा च श्लोकस्थ'विज्ञान'-शब्दः विज्ञानगुणके प्रत्यगात्मनि वर्तते ; तदा विज्ञानमयशब्दस्यापि प्राचुर्यार्थमयडन्ततया प्रत्यगात्मवाचित्वाच्च, तदन्तरः आनन्दमयः परमात्मा—इति ॥

[अभिलपनम्—स्वबुद्ध्यारूढस्य अर्थस्य परबुद्ध्यारूढत्वापादकः शब्दप्रयोगः।]

**ननु च** इति, पूर्वपक्षोत्थानमाक्षिपति। **सुख....क्रम्येति**। अनेन जगत्कारणप्रकरणस्य अविच्छित्तिः द्योतिता। **जगत्कारणमिति**। वक्ष्यमाणपर्यालोचनया विभूतिप्रकर्षाधीनातिशयितानन्दस्य आश्रयत्वोपपादकं सकलजगत्कारणत्वम् इति भावः। **जगत्कारणमिति** पुनरुपादानं ज्ञानशक्त्युपयोगज्ञापनाय ॥

**सत्यमिति**। चेतनत्वादौ अभ्युपगमः, जीवादतिरेके विवादः [इत्याशयः]।

---

[1] एष—द, [2] सम्बद्ध—अ, सम्बन्धि—थ [3] परस्य ब्रह्मणः—ध, वा,
[4] ईक्षतिश्रवणात्—इ, श्रवणात्—ध [5] तत्तु—वा

एकत्वप्रतिपादनपरम् ; यथा 'सोऽयं देवदत्तः' इत्यादौ । [1]ईक्षापूर्विका[1] च सृष्टिः चेतनस्य जीवस्य उपपद्यत एव । अतः,

'ब्रह्मविदाप्नोति परम्' (तै. उ. आन. 1-1)

इति, जीवस्य अचित्संसर्गवियुक्तं स्वरूपं प्राप्यतया [2]उपदिश्यते[2] । [3]अचिद्वियुक्त[3]-स्वरूपस्य लक्षणमिदमुच्यते—

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. उ आन. 1-1)

इति । तद्रूपप्राप्तिरेव हि मोक्षः ।

'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति ।

अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' ॥ (छां. उ 8-12-1)

इति । अतः जीवस्य अविद्यावियुक्तं स्वरूपं प्राप्यतया प्रक्रान्तम् 'आनन्दमयः' इत्युपदिश्यते ॥

[जीवस्वरूपस्य उपदेशप्रक्रमोपपादनम्]

तथा हि ; शाखाचन्द्रन्यायेन आत्मस्वरूपं दर्शयितुं "अन्नमयः[4] पुरुषः' इति

---

**उपपद्यत एवेति** एवकारः अस्वारस्यसूचकः (श्रु.प्र.) । क्रियासङ्गतैवकारस्य अत्यन्तायोगव्यवच्छेदार्थकत्वादिति भावः (भा प्र.) । साक्षित्वमेव ईक्षितृत्वमिति भावः । 'भेदव्यपदेशाच्च' (ब्र.सू. 1-1-18) इति भेदव्यपदेशं सिद्धान्तहेतुं वदता सूत्रकारेण, ऐक्यव्यपदेशस्य पूर्वपक्षहेतुत्वं विवक्षितमित्यवगम्यते । एवं पूर्वाधिकरणेन जीवव्यतिरेकासिद्धेः अधिकरणान्तरम् आरम्भणीयमिति भावः । **अतः**—शारीरत्वश्रवणात्, सामानाधिकरण्यबलेन ऐक्यस्य प्रतिपन्नत्वाच्च (श्रु प्र.) । **उपदिश्यते** इति । एवं कल्प्यमित्यर्थः । **अचिद्वियुक्तेति,** लक्षणकथनं, तत्प्रतिपत्त्यर्थं तद्विशेषोक्तिश्च, अचिद्वियुक्ते स्वरूपे संभवतीत्याह । **तद्रूपेति,** अचिद्वियुक्तस्वरूपस्य प्राप्यत्वं कण्ठोक्तमित्याह । **हिशब्दः** प्रसिद्धिद्योतकः । **इतीति** । श्रवणात् इति शेषः । **अतः** इति प्राप्यत्वानुगुणपुरुषार्थतां दर्शयन् निगमयति ॥

**तथा हीति** । शरीरम् उपलक्षणमात्रम् न तु विशेषणम् ; इति तद्वियोगेन अपरिच्छिन्नानन्दत्वादिकमुपदिश्यते इत्यर्थः ।

---

[1] ईक्षणपूर्विका—थ ; इच्छापूर्विका—न　[2] उपक्रान्तमानन्दमय इत्युपदिश्यते—थ,
[3] अचिद्वस्तुवियुक्तस्य—थ ; अचिद्वियुक्तस्य—वा　[4] अन्नरसमयः—आ.

**[1]शरीरं प्रथमं[1] निर्दिश्य, [2]तदन्तरभूतं[2] तस्य धारकं पञ्चवृत्तिप्राणम्, तस्याऽ[3]प्यन्तरभूतं[3] मनः, [4]तदन्तरभूतां[4] च बुद्धिम्.**

**'प्राणमयः, मनोमयः, विज्ञानमयः'** (तै. उ. आन. 2-2, 3-2, 4-1)

**इति, [5]तत्र तत्र[5] बुद्ध्यवतरणक्रमेण निर्दिश्य, [6]सर्वान्तरभूतं[6] जीवात्मानम्,**

**'अन्योऽन्तर आत्माऽऽनन्दमयः'** (तै. उ. आन. 5-2)

**इत्युपदिश्य, अन्तरात्मपरम्परां समापयति। अतः जीवात्मस्वरूपमेव,**

**'[7]ब्रह्मविदाप्नोति[7]'** (तै. उ. आन. 1-1)

**इति प्रक्रान्तं ब्रह्म। तदेव 'आनन्दमयः' इत्युपदिष्टम्—इति निश्चीयते॥**

[अद्वैतिनां पुच्छब्रह्मवादः, तत्परिहारश्च]

**[8]ननु च[8]—**

**'ब्रह्म पुच्छं प्रतिष्ठा'** (तै. उ. आन. 5-2)

**इति, 'आनन्दमयादन्यद् ब्रह्म'—इति प्रतीयते।**

**नैवम्; ब्रह्मैव स्वस्वभावविशेषेण पुरुषविधत्वरूपितं, शिरः-पक्ष-पुच्छरूपेण [9]व्यपदिश्यते[9]। यथा अन्नमयो [10]ऽहः अवयवी[10] स्वस्मादन [11]तिरिक्तैः स्वावयवैरेव,[11]**

---

**बुद्धिमिति**। 'विज्ञायते अनेन' इति व्युत्पत्त्या विज्ञानं—बुद्धिः। **विज्ञानमय** इत्यत्र मयट् स्वार्थिकः; प्राणमय मनोमययोः [तस्य] स्वार्थिकत्वात्, 'विज्ञानं यज्ञं तनुते' इति मयडन्तत्वं विना वक्ष्यमाणत्वात्, 'विज्ञानसारथिर्यस्तु' 'बुद्धिं तु सारथिम्' इति बुद्धि विज्ञानशब्दयोः एकार्थत्वेन प्रयोगाच्च इति भावः। **बुद्ध्यवतरणेति**। अपरिच्छिन्नानन्दत्वमपि परिशुद्धात्मस्वरूपस्य संभवतीति अर्थसिद्धम्। शारीरत्वश्रवणात्, जीवसामानाधिकरण्यात्, विज्ञानमयशब्दस्य अन्तःकरणपरत्वात्, प्राप्यत्वादेः परिशुद्धस्वरूपेऽप्युपपन्नत्वात्, शरीरस्य उपलक्षणत्वेन तद्वियुक्तस्वरूपेण प्राप्यत्वादिसम्भवात्, मयट्प्रत्ययस्य स्वार्थिकत्वेन, विकारपरत्वाभावाच्च परिशुद्धप्रत्यगात्मस्वरूपविषयमिदं वाक्यम्—इति पूर्वपक्षसङ्ग्रहः। तत्र द्वौ हेतू साधकौ। अन्ये तु शङ्कितदूषणान्यथासिद्धिरूपाः॥

**अन्यदिति**। 'तस्य पुच्छम्' इति षष्ठ्या अवयविसम्बन्धप्रतीतेः सम्बन्धस्य द्विनिष्ठतया, प्रतिष्ठा-तद्भावेन च व्यतिरेकावगमात् [अवयविनः सकाशात् अवयवभूतस्य] अन्यत्वम् इत्यर्थः।

---

[1] प्रथमं शरीरं—वा, [2] तदन्तर्भूतम्—वा, [3] प्यन्तर्भूतं—वा,
[4] तदन्तर्भूतां—वा, [5] तत्र—थ, [6] सर्वान्तर्भूतं—वा, [7] ब्रह्मविदाप्नोति परं—ड,
[8] ननु—ध, [9] ह्युपदिश्यते—द, [10] देहावयवी—वा, देह एव—ध. [11] रिक्तस्वावयवैरिव—ध

'तस्येदमेव शिरः' (तै. उ. आन. 1-3)

इत्यादिना, शिरः-पक्ष-[1]पुच्छवत्तया[1] [2]निदर्शित[2]: ; तथा—आनन्दमयं ब्रह्माऽपि, स्वस्मादनतिरिक्तैः प्रियादिभिः निदर्शितम्। तत्र अवयवत्वेन रूपितानां प्रिय-मोद-प्रमोदानन्दानाम् आश्रयतया [4]अखण्डरूपम्[4] आनन्दमयम्,

'ब्रह्म पुच्छं प्रतिष्ठा' (तै. उ. आन. 5-2)

इत्युच्यते।

यदि च आनन्दमयादन्यत् ब्रह्म अभविष्यत्, 'तस्माद्वा एतस्मादानन्दमयात्, अन्योऽन्तर आत्मा ब्रह्म' इत्यपि निरदेक्ष्यत; न चैवं निर्दिश्यते।

एतदुक्तं भवति—

'ब्रह्मविदाप्नोति परम्' (तै.उ.आन. 1-1)

इति प्रक्रान्तं ब्रह्म,

' सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.आन.1-1)

इति लक्षणतः सकलेतरव्यावृत्ताकारं प्रतिपाद्य, तदेव—

'तस्माद्वा एतस्मादात्मनः' (तै. उ. आन. 1-2)

---

**पुरुषविधत्वरूपितमिति**। पुरुषविधत्वेन रूपितमित्यर्थः। 'अन्वयं पुरुषविधः' इति श्रुतिवाक्य-स्मरणार्थमिदम्। **तथा....निदर्शितमिति**। प्रकरणे स्वस्मादनतिरिक्तैः स्वावयवैः पुच्छ-प्रतिष्ठात्वरूपणदर्शनात्, अत्राऽपि पुच्छप्रतिष्ठात्वेन रूपितं ब्रह्म, आनन्दमयात् अनतिरिक्तमित्यर्थः। षष्ठीनिर्देशः समुदाय तदेकदेशत्वनिबन्धनतया उपपन्नः इति भावः (श्रु.प्र.)।

**यदि चेति,** आनन्दमयस्य ब्रह्मत्वे हेत्वन्तरम् (श्रु. दी.)।

**एतदुक्तमिति**। न हि अन्यत्वम् अनयैव वचनव्यक्त्या वाच्यमित्यस्ति नियमः ; व्यावर्तकाकारान्तरेणापि अन्यत्वप्रतिपादनसम्भवात् इत्यत्र [आक्षेपे परिहारायोक्तमिदम्]। प्रकरणस्य तत्तदन्तरतयैव अन्यत्वप्रतिपादनपरत्वात्, तत्प्रकरणस्थेन वाक्येन तादृशेनैव भवितव्यमित्यर्थः (श्रु.प्र, श्रु.दी.)।

**ब्रह्मविदित्यादि,** स्वोक्तस्य स्वेनैव व्याख्यानसम्भवज्ञापनाय। 'सत्यं ज्ञान'मिति मन्त्रो हि! तद्विवरणम् (श्रु.दी.)। 'तस्माद्वा एतस्मात्' इति तदेतच्छब्दौ प्रकृतपरामर्शिनौ इत्यभिप्रायः।

---

[1] पुच्छा अवयवतया—ध　[2] निदर्शिताः—ध　[3] अखण्डम्—ध

इति आत्मशब्देन निर्दिश्य, तस्य [1]सर्वान्तरत्वेन[1] आत्मत्वं व्यञ्जयत् वाक्यम्, अन्नमयादिषु तत्तदन्त[2]रतया आत्मत्वेन[2] निर्दिष्टान् प्राणमयादीन् अतिक्रम्य,

'अन्योऽन्तर आत्माऽऽनन्दमयः' (तै.उ. आन. 5-2)

इति आत्मशब्देन निर्देशम् आनन्दमये समापयति। अतः आत्मशब्देन प्रक्रान्तं ब्रह्म, आनन्दमयः इति [3]निश्चीयते—इति[3] ॥

[पुनः प्रकारान्तरेण ब्रह्मणः आनन्दमयातिरिक्तत्व(पुच्छत्व)शङ्का-परिहारौ]

ननु च—

'ब्रह्म पुच्छं प्रतिष्ठा' (तै.उ. आन. 5-2)

इत्युक्त्वा,

'असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्।
अस्ति ब्रह्मेतिचेद्वेद। सन्तमेनं ततो विदुः' (तै. उ. आन. 6-1)

इति, ब्रह्मज्ञानाज्ञानाभ्याम् आत्मनः सद्भावासद्भावौ दर्शयति; न आनन्दमयज्ञानाज्ञानाभ्याम्। न च आनन्दमयस्य प्रिय-मोदादिरूपेण सर्वलोकविदितस्य सद्भावासद्भाव-[4]ज्ञानाशङ्का[4] युक्ता। अतः न आनन्दमयमधिकृत्य अयं श्लोकः उदाहृतः। तस्मात् आनन्दमयादन्यत् ब्रह्म।

नैवम्;

'इदं पुच्छं प्रतिष्ठा' (तै. उ आन. 1-3)
'पृथिवी पुच्छं प्रतिष्ठा' (तै. उ. आन. 2-3)
'अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा' (तै. उ. आन. 3-2)

---

आत्मशब्देनेति। ब्रह्मशब्देन प्रकृतस्यैव आत्मशब्देन निर्दिष्टत्वमित्यर्थः ॥

ननु चेति। यदि आत्मशब्दव्याख्यानपरिसमाप्तिः आनन्दमये, तर्हि आत्मशब्देन निर्देष्टव्यम्। तथा च न कृतम्; अपि तु ब्रह्मशब्देन निर्दिष्टम्। तस्मात् आनन्दमयस्य न प्राधान्यम्। अतः पुच्छब्रह्मैव प्रधानप्रतिपाद्यम् इत्यर्थः (श्रु.प्र.)। न च....युक्तेति। आशङ्काशब्देन उदाहृतश्रुतिवाक्यद्वयस्थः चेदर्थो व्याख्यातः। सर्वलोकप्रसिद्धस्य दुरपह्नवत्वेन, असद्भावे इव सद्भावेऽपि आशङ्कावादः न युक्तः इत्यर्थः।

इदं पुच्छमित्यादि। [अनेन] ब्रह्म-आत्मा-आनन्दमयशब्दानाम् ऐकार्थ्ये निश्चिते, आनन्दमयनिर्देशसमः ब्रह्मनिर्देशः इति स्फुटमिति बुद्ध्वा, आनन्दमयप्राधान्ये युक्तिमाह।

---

[1] सर्वान्तरात्मत्वेन—आ. इ, छ. वा. सर्वान्तरात्मकत्वेन—ध. [2] रात्मकत्वेन—ध, रात्मतया आत्मत्वेन—वा, तदन्तरात्मकत्वेन—न. [3] निश्चीयते—ट, [4] ज्ञानाज्ञानाशङ्का—ध.

"[1]महः पुच्छं प्रतिष्ठा[1]" (तै. उ. आन. 4-2)

[2]इत्युक्त्वा[2], तत्र तत्र उदाहृताः,

'अन्नाद्वै प्रजाः प्रजायन्ते' (तै. उ. आन. 2-1)

इत्यादि श्लोकाः, यथा न पुच्छमात्रप्रतिपादनपराः, अपि तु अन्नमयादि[3]पुरुष[3]प्रतिपादनपराः; एवम् अत्राऽपि आनन्दमयस्य अयम् 'असन्नेव' [4]इति[4] श्लोकः; न आनन्दमयव्यतिरिक्तस्य पुच्छस्य ।

[5]आनन्दमयस्यैव[5] [6]ब्रह्मत्वेऽपि[6], प्रियमोदादिरूपेण [7]रूपितस्य[7] अपरिच्छिन्ना[8]नन्दस्य[8] सद्भावासद्भावज्ञानाशङ्का युक्तैव । पुच्छब्रह्मणोऽपि अपरिच्छिन्नानन्दतयैव हि [9]अप्रसिद्धता[9] ।

शिरः[10]प्रभृत्यवयवित्वाभावात्[10] [11]ब्रह्मणः, न[11] आनन्दमयो ब्रह्म — इति चेत्,

ब्रह्मणः पुच्छत्व-प्रतिष्ठात्वाभावात् पुच्छमपि ब्रह्म न भवेत् ।

अथ—अविद्यापरिकल्पितस्य [12]वस्तुनः तस्याश्च[12] आश्रयभूतत्वात् ब्रह्मणः, 'पुच्छं प्रतिष्ठा' इति [13]रूपण[13]मात्रम्— [14]इत्युच्येत[14],

---

प्रकरणस्थपूर्वश्लोकानां पुच्छमात्रप्रतिपादनपरत्वाभावात्, अयमपि श्लोकः न पुच्छमात्रप्रतिपादनपरः इत्यर्थः (श्रु प्र.) ।

**आनन्दमयस्येति**, प्रसिद्धानन्दस्य सद्भावासद्भावशङ्कानुपपत्तिं परिहरति । **पुच्छब्रह्मणोऽपीति**, प्रतिबन्दीमभिप्रेत्य । 'विज्ञानमानन्दं ब्रह्म' 'आनन्दो ब्रह्म' इत्यादिवाक्येन ब्रह्मणः आनन्दरूपत्वस्य उक्तत्वात्, आनन्दस्य च प्रसिद्धत्वात्, न तस्य सद्भावासद्भावज्ञानाशङ्का युक्ता—इति चोदिते, तस्य आनन्दरूपस्य ब्रह्मणः अविदितत्वम्, अपरिच्छिन्नानन्दत्वादेव हि त्वया उपपादनीयम् ; तत् अत्राऽपि तुल्यम् इत्यर्थः ।

**शिरःप्रभृति..........न भवेत्** इति । ब्रह्मणः अवयवित्वम् अनुपपन्नमिति चेत्, अवयववत्त्वमपि अनुपपन्नम् इत्यर्थः । **पुच्छत्वम्**—अवयवविशेषत्वम् । **प्रतिष्ठात्वम्**—आधारत्वम् ।

---

[1] इदं प्रमाणं 'ध' पुस्तके नास्ति । [2] इत्येवमुक्त्वा—आ, वा, [3] पुरुषमात्र—द, वा, [4] इत्यादि—आ, इ, [5] आनन्दस्यैव—थ, [6] ब्रह्मत्वे—द, [7] रूपितस्य तस्य—आ, द, [8] नन्दमयस्य—वा, [9] प्रसिद्धता—आ, असिद्धता—वा, [10] प्रभृत्यवयवत्वभावात्—ध, [11] न—ध [12] वस्तुनस्तस्य— च. [13] निरूपण—थ, [14] इत्युच्यते—इ, थ,

हन्त तर्हि, तस्य असुखाद्व्यावृत्तस्य आनन्दमयस्य ब्रह्मणः, प्रियशिरस्त्वादि-रूपणं भविष्यति ॥

[पूर्वपक्षार्थनिगमनम्]

एवं च,

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. उ. आन. 1-1)

इति विकारास्पदजडपरिच्छिन्न[1]वस्त्वन्तर[1]व्यावृत्तस्य, असुखात् व्यावृत्तिः 'आनन्दमयः' इत्युपदिश्यते । ततश्च [2]अखण्डैकरसानन्दरूपे[2] ब्रह्मणि 'आनन्दमयः' इति मयट्, प्राणमये इव स्वार्थिको द्रष्टव्यः ।

तस्मात् अविद्यापरिकल्पित[3]विविधविचित्र[3]देवादिभेदभिन्नस्य जीवात्मनः स्वाभाविकं [4]रूपम्[4] अखण्डैकरसं सुखैकतानम्, 'आनन्दमयः' इत्युच्यत इति, आनन्दमयः [5]प्रत्यगात्मा[5] ॥

[सिद्धान्तारम्भः ; तत्र आनन्दमयत्वं परमात्मन एव]

एवं प्राप्ते, प्रचक्ष्महे—आनन्दमयोऽभ्यासात् ।

आनन्दमयः, परमात्मा ।

कुतः ?

अभ्यासात् ।

---

**असुखादिति ।** असुखव्यावृत्तिविशेषाः शिरःप्रभृतित्वेन रूपिताः इत्यर्थः ॥

**ततश्चेति ।** उक्तानुपपत्तीनां परिहृतत्वात्, उपपत्त्यन्तरसद्भावाच्च इत्यर्थः । सत्यशब्द-निर्दिष्टस्य ब्रह्मणः कस्यचिद्विकारत्वाभावात्, आनन्दमयशब्दवाच्यत्वमपि अयुक्तम्, इत्यत्र [उत्तरमिदम्] (श्रु. प्र.) ।

**तस्मादिति ।** [अनेन] अमितानन्दरूपस्य प्रत्यगात्मनः कथं दुःखित्व-सुखतारतम्ये ? इति शङ्कां परिहरन् पूर्वपक्षमुपसंहरति (श्रु.दी) ॥

**एवं प्राप्ते**—अस्मिन् पूर्वपक्षे प्राप्ते ।

**परमात्मेति ।** अन्तरात्मपरम्परासमाप्तिद्योतनाय, अत्र परमात्मशब्देन धर्मिनिर्देशः । उत्तराधिकरणे 'भेदव्यपदेशाच्चान्यः' (ब्र.सू. 1-1-22) इति अन्यशब्दः प्रयुक्तः । इह तदाकर्षणलब्धोऽर्थ उक्तः, 'परमात्मा' इति । [इदं च] साध्यसमर्पकपदेन प्रतिज्ञांशस्य पूरणम् ।

**अभ्यासः**—गुणनम्, आवृत्तिः (श्रु.प्र.) ।

---

[1] वस्त्वन्तरात्—वा, [2] अखण्डानन्दैकरसरूपे—आ, अखण्डानन्दैकरसरूप—थ, [3] विविध—आ, [4] एकरूपं—आ, स्वरूपं—वा, [5] प्रत्यगात्मा इति—वा.

**'सैषाऽऽनन्दस्य मीमांसा भवति'** (तै. उ. आन. 8-1)
इत्यारभ्य,

**'यतो वाचो निवर्तन्ते'** (तै.उ.आन 9-1)

**इत्येवमन्तेन वाक्येन शतगुणितोत्तरक्रमेण निरतिशयदशाशिरस्कः अभ्यस्यमानः आनन्दः, अनन्तदुःखमिश्रपरिमितसुखलवभागिनि जीवात्मनि असम्भवन्, निखिलहेय[1]प्रत्यनीकं कल्याणैकतानं सकलेतर[1]विलक्षणं परमात्मानमेव स्वाश्रयम् आवेदयति । [2]यथाऽऽह[2]—**

**'तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्माऽऽनन्दमयः'** (तै.उ. आन. 5-2) **इति ।**

[विज्ञानमयशब्दस्य बुद्धिमात्रपरताव्युदासः]

**विज्ञानमयो हि जीवः, न बुद्धिमात्रम्; मयट्प्रत्ययेन व्यतिरेकप्रतीतेः । प्राणमये तु अगत्या [3]स्वार्थिकता[3] आश्रीयते । इह तु तद्वतो जीवस्य सम्भवात्, न [4]आनर्थक्यं[4] न्याय्यम् । बद्धो मुक्तश्च प्रत्यगात्मा [5]ज्ञातैवेति[5] अभ्यधिष्महि । प्राण[6]मयादौ च[6] [7]मयडर्थसंभवः[7] अनन्तरमेव वक्ष्यते ।**

---

कस्याऽभ्यासः ? इत्याकाङ्क्षां पूरयन् हेतुपदं व्याचष्टे **सैषाऽऽनन्दस्येत्यादिना । निरतिशयदशाशिरस्क** इति, 'यतो वाचो निवर्तन्ते' इत्यस्यार्थमभिप्रेत्य । **अभ्यस्यमानः** इति, 'स एको ब्रह्मण आनन्दः' इति वाक्यस्यार्थमभिप्रेत्य । शतगुणितोत्तरक्रमेण गुणितत्वात् इत्यर्थः । **अभ्यास**शब्दः कर्मार्थघञन्तः इत्यभिप्रायः । **अनन्तदुःखेति**, निरतिशयानन्दविरुद्धधर्मयोग उक्तः । **परिमितेति**, निरतिशयानन्दाभाव उक्तः । विरुद्धधर्मोपलम्भात्, अभावोपलम्भाच्च असम्भवः इत्यर्थः । **प्रत्यनीकत्वम्** अत्र निवर्तकत्वं विवक्षितम्; मुक्तस्याऽपि, परमात्मप्रसादादेव हि हेयनिवृत्तिपूर्वकनिरतिशयानन्दप्राप्तिः । एवं निरतिशयानन्दस्य जीवात्मनि अयोग्यतारूपतर्कानुगृहीतः आनन्दमयशब्दः, परमात्मविषयः इत्युक्तं भवति ॥

**विज्ञानमयो हि** इति **हि**शब्दः शब्दस्वारस्यग्राहकप्रत्यक्षप्रसिद्धिद्योतकः। 'अहं जानामि' इति ज्ञातृत्वं हि आत्मनः प्रतीयते । **न बुद्धिमात्रमिति** । ज्ञप्तिवाचिनः 'विज्ञान'शब्दस्य 'ज्ञायते अनेन' इति व्युत्पत्त्या अन्तःकरणपरत्वम् अस्वरसम् इत्यभिप्रायः । **अगत्या**—विकारप्राचुर्याद्यर्थान्तरासम्भवात् । **तद्वत** इति । प्राचुर्यार्थत्वं सम्भवतीत्यर्थः । **बद्ध** इति । नाऽत्र मयडर्थः सम्भवति ; ज्ञप्तिमात्रस्वरूपो हि आत्मा । ज्ञातृत्वं हि काल्पनिकम् । मुक्तावस्थायां तदपि नाऽस्ति इत्यत्रोत्तरमिदम् ।

---

[1] प्रत्यनीककल्याणैकतानसकलेतर—ध, [2] तथाहि—थ, यदाह—ध. [3] स्वार्थकता—ख,घ, छ, थ, ध. स्वर्थिकः—वा. [4] स्वार्थिकत्वम्—द, अनर्थकत्वम्—वा. [5] ज्ञोऽत एवेति—ध. [6] मयादौ—ट, मयादौ तु—इ, वा. [7] मयडर्थासम्भवः—वा.

कथं तर्हि विज्ञानमयविषयश्लोके—

'विज्ञानं यज्ञं तनुते' (तै. उ. आन. 5-1)

इति केवलविज्ञानशब्दोपादानम् उपपद्यते ?

ज्ञातुरेव आत्मनः स्वरूपमपि स्वप्रकाशतया 'विज्ञानम्' इत्युच्यते, इति न दोषः ; ज्ञानैकनिरूपणीयत्वाच्च ज्ञातुः स्वरूपस्य । स्वरूप[1]निरूपण[1]धर्म[2]शब्दा[2] हि धर्ममुखेन धर्मिस्वरूपमपि [3]प्रतिपादयन्ति[3], गवादिशब्दवत् ।

'कृत्यल्युटो बहुलम्' (पा. सू. 3-3-113)

इति वा कर्तरि ल्युट् आश्रीयते । नन्द्यादित्वं वा आश्रित्य,

'नन्दिग्रहि' (पा. सू. 3-1-134)

---

कथं....उपपद्यते ? इति [प्रश्नः] विज्ञानमयशब्दस्य तद्विषयश्लोकस्थविज्ञानशब्दसमानार्थकत्वात् मयट् स्वार्थिकः इत्यभिप्रायेण । न हि ! विज्ञानस्य विज्ञानान्तराश्रयत्वं संभवति इति भावः ।

ज्ञातुरेवेति, 'विज्ञान'शब्दस्य ज्ञातरि प्रवृत्तौ निमित्तं दर्शयति ! एवकारः शङ्कितविरोधाभावद्योतकः । स्वरूपमपीत्यपिशब्दः, स्वरूप-धर्मयोः निमित्तसाधारण्यपरः । स्वरूप.... शब्दाः —अयुतसिद्धधर्मवाचिशब्दाः ।

कृत्येत्यादि । प्रथमे पक्षे, कर्तृपरत्वं कल्पनीयम् । द्वितीये गणान्तर्भावः कल्पनीयः, इति उभयत्र आश्रयणशब्दप्रयोगः । प्रत्यक्षानुगुण्यात्, श्रुत्यन्तरप्रत्यभिज्ञानात्, प्रथमश्रुतत्वात्, प्रकृतिस्वारस्यात्, प्रत्ययानर्थक्यानुपपत्तेश्च प्रबलविज्ञानमयशब्दानुरोधेन 'विज्ञान'-शब्दः निर्वाह्यः इत्यर्थः ।

---

[1] निरूपक—ई. [2] शब्दः—वा. [3] प्रतिपादयति—वा.

इत्यादिना कर्तरि ल्युः । अत एव च,

'विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च' (तै. उ. आन. 5-1)

इति यज्ञादिकर्तृत्वं विज्ञानस्य श्रूयते । [1]बुद्धिमात्रस्य हि न[1] कर्तृत्वं सम्भवति ॥

[कर्तृत्वं न औपचारिकं, किन्तु चेतनासाधारणधर्म एव]

अचेतनेषु हि चेतनोपकरणभूतेषु विज्ञानमयात् प्राचीनेषु अन्नमयादिषु, न चेतनधर्मभूतं कर्तृत्वं श्रूयते । अत [2]एव[2] चेतनम्, अचेतनं च, स्वासाधारणैः निलयनत्वानिलयनत्वादिभिः धर्मविशेषैः विभज्य निर्दिशत् वाक्यम्—

'विज्ञानं चाऽविज्ञानं च' (तै. उ. आन. 3-3)

इति विज्ञानशब्देन तद्गुणं चेतनं वदति ॥

[विज्ञानशब्दस्य चेतनार्थकत्वं माध्यन्दिनपाठादपि]

[3]तथा[3] अन्तर्यामिब्राह्मणे—

---

**अत एव**—विज्ञानशब्दस्य चेतनपरत्वादेव । **बुद्धिमात्रस्येति** । बोद्धुरेव हि कर्तृत्वं प्रत्यक्षश्रुतिभिः सूत्रैश्च सिद्धम् इति भावः । **कर्तृत्वम्**—चेतनासाधारणः प्रयत्नाधारत्वलक्षणः कर्तृत्वविशेषः । **यज्ञादिकर्तृत्वम्** इति हि उक्तम् । अत्र विज्ञानशब्दास्वारस्यम् उभयोरपि अविशिष्टम् । यज्ञादिकर्तृत्वास्वारस्यं तु परस्य अधिकम् (श्रु.प्र.) ॥

**अचेतनेषु हि** इति । ननु—अन्नमये 'अग्रतेऽत्ति च भूतानि' (तै.उ.आन. 2-2) इति प्राकरणिकम् औपचारिकं कर्तृत्वमिव, उपकरणत्वाविशेषात् बुद्धेरपि औपचारिकं कर्तृत्वं स्यात्-इत्यत्रोत्तरमिदम् । बाधकाभावे सति उपचार एव दोषः । स च प्रकरणानुवृत्तश्चेत्, सोढव्यः स्यात् । न च तदनुवृत्तिः ; प्राणमये मनोमये च तस्य विच्छिन्नत्वात्, इत्यभिप्रायः। **अत एव**—विज्ञानशब्दस्य चेतनपरत्वादेव । **चेतनमिति** । न हि अन्तःकरणानन्तःकरणविभागः अत्र क्रियते ; किन्तु चिदचिद्विभाग एवेति भावः । **निलयनत्वेति** । अचिद्विकारविशेषस्य अन्तःकरणस्य 'जीवभूतां महाबाहो ययेदं धार्यते जगत्' (भ.गी.) इति प्रकारेण चेतनधार्यस्य विश्वनिलयनत्वायोगात्, परेण तस्य सत्यत्वानभ्युपगमाच्च इति भावः ॥

---

[1] बुद्धिमात्रस्य न—द, न च बुद्धिमात्रस्य—ध [2] एव च—ध, [3] तत्—थ

'यो विज्ञाने तिष्ठन्' (बृ. उ. 5-7-26)

इत्यस्य काण्वपाठगतस्य पर्यायस्य स्थाने,

'य आत्मनि तिष्ठन्' (बृ. उ. मा. पा. 5-7-26)

इति पर्यायम् अधीयानाः माध्यन्दिनाः, 'काण्व[1]पाठगतं विज्ञान[1]शब्द[2]निर्दिष्टं[2] जीवात्मा' इति स्फुटीकुर्वन्ति 'विज्ञानम्' इति च नपुंसकलिङ्गं वस्तुत्वाभिप्रायम् । तदेवं, विज्ञानमयात् जीवात् अन्यः, तदन्तरः परमात्मा आनन्दमयः ।

[विज्ञानशब्दस्य ज्ञानपरत्वेऽपि, प्रकृते ज्ञातृलाभः]

यद्यपि—'विज्ञानं यज्ञं तनुते' (तै.उ.आन. 5-1)

इति [3]श्लोके[3] ज्ञानमात्रमेवोपादीयते, न ज्ञाता ; तथापि,

'अन्योऽन्तर आत्मा विज्ञानमयः' (तै.उ.आन. 4-1)

इति, तद्वान् ज्ञातैवोपदिश्यते । यथा—

'अन्नाद्वै प्रजाः प्रजायन्ते' (तै.उ.आन. 2-1)

इत्यत्र श्लोके केवलान्नोपादानेऽपि,

'स वा एष पुरुषोऽन्नरसमयः' (तै.उ.आन. 1-3)

इत्यत्र न अन्नमात्रं निर्दिष्टम् ; अपि तु तन्मयः — तद्विकारः ।

---

**स्फुटीकुर्वन्ति** इति । विज्ञानशब्दस्य आत्मशब्दस्थाने श्रुतत्वात्, अन्तःकरणपरत्वम् अनुपपन्नम् । चेतनव्यतिरिक्तेषु आत्मशब्दोऽपि हि अस्वरसः । अन्तःकरणपरत्वे विज्ञानात्मशब्दयोः द्वयोरपि अस्वारस्यम् । चेतनपरत्वे तु विज्ञानशब्दमात्रास्वारस्यम् ; न तु द्वयोः इति विशेषः । **नपुंसकलिङ्गमिति** । विज्ञानशब्दस्य ल्युट्प्रत्ययान्तत्वे विशेष्यानुगुणलिङ्गत्वात्, आत्मविषयस्य तस्य कथं नपुंसकत्वम् ? इत्यत्र [उत्तरमिदम्] **तदेवमिति**। **तत्**—उक्तोपपत्तिभिः । **एवम्**—विज्ञानशब्दस्य चेतनपरत्वसिद्धेः, इत्यर्थः । (श्रु. प्र.) ॥

[पूर्वं] श्लोकस्थविज्ञानशब्दस्य ज्ञातृपरत्वोपपादनेन, विज्ञानमयशब्दस्य ज्ञातृपरत्वमुक्तम् । अथ श्लोकस्य ज्ञातृपरत्वाभावेऽपि विज्ञानमयशब्दस्य ज्ञातृपरत्वमाह **यद्यपीती** । मयड्रहितवाक्ये तदर्थः परित्यक्त इति, तद्वत्यपि वाक्ये स न त्याज्यः इत्यर्थः । **यथेति** । पूर्ववाक्योक्तार्थैकदेशविषयत्वात्, श्लोकस्य ब्राह्मणस्य च ऐकार्थ्यम् ; यथा अन्नमयविषयकश्लोकस्येत्यर्थः। **तन्मयः** इति, श्रुतिवाक्यगतमयडर्थानुवादः । **तद्विकारः** इति, तद्व्याख्यानम् ।

---

[1] पाठगतविज्ञान—वा, [2] निर्दिष्टः—वा, [3] श्लोकेन—इ, ख, घ, ङ, छ.

एतत्सर्वं हृदि निधाय सूत्रकारः स्वयमेव,

'भेदव्यपदेशात्' (ब्र.सू 1-1-18)

इति अनन्तरमेव वदति ॥

[सामानाधिकरण्यस्य भेदावहत्वोपपादनेन पूर्वपक्षदूषणम्]

यदुक्तम्—जगत्कारणतया निर्दिष्टस्य,

'अनेन जीवेनात्मनाऽनु[1]प्रविश्य[1]' (छां उ. 6-3-2)

'तत् त्वमसि' (छां.उ. 6-8-7)

[2]इति च[2] जीवसामानाधिकरण्यनिर्देशात्, जगत्कारणमपि जीवस्वरूपात् न अतिरिच्यते इति कृत्वा, जीवस्यैव स्वरूपम्

'ब्रह्मविदाप्नोति परम्' (तै.उ.आन. 1-1)

इति प्रक्रान्तम्, असुखात् व्यावृत्तत्वेन आनन्दमयः इत्युपदिश्यते—इति,

तदयुक्तम्; जीवस्य चेतनत्वे सत्यपि,

'तदैक्षत बहु स्यां प्रजायेयेति । तत्तेजोऽसृजत' (छां.उ. 6-2-3)

[3]इति[3] स्वसङ्कल्प[4]पूर्वकानन्त[4]विचित्रसृष्टियोगानुपपत्तेः । शुद्धावस्थस्याऽपि हि तस्य सर्गादिजगद्व्यापारासम्भवः,

---

एतत्....वदतीति । 'तस्माद्वा एतस्माद्विज्ञानमयात्' इति वाक्यं जीव-परयोः भेदप्रतिपादकं वदन् सूत्रकारः, विज्ञानशब्दस्य ज्ञातृपरत्वं, तदुपपत्तीश्च हृदि निदधदेव वदतीत्यर्थः (श्रु.प्र) ॥

[तदयुक्तमिति । पूर्वपक्षहेतुतया उक्तस्य जीवसामानाधिकरण्यस्य दूषणमिदम् ।] जीवस्येत्यादि । [अनेन] प्राकरणिकवाक्यैः, समानाधिकरणपदप्रातिपदिकांशेन च विरुद्धधर्माध्यासप्रतिपत्त्या भेदसिद्धेः कालात्ययापदिष्टहेतुरिव परोक्तहेतुः न साध्यसाधकः इति दूषणं वक्तुं, तत्पदोपस्थाप्यविशेषसमर्पकैः प्राकरणिकवाक्यैः पराभिमतैक्यविरुद्धभेदसिद्धिं दर्शयति । सृष्टियोगानुपपत्तेरिति । प्रलयदशायाम् उपसंहृतकरणकलेबरस्य कर्मवश्यस्य, सङ्कल्पमात्रेण विचित्रजगत्सर्गायोगात्, बद्धस्य स्रष्टृत्वम् अनुपपन्नम् इत्यर्थः ।

---

1 प्रविश्य नामरूपे व्याकरवाणि—द 2 इति- अ, इ, थ 3 इति च—वा, 4 पूर्वकविविध—थ

'जगद्व्यापारवर्जम्' (ब्र.सू. 4-4-17)

'भोगमात्रसाम्य[1]लिङ्गात्[1]' (ब्र.सू. 4-4-21)

इत्यत्र उपपादयिष्यते ।

कारणभूतस्य ब्रह्मणः जीवस्वरूपत्वानभ्युपगमे,

'अनेन जीवेनात्मना' (छां.उ. 6-3-2)

'तत् त्वमसि' (छां.उ. 6-8-7)

इति सामानाधिकरण्यनिर्देशः कथमुपपद्यते ?—इति चेत्,

कथं वा निरस्तनिखिलदोषगन्धस्य सत्यसङ्कल्पस्य सर्वज्ञस्य सर्वशक्तेः अनवधिकातिशयासङ्ख्येयकल्याण[2]गुणगणस्य[2] सकलकारणभूतस्य ब्रह्मणः, नानाविधानन्त[3]दुःखाकर[3]कर्माधीनचिन्तितनिमिषितादिसकलप्रवृत्तिजीवस्वरूपत्वम् ?

[जहदजहत्स्वार्थलक्षणया निर्वाहस्य दूषणम्]

अन्यतरस्य मिथ्यात्वेन उपपद्यते—इति चेत्,

कस्य भोः ?

---

**कथमुपपद्यत** इति । समानविभक्त्यवगतैक्योपपत्तिः कथम् ? इत्यर्थः । **कथं वेति** । प्रातिपदिकावगतविशेषणान्वयः कथमित्यर्थः । **निरस्तेत्यादिपदैः** तत्पदप्रातिपदिकावगतविशेषणान्वयः दर्शितः । **निरस्तनिखिलदोषगन्धत्वम्**, 'तदैक्षत ....असृजत' इति यथासङ्कल्पं जगत्सृष्टिश्रवणेन सत्यसङ्कल्पादिगुणानाम् अतिरोहितत्वावगमात्, तिरोधायकहेयसम्बन्धानर्हत्वम् अर्थसिद्धम्, इत्यभिप्रायेणोक्तम् । **अनवधिकेति,** जगद्व्यापारौपयिकगुणान्तराणाम् अन्यत्र कण्ठोक्तानां सद्विद्यायां गतिसामान्यनयात् (ब्र. सू. 1-1-11) अर्थसिद्धत्वमभिप्रेत्योक्तम् । **नानाविधेति,** 'त्वं'पदप्रातिपदिकावगतविशेषणान्वयो दर्शितः । **जीवस्वरूपत्वम्**—जीवेन सह स्वरूपैक्यम् । 'जीवत्वम्' इत्युक्ते जीवशरीरकत्वप्रतिपत्तिश्च संभवतीति, तद्व्यावृत्त्यर्थमेवमुक्तम् ॥

**अन्यतरस्येति** । 'तत्-त्वं'पदप्रतिपन्नयोः विशेषणयोः अन्यतरस्येत्यर्थः । **कस्य भोः** इति । प्रत्यक्षसिद्धागमसिद्धत्वंतत्पदावगतविशेषणजातं दुस्त्यजम् इति भावः ।

---

[1] लिङ्गाच्च—इ, ङ, [2] गुणस्य – ध. [3] दुःखकर—द.

किं हेयसम्बन्धस्य ? किं वा हेय[1]प्रत्यनीक[1]कल्याणैकतानस्वभावस्य ?

हेयप्रत्यनीककल्याणैक[2]तानस्य[2] ब्रह्मणः अनाद्यविद्याश्रयत्वेन हेयसम्बन्धमिथ्याप्रतिभासः मिथ्यारूपः -- इति चेत्,

विप्रतिषिद्धमिदमभिधीयते — ब्रह्मणः हेयप्रत्यनीककल्याणैकतानत्वम्, अनाद्यविद्याश्रयत्वेन अनन्तदुःखविषयमिथ्याप्रतिभासाश्रयत्वं च — इति। अविद्याश्रयत्वं, तत्कार्यदुःखप्रतिभासाश्रयत्वं चैव हि हेयसम्बन्धः। तत्सम्बन्धित्वं [3]तत्प्रत्यनीकत्वं[3] च विरुद्धमेव।

तथाऽपि तस्य मिथ्यात्वात् न विरोधः, इति मा वोचः। मिथ्याभूतमपि अपुरुषार्थ एव; यन्निरसनाय [4]सर्वे वेदान्ताः[4] आरभ्यन्ते – इति ब्रूषे। निरसनीयापुरुषार्थयोगश्च हेयप्रत्यनीककल्याणैकतानतया विरुध्यते।

किं कुर्मः ?

'येनाऽश्रुतं श्रुतं भवति' (छां.उ.6-1-3)

इति, एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय,

---

**हेयम्**—दुःखम्। **मिथ्याप्रतिभासः**—भ्रान्तिज्ञानम्। स्वतश्शुद्धस्य पटस्य औपाधिकमालिन्यवत्, परमार्थतो निर्मलस्य स्फटिकस्य अध्यासात् अरुणिमवच्च, ब्रह्मणः निर्दोषकल्याणगुणैकतानत्वं, हेयसम्बन्धश्च स्वाभाविकौपाधिकविभागेन, परमार्थापरमार्थविभागेन वा अविरुद्धम्; उभयोरपि स्वाभाविकत्वसत्यत्वाभ्युपगमे हि विरोधः—इति शङ्का अभिप्रेता (श्रु.प्र.)।

**अविद्याश्रयत्वमिति**। न केवलं दुःखमेव हेयम्; अपि तु तद्धेतु-तत्प्रतिभासावपि हेयौ इत्यर्थः। **विरुद्धमेवेति**। अविद्या-तत्कार्यदुःख-तत्प्रतिभासरूपहेयानामाश्रयत्वं तत्प्रत्यनीकत्वं च विरुद्धमित्यर्थः।

**तथाऽपि**—अविद्यादीनां हेयत्वेऽपि। **तस्य**—आश्रयत्वस्वरूपसम्बन्धस्य।

**मिथ्याभूतमपीति**। आश्रयत्वम् [इति शेषः]। **निरसनीयेति**। मिथ्यात्वस्य अत्यन्ताभावरूपत्वे, निरसनीयाभावात् शास्त्रानारम्भः, ज्ञानबाध्यत्वरूपत्वेऽपि अपुरुषार्थत्वाभावे, निरसनीयत्वाभावात् शास्त्रारम्भवैयर्थ्यम्। अपुरुषार्थत्वे, हेयप्रत्यनीकत्वव्याघातः दुष्परिहरः इति (श्रु प्र.)।

---

[1] प्रत्यनीकस्य—इ. [2] तानस्वभावस्य—ड. [3] हेयप्रत्यनीकत्वं—थ, [4] वेदान्ताः—आ.

'सदेव सोम्येदमग्र आसीत्' (छां.उ. 6-2-1)

इत्यादिना निखिलजगदेककारणताम्,

'तदैक्षत बहु स्याम्' (छां. उ. 6-2-3)

इति सत्यसङ्कल्पतां [1]च ब्रह्मणः[1] प्रतिपाद्य, तस्यैव ब्रह्मणः,

'तत् त्वमसि' (छां. उ. 6-8-7)

इति सामानाधिकरण्येन अनन्तदुःखाश्रयजीवैक्यं प्रतिपादितम्। तदन्यथानुपपत्त्या ब्रह्मण एव अविद्याश्रयत्वादि [2]परिकल्पनीयम्[2]—इति चेत्,

श्रुतोपपत्तयेऽपि अनुपपन्नं विरुद्धं च न कल्पनीयम्।

अथ—हेयसम्बन्ध एव [3]पारमार्थिकः[3], कल्याणैक[4]स्वभावता[4] तु मिथ्याभूता!

हन्तैवं तापत्रयाभिहतचेतनोज्जिजीवयिषया प्रवृत्तं शास्त्रम्, 'तापत्रयाभिहतिरेव [5]तस्य[5] पारमार्थिकी, कल्याणैकस्वभावस्तु भ्रान्तिपरिकल्पितः' इति बोधयत्, सम्यगुज्जीवयति!

अथ—एतद्दोषपरिजिहीर्षया, ब्रह्मणः निर्विशेषचिन्मात्रस्वरूपातिरिक्तजीवत्व-दुःखित्वादिकं, सत्यसङ्कल्पत्व-कल्याणगुणाकरत्व-जगत्कारणत्वाद्यपि मिथ्याभूतमिति कल्पनीयम्—इति चेत्,

अहो भवतां वाक्यार्थपर्यालोचनकुशलता।

---

**श्रुतोपपत्तये** इति, हेयसम्बन्धस्य [हेयप्रत्यनीकत्व]विरोधेऽपि, श्रुतिबलात् अभ्युपगन्तव्यत्वशङ्कां परिहरति। **अनुपपन्नम्**-तर्कपराहतम्। **विरुद्धम्**-प्रमाणविरुद्धम्। 'अपहतपाप्मा' इत्यादिश्रुत्या, तर्केण च विरोधः। स च एकस्मिन् विरुद्धधर्मान्वयानुपपत्तिरूपः, इत्यर्थः।

**हन्तैवमिति**। शास्त्रस्य प्रयोजनपर्यवसायित्वाभावात्, अप्रामाण्यं प्रसजेत् इत्यर्थः। [**सम्यगुज्जीवयति** इति काकूक्तिः। सर्वथा नोज्जीवयति इत्यर्थः।]

**पर्यालोचनकुशलतेति**। अर्थनिष्कर्षोपयुक्तपदद्वय-वाक्य-एतत्प्रकरण-प्रकरणान्तर-उपनिषदन्तर-प्रमाणान्तर-तर्क-सामानाधिकरण्यनिरूपणम्—[अत्र] पर्यालोचनम्।

---

[1] च सर्वज्ञस्य सर्वशक्तेः अनवधिकातिशयासंख्येयकल्याणगुणगणस्य सकलकारणभूतस्य ब्रह्मणः—वा [2] परिकल्पितम्—थ, [3] अपारमार्थिकः—द. [4] तानता—वा [5] अस्य—ध.

**एकविज्ञानेन [1]सर्वविज्ञानप्रतिज्ञानम्[1], सर्वस्य मिथ्यात्वे सर्वस्य ज्ञातव्यस्य अभावात् न [2]सेत्स्यति[2]। यथा एकविज्ञानं परमार्थविषयम्, तथैव सर्वविज्ञानमपि यदि परमार्थविषयं तदन्तर्गतं च, तदा तज्ज्ञानेन सर्वविज्ञानमिति शक्यते वक्तुम्। नहि परमार्थ[3]शुक्तिकाज्ञानेन[3] तदाश्रयम् [4]अपरमार्थरजतं ज्ञातं[4] भवति ॥**

[ सर्वविज्ञानप्रतिज्ञायाः ब्रह्मेतरासत्यत्वपरतादूषणम् ]

**अथोच्येत — एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः अयमर्थः; 'निर्विशेष[5]वस्तुमात्रमेव[5] सत्यम् 'अन्यत् असत्यम्' — इति।**

**[6]न तर्हि[6],**

**'येनाऽश्रुतं श्रुतं भवति, अमतं मतम्, अविज्ञातं विज्ञातम्'** (छां. उ. 6-1-3) **इति [7]श्रूयेत[7]; 'येन श्रुतेन, अश्रुतमपि श्रुतं भवति' इति [8]हि अस्य वाक्यस्यार्थः[8]।**

---

प्रथमम् एतत्प्रकरणोपक्रमविरोधं दर्शयति **एकेति**। **यथेत्यादि**। परमार्थविषयमिथ्याविषयत्वे ज्ञानयोः वैरूप्यं स्यात् इति भावः। **तदन्तर्गतं चेति**। ज्ञानस्य तदन्तर्गतत्वं तद्विषयान्तर्गतत्वम्। परिषज्ज्ञानेन तद्गताः पुरुषा हि ज्ञाता भवन्ति; न तु तद्बहिष्ठाः इति भावः। **न हीति**। उक्तमर्थं व्यतिरेकेणोपपादयत्यनेन। न हि शुक्ति-रजतयोः एकधीविषयत्वम् इत्यर्थः। एकत्व-सर्वत्वावस्थाभेदे सत्यपि धर्म्यैक्यात्, एकविज्ञानेन सर्वविज्ञानम् उपपद्यते; ज्ञातत्व-सर्वत्वे हि एकाश्रयवर्तिनी ॥

**न तर्हि ··· श्रूयेत** इति। सर्वं मिथ्यात्वेन ज्ञातं भवतीति वा, सर्वं निवृत्तं भवतीति वा श्रूयेत इत्यर्थः। एवं चार्थे सति 'मिथ्यात्वेन' इति पदस्य अध्याहारः। धर्म्यन्तरविषयतया ज्ञानशब्दयोः वैरूप्यम्। स्वरसतः प्राप्तं हि ज्ञानैकरूप्यम्; तच्च भज्यते। **'ज्ञातं भवति'** इति, ज्ञातृ-ज्ञेय-तदवच्छिन्नज्ञानाभावात् निवृत्तिलक्षणा च इति दोषत्रयमभिप्रेतम् (श्रु.प्र.)। **येनेत्यादिना** प्रतिज्ञावाक्यास्वारस्यम्।

---

[1] सर्वविज्ञानं प्रतिज्ञातं—ध, [2] सम्पत्स्यते—आ, इ, ड [3] शुक्तिज्ञानेन—इ. ट. वा, [4] पारमार्थिकं रजतं ज्ञातं—आ, अपरमार्थरजतज्ञानं—ध [5] सन्मात्रेव—इ, सन्मात्रमेव—ध, न, [6] तर्हि—ध. [7] न श्रूयेत—ध. [8] वाक्यस्यार्थः—अ, तस्य वाक्यस्यार्थः—ध.

कारणतयोप[1]लक्षित[1]निर्विशेषवस्तुमात्रस्यैव सद्भावश्चेत् प्रतिज्ञातः,

'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातम्' (छ.उ. 6-1-4)
इति [2]दृष्टान्तोऽपि[2] न घटते। [3]मृत्पिण्डविज्ञानेन हि[3] [4]तद्विकारस्य[4] ज्ञातता निदर्शिता।

तत्राऽपि विकारस्य असत्यता [5]अभिप्रेता[5]—इति चेत्,

मृद्विकारस्य रज्जुसर्पादिवत् असत्यत्वं, शुश्रूषोः [6]असिद्धमिति[6], प्रतिज्ञातार्थ सम्भावनाप्रदर्शनाय 'यथा सोम्य' इति प्रसिद्धवदुपन्यासः न युज्यते। न च तत्त्वमस्यादिवाक्यजन्यज्ञानोत्पत्तेः प्राक्, विकारजातस्य असत्यतामापादयत्, तर्कानुगृहीतम् अननुगृहीतं वा प्रमाणम् [7]उपलभामहे—इति[7]। अयमर्थः—

'तदनन्यत्वमारम्भणशब्दादिभ्यः' (ब्र.सू. 2-1-15)
इत्यत्र वक्ष्यते। तथा—

[पर्यालोचनीयवाक्यानां दर्शनम्]

'सदेव सोम्येदमग्र आसीदेकमेवाऽद्वितीयम्' (छां.उ. 6-2-1)

'तदैक्षत बहु स्यां प्रजायेयेति। तत्तेजोऽसृजत' (छां.उ. 6-2-3)

'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छां.उ. 6-3-2)

---

कारणतयेति दृष्टान्तवाक्याननुगुणत्वम्। मृत्पिण्डविज्ञानेनेति, अघटितत्वोपपादनम्। न हि शुक्तिज्ञानात् रजतनिवृत्तिवत्, मृत्पिण्डज्ञानात् घटादिनिवृत्तिः निदर्शिता इति भावः।

तत्राऽपीति, दृष्टान्ताविरोधशङ्का।

न चेत्यादि, मृद्विकारासत्यत्वम् अनुमानादिना अवगतम् इत्यत्रोत्तरम्। अननुगृहीतम् इति, उत्तालैक्यबुद्धिवत् आपातप्रतीतिजनकत्वमात्रं विवक्षितम्।

---

[1] लक्षितस्य—वा, [2] दृष्टान्तः—इ, [3] मृत्पिण्डविज्ञानेन—न, तत्र मृत्पिण्डविज्ञानेन हि—व। [4] विकारस्य—थ, ध. [5] अभिहिता—वा, [6] अप्रसिद्धमिति—ध, [7] उपलभामहे—इ.

'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' (छां.उ. 6-8-4)

'ऐतदात्म्यमिदं सर्वम्' (छां.उ. 6-8-7)

इत्यादिना, अस्य जगतः सदात्मकता, सृष्टेः पूर्वकाले नामरूप[1]विभागप्रहाणम्[1], जगदुत्पत्तौ सच्छब्दवाच्यस्य ब्रह्मणः स्वव्यतिरिक्तनिमित्तान्तरानपेक्षत्वम्, 'सृष्टिकाले अहमेव अनन्तस्थिरत्रसरूपेण बहु स्याम्' इति अनन्यसाधारणसङ्कल्पविशेषः, यथासङ्कल्पम् अनन्तविचित्रतत्त्वानां विलक्षणक्रम[2]विशेषविशिष्टा[2] सृष्टिः, समस्तेषु अचेतनेषु वस्तुषु स्वात्मकजीवानु[3]प्रवेशेनैव[3] अनन्त[4]नामरूप[4]व्याकरणम्, [5]स्वव्यतिरिक्तस्य समस्तस्य[5] स्वमूलत्वम्, स्वायतनत्वम्, स्वप्रवर्त्यत्वम्, स्वेनैव जीवनम्, [6]स्वप्रतिष्ठत्वम्[6] इत्याद्यनन्तविशेषाः शास्त्रैकसमधिगम्याः प्रतिपादिताः ।

तत्सम्बन्धितया प्रकरणान्तरेष्वपि अपहतपाप्मत्वादिनिरस्तनिखिलदोषता-सर्वज्ञता-सर्वेश्वरत्व-सत्यकामत्व-सत्यसङ्कल्पत्व-सर्वानन्दकरणनिरतिशया[7]नन्दयोगादयः[7] सकलेतर-प्रमाणाविषयाः सहस्रशः प्रतिपादिताः ।

एवम् अनन्यगोचरानन्तविशेषविशिष्टप्रकृतब्रह्मपरामर्शितच्छब्दस्य, निर्विशेषवस्तु-मात्रोपदेशपरत्वम्, असङ्गतत्वेन उन्मत्त[8]प्रलपितायेत[8] ।

---

**स्वप्रवर्त्यत्वमिति** । सदायतनत्वफलितं स्वप्रवर्त्यत्वं, स्वेनैव जीवनं च । प्रशासनेन हि धारणम्, धृत्या च तज्जीवनम् । **शास्त्रैकेति**, निषेधाय गुणानुवादः इति शङ्कायाः व्युदासाय, न हि विधेः अनुवादित्वम् इति भावः ।

**तत्सम्बन्धितयेति**, श्रुत्यन्तरापर्यालोचनां प्रदर्शयति । अपहतपाप्मत्वादिरूपा निरस्तनिखिलदोषता इत्यर्थः । **सकलेतरप्रमाणाविषयाः** इति, अपूर्वतालक्षणं गुणेषु तात्पर्यलिङ्गं दर्शयितुमुक्तम् (श्रु प्र ) ।

**प्रकृतेत्यनेन**, प्राकरणिकवाक्यविरोधः विवक्षितः । अनेन यत्र क्वाऽपि प्रकृताकार-विशिष्टपरामर्शितया तच्छब्दव्युत्पत्तिविरोधः उक्तः ।

---

[1] विभागाग्रहणम्—ध [2] विशिष्टा—इ, विशेषा—द [3] प्रवेशेन—आ, इ, ख, छ
[4] तन्नामरूप—द, न, [5] व्यतिरिक्तस्य समस्तस्य—इ, स्वव्यतिरिक्तसमस्तस्य—द, न
[6] स्वप्रतिष्ठितत्वम्—वा, स्वप्रतिष्ठित्वम्—ध, स्वप्रतिष्ठाम्—द [7] नन्दादयः—द, न
[8] प्रलपितायते—आ, वा प्रलपितं येन—ध, प्रलपितं चेत्—थ

'त्वं'पदं च संसारित्वविशिष्टजीववाचि । तस्याऽपि निर्विशेषस्वरूपोपस्थापनपरत्वे, स्वार्थः परित्यक्तः स्यात् । निर्विशेषप्रकाशस्वरूपस्य च वस्तुनो हि ; अविद्यया तिरोधानं, स्वरूपनाशप्रसङ्गादिभिः न सम्भवतीति, पूर्वमेवोक्तम् । एवं च सति, समानाधिकरण[1]वृत्तयोः[1] 'तत्, त्वम्' इति [2]द्वयोरपि पदयोः[2], मुख्यार्थपरित्यागेन, [3]लक्षणा च[3] समाश्रयणीया ॥

[तत्त्वंपदयोः सामानाधिकरण्यविषये परकीयाभिप्रायानुवादः]

अथोच्येत-समानाधिकरण[4]वृत्तानाम्[4] एकार्थप्रतिपादनपरतया, विशेषणांशे तात्पर्यासम्भवादेव विशेषणनिवृत्तेः, वस्तुमात्रैकत्वप्रतिपादनात्, न लक्षणाप्रसङ्गः । यथा 'नीलम् उत्पलम्' इति पदद्वयस्य [5]विशेष्यैकत्व[5]प्रतिपादन[6]परत्वेन[6], [7]नीलत्वोत्पलत्वरूप[7]विशेषणद्वयं न विवक्ष्यते । तद्विवक्षायां हि नीलत्वविशिष्टाकारेण उत्पलत्वविशिष्टाकारस्य एकत्वप्रतिपादनं [8]प्रसज्येत[8] । तत्तु न सम्भवति । न हि ; नैल्यविशिष्टाकारेण, तद्वस्तु उत्पलपदेन विशेष्यते ; जाति-गुणयोः अन्योन्यसमवायप्रसङ्गात् । अतः नीलत्वोत्पलत्वोपलक्षित[9]वस्त्वेकत्वमात्रं[9], सामानाधिकरण्येन प्रतिपाद्यते । तथा 'सोऽयं देवदत्तः' इति [10]अतीतकाल[10]-विप्रकृष्टदेशविशिष्टस्य तेनैव रूपेण संनिहितदेश-

---

**त्वंपदं चेति** । स्वाभिमुखश्चेतनः 'त्वं'पदार्थः । आभिमुख्यं च स्ववाक्यबोध्यत्वम् । बोध्यत्वं च अज्ञस्य संसारिणः स्वतः प्राप्तम् । तस्मात् बोधनार्हतोपयोग्याकारविशिष्टः त्वमर्थः । अतः स परित्यक्तो भवति इति भावः । **एवं च सतीति** । निर्विशेषस्वरूपोपस्थापनपरत्वे मुख्यार्थसम्बन्धितया वस्तुमात्रावबोधने अभ्युपगते लक्षणास्वीकारः इत्यर्थः ॥

**तात्पर्यासम्भवादेवेति** । अन्यथा विशेषणबहुत्वात् एकार्थत्वासिद्धेः इति भावः । एवकारस्य पूर्वमप्युक्तादेवेत्यर्थः । प्रथमसूत्रे हि बहुशः उक्तः । **न लक्षणेति** । वाच्याबहिर्भूतप्रतिपादनात् इति भावः । **तत्त्विति,** प्रसक्तस्य अनिष्टतां दर्शयति । **न हि** इत्यादि । युगपत् अभिधाने, उद्देश्योपादेयविभागहानिप्रसङ्गात्, पदद्वयप्रकृत्युपस्थापितविशिष्टैक्ये समानविभक्त्या प्रतिपाद्यमाने, विशेष्यांशस्येव विशेषणभूतजातिगुणांशयोरपि ऐक्यप्रसङ्गाच्च, क्रमेणाऽभिधानपक्षः अभ्युपगन्तव्यः—इति हृदि निहितोऽभिप्रायः (श्रु. प्र) । **जाति-गुणयोरिति** । नीलगुणविशिष्टे उत्पलत्वान्वये, विशेष्य इव विशेषणेऽपि उत्पलत्वं स्यात्, एवं विपरिवत इत्यर्थः । **नीलत्वोपलक्षितेति** । नीलत्वादेः बोधः त्यज्यते इति भावः (भा.द) ।

---

[1] प्रवृत्तयोः—इ, [2] पदयोः द्वयोरपि—थ, ध [3] लक्षणा—न [4] प्रवृत्तानाम्—इ, [5] विशेष्यैक्य—वा, [6] परत्वे—थ, ध [7] नीलत्वोत्पलत्वस्वरूप—इ, वा नीलोत्पलत्वरूप—थ [8] प्रसज्यते—इ, वा [9] वस्त्वैक्यमात्र—इ [10] तत्काल—द

वर्तमानकाल-विशिष्टतया प्रतिपादनानुपपत्तेः, उभयदेश-कालोपलक्षितस्वरूपमात्रैक्यं, सामानाधिकरण्येन प्रतिपाद्यते ।

यद्यपि, 'नीलम्' इत्याद्येकपदश्रवणे प्रतीयमानं विशेषणं सामानाधिकरण्यवेलायां विरोधात् न प्रतिपाद्यते ; तथापि, वाच्येऽर्थे प्रधानांशस्य प्रतिपादनात् न लक्षणा ; अपि तु विशेषणांशस्य अविवक्षामात्रम् । सर्वत्र सामानाधिकरण्यस्य [1]एष एव[1] स्वभाव इति, न कश्चिद्दोषः—इति ॥

[उक्तपूर्वपक्षप्रतिक्षेपः]

तदिदमसारम् ; सर्वेष्वेव वाक्येषु पदानां व्युत्पत्तिसिद्धार्थसंसर्गविशेषमात्रं प्रत्याय्यम् । तत्र समानाधिकरण[2]वृत्तानामपि[2] नीलादिपदानां, नैल्यादिविशिष्ट एवाऽर्थः व्युत्पत्ति-सिद्धः, पदान्तरार्थसंसृष्टः अभिधीयते । यथा 'नीलम् उत्पलम् आनय' इत्युक्ते नीलिमादिविशिष्टमेव आनीयते; यथा च 'विन्ध्याटव्यां मदमुदितो मातङ्गगणः तिष्ठति'

---

**न लक्षणा** इति । तात्पर्यविषयतया, धर्मितया च प्रधानस्य विशेष्यांशस्य अवर्जनात् अप्रधानविशेषणत्यागेऽपि अङ्गुल्यादिविकले पुरुषशब्दस्येव न लक्षणा इति भावः । **अविवक्षा-मात्रमिति** । अशक्ये क्वचिद्व्यापाराभावात् , व्यापारविषयांशेऽपि न ह्यशक्तिः इति भावः । **सर्वत्रेति** । सामानाधिकरण्यव्युत्पत्तेः ईदृशत्वात् , विशेषणाविवक्षायामपि न अस्वारस्यम् ; व्युत्पत्त्यननुरोधे सति हि अस्वारस्यम् । अतः ऐकार्थ्यव्युत्पत्तिविरोधिविशेषणविवक्षायामेव [प्रत्युत] अस्वारस्यम् इति भावः (श्रु. प्र.) ॥

**सर्वेष्वेवेति** ; चरमोक्ततया बुद्धिस्थं व्युत्पत्त्यन्तराश्रयणं निरस्यति । **सर्वेषु**-समानाधि-करणेषु, व्यधिकरणेषु च । **संसर्गविशेषमात्रमिति** । व्यधिकरणवाक्येषु 'गामानय' 'गां बधान' इत्यादिषु, न हि प्रतिवाक्यं पदानाम् अर्थभेदव्युत्पत्तिकल्पनम ; 'क्लृप्त-कल्प्यविरोधे तु युक्तः क्लृप्तपरिग्रहः' इति न्यायेन क्लृप्तव्युत्पत्त्यैव स्वार्थबोधनसम्भवे व्युत्पत्त्यन्तरकल्पनानु-पपत्तेः ; तथा समानाधिकरणवाक्येष्वपि न पदानां प्रवृत्तिनिमित्ताविशिष्टार्थविषयं व्युत्पत्त्यन्तरं न कल्पनीयम् । वाक्यवैषम्यं तु व्युत्पत्तिसिद्धार्थसंसर्गविशेषात् ; न तु प्रकृत्यंशस्य व्युत्पत्त्य-न्तरकल्पनात् इत्यभिप्रायः। **तत्रनवगतार्था**-तेषु वाक्येषु ।[**नीलम्** इति, **विन्ध्येति** च]प्रत्यक्षविषयं, परोक्षविषयं च उदाहरणद्वयम् । अत एव हि **आनीयते**, **प्रतीयते** इत्युक्तम् । इत्थं प्रत्यक्ष-

---

[1] एष – आ, इ, ध    [2] प्रवृत्तानामपि – वा

इति, [1]पदद्वयावगत[1]विशेषणविशिष्ट एवार्थः प्रतीयते, एवं वेदान्तवाक्येष्वपि [2]समानाधिकरण[2]निर्देशेषु, तत्तद्विशेषणविशिष्टमेव ब्रह्म प्रतिपत्तव्यम् ॥

[सर्वैरपि विशेषणैः स्वरूपस्यैव विशेष्यता]

न च विशेषणविवक्षायाम् इतरविशिष्टाकारं वस्तु अन्येन विशेष्टव्यम्; अपि तु [3]सर्वैः[3] विशेषणैः स्वरूपमेव विशेष्यम्। तथा हि—

'भिन्नप्रवृत्तिनिमित्तानां शब्दानाम् एकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्' (कै.वृ.आ.) इति। अन्वयेन, निवृत्त्या वा पादान्तरप्रतिपाद्यादाकारादाकारान्तरयुक्ततया तस्यैव वस्तुनः पदान्तर[4]प्रतिपाद्यत्वं,[4] सामानाधिकरण्यकार्यम्। यथा 'देवदत्तः श्यामो युवा लोहिताक्षः

---

परोक्ष-विभागरहितं समानाधिकरणपदानाम् अनेकविशिष्टैकार्थबोधकत्वं दृश्यत इति, चरमपर्वाभिप्रायेण उदाहरणद्वयं दर्शितम्। तस्मात्,

'य एव लौकिकाः....त एव वैदिकाः' (पू.मी.सू.शा.भा. 1-3-30)

इति लोकवेदाधिकरणन्यायेन, 'प्रयोगचोदनाभावादर्थैकत्वमविभागात्' (पू.मी.सू. 1-3-30)

इति वेदान्तवाक्येष्वपि पदद्वयावगतविशेषणापरित्यागेनैव अर्थः प्रतिपत्तव्यः, इत्याशयेन **एवं वेदान्तेत्यादि** ॥

**न चेति।** अरुणाधिकरणे (पू.मी.अ. 3-1-6) विस्तरेण परिहारो वक्ष्यत इति अत्र संक्षिप्तः। न हि, यथा अनुपपत्तिः स्यात्, तथा वक्तव्यम् इति भावः। समानाधिकरणपदैः युगपत् तत्तत्प्रवृत्तिनिमित्तविशिष्टैकविशेष्यप्रतिपादनेन क्रमाभावात् न अन्योन्यसमवायः इति। **तथा हीति।** सर्वैः विशेषणैः स्वरूपस्य विशेष्यत्वे अनुगुणं सामानाधिकरण्यलक्षणमित्याशयः। न हि, विशेषणान्तरविशिष्टाकारे विशेषणान्तरान्वयप्रतिपादनं सामानाधिकरण्यमित्युक्तम्, इत्यर्थः। **सामानाधिकरण्यकार्यमिति।** अन्वयरूपार्थस्य व्यावृत्तिरूपार्थत्वं न कल्प्यम्; यथाव्युत्पत्ति, अन्वयमुखेन, व्यावृत्तिमुखेन वा वस्तुनः पदान्तरप्रतिजाद्यादाकारात् आकारान्तरयुक्तताप्रतिपादनं समानाधिकरणपदसमुदायकार्यम् इत्यर्थः। **श्यामो युवेति** [त्रयम्], अन्वय-

---

[1] पदद्वयगत—इ, पदद्वयस्यावगत—द, [2] सामानाधिकरण्य—वा
[3] सर्वैरपि—वा [4] प्रतिपाद्यत्वं हि—वा

अदीनः अकृपणः अनवद्यः' इति। यत्र तु, एकस्मिन् वस्तुनि समन्वयायोग्यं विशेषणद्वयं समानाधिकरणपदनिर्दिष्टम्, तत्राऽपि, अन्यतरत् पदम् अमुख्यवृत्तमाश्रीयते ; न द्वयम्। यथा 'गौः [1]वाहीकः[1]' इति। नीलोत्पलादिषु तु, विशेषणद्वयान्वयाविरोधात् एकमेव उभयविशिष्टं प्रतिपाद्यते ॥

[विशेषणभेदेन विशेष्यभेदशङ्कापरिहारौ]

अथ मनुषे—एकविशेषणप्रतिसम्बन्धित्वेन [2]निरूप्यमाणम्[2], विशेषणान्तरप्रतिसम्बन्धित्वात् विलक्षणमिति, [3]घट-पटयोरिव[3] एकविभक्ति[4]निर्देशेऽपि[4] ऐक्यप्रतिपादनासम्भवात्, समानाधिकरणशब्दस्य न विशिष्टप्रतिपादनपरत्वम् ; अपि तु विशेषणमुखेन स्वरूपमुपस्थाप्य तदैक्यप्रतिपादनपरत्वमेव—इति,

---

मुखेन अनेकप्रवृत्तिनिमित्तवैशिष्ट्योदाहरणम्। अदीनादि [त्रयम्], व्यतिरेकमुखेन अनेकाकारान्वयोदाहरणम्। [देवदत्तः इति एकं विशेष्यम्।] दीनत्वम्—अभास्वरमनस्कत्वम्। कृपणत्वम्—निर्धनत्वम् (श्रु.प्र.)। यत्र तु इति। मुख्यासंभवे, वृत्त्यन्तरम्; तदसम्भवे, व्युत्पत्त्यन्तरम्। वृत्त्यन्तरेऽपि, अन्यतरस्यैव अमुख्यत्वं ; न द्वयोः। इतरस्य च न निर्विशेषार्थत्वम् ; वृत्त्यन्तरोपस्थापितविशेषसमर्पकत्वात् इति भावः(श्रु.दी.)। विशेषणद्वयमिति त्रित्वादेरपि उपलक्षणम्। नीलेति। [अत्र] वृत्त्यन्तरकल्पनहेतुरेव नास्तीत्यर्थः ॥

अथ मनुषे इति, विशेषणभेदेन विशेष्यभेदं शङ्कते। विशेषणप्रतिसम्बन्धित्वम्—विशेषणविशिष्टता। एकविशेषण....प्रतिपादनपरत्वमिति। यथा घटत्वविशिष्टतायाः पटत्वविशिष्टतायाश्च भेदेन तद्विशिष्टयोः घट-पटयोः विशेष्ययोः भेदः ; तथा विशेषणान्तरान्वयस्य अन्यविशेषणान्वयस्य च भेदेन, तद्विशेष्ययोश्च भेदः समानविभक्तिकनिर्देशे सत्यपि अवर्जनीय इति, सामानाधिकरण्यं न विशिष्टैक्यप्रतिपादनक्षमम् इत्यर्थः। विशेषणान्वयप्रतीतेः अवर्जनीयत्वेऽपि, न तत्र तात्पर्यम् इति भावः। अपि त्विति। तात्पर्याविषयस्याऽपि विशेषणस्य परामर्शदशाप्रतीतिमात्रेण तद्विशेष्यप्रतीतिसिद्धेः तदैक्यप्रतिपादनं सम्भवतीत्यर्थः।

---

[1] वाहकः—ध,　[2] निरूप्यमाणं वस्तु—वा
[3] घटपटयोरेव—ध,　[4] निर्देशस्याऽपि—इ

स्यादेतदेवम् ; यदि विशेषणद्वयप्रतिसम्बन्धित्वमात्रमेव, ऐक्यं निरुन्ध्यात् । न चैतदस्ति ; एकस्मिन् धर्मिणि उपसंहर्तुमयोग्यधर्मद्वयविशिष्टत्वमेव हि ! एकत्वं निरुणद्धि । अयोग्यता च प्रमाणान्तरसिद्धा [1]घटत्व-पटत्वयोः[1] । 'नीलमुत्पलम्' इत्यादिषु तु, दण्डित्व-कुण्डलित्ववत्, [2]रूपवत्व-रसवत्व-गन्धवत्त्वादिवच्च,[2] विरोधः नोपलभ्यते । न केवलम् अविरोध एव ; प्रवृत्तिनिमित्तभेदेन [3]एकार्थनिष्ठत्व[3]रूपं सामानाधिकरण्यम्, उपपादयत्येव धर्मद्वय[4]विशिष्टताम्[4] । अन्यथा स्वरूपमात्रैक्ये, अनेकपदप्रवृत्तौ निमित्ताभावात्, सामानाधिकरण्यमेव न स्यात् ।

विशेषणानां, स्वसम्बन्धानादरेण वस्तुस्वरूपोप[5]लक्षणपरत्वे[5] सति, एकेनैव वस्तु उपलक्षितमिति, उपलक्षणान्तरम् अनर्थकमेव । उपलक्षणान्तरोपलक्ष्याकारभेदाभ्युपगमे, [6]तेनाऽऽकारेण[6] सविशेषत्वप्रसङ्गः ॥

---

**प्रमाणान्तरेति** । न पुनः विशेषणत्वप्रयुक्तम् अयोग्यत्वम् इति भावः । **नीलमुत्पलमिति** । न केवलं भिन्नाश्रयत्वमात्रं विरोधः ; अपि तु तन्नियमः । न च नीलत्वोत्पलत्वयो तादृशविरोधः ; क्वचित् सहप्रतीतत्वात् इति भावः । **दण्डित्वेति** । दण्डादिकं युतसिद्धम् रूपादिकम् अयुतसिद्धम् । [यु-मिश्रणामिश्रणयोः ; युतसिद्धम्—पृथक्सिद्धम्] युतसिद्धत्वायुतसिद्धत्वादिविभागवत्, विशेषणत्वमपि विरोधाप्रयोजकम् इति भावः । **न केवलमिति** । अपर्याययोः पदयोः एकार्थवृत्तौ निमित्तसापेक्षत्वात्, तेन विना तत्र वृत्त्ययोगाच्च, अत्यन्तोपयोगात्, विशेषणस्य विवक्षितत्वम् इत्यर्थः । **अन्यथा**—विशेषणत्यागे ।

**अनादरः**—तात्पर्याभावः । यथा ['शाखाग्रे चन्द्रः इत्यत्र '] उपलक्षणभूतायां शाखायां न तात्पर्यम् ; अपि तु चन्द्र एव तात्पर्यम्, तद्वत् इत्यर्थः । **उपलक्षणान्तरेति** । अस्माभिस्तु जन्मादिभिः उपलक्षणैः उपलक्ष्याः तदनुगुणज्ञानशक्त्याद्याकारभेदाः स्वीकृताः इति, न नैरर्थक्यम् इति भावः । **तेनाकारेणेति** । अन्ततो गत्वाऽपि अवर्जनीयं सविशेषत्वम् । एवं च सति उपलक्ष्याकारान्तराभ्युपगमेन तस्य उपलक्षणत्वाङ्गीकारादपि, उपलक्षणतया अभिमतानामेव विशेषणत्वाङ्गीकारो युक्तः इति भावः ।

---

[1] पटत्व-घटत्वयोः—थ [2] रूप-रस-गन्धवत्त्वादि—थ, [3] एकार्थबोधकत्व—ध, न, [4] विशिष्टता—थ [5] लक्षणरूपत्वे—ड [6] तेनैवाकारेण—द

[प्रत्यभिज्ञाभिलापकवाक्यस्थले निर्वाहप्रकारः]

'सोऽयं देवदत्तः' इत्यत्राऽपि, [1]लक्षणागन्धो न[1] विद्यते; विरोधाभावात्। देशान्तरसम्बन्धितया अतीतस्य, संनिहितदेशसम्बन्धितया वर्तमानत्वाविरोधात्। अत [2]एव हि![2] 'सोऽयम्' इति [3]प्रत्यभिज्ञया[3], कालद्वयसम्बन्धिनो वस्तुनः [4]ऐक्यमुपपाद्यते[4] वस्तुनः स्थिरत्ववादिभिः। अन्यथा प्रतीतिविरोधे सति, सर्वेषां क्षणिकत्वमेव स्यात्। देशद्वयसम्बन्धविरोधस्तु कालभेदेन परिह्रियते ॥

[सामानाधिकरण्यस्य प्रवृत्तिनिमित्तभेदेन एकार्थपर्यवसायित्वं वैदिकप्रयोगे]

यतः समानाधिकरणपदानाम् अनेकविशेषणविशिष्टैकार्थवाचित्वम्, अत एव,

'अरुणयैकहायन्या पिङ्गाक्ष्या [5]सोमं[5] क्रीणाति' (तै. सं. 6-1-6)

[6]इति[6] आरुण्यादिविशिष्टैक[7]हायन्या,[7] [8]क्रयः साध्यतया[8] [9]विधीयते[9]। तदुक्तम्—

'अर्थैकत्वे द्रव्य-गुणयोरैककर्म्यान्नियमः स्यात् (पू. मी. सू. 3-1-12) इति ॥

---

**विरोधाभावात्**—मुख्यार्थभूतविशेषणद्वयसम्बन्धे विरोधाभावात् (श्रु.प्र.)। **देशान्तरेति**। वस्तुविशेषणतया निर्दिष्टावपि, देशान्तरसम्बन्ध-सन्निहितदेशसम्बन्धौ अतीतवर्तमानकालोपाधितया विवक्षितौ। इदं च कालोपाध्यन्तराणामपि उपलक्षणम्। **अतीत-वर्तमानशब्दौ** अतीतवर्तमान-कालसम्बन्धिपरौ। **देशान्तरसम्बन्धितयाऽतीतस्य**—देशान्तरसम्बन्धाद्युपाध्यवच्छिन्नातीतकाल सम्बन्धिनः। **संनिहित....रोधादिति**। संनिहितदेश-सम्बन्धाद्युपाधिमद्वर्तमानकालसम्बन्धा-विरोधात् इत्यर्थः। अतीतत्वं च अन्यापेक्षया विवक्षितम्; न तु उभयकालानुगतवस्त्वपेक्षया **अत एव**—कालद्वयसम्बन्धाविरोधादेव। **उपपाद्यते** इति। 'सौगतान् प्रति' इति शेषः। सौगतमतनिरासकस्य कालद्वयसम्बन्धविरोधाभ्युपगमः विरुद्ध इत्यर्थः। **अन्यथा**-कालद्वय-सम्बन्धविरोधेन। **प्रतीतिविरोधे**-वस्तुस्थिरत्वविषयप्रतीति-विरोधे। **सर्वेषामिति**। एकस्य देशद्वयकालद्वयान्वयविरोधे, देशकालान्तरसाध्यफलसाधनविधानम्, आत्मनित्यत्वोपदेशश्च अप्रमाणं स्यात् इति अभिप्रायः। **देशद्वयेति**। परिच्छिन्नस्य वस्तुनः स्वानवच्छिन्नदेशसम्बन्धः यौगपद्य एव विरुध्यते, न तु क्रमभावित्वे इत्यर्थः।

**यतः...अत एव** इति, लौकिकप्रयोगसिद्धवत्कारोक्तस्य पूर्वोक्तस्वपरपक्षसाधनदूषणानि अरुणाधिकरणविवक्षितानीति भावः आविष्क्रियते।

---

[1] न लक्षणागन्धः—वा, [2] एव—इ, द [3] प्रत्यभिज्ञायाः—थ [4] ऐक्यं प्रतिपाद्यते—द
[5] गवा सोमं—वा, [6] इत्वादि—ध, इत्यादौ—वा [7] हायन्याः—वा
[8] क्रयसाध्यत्वं—ध, [9] अभिधीयते—ध

[तदधिकरणीयपूर्वपक्ष-सिद्धान्तौ]

तत्र, एवं पूर्वपक्षी मन्यते–यद्यपि 'अरुणया' इति पदम्, [1]आकृतेरिव[1] गुणस्याऽपि द्रव्य[2]प्रकारतैक[2]स्वभावत्वात्, द्रव्यपर्यन्तमेव अरुणिमानम् अभिदधाति ; तथाऽपि एकहायन्यन्वयनियमः, अरुणिम्नो न सम्भवति ; 'एकहायन्या क्रीणाति, तच्च अरुणया' इति अर्थद्वयविधानासम्भवात् । ततश्च 'अरुणया' इति वाक्यं भित्वा, प्रकरणविहितसर्व-द्रव्यपर्यन्तमेव अरुणिमानम्, अविशेषेण अभिदधाति । 'अरुणया' इति स्त्रीलिङ्गनिर्देशः प्रकरणविहित[3]सर्वलिङ्गक[3]द्रव्याणां प्रदर्शनार्थः । तस्मात् एकहायन्यन्वयनियमः, अरुणिम्नो न स्यात् – इति ।

अत्राऽभिधीयते—

'अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात्' । (पू मी सू 3-1-12) 'अरुणया एकहायन्या' इति, आरुण्यविशिष्टद्रव्यैकहायनीद्रव्यवाचिपदयोः, सामानाधि-करण्येन अर्थैकत्वे सिद्धे सति, एकहायनीद्रव्यारुण्यगुणयोः 'अरुणया' इति

---

**तत्र एवमिति** । अस्मदुक्तावेव पूर्वपक्षसिद्धान्तौ सूत्रकारा(जैमिनिः)भिप्रेतौ इति भावः । **यद्यपीति** । आकृतेरिव गुणस्याऽपि द्रव्यप्रकारतैकस्वभावत्वात्, तद्वाचिशब्दः यद्यपि द्रव्यमात्रपर्यन्तः ; तथाऽपि एकहायनीत्वाश्रयद्रव्यविशेषपर्यन्तत्वं न सिद्ध्यतीत्यर्थः (श्रु.प्र) । **अर्थद्वयेति** । 'एकहायन्या क्रीणाति' इति वाक्येन, एकहायन्याः क्रयस्य च सम्बन्धः, प्रतिपन्नः । 'तच्च क्रयणम् अरुणया कर्तव्यम्' इति वाक्येन, एकहायनीसाध्यत्वविशिष्टरूपेण क्रयणम् अरुणद्रव्यसाध्यम् इति प्रतिपन्नम् । एवं च 'एकहायन्या क्रयः साध्यः, तथा च अरुणया भवितव्यम्' इत्युक्तं भवति । ततश्च एकहायन्याः क्रयसम्बन्धः अरुणिमसम्बन्धश्चेति अर्थद्वयस्य एकवाक्येन विधानासम्भवात् इत्यर्थः । **प्रकरणम्**–अवान्तरप्रकरणम्, महाप्रकरणं वा । **सर्वद्रव्याणि**-वासो यजमानादीनि । **अविशेषेण**-प्रकरणान्वयाविशेषेण ।

**अत्राभिधीयत** इति । अस्मिन् पूर्वपक्षे प्राप्ते, सूत्रकारः स्वसिद्धान्तमाह इत्यर्थः । **अरुणया** इत्यादिना, सूत्रस्य अक्षरार्थमाह । **आरुण्येति** । कयोः अर्थैकत्वे ? इत्याकाङ्क्षायां, शब्दस्य अर्थप्रतिसम्बन्धित्वात्, पदविशेषयोः संनिहितविषयवाक्यस्थत्वाच्च **आरुण्य....पदयोः** इति अध्याहृतम् । **सिद्धे** इति । आरुण्यविशिष्टम्, एकहायनीत्वविशिष्टं च द्रव्यम् ।

---

[1] आकृतिरिव-थ, ध, [2] प्रकारतयैक-ध, [3] सर्वलिङ्ग—थ, ध,

[1]पदेनैवाविशेषण[1]विशेष्यभावेन सम्बन्धितया अभिहितयोः, क्रयाख्यैक[2]कर्मान्वयाविरोधात्[2], अरुणिम्नः क्रयसाधनभूतैक[3]हायन्यन्वय[3]नियमः स्यात् ।

यदि [4]एकहायन्याः[4] क्रयसम्बन्धवत्, अरुणिमसम्बन्धोऽपि [5]वाक्यावसेयः[5] स्यात्, तदा [6]वाक्यस्य अर्थद्वय[6]विधानं स्यात् । न चैतदस्ति ; [7]'अरुणया' इति पदेनैव,[7] अरुणिमविशिष्टद्रव्यम् अभिहितम् । एकहायनीपदसामानाधिकरण्येन, तस्य एकहायनीत्वमात्रम् अवगम्यते ; न गुणसम्बन्धः । विशिष्टद्रव्यैक्यमेव हि ! सामानाधिकरण्यस्यार्थः ।

'भिन्नप्रवृत्तिनिमित्तानां शब्दानाम् [8]एकस्मिन्नर्थे[8] [9]वृत्तिः[9] सामानाधिकरण्यम्'
(कै वृ.आ.)

इति हि ! [10]सामानाधिकरण्यलक्षणम्[10] ।

---

तद्वाचिपदयोः. सामानाधिकरण्येन तत्तद्विशेषणद्वारा एकविशेष्यवृत्तित्वात् अर्थैकत्वे सिद्धे इत्यर्थः । **अविरोधादिति** । वाक्यभेदप्रसङ्गरूपविरोधाभावात् इत्यर्थः । **अरुणिम्नः** इत्यादि । सर्वद्रव्यसाधारणप्रकरणानपेक्षत्वात् वाक्यस्थतयैव नियमसिद्धिः इत्यर्थः ।

अत्र गुणद्रव्ययोः विशेषण-विशेष्यभावः प्रातिपदिकावसेयः, विशेष्यैक्यं सामानाधिकरण्यावसेयम्, क्रयान्वयः वाक्यावसेय इति, वाक्यस्य क्रयान्वयबोधनमेव कृत्यम् । तस्मात् एकस्मिन् वाक्ये अर्थद्वयविधानप्रसङ्गाभावात् वाक्यभेदाभावेन, आरुण्यं, न प्राकरणिकसर्वद्रव्यान्वयि ; अपि तु एकहायनीमात्रान्वयी इति सूत्रार्थः (श्रु.प्र) । **तस्य**-अरुणिमविशिष्टद्रव्यस्य । **एकहायनीत्वमात्रमिति** । एकहायनीत्वाश्रयत्वम् विशेष्यैक्यम् इत्यर्थः । अनेन आकृत्यधिकरणस्य (पू.मी.अ 1-3-10) अरुणाधिकरणस्य च (पू.मी अ. 3-1-6) प्रतिपाद्यभेदश्च उक्तो भवति । प्रातिपदिकस्य धर्मिपर्यन्तत्वम् आकृत्यधिकरणार्थः । अनेकप्रातिपदिकस्थसमानविभक्तेः विशेष्यैक्यपरत्वप्रतिपादकम् अरुणाधिकरणम् इति । **विशिष्टद्रव्यैक्यमिति** । विशिष्टैक्यम् इत्युक्ते, विशेषणांशस्यैक्यं मा भूत् इति, तथोक्तम् । द्रव्यशब्देन विशेष्यांशो विवक्षितः । **भिन्नेति,** सामानाधिकरण्यलक्षणग्रन्थमाह । न हि—विशेषणविशेष्यवाचिनोः पदयोः, विशेषण-विशेष्यभावसम्बन्धे वृत्तिः सामानाधिकरण्यम्—इत्युक्तम् इत्यर्थः ।

---

[1] पदेनैकविशेषण—इ [2] कर्मान्वयविरोधात्—ध [3] हायन्या अन्वय—वा,
[4] एकहायन्या—थ, ध [5] वाक्यस्यावसेयः—ध, [6] वाक्यार्थद्वय—इ,
[7] अरुणापदेनैव—द, [8] एकार्थे—ध, न [9] प्रवृत्तिः—थ, [10] तल्लक्षणम्—न.

[उक्तार्थे परसंमतिः]

अत [1]एव हि[1] 'रक्तः पटो भवति' इत्यादिषु, ऐकार्थ्यात् एकवाक्यत्वम्। पटस्य भवनक्रियासबन्धे हि वाक्यव्यापारः। रागसम्बन्धस्तु, 'रक्त'पदेनैव अभिहितः। 'रागसम्बन्धि द्रव्यं पटः' इत्येतावन्मात्रं [2]सामानाधिकरण्यावसेयम्[2]।'

एवम्—एकेन गुणेन द्वाभ्यां, बहुभिर्वा, तेन तेन पदेन समस्तेन व्यस्तेन वा, [3]विशिष्टम्[3] उपस्थाप्य, सामानाधिकरण्येन, 'सर्वविशेषण[4]विशिष्टोऽर्थः[4] [5]एकः[5] इति' ज्ञापयित्वा; तस्य क्रियासम्बन्धाभिधानम्, अविरुद्धम्, देवदत्तः श्यामो युवा लोहिताक्षः दण्डी कुण्डली तिष्ठति' 'शुक्लेन वाससा यवनिकां सम्पादयेत्' [6]'नीलम् उत्पलम् आनय' 'नीलोत्पलमानय'[6] 'गामानय शुक्लां शोभनाक्षीम्'

'अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्' (तै सं 2-2-2)
[7]इति। एवम्,[7]

'अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति' (तै.सं. 6-1-6)
इति।

---

**अत एव**—एव प्रातिपदिकेन गुणान्वयः, समानविभक्त्या परस्परान्वयः, वाक्येन क्रियान्वयः इति कृत्यत्रयस्यापि यथोक्तप्रकारत्वादेव। **रक्त** इति। तत्र हि 'पटो भवति' इत्येतावता निराकाङ्क्षत्वेऽपि वाक्यस्य, प्रयुक्तं 'रक्त पदं, कीदृशः पटः? इत्युत्थापिताकाङ्क्षत्वात्, एकवाक्यतया अन्वितम् इति भावः। **व्यस्तेन वेति**। कारकविभक्त्यन्तेन, प्रथमान्तेन वा इति च अत्राऽभिप्रेतम् (श्रु.प्र.)। **देवदत्त** इति प्रथमान्तबहुविशेषणान्वये उदाहरणम्। अयं भावः—'रक्तः पटः' इति पदद्वयम् अचिद्वाचकम्; 'अरुणया' इति पदं चेतनवाचकम् इति वैषम्यं, यथा न प्रयोजकम्; तथा प्रथमान्तत्वकारकविभक्त्यन्तत्ववैषम्यमपि अप्रयोजकम् इति। **दण्डी कुण्डलीति** अन्तरङ्गबहिरङ्गविशेषणेऽपि एवम्, इत्यभिप्रायेणोक्तम्। **शुक्लेन वाससा** इति, कारकविभक्त्यन्तैकपदान्वयोदाहरणम्। **नीलमुत्पलमिति**, कर्मकारकमुदाहरति। **नीलोत्पलमिति**, समस्तोदाहरणम्। **गाम्** इति, कारकविभक्त्यन्तानेकपदान्वयोदाहरणम्। **अग्नये** इति, संप्रदानकारकविषयं वैदिकं च उदाहरणम्। **पुरोडशम् अष्टाकपालम्** इति, कर्मकारकमपि सिद्धम्। **एवम् अरुणयेति**। यथा—एकवचनादीनाम् एकत्वादिसङ्ख्यान्वय-

---

[1] एव—द [2] सामानाधिकरण्येनावसेयम्—ध, न [3] विशिष्टत्वं—थ, ध [4] विशिष्टार्थः—थ, ध, [5] एक एव—थ, [6] नीलमुत्पलमानय—वा, [7] एवम्—थ,

एतदुक्तं भवति—यथा, 'काष्ठैः स्थाल्याम् ओदनं [1]पचेत्[1]' इति, अनेककारककविशिष्टा एका क्रिया, युगपत् प्रतीयते; तथा, समानाधिकरणपदसङ्घाताभिहितम् एकैकं कारकम्, तत्तत्कारकप्रतिपत्तिवेलायामेव अनेकविशेषणविशिष्टं युगपत्प्रतिपन्नं क्रियायाम् अन्वेतीति, न कश्चित् विरोधः, 'खादिरैः शुष्कैः काष्ठैः [2]समपरिमाणे[2] भाण्डे पायसं शाल्योदनं समर्थः पाचकः [3]पचेत्[3]' इत्यादिषु—इति ॥

[पूर्वोक्तपूर्वपक्षोपयोगिनामर्थानां निरासः]

[4]यत्तु[4]—उपात्तद्रव्यकवाक्यस्थगुणशब्दः केवलगुणाभिधायी इति, 'अरुणया' इति पदेन केवलगुणस्यैव अभिधानम्—इति,

---

बोधकत्वम्, प्रथमान्तेषु कारकविभक्त्यन्तेषु च अविशिष्टम् अङ्गीक्रियते ; उभयत्र अविशेषेण प्रयोगदर्शनात्, [तथा] समानविभक्तेरपि अविरुद्धार्थैक्यबोधकत्वम्, उभयत्र अविशेषेण प्रयोगदर्शनात् अङ्गीकरणीयम् इत्यर्थः ।

**एतदुक्तमिति** । 'पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम्'(?)इति न्यायेन युगपद्बोधनात्, क्रमभावित्वाभावात्, न विशेषणान्तरविशिष्टे विशेषणान्तरान्वयविधानेन विशेषणानाम् अन्योन्यसमवायप्रसङ्गः इत्यर्थः । यौगपद्यकथनेन, पूर्वं ['विशिष्टम् उपस्थाप्य' इति] ल्यबन्तनिर्देशः, कृत्यत्रयभेदनिर्वाहकपरामर्शक्रमप्रकटनार्थम् इत्युक्तं भवति । **तत्तत्कारकेत्यनेन**, इदं सूत्रं सर्वकारकविभक्त्यन्तपदप्रदर्शनार्थम् इति दर्शितम् (श्रु.प्र) । **इत्यादिषु न कश्चिद्विरोधः** इत्यन्वयः । विरोधः अन्योन्यसमवायादिः विवक्षितः । **युगपत्प्रतिपन्नम्** इत्यनेन, तत्र परिहारो विवक्षितः । युगपत् सर्वैः विशेषणैः एकस्यैवार्थस्य विशेष्यत्वेन, न विशेषणानाम् अन्योन्यसमवायप्रसङ्गश्चेति । एवं सूत्रकाराभिप्रेतपूर्वपक्ष-राद्धान्तौ अभिहितौ ॥

[**उपात्तद्रव्यकेति** । उपात्तम्-प्रयुक्तम्, द्रव्यम्-द्रव्यवाचकं पदम्, यस्मिन् वाक्ये, तत् वाक्यम् 'पटस्य शुक्लः' इत्यादिवाक्यम्-उपात्तद्रव्यकवाक्यम् । तत्स्थः गुणशब्दः—शुक्लशब्दः, सः केवलगुणाभिधायी—शुक्लवर्णमात्राभिधायी ; न तु शुक्लवर्णवत्पटाभिधायी; 'पटसम्बन्धी शुक्लो वर्णः' इति खलु तत्र बोधः । अनुपात्तद्रव्यकवाक्ये 'श्वेतो धावति' इत्यादौ तु श्वेतपदं श्वेतवर्णविशिष्टगवादिद्रव्यवाची भवितुमर्हतीति ।]

---

[1] पचति—क्ष, [2] समपरिमाणौः—थ, [3] पचति—द, [4] यत्तूक्तं—ङ,द,ध

**तत्, नोपपद्यते ; लोकवेदयोः द्रव्यवाचिपदसमानाधिकरणस्य गुणवाचिनः, क्वचिदपि केवलगुणाभिधानादर्शनात् ।**

**उपात्तद्रव्यकवाक्यस्थं गुणपदं केवलगुणाभिधायि [1]इत्यपि[1], असङ्गतम् ; [2]'पटः शुक्लः[2]' इत्यादिषु, उपात्त[3]द्रव्यकेऽपि,[3] गुणविशिष्टस्यैव अभिधानात् । 'पटस्य शुक्लः' इत्यत्र शौक्ल्यविशिष्ट[4]पटाप्रतिपत्तिः[4], [5]असमान[5]विभक्तिनिर्देशकृता ; न पुनः उपात्तद्रव्यकत्वकृता । तत्रैव 'पटस्य शुक्लो भागः' इत्यादिषु, समानविभक्तिनिर्देशे [6]शौक्ल्य[6] विशिष्टद्रव्यं प्रतीयते ।**

**यत्पुनः—क्रयस्य [7]एकहायन्यवरुद्धतया[7], अरुणिम्नः [8]क्रयान्वयः[8] न सम्भवति इति,**

**तदपि, विरोधिगुणरहितद्रव्यवाचिपदसमानाधिकरण[9]गुणपदस्य[9] तदाश्रय [10]गुणाभिधानेन[10] क्रियापदान्वयाविरोधात्, असङ्गतम् ।**

---

**तत् नोपपद्यत** इति । 'श्वेतमालभेत' इत्यादिषु गुणवाचिपदानां गुणिपर्यन्तत्वं मीमांसकैः आकृत्यधिकरणन्यायात् अभ्युपेतम् । गुणमात्रपर्यन्तत्वे प्रयोजकम् उपात्तद्रव्यकवाक्यस्थत्वम् । तदपवादकात् सामानाधिकरण्यात्, गुणिपर्यन्ताभिधानं च अभ्युपेतम् । तत्र गुणमात्रपर्यन्तत्वे प्रयोजकम् उक्तम् अभ्युपगम्यते । [अथाऽपि] प्रकृते गुणमात्रपर्यन्तत्वम् [दूष्यम् इत्यर्थः] । **लोकवेदयोरिति** । गुणिपर्यन्तत्वापवादकम् उपात्तद्रव्यकवाक्यस्थगुणवाचिपदत्वं यत्, तदपवाद-रूपस्य सामानाधिकरण्यस्य 'अरुणया' इत्यादिवाक्ये विद्यमानत्वोपपादनात्, केवलगुणाभिधा-यित्वम् अयुक्तम् इत्यर्थः ।

**असमानविभक्तिनिर्देशः**—असमानायाः विभक्तेः निर्देशः । न समानविभक्ति-निर्देशाभावः ; 'श्वेतो याति' इत्यादिष्वपि गुणमात्रपर्यन्तत्वप्रसङ्गात् । व्यभिचारिणः [उपात्तद्रव्यकवाक्यस्थत्वस्य] प्रयोजकत्वकल्पनं, व्यभिचारस्थले तदपवादकल्पनं च अयुक्तम् ; अव्यभिचारिप्रयोजकसद्भावात् इत्यभिप्रायः (श्रु.प्र.) ।

**एकहायन्यवरूद्धतया**—एकहायन्या निराकाङ्क्षत्वात् । विभागे, साकाङ्क्षत्वे सत्येव हि एकवाक्यत्वम् । इह तदभावात् न क्रयान्वयः इत्यर्थः ।

**विरोधिगुणरहित**शब्दप्रयोगः, 'नीलं, शुक्लम्' इत्यादिव्यावृत्त्यर्थम् । **क्रियापदेति** । गुणपदस्यैव गुणिपर्यन्तत्वेन, गुणविशिष्टम् एकं करणमिति, अरुणिम्नः द्रव्यद्वारा क्रयान्वयात्, क्रयान्वयासम्भवः अनुपपन्नः इत्यर्थः ।

---

[1] इति—थ, ध, [2] शुक्लः पटः—थ, [3] द्रव्यकत्वेऽपि—क [4] पटाप्रतीतिः—थ, पटप्रतिपत्तिः—द [5] समान—द, [6] शौक्ल्यादि—ध, न [7] एकहायन्या विरुद्ध-तया—थ, ध [8] क्रियान्वयः—वा [9] पदस्य—न [10] गुणाभिधाने—द

राद्धान्ते च [1]उक्तन्यायेन[1] अरुणिम्नः [2]शाब्दे द्रव्यान्वये[2] सिद्धे, द्रव्यगुणयोः क्रयसाधनत्वानुपपत्त्या, अर्थात् परस्परान्वयः सिद्ध्यति इत्यपि, असङ्गतम्। अतः यथोक्त एवाऽर्थः ॥

[उक्तलक्षणसामानाधिकरण्यस्य परपक्षाननुगुणता]

तस्मात्, तत्त्वमस्यादिसामानाधिकरण्ये पदद्वयाभिहितविशेषणापरि[3]त्यागेनैव[3]-ऐक्यप्रतिपादनं वर्णनीयम्। तत्तु, अनाद्यविद्योपहितानवधिकदुःखभागिनः शुद्ध्यशुद्ध्युभयावस्थात् चेतनात् अर्थान्तरभूतम् अशेषहेयप्रत्यनीकानवधिककल्याण[4]गुणैकतानं[4] परमात्मानम् अनभ्युपगच्छतः न सम्भवति।

अभ्युपगच्छतोऽपि- समानाधिकरणपदानां यथावस्थितविशेषणविशिष्टैक्यप्रतिपादन-[5]परत्वाश्रयणे[5], 'त्वं'पदप्रतिपन्नसकलदोषभागित्वं [6]परस्य[6] प्रसज्येत — इति चेत्,

नैतदेवम्; 'त्वं'पदेनाऽपि जीवान्तर्यामिणः परस्यैव अभिधानात् ॥

---

**राद्धान्ते च ... असङ्गतमिति।** 'सम्भवत्येकवाक्यत्वे वाक्यभेदस्य नेष्यते' इति न्यायेन वाक्यैकत्वे कथञ्चित् सम्भवति; वाक्यभेदाश्रयणायोगात्, 'गुणे द्रव्यव्यपेक्षे च द्रव्ये च गुणकांक्षिणि' इति न्यायेन द्रव्य गुणयोः परस्परापेक्षत्वात् 'नष्टाश्वदग्धरथ'न्यायेन अर्थादन्वयः इति तद्राद्धान्तः। तदयुक्तम्; शाब्दान्वयसिद्धेः इत्यर्थः। **यथोक्त एवाऽर्थ** इति। अस्य अरुणाधिकरणस्य यथोक्तावेव पूर्वपक्ष-सिद्धान्तौ सूत्रकाराभिमतौ इत्यर्थः ॥

**तस्मात्** - सामानाधिकरण्यस्य अनेकविशेषणविशिष्टैकार्थपरत्वस्य लोकवेदसिद्धत्वात्। **अनाद्यविद्ये**त्यादिकम्. **अशेषहेयप्रत्यनीके**त्यादिकं च विशेषणम् उभयत्र प्रवृत्तिनिमित्तफलतयोक्तम्, **न सम्भवतीति** प्रतिज्ञायाः उपपादनार्थम्। कर्मवश्यः निग्राह्यः, अनुग्राह्यश्च जीवः; निग्राहकः, अनुग्राहकश्च परात्मा भवितुं नाऽर्हति इति, एषां विशेषणानाम् अभिप्रायः। **शुद्ध्यशुद्ध्युभयावस्थात्** इति, मुक्तिदशायामैक्यशङ्काव्युदासार्थमुक्तम्।

**अभ्युपगच्छतोऽपीति।** तच्छब्दावगतविशेषणाभ्युपगमवत्, त्वंशब्दावगतविशेषणमपि अभ्युपगन्तव्यम्; तथा सति ब्रह्मणः दुःखित्वादिप्रसङ्गः इति शङ्काशयः। **परस्यैवेति।** तत्पदप्रतिपन्नस्य जीवविलक्षणस्यैव इति भावः।

---

[1] उक्तेन न्यायेन—थ [2] शाब्दद्रव्यान्वये—वा [3] त्यागेन—द [4] गुणगणैकतानं—वा, एकतानं च [5] परत्वाश्रयणात्—थ [6] परस्य ब्रह्मणः—श्रा.

[उक्तस्य अन्तर्यामिपर्यन्ताभिधानस्य उपपादनम्]

एतदुक्तं भवति—सच्छब्दा[1]भिहितं निरस्त[1]निखिलदोष[2]गन्धं सत्यसङ्कल्पत्व[2]मिश्रा[3]नवधिकातिशयासङ्ख्येयकल्याणगुणगणं[3] समस्तकारणभूतं [4]परं ब्रह्म,[4] 'बहु स्याम्' इति सङ्कल्प्य,तेजोबन्नप्रमुखं कृत्स्नं जगत् सृष्ट्वा, तस्मिन् देवादिविचित्र[5]संस्थान[5]संस्थिते जगति चेतनं जीववर्गं स्वकर्मानुगुणेषु शरीरेषु आत्मतया प्रवेश्य, स्वयं च [6]स्वेच्छयैव[6] जीवान्तरात्मतया [7]अनुप्रविश्य[7], एवम्भूतेषु स्वपर्यन्तेषु [8]देवाद्याकारेषु[8] सङ्घातेषु नामरूपे व्याकरोत् । एवंरूपसङ्घातस्यैव वस्तुत्वं शब्दवाच्यत्वं च अकरोत् इत्यर्थः ।

---

**एतदुक्तमिति ।** त्वंशब्दस्य जीवद्वारा परमात्माभिधायित्वे, तच्छब्दस्य वा परमात्मद्वारा जीववाचित्वं किं न स्यात्, इति शङ्कानिरासार्थश्चायमारम्भः (भा.प्र.) । **सच्छब्दाभिहितमिति ।** कारणवस्तुवाचिसच्छब्दः कारणत्वानुगुणान्वितवस्तुपरः इति भावः । **बहु स्याम्** इति ग्राहकग्रहणेन तेजःप्रभृतिसर्वनामरूपेषु सामान्येन परमात्मीयतया अवगतेषु तत्र अनुप्रवेशपूर्वकनामरूपव्याकरणश्रुत्यादिभिः सद्वारकं (नाम-रूपभाक्त्वम्) अध्यवसीयते-इत्यनुसन्धेयम् । उपबृंहणेषु अविशेषोक्तेषु भगवद्गुणेषु, स्निग्धवर्णत्वादीनां सत्यसन्धत्वादीनां च गुणानां दिव्यविग्रहद्वारकत्वम् अद्वारकत्वंच दृश्यते ; तथा इहाऽपि ईश्वरशरीरभूतचिदचिद्द्वारकः अद्वारकश्च गुणान्वयः यथाश्रुति स्वीकार्यः इति भावः । **बहु स्याम्** इति । बहुनामरूपभाक् भवेयमित्यर्थः । **प्रमुखशब्देन** तत्त्वान्तरसृष्टिः विवक्षिता । **देवादीती,** वक्ष्यमाणचिदचिदंशविभागार्थं जगदाकारकथनम् ; न तु जीवानुप्रवेशपूर्वावस्थाकथनम् । **चेतनमिति ।** चेतनत्वं शरीरित्वे प्रयोजकमित्यर्थः । **जीववर्गशब्देन,** 'विज्ञानम्' 'जीवेन' इति च एकवचनम् जातौ ; 'चेतनानाम्' इत्यादिभिः ऐकार्थ्यात्. इति व्याख्यातं भवति । **स्वकर्मानुगुणेषु** इति, 'अनेन जीवेन' इत्यत्र, 'अनेन' इति निर्देशस्य अभिप्रायविवरणम् जीवविशिष्टपरमात्मविशेषणस्य 'इदं'शब्दस्य जीवद्वारकवैचित्र्यपरत्वात्, जीववैचित्र्यस्य च कर्मवैचित्र्याधीनत्वात् । **स्वेच्छयैवेति ।** पारतन्त्र्यं स्वातन्त्र्यं च अनुप्रवेशहेतुवैषम्यम् इत्यर्थः । **एवम्भूतेषु**—द्वार-द्वारिभावेन व्यवस्थितेषु चिदचिदात्मकेषु । **नामरूपे व्याकरोदिति ।** तत्तद्देवताद्यवस्थाः तत्तद्वाचिशब्दांश्च अकरोत् इत्यर्थः । **एवंरूपसङ्घातस्येति ।** चिदचिदीश्वरात्मकस्य सङ्घातस्येत्यर्थः । **वस्तुत्वम्**—देवादिवस्तुत्वम् (श्रु.प्र) ।

---

[1] अभिहितनिरस्त—द [2] गन्धसत्यसङ्कल्पत्व—थ, गन्धं सत्यसङ्कल्प—थ.ध
[3] कल्याणगुणम्—थ, निरतिशयकल्याणगुणगणम्—क्ष, नवधिकातिशयकल्यणगुणं—ध नवधिकातिशयासंख्येयानन्तकल्याणगुणगणं—व [4] ब्रह्म—ध, [5] संस्थापन—थ, [6] स्वेच्छया—द,
[7] प्रविश्य—थ [8] देवाकारेषु—क्ष, थे

'अनेन जीवेनाऽऽ[1]त्मना—जीवेन मया[1]' इति निर्देशः, जीवस्य ब्रह्मात्मकत्वं [2]दर्शयति[2]। ब्रह्मात्मकत्वं च जीवस्य, जीवान्तरात्मतया ब्रह्मणः अनुप्रवेशात् [3]इत्यवगम्यते ;[3]

'इदं सर्वमसृजत । यदिदं किञ्च । तत् सृष्ट्वा । तदेवानुप्राविशत् । तदनु-प्रविश्य । सच्च त्यच्चाऽभवत् ।' (तै.उ. आन. 6-2)

इत्यत्र, 'इदं सर्वम्' इति निर्दिष्टं [4]चेतनाचेतनवस्तुद्वयं[4] सत्त्यच्छब्दाभ्यां, विज्ञानाविज्ञानशब्दाभ्यां च [5]विभज्य निर्दिश्य[5], चिद्वस्तुन्यपि ब्रह्मणः अनुप्रवेशाभिधानात् । [6]अतः एवं[6]नामरूपव्याकरणात्, सर्वे [7]वाचकाः[7] शब्दाः अचिज्जीवविशिष्ट-परमात्मवाचिनः, इत्यवगतम् इति ॥

[जगतः परमात्मशरीरत्वाक्षेपकवाक्यानि]

किञ्च—

'ऐतदात्म्यमिदं सर्वम्' (छां.उ. 6-8-7)

इति, चेतनमिश्रं प्रपञ्चम् 'इदं सर्वम्' इति निर्दिश्य, 'तस्य, एष आत्मा' इति प्रतिपादितम् । [8]एवं च[8] [9]सर्वं चेतनाचेतनं[9] प्रति ब्रह्मणः [10]आत्मत्वेन[10], सर्वं [11]सचेतनं[11] जगत् [12]तस्य[12] [13]शरीरं[13] भवति । तथा च श्रुत्यन्तराणि—

---

**मया** इति आत्मशब्दव्याख्यानम् । आत्मशब्दस्य अस्मद्वाचित्वे सति हि ब्रह्मात्मकत्वं दर्शितं भवति । **इदं....वस्तुद्वयमिति** । अत्र 'सर्व'शब्दस्य असङ्कोचोऽभिप्रेतः । 'अनुप्रविश्य नामरूपे व्याकरवाणि' इत्यत्र, नाम-रूपव्याकरणस्य अनुप्रवेशपूर्वकत्वं गम्यते । 'तत् सृष्ट्वा, तदेवानुप्राविशत्' इति, अनुप्रवेशस्य सृष्टिपूर्वकत्वं गम्यते । तस्मात् नाऽत्र पौर्वापर्यविवक्षा । समानकर्तृकत्वमेव अत्र विवक्षितम्; 'तस्य त्वष्टा विदधद्रूपमेति' इति वाक्ये सृष्ट्यनुप्रवेशयोः समानकालीनत्वावगमात् । तस्मात् भाष्ये 'अनुप्रविश्य' इति ल्यबन्तनिर्देशः अनुप्रवेशसृष्ट्योः विविच्य ज्ञापनार्थः । **अतः**—उदाहृतश्रुतिवाक्यात् । **एवं....करणात्** परमात्मपर्यन्तनामरूपव्याकरणप्रतिपादनात् ॥

**ऐतदात्म्यमिति,** शरीरत्वाक्षेपकं वाक्यम् ।

---

1 त्मना—थ, 2 प्रदर्शयति—ध, 3 अवगम्यते—आ, द 4 चेतनाचेतनं वस्तुद्वयं—वा, चेतनाचेतनवर्गद्वयं—आ, 5 विभज्य—द 6 अत एव—थ, 7 वाचिनः—वा 8 एवं—थ 9 सर्वचेतनाचेतनं—ध 10 आत्मत्वे—थ,ध, 11 चेतनं—वा, 12 अस्य—थ, ध, 13 शरीरं च—ई

'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' (तै. आर. 3-11-8)

'यः पृथिव्यां तिष्ठन्, पृथिव्या अन्तरः, यं पृथिवी न वेद, यस्य पृथिवी शरीरम्, यः पृथिवीमन्तरो यमयति, स त आत्माऽन्तर्याम्यमृतः' (बृ.उ.मा.प. 5-7-7)

इति प्रारभ्य,

'य आत्मनि तिष्ठन्, आत्मनोऽन्तरः, यमात्मा न वेद, यस्याऽऽत्मा शरीरम्, य आत्मानमन्तरो यमयति, स त आत्माऽन्तर्याम्यमृतः' (बृ.उ.मा.पा. 5-7-26)

इत्यादि,

'यः पृथिवीमन्तरे सञ्चरन्, यस्य पृथिवी शरीरम्' (सुबा.उ. 7.)

'योऽपोऽन्तऽरे सञ्चरन्, यस्याऽऽपः शरीरम्' (सुबा.उ. 7)

इत्यारभ्य,

'योऽक्षरमन्तरे सञ्चरन्, यस्याऽक्षरं शरीरम्, यमक्षरं न वेद'...

एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' (सुबा.उ. 7)

इत्यादीनि, सचेतनं जगत् [1]तस्य[1] शरीरत्वेन निर्दिश्य, तस्य आत्मत्वेन परमात्मानम् उपदिशन्ति ॥

[शरीरवाचिशब्दानां शरीरिपर्यन्तता]

अतः [2]चेतन[2]वाचिनोऽपि शब्दाः, [3]चेतनस्याऽपि[3] आत्मभूतं चेतनशरीरकं परमात्मानमेव अभिदधति। यथा–अचेतनदेवादिसंस्थानपिण्डवाचिनः शब्दाः, [4]तत्तच्छरीरक[4]जीवात्मन एव वाचकाः ;

---

सर्वात्मशब्दविवरणम् अन्तः प्रविष्टः, शास्ता इति। विशेषणद्वयेन नृप-नभोव्यावृत्तिः। भगवतः नियन्तृत्वकथनात्, तदेकनियाम्यत्वं शरीरलक्षणमुक्तं भवति।

अतः—चिदचिदात्मकजगतः परमात्मशरीरत्वात्। यथेति। शरीरभूतचेतनवाचिशब्दानां तच्छरीरिपरमात्मवाचित्वं, शरीरवाचिपदानां शरीरिपर्यन्ताभिधायित्वदर्शनात् इत्यर्थः। देवाः भवन्ति इति। श्रुतौ 'देवत्वं गच्छन्ति' इत्युक्तम् ; न तु 'देवं गच्छन्ति' इति। 'देव'शब्दस्य शरीरमात्रपरत्वे, शरीरत्वं गच्छन्तीत्युक्तं स्यात्। ततश्च देहात्मैक्यम् उक्तं स्यात्। अतः शरीरित्वं गच्छन्ति इत्यभ्युपगन्तव्यम्। अतः भावप्रत्ययान्तत्वं प्रकृतिभूत'देव'-

---

[1] अस्य - थ. [2] चेतनाचेतन—थ, ध [3] चेतनस्य—थ [4] तच्छरीरक—ग,ट,य

'चत्वारः पञ्चदश[1]रात्राः[1] ....देवत्वं गच्छन्ति' (ता.म.ब्रा. 23-6)

इत्यादिषु । देवाः भवन्ति इत्यर्थः । शरीरस्य शरीरिणं प्रति प्रकारत्वात्, प्रकार[2]वाचिनां च[2] शब्दानां प्रकारिण्येव पर्यवसानात्, [3]शरीरवाचिनां शब्दानां[3] शरीरिपर्यवसानं न्याय्यम् । प्रकारो हि नाम 'इदम् इत्थम्' इति प्रतीयमाने वस्तुनि, 'इत्थम्' इति प्रतीयमानः अंशः ।

तस्य तद्वस्त्वपेक्षत्वेन तत्प्रतीतेः तदपेक्षत्वात्, तस्मिन्नेव पर्यवसानं [4]युक्तमिति[4], तस्य प्रतिपादकोऽपि शब्दः तस्मिन्नेव पर्यवस्यति । अत एव 'गौः, अश्वः, मनुष्यः' इत्यादिप्रकारभूताकृतिवाचिनः शब्दाः, प्रकारिणि पिण्डे पर्यवस्यन्तः, पिण्डस्याऽपि चेतन[5]शरीरत्वेन तत्प्रकारत्वात्[5], पिण्डशरीरकचेतनस्याऽपि परमात्मप्रकारत्वाच्च, परमात्मन्येव पर्यवस्यन्तीति, सर्वशब्दानां परमात्मैव वाच्य इति परमात्म[6]वाचिशब्देन[6] सामानाधिकरण्यं [7]मुख्यमेव[7] ॥

[उक्तसामानाधिकरण्यप्रयोजके अतिव्याप्तिशङ्कापरिहारौ]

ननु—'खण्डो गौः' 'खण्डः शुक्लः' इति जाति-गुणवाचिनामेव पदानां, द्रव्यवाचिपदैः सह सामानाधिकरण्यं दृष्टम् । द्रव्याणां तु द्रव्यान्तरप्रकारत्वे, मत्वर्थीयप्रत्ययो दृष्टः; यथा 'दण्डी कुण्डली' इति,

---

शब्दस्य शरीरिपर्यन्तत्वज्ञापकम् इत्यर्थः । **न्याय्यम्**—जाति-गुणवाचिपदानामिव, आकृत्यधिकरणन्याय(पू.मी अ. 1-3-10)सिद्धम् ।

**तस्य तद्वस्त्वपेक्षत्वेन**—प्रकारस्य प्रकार्यपेक्षस्वरूपस्थितित्वेन । **तत्प्रतीतेः**—प्रकारस्य यथावस्थितस्वरूपप्रतीतेः । **तदपेक्षत्वात्**—प्रकारिसापेक्षत्वात् । **तस्य**—प्रकारस्य । **तस्मिन्नेव**—प्रकारिण्येव । **पर्यवस्यतीति** । 'वचसां वाच्यमुत्तमम्' 'नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती' इत्यादिवचनस्वारस्यं च शब्दशक्तेरेव विशेष्यपर्यन्तत्वे सिद्ध्यति । ततः विशेष्यपर्यन्ता शब्दशक्तिः इत्यत्र तात्पर्यम् । **पर्यवस्यन्त** इति । पूर्वं क्वचिद्-व्यापृतस्य तत्र अनुपरम्य, तदन्वयिनि अन्यत्र व्यापारः— पर्यवसानमिह विवक्षितम्; न तु व्यापारोपरमः । **परमात्मप्रकारत्वाच्चे**त्यन्तेन पूर्वोक्तन्यायः संचारितः । नामरूपव्याकरणश्रुतिः प्रमाणत्वेन पूर्वोदाहृता अत्राभिप्रेता (श्रु.प्र.) ॥

---

[1] रात्रात्—च [2] वाचिनां—ध [3] शरीराभिधायिनां शब्दानां—श्रा, वा-शरीरवाचिनां शब्दानां च—थ [4] उचितमिति—क [5] शरीरत्वेन अपृथक्सिद्धविशेषणत्वात्—थ [6] वाचकशब्देन—ध. न [7] मुख्यवृत्तमेव—थ, ध

नैवम्; जातिर्वा गुणो वा द्रव्यं वा, न एतेष्वेकमेव सामानाधि[1]करण्ये प्रयोजकम्[1]; अन्योन्यस्मिन् व्यभिचारात् ।

[2]यस्य पदार्थस्य[2], कस्यचित् प्रकारतयैव [3]सद्भावः,[3] तस्य तदपृथक्सिद्धि-स्थिति-[4]प्रतीतिभिः,[4] [5]तद्वाचिनां[5] शब्दानां स्वाभिधेयविशिष्टद्रव्यवाचित्वात्, धर्मान्तरविशिष्ट-[6]तद्द्रव्य[6]वाचिना शब्देन सामानाधिकरण्यं युक्तमेव ।

यत्र पुनः [7]पृथक्सिद्धस्य[7] स्वनिष्ठस्यैव [8]द्रव्यस्य,[8] [9]कदाचित् क्वचित्[9] द्रव्यान्तर-प्रकारत्व[10]मिष्यते,[10] तत्र [11]मत्वर्थीयप्रत्ययः[11] इति निरवद्यम् ॥

[शिक्षितेन न्यायेन परमसाध्यसिद्धिः]

तदेवं—परमात्मनः शरीरतया तत्प्रकारत्वात्, अचिद्विशिष्ट[12]जीवस्याऽपि[12], [13]जीवनिर्देशविशेषरूपाः[13] 'अहम्, त्वम्' इत्यादिशब्दाः [14]परमात्मानमेव[14] आचक्षते—इति,

'तत्त्वमसि' (छां.उ. 6–8–7)

इति सामानाधिकरण्येन उपसंहृतम् । एवं च सति, परमात्मानं प्रति जीवस्य शरीरतया

---

**सामानाधिकरण्ये** इति । मत्वर्थीयप्रत्ययानपेक्षे इति भावः । **व्यभिचारादिति** । साध्यस्य सामानाधिकरण्यस्य, जातिवाचिमात्रं गुणवाचिमात्रं च अतिलङ्घ्य वृत्तेः इत्यर्थः । मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्ये सर्वप्रयोगविषयानुयायि प्रयोजकं वाच्यम् । जाति-गुणयोः अन्यतरत्वं च अव्याप्तम् इत्यर्थः ।

**तदपृथगि**त्यादि । **सिद्धिः**—सत्ता, प्रमाणसम्बन्धयोग्यत्वरूपा । **स्थितिः**—तदनुवृत्तिः । **अपृथक्**शब्दः सिद्ध्यादिसाधारणः । **प्रतीति**शब्देन अपृथक्प्रतीतेः स्वतःप्राप्तत्वं विवक्षितम् । प्रकारैकस्वभाववस्तुवाचिशब्दत्वं मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्ये प्रयोजकम् इत्यर्थः । निष्कर्षकशब्दान्यत्वे सति इति विशेषणम् ।

**इति निरवद्यम्** इति । मत्वर्थीयप्रत्ययसापेक्षदण्ड-कुण्डलादिव्यावृत्तं मत्वर्थीयप्रत्यय निरपेक्षसर्वप्रयोगविषयानुयायि प्रयोजकं सिद्धमिति न अव्याप्त्यादिदोषः इत्यर्थः । अनेन सहोपलम्भनियमादेः प्रयोजकत्वशङ्कापरिहारादिः प्रथमसूत्रोक्तः अभिप्रेतः (श्रु.प्र.) ॥

**तत्**—चोद्यस्य परिहृतत्वात् । **एवम्**—पूर्वं शिक्षितप्रकारेण । **उपसंहृतमिति** ।

---

[1] करण्यप्रयोजकम्—ध [2] यस्य—इ,थ,ध [3] सम्भवः—आ [4] प्रतिपत्तिभिः—ध
[5] तद्वाचकानां—आ,इ,वा [6] द्रव्य—द [7] पृथक्सिद्ध्यर्हस्य—द [8] द्रव्यस्य कस्यचित्—थ
[9] कदाचित्—थ, ध, [10] मवगम्यते—थ, ध, [11] मत्वर्थीयः—ध [12] जीवस्य—आ, वा
[13] जीवविशिष्टनिर्देशरूपाः—ट, जीवरूपाः—द, जीवविशेषनिर्देशरूपाः—ध [14] परमात्मानं—ध

अन्वयात्, जीवगताः धर्माः परमात्मानं न स्पृशन्ति । यथा [1]स्वशरीर[1]गताः बालत्व-युवत्व-स्थविरत्वादयो धर्माः जीवं न स्पृशन्ति ॥

[तत्त्वमसिश्रुतेरर्थः]

अतः—'तत्त्वमसि' इति सामानाधिकरण्ये, 'तत्'पदं जगत्कारणभूतं सत्यसङ्कल्पं सर्वकल्याणगुणाकरं निरस्तसमस्तहेयगन्धं परमात्मानम् आचष्टे; 'त्वम्' इति च तमेव [2]सशरीर[2]जीवशरीरकम् आचष्टे—इति, सामानाधिकरण्यं मुख्यवृत्तम्, प्रकरणाविरोधः, सर्वश्रुत्यविरोधः, ब्रह्मणि [3]निरवद्ये कल्याणैकताने[3] अविद्यादिदोषगन्धाभावश्च । अतः [4]जीवसामानाधिकरण्यमपि,[4] विशेषण[5]भूतात् जीवात्[5] [6]अन्यत्वमेवाऽऽ[6]पादयतीति विज्ञानमयात् जीवात् अन्य एव आनन्दमयः परमात्मा ॥

[आनन्दमयस्य शारीरत्वश्रवणं जीवत्वज्ञापकम् इत्यस्य निरासः]

यदुक्तम्—

'तस्यैष एव शारीर आत्मा' (तै.उ.आन. 6-1)

---

'ऐतदात्म्यमिदं सर्वम्' इति पूर्वमेव वैयधिकरण्येन सर्वस्य ब्रह्मात्मकत्वं विहितम् । तस्य सामानाधिकरण्येन जीवविशेषे उपसंहारः । यथा 'स त आत्मान्तर्याम्यमृतः' इति जीवविशेषे कृत्स्नस्य ब्रह्मशरीरत्वं वैयधिकरण्येन उपसंहृतम्, तद्वत् इत्यर्थः । अनेन उद्देश्योपादेयविभागनिबन्धनचोद्यपरिहारः अभिप्रेतः । **एवं च....न स्पृशन्ति** इति । जीवशरीरगतधर्माः जीवमिव, जीवधर्माः परमात्मानं न स्पृशन्ति इत्यर्थः ॥

**अतः**—सामानाधिकरण्यस्य शरीरशरीरिभावनिबन्धनत्वोपपादनात् । अयं हेतुः प्रकरणाविरोधादीनामपि साधारणः । **मुख्यवृत्तमिति** । पदद्वयावगतविशेषणापरित्यागेन विशेष्यैक्यात्, सामानाधिकरण्यस्य मुख्यत्वसिद्धिः । **प्रकरणाविरोधः**—'तदैक्षत' 'ऐतदात्म्यमिदम्' 'अनुप्रविश्य' इत्यादिवाक्याविरोधः । **सर्वश्रुत्यविरोधः**—भेदश्रुति-घटकश्रुत्यविरोधः । **अविद्या....भावश्च** इति उभयलिङ्गत्वश्रुतिसिद्धार्थविरोधाभावः उक्तः । **अत इत्यादि** । तत् त्वंपदयोः प्रवृत्तिनिमित्तस्य अवश्याश्रयणीयत्वात्, त्वंशब्दावगतधर्माणां ब्रह्मणि साक्षादन्वयविरोधेन जीवद्वारा अन्वयात्, द्वारभूतजीवात्, द्वारिणो ब्रह्मणः वैलक्षण्यसाधकं सामानाधिकरण्यम् इत्यर्थः । **इतिशब्दः हेतौ** (श्रु.प्र) ॥

---

[1] शरीर—वा [2] शरीरकं—इ, सशरीरक—थ, थ [3] निरवद्यकल्याणैकताने—थ
[4] जीवसामानाधिकरण्यम्—ना [5] भूतजीवात्—ना [6] अन्यत्वोप—न

'तस्माद्वा एतस्मादात्मनः' (तै.उ.आन. 1-2)
इत्यत्रैव, अन्नमयस्य परमात्मैव शारीर आत्मेति [1]अवगतः[1] ।

प्राणमयं प्रकृत्याह—

'तस्यैष एव शारीर आत्मा । यः पूर्वस्य' (तै.उ.आन 3-1)
इति । पूर्वस्य अन्नमयस्य यः शारीर आत्मा श्रुत्यन्तरसिद्धः [2]परमकारणभूतः[2] परमात्मा, [3]स एव[3] तस्य प्राणमयस्याऽपि शारीर आत्मा इत्यर्थः ।

एवं मनोमय-विज्ञानमययोः [4]द्रष्टव्यम्[4] ॥

[आनन्दमयस्य परमात्मत्वोपपादनम्, सूत्रार्थोपसंहारश्च]

आनन्दमये तु 'एष एव' इति निर्देशः, तस्य [5]अनन्यात्मत्वं[5] दर्शयितुम् ।

तत् कथम् ?

विज्ञानमयस्याऽपि पूर्वोक्तया नीत्या, परमात्मैव शारीर [6]आत्मेत्यवगतः[6] । एवं सति. 'विज्ञानमयस्य यः शारीरः आत्मा, स एव आनन्दमयस्याऽपि शारीर आत्मा' इत्युक्ते, 'आनन्दमयस्य अभ्यासावगतपरमात्मभावस्य परमात्मनः, स्वयमेव आत्मा' इत्यवगम्यते ।

---

निर्देशेन अन्नमयादीनां शरीरत्वस्य अर्थसिद्धत्वाच्च । एवं 'यः पूर्वस्य' इति उत्तरत्राऽनुवादस्य पुरोवादनिर्वाहः कृतः ।

**श्रुत्यन्तरसिद्धः, परमकारणभूतः** इति पदद्वयम्, 'यः' इति प्रसिद्धवन्निर्देशः श्रुत्यन्तर-सिद्धिम्, एतत्करणसिद्धिं च ज्ञापयतीत्यभिप्रायेण (श्रु.प्र) ।

**दर्शयितुमिति** । 'पतिं विश्वस्यात्मेश्वरम्' 'न तस्येशे कश्चन' 'नाऽन्योऽतोऽस्ति द्रष्टा' इत्यादिवत्, अयं निर्देशः इत्यर्थः ।

**तत्कथमिति** । अत्र उपपत्तिजिज्ञासया प्रश्नः । अनन्यात्मत्वप्रदर्शनार्थत्वं कथम् ? इत्यर्थः ।

आनन्दमयं प्रति श्रूयमाणे 'यः पूर्वस्य' इति वाक्ये 'पूर्वशब्दविवरणार्थं **विज्ञानमयस्य** इत्युक्तम् । **पूर्वोक्तया**—प्राणमयादावुक्तया । **अवगम्यत** इति । 'आनन्दं ब्रह्मणो विद्वान्, इति, पूर्वमभ्यस्तस्याऽऽनन्दस्य ब्रह्मसम्बन्धित्वनिर्देशात्, ब्रह्मणश्च 'आनन्दो ब्रह्म' इति आनन्द-शब्दवाच्यत्वात्, 'आनन्दो ब्रह्मेति व्यजानात्' इति 'आनन्द'शब्दवाच्यस्थाने, 'एतमानन्दमय-मात्मानमुपसङ्क्रम्य' इति 'आनन्दमय'शब्दनिर्देशेन आनन्दानन्दमयशब्दयोः पर्यायत्वाच्च,

---

[1] अवगतम्—ध [2] कारणभूतः—थ [3] स एषः—द [4] द्रष्टव्यः—थ
[5] अनन्यात्मकत्वं—इ, वा, [6] आत्मेत्यवगतम्—थ, आत्मेत्यवगमः—ध

एवं च [1]स्वव्यतिरिक्तं चेतनाचेतन[1]वस्तुजातं स्वशरीरमिति, स एव निरुपाधिकः शारीर आत्मा। अत एव 'इदं परं ब्रह्म अधिकृत्य प्रवृत्तं शास्त्रं शारीरकम्' इति अभियुक्तैरभिधीयते। अतः विज्ञानमयात् जीवात् अन्य एव परमात्मा आनन्दमयः। ॥१३॥

[आनन्दमयशब्दे मयटः विकारार्थकत्वाशङ्का]

[2]आह[2]—[3]न अयम्[3] आनन्दमयः जीवात् अन्यः; विकारशब्दस्य मयट्प्रत्ययस्य श्रवणात्।

'मयड्वैतयोः' (पा सू. 4-3-143)

इति प्रकृत्य,

'नित्यं वृद्धशरादिभ्यः' (पा.सू. 4-4-144)

इति विकारार्थे मयट् स्मर्यते। वृद्धश्चाऽयम् आनन्दशब्दः।

ननु—प्राचुर्येऽपि मयडस्ति;

'तत्प्रकृतवचने मयट्' (पा.सू. 5-4-21)

---

आनन्दमयस्य परमात्मभावोऽवगतः इत्यभिप्रायः। अभ्यासावगतपरमात्मभावत्वं पुच्छब्रह्मवादनिरासयुक्तीनामुपलक्षणम्।

**निरुपाधिक** इति। क्वचित् कदाचित् किञ्चित्प्रति कर्मानुगुणं हि कश्चित् आत्मा भवति। अयं तु सर्वेषां सर्वदा सर्वत्र अकर्मवश्यः स्व आत्मेति निरुपाधिक इति, शारीरात्मत्वं परमात्मन एव मुख्यमिति भावः। **अभियुक्तैः**—भगवद्बोधायनादिभिः। 'संहितमेतच्छारीरकम्' इति वृत्तिकारवचः (श्रु.प्र.) ॥१३॥

**मयड्वैतयोरि**ति, मयटः विकारार्थत्वज्ञापनार्थम्। **एतयोः**—'तस्य विकारः' (पा.सू. 4-3-134) 'अवयवे च प्राण्योषधिवृक्षेभ्यः' (पा.सू. 4-3-135) इति प्रकृतयोः विकारावयवयोः, इति हि तस्यार्थः। अयमर्थः—'प्राग्दीव्यतोऽण्' (पा.सू. 4-1-83) इत्यधिकारसूत्रम्। अस्मिन् अर्थद्वयेऽपि वृद्धसंज्ञानां शरादिगणान्तर्गतानां च मयडेव; न 'अण्'प्रत्ययः इत्यपवदति 'नित्यं वृद्धशरादिभ्यः' (पा.सू. 4-3-144) इति सूत्रम्। 'वृद्धिर्यस्याऽचामादिस्तद्वृद्धम्' (पा.सू. 1-1-73) इति सूत्रेण आनन्दशब्दस्य वृद्धसंज्ञकत्वात् विकारार्थे मयट्प्रत्ययो विहित इति।

**नन्विति** सिद्धान्तिच्छायया चोदयति।

---

[1] स्वव्यतिरिक्तचेतनाचेतन—वा, स्वव्यतिरिक्तचेतनाचेतनं—आ,ङ,द [2] ननु—घ [3] न—द

इति स्मृतेः । यथा—

'अन्नमयो यज्ञः' (का.वृ. 5-4-21)

इति । स एवाऽयं भविष्यति,

[1]नैवम्[1], 'अन्नमयः' इत्युपक्रमे विकारार्थत्वं दृष्टम् । अतः औचित्यात् अस्याऽपि विकारार्थत्वमेव युक्तम् ।

[2]किञ्च—प्राचुर्यार्थत्वेऽपि[2] [3]जीवादन्यत्वं[3] न सिद्ध्यति । [4]तथा हि[4] ; 'आनन्दप्रचुरः' इत्युक्ते, दुःखमिश्रत्वम् अवर्जनीयम् । आनन्दस्य हि प्राचुर्यम्, दुःखस्य अल्पत्वम् अवगमयति । दुःखमिश्रत्वमेव हि जीवत्वम् । अतः औचित्यप्राप्तविकारार्थत्वमेव युक्तम् ।

किं च—लोके 'मृन्मयं, [5]हिरण्मयं, दारुमयं' इत्यादिषु[5], वेदे च

'पर्णमयी जुहूः' (तै.ब्रा. 1-1-24)

'शमीमय्यः स्रुचः' (तै.ब्रा 1-1-24)

'दर्भमयी रशना' (तै.ब्रा. 3-8-2)

इत्यादिषु मयटः विकारार्थे प्रयोगबाहुल्यात्, स एव [6]प्रथमतरं[6] [7]धियमधिरोहति[7] । जीवस्य च आनन्दविकारत्वम् अस्त्येव; तस्य स्वत आनन्दरूपस्य सतः, संसारित्वावस्था,

---

स एवायम् इति । विकारार्थत्वेऽपि जीवात्मनि विकारासंभवात्, विकारपरत्वं वन्मतेऽप्यनुपपन्नमिति भावः ।

नैवमिति, अग्र्यप्रायन्यायेन (पू.मी.सू. 2-2-12) परिहरति । अतः—उपक्रमदर्शनात् । औचित्यात्—उपक्रमप्रतिपन्नस्वीकारौचित्यात् (श्रु प्र.) ।

आनन्दस्येति । प्राचुर्यार्थस्वभावात् प्रतियोगिनि अपेक्षिते सुखप्रतिसम्बन्धितया [विरोधितया] साहचर्यप्रसिद्धदुःखगताल्पत्वस्य प्रतियोगित्वमिति भावः । अतः-प्राचुर्येऽपि जीवान्यत्वसिद्धिः ।

[शमीमय्यः स्रुचः इति । अत्र आनुपूर्वी वेदे 'यच्छमीमयः सम्भारो भवति' (तै.ब्रा. 1-1-24) इत्येवोपलभ्यते ; न तु 'शमीमय्यः स्रुचः' इति तत्स्थानमन्वेषणीयम्] प्रथमतरम् इति तरपः प्रयोगः, अवयवार्थादपि प्राचुर्यार्थे प्रयोगबाहुल्यात्, तद्व्यावृत्त्यर्थम् ।

---

[1] मैवम्—ध [2] प्राचुर्यार्थत्वेऽपि—त, थ, द, [3] तदन्यत्वं—ध [4] तदा हि—ध
[5] दारुमयं इत्यादिषु—वा, हिरण्मयम् इत्यादिषु—द [6] प्रथमतरां - ध [7] धियमारोहति—इ, वा

तद्विकार एवेति। अतः विकारवाचिनः मयट्प्रत्ययस्य श्रवणात्, आनन्दमयः जीवात् अनतिरिक्तः—इति।

तदेतत् अनुभाष्य परिहरति—

[मयटः विकारार्थत्वनिरासः]

## विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥१-१-१४॥

नैतद्युक्तम्;

कुतः?

प्राचुर्यात्—परस्मिन् ब्रह्मणि आनन्द[1]प्राचुर्यात्। प्राचुर्यार्थे च[1] [2]मयटः संभवात्[2]।

एतदुक्तं भवति—शतगुणितोत्तरक्रमेण अभ्यस्यमानस्य आनन्दस्य जीवाश्रयत्वासम्भवात्, 'ब्रह्माश्रयः अयमानन्दः' इति निश्चिते सति, [3]तस्मिन् ब्रह्मणि[3] [4]विकारासम्भवात्[4], प्राचुर्येऽपि [5]मयड्विधिसंभवाच्च[5], आनन्दमयः परं ब्रह्म – इति।

---

**तद्विकार एवेति**। स्वत आनन्दरूपस्य तस्य दुःखित्वाद्यवस्थायोगो जीवत्वम्। अतः आनन्दविकारो जीवः। आनन्दात्मकस्वरूपापेक्षया नित्यत्वादिवादः इत्यर्थः।

**अनुभाष्येत्युक्तिः** शङ्कायाः सूत्रस्थत्वात् (श्रु.प्र)।

**नैतद्युक्तमिति**। [सूत्रे] द्वितीयस्य नञो निषेध्यं, पूर्वपक्षिमतस्योपपन्नत्वम् इत्यभिप्रायेणोक्तम्।

**प्राचुर्यार्थ इति**। न केवलं प्राचुर्यार्थसद्भावमात्रम्; अपेक्षिता शब्दशक्तिश्चाऽस्ति इत्यर्थः।

**अभ्यस्यमानस्येति**। अभ्यस्यमानानन्दयोगः उत्तरसूत्रगतानाम् अन्येषामपि हेतूनां प्रदर्शनार्थः। **विकारासम्भवादिति**। विकारार्थत्वपरित्यागे अयोग्यत्वं हेतुरित्यर्थः।

---

[सूत्रार्थः। **विकारशब्दात्**—आनन्दमयपदे विकारार्थकस्य मयड्रूपप्रत्ययस्य श्रवणात् ज्ञापकात्, **न**—अविकृतः परमात्मा न बोध्यः, **इति चेत्**—एवं कथनं तु, **न**—युक्तं न भवति, **प्राचुर्यात्**—मयटः बाहुल्यवाचित्वात् (आनन्दबहुलः परमात्मैव आनन्दमयपदवाच्यः)॥]

विकारार्थे मयट्शब्दान्न ब्रह्मेति चेन्न हि।
प्राचुर्यार्थक एवेति मयट्शब्दः परो हि सः॥ (ब्र प.मा. १४)

---

[1] प्राचुर्यार्थेऽपि—ध, प्राचुर्यात्। प्राचुर्यार्थेऽपि—थ [2] मयट्सद्भावात्—द, मयट्सम्भवात्—ध [3] ब्रह्मणि—थ [4] विकारस्यासम्भवात्—द [5] मयटः सद्भावाच्च—इ मयट्सद्भावाच्च—थ, ध, मयड्विधिसम्भवात्—द

औचित्यात् प्रयोगप्रौढ्या च मयटः विकारार्थत्वम्, अर्थविरोधात् न संभवति।

किं च—औचित्यं प्राणमय एव परित्यक्तम् ; तत्र विकारार्थत्वासम्भवात्। अतः तत्र पञ्चवृत्तेः वायोः प्राण[1]वृत्तिमत्ता[1]मात्रेण प्राणमयत्वम् ; प्राणापानादिषु [2]पञ्चसु वृत्तिषु[2] प्राणवृत्तेः प्राचुर्याद्वा। न च प्राचुर्ये [3]मयट्प्रत्ययस्य[3] प्रौढिर्नास्ति ;

'अन्नमयो [4]यज्ञः[4] (पा.सू.का.वृ. 5-4-21)

'शकटमयी यात्रा' ( ? )

[5]इत्यादिषु दर्शनात्[5]।

यदुक्तम्—आनन्दप्राचुर्यम् अल्पदुःखसद्भावम् अवगमयति—इति,

तदसत् ; तत्प्रचुरत्वं हि [6]तत्प्रभूतत्वम्[6]। तच्च इतरस्य सत्तां न अवगमयति; अपि तु तस्य अल्पत्वं निवर्तयति। इतरसद्भावासद्भावौ तु, प्रमाणान्तरावसेयौ। इह च प्रमाणान्तरेण तदभावः अवगम्यते ;

'अपहतपाप्मा' (छां.उ. 8-1-5)

---

**औचित्यम्**—प्रकरणौचित्यम्। तत् लिङ्गबाध्यम्। **प्रयोगप्रौढिः**—प्रयोगप्रसिद्धिः। सा गङ्गापदादिषु अर्थविरोधेन बाधिता। अतः उभयमपि प्रमाणान्तराबाधितत्वे सत्येव अर्थसाधकम् इत्यर्थः। **अर्थविरोधात्**—आनन्दमये जीवत्व-विकारत्वयोः पूर्वोक्तात् असम्भवात्।

**प्राणवृत्तिमत्तामात्रेण**—प्राणाख्यवृत्तिविशेषसम्बन्धित्वमात्रेण। प्रत्ययस्य [मयटः] आनर्थक्यात् अमुख्यार्थत्वं वरमिति भावः। **प्राणापानादिष्विति**। उचिततमं योजनान्तरमेतत् (श्रु.प्र)।

[**शकटमयीति**। काशिकावृत्तौ 'वटकमयी यात्रा' इत्युदाहरणं उपलभ्यते।]

**यदुक्तमिति**। आनन्दप्राचुर्यप्रतियोगि, तत्समानाश्रयं दुःखाल्पत्वमेव। आश्रयान्तरगतस्य आनन्दप्राचुर्यस्य आश्रयान्तरगतं आनन्दाल्पत्वं न प्रतियोगितामर्हति ; स्वाश्रयगतदुःखाल्पत्वस्यैव अन्तरङ्गत्वेन ग्राह्यत्वादिति पराभिप्रायः।

---

[1] वृत्ता—थ, द. [2] पञ्चवृत्तिषु—भ [3] मयट्—द [4] यज्ञः, शरमयी सेना—ध
[5] इत्यादिदर्शनात्—वा [6] तत्प्रभूत एव—ङ, तत्प्रभूतत्वमेव—वा

इत्यादिना। तत्र एतावदेव वक्तव्यम्—[1]ब्रह्मानन्दस्य प्रभूतत्वम्[1], अन्यानन्दस्य [2]अल्पत्वम् अपेक्षते[2]—इति। उच्यते च तत्—

'स एको मानुष आनन्दः' (तै.उ.आन. 8-1)

इत्यादिना ; जीवानन्दापेक्षया ब्रह्मानन्दः निरतिशयदशापन्नः प्रभूतः—इति।

यच्चोक्तम्—जीवस्य आनन्दविकारत्वं सम्भवति—इति,

तदपि नोपपद्यते ; जीवस्य [3]ज्ञानानन्द[3]स्वरूपस्य, केनचिदाकारेण मृद इव [4]घटाद्याकारेण[4] परिणामः, सकलश्रुति-स्मृति-न्यायविरुद्धः। 'संसारदशायां तु, [5]कर्मणा[5] [6]ज्ञानानन्दौ[6] सङ्कुचितौ' इत्युपपादयिष्यते। [7]अतश्च आनन्दमयः जीवादन्यः परं ब्रह्म[7] ॥ १४ ॥

---

**तत्र एतावदेव वक्तव्यमिति।** प्रमाणान्तरसिद्धार्थान्तरप्रतियोगिकं प्राचुर्यम् अभिदधतः मयट्प्रत्ययस्य, स्वयम् अर्थान्तरसाधकत्वाभावात्, ब्रह्मणि च दुःखसम्बन्धस्य प्रमाणबाधितत्वात्, जीवानन्दाल्पत्वस्य लोकसिद्धत्वाच्च, ब्रह्मानन्दप्राचुर्यप्रतियोगि जीवानन्दाल्पत्वमिति अर्थात् सिद्धमित्यर्थः। 'बलवत्तरः' इत्युक्ते, पुरुषान्तरबलं हि प्रतियोगितया प्रतीयते ; न तु स्वगतं विजातीयं ज्ञानम्। अतः अन्तरङ्गत्वं विफलम्। ब्रह्मणि समानाश्रयम् आनन्दविजातीय-दुःखाल्पत्वस्वरूपं प्रतियोगि श्रुतिनिषिद्धम्। अन्याश्रयं सजातीयाल्पत्वलक्षणं प्रतियोगि श्रुत्यैव सिद्धमिति (श्रु.प्र)।

**आनन्दविकारत्वमिति।** मयड्वाच्यमित्यर्थः। **तदपीति।** स्वरूपान्यथाभाव-लक्षणविकारार्थत्वमेव मयटः व्युत्पत्तिसिद्धम्। तच्च अत्र नास्तीत्यर्थः। **सङ्कुचिताविति।** अतः दुःखाज्ञानसंभवः [इति भावः]।

अस्मिन् प्रकरणे व्युत्पाद्यम्—प्रसिद्धतरमुख्यार्थासम्भवे तदनुग्राहकहेत्वननुरोधेन सम्भवदनतिप्रसिद्धमुख्यार्थानुग्राहकहेतूनाम् अनुरोद्धव्यत्वम्—इति स्फुटम् ॥ १४ ॥

---

1 ब्रह्मानन्दप्रभूतत्वम्—द 2 स्वल्पत्वमपेक्षते—वा, स्वल्पत्वापेक्षम्—द, अल्पत्वापेक्षम्—श्रा 3 ज्ञानानन्दैकगुण—ध, ज्ञानानन्दैक—वा 4 घटाकारेण—थ, 5 तत्कर्मणा—ध 6 ज्ञानानन्दौ जीवानां—द, ध 7 अतः विज्ञानमयाज्जीवादन्य एव परमात्मा—वा

[आनन्दहेतौ आनन्दमयशब्दः आनन्दप्रचुरार्थकः]

[1]इतश्च जीवादन्यः, आनन्दमयः परं ब्रह्म[1] ;

## तद्धेतुव्यपदेशाच्च ॥१-१-१५॥

[एतत्सूत्रविषयवाक्यम् सूत्रार्थविवरणं च]

'को ह्येवाऽन्यात् कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् ।
एष ह्येवाऽऽनन्दयाति' (तै.उ.आन. 7-1)

इति, एष एव जीवान् आनन्दयतीति, जीवानाम् आनन्दहेतुः अयं व्यपदिश्यते । अतश्च आनन्दयितव्यात् जीवात्, आनन्दयिता अयम् [2]अन्यः आनन्दमयः[2] परमात्मा— इति विज्ञायते । 'आनन्दमय एव अत्र 'आनन्द'शब्देनोच्यते' इति च अनन्तरमेव वक्ष्यते ॥१५॥

---

**तद्धेत्विति** । पूर्वोक्तम् आनन्दप्राचुर्यमपि अनेनोपपादितं भवति । अनितरसुकरमोक्षप्रदानक्षमत्वं हि निरतिशयानन्दहेतुर्भवति । किंच धनप्रचुरो हि पुरुषः अन्यस्मै तदभिप्रेतं धनं ददातीति सूत्रानन्तर्यम् । **अन्यात् प्राण्यात्** इति भोगापवर्गसुखहेतुत्वमुक्तम् , यद्वा सत्ताहेतुत्वं सुखहेतुत्वं चोक्तम् । पूर्वोक्त एव सम्यगर्थः ।

**अतश्चेति** । कर्मकर्त्रैक्यं न सम्भवतीति फलितो हेतुः । **आनन्दमय एवेति** । [अनेन] आनन्दशब्दवाच्यस्य हि ! आनन्दयितृत्वमुक्तम् ; नतु आनन्दमयस्य [इत्यस्योत्तरमाह] (श्रु.प्र) ॥१५॥

---

[सूत्रार्थः । **तद्धेतोः**—तद्धेतुत्वस्य—चेतनगतानन्दजनकतायाः, **व्यपदेशाच्च** — आनन्दमयशब्दवाच्ये वस्तुनि स्पष्टं श्रुत्या कथनादपि ज्ञापकात्, (आनन्दमयपदवाच्यः, आनन्दजनकः परमात्मैव ; न जीवः) ।]

एष ह्येवानन्दयातीत्यात्मानन्दस्य वाक्यतः ।
हेतुत्वव्यपदेशाच्च ब्रह्मानन्दमयो भवेत् ॥　　(ब्र.प.मा. १५)

---

[1] एतत् सर्वं 'थ' पुस्तके नास्ति
इतश्च जीवादन्यः आनन्दमयः—वा, इतश्च आनन्दमयः जीवादन्यः परं ब्रह्म—द

[2] अन्यः—थ

[सत्यं ज्ञानमिति मन्त्रवर्णेन आनन्दमयशब्देन च एकस्यैव वस्तुनः प्रतिपादनात् आनन्दमयस्य परमात्मत्वम्]

इतश्च जीवादन्यः आनन्दमयः ;

## मान्त्रवर्णिकमेव च गीयते ॥१–१–१६॥

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.आन. 1-1)

इति, मन्त्रवर्णोदितं ब्रह्मैव आनन्दमयः इति गीयते। 'तत्तु'[1] जीवस्वरूपादन्यत् परं ब्रह्म। तथा हि—

'ब्रह्मविदाप्नोति परम्' (तै. उ. आन. 1-1)

इति, जीवस्य प्राप्यतया ब्रह्म निर्दिष्टम्।

'तदेषाऽभ्युक्ता' (तै उ.आन. 1-1)

इति, तत्—ब्रह्म, अभिमुखीकृत्य—[2]प्रतिपाद्यतया[2] परिगृह्य, ऋक् एषा, अध्येतृभिः उक्ता। [3]ब्राह्मणोक्तस्य अर्थस्य[3] वैशद्यम्, अनेन [4]मन्त्रेण[4] क्रियते इत्यर्थः।

इतश्चेति, एवम् आनन्दमयपदप्रकृति-प्रत्ययार्थविषयं सूत्रत्रयं प्रवृत्तम्। अथ आनन्दवल्लीम् आदिमध्यान्ततोऽनुसन्धाय अर्थं निष्कष्टुकामः प्रथमम् उपक्रमस्थहेतुमवतारयति [अनेन]।

मन्त्रवर्णेति। अर्थः शाब्द एव ; न तु उच्छब्दः फलितः इति ज्ञापयितुं वर्णशब्दः। परं ब्रह्म इति. ब्राह्मणस्थ 'पर'शब्दप्रत्यभिज्ञापनायोक्तम् (श्रु.प्र)।

प्रतिपाद्यतयेति। अभिमुखीकरणं चेतनधर्म इति, [ऋचि] तद्व्यावृत्त्यर्थम् [इदमुक्तम्]। अध्येतृभिरिति, 'उक्ता' इति कथिते, पौरुषेयत्वशङ्का स्यादिति तद्व्युदासार्थमुक्तम्। ब्राह्मणोक्तेति। ब्राह्मणोक्तार्थविशदीकरणरूपो मन्त्रः इति प्रयोजकम् (मन्त्रप्रदर्शने हेतुः)।

---

[सूत्रार्थः। मान्त्रवर्णिकमेव च–'सत्यं ज्ञानमनन्तं ब्रह्म' इति मन्त्रघटकैर्वर्णैरेवाभिधेयं ब्रह्मैव च, गीयते–आनन्दमयपदेन शब्द्यते—प्रतिपाद्यते, (अतः आनन्दमयः परं ब्रह्मैव) ॥]

सत्यं ज्ञानमनन्तमित्युदितं मन्त्रवर्णतः।
आनन्दमयशब्देन गीयते तत्परं तथा ॥ (ब्र. प. मा. १६)

---

[1] तद्—थ [2] प्रतिपाद्यतया च—थ, ध [3] ब्राह्मणोक्तार्थस्य—आ
[4] मन्त्रवर्णेन—थ, ध

जीवस्य उपासकस्य प्राप्यं ब्रह्म, तस्माद्विलक्षणमेव। अनन्तरं च,

'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' (तै.उ.आन. 1-2)

इत्यारभ्य, उत्तरोत्तरैः [1]ब्राह्मणैः मन्त्रैश्च[1] तदेव विशदीक्रियते। अतः जीवात् अन्यः आनन्दमयः ॥ १६ ॥

[प्राप्यस्य प्राप्तुश्च अभेदशङ्का-परिहारौ]

अत्राऽऽह— यद्यपि उपासकात् प्राप्यस्य भेदेन भवितव्यम्; तथाऽपि, न वस्त्वन्तरं जीवात् मान्त्रवर्णिकं ब्रह्म। किन्तु, तस्यैव उपासकस्य [2]निरस्तसमस्ताविद्या[2]-गन्धनिर्विशेषचिन्मात्रैकरसं शुद्धं स्वरूपम्। तदेव,

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.आन. 1-1)

इति [3]विशोध्यते[3]। [4]तदेव च[4],

'यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह' (तै.उ.आन. 4-1)

इति, वाङ्मनसागोचरतया निर्विशेषमिति [5]गम्यते[5]। अतः तदेव मान्त्रवर्णिकमिति, तस्मादनतिरिक्तः आनन्दमयः— इति।

---

सङ्ग्रहेणोक्तस्य विस्तरेण कथनं, विस्तृतस्य प्रतिपत्तिसौकर्याय सङ्ग्रहेण कथनमपि वैशद्यावहम्। नित्यनिर्दोषत्वाविशेषात् मन्त्र-ब्राह्मणयोः प्राबल्य-दौर्बल्यविभागोऽनुपपन्नः इति भावः। **विलक्षणमेवेति।** प्राप्तुः अस्य उपासकात्मस्वरूपस्य, प्राप्तव्यस्य परब्रह्मणश्च कथमैक्यम्? इत्यर्थः। पूर्वस्मिन् अस्मिन्नपि सूत्रे चशब्दः हेतुसमुच्चये। **विकारशब्दादिति** सूत्रे, स्वतन्त्रहेत्वन्तराभावात् न चशब्दः। तद्धि 'आनन्दमयोऽभ्यासात्' इति सूत्रशेषम् ॥१६॥

**अत्र**— उपासक-प्राप्यभेदे अभिहिते सति। **समस्ताविद्याशब्देन** कारणाविद्या, आच्छादिकाऽविद्या, कार्याविद्या, विक्षेपिकाऽविद्या च विवक्षिता। **गन्धशब्देन** अपारमार्थ्यं फलितम्, अपुनःसम्बन्धो वा अभिप्रेतः। **शुद्धम्**— कर्म-तत्फलान्वयरहितम्। **ज्ञानपदेन** निर्विशेषत्वम् अर्थसिद्धम्, ज्ञानस्य ज्ञानान्तराश्रयत्वाद्ययोगात्। **तदेव**— शुद्धस्वरूपमेव। उपासका-प्राप्यभेदः अवस्थाभेदेनाऽप्युपपन्न इति, न जीवविलक्षणत्वसिद्धिः इत्यर्थः (श्रु.प्र) ॥

---

1 मन्त्रैश्च—द　2 निरस्ताविद्या—ध

3 मन्त्रेण विशोध्यते—वा　4 तदेव—इ　5 अवगम्यते—थ

अत उत्तरं पठति —

## नेतरोऽनुपपत्तेः ॥१-१-१७॥

परमात्मनः इतरः जीवशब्दाभिलप्यः, मुक्तावस्थोऽपि न भवति मान्त्रवर्णिकः । कुतः ?

अनुपपत्तेः । तथाविधस्य आत्मनः [1]निरुपाधिकं विपश्चित्त्वं[1] नोपपद्यते । इदमेव हि ! निरुपाधिकं विपश्चित्त्वम्,

'सोऽकामयत, बहु स्यां [2]प्रजायेय[2]' (तै.उ.आन. 6-2)

इति, सत्यसङ्कल्पत्वप्रदर्शनेन [3]विवरिष्यते[3] । विविधं [4]पश्यच्चित्त्वं हि[4] विपश्चित्त्वम् । पृषोदरादित्वात् पश्यच्छब्दावयवस्य यच्छब्दस्य लोपं कृत्वा व्युत्पादितः, विपश्चिच्छब्दः ।

---

**नेतर** इति, 'इतर'शब्दस्य सप्रतियोगिकत्वात्, **परमात्मनः** इत्युक्तम् ।

**निरुपाधिकत्वम्** —कर्मविशेषेन्द्रियाद्यनपेक्षत्वम् । इह च उपाधिरस्ति चेत्, स वक्तव्यः । तदभावादेव तदनुक्तिरिति, केवलविपश्चिच्छब्दः निरुपाधिकं विपश्चित्त्वमाह इत्यर्थः । **इदमेवेति** । न केवलं निरुपपदत्वात् विपश्चित्त्वस्य निरुपाधिकत्वम् अर्थसिद्धम्, श्रुतिसिद्धमपीत्याशयः । **पृषोदरत्वादिति** । 'पृषोदरादीनि यथोपदिष्टम्' (पा.सू.6-3-109) इति पाणिनिः । पृषच्छब्दावयवतकारलोपवत् यच्छब्दलोपः । पाणिनिवत्, आप्ततममुनिभिः कृतनिर्वाहत्वात्, ईदृशशब्दानां साधुत्वस्य पाणिन्यभिमतत्वम् अनेन ज्ञातं भवति । अतः विविधं पश्यच्चेतनत्वं—विपश्चित्त्वमित्यर्थः । चिच्छब्दस्य ज्ञानवाचित्वे 'विविधं पश्यच्चित्त्वम्' इति बहुव्रीहिः ।

---

[सूत्रार्थः । **अनुपपत्तेः** —(आनन्दमये पूर्वोक्तस्य विपश्चित्त्वादेः) जीवे अयोगात्, **इतरः**— ब्रह्मणो भिन्नः जीवः, **न**—'सत्यं ज्ञान'मिति मन्त्रवर्णवाच्यो न भवति ॥]

ब्रह्मेतरो मन्त्रवर्णो नोदितस्स्वल्पधीरयम् ।
बहु स्यामिति सङ्कल्पानुपपत्तेर्विशेषतः ॥ (ब्र.प.मा १७)

---

[1] निरुपाधिकविपश्चित्त्वं—आ, ख, छ [2] प्रजायेयेति—वा [3] व्यपदिश्यते—वा
[4] हि पश्यच्चित्त्वं—आ

किं च अस्य मान्त्रवर्णिकस्य विपश्चितः,

'सोऽकामयत' (तै.उ.आन. 6–2)

इत्यारभ्य [1]वक्ष्यमाण[1]स्वसङ्कल्पावक्लृप्तजगज्जन्म-स्थिति-जगदन्तरात्मत्वादेः, मुक्तात्म-स्वरूपात् अन्यत्वं, सुस्पष्टमेव ॥१७॥

[भेदव्यपदेशात् श्रौतात्, आनन्दमयस्य जीवादन्यता]

इतश्च, उभयावस्थात् प्रत्यगात्मनोऽन्यः, आनन्दमयः ;

## भेदव्यपदेशाच्च ॥ १–१–१८ ॥

'तस्माद्वा एतस्मा[2]दात्मन आकाशः[2]' (तै.उ.आन. 1–1)

इत्यारभ्य, मान्त्रवर्णिकं ब्रह्म व्यञ्जयत् वाक्यम्, अन्न-प्राण-मनोभ्य इव, जीवादपि तस्य भेदं व्यपदिशति ;

'तस्माद्वा एतस्माद्विज्ञानमयात्। अन्योऽन्तर आत्माऽऽनन्दमयः' (तै.उ.आन. 5–2) इति। अतः [3]जीवाद्भेदस्य व्यपदेशाच्च[3], अय मान्त्रवर्णिकः [4]आनन्दमयः, अन्य[4] एव– इति [5]ज्ञायते[5] ॥१८॥

---

किञ्चेति, [आनन्दमयस्य जीवत्वे] सर्वज्ञत्वानुपपत्तिरूपम् अर्थान्तरमुच्यतेऽनेन। इदं सूत्रम्, मान्त्रवर्णिकसूत्रोक्तहेत्वन्यथासिद्धिपरिहारपरतया तच्छेषमिति, स्वतन्त्रहेतुपरत्वाभावात्, चशब्दाप्रयोगः (श्रु.प्र) ॥१७॥

इतश्चेति। एवम् अनेन सूत्रद्वयेन उपक्रमस्थहेतुः अनुसंहितः। अथ मध्यगतं स्फुटतरं हेतुमनुसन्धत्ते अनन्तरसूत्रेण। आनन्दमयस्य जीवादन्यत्वं, स्ववाक्यैकदेशमयडन्त-पदवाच्यनिरतिशयानन्दयोगेन प्रथमसूत्रेणोपपादितम्। अतः अत्रस्ववाक्यहेतुश्च उक्तो भवति।

भेदव्यपदेशादिति। यदि जीवात्मस्वरूपं शुद्धावस्थं ब्रह्म, तर्हि अन्नमयादेरिव

---

[सूत्रार्थः। **भेदस्य**—प्रशासितव्ये जीवे, प्रशासितुः परमात्मनो भेदस्य, (अथवा) आनन्दमये, विज्ञानमयात् जीवात् भेदस्य, **व्यपदेशाच**—'तस्माद्वा एतस्माद्विज्ञानमयात्। अन्योऽन्तर आत्माऽऽनन्दमयः' इति श्रुतौ स्पष्टं कथनादपि, **इतरः**—जीवः, **न**—आनन्दमयपद-वाच्यो न भवितुमर्हति ॥]

जीवाच्च विज्ञानमयाद्भेदेनास्य विमर्शनात्।
आनन्दमय इत्यत्र ब्रह्मैव प्रतिपाद्यते ॥ (ब्र.प.मा. १८)

---

[1] वक्ष्यमाणस्य—आ, ग, ट. [2] दात्मनः—थ, ध. [3] जीवाद्भेदव्यपदेशाच्च—इ
[4] अन्यः आनन्दमयः—द [5] विज्ञायते—आ.

[आनन्दमयस्य जीवादन्यत्वं अचित्संसर्गाभावकालिकसृष्टिसङ्कल्पज्ञाप्यम् ]

इतश्च जीवादन्यः ;

## कामाच्च नाऽनुमानापेक्षा ॥ १-१-१९ ॥

जीवस्य अविद्यापरवशस्य [1]जगत्कारणत्वे हि[1], अवर्जनीया आनुमनिकप्रधानादि-शब्दाभिधेयाचिद्वस्तु[2]संसर्गापेक्षा[2] । तथैव हि चतुर्मुखादीनां कारणत्वम् । इह च,

'सोऽकामयत । बहु स्यां प्रजायेय' (तै.उ.आन. 6-2)

इति अचित्संसर्ग[3]रहितस्य[3] [4]स्वकामादेव[4] विचित्रचिद[5]चिद्वस्तुनः सृष्टिः[5],

'इदं सर्वमसृजत । यदिदं किं च' (तै.उ.आन. 6-2)

इत्याम्नायते । [6]अतः[6] अस्य आनन्दमयस्य जगत् सृजतः, न आनुमानिकाचिद्वस्तु-संसर्गापेक्षा प्रतीयते ॥१९॥

---

एकावस्थायां [बद्धदशायामेव] भेदव्यपदेशो न सम्भवति । तस्मात् अन्नमयादिभिरिव जीवेनैक्यं ब्रह्मणो न सम्भवतीत्यर्थः । 'विज्ञान'शब्दस्य अन्तःकरणपरत्वानुपपत्त्यादिकं पूर्वोक्तमिहानुसन्धेयम् (श्रु.प्र) ॥१८॥

इह चेति । अत्यन्तम् अचिदनपेक्षत्वे, स्वरूपपरिणामप्रसङ्गः । देहातिरिक्ताचिदनपेक्षत्वं देवादिसृष्टौ चतुर्मुखादीनामप्यस्ति । अतः तत्परिहारार्थमिदम् । सङ्कल्पहेतुभूतकरण-कलेवरा-वस्थाचित्संसर्गापेक्षा नाऽस्तीत्यर्थः (श्रु.प्र) ॥१९॥

---

[सूत्रार्थः । **कामाच्च**—(परमात्मकर्तृका जगत्सृष्टिः) 'बहु स्याम्' इति केवलात् सङ्कल्पादेवेति श्रुत्या प्रतिपत्तेः, **न अनुमानापेक्षा**—आनन्दमयकर्तृकसृष्टौ अनुमानगम्यप्रधान-सापेक्षता नास्तीति, (आनन्दमयः न जीवः) ॥]

इच्छयैव जगत्सृष्टेः अचित्संसर्गतो विना ।
बहु स्यामिति वाक्यात्तु न जीवोऽस्य हि कारणम् ॥ (ब्र.प.मा. १९)

---

[1] जगत्कारणत्वे—इ, न. [2] संसर्गापेक्षा च—इ, ध. [3] रहितस्य तस्य—आ.
[4] कामादेव—थ [5] चिद्वस्तुसृष्टिः—थ [6] ततः—वा

[आनन्दमययोगेन जीवस्य आनन्दलाभात् ज्ञापकात् आनन्दमयस्य जीवादन्यत्वम्]

[1]इतश्च[1] जीवादन्यः [2]आनन्दमयः[2] ;

## आस्मिन्नस्य च तद्योगं शास्ति ॥ १-१-२० ॥

अस्मिन्—आनन्दमये, [3]अस्य[3]—जीवस्य, [4]तद्योगम्[4]—आनन्दयोगम्, शास्ति शास्त्रम् ;

'रसो वै सः। रसं ह्येवाऽयं लब्ध्वाऽऽनन्दी भवति' (तै.उ.आन. 7-1) इति। रसशब्दाभिधेयानन्दमयलाभात्, 'अयं जीवशब्दाभिलपनीयः आनन्दी भवति' इत्युच्यमाने, 'यल्लाभात् यः आनन्दी भवति, सः स एव' इति, अनुन्मत्तः को ब्रवीति ? इत्यर्थः ॥

[आनन्दानन्दमयशब्दयोः अर्थाभेदः]

एवम्, 'आनन्दमयः परं ब्रह्म' इति निश्चिते सति,

'यदेष आकाश [5]आनन्दः[5]' (तै.उ.आन. 7-1)

'विज्ञानमानन्दं ब्रह्म' (बृ.उ. 5-9-28)

---

**अस्मिन्** इत्यादि। कस्मिन्? केन योगः? किं शास्ति? इति अपेक्षायाम्, अक्षरार्थवर्णनमिदम्। **अस्मिन्** इति, विषयसप्तमी। ब्रह्मानुभवरूपानन्दस्य हि अवच्छेदकं ब्रह्म। **रसो वै सः** इति, शास्त्रमुक्तम्। **उच्यमाने** इति, **शास्तिशब्दार्थ** उक्तः। हेतुत्वस्य स्फुटतरत्वात्, सूत्रे हेतुत्वानिर्देशः इत्यभिप्रायेण **अनुन्मत्तः को ब्रवीति** इत्युक्तम्। मान्त्रवर्णिकसूत्रेऽपि, हेतुत्वानिर्देशस्य अयमेवाऽभिप्रायः (श्रु प्र) ॥

---

[सूत्रार्थः। **अस्मिन्**—'रसं ह्येवाऽयम्' इति 'रस'शब्दनिर्दिष्टे आनन्दमये, **अस्य**—'अयं'शब्दनिर्दिष्टस्य जीवस्य. **तद्योगम्**—रसपदवाच्यार्थलाभात् आनन्दलाभम्, **शास्ति च**—'लब्ध्वाऽऽनन्दी भवति' इति शास्त्रं च बोधयतीत्यतः, (आनन्दलम्भक एव आनन्दमयः, न जीवः) ॥]

जीवस्यास्मिन्निहानन्दे ह्यानन्दावाप्तिरुच्यते ।
लब्ध्वाऽऽनन्दीति शास्त्रेण ब्रह्मानन्दमयस्ततः ॥ (ब्र.प.मा. २०)

---

[1] ततश्च—क, च, ञ, वा. अतश्च—आ, इ. [2] 'ध, ध, वा' पुस्तकेषु 'आनन्दमयः इति पदं वाक्यारम्भे वर्तते। [3] अस्य च—ध, न. [4] तद्योगं शास्ति—वा [5] आनन्दो न स्यात्—वा.

इत्यादिषु, 'आनन्द'शब्देन आनन्दमय एव परामृश्यते ; [1]यथा[1] 'विज्ञान'शब्देन विज्ञानमयः। अत एव—

'आनन्दं ब्रह्मणो विद्वान्' (तै.उ.आन. 9-1)

इति व्यतिरेकनिर्देशः। [2]अत एव च,[2]

'[3]आनन्द[3]मयमात्मानमुपसङ्क्रामति' (तै.उ.आन. 8–6)

इति फलनिर्देशश्च।

उत्तरे चानुवाके पूर्वानु[4]वाकोक्तानाम् अन्न[4]मयादीनाम्,

'अन्नं ब्रह्मेति व्यजानात्' (तै.उ.भृ. 2–1)

'प्राणो ब्रह्मेति [5]व्यजानात्' (तै.उ.भृ. 3–1)

'मनो ब्रह्मेति व्यजानात्'[5] (तै.उ.भृ. 4–1)

'[6]विज्ञानं ब्रह्मेति व्यजानात्' (तै.उ.भृ. 5–1)

इति[6] प्रतिपादनात्,

'आनन्दो ब्रह्म' (तै.उ.भृ. 6–1)

इत्यपि, आनन्दमयस्यैव प्रतिपादनम्—इति विज्ञायते। [7]तत एव च[7], तत्राऽपि—

'आनन्दमयमात्मानमुपसंक्रम्य' (तै.उ.भृ. 10–5)

इत्युपसंहृतम्।

---

**यथा विज्ञानेति**। अत्र पूर्वोक्तहेतवोऽनुसन्धेयाः। स्वरूपस्य अनुकूलवेदनीयत्वात्, आनन्दशब्दो धर्मिपरः। धर्मपरत्वेऽपि, अपर्यवसानात् धर्मिपरः इति भावः। **अत एव**— आनन्दानन्दमयशब्दयोः एकविषयत्वेनैव। पूर्वानुवाके एतदनुवाकोर्ध्वभागे च मयडन्तपद-निर्दिष्टानाम्, अत्र मयड्रहितपदनिर्देशप्रकरणे आनन्दशब्देन प्रतिपादनात्, आनन्दमय एव आनन्दशब्दवाच्यः इत्यर्थः। आनन्दशब्दवाच्यस्य परमात्मत्वं हि पराङ्गीकृतम्।

**'तद्धेतुव्यपदेशाच्च, अस्मिन्नस्य च तद्योगं शास्ति'** इति सूत्रयोः इयं भिदा— पूर्वत्र सामान्येन समस्तसुखहेतुत्वम्, उत्तरत्र मोक्षहेतुत्वं चोक्तमिति [यदि] तदा 'को ह्येवाऽन्यात् कः प्राण्यात्' इत्यत्र 'अन्यात्, प्राण्यात्' इति पदाभ्यां सत्ताहेतुत्वं, सुखहेतुत्वं चोक्तं भवति (श्रु.प्र)।

---

[1] यदा—द. [2] अत एव—वा. [3] एतमानन्द—वा. [4] वाकोक्तान्न—द.
[5] व्यजानात्—द. [6] इति—ध. [7] तत एव—ध, न. अत एव च—इ, ट.

**अतः 'प्रधान'शब्दाभिलप्यात् अर्थान्तरभूतस्य [1]परस्य ब्रह्मणः[1], 'जीव'शब्दाभिलपनीयादपि वस्तुनः अर्थान्तरत्वं सिद्धम् ॥२०॥**

**॥ इति आनन्दमयाधिकरणम् ॥६॥**

---

[अतः इत्यादिना अधिकरणार्थोपसंहारः ।]

[पूर्वपक्षे—] आनन्दमयस्य प्रत्यगात्माव्यतिरिक्तत्वे हेतवः—1) जीवसामानाधिकरण्यम्, 2) शरीरसम्बन्धः, 3) शोध्यत्वम्, 4) विकारश्रवणम्, 5) प्राप्यत्वानन्त्यादीनाम् अवस्थाभेदेनोपपत्तिः, 6) ज्ञानस्वरूपत्व-वाङ्मनसनिवृत्त्यभिधानरूपार्थगुणनिषेधश्च ।

सिद्धान्तहेतवः—1) स्वतःसिद्धनिरतिशयदशाशिरस्कानन्दाभ्यासः, 2) आनन्दयितृत्वम्, 3) भयाभयहेतुत्वम्, 4) समस्तप्रशासितृत्वम्, 5) प्राप्यत्वम्, 6) निरुपाधिकविपश्चित्त्वम्, 7) बद्धमुक्तयोरसम्भावितम् आकाशादिसमस्तजगत्कारणत्वम्, 8) बद्धदशायामेव विज्ञानमयाज्जीवात् भेदव्यपदेशः, 9) करण-कलेबराद्यनपेक्षसत्यसङ्कल्पत्वम्, 10) मुक्तानां निरतिशयभोग्यत्वं च ।

पूर्वपक्षयुक्तिपरिहारहेतवः—1) शरीर-शरीरिभावः, 2) तस्य निरुपाधिकत्वम्, प्रसाद्यत्वम्, प्राचुर्यसम्भवः, बद्धदशायामेव भेदव्यपदेशस्य अवस्थाभेदेन निर्वाहानुपपत्तिः, प्रभा-प्रभावन्न्यायेन स्वरूपतो धर्मतश्च ज्ञानत्वोपपत्तिः, वाङ्मनसनिवृत्तेः इयत्ताराहित्यनिबन्धनत्वं च ॥२०॥

[सूत्राणि—1. आनन्द 2. विकार 3. तद्धेतु 4. मान्त्र, 5. नेतरो, 6. भेद, 7. कामाच्च 8. अस्मिन्]

॥ इति आनन्दमयाधिकरणम् ॥६॥

---

[1] ब्रह्मणः—इ.

[आनन्दमयाधिकरणशेषभूतम्]

## अन्तरधिकरणम् ॥ १-१-७ ॥ (सू. 21, 22)

[अधिकरणार्थः—अक्ष्यादित्यान्तर्वर्तित्वेनोपास्यत्वमपि न जीवविशेषस्य ; किन्तु परमात्मन एव ।]

[अन्तरादित्यविद्या, अन्तरक्षिविद्या च (छां.उ. 1–6, 7)]

[अवान्तरसङ्गतिप्रदर्शनम्]

'[1]यद्यपि[1], मन्दपुण्यानां जीवानां, कामात् जगत्सृष्टिः, अतिशयितानन्दयोगः, भयाभय[2]हेतुत्वम्[2] [3]इत्यादि[3] न [4]सम्भवति[4] ; तथाऽपि, विलक्षणपुण्यानाम् [5]आदित्येन्द्र[5]प्रजापतिप्रभृतीनां सम्भवत्येव' इतीमाम् आशङ्कां निराकरोति ;

## अन्तस्तद्धर्मोपदेशात् ॥ १-१-२१ ॥

[विषयवाक्यप्रदर्शनम्]

इदमाम्नायते छान्दोग्ये—

'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुः हिरण्यकेशः आप्रणखात् सर्व एव सुवर्णः' (छां.उ. 1–6–6)

---

यद्यपीति। पूर्वाधिकरणे शरीरमात्रेण सम्बन्धमात्रश्रवणादुत्थितायां जीवत्वशङ्कायां निरस्तायां, पुनः करचरणादिसंस्थानकदेहविशेषेण उपकरणोपकरणित्वलक्षणसम्बन्धविशेषावगमेन जीवत्वशङ्का स्यादिति, तन्निरासार्थम् आनन्दमयाधिकरणशेषत्वेन एतदधिकरणारम्भः—इत्ययमर्थः, यद्यपीत्यादिसङ्गतिग्रन्थे अभिप्रेतः ॥

य एष इति, प्रसिद्धवन्निर्देशात् न अनुवादरूपता शङ्क्या ; अस्य अर्थस्य प्रमाणान्तराप्राप्तत्वात् । 'यदाग्नेयोऽष्टाकपालः' (तै. सं. 2–6–3) इतिवत् । आदित्यशब्दः

---

[सूत्रार्थः । अन्तः—अक्ष्यादित्ययोरन्तर्वर्तितया श्रुतिप्रतिपाद्यः पुरुषः, (अन्यः—जीवाद्भिन्नः परमात्मैव,) तद्धर्मोपदेशात्—परमात्मासाधारणानाम् अपहतपाप्मत्वादिधर्माणाम्, 'स एष सर्वेभ्यः पाप्मभ्य उदितः' इति श्रुतौ ज्ञापनात् ।]

आदित्येऽक्षिणि योऽन्तस्स्यात् परमात्मा हिरण्मयः ।
सर्वपाप्मोदितत्वादितद्धर्माणामिहेरणात् ॥ (ब्र.प.मा. २१)

---

1 यदपि—आ. 2 हेतुसिद्धम्—इ. 3 इत्यादीनि—आ. 4 सम्भवन्ति—आ.
5 आदित्येन्द्रचन्द्र—ध.

**'तस्य यथा कप्यासं पुण्डरीकम्, एवमक्षिणी, तस्य 'उत्' इति नाम ।
स एष सर्वेभ्यः पाप्मभ्य उदितः । उदेति ह वै सर्वेभ्यः
पाप्मभ्यः, य एवं वेद'** (छां.उ. 1-6-8)

**'तस्य [1]ऋक् च[1] साम च गेष्णौ....इत्यधिदैवतम्'** (छां.उ. 1-6-7)

**[2]अथाऽध्यात्मम्[2] . . . .'**

**'... अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते, सैव ऋक्, [3]तत् साम,[3] तदुक्थम्,
तद्यजुः तद्ब्रह्म । [4]तस्यैतस्य[4] [5]तदेव[5] रूपम्, यत् अमुष्य रूपम् ।
यावमुष्य गेष्णौ, तौ गेष्णौ । यन्नाम तन्नाम'** (छां.उ. 1-7-1, 5)

इति ॥

---

'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' (पा.सू. 4-1-85) इति ण्यप्रत्ययान्तः मण्डलवाची । बृहदारण्यके, तैत्तिरीयके च पुरुषस्य मण्डलवर्तित्वश्रवणात् । **हिरण्मय**शब्दः रमणीयत्वपरः । 'हिरण्मयः इति रूपसामान्यात्, चन्द्रमुखवत्' इति हि वाक्यकारः । **दृश्यते** योगिभिः इत्यर्थः; 'दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' (कठ.उ. 3-12) इति श्रुत्यैकार्थ्यात् । **तस्य यथा कप्यासमिति** । कं पिबति इति, **कपिः**—आदित्यः । तेन अस्यते-क्षिप्यते—विकास्यते इति **कप्यासम्** । तथाऽऽह वाक्यकारः 'आदित्यक्षिप्तं वा श्रीमत्त्वात्' इति । कं पिबति इति **कपिः**—नालम् । तस्मिन् अस्तीति **कप्यासम्** । अपच्छिन्नादपि पङ्कजात् नालस्थपुण्डरीकस्य शोभातिशयोऽस्तीति, सः अत्र विवक्षितः । कम्—जलम् । 'आस-उपवेशने' (पा.धा.पा. 1021) इति धातुः अपिपूर्वकः । 'वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः' (सि.कौ. सू. 452) इति वचनात् अपेः अकारलोपः । **कप्यासम्**—सलिलस्थम् इत्युक्तं भवति । एवम् अस्य अर्थत्रयस्य उपपन्नतया वाक्यकारेण सिद्धान्ततयोक्तत्वमभिप्रेत्य हि भगवता भाष्यकारेण वेदार्थसङ्ग्रहेऽभिहितम्—' गम्भीराम्भःसमुद्भूत-सुमृष्टनाल-रविकरविकसितपुण्डरीकदलामलायतेक्षणः' इति । **गेष्णौ**—गानविशेषौ । **अधिदैवतम्**—देवतायामुपासनम् । **अध्यात्मम्**—आत्मन्युपासनम् । **अध्यात्म**शब्दः देहवचनः । **अमुष्य**—आदित्यस्थस्य । 'आदित्ये तद्धर्मोपदेशात्' इति वा, 'अक्षिणि तद्धर्मोपदेशात्' इति वा न सूत्रितम् । अपि तु **अन्तः**शब्दः सूत्रकारेण प्रयुक्तः । **अन्तः**शब्दस्य 'अन्तरादित्ये' 'अन्तरक्षिणी'त्युभयत्र श्रवणात् विद्याद्वितयमपि सङ्गृहीतम् इत्यभिप्रायेण 'अक्षिविद्या'वाक्यमपि उदाहृतम् (श्रु.प्र) ॥

---

[1] ऋक—ध. [2] अथाध्यात्ममपि—वा. [3] तत् साम च—वा. [4] तस्य—थ.
[5] एतदेव—ध.

[संशयस्वरूपम्]

तत्र सन्दिह्यते; किमयम्—अक्ष्यादित्य[1]मण्डलान्तर्वर्ती[1] पुरुषः, पुण्योपचयनिमित्तैश्वर्यः आदित्यादिशब्दाभिलप्यो जीव [2]एव[2]? आहोस्वित् तदतिरिक्तः परमात्मा?—इति॥

[पूर्वपक्षः]

किं युक्तम्?

उपचित[3]पुण्यः[3] जीव एव—इति॥

[पूर्वपक्षे युक्तिः]

कुतः?

[4]सशरीरत्व[4]श्रवणात्। शरीरसम्बन्धो हि जीवानामेव सम्भवति। कर्मा-

---

सन्दिह्यत इति। शरीरसम्बन्धापहतपाप्मत्वादियोगात् संशयः। आदित्यादीति, आदिशब्दः यत्र यत्र प्रकरणेषु करणकलेबरावस्थशरीरसम्बन्धेन जीवत्वशङ्का, तेषां प्रकरणानां सर्वेषां परमात्मपरत्वस्य प्रदर्शनार्थम् अयम् अधिकरणारम्भः—इत्यभिप्रायेण प्रयुक्तः। अत एव 'हिरण्यगर्भादिजीवेभ्योऽन्यः' इति अधिकरणोपसंहारे, मध्येऽपि 'आदित्यजीवव्यतिरिक्तः' इति चोक्तम्।

[संशयस्वरूपं तावत्—]वेदान्तवेद्यं कारणं ब्रह्म किं प्रकृष्टपुण्यो जीवः? उत न?—इति विचारः। तदर्थम् आनन्दमयः किं जीवः, उत परमात्मा?—इति। तदर्थम् अन्तरादित्ये अन्तरक्षिणि च वर्तमानः किं जीवः, उत परमात्मा?—इति। तदर्थं सशरीरत्वं जीवस्यैव, उत परमात्मनोऽपि सम्भवति?—इति। तदर्थं शरीरसम्बन्धस्यैच्छत्वं सम्भवति, न?—इति। तदर्थं पाप्मोदितत्वादिश्रुतिः 'अजायमानः' इत्यादिश्रुतिः आदित्यवर्णत्वादिश्रुतिश्च किम् ऐच्छत्वं ज्ञापयति, न?—इति। तदर्थमिह पाप्मशब्दः किं पापमात्रपरः? उत पुण्य-पापरूपकर्मपरः? अपहतशब्दः प्रध्वंसपरः, उत अत्यन्ताभावपरः? अजत्वादिश्रुतिः किं कर्मकृतजन्मविषयतया व्यवस्थापयितुं शक्यते, न?—इति। आदित्यवर्णत्वादिश्रुतिः विग्रहस्य

---

[1] मण्डलान्तर्वर्ति—थ. मण्डलान्तरवर्ती—ध. [2] एव एषः—न. [3] पुण्यविशेषः—थ.
[4] सशरीर—द.

[1]नुगुण[1]प्रियाप्रिय[2]योगाय[2] हि शरीरसम्बन्धः। अत एव हि कर्मसम्बन्धरहितस्य [3]मोक्षस्य प्राप्यत्वम्[3] अशरीरत्वेनोच्यते —

'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति ।

अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ॥' (छां.उ. 8-12-1)

इति। सम्भवति च पुण्यातिशयात् ज्ञानाधिक्यं, शक्त्याधिक्यं च। अत एव लोककामेशत्वादि तस्यैव उपपद्यते। [4]तत एव च[4] उपास्यत्वं, [5]फलदायित्वं[5], [6]पापक्षपण[6]करत्वेन मोक्षोपयोगित्वं च।

मनुष्येष्वपि उपचितपुण्याः केचित्, ज्ञान-शक्त्यादिभिः अधिकतराः दृश्यन्ते। ततश्च सिद्ध-गन्धर्वादयः। ततश्च देवाः। ततश्च इन्द्रादयः। अतः ब्रह्मादिषु अन्यतम

---

प्रकृतिप्राकृतविलक्षणत्वज्ञापिका, न वा ?—इति चतुर्धा संशयः। अत्र पूर्वे कल्पाः पूर्वपक्षाः, अपरे तु सिद्धान्ताः ॥

**पूर्वपक्षे फलफलिभावः** — [पाप्मभ्य उदितः इत्यत्र] **पाप्म**शब्दः यदा पापमात्रपरः अपहतिः प्रध्वंसः, जन्मनिषेधश्च न कर्ममूलजन्मविषयः, विग्रहश्च न प्राकृतविलक्षणः ; तदानीं विग्रहसम्बन्धस्य इच्छामात्रमूलत्वासम्भवेन कर्मनिबन्धनतया, परस्मिन् असम्भवेन, जीवासाधारण्यात् आदित्यादिवर्ती पुरुषः जीव इति, अन्तरादित्यवाक्यैकार्थ्यात्, आनन्दवल्लीवाक्येऽपि जीवस्य प्रतिपाद्यत्वात्, सर्वाणि कारणवाक्यानि प्रकृष्टपुण्योपचयजीवपराणि—इति।

**सिद्धान्ते फलफलिभावः**—यदा पाप्मशब्दः कर्ममात्रपरः, अपहतशब्दः अत्यन्ताभावपरः, जन्मनिषेधश्च कर्ममूलजन्मविषयः, विग्रहश्च प्राकृतविलक्षणः ; तदानीं विग्रहस्य ऐच्छतया, तस्य जीवात् परस्मिन् सम्भवाच्च, अक्ष्यादित्यान्तर्वर्ती पुरुषः परः इति, तदैकार्थ्यात् आनन्दवल्लीप्रतिपाद्यस्य परमात्मत्वम् अविचाल्यमिति, तदैककण्ठ्यात्, सर्वाणि कारणवाक्यानि परमात्मपराणि— इति।

**अत एवेति।** शरीरसम्बन्धस्य कर्ममूलप्रियाप्रिययोगार्थत्वादेव हि कर्मसम्बन्धरहितो मोक्षः अशरीरतया प्राप्यत्वेनोच्यते इत्यर्थः।

**मनुष्येष्वपीति।** अत्र 'स एको मानुष आनन्दः' इत्यादि अभिप्रेतम्। **उपचितपुण्येति।** अपहतपाप्मत्वादिश्रुतयः न अकर्मवश्यतां वदन्ति ; अपि तु केवलपुण्यहेतुकशरीरवतः

---

[1] नुगुण्य—इ. [2] योगायत्तः—ष. [3] प्राप्यत्वम्—इ. [4] अत एव च—ध. तत एव — आ, थ. [5] फलदायित्वं च—आ, इ, ई, छ, ध, न. [6] पापक्षय—ध.

एव, एकैकस्मिन् कल्पे [1]पुण्यविशेषेण[1] [2]एवम्भूतमैश्वर्यं[2] प्राप्तः, जगत्सृष्ट्याद्यपि करोति इति, जगत्कारणत्व-जगदन्तरात्मत्वादिवाक्यम्, अस्मिन्नेव उपचितपुण्यविशेषे सर्वज्ञे सर्वशक्तौ वर्तते। अतः [3]न जीवात् अतिरिक्तः[3] परमात्मा नाम कश्चिदस्ति। एवं च सति,

'अस्थूलम् अनण्वह्रस्वम्' (बृ.उ. 5-8-7)

इत्यादयः [4]जीवात्मनः[4] स्वरूपाभिप्रायाः भवन्ति। [5]मोक्षशास्त्राण्यपि[5] तत्स्वरूपतत्प्राप्त्युपायोपदेशपराणि—इति.

[सिद्धान्तः सयुक्तिकः]

एवं प्राप्ते, अभिधीयते—अन्तस्तद्धर्मोपदेशात्।

[तत्र सूत्राक्षरार्थवर्णनम्]

अन्तरादित्ये, अन्तरक्षिणि च यः पुरुषः प्रतीयते, सः जीवादन्यः परमात्मैव।

कुतः ?

तद्धर्मोपदेशात्। जीवेषु असम्भवन् तदतिरिक्तस्यैव परमात्मनः धर्मोऽयम् अपहतपाप्मत्वादिः,

---

पापराहित्यम्। शरीरं त्रिविधम्—पापहेतुकं, पुण्यहेतुकं, मिश्रहेतुकं चेति, इत्यभिप्रायः। **मोक्षशास्त्राणि,** उपायपराणि उपेयपराणि च ॥

**अन्तरादित्ये** इति, सौत्रं प्रतिज्ञापरं अन्तःशब्दं व्याचष्टे। **सः जीवादन्य** इति, [भेदव्यपदेशाच्चाऽन्यः इति] द्वितीयसूत्रस्थान्यशब्दान्वयलब्धं साध्यधर्ममाह। **परमात्मैवेति,** तेन फलितमाह (श्रु प्र) ॥

**तद्धर्मेति।** तच्छब्दः परमात्मपरः। **जीवेष्विति।** जीवेषु असम्भवन् अयं धर्मः, जीवातिरिक्तस्वाश्रयप्रतिपादकत्वं श्रुतेः निश्चाययति। योग्यतापरामर्शसहकृता इयं श्रुतिः, परमात्मानमभिधत्ते इत्यर्थः। [अतः] परमात्मनि सिद्धे, तद्धर्मोपदेशः; तद्धर्मोपदेशात्, परमात्मत्वसिद्धिः इति परस्पराश्रयशङ्कायाः [नाऽवकाशः]। **अपहतेति।** **अपहतपाप्मशब्दप्रयोगः** श्रुत्यन्तरस्मारणार्थः। **पाप्मशब्दः** पुण्य-पापरूपोभयविधकर्मपरः इत्यर्थः। **हिशब्दः**

---

[1] उपचितपुण्यविशेषेण—थ, पुण्यविशेषेणैव—वा. [2] प्रभूतमैश्वर्यं—वा, एवं प्रभूतमैश्वर्यं—ध. [3] जीवान्नातिरिक्तः—थ, जीवादनतिरिक्तः—द, न जीवातिरिक्तः—वा. [4] जीवात्मन एव—ध, न. [5] मोक्षशास्त्राणि—द

'स एष सर्वेभ्यः पाप्मभ्य उदितः' (छां.उ. 1-6-7)

इत्यादिना उपदिश्यते । अपहतपाप्मत्वं हि [1]अपहत[1]कर्मत्वं—कर्मवश्यतागन्धरहितत्वम् इत्यर्थः । कर्माधीनसुख-दुःखभागित्वेन कर्मवश्या हि जीवाः । अतः अपहतपाप्मत्वं जीवादन्यस्य परमात्मन एव धर्मः । तत्पूर्वकं स्वरूपोपाधिकं [2]लोककामेशत्वं[2], सत्यसङ्कल्पत्वादिकं, सर्वभूतान्तरात्मत्वं च [3]तस्यैव[3] धर्मः । यथाऽऽह—

'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः' (छां.उ. 8-1-5)

इति । तथा,

'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' (सुबा.उ. 7)

इति ।

'सोऽकामयत । बहु स्यां प्रजायेयेति' (तै.उ.आन. 6-2)

[4]इत्यादि[4]सत्यसङ्कल्पत्वपूर्वकसमस्तचिदचिद्वस्तुसृष्टियोगः, निरुपाधिकभयाभयहेतुत्वम्, वाङ्मनसपरिमिति[5]कृतपरिच्छेदरहिता[5]नवधिकातिशयानन्दयोगः इत्यादयः अकर्मसंपाद्याः स्वाभाविकाः धर्माः जीवस्य न सम्भवन्ति ॥

---

परमात्मप्रकरणेषु पापशब्दस्य पुण्यपापपरत्वप्रसिद्धिं सूचयति । अलौकिकत्वे सति अनिष्टफलसाधनत्वरूपप्रवृत्तिनिमित्तयोगात् उपपन्नं च पुण्यस्याऽपि पापशब्दाभिधेयत्वम् । **अपहतपाप्मशब्दः** असङ्कोचात्, स्वस्मिन् परत्र च पाप्मनामपघातकत्वं स्वतःसिद्धं वदतीति [परमात्मनः] हेयप्रत्यनीकत्वसिद्धिः । **तत्पूर्वकमित्यादि** । अपहतपाप्मत्वपूर्वकत्वात् स्वाभाविकमित्यर्थः । एवं प्रसिद्धाप्रसिद्धयोः अर्थयोः एकनिमित्तसम्भवे, प्रसिद्धवाचिना एकेनैव शब्देन उपादानार्हत्वं इह व्युत्पादितम् ।

आदित्यान्तर्वर्तिनः अपहतपाप्मत्वगुणयोगेन आनन्दवल्ली-दहरविद्या-सुबालोपनिषत्प्रतिपाद्यस्य इह प्रत्यभिज्ञानात्, तत्र तत्रोक्ताः गुणाः अपि, अस्यैव हिरण्मयपुरुषस्य धर्माः इत्यभिप्रायेण **सत्यसङ्कल्पत्वादिकं सर्वभूतान्तरात्मत्वं च** उक्तम् ।

**एष आत्मेति,** अपहतपाप्मत्वपूर्वकसत्यसङ्कल्पत्वादौ श्रुतिः । **एष सर्वेति,** तत्पूर्वकसर्वभूतान्तरात्मत्वे श्रुतिः (श्रु.प्र) ।

**सोऽकामयतेति** । जगत्कारणत्वमेव वेदान्तवेद्यस्य ब्रह्मणो लक्षणम् । कारणं चेत्

---

[1] अपगत—अ. [2] मोहरहितत्वम्—द. [3] अस्यैव—ध. [4] इत्यादिना—द
[5] कृतिपरिच्छेदरहिता—ध, श्रुतपरिच्छेदरहिता—द, कृतपरिच्छेदरहितता—ध.

[पूर्वपक्षस्य सयुक्तिकः निरासः]

यत्तु—शरीरसम्बन्धात्, न [1]जीवातिरिक्तः[1]—इत्युक्तम्,

[2]तदसत्[2] ; न हि [3]सशरीरत्वं[3] कर्मवश्यतां साधयति ; सत्यसङ्कल्पस्य इच्छयाऽपि शरीरसम्बन्धसम्भवात्।

अथोच्येत—शरीरं नाम त्रिगुणात्मकप्रकृतिपरिणामरूपभूतसङ्घातः। तत्सम्बन्धश्च, अपहतपाप्मनः सत्यसङ्कल्पस्य पुरुषस्य, [4]इच्छया[4] न सम्भवति ; अपुरुषार्थत्वात्। कर्मवश्यस्य तु [5]स्वस्वरूपा[5]नभिज्ञस्य, कर्मानुगुण[6]फलोपभोगाय[6], अनिच्छतोऽपि तत्सम्बन्धः अवर्जनीयः—इति,

[भगवतः अकर्मवश्यस्याऽपि देहसम्बन्धः]

[7]स्यादेतदेवम्[7] ; यदि [8]गुणत्रयमयः[8] प्राकृतः अस्य देहः स्यात्! स तु [9]स्वाभिमतः स्वानुरूपः[9] अप्राकृत एवेति, सर्वमुपपन्नम्।

एतदुक्तं भवति—परस्यैव ब्रह्मणः निखिलहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपतया सकलेतरविलक्षणस्य, स्वाभाविकानवधिकातिशयासंख्येयकल्याण[10]गुणगणाश्च[10] सन्ति।

---

सत्यसङ्कल्पम्, सत्यसङ्कल्पत्वं चेत्, अपहतपाप्मत्वपूर्वकम्। तच्च नारायणत्वप्रत्यभिज्ञापकं ; सुबालोपनिषदैकार्थ्यात् इति भावः।

**न हीति**। शास्त्रैकप्रमाणके वस्तुनि लोकदृष्टव्याप्तिमूलस्तर्कः न कर्मवश्यत्वसाधकः इत्यभिप्रायः। **सत्यसङ्कल्पस्येति,** अन्यथासिद्धिमाह।

**त्रिगुणात्मकशब्दः** हेयत्वसूचकः। 'सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः। गुरु वरणकमेव तमः' (सां.का. 13) इत्युक्तेः। **स्वस्वरूपानभिज्ञस्येति,** कर्माचरणहेतुः (श्रु.प्र) ॥

**एतदुक्तमित्यारम्भः,** स्वतस्सर्वज्ञस्य सर्वशक्तेः ज्ञानार्थं प्रवृत्त्यर्थं च करणानपेक्षत्वात्, न देहापेक्षा। रूपादिमत्त्वे च, प्राकृतत्वं स्यात्। नित्यत्वे च, अनित्यबह्ववतारासम्भवः। तिर्यगादिरूपपरिग्रहे 'वाचिकैः पक्षिमृगताम्' (म.स्मृ. 12-9) इत्यादिप्रकारेण तन्मूलकर्मसम्बन्धः स्यात्, इति शङ्कापरिहारार्थम्। **परस्यैवेति**। यथा—परस्य ब्रह्मणः धर्मिस्वरूपं, स्वाभाविकाः

---

[1] जीवादतिरिक्तः—श्रा. [2] तदयुक्तम्—इ, वं. [3] शरीरत्वं—ध. [4] इच्छयाऽपि—थ. [5] स्वरूपा—ध. [6] फलभोगाय—इ. [7] स्यादेवम्—ट. [8] त्रिगुणमयः—वा. [9] स्वाभिमतस्वानुरूपः—ध. [10] गुणाश्च—थ.

तद्वदेव [1]स्वाभिमतानुरूपैक[1]रूपाचिन्त्यदिव्याद्भुतनित्यनिरवद्यनिरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्यलावण्ययौवना[2]द्यनन्तगुणगणनिधि[2]दिव्यरूपमपि स्वाभाविकम् अस्ति ।

तदेव उपासकानुग्रहेण, तत्तत्प्रतिपत्त्यनुरूपसंस्थानं [3]करोति[3], अपारकारुण्यसौशील्यवात्सल्यौ[4]दार्यैश्वर्यजलनिधिः[4] निरस्तनिखिलहेयगन्धः अपहतपाप्मा परमात्मा परं ब्रह्म पुरुषोत्तमो नारायणः—इति ॥

---

गुणाश्च प्रामाणिकत्वात् अङ्गीक्रियन्ते ; तथा विलक्षणं शरीरम् अभ्युपगन्तव्यम् इत्यभिप्रायः । **स्वाभिमतेति** । करणानपेक्षज्ञानक्रियस्याऽपि परस्य भोगार्थो विग्रहः । निरतिशयानन्दस्याऽपि तस्य प्रीतिविशेषापेक्षा घटते ; प्रभूतानन्दानामपि आनन्दान्तरापेक्षादर्शनात् इति भावः । **एकरूपेति** : हेयप्रतिभटत्वमङ्गलाकारत्वाद्याकारेण ऐकरूप्यम् । **अचिन्त्येति,** '[भगवद्रूपमपि] दुःखावहम् ; शरीरत्वात्, अस्मदादिशरीरवत्' इत्यादितर्कागोचरत्वाभिप्रायेण । **दिव्येति,** अचिन्त्यत्वे हेतुः । अनेन **दिव्य**शब्देन विलक्षणद्रव्यत्वमुक्तम् । रूपादिमत्त्वात् प्राकृतत्वं धर्मिग्राहकमानबाधितमिति भावः । द्वितीयेन **दिव्य**शब्देन विलक्षणसन्निवेशत्वम् । यथा— 'तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत्' (वि.पु. 6-7-70) इति । **अद्भुतत्वम्**—प्रतिक्षणमभिनवत्वम् । **नित्येति** । सावयवत्वात् अनित्यम् इत्याद्यनुमानं धर्मिग्राहकप्रमाणबाधितम् इति भावः । **निरवद्य**शब्दः, कल्याणाकरत्वेऽपि हेयमिश्रत्वशङ्काव्युदासार्थः । **निरतिशयाः** वक्ष्यमाणसर्वगुणाः । **आदि**शब्देन, पराक्रमादयो विवक्षिताः ।

**तदेव**—अप्रच्युतसन्निवेशमेव । संस्थानशैथिल्येऽपि देवाद्यनेकदेहोत्पादकत्वं चतुर्मुखदेहे दृष्टं, परमात्मविग्रहे युज्यते इति भावः । **अपारेति,** उपासकानुग्रहोपयुक्ताः गुणाः उच्यन्ते । **कारुण्यम्**—परदुःखासहिष्णुत्वम् । **सौशील्यम्**—महतः मन्दैः सह नीरन्ध्रसंश्लेषः । **वात्सल्यम्**—दोषानादरहेतुः स्नेहः ; यथा मातुः पुत्रे । **औदार्यम्**—दातृप्रतिग्रहीतृविभागबुद्धिरहितं दातृत्वम् । एते सौलभ्योपयुक्ताः गुणाः । **निरस्ते**त्यादिना परत्वमुच्यते । परत्वसौलभ्ये उभे अपि उपास्यत्वोपयोगिनी । [अनेन] मनुष्यादिसाजात्येऽपि तत्प्रयुक्तशोकमोहाद्यस्पृष्टत्वमभिप्रेतम् । जीवानुप्रवेशेषु शोकादयो जीवांशगताः । साक्षादवतारेष्वभिनयमात्रम् । **निखिलेति** । चिदचिद्गताः इत्यर्थः । **परमात्म**शब्दः, अर्वाचीनात्मव्यावृत्त्यर्थः । तत्समानाधिकृतः **परब्रह्म**शब्दः प्रधानव्यावृत्त्यर्थः । **पुरुषोत्तम**शब्दः वैलक्षण्यपरः । **नारायण-**

---

[1] स्वभाविकस्वस्वरूपैक—द.　[2] द्यनन्तकल्याणगुणगणनिधि—वा, द्यनन्तगुणनिधि—अ, ट.
[3] करोतीति—इ, छ.　[4] दार्यजलधिः—इ, ध, दार्यजलनिधिः—थ.

[उक्तेऽर्थे प्रमाणानि]

'यतो वा इमानि भूतानि जायन्ते' (तै.उ.भृ. 1–2)

'सदेव सोम्येदमग्र आसीत्' (छां.उ. 6–2–1)

'आत्मा वा इदमेक एवाऽग्र आसीत्' (ऐत.उ. 1–1)

'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः' (महो. 1–1)

इत्यादिषु, निखिलजगदेककारणतया अवगतस्य परस्य ब्रह्मणः,

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.आन. 1–1)

'विज्ञानमानन्दं ब्रह्म' (बृ.उ. 5–9–28)

इत्यादिषु [1]एवम्भूतं[1] स्वरूपमिति अवगम्यते ।

'निर्गुणः' (श्वे.उ. 6–11)

'निरञ्जनम्' (श्वे.उ. 6–19)

'[2]अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः[2]
सत्यकामः सत्यसङ्कल्पः' (छां.उ. 8–1–5)

'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।
पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥' (श्वे.उ. 6-8)

'तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्' (श्वे.उ. 6-7)

'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाऽधिपः' (श्वे.उ.6-9)

'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते '
(तै.आर.पु. 3-12-16)

'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्' (तै.आर.पु. 3–13–2)

---

शब्दः [सामान्यविशेषयोः एकविषयत्व]घटकः । यथा परमात्मपरब्रह्मेति, पुरुषोत्तम-नारायणेति च सामान्यविशेषशब्दौ एकविषयौ, तथा सामान्यविशेषशब्दाः एकविषयाः इति भावः (श्रु.प्र) ॥

**यतो** वा इत्यादिभिश्चतुर्भिः जगत्कारणत्वविषयस्य, **सत्यं ज्ञानमिति** द्वाभ्यां धर्मिविषयस्य च प्रमाणस्योपन्यासः दृष्टान्तार्थः । **निर्गुणः** इत्यादिना गुणविभागकथनं वादिविवादशमनार्थं दृष्टान्तार्थं च ।

---

[1] एवंरूपं—द. [2] अपहतपाप्मा—थ.

'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि' (तै.ना.उ. 1–8)

इत्यादिषु परस्य ब्रह्मणः प्राकृतहेयगुणान्, प्राकृतहेयदेहसम्बन्धम्, तन्मूलकर्मवश्यता-[1]सम्बन्धं[1] च प्रतिषिध्य, कल्याण[2]गुणान्[2] कल्याणरूपं च वदन्ति ।

तदिदं स्वाभाविकमेव रूपम्, उपासकानुग्रहेण [3]तत्प्रतिपत्त्यनु[3]गुणाकारं देव-मनुष्यादिसंस्थानं करोति स्वेच्छयैव परमकारुणिको भगवान् । तदिदमाह श्रुतिः—

'अजायमानो बहुधा विजायते' (तै.आर.पु. 3–13–3)

इति । स्मृतिश्च—

'अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्म[4]मायया[4] ॥' (भ.गी. .-6)
'परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।' (भ.गी. 4-8)

---

**विद्युतः**—विद्युद्वर्णात् [इत्यर्थः] । 'आदित्यवर्णम्' 'रुक्मवर्णम्' इति वाक्यसरूपार्थ-स्वीकारस्य उचितत्वात् । आदित्यवर्णो विग्रहश्च न प्राकृतः ; 'तमसः परस्तात्' इति श्रुतेः । अतिसूक्ष्मा प्रकृतिर्हि ! तमः । अतः तत्कार्यवैलक्षण्यसिद्धिः । अन्यथा [भगवतः] स्वरूपस्य तमसोऽन्यत्वकथनं स्यात्; तदानीं 'परस्तात्' इति अस्तातिप्रत्ययस्य, आदित्यवर्णतोक्तेश्च वैयर्थ्यं स्यात् । अतः विग्रहविशिष्टस्यैव तमःस्पर्शाभावोक्तिरिति, विग्रहवैलक्षण्यसिद्धिः । **प्राकृतहेये**त्यादि । अनेन—क्वचित् सतो हि क्वचिन्निषेधः । अतः निषेध्यहेयगुणानां प्रकृति-तत्संश्लिष्टजीवेषु विद्यमानत्वं प्राकृतेत्यादिशब्देन दर्शितम् । विग्रहविशेषविधानदर्शनात्, विग्रहसामान्यनिषेधः तद्व्यतिरिक्तविषयः ; 'न हिंस्यात्' इतिवत्, 'निर्गुणम्' इतिवच्च । विशेष-निषेधदर्शनात्, देहसामान्यनिषेधः विशेषे पर्यवस्यति ; 'पशुना यजेत' इति पशुशब्दवत्, 'निर्गुण'शब्दवच्च इति तात्पर्यम् ।

**परमकारुणिक** इति । देवादिसाजात्यं न कर्मनिबन्धनम् ; उपासकानुग्रहार्थत्वात् इत्यर्थः । **अजायमान** इति, कर्महेतुकसुखाद्यर्थप्राकृतदेहसङ्गतिरूपजन्मनिषेधः । **बहुधा विजायते** इति च, इच्छाहेतुकजगद्रक्षणार्थाप्राकृतदेहसङ्गतिरूपजन्मविधिः । अस्याः श्रुतेः अवतारपरत्वम् अभ्युपगन्तव्यम् ; तथा सत्येव 'अजोऽपि सन्' इत्याद्युपबृंहणैकार्थ्यं सिध्येत् ।

---

[1] गन्धं—द  [2] गुणगणान्—क्ष  [3] तत्प्रतिपत्त्यानु—थ.
[4] मायया । इति—न.

इति । साधवो हि उपासकाः । तत्परित्राणमेव उद्देश्यम् । [1]आनुषङ्गिकस्तु[1] दुष्कृतां विनाशः ; सङ्कल्पमात्रेणाऽपि तदुपपत्तेः । 'प्रकृतिं स्वा'मिति । प्रकृतिः—स्वभावः । [2]स्वमेव[2] स्वभावमास्थाय ; न संसारिणां स्वभावम् इत्यर्थः । आत्ममाययेति । [3]स्वसङ्कल्परूपेण[3] ज्ञानेन इत्यर्थः ।

'*माया वयुनं ज्ञानम्' (या.नि. 3-9) (वेदनिघण्टुः धर्मवर्गः श्लो. 12)

इति, ज्ञानपर्यायमपि 'माया'शब्दं नैघण्टुकाः अधीयते । आह च भगवान् पराशरः—

'समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः ।
[4]तद्विश्वरूप[4]वैरूप्यं रूपमन्यद्धरेर्महत् ॥' (वि.पु. 6-7-70)
'समस्तशक्तिरूपाणि तत् करोति जनेश्वर ।
देवतिर्यङ्मनुष्याख्या चेष्टावन्ति स्वलीलया ॥' (वि.पु. 6-7-71)
'जगतामुपकाराय न सा कर्मनिमित्तजा ।' (वि.पु. 6-7-72)

[5]इति[5] । महाभारते[6]च अवतार[6]रूपस्याऽपि अप्राकृतत्वमुच्यते —

'न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः' (म.भा.शा. 206-60)

इति । अतः परस्यैव ब्रह्मणः एवंरूपवत्त्वात्, अयमपि तस्यैव धर्मः । अतः आदित्यमण्डलाक्ष्यधिकरणः, आदित्यादिजीवव्यतिरिक्तः परमात्मैव ॥२१॥

---

**आनुषङ्गिक** इति । 'विनाशाय च दुष्कृताम्' इति 'च'शब्दः अन्वाचयपरः इति भावः । समुच्चयः समप्रधानयोः । अन्वाचयः प्रधानानुषङ्गिकयोः (श्रु.प्र) । **प्रकृतिं स्वामितीति** प्रकृतिसम्बन्धभ्रमनिवृत्त्यर्थम् । **स्वभावः**—निरुपाधिकधर्मः । अनेन विग्रहश्च स्वाभाविकः (अकर्मोपाधिकः) इत्युक्तं भवति । **आत्ममाययेतीति,** अपारमार्थिकत्वभ्रमनिवृत्त्यर्थम् । **नैघण्टुकाः**—वेदनिघण्टुकाराः । तन्मूलभूतप्रयोगश्च—'यावन्तः पांसवो भूमेः । संख्याता देवमायया' (तै.काठ.उ. ) इति । **तस्यैव धर्म** इति । एवंरूपं रूपमपि जीवादन्यत्वसाधकम् इत्यर्थः । **तद्धर्मोपदेशात्** इति सौत्रेण धर्मशब्देन, एवंरूपरूपवत्त्वमपि विवक्षितम् इति भावः ॥२१॥

---

* 'केतुः, केतः, चेतः, चित्तम्, क्रतुः, असुः, धीः, शची, माया, वयुनं अभिख्या,—इति प्रज्ञायाः' (या.नि. 3-9) एकादश प्रज्ञानामानि

[1] आनुषङ्गिकः—वा. [2] स्वीयमेव—आ, स्वयमेव—थ [3] स्वसङ्कल्पज्ञानेन—आ, सङ्कल्पमात्ररूपेण—द, स्वसङ्कल्पमात्ररूपेण—वा [4] तद्धि स्वरूप—ध
[5] इति अवताररूपस्याप्राकृतत्वमुच्यते ।—ध [6] चाऽप्यवतार—न, चार्चावतार—वा

## 'भेदव्यपदेशाच्चाऽन्यः ॥१-१-२२॥

[जीवभेदसाधकं हेत्वन्तरम्]

आदित्यादिजीवेभ्यो भेदः व्यपदिश्यते अस्य परमात्मनः ;

'य आदित्ये तिष्ठन्, आदित्यादन्तरः, यमादित्यो न वेद, यस्याऽऽदित्यः शरीरम्, य आदित्यमन्तरो यमयति' (बृ.उ. 5-7-13)

'य आत्मनि तिष्ठन्, आत्मनोऽन्तरः, यमात्मा न वेद, यस्याऽऽत्मा शरीरम्, य आत्मानमन्तरो यमयति' (बृ.उ.मा.पा. 5-7-26)

इति ।

'[1]योऽक्षरमन्तरे सञ्चरन्, यस्याक्षरं[1] शरीरम्, यमक्षरं न वेद, यो मृत्युमन्तरे सञ्चरन्, यस्य मृत्युः शरीरम् , यं मृत्युर्न वेद,

---

अन्य इति । अयम् 'अन्य'शब्दः पूर्वापरसूत्रेष्वपि अन्वेतव्यः । य आदित्ये इति आदित्यपर्यायोपादानं, प्रकरणस्थजीवान्तरविषयपर्यायाणां प्रदर्शनार्थम् । आदित्यादीत्यत्र आदि-शब्दोपात्तदेवताविशेषेभ्यो भेदव्यपदेशश्च अत एव दर्शितो भवति । तत्र हि प्रकरणे 'यः सर्वेषु देवेषु तिष्ठन्' इति पर्याये, सर्वदेवताभ्यो भेदः व्यपदिश्यते । य आत्मनीति, निष्कृष्टात्मनः परमात्मनियाम्यत्वप्रतिपादकः पर्यायः, आसां देवतानां मुक्तावस्थायामपि, ताभ्यः परमात्मनः भेदज्ञापनार्थम् । यस्याक्षरमिति, कारणावस्थायामपि भेदज्ञापनार्थम् । अक्षरम्—अचित्समष्टि संसृष्टा पुरुषसमष्टिः । मृत्युः—चित्समष्टिसंसृष्टा अचित्समष्टिः ।

शरीरसम्बन्धावच्छिन्नैश्वर्यश्रवणसिद्धकर्मवश्यत्वात् , लोककामेशत्वादीनां सुकृतप्रकर्षेणोप-पत्तेः, पाप्मोदयश्रवणस्य पापसम्बन्धनिवर्तकत्वेन, पुण्यसम्बन्धनिवर्तकत्वाभावाच्च [चेतन-विशेषः इति] पूर्वः पक्षः ।

---

[सूत्रार्थः । भेदस्य—आत्माऽऽदित्यादौ विद्यमाने पुरुषे जीवादन्यत्वस्य, व्यपदेशात्—'आत्मनोऽन्तरः' 'आदित्यादन्तरः' इत्यादिश्रुतौ स्पष्टं बोधनात् , अन्यः—अक्ष्याद्यन्तर्वर्ती पुरुषः जीवाद्भिन्नः परमात्मैव ॥]

आदित्ये तिष्ठतोऽस्यैव सूर्याद्भेदोपदेशतः ।
तिष्ठन् य आदित्य इति जीवादन्यः परः पुमान् ॥ (ब्र.प.मा. २२)

---

[1] यस्याक्षरं—ई, वा,

एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' (सुबा.उ. 7) इति [1]च अस्य[1] अपहत[2]पाप्मनः परमात्मनः[2] सर्वान् [3]जीवान् शरीरत्वेन[3] व्यपदिश्य, [4]तेषाम[4]न्तरात्मत्वेन [5]एनं[5] व्यपदिशति। अतः सर्वेभ्यः [6]हिरण्यगर्भादिजीवेभ्यः[6] अन्य एव परमात्मा इति सिद्धम् ॥२२॥

॥ इति अन्तरधिकरणम् ॥ ७ ॥

---

मोक्षप्रकरणेषु उभयकर्मविषयपाप्मशब्दप्रयोगश्रुत्यन्तरैकार्थ्य-प्रवृत्तिनिमित्तयोगैः पाप्म-शब्दस्य उभयपरत्वेन कर्मवश्यत्वनिषेधात्, तत्पूर्वकगुणान्तराणामपि जीवेष्वसम्भवात्, हेतुतः फलतः द्रव्यतश्च विलक्षणविग्रहयोगस्य जीववैलक्षण्यसाधकत्वात्, आदित्यादिजीवेभ्यो भेदव्यप-देशाच्च 'परमात्मा' इति राद्धान्तः ॥२२॥

[सूत्राणि — 1. अन्तस्तद्धर्म. 2. भेदव्यप]

॥ इति अन्तरधिकरणम् ॥७॥

---

[1] च—क्षा, चास्मादपि—ध, [2] पाप्मनः—क्ष [3] शरीरत्वेन—द
[4] तेषामेवा—इ [5] एवं—न [6] एवादित्यादिजीवेभ्यः—वा, एवादित्यादिदेवेभ्यः—द

## आकाशाधिकरणम् ॥ १-१-८ ॥

[अधिकरणार्थः—आकाशत्वेनोपास्यः परमात्मैव ; न भौतिकाकाशः]

[आकाशविद्या (छां.उ. 1-9)]

[पेटिकाभेदस्य तत्सङ्गतेश्च प्रतिपादनम्]

'यतो वा [1]इमानि भूतानि जायन्ते[1]' (तै.उ.भृ. 1-2)

इति, 'जगत्कारणं ब्रह्म' [2]इत्यवगम्यते[2] । [3]किं तत्[3] जगत्कारणम् ? इत्यपेक्षायाम्

'सदेव सोम्येदमग्र आसीत्' (छां.उ. 6-2-1)

'तत्तेजोऽसृजत' (छां.उ 6-2-3)

'आत्मा वा इदमेक एवाऽग्र आसीत्' (ऐत.उ. 1-1)

'स इमान् लोकानसृजत' (ऐत.उ. 1-2)

'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' (तै.उ.आन. 1-2)

इति, साधारणैः शब्दैः जगत्कारणे निर्दिष्टे, ईक्षणविशेषानन्दविशेषरूपविशेषार्थस्वभावात् प्रधान[4]क्षेत्रज्ञादिव्यतिरिक्तं[4] ब्रह्म—इत्युक्तम् ।

इदानीम्—आकाशादिविशेषशब्दैः [5]निर्दिश्य[5] जगत्कारणत्व-जगदैश्वर्यादिवादेऽपि आकाशादिशब्दाभिधेयतया प्रसिद्धचिदचिद्वस्तुनः अर्थान्तरम् उक्तलक्षणमेव ब्रह्म—इति प्रतिपाद्यते ; 'आकाशस्तल्लिङ्गात्' इत्यादिना पादशेषेण ॥

---

**यतो वेति** । सद्ब्रह्मात्मादिसाधारणशब्दानां जगत्कारणवाचिनाम् अर्थस्वभावात्, अभिमतविशेषपर्यवसानं कृतम् । वस्त्वन्तरविशेषासाधारणत्वेन व्युत्पन्नैरपि शब्दैः, जगत्कारणे निर्दिष्टे, तेषामपि अर्थस्वभावात् अभिमतविशेषपर्यवसानं क्रियते इत्यर्थः (श्रु.प्र) ।

**इदानीमिति** । पूर्वं संशयव्युदासः कृतः ; अथ विपर्ययव्युदासः क्रियत इति यावत् । लिङ्गात् श्रुतेः बलीयस्त्वात्, कारणविशेषे आकाशादिपदश्रुत्या निश्चिते सति, लिङ्गात् तद्विशेषनिश्चयः अनुपपन्नः इति पूर्वपक्षोत्थानात्, अधिकरणस्य आरम्भणीयत्वं सिद्धमिति भावः । **पादशेषेणेति** । पादशेषः अधिकरणचतुष्टयात्मकः ।

तत्र प्रथमे—वस्त्वन्तरप्रसिद्धशब्दविशेषेण प्रत्यवस्थानम् । अर्थविरोधेन परिहारः ।

---

[1] इमानि—थ [2] इत्यवगते—क्ष [3] किं—इ [4] क्षेत्रज्ञातिरिक्तं—क्ष
[5] निर्दिष्टस्य—क्षा

## आकाशस्तल्लिङ्गात् ॥ १-१-२३ ॥

[विषयवाक्यप्रदर्शनम्]

इदमाम्नायते छान्दोग्ये—

'अस्य लोकस्य का गतिरिति । आकाश इति होवाच ।
सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति, आकाशो [1]ह्येवैभ्यो[1] ज्यायान्, आकाशः परायणम्' (छां.उ. 1-9-1)

इति ॥

[अधिकरणाङ्गभूतसंशयप्रदर्शनम्]

तत्र सन्देहः— किं [2]प्रसिद्धाकाश एव[2] अत्र 'आकाश'शब्देन अभिधीयते ? उत उक्तलक्षणमेव ब्रह्म ?— इति ।

---

द्वितीये—अर्थाविरोधशङ्कया प्रत्यवस्थानम् । विरोधोद्घाटनमुखेन परिहारः ।

तृतीये—विरोधिलिङ्गाभावेन, अल्पानुकूललिङ्गसद्भावेन च प्रत्यवस्थानम् । स्ववाक्ये विरोधिलिङ्गाभावेऽपि उपक्रमवाक्यस्थविरोधिलिङ्गप्रदर्शनेन सिद्धान्तः ।

चतुर्थे—उपक्रम एव अनुकूललिङ्गभूयस्त्वेन प्रत्यवस्थानम् । तन्निरासेन सिद्धान्तः— इति भिदा । अनेन अधिकरणसङ्गतिश्च फलिता ।

**अस्य लोकस्य का गतिः** इत्यादिकम्, सिद्धान्ते कारणत्वानुवादस्य वक्ष्यमाणत्वात् विधेयं किम् ? इत्यपेक्षायाम्, विधेयार्थज्ञापनार्थमुपात्तम् । **गतिः**—प्राप्यम् (श्रु.प्र.) ॥

**तत्रेति** । भूताकाशे प्रसिद्ध्यतिशय-परायणत्वाद्यनुपपत्तिभ्यां संशयः ।

---

[सूत्रार्थः । **आकाशः**—'आकाशादेव समुत्पद्यन्ते' इति श्रुतिस्थाकाशपदवाच्योऽर्थः (जिज्ञास्यत्वेनाभिमतं परं ब्रह्मैव ; न प्रसिद्धाकाशः), **तल्लिङ्गात्**—परब्रह्मासाधारणात् जगत्कारणत्वादेः ज्ञापकात् ॥]

आकाशः परमात्मेति तल्लिङ्गादिह तूच्यते ।
परायणत्व-सृष्ट्यादिकारणत्वविशेषणात् ॥ (ब्र.प.मा. २३)

---

[1] ह्येवैभ्यो भूतेभ्यः—इ, घ, ध ह्येतेभ्यो भूतेभ्यः—न [2] प्रसिद्धाकाशमेव—वा

[पूर्वपक्षस्वरूपम्]

**किं प्राप्तम् ?**

**प्रसिद्धाकाशः— इति ।**

**कुतः ?**

**शब्दैकसमधिगम्ये वस्तुनि, य एवार्थः व्युत्पत्तिसिद्धः शब्देन प्रतीयते, स एव ग्रहीतव्यः । अतः प्रसिद्धाकाश[1]एव[1] [2]चराचर[2]भूतजातस्य कृत्स्नस्य कारणम् । अतः तस्मादनतिरिक्तं ब्रह्म ॥**

---

**सन्देहाकारः** —जगत्कारणवादिवाक्यप्रतिपाद्यं वस्तु किमाकाशः, उत परमात्मा ?—इति विचारः । तदर्थम् 'अस्य लोकस्य का गतिः ? आकाशः' इत्यत्र आकाशः किं प्रसिद्धः, उत परः ? तदर्थं किमत्र आकाशशब्दो रूढ्या वर्तते, उत अवयवशक्त्या ? तदर्थं ज्यायस्त्वादिगुणाः किं मुख्यतया नेयाः, उत न ? तदर्थम् 'आत्मन आकाशस्सम्भूतः' इति आत्मशब्दः किं कारणाकाशपरः, उत परमात्मपरः ? तदर्थं किमयमात्मशब्दः स्वरूपपरः ? उत देहप्रतिसम्बन्धिपरः ?—इति विचारः ।

**पूर्वपक्षे फलफलिभावः** —आत्मशब्दः यदा स्वरूपपरः ; तदा 'आत्मन आकाशः' इत्यत्र आत्मशब्दस्य कारणाकाशपरतया, ज्यायस्त्वादिगुणानामपि कथञ्चित् नेयत्वेन रूढिशक्तेः स्थितत्वात्, विषयवाक्यस्थाकाशशब्दः प्रसिद्धाकाशपर इति, वेदान्तवेद्यं वस्तु प्रसिद्धाकाशः—इति ।

**राद्धान्ते फलफलिभावः**—'आत्म'शब्दः यदा शरीरप्रतिसम्बन्धिपरः ; तदा 'आत्मन आकाशः' इत्यत्र आत्मशब्दस्य परमात्मपरतया, ज्यायस्त्वादिगुणानामपि मुख्यत्वात् , यौगिकवृत्त्या विषयवाक्यस्थाकाशशब्दः परमात्मपर इति, कारणवाक्यप्रतिपाद्यः परमात्मा—इति॥

**शब्दैकेति ।** प्रमाणान्तरसिद्धार्थानुवादे सति हि, तदनुरोधाय क्लिष्टगत्या अर्थस्य वर्णनीयत्वं स्यात् । 'आदित्यो यूपः' इत्यादिषु यूपादेः प्रमाणान्तरगोचरतया हि ऐक्यहानम् । मानान्तरागोचरे वस्तुनि प्रतिपाद्ये, न तथा व्युत्पत्तिसिद्धार्थः त्याज्यः । अनुरोद्धव्यान्तराभावेन शब्दस्वातन्त्र्यस्य अकुण्ठितत्वात् इति भावः । **प्रसिद्धेति ।** रूढिर्हि योगात् प्रबला इति भावः॥

---

[1] एवाऽत्र—थ.    [2] चराचरात्मक—इ.

[अर्थविरोधात् व्युत्पत्तिसिद्धार्थस्य त्याज्यत्वशङ्कापरिहारौ]

ननु—ईक्षापूर्वकसृष्ट्यादिभिः, अचेतनात् जीवाच्च व्यतिरिक्तं ब्रह्म—इत्युक्तम् ।

सत्यमुक्तम् ; [1]अयुक्तं[1] तु तत् । तथा हि—

'यतो वा इमानि भूतानि जायन्ते....तद्ब्रह्म' (तै.उ.भृ. 1–2)

इत्युक्ते ; कुतः इमानि भूतानि जायन्ते ? इत्यादि[2]विशेषापेक्षायाम्[2],

'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' (छां उ 1–9–1)

इत्यादिना विशेषप्रतीतेः, 'जगज्जन्मादिकारणम् आकाश एव' इति [3]निश्चिते सति[3],

'सदेव सोम्येदमग्र आसीत्' (छां.उ. 6–2–1)

इत्यादिष्वपि, सदादिशब्दाः साधारणाकाराः, तमेव विशेषम् आकाशमभिदधति ।

[4]'आत्मा वा इदमेक एवाऽग्र आसीत्'[4] (ऐत.उ. 1–1)

इत्यादिषु [5]आत्मशब्दोऽपि[5] तत्रैव वर्तते । तस्याऽपि हि चेतनैकान्तत्वं न सम्भवति ; यथा 'मृदात्मको घटः' इति । 'आप्नोतीति आत्मा' [6]इति व्युत्पत्त्या[6], सुतराम् आकाशेऽपि 'आत्म'शब्दो वर्तते ॥

[तदैक्षतेतीक्षणादीनां गौणतानिर्वाहः]

अतः एवम् 'आकाश एव कारणं ब्रह्म' इति निश्चिते सति, ईक्षणादयः

---

**नन्विति** । अर्थविरोधात् व्युत्पत्तिसिद्धार्थः त्यज्यते इति [चोद्याशयः] (श्रु.प्र.) । **इत्यादि** इति आदिशब्देन, 'किं प्रयन्ति ? केन जीवन्ति ?' इत्यपेक्षा विवक्षिता । **विशेषप्रतीतेरिति**, एतद्वाक्यविशेषेण वस्तुविशेषप्रतीतिः हेतुतया उक्ता । **निश्चिते सतीति** । 'सद्विद्यादिप्रतिपन्नकारणानुवादिलक्षणवाक्योक्तं ब्रह्म, आकाश एव' इति निश्चिते इत्यर्थः । **साधारणाकाराः**—साधारणरूपाः । 'छागो वा मन्त्रवर्णात्' (पू.मी.सू. 6–8–31) इति न्यायः अभिप्रेतः । **तत्रैव**—आकाशे एव । आकाशशब्दापेक्षया आत्मशब्दोऽपि साधारणः इत्यर्थः। **अप्नोतीति** । आत्मशब्दस्य अवयवशक्त्याऽपि आकाशपरत्वम् । व्यवस्थितरूढिशक्तेः 'आकाश'शब्दस्य रूढिभङ्गादपि, नानार्थसाधारणरूढिशक्तेः 'आत्म'शब्दस्य रूढिभङ्गः उचित इति भावः (श्रु.प्र) ॥

**ईक्षणादय** इति । श्रुतिप्राबल्यात् लिङ्गं तदनुगुणं नेयम् इत्यर्थः । **यदि हि**

---

[1] दुरुक्तं—इ,वा. [2] विशेषाकाङ्क्षायाम्—ध,न. [3] निश्चीयते—वा
[4] आत्मा वा—थ. [5] अप्यात्मशब्दः—वा. [6] इति—ध.

तदनुगुणाः गौणाः वर्णनीयाः। यदि हि साधारणशब्दैरेव सदादिभिः, कारणम् अभ्यधायिष्यत; ईक्षणाद्यर्थानुरोधेन चेतनविशेष एव कारणमिति [1]निरचेष्यत[1]। 'आकाश'शब्देन तु विशेष एव निश्चितः इति, न अर्थस्वाभाव्यात् निर्णेतव्यमस्ति॥

[आकाशस्य कार्यताश्रुतेः परमकारणत्वानुपपत्तिशङ्कापरिहारौ]

ननु—

'आत्मन आकाशः सम्भूतः' (तै.उ.आन. 1-1)

इति, आकाशस्याऽपि कार्यत्वं प्रतीयते!

सत्यम्; सर्वेषामेव आकाशवाय्वादीनां, सूक्ष्मावस्था स्थूलावस्था चेति, अवस्थाद्वयमस्ति। तत्र आकाशस्य सूक्ष्मावस्था कारणम्। [2]स्थूलावस्था तु[2] कार्यम्। 'आत्मन आकाशः सम्भूतः' इति, [3]'स्वस्मादेव[3] सूक्ष्मरूपात् स्वयं स्थूलरूपः सम्भूतः' इत्यर्थः।

'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' (छां.उ. 1-9-1)

इति, सर्वस्य जगतः आकाशादेव प्रभवाप्ययादिश्रवणात्, '[4]तदेव हि[4] [5]कारणं[5] ब्रह्म' इति निश्चितम्।

---

इत्यादिना, सदादिशब्देभ्यः आकाशादिपदश्रुतेः प्राबल्यमुपपादयति। **साधारणशब्दैरेवेति**; न तु विशेषशब्दान्तरे सति इति भावः। **आकाशशब्देन त्विति**। 'रूढिर्हि योगमपहरति' (पू.मी.अ 3-3-13) इति न्यायात्, विलम्बितप्रतिपन्नात् यौगिकादपि, शीघ्रधीविषये रूढ्यर्थे एव आकाशशब्दस्य परिग्राह्ये, सदादिशब्दानाम् ईक्षणादिलिङ्गपरामर्शसापेक्षत्वेन विलम्बितप्रवृत्तितया, अतिशीघ्रप्रवृत्तित्वात् प्रबलतराकाशपदश्रुत्या अपेक्षिते विशेषे लब्धे, अर्थस्वभावनिर्णेतव्यविशेषाभावात्, ईक्षणादयः तदनुरोधेन वर्णनीयाः। अतः न चेतनविशेषकारणत्वसिद्धिः इत्यर्थः॥

**नन्विति**। कार्यतया अवगतस्य परमकारणत्वानुपपत्तिः इति शङ्काशयः।

**सत्यमिति**। कार्यत्वे, अभिमतिः; तस्य कारणत्वभञ्जकत्वे, अनङ्गीकारः। वाय्वाद्युपादानम्, निदर्शनतया। **सूक्ष्मावस्था**शब्देन तन्मात्रावस्था कथ्यते। 'आत्मन आकाशः' इति वाक्ये 'आत्म'शब्दः स्ववाची इत्यर्थः (श्रु.प्र)।

'प्रभवाप्ययादि' इति आदि शब्देन, अवकाशप्रदानेन स्थितिहेतुत्वमुच्यते। **परायणम्** इति हि अत्रोक्तम्।

---

[1] निरदैक्षत—इ. निरदेक्ष्यत—थ, ध. [2] स्थूलावस्था—आ, द. [3] तस्मादेव—थ. [4] तदेव—थ, ध. [5] जगत्कारणं—इ, द.

यत एवं प्रसिद्धाकाशात् अनतिरिक्तं ब्रह्म, अत एव च—

'यदेष आकाश आनन्दो न स्यात्' (तै.उ.आन. 7-1)

'आकाशो ह वै नाम-रूपयोर्निर्वहिता' (छां.उ. 8-14-1)

इत्येवमादिनिर्देशोऽपि [1]उपपन्नतरः[1]। अतः प्रसिद्धाकाशात् अनतिरिक्तं ब्रह्म—इति ॥

[सिद्धान्तारम्भः]

एवं प्राप्ते, ब्रूमः—'आकाशस्तल्लिङ्गात्'। 'आकाश'शब्दाभिधेयः [2]प्रसिद्धाकाशात् अचेतनात्[2] अर्थान्तरभूतः, यथोक्तलक्षणः परमात्मैव।

कुतः?

तल्लिङ्गात्। निखिल[3]जगदेककारणत्वं[3], सर्वस्मात् ज्यायस्त्वं, परायणत्वम् इत्यादीनि परमात्मलिङ्गानि उपलभ्यन्ते। निखिल[4]कारणत्वं[4] हि, अचिद्वस्तुनः प्रसिद्धाकाशशब्दाभिधेयस्य नोपपद्यते; चेतनवस्तुनः तत्कार्यत्वासम्भवात्। परायणत्वं च—चेतनानां परमप्राप्यत्वम्। तच्च अचेतनस्य हेयस्य सकलपुरुषार्थविरोधिनः न सम्भवति। सर्वस्मात् ज्यायस्त्वं च [5]निरुपाधिकम्[5]—सर्वैः कल्याणगुणैः सर्वेभ्यो निरतिशयोत्कर्षः। तदपि अचितः नोपपद्यते ॥

---

**एवमादीति** आदिशब्देन, 'कं ब्रह्म खं ब्रह्म' 'प्राणं चाऽस्मै तदाकाशं चोचुः' 'परमे व्योमन् प्रतिष्ठिता' इति वाक्यान्यभिप्रेतानि ॥

**एवमिति।** पूर्वाधिकरणे इव, अत्र 'तद्धर्मोपदेशात्' इति नोक्तम्; अपि तु **'तल्लिङ्गात्'** इति; वाक्यान्तरप्रसिद्धस्यार्थस्य अनूदितस्य हेतुतया विवक्षितत्वात्। लिङ्गि-सम्बन्धित्वेन प्रमाणान्तरोपलब्धं हि लिङ्गं भवति। सर्वाणि इति 'सर्व'शब्दस्य असङ्कोचमभि-प्रेत्य, **निखिलेत्युक्तम्।** **भूत**शब्दस्य वाय्वादिचतुष्टयमात्रपरत्वव्युदासाय **जगच्छब्दः।** सर्वभूतकारणत्वोक्त्या, चिदचिदात्मकसमस्तप्रपञ्चकारणत्वमुक्तं भवतीत्यभिप्रायः। तत्र निमित्ता-न्तराश्रवणात् वाक्यान्तरैकार्थ्याच्च, निमित्तोपादानादिरूपसर्वविधकारणत्वाभिप्रायेण **एककारण-त्वमुक्तम्** (श्रु.प्र.)। **निखिलेति,** अनेन आकाशस्य एककारणत्वानुपपत्तिश्च अभिप्रेता। न हि आकाशः निमित्तकारणं भवितुमर्हति। **अचेतनस्येति।** अचेतनत्वेन स्वरूपानन्तर्भूतत्वात् हेयत्वमित्यर्थः। **सकलेति।** सकलानां पुरुषाणां साक्षात्पुरुषार्थः मोक्षः; बन्धहेतुतया तस्य-विरोधिनः इत्यर्थः (श्रु.प्र) ॥

---

[1] उपपन्नः—द. [2] प्रसिद्धाकाशात्—थ. [3] कारणत्वं—द, न. [4] जगदेककारणत्वं—आ. [5] निरुपाधिकैः—द.

[पूर्वपक्षोक्तानुवादपूर्वकं तत्समाधानम्]

यदुक्तम्—जगत्कारणविशेषाकाङ्क्षायाम्, आकाशशब्देन विशेषसमर्पणात्, अन्यत् सर्वं [1]तदनुरूपमेव[1] वर्णनीयम्—इति,

तदयुक्तम्;

'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' (छां.उ. 1-9-1)

इति प्रसिद्धवन्निर्देशात्। प्रसिद्धवन्निर्देशो हि प्रमाणान्तरप्राप्ति[2]मपेक्षते[2]। प्रमाणान्तराणि च

'सदेव सोम्येदमग्र आसीत्' (छां.उ. 6-2-1)

इत्येवमादीन्येव वाक्यानि। तानि च यथोदितप्रकारेणैव ब्रह्म प्रतिपादयन्तीति, तत्प्रतिपादितं ब्रह्म, 'आकाश'शब्देन प्रसिद्धवत् निर्दिश्यते। सम्भवति च परस्य ब्रह्मणः, [3]प्रकाशकत्वात्[3] आकाशशब्दाभिधेयत्वम्; 'आकाशते, [4]आकाशयति[4] च' इति॥

[अनुवादकतया निश्चितवाक्यस्य न मूलप्रमाणान्तरबाधकता]

किं च—अनेन आकाशशब्देन [5]विशेष[5]समर्पणक्षमेणाऽपि, चेतनांशं प्रति असम्भावितकारणभावम् अचेतनविशेषम् अभिदधानेन,

'तदैक्षत, बहु स्यां प्रजायेय' (छां.उ. 6-2-3)

'सोऽकामयत, बहु स्यां प्रजायेय' (तै.उ.आन. 6-2)

इत्यादिवाक्यशेषावधारितसार्वज्ञ्य-[6]सत्यसङ्कल्पत्वादि[6]विशिष्टापूर्वार्थप्रतिपादनसमर्थवाक्यार्थान्यथाकरणं न प्रमाणपदवीमधिरोहति।

---

**प्रकाशकत्वात्**—अन्येषां सर्वार्थप्रकाशकत्वात्। **आकाशते**—स्वस्मै प्रकाशते। **आकाशयति**—अन्यं प्रकाशयति स्वात्मने॥

**किञ्चेति**। [यद्यपि] न केवलं प्रसिद्धवन्निर्देशमात्रम् अनुवादकत्वसाधकम्; [तथापि] अयोग्यत्वे निश्चिते सति प्रसिद्धवन्निर्देशः, अनुवादकत्वसाधकः इत्यभिप्रायः। **असम्भावितेति**। एकपदश्रवणवेलायां विशेषसमर्पणक्षमेणाऽपि, परामर्शदशायाम् अयोग्यतया निश्चितोऽर्थः न प्रतिपादयितुं शक्यते इत्यभिप्रायः। **सार्वज्ञ्यादिकम्**, ब्रह्मणः योग्यार्थत्वज्ञापनाय। **न प्रमाणेति**। अयोग्यार्थेन अनुवादरूपेण वाक्येन योग्यापूर्वार्थवाक्यानामन्यथाकरणमयुक्तमित्यर्थः।

---

[1] तदनुरूपत्वेन—द. [2] मवेक्षते—द. [3] प्रकाशत्वात्—आ. [4] प्रकाशयति—द.
[5] विशेषण—द. [6] सत्यकामत्वादि—ट.

एवम् अपूर्वानन्तविशेषणविशिष्टापूर्वार्थप्रतिपादनसमर्थानेकवाक्यगतिसामान्यं च, एकेन [1]अनुवादसरूपेण[1] अन्यथाकर्तुं न शक्यते ॥

[आत्मशब्दानैकान्त्यस्य अनूद्य समाधानम्]

यत्तु—आत्मशब्दः चेतनैकान्तो न [2]भवति[2] ; 'मृदात्मको घटः' इत्यादिदर्शनात्—इत्युक्तम् ,

तत्रोच्यते—यद्यपि, चेतनादन्यत्राऽपि क्वचित् आत्मशब्दः प्रयुज्यते ; तथाऽपि, शरीरप्रतिसंबन्धिनि आत्मशब्दस्य प्रयोगप्राचुर्यात् ,

'आत्मा वा इदमेक एवाऽग्र आसीत्' (ऐत.उ. 1-1)

'आत्मन आकाशः सम्भूतः' (तै.उ.आन. 1-2)

इत्यादिषु शरीरप्रतिसम्बन्धिचेतन एव प्रतीयते। यथा—'गो'शब्दस्य अनेकार्थवाचित्वेऽपि प्रयोगप्राचुर्यात् , सास्नादिमानेव स्वतः प्रतीयते ; अर्थान्तरप्रतीतिस्तु तत्तदसाधारणनिर्देशापेक्षा, [3]तथा[3]—स्वतः प्राप्तं शरीरप्रतिसम्बन्धिचेतनाभिधानमेव,

---

गतिसामान्यम्—प्रवृत्तिसामान्यम्। 'अस्य लोकस्य का गतिः?' इत्युपक्रमवशात् , अन्यपरत्वं स्फुटम्। एवम् आकाशकारणपक्षे—अन्यपरत्वम् , एकवाक्यत्वम् , अयोग्यार्थत्वम् , अनुवादरूपत्वम् ; स्वपक्षे—अनन्यपरत्वम् , वाक्यबहुत्वम् , योग्यार्थत्वम् , अपूर्वत्वं च—इति वैषम्यचतुष्टयमुक्तम्।

एवम्—'योग्यार्थश्रुतिमूललिङ्गम् अयोग्यार्थश्रुतितः प्रबलम्' इति सिद्धान्तन्यायः उक्तो भवति। यथा—गङ्गाशब्दः स्वार्थसमर्पणक्षमः, भूतलधर्मतया प्रत्यक्षसिद्धघोषाधिकरणत्वलिङ्गविरोधेन अन्वयायोग्यः स्वार्थप्रतिपादनक्षमत्वाभावात् श्रुत्याभासः ; एवं—योग्यार्थश्रुतिमूललिङ्गापेक्षया आकाशश्रुतिः श्रुत्याभासः—इति ॥

तत्रेति। स्वतःप्राप्त्या 'आत्म'शब्दः विशेषवाचीत्यर्थः। प्रकृतब्रह्मवाचितच्छब्दसामानाधिकरण्याच्च न स्वरूपपरत्वमिति अर्थसिद्धम् (श्रु.प्र)।

---

[1] अनुवादरूपेण—इ, वा, अनुवादस्वरूपेण—च. [2] सम्भवति—इ, ध, न.
[3] यथा—आ, ट.

'स ईक्षत लोकान्नु सृजा इति' (ऐत.उ. 1-1)

'सोऽकामयत। बहु स्यां प्रजायेय' (तै.उ.आन. 6-2)

इत्यादितत्तद्वाक्यविशेषा एव स्थिरीकुर्वन्ति ।

एवं वाक्यशेषावधारितानन्यसाधारणानेकापूर्वार्थविशिष्टं निखिलजगदेककारणं 'सदेव [1]सोम्य[1]' इत्यादिवाक्यसिद्धं ब्रह्मैव, 'आकाश'शब्देन प्रसिद्धवत्,

'सर्वाणि ह वा इमानि भूतानि' (छां.उ. 1-9-1)

इत्यादिवाक्येन निर्दिश्यते ॥२३॥

॥ इति आकाशाधिकरणम् ॥८॥

---

एवमिति, अधिकरणार्थमुपसंहरति । योगात् रूढेः प्राबल्यात्, प्रसिद्धार्थपरत्वे सति श्रुतिविरोधात्, दुर्बलं लिङ्गादि तदनुरोधेन नेयमिति पूर्वपक्षयुक्तिः ।

योग्यार्थश्रुतिमूललिङ्गात्, अयोग्यार्थस्य पदस्य श्रुत्याभासत्वात् योग्यार्थः स्वीकार्यः इति राद्धान्तयुक्तिः ॥ २३ ॥

[सूत्रम्—1. आकाशस्त-]

॥ इति आकाशाधिकरणम् ॥८॥

---

[1] सोम्येदमग्र आसीत्—वा.

प्राणाधिकरणम् ॥ १–१–९ ॥

[अधिकरणार्थः—प्राणत्वेनोपास्यः परमात्मैव ; न भूतचतुर्थो वायुः ।]

[प्राणविद्या (छां.उ. 1–10, 11)]

## अत एव प्राणः ॥ १–१–२४ ॥

[विषयवाक्यप्रदर्शनम्]

इदमाम्नायते छान्दोग्ये—

'प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता' (छां.उ. 1-10-9)

इति प्रस्तुत्य,

'[1]कतमा सा[1] देवतेति । प्राण इति होवाच । सर्वाणि ह वा इमानि भूतानि

---

अत एवेति, उक्ताधिकरणन्यायमतिदिशति ।

संशयस्वरूपम्—किं वेदान्तवेद्यः प्रसिद्धःप्राणः ? उत परमात्मा ? तदर्थं 'प्राण इति होवाच, प्राणमेवाभिसंविशन्ति' इत्युक्तः प्राणः किं प्रसिद्धः ? उत परः ? तदर्थं किं प्राण-शब्दो रूढः ? उत यौगिकः ? तदर्थं भूतजातस्य प्रसिद्धप्राणायत्तस्थितिप्रवृत्तित्वमस्ति ? उत न ? इति विचारः ।

पूर्वपक्षे [फलफलिभावः]—यदाऽस्ति ; तदा रूढत्वात् विषयवाक्यस्य 'प्राण' शब्दः प्रसिद्धप्राणपर इति, सर्ववेदान्तवेद्यः प्रसिद्धः प्राणः—इति ।

राद्धान्ते [फलफलिभावः]—यदा प्राणायत्तस्थितिप्रवृत्तित्वं नास्ति ; तदा अवयव-शक्त्या विषयवाक्यस्थप्राणशब्दः परमात्मपर इति सर्ववेदान्तवेद्यः परमात्मा इति ॥

---

[सूत्रार्थः । अत एव —प्रसिद्धवत् निर्दिश्यमानात् जगत्कारणत्वरूपात् परमात्मासाधारणात् लिङ्गादेव, प्राणः —'प्राणमेवाभिसंविशन्ति' इति श्रुतिस्थप्राणशब्दवाच्योऽप्यर्थः, (ब्रह्म—जिज्ञास्यं परं ब्रह्मैव ; न प्रसिद्धः प्राणः) ।]

पूर्वोक्तादेव लिङ्गाच्च प्राणो ब्रह्मेति कथ्यते ।
सर्वप्राणिप्राणनाच्च निर्देशाच्च प्रसिद्धवत् ॥ (ब्र.प.मा. २४)

---

[1] सा कतमा—ब.

प्राणमेवाऽभिसंविशन्ति, प्राणमभ्युज्जिहते । सैषा देवता प्रस्तावमन्वायत्ता । तां चेदविद्वान् प्रास्तोष्यः, मूर्धा ते व्यपतिष्यत्' (छां.उ. 1-11-4, 5) इति ॥

[सिद्धान्तार्थः]

अत्र प्राणशब्दोऽपि, आकाशशब्दवत् प्रसिद्धप्राणव्यतिरिक्ते परस्मिन्नेव ब्रह्मणि वर्तते ; तदसाधारणनिखिलजगत्प्रवेश-निष्क्रमणादिलिङ्गात् प्रसिद्धवत् निर्दिष्टात् ॥

[अधिकरणभेदप्रयोजकौ शङ्कापरिहारौ]

अधिकाशङ्का [1]तु[1]— [2]कृत्स्नस्य भूत[2]जातस्य प्राणाधीनस्थिति-प्रवृत्त्यादिदर्शनात्, प्रसिद्ध एव प्राणः जगत्कारणतया निर्देशमर्हति — इति ।

परिहारस्तु — शिला-काष्ठादिषु, चेतनस्वरूपे च [3]तदभावात्[3],

'सर्वाणि ह वा इमानि भूतानि प्राणमेवाऽभिसंविशन्ति,
प्राणमभ्युज्जिहते' (छां.उ. 1-11-5)

इति, नोपपद्यते-इति । अतः 'प्राणयति सर्वाणि भूतानि' [4]इति कृत्वा[4], परं ब्रह्मैव 'प्राण'शब्देनाऽभिधीयते ॥

[अधिकरणद्वयार्थनिगमनम्]

अतः — प्रसिद्धाकाशप्राणादेः अन्यदेव, निखिलजगदेककारणम् , अपहतपाप्मत्व-सार्वज्ञ्य-सत्यसङ्कल्पत्वाद्यनन्तकल्याणगुणगणं परं ब्रह्मैव, आकाश-[5]प्राणादि[5]शब्दाभिधेयम् — इति सिद्धम् ॥२४॥

॥ इति प्राणाधिकरणम् ॥९॥

---

**मूर्धा ते व्यपतिष्यत्** इति । आत्मसत्ता न लभ्येतेत्यर्थः ।

**आकाशशब्दवत्** इत्यत्र, रूढिप्राबल्य-तत्परिहारादिकं पूर्वोक्तं सर्वमनुसन्धेयम् ॥

**कृत्स्नस्येति ।** अत्र अविरोधशङ्कया प्रत्यवस्थानं, विरोधस्फुटीकरणं च अनुसन्धेयम् । **स्थिति-प्रवृत्त्यादि** इति आदिशब्देन निवृत्तिरुच्यते, प्रवृत्तिहेतुभूतज्ञानचिकीर्षे च । स्थितिः-प्रवृत्तिहेतुत्वेन उत्पत्तिकारणत्वम् अर्थसिद्धमिति भावः । **जगत्कारणतयेति ।** संसृष्टं प्रति कारणत्वं सम्भवतीति भावः ॥ २४ ॥

[सूत्रम् — 1 अत एव प्राणः]

॥ इति प्राणाधिकरणम् ॥ ९ ॥

---

[1] तु अत्र — ध  [2] कृत्स्नभूत — इ,वा  [3] एतदभावात् — द  [4] इति — इ,ध  [5] प्राण — आ

## ज्योतिरधिकरणम् ॥ १-१-१० ॥ (सू 25-28)

[अधिकरणार्थः— ज्योतिष्ट्वेनोपास्यं, जिज्ञास्यं ब्रह्मैव ; न आदित्यादिकम् ।]

[कौक्षेयकज्योतिर्विद्या गायत्रीविद्या च (छां.उ. 3-12, 13)]

[वक्ष्यमाणाधिकरणद्वयस्य पेटिकान्तरत्वम्]

अतः परं—[1]जगत्कारणत्व[1]व्याप्तेन [2]येन केनाऽपि[2] निरतिशयोत्कृष्टगुणेन जुष्टं, ज्योतिरिन्द्रादिशब्दैः [3]अर्थान्तर[3]प्रसिद्धैरपि अभिधीयमानं, [4]परं ब्रह्मैव[4]-[5]इत्यभिधीयते[5] 'ज्योतिश्चरणाभिधानात्' इत्यादिना ॥

## ज्योतिश्चरणाभिधानात् ॥ १-१-२५ ॥

[विषयवाक्यप्रदर्शनम्]

इदमाम्नायते छान्दोग्ये—

**अतः परम्** इति, वक्ष्यमाणाधिकरणद्वयस्य पेटिकान्तरत्वमाह । वस्त्वन्तरासाधारणैः शब्दैः जगत्कारणे निर्दिश्यमानेऽपि, कारणत्वाभिधायिनां शब्दानां विशेषपर्यवसानं कृतम् । अथ कारणत्वाक्षेपकलिङ्ग(विशेष)वाचिनां वाक्यानाम् अभिमतविशेषपर्यवसानम् उच्यत इति, अवान्तरपेटिकाभेदः तत्सङ्गतिश्च इत्यर्थः । **ज्योतिश्शब्देन** अवान्तरसङ्गतिश्च द्योतिता । प्राणः वायुविशेषः, आदित्यादिज्योतिः तेजोविशेषः । अतः आकाश प्राण-ज्योतिषां क्रमो युक्तः इति । **येन केनाऽपीति** न लिङ्गाल्पत्वं विवक्षितम् ; किन्तु उदाहृतविषयवाक्यप्रतिपन्नः अयमेव गुणः कारणत्वाक्षेपकः इति भावः। **अर्थान्तरेति**, उभयोः पेटिकयोः अनुयायिनमाकारं दर्शयति (श्रु.प्र ) ॥

---

[सूत्रार्थः । **ज्योतिः**—'परो दिवो ज्योतिर्दीप्यते' इति श्रुतौ ज्योतिश्शब्दनिर्दिष्टं वस्तु, **ब्रह्म**—जिज्ञास्यत्वेनाऽभिमतं परं ब्रह्मैव, **चरणस्य**—परमात्मासाधारणस्य सर्वभूतपादत्वस्य, **अभिधानात्**—'पादोऽस्य सर्वा भूतानि' इति श्रुतौ स्फुटं प्रतिपादनात् ।]

परो दिवो ज्योतिरिति निर्दिष्टः पुरुषोत्तमः ।
भूतजातस्य कृत्स्नस्य तत्पादत्वप्रकीर्तनात् ॥ (ब्र.प.मा. २५)

---

[1] जगत्कारणत्वादि—थ [2] एकेनाऽपि [3] अर्थान्तरे—द [4] परब्रह्मैव—थ
[5] इति प्रतिपाद्यते—वा

**'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः [1]पृष्ठेष्वनुत्तमेषूत्तमेषु[1] लोकेषु, इदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिः'** (छां.उ. 3-13-7) इति ।।

[अधिकरणाङ्गभूतः संशयः]

**तत्र [2]संशयः[2]—किम् अयं [3]ज्योतिश्शब्देन निर्दिष्टः[3] निरतिशयदीप्तियुक्तोऽर्थः प्रसिद्धम् आदित्यादिज्योतिरेव कारण[4]भूतं ब्रह्म[4] ? उत [5]समस्तचिदचिद्वस्तु[5]जातविसजातीयः, परमकारणभूतः, अमितभाः, सर्वज्ञः, सत्यसङ्कल्पः, पुरुषोत्तमः ?—इति ।।**

---

**पृष्ठेषु**—उपरितनेषु । 'त्रिपादूर्ध्वः' (तै. आर. पु. 3-12-4) 'तमसोपरिष्टात्' (तै.ना.उ. 63-18) इत्यादिश्रुतिभ्यः । व्यष्टि-समष्टिविवक्षया **विश्वतः, सर्वतः,** इत्युक्तम् । **अनुत्तमः**—स्वस्मादन्यः उत्तमो नाऽस्तीति अनुत्तमः । **विश्वतः**—कृत्स्नभूमिप्रदेशात् । **सर्वतः**—कृत्स्नान्तरिक्षप्रदेशात् । **पृष्ठेषु**—बहिर्भूतेषु, इति योजनासम्भवात्, पूर्वपक्षोत्थानम् । आदित्यो हि ऊर्ध्वलोकेष्वपि रश्मिद्वारा दीप्यते ।।

**संशय** इति। लोकप्रसिद्धि-भूतचरणत्वाभ्यां संशयः । **निरतिशयदीप्तियुक्तोऽर्थः** इति, पूर्वपक्ष-सिद्धान्तसाधारणनिर्देशः । निरतिशयदीप्तिरेव कारणत्वाक्षेपकं लिङ्गम्; 'न तत्र सूर्यो भाति....तस्य भासा सर्वमिदं विभाति' (मुण्ड.उ. 2-2-11) इति प्रकरणे 'तथाऽक्षरात् सम्भवतीह विश्वम्' (मुण्ड.उ. 1-1-8) इति निरतिशयदीप्तियुक्तस्य वस्तुनः कारणत्वश्रवणात्। तत्प्रकरणस्य कारणविषयत्वं हि अविगीतम् । परमात्मविषयत्वे हि विमतिः । निरतिशयदीप्तियोगात् कारणभूतं ब्रह्म भवन् ज्योतिश्शब्दनिर्दिष्टोऽर्थः किं प्रसिद्धम् आदित्यादिज्योतिरेव ? इति अन्वयार्थः । **समस्तेति,** सावान्तरभेदसमष्टिव्यष्ट्यादिविवक्षया । **सर्वज्ञ**....इति, व्याप्तिग्रहणस्थानोपनिषत्प्रसिद्धं विशेषणम् । 'यः सर्वज्ञः' इत्यादि हि श्रूयते । **पुरुषोत्तमः** इति, अस्यामुपनिषदि पुरुषसूक्तप्रत्यभिज्ञानात् उक्तम् ।

संशयस्वरूपम्—'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इत्यत्र ज्योतिश्शब्दः किं प्रसिद्धादित्यादिज्योतिर्विषयः ? उत परमात्मपरः ?—इति । तदर्थं पूर्ववाक्ये द्युसम्बन्धितया निर्दिष्टस्य परमात्मनः किमत्र प्रत्यभिज्ञानं नास्ति ? उत अस्ति ? तदर्थं कौक्षेयज्योतिषैक्योपदेशः उपदेशभेदश्च किं प्रत्यभिज्ञाविरोधिनौ? उत अविरोधिनौ ? पूर्वस्मिन् ब्राह्मणवाक्ये गायत्रीशब्दः किं प्रसिद्धगायत्रीपरः ? उत न ?—इति विचारः ।

---

[1] पृष्ठेषूत्तमेष्वनुत्तमेषु—थ, [2] सन्देहः—इ,ध,न. [3] ज्योतिश्शब्दनिर्दिष्टः—वा. [4] भूतब्रह्म—वा. [5] समस्तवस्तु—द.

[सयुक्तिकं पूर्वपक्षस्वरूपम्]

किं युक्तम् ?

प्रसिद्धमेव ज्योतिः—इति ।

कुतः ?

प्रसिद्धवन्निर्देशेऽपि, आकाश[1]प्राणादिवत्[1] स्ववाक्योपात्तपरमात्मव्याप्तलिङ्गविशेषादर्शनात् परमपुरुषप्रत्यभिज्ञानासंभवात्, [2]कौक्षेयज्योतिषा[2] ऐक्योपदेशाच्च, प्रसिद्धमेव ज्योतिः, कारणत्वव्याप्तनिरतिशयदीप्ति[3]योगात्[3] [4]जगत्कारणं[4] ब्रह्म—इति ॥

[सिद्धान्तस्वरूपम्]

[5]एवं प्राप्ते[5], प्रचक्ष्महे—ज्योतिश्चरणाभिधानात् । द्युसम्बन्धितया निर्दिष्टं निरतिशयदीप्तियुक्तं ज्योतिः, परमपुरुष एव ।

कुतः ?

---

**पूर्वपक्षे फलफलिभावः**—कौक्षेयज्योतिषा ऐक्योपदेशः उपदेशभेदश्च यदा प्रत्यभिज्ञाविरोधिनौ ; [तथा] गायत्रीशब्दार्थश्च प्रसिद्धः [एव] ; तदा अस्मिन् वाक्ये परमात्मप्रत्यभिज्ञाभावात्, द्युसम्बन्धिज्योतिः प्रसिद्धाऽदित्यादिरेव—इति ।

**राद्धान्ते फलफलिभावः**—यदा तदुभयं न प्रत्यभिज्ञाविरोधि, गायत्रीशब्दश्च ब्रह्मपरः; तदा पूर्ववाक्योक्तद्युसम्बन्धिपरमात्मनः इह प्रत्यभिज्ञानात्, दिवःपरत्वेन उक्तं ज्योतिः परमात्मैव—इति (श्रु.प्र) ॥

**प्रसिद्धवत्** इति, अवान्तरसङ्गतिश्च सूचिता (श्रु.दी) । **स्ववाक्येत्यादिना**, **कौक्षेयेत्यादिना** च, स्ववाक्ये विरोधिलिङ्गाभावास्वानुकूललिङ्गसद्भावौ दर्शितौ भवतः । **प्रसिद्धमिति** । आदित्यादौ ज्योतिश्शब्दस्य प्रसिद्धत्वात् इति भावः । 'दीप्यते' इति श्रूयमाणा दीप्तिश्च रूपवत्पदार्थनिष्ठा भवति इत्यभिप्रेतम्; अस्याऽपि हेतोः परिहरिष्यमाणत्वात् ॥

**एवं प्राप्ते** इति । चरणत्वेन सर्वभूताभिधानं, कारणस्य जीववैलक्षण्यनिश्चायकम्; जीवमात्रस्य सर्वभूतपादवत्त्वानुपपत्तेः । तत एव पुरुषसूक्तप्रत्यभिज्ञापकतया देवताविशेषनिश्चयः। तद्द्वारा दीप्तियोगस्य भौतिकज्योतिष्ट्वे हेतुतापरिहारश्च भवति । 'पादोऽस्य' इति ऋचोऽयमर्थः:-

---

[1] प्राणशब्दवत्—वा. [2] कौक्षेयकज्योतिषा—वा. [3] योगाच्च—थ. [4] कारणं—द.
[5] प्राप्ते—आ, वा.

'पादोऽस्य [1]सर्वा[1] भूतानि। त्रिपादस्याऽमृतं दिवि' (छां.उ. 3-12-6)

इति, अस्यैव द्युसम्बन्धिनः चरणत्वेन [2]सर्वभूताभिधानात्[2]।

एतदुक्तं भवति—यद्यपि,

'अथ यदतः परो दिवो[3]ज्योतिः[3]' (छां.उ. 3-13-7)

इत्यस्मिन् वाक्ये, परम[4]पुरुषासाधारण[4]लिङ्गं नोपलभ्यते ; तथापि, पूर्ववाक्ये द्युसम्बन्धितया परम[5]पुरुषस्य निर्देशात्[5] इदमपि द्युसम्बन्धिज्योतिः स एवेति प्रत्यभिज्ञायते—इति।

कौक्षेयज्योतिषा [6]ऐक्योपदेशश्च[6]—फलाय तदात्मकत्वानुसन्धानविधिः—इति न कश्चिद्दोषः। कौक्षेयज्योतिषश्च तदात्मकत्व भगवता स्वयमेवोक्तम्—

'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः' (भ.गी. 15-14)

इति ॥२५॥

---

**सर्वा भूतानि** इति, कार्यजगदन्तर्गताचित्संसृष्टचेतनाः उच्यन्ते। **दिवि** इति, द्युशब्दस्तु, समस्तव्यष्टि-समष्टितत्त्वबहिर्भूताप्राकृतस्थानविशेषपरः ; 'विश्वतः पृष्ठेषु, सर्वतः पृष्ठेषु' इति श्रवणात्। विश्वशब्दविवरणं सर्वशब्दः इति गत्यभावलिङ्गम्। 'तथाक्षरात् संभवतीह-विश्वम्' इति जगदन्तर्वर्तिव्यष्टिजाते विश्वशब्दप्रयोगात् **'विश्व'**शब्दः व्यष्टिपरः। **सर्वशब्दः** परिशेषात् समष्टितत्त्वपरः। अत एव गद्येऽपि गदितं भाष्यकारैः—'समस्तं कार्यकारणजात-मतीत्य वर्तमाने' इति। त्रिपात्त्वञ्च—अप्राकृतैः भोग्य-भोगोपकरण-भोगस्थानविशेषैः.... सम्भवति। एवं च **'अस्य दिवि'** इति व्यतिरेकनिर्देशः अमृतत्वं च मुख्यं भवति (श्रु.प्र)।

**एतदुक्तमिति**। पूर्ववाक्ये द्युसम्बन्धिनः चरणाभिधाने सति, कथमस्य वाक्यस्य परमात्मपरत्वम्? एकविषयत्वात्—इति चेत्, कथमेकविषयत्वम्? [इत्यस्योत्तरमिदम्]।

**कौक्षेयेति**, पूर्वपक्षहेतुं परिहरति। **फलायेति**। 'चक्षुष्यः श्रुतो भवति' (छां.उ. 3-13-8) इत्युक्तफलाय इत्यर्थः। **तदात्मकत्वेति**। 'तदेतद्दृष्टं च श्रुतं चेत्युपासीत' (छां.उ. 3-13-8) इत्यत्र तदेतच्छब्दौ तदात्मकज्योतिर्विषयौ ; तदात्मकत्वेन प्रकृतत्वात् इति भावः। **न कश्चिद्दोष** इति। 'अन्नादो वसुदानः' 'चतुर्विधा भजन्ते माम्' 'सकलफलप्रदो हि विष्णुः' इत्यादिश्रुति-स्मृतिवशात् सकलफलप्रदस्य परमात्मनः, चक्षुष्यत्वादिविद्यानुगुणफल-हेतुत्वमत्र युक्तम् इत्यभिप्रायः। **कौक्षेयज्योतिष** इति। वेदनस्य यथार्थविषयत्वे सम्भवति, अतस्मिन् तद्दृष्टिरूपताऽऽश्रयणं परोक्तम् अयुक्तमिति भावः (श्रु.प्र) ॥२५॥

---

[1] विश्वा—द. [2] सर्वभूतानामभिधानात्—आ, इ, ग, ट, वा. [3] ज्योतिर्दीप्यते—वा.
[4] पुरुषसाधारणं—वा. [5] पुरुषनिर्देशात्—ध, न. [6] ऐक्योपदेशः—द.

# छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगमात्तथा हि दर्शनम् ॥ १-१-२६ ॥

पूर्वस्मिन् वाक्ये—

'गायत्री वा इदं सर्वम्' (छां.उ. 3-12-1)

इति गायत्र्याख्यं छन्दः अभिधाय,

'तदेतदृचाऽ[1]भ्यनूक्तम्[1]' (छां.उ. 3-12-5)

इत्युदाहृतायाः,

'[2]तावानस्य[2] महिमा' (छां.उ. 3-12-6)

इत्यस्याः ऋचोऽपि छन्दोविषयत्वात्, नाऽत्र परमपुरुषाभिधानम्—इति चेत्,

---

**गायत्री वेति।** [तत्रेयं मन्त्रानुपूर्वी—'गायत्री वा इदं सर्वं भूतं यदिदं किञ्च। वाग्वै गायत्री। वाग्वा इदं सर्वं भूतं गायति च त्रायते च। या वै सा गायत्री। इयं वाव सा येयं पृथिवी। अस्यां हीदं सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयते॥ या वै सा पृथिवी इयं सा यदिदमस्मिन् पुरुषे शरीरम्। अस्मिन् हीमे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्ते॥ यद्वै तत् पुरुषे शरीरमिदं वाव तत् यदिदमस्मिन् अन्तः पुरुषे हृदयम्। अस्मिन् एतदेव नाऽतिशीयन्ते॥ सैषा चतुष्पदा षड्विधा गायत्री। तदेतदृचाऽभ्यनूक्तम्॥ तावानस्य महिमा ततो ज्यायांश्च पूरुषः। पादोऽस्य सर्वा भूतानि, त्रिपादस्याऽमृतं दिवि॥ इति॥ (छां.उ. 3-12-1, 2, 3, 4, 5-6)]

---

[सूत्रार्थः। **छन्दसः**—'गायत्री वा इदं सर्वम्' इति पूर्वप्रकृतस्य गायत्र्याख्यस्य छन्दस एव, **अभिधानात्**—सर्वभूतपादवत्त्वेन श्रुतौ अभिहितत्वात्, **न**—ज्योतिश्शब्दनिर्दिष्टं परं ब्रह्म न भवितुमर्हति, **इति चेत्**—एवं कथनं तु, **न**—न समीचीनम्; **तथा**—गायत्रीगतधर्मसादृश्यं प्रकारीकृत्य, **चेतोऽर्पणस्य**—ब्रह्मणो ध्यानस्य, उपासनस्य, **निगमात्**—फलार्थमुपदेशात्, **तथा हि**—छन्दोवाचिनः शब्दस्य तदितरस्मिन् तत्साम्यं पुरस्कृत्य हि, **दर्शनम्**—अन्यत्राऽपि 'सैषा विराट्' इत्यादिप्रयोगोपलम्भः॥]

**प्रक्रमेऽस्मिंस्तु गायत्र्या अभिधानं न तेजसः।**
**इति चेन्न, परस्यैव तत्साम्योपास्तये तथा॥ (ब्र.प.मा. २६)**

---

[1] भ्युक्तम्—वा. [2] एतावानस्य—थ.

[1]तन्न[1] ; तथा चेतोऽर्पणनिगमात् । न 'गायत्री'शब्देन छन्दोमात्रम् इहाऽभिधीयते ; [2]छन्दोमात्रस्य[2] सर्वात्मकत्वानुपपत्तेः। अपि तु [3]ब्रह्मण्येव[3] गायत्रीचेतोऽर्पणम्, इह निगम्यते। ब्रह्मणि गायत्रीसादृश्यानुसन्धानं फलाय उपदिश्यते इत्यर्थः। सम्भवति च—

'पादोऽस्य [4]सर्वा[4] भूतानि, त्रिपादस्यामृतं दिवि' (छां.उ. 3-12-6)

[5]इति[5], चतुष्पदो ब्रह्मणः [6]चतुष्पदया गायत्र्या[6] च सादृश्यम्।

चतुष्पदा च गायत्री क्वचिद्दृश्यते। तद्यथा—

'इन्द्रश्शचीपतिः। वलेन पीडितः। दुश्च्यवनो वृषा। समित्सु सासहिः'

---

तन्नेति। छन्दोऽभिधानं न इत्यर्थः। छन्दोमात्रस्येति। पूर्वसूत्रे 'चरणाभिधानात्' इति स्वपक्षसाधकतया कण्ठोक्तस्य हेतोः पूर्वपक्षे अनुपपत्तिः सूत्रकाराभिप्रेता इति भावः। ब्रह्मणीति। अनुसन्धान-उपदेशशब्दाभ्यां चेतोऽर्पण-निगमशब्दौ विवृतौ। सादृश्यमिति। गायत्रीसादृश्यं चतुष्पात्त्वलक्षणम्। चतुष्पात्त्वमेव अनुसन्धेयम् (श्रु.प्र)। गायत्रीसादृश्यं च—छन्दोविचितिसूत्रेषु, 'अयं चतुष्पात् ऋतुभिः' इति पिङ्गलनागेन सूत्रकृता गायत्र्याख्यच्छन्दसः चतुष्पात्त्वस्योक्त्या, आद्यं छन्दो गायत्रं चतुष्पाद्भवति ऋतुभिरक्षरैः पादैः। तद्यथा—'इन्द्रः शचीपतिः' इत्यादि भाष्योक्तरीत्यैव उपपादनीयम् (गू.सं)।

['उक्ताऽत्युक्ता तथा मध्या प्रतिष्ठाऽन्या सुपूर्विका।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च।।' (वृ.र)।]

स्वतः अपरिच्छिन्नत्वेऽपि ब्रह्मणः, परिच्छिन्नैः पदार्थैः चतुष्पात्त्वोपदेशस्य उपासनार्थत्वाभावे वैयर्थ्यात्, प्रकरणे तस्य फलान्तराविधानाच्च. गायत्रीसादृश्यरूपस्य चतुष्पात्त्वस्य अनुसन्धेयता प्रतीयते। तत्र भूत-पृथिवी-शरीर-हृदयैः चतुष्पात्त्वे अभिहिते, ब्रह्मणः अपूर्णत्वास्थिरत्वशङ्काव्यावृत्त्यर्थं, पूर्णत्वाप्रवर्तित्वगुणकतयैव चतुष्पाद्ब्रह्मणः उपासनं विधीयते—इति। पूर्णत्वम्—अपरिच्छिन्नत्वम्। अप्रवर्तित्वम्-अचलत्वम्-स्थिरत्वम्, अनन्तस्थिरा च श्रीः मुक्तैश्वर्यम्।

चतुष्पदा चेति। 'त्रिपदा गायत्री' (तै.ब्रा. 3-2-1) इति हि श्रुतिः। तत् कथं

---

[1] न—ध, न.   [2] छन्दोमात्रस्य 'पादोऽस्य सर्वाभूतानि। त्रिपादस्याऽमृतं दिवि' इति—ङ.
[3] ब्रह्मण एव—श्रा.   [4] विश्वा—थ.   [5] इति सम्भवति च—ङ.   [6] चतुष्पदा गायत्र्या—न, चतुष्पदायाः गायत्र्याः—वा.

इति। तथा हि, अन्यत्राऽपि सादृश्यात् [1]छन्दोऽभिधायी[1] शब्दः अर्थान्तरे प्रयुज्यमानो दृश्यते। [2]यथा[2] संवर्गविद्यायाम्—

'ते वा एते [3]पञ्चाऽन्ये[3] पञ्चाऽन्ये दश सम्पद्यन्ते' (छां.उ. 4–3–8)

इत्यारभ्य,

'सैषा [4]विराडन्नात्[4]' (छां.उ. 4–3–8)

इत्युच्यते ॥२६॥

इतश्च गायत्रीशब्देन [5]ब्रह्मैव[5] अभिधीयते—

## भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ १–१–२७ ॥

[योग्यतायाः अर्थनिर्णायकत्वम् ]

भूत-पृथिवी-शरीर-हृदयानि निर्दिश्य,

---

चतुष्पात्त्वम्? [इत्यत्रोत्तरमिदम्]। **तथा हीति।** [अनेन] 'गायत्री'शब्दस्य कथं मुख्यार्थाविवक्षा? इति शङ्कायाम्, सूत्रखण्डं व्याचष्टे। वाय्वग्निसूर्यचन्द्रसलिलानि प्राणवाक्चक्षुःश्रोत्रमनांसि च दशसंख्यत्वात् विराट्। सदृशे सदृशान्तरवाचिशब्दप्रयोगः श्रुतिसमाधिः—इत्यर्थः। **अन्नात्** अन्नं च तत् अत्ति च इति, अन्नात् (श्रु.प्र)। [रङ्गरामानुजभाष्ये तु 'अन्नादी' इति पदम् उपनिषद्गतं कृत्वा, 'अन्नमत्तीति अन्नादी' इत्येव व्याख्यातम्। तत्रत्यः उपनिषत्पाठोऽपि— 'ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तः तत्कृतम्' इत्यादिरूपः श्रीभाष्यगतात्पाठाद्विलक्षणः]॥२६॥

**भूतादीति,** पूर्वस्मिन् सूत्रे 'पादोऽस्य' इति मन्त्रोक्तसर्वात्मकत्वानुपपत्तिरुक्ता। अत्र तु 'गायत्री वा' इत्यादिब्राह्मणोक्तचतुष्पात्त्वानुपपत्तिरुच्यते।

**भूतम्**—आत्मवर्गः। **पृथिवी**—अयं लोकः—कर्मार्जनभोगस्थानम्। **शरीरम्**—

---

[सूत्रार्थः। **भूतादिषु**—भूत-पृथिवी-शरीर-हृदयेषु चतुर्षु, **पादव्यपदेशस्य**—श्रुतिगतस्य 'चतुष्पदा' इति चरणत्वव्यवहारस्य, **उपपत्तेश्च**—ब्रह्मण्येव सम्भवादपि हेतोः, **एवम्**—गायत्रीसादृश्येन गायत्रीपदाभिधेयं ब्रह्मैव, ज्योतिश्शब्दनिर्दिष्टम्; न तु लौकिकं तेजः॥]

भूतादिपादवत्त्वस्य व्यपदेशोपपत्तितः।
गायत्रीशब्दनिर्दिष्टं ज्योतिर्ब्रह्मेति गम्यते॥ (ब्र.प.मा. २७)

---

[1] छन्दोऽभिधायि—वा. [2] यथा च—ध. [3] पञ्च चाऽन्ये—ध. [4] विराडन्नादिः—ध. विराडन्नादी—वा. [5] ब्रह्म—थ.

'सैषा चतुष्पदा' (छां.उ. 3-12-5)

इति व्यपदेशः, ब्रह्मण्येव गायत्रीशब्दाभिधेये उपपद्यते ॥२७॥

## उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ १-१-२८ ॥

[उपदेशाकारवैलक्षण्यतः पूर्वोत्तरवाक्ययोः अनैकार्थ्यम् इति शङ्का, तत्परिहारश्च]

[1]पूर्ववाक्ये[1],

'त्रिपादस्याऽमृतं दिवि' (छां.उ. 3-12-6)

इति, दिवः अधिकरणत्वेन निर्देशात्, इह च 'दिवः परः' इति, अवधित्वेन निर्देशात्, उपदेशस्य [2]भिन्नरूपत्वेन[2], पूर्ववाक्योक्तं ब्रह्म, परस्मिन् न प्रत्यभिज्ञायते—इति चेत्,

[3]तन्न[3]; उभयस्मिन्नपि उपदेशे अर्थस्वभावैक्येन, प्रत्यभि[4]ज्ञायाः अविरोधात्[4]; यथा 'वृक्षाग्रे श्येनः' 'वृक्षाग्रात् परतः श्येनः' इति। तस्मात्, परमपुरुष एव निरतिशयतेजस्कः, 'दिवः परो ज्योतिर्दीप्यते' इति प्रतिपाद्यते।

---

तदुपकरणम्। हृदयम्—आत्मनः स्थित्यनुगुणः प्रदेशविशेषः। एवम् उपक्रमस्यैव परमात्मपरत्वं दर्शितम् (श्रु प्र) ॥२७॥

**यथा वृक्षाग्र** इति। सप्तमी अन्तर्बहिरधरोर्ध्वभागस्थितिसाधारणी। पञ्चमी तु उपरिस्थित्यसाधारणी। अतः उभाभ्यां स्थानाविशेषात् उपरिस्थितिरेव विवक्षितेति भावः ॥

---

[सूत्रार्थः। **उपदेशयोः**—'अमृतं दिवि' 'परो दिवः' इति वाक्ययोः, **भेदात्**—दिवि अधिकरणत्वावधित्वबोधनरूपप्रकारवैलक्षण्यात्, **न**—ज्योतिःपदेन ब्रह्मणः न प्रतिसन्धानसम्भवः, **इति चेत्**—एवमाशङ्कनम, **न**—युक्तं न भवति, **उभयस्मिन्नपि**—सप्तम्यन्तपञ्चम्यन्त'दिव्'शब्दघटिते द्विविधेऽप्युपदेशे, **अविरोधात्**—बोध्यार्थयोः वैयधिकरण्याभावेन प्रतिसन्धानविरोधाभावात् ॥]

दिवीत्येकत्र सप्तम्या पञ्चम्या दिव इत्यतः।
नोक्तिभेदात्परो मैवमुभयत्राविरोधतः ॥ (ब्र.प.मा. २८)

---

[1] पूर्वस्मिन् वाक्ये—द. [2] भिन्नत्वेन—श्रा. [3] न—ध, न. [4] ज्ञानविरोधात्—द.

[अधिकरणार्थनिगमनम् ]

'एतावानस्य महिमा। अतो ज्यायांश्च पूरुषः।
पादोऽस्य विश्वा भूतानि। त्रिपादस्याऽमृतं दिवि॥' (तै.आर.पु. 3–12–3)
इति प्रतिपादितस्य, चतुष्पदः परमपुरुषस्य,

'वेदाहमेतं पुरुषं महान्तम्। आदित्यवर्णं तमसस्तु पारे' (तै.आर.पु. 3-12-16)
[1]इत्यभिहिता[1]प्राकृतरूपस्य तेजोऽपि अप्राकृतमिति, तद्वत्तया स एव ज्योतिश्शब्दाभिधेयः इति निरवद्यम् ॥२८॥

॥ इति ज्योतिरधिकरणम् ॥१०॥

---

एतावानिति। [अनेन] न खलु आत्मस्वरूपे दीप्तिरस्ति ; तत् कथं 'ज्योतिर्दीप्यते' इत्युक्तज्योतिश्शब्दाभिधेयत्वम्? इति शङ्कां परिहरन्, अधिकरणार्थं निगमयति। पुरुषसूक्तवाक्योपादानं विग्रहविशेषज्ञापनार्थम् (श्रु.प्र) ॥२८॥

[सूत्राणि—1. ज्योतिश्चरणा 2. छन्दोऽभिधाना
3. भूतादिपाद 4. उपदेशभेदा]

॥ इति ज्योतिरधिकरणम् ॥२०॥

---

[1] इत्यत्राभिहिता—ध.

## इन्द्रप्राणाधिकरणम् ॥ १-१-११ ॥ (सू. 29-32)

[अधिकरणार्थः—इन्द्रत्वेनोपास्यः परमात्मैव ; न तु शचीपतिरिन्द्रः ।]

[प्रतर्दनविद्या (कौषी.उ. 3)]

[अवान्तरसङ्गतिः]

निरतिशयदीप्तियुक्तं ज्योतिश्शब्दाभिधेयं प्रसिद्धवत् निर्दिष्टम्, परमपुरुष एव—इत्युक्तम् । इदानीं कारणत्वव्याप्तामृतत्वप्राप्त्युपायतया उपास्यत्वेन [1]श्रुतः[1] इन्द्र-[2]प्राणादि[2]शब्दाऽभिधेयोऽपि, परमपुरुष एव इत्याह—

## प्राणस्तथाऽनुगमात् ॥ १-१-२९ ॥

[विषयवाक्यप्रतिपादनम्]

कौषीतकि(की)ब्राह्मणे प्रतर्दनविद्यायाम्—

---

**निरतिशयेति**, अवान्तरसङ्गतिमाह । **ज्योतिरिति** । आकाश-प्राण-तेजसां क्रमोपपत्तेः, 'अत एव प्राणः' इत्यस्याऽनन्तरं, 'ज्योतिश्चरणाभिधानात्' इत्यधिकरणं सङ्गतमिति भावः । **प्रसिद्धवदिति** । अनेन अधिकरणयोः पौर्वापर्यनियमः उक्तः । 'सर्वाणि ह वा' इति, पूर्वस्मात्पूर्वाधिकरणद्वयविषयवाक्ययोः प्रसिद्धवन्निर्देशो दृश्यते, अत्रापि 'अथ यदतः' इति यच्छब्देन । तस्मात् ज्योतिरधिकरणं पूर्वाधिकरणद्वयेन सङ्गतम् । एवं सति उत्तराधिकरणस्य ज्योतिरधिकरणानन्तरभावित्वं प्राप्तम् इति भावः । **कारणत्वव्याप्तेति**, अवान्तरपेटिकानुगतमर्थमाह । पूर्वाधिकरणे परमपुषस्य ज्योतिश्शब्दाभिधेयत्वमुक्तम्, तदयुक्तम्; परमपुरुषादन्यस्य इन्द्रादिशब्दवाच्यस्य, वेदान्तप्रतिपाद्यत्वात्—इति शङ्कया सङ्गतिरित्यर्थः । तत्र कारणत्वाक्षेपकलिङ्गभूयस्त्वम् अनुसन्धेयम् (श्रु.प्र) ॥

---

[सूत्रार्थः । **प्राणः**—उपास्यवाचिभ्यामिन्द्र-प्राणशब्दाभ्यां निर्दिष्टः अर्थः, **ब्रह्म**—जिज्ञास्यत्वाभिमतं परं ब्रह्मैव, **तथाऽनुगमात्**—पूर्वोक्तप्रकारवत्तया उत्तरवाक्ये सम्बद्धत्वेन प्रतिपादनात् ।]

इन्द्रप्राणपदोद्दिष्ट इन्द्रात्मा ब्रह्म चेष्यते ।
आनन्दद्यामृतशब्दाद्यैः उपसंहारदर्शनात् ॥ (ब्र.प.मा. २९)

---

[1] श्रुत इति—य. [2] प्राण—ध.

'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम,
युद्धेन च पौरुषेण च' (कौषी.उ. 3-1)

इत्यारभ्य,

'वरं वृणीष्व' (कौषी.उ. 3-3)

इति वक्तारम् इन्द्रं प्रति,

'त्वमेव [1]मे वरं[1] वृणीष्व, यं त्वं मनुष्याय हिततमं मन्यसे' (कौषी.उ. 3-3)

इति [2]प्रतर्दनेनोक्ते[2],

'स होवाच, प्राणोऽस्मि प्रज्ञात्मा, तं मामायुरमृतमित्युपास्व' (कौषी.उ. 3-14)

इति श्रूयते ॥

[अधिकरणाङ्गभूतः संशयः]

[3]तत्र[3] संशयः—किमयं हिततमोपासनकर्मतया इन्द्रप्राणशब्दनिर्दिष्टः जीव एव ? उत तदतिरिक्तः परमात्मा ?—इति ॥

---

**वरं वृणीष्वेतीति**। अत्र मुद्रितकोशेषु, 'प्रतर्दनो ह वै....पौरुषेण च। तं हेन्द्र उवाच। वरं ते ददानीति। स होवाच प्रतर्दनः। त्वमेव मे वरं वृणीष्व। यं त्वं मनुष्याय हिततमं मन्यसे' इत्यानुपूर्वी दृश्यते। अत्र पूर्वं 'वरं वृणीष्व' इति वाक्याभावे, 'वरं ददानीति' वाक्यमात्रसत्त्वे, 'वरं देहि' इत्येव ब्रूयात् प्रतर्दनः; न तु 'त्वमेव मे वरं वृणीष्व' इति। अतः तदात्वे लिखितकोशेषु उपलब्धः भाष्यादृतः 'वरं वृणीष्व' इति पाठ एव युक्तः—इति प्रतिभाति (गू.सं) ॥

**इन्द्रप्राणशब्दनिर्दिष्ट** इति। उपक्रमे—'इन्द्रस्य' इति इन्द्रशब्देन, 'प्राणोऽस्मि प्रज्ञात्मा' इति प्राणशब्देन च निर्दिष्टत्वात्, एवमुक्तम्। प्राणशब्दस्य परमात्मलिङ्ग-प्रतिपादकवाक्यस्थत्वेन सिद्धान्तहेतुद्योतकत्वात्, सूत्रे 'प्राण'शब्देन धर्मी निर्दिष्टः; न तु 'इन्द्र'शब्देन। 'इन्द्र'शब्दनिर्दिष्टस्य विचारविषयत्वम् आर्थम्—इति सूत्रकाराभिप्रायः इति भावः।

**संशयाकारः**—कारणवाक्यप्रतिपाद्यं ब्रह्म किं प्रसिद्धजीवभावः इन्द्रः ? उत परमात्मा ? इति विचारः। तदर्थं हिततमोपासनकर्मतया इन्द्रप्राणशब्दनिर्दिष्टः किं प्रसिद्धः इन्द्रः ? उत परमात्मा ?—इति। तदर्थम् आनन्दादिगुणाः किं गौणाः ? उत मुख्याः ?—इति। तदर्थं किं उपक्रमावगतत्वाष्ट्रहननादि लिङ्गानुरोधेन आनन्दादिवर्णनम् ? उत आनन्दादि

---

[1] वरं—थ, ६. [2] प्रतर्दनोक्तः—वा. [3] अत्र—थ.

[सयुक्तिकः पूर्वपक्षः]

किं युक्तम् ?

जीव एव—इति ।

कुतः ?

इन्द्रशब्दस्य जीवविशेष एव प्रसिद्धेः, तत्समानाधिकरणस्य [1]प्राणशब्दस्याऽपि[1] तत्रैव [2]वृत्तेः[2] । अयम् इन्द्राभिधानो [3]जीवः[3], प्रतर्दनेन—

'त्वमेव मे वरं वृणीष्व, यं त्वं मनुष्याय हिततमं मन्यसे' (कौषी.उ. 3-3)
इत्युक्तः,

'माम्....उपास्व' (कौषी.उ. 3-14)
इति, स्वात्मोपासनं हिततमम् उपदिदेश । हिततमश्च अमृतत्वप्राप्त्युपाय एव । जगत्कारणोपासनस्यैव अमृतत्व[4]प्राप्तिहेतुता[4],

'तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये' (छां.उ. 6-14-2)
[5]इत्यवगता[5] । अतः प्रसिद्धजीवभावः इन्द्र एव कारणं ब्रह्म, इत्याशङ्कायाम्,

---

लिङ्गानुगुणतया त्वाष्ट्रहननादिवर्णनम् ? इति । तदर्थं 'माम् उपास्व' इति किं स्वोपासनमुच्यते ? उत स्वावस्थपरमात्मोपासनम् ? इति विचारः ॥

**पूर्वपक्षे फलफलिभावः**—'मामुपास्व' इति यदा स्वोपासनोक्तिः; तदा त्वाष्ट्रवधाद्यनुगुणम् आनन्दादेः वर्णनीयत्वेन, आनन्दादिगुणानाम् अमुख्यत्वात्, हिततमोपासनकर्मतयोक्तः इन्द्रः इति, जगत्कारणं प्रसिद्धजीवभावः इन्द्रः—इति ॥

**राद्धान्ते फलफलिभावः**—'मामुपास्व' इति यदा स्वावस्थपरमात्मोपासनोपदेशः; तदा आनन्दादिगुणानुगुणं त्वाष्ट्रवधादेः वर्णनीयत्वात्, आनन्दादिगुणानां मुख्यत्वात्, हिततमोपासनकर्मभूतेन्द्रप्राणशब्दनिर्दिष्टः परमात्मे—इति, सर्ववेदान्तवेद्यं जगत्कारणं ब्रह्म, —इति ॥

**प्रसिद्धेरिति** । अनेन जीवमात्र(सामान्य)पक्षस्य अनुदयः सूचितः । **तत्समानाधिकरण-स्येति,** प्राणपदस्य कथं जीवपरत्वम्? [इत्यत्रोत्तरमिदम्]। अनेन प्राधान्येन प्राणपरत्वशङ्कानुत्थानमपि अर्थात् सूचितम् । **जगत्कारणेति,** मुमुक्षूपास्यत्वस्य कारणत्वव्याप्तिं दर्शयति । **अतः** इति, पूर्वपक्षोपसंहारः ॥

---

[1] अपि प्राणशब्दस्य—थ. [2] प्रवृत्तेः—द. [3] हि जीवः—वा. [4] प्राप्त्युपायता—इ, वा. प्राप्त्युपायतया—ध. प्राप्तिहेतुत्वं—थ. [5] इत्यवगतम्—थ. ध.

[सिद्धान्तारम्भः]

अभिधीयते—प्राणस्तथाऽनुगमात्—इति। अयम् 'इन्द्रप्राण' शब्दनिर्दिष्टः न जीवमात्रम्; अपि तु जीवादर्थान्तरभूतं [1]परं ब्रह्म[1]।

'स एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृतः (कौषी.उ. 3-62) इति इन्द्र-प्राणशब्दाभ्यां प्रस्तुतस्य, आनन्दाजरामृतशब्दसामानाधिकरण्येन अनुगमो हि तथा सत्येव उपपद्यते ॥२९॥

[उक्तस्य सिद्धान्तार्थस्य आक्षेपपूर्वकं स्थिरीकरणम्]

## न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥ १-१-३० ॥

**अनुगमः**—पूर्ववाक्यप्रकृतस्य उत्तरवाक्यसम्बन्धः। स्ववाक्यानभिव्यक्तस्य सिद्धान्त-हेतोः उत्तरवाक्याभिव्यक्ततया **अनुगमात्** इत्युक्तम्। आकाशाधिकरणे, ज्योतिरधिकरणे च सिद्धान्तहेतोर्हि स्ववाक्यपूर्ववाक्याभिव्यक्ततया 'अनुगमात्' इत्यनुक्तिः। **आनन्दोऽजरेति**। [अनेन] सौत्रं **तथा**पदं, साधकाकारपरामर्शित्वेन व्याचष्टे। **प्राणः**—परमात्मा। **तथाऽनुगमात्**—परमात्मत्वानुगुण्येन अनुगमात्; इति सूत्रयोजना। **तथा सत्येवेति**। इन्द्रप्राणशब्दनिर्दिष्टे परस्मिन् ब्रह्मणि सत्येव इत्यर्थः। प्राणः—परमात्मा। तथाऽनुगमात्—परमात्मतया अनुगमात्—इति योजना। अनुगमक्रियाविशेषणं **तथा**शब्दः। बुद्धिस्थसाध्यसाधकधर्मवत्तया अनुगमो विवक्षितः इत्यभिप्रायः (श्रु.प्र) ॥२९॥

[सूत्रार्थः। **प्राणः**—इन्द्र-प्राणशब्दाभ्यां निर्दिष्टः अर्थः, **न**—उपास्यः परमात्मा न भवति, **वक्तुः**—'प्राणोऽस्मि प्रज्ञात्मा' इति वक्तुः प्रज्ञातजीवभावस्य इन्द्रस्य, **आत्मनः**—स्वस्यैव (उपास्यतायाः), **उपदेशात्**—'मामुपास्व' इति श्रुत्या ज्ञापनात्, **इति चेत्**—एवं कथनं त्वयुक्तमेव, **हि**—यतः, **अस्मिन्**—प्रकरणेऽस्मिन् (उपक्रममारभ्य उपसंहारपर्यन्तम्), **अध्यात्मसम्बन्धस्य**—जीवात्मनः सकाशाद्भिन्नस्य परमात्मनः असाधारणधर्माणां सम्बन्धस्य, **भूमा**—बहुत्वमेवोपलभ्यते।]

इन्द्रस्य वक्तुः स्वस्यैव मामुपास्वेति चोदनात्।
इन्द्र एवेति चेन्नात्र ब्रह्मानन्तगुणान्वयात् ॥ (ब्र.प.मा. ३०)

[1] ब्रह्म द.

[सिद्धान्तिनं प्रति मध्ये पूर्वपक्षः, समाधानं च]

यदुक्तम्—'इन्द्रप्राण'शब्दनिर्दिष्टस्य,

'आनन्दोऽजरोऽमृतः' (कौषी.उ. 3–62)

इत्यनेन ऐकार्थ्यात्, अयं परं ब्रह्म—इति,

तत्, नोपपद्यते ;

'मामेव विजानीहि' (कौषी उ 3–8)

'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व' (कौषी.उ. 3–14)

इति वक्ता हि इन्द्रः,

'त्रिशीर्षाणं त्वाष्ट्रमहनम्' (कौषी.उ. 3–9)

इत्येवमादिना, त्वाष्ट्रवधादिभिः प्रज्ञातजीवभावस्य स्वात्मन एव, [1]उपास्यतां[1] प्रतर्दनाय उपदिशति। अतः उपक्रमे 'जीवविशेषः' [2]इत्यवगते सति[2],

'आनन्दोऽजरोऽमृतः' (कौषी.उ. 3–62)

[3]इत्यादिभिः[3] उपसंहारः, तदनुगुण एव वर्णनीयः—इति चेत्,

परिहरति—अध्यात्मसम्बन्धभूमा ह्यस्मिन्—इति। आत्मनि यः [4]सम्बन्धः, सः—अध्यात्मसम्बन्धः[4]। तस्य भूमा—भूयस्त्वम्, बहुत्वम् इत्यर्थः। आत्मनि आधेयतया सम्बध्यमानानां बहुत्वेन, सम्बन्धबहुत्वम्। तच्च अस्मिन्—वक्तरि परमात्मन्येव हि सम्भवति।

---

**यदुक्तमिति,** निषेध्याध्याहारेण नञर्थमाह।

**त्वाष्ट्रवधादीत्यत्र 'आदि'शब्देन** सालावृकयतिप्रदान-दैत्यातिसन्धान-पौलोमनिरासेन्द्र-शब्दाः विवक्षिताः। **अत इति।** उपक्रमो बलीयान् इत्यर्थः।

**परिहरतीति,** 'विकारशब्दान्नेति चेन्न' इतिवत्, [प्रकृत]सूत्रे सिद्धान्तखण्डे [चेन्न इति] निषेधवाचिशब्दाभावात्, खण्डान्तरस्य सिद्धान्तपरत्वद्योतनाय। **भूमशब्दः भूयस्त्वशब्देन** व्याख्यातः। 'भूम'शब्दप्रकृतिं दर्शयितुं, **बहुत्वम्** इत्युक्तम्। आपेक्षिकं हि बहुत्वम्। पूर्वपक्षयुक्तिबहुत्वादपि बहुतरम् इति भावः।

---

[1] उपास्यत्वं—ध. [2] इत्येव गम्यते—ध, इत्यवगम्यते—न. [3] इति—द.

[4] सम्बन्धः—द.

'तद्यथा रथस्यारेषु नेमिरर्पिता, नाभावरा अर्पिताः, एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः, प्रज्ञामात्राः प्राणेऽर्पिताः' (कौषी.उ. 3-61)

'स एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृतः' (कौषी.उ. 3-62)

इति 'भूतमात्रा'शब्देन अचेतनवस्तुजातम् अभिधाय, 'प्रज्ञामात्रा'शब्देन तदाधारतया चेतनवर्गं चाऽभिधाय, तस्याप्याधारतया प्रकृतम् इन्द्र[1]प्राण[1]शब्दाभिधेयं निर्दिश्य, तमेव

'आनन्दोऽजरोऽमृतः' (कौषी.उ. 3-62)

इत्युपदिशति । तदेतत् चेतनाचेतनात्मककृत्स्नवस्त्वाधारत्वं, जीवात् [2]अर्थान्तरभूते[2] [3]अस्मिन्[3]—परमात्मन्येव उपपद्यते इत्यर्थः ॥

[मुखान्तरेण योजनम्]

अथवा, 'अध्यात्मसम्बन्धभूमा ह्यस्मिन्' ।

परमात्मासाधारणधर्मसम्बन्धः—अध्यात्मसम्बन्धः । तस्य भूमा—[4]बहुत्वं हि[4] अस्मिन् प्रकरणे विद्यते । तथाऽहि ; प्रथमम्,

---

**तद्यथेति**, आधेयतया सम्बन्धे श्रुतिमाह । न केवलम् उपसंहारवचनमात्रम् ; किन्तु पूर्वमप्यस्तीति, बहुत्वाभिप्रायेण 'स एष प्राण एव' इत्यादिकमुपात्तम् । **प्रज्ञामात्रा....तयेति** । न हि इन्द्रियाणां पृथिव्यादिभूताधारत्वं युक्तम् इति भावः । **चेतनवर्गमिति** । प्राकरणिक-प्रज्ञात्मशब्दैकवचनं जात्यभिप्रायम् इति भावः । **तस्याप्याधार....निर्दिश्येति** । 'ता वा एताः' इति पूर्ववाक्योक्ते परस्परसाकाङ्क्षत्वे, दृष्टान्तत्वं न घटते ; प्रज्ञामात्राणाम् आधारान्तरकथनात् इति भावः । **उपदिशतीति** । एवम् अर्थविरोध-दृष्टान्तदार्ष्टान्तिकभाववैधर्म्य-मुख्यत्वप्राकरणिक-प्रयोगसाधारण्यैः अनुगृहीतस्य श्रुतिवाक्यस्यार्थः उपन्यस्तः ॥

[उपक्रमस्वारस्यं पूर्वपक्षस्थापकयुक्तिः ।] 'स एष प्राण एव' इत्येतद्वाक्योदाहरणं वाक्यान्तराण्यपि ब्रह्मपराणि सन्ति इति प्रदर्शनार्थम् । तेन उपक्रमस्वारस्यादपि समुदायस्वारस्यं प्रबलम्—इति फलितम् । एवम् अवयविस्वारस्यप्राबल्यस्य अर्थसिद्धत्वादपि कण्ठोक्तत्वं युक्तमिति, मुखान्तरेण [द्वितीया योजना] **अथवेति** । पूर्वयोजनायाम्, **अध्यात्मशब्दस्य** आत्मनि इत्यर्थः । अस्यां तु [योजनायां], आत्मनि वर्तमानपरः **अध्यात्मशब्दः** । 'उपसंहार-वाक्यम् उपक्रमबाधितम्' इति पूर्वपक्षिणोक्तम् । तत्रेदमुत्तरमुक्तं भवति, उपक्रमोपसंहारौ वाक्यावयवौ । तयोः अवयवभूतयोः परस्परविरोधे, उपक्रमप्राबल्यम् ; न तु अवयविविरोधे ।

---

[1] प्राणादि—द. [2] अर्थान्तरभूते हि—द. [3] तस्मिन्—ध, न. [4] बहुत्वं—ध, न.

'त्वमेव मे वरं वृणीष्व, यं त्वं मनुष्याय हिततमं मन्यसे' (कौषी.उ. 3-3) इति,

'माम्........उपास्व' (कौषी.उ. 3-14)

[1]इति च[1], परमात्मासाधारणमोक्षसाधनोपासनकर्मत्वं प्राणशब्दनिर्दिष्टस्य इन्द्रस्य प्रतीयते। [2]तथा[2],

'एष[3]एव[3] साधु कर्म कारयति तं, यमेभ्यो लोकेभ्य उन्निनीषति' (कौषी.उ.3-64)

'एष एवाऽसाधु कर्म कारयति तं, यमधो निनीषति' (कौषी उ. 3-65)

इति, [4]सर्वस्य कर्मणः[4] [5]कारयितृत्वं च[5] परमात्मधर्मः । तथा,

'तद्यथा रथस्यारेषु नेमिरर्पिता, नाभावरा अर्पिताः, एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः, प्रज्ञामात्राः प्राणेऽर्पिताः (कौषी.उ. 3-61)

इति सर्वाधारत्वं च, तस्यैव धर्मः । तथा,

[6]स एव[6] प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः' (कौषी.उ. 3-62)

[7]इत्येतेऽपि[7], परमात्मन एव धर्माः ।

'एष लोकाधिपतिः एष [8]सर्वेशः[8]' (कौषी.उ. 3-66)

---

अत्र तु अनेकावान्तरवाक्यैः पर्यालोचितैः प्रतिपन्नस्य महावाक्यार्थस्य अवयविनः विरोधे, अवयवभूतोपक्रमः दुर्बलः । यथा 'गङ्गायां घोषः प्रतिवसति' इत्यादिषु , 'घोषः, प्रतिवसति' इति पदाभ्यां प्रतिपन्नवाक्यार्थम् उपक्रमस्थ'गङ्गा'पदं न बाधते ; अपि तु स्वयं तदनुगुणार्थं भवति, तद्वत्—इति । **तथा हि** इत्यादिना, अयं सर्वोऽप्यर्थः अभिप्रेतः, परमात्मासाधारण-धर्मभूयस्त्वं च दर्शितम् । **हिततमं मन्यसे** इति वाक्यम्, त्वाष्ट्रवधादेरप्युपक्रमगतम्। उप-क्रमोपक्रमस्याऽपि महावाक्यान्तर्भावात् तदुक्तिः ; न तु तावन्मात्रस्य साधकत्वाभिप्रायेण (श्रु.प्र) । **लोकाधिपति :**—लोकस्वामी । **सर्वेशः**—सर्वनियन्ता । ननु 'पा-रक्षणे' (पा.धा.पा.1056) इति धातोः पतिशब्दः ; तत्कथम् अत्र शेषिवाचित्वम् ? उच्यते । न हि सर्वत्र अवयव-शक्तिरेव ; रूढिशक्तिरप्यस्ति । अन्यथा 'गमेर्डोः' (उणादि.सू. 225) इति व्युत्पत्त्या 'गो'-शब्दस्य सर्वजङ्गमवाचित्वप्रसङ्गात् । स्थितायाः गोः अवाचकत्वप्रसङ्गाच्च । अतः शेषिणि

---

[1] इति—द [2] तथा हि—द [3] ह्येव—आ,इ,ग,थ, [4] सर्वकर्मणः—द
[5] कारयितृत्वं—वा [6] एष—थ, [7] इत्येते—द [8] सर्वेश्वरः—वा

इति च परमात्मन्येव सम्भवति । तदेवम्, अध्यात्मसम्बन्धभूम्नः अत्र विद्यमानत्वात् परमात्मैव अत्र 'इन्द्रप्राण'शब्दनिर्दिष्टः ॥३०॥

[इन्द्रेण स्वात्मनः उपास्यत्वोपदेशसाङ्गत्यम्]

कथं तर्हि प्रज्ञातजीवभावस्य इन्द्रस्य, स्वात्मनः [1]उपास्यत्वोपदेशः[1] [2]सङ्गच्छते[2]? [3]तत्राऽऽह[3]—

## शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ १-१-३१ ॥

प्रज्ञातजीवभावेन इन्द्रेण,

'मामेव विजानीहि' (कौषी.उ. 3-8)

'[4]माम्[4]....उपास्व' (कौषी.उ. 3-14)

इति, [5]उपास्यस्य ब्रह्मणः[5] स्वात्मत्वेनोपदेशोऽयं, न प्रमाणान्तरप्राप्तस्वात्मावलोकनकृतः; अपि तु [6]शास्त्रेण[6] स्वात्मदृष्टिकृतः ॥

---

'पति'शब्दः रूढः । अन्यथा पितुः संरक्षके पुत्रेऽपि, पितरं प्रति 'पति'शब्दप्रयोगप्रसङ्गादिति । तदेवम् इति सूत्रार्थं निगमयति ॥३०॥

कथं तर्हीति । 'इदि-परमैश्वर्ये' (पा.धा.पा. 63) इत्यादिप्रकृति-प्रत्ययविभागेन परमात्मपरत्वम् इन्द्रादिशब्दानामयुक्तम् ; त्वाष्ट्रवधादिलिङ्गनिर्वाहानुपपत्तेः । तत्कथम् 'इन्द्र'-शब्देन परमात्मनिर्देशः? इति भावः । तत्राहेति । पूर्वं परमात्मपरत्वसाधकहेतुरुक्तः; पूर्वपक्षयुक्तेः कः परिहारः ? इत्यपेक्षायां सूत्रावतारः—इत्यर्थः (श्रु.प्र.) ।

कीदृशः उपदेशः ? [इत्यत्रोत्तरम्] प्रज्ञातेति । न प्रमाणान्तरेति, 'शास्त्रदृष्टि'-

---

[सूत्रार्थः । उपदेशः—जीवभूतेन्द्रकर्तृकः 'मामुपास्व' इति स्वात्मकर्मकोपास्यत्वोपदेशः, वामदेववत्—वामदेवकृतः स्वात्मनि परमात्माभेदव्यवहार इव, शास्त्रदृष्ट्या तु—'सर्वात्मा' 'तत्त्वमसि' इत्यादिशास्त्रपरिदृष्टार्थस्य जीव-परयोः शरीरात्मभावकृताभेदस्याऽनुसन्धानेनैव प्रवृत्तः ॥]

जगच्छरीरं ब्रह्मेति शास्त्रज्ञानात्तु चोदना ।
वामदेवादिवच्चात्र मामुपास्वेति वज्रिणाः । (ब्र.प्र.मा. ३१)

---

[1] उपास्यत्वेन उपदेशः —द [2] सङ्गंस्यते —द [3] इत्यत्राऽऽह—ध, न [4] मामेव—ध, [5] उपास्यब्रह्मणः—ध [6] शास्त्रेणैव—वा

[जीववाचिशब्दानां परमात्मपर्यन्तत्वसमर्थनम्]

'एतदुक्तं भवति—

'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छां.उ. 6-3-2)

'ऐतदात्म्यमिदं सर्वम्' (छां.उ. 6-8-7)

'अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा' (तै.आर. 3-11-3)

'य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद, यस्यात्मा शरीरं य आत्मानमन्तरो [1]यमयति[1] (बृ.उ.मा.पा. 5-7-26)

'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' (सुबा.उ. 7) इत्येवमादिना शास्त्रेण, जीवात्म[2]शरीरकं[2] परमात्मानमवगम्य, जीवात्मवाचिनाम् 'अहं-त्व-मादि[3]शब्दानामपि[3] परमात्मन्येव पर्यवसानं ज्ञात्वा, 'मामेव विजानीहि' 'मामुपास्व' इति स्वात्मशरीरकं परमात्मानमेव उपास्यत्वेन [4]उपदिदेश[4]—इति।

वामदेववत्— यथा वामदेवः परस्य ब्रह्मणः सर्वान्तरात्मत्वं, सर्वस्य च तच्छरीरत्वं शरीरवाचिनां [5]च शब्दानां[5] शरीरिणि पर्यवसानं पश्यन्, 'अहम्' इति स्वात्मशरीरकं ब्रह्म निर्दिश्य, तत्सामानाधिकरण्येन मनु-सूर्यादीन् व्यपदिशति—

'तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे, अहं मनुरभवं सूर्यश्च' (बृ.उ. 3-4-10)

'अहं कक्षीवा[6]नृषिरस्मि विप्रः[6]' (ऋ.सं. 4-26-1)

[7]इत्यादिना[7]। यथा च प्रह्लादः —

---

शब्दस्य व्यवच्छेद्यमाह। **अपित्विति,** 'शास्त्रस्य दृष्टिः, शास्त्ररूपा दृष्टिः' इति वा प्रतीतिः स्यादिति, तद्व्यावृत्त्यर्थम्। कस्य दृष्टिः? इत्यपेक्षायां **स्वात्म**शब्दः। स्वानुभवप्रत्यक्षेण आत्मावलोकने जीवमात्रप्रकाशः; शास्त्रेण तन्मूलयोगेन च आत्मानुभवे परमात्मपर्यन्ततया प्रकाशः इति भावः।

**पर्यवसानं ज्ञात्वेति,** नामरूपव्याकरणश्रुतिलब्धार्थ उक्तः। **उपदिदेश** इत्यन्तेन, 'शास्त्रदृष्ट्या तूपदेशः' इत्यंशो व्याख्यातः।

**शरीरिणि पर्यवसानं पश्यन्** इत्यन्तेन, **तद्धैतत्पश्यन्** इत्येतत् व्याख्यातम्। **यथा च प्रह्लादः** इति, उक्तार्थविशदीकरणम् (श्रु.प्र.) ॥३१॥

---

[1] यमयति। स त आत्माऽन्तर्याम्यमृतः। य आत्मनि सञ्चरन् यस्यात्मा शरीरम्। यमात्मा न वेद—ग [2] शरीरं—न, [3] वाचिनामपि शब्दानां—क्ष, [4] उपदिशति—ध [5] शब्दानां च—द, शब्दानां—वा, [6] नृषिर्विप्रः—वा [7] इत्यादि—वा, इत्यादिवत्। यथा वामदेव इति प्रसिद्धः रुद्रः 'सोऽब्रवीदहमेव प्रथममासं वर्तामि, भविष्यामि च, नान्यः कश्चिन्मत्तो व्यतिरिक्तः' इत्यादिवत्—थ

'सर्वगत्वादनन्तस्य स एवाऽहमवस्थितः ।
मत्तः सर्वमहं सर्वं मयि सर्वं सनातने ।।' (वि.पु. 1-19-85)

[1]इत्यादि वदति[1] ।।३१।।

अस्मिन् प्रकरणे जीववाचिभिः शब्दैः, अचिद्विशेषाभिधायिभिश्च उपास्यभूतस्य [2]परस्य ब्रह्मणः[2] अभिधाने कारणं [3]चोद्यपूर्वकमाह[3]—

## जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वा[4]दिह[4] तद्योगात् ॥ १-१-३१ ॥

'न वाचं विजिज्ञासीत, वक्तारं विद्यात्' (कौषी.उ. 3-58)

'त्रिशीर्षाणं त्वाष्ट्रमहनन्' (कौषी.उ. 3-9)

---

**जीववाचिभिरिति ।** त्वाष्ट्रवधादिलिङ्गप्रतिपादनकारणमपि कथनीयम् इत्यभिप्रेतम् ; उपरितनग्रन्थानुगुण्यात् । **कारणम्**—प्रयोजनरूपम् । **उपदेष्टुम्** इति हि वक्ष्यते । **चोद्यपूर्वकमाहेति ।** न तु उक्तार्थप्रतिक्षेपार्थकं चोद्यम् । विशेषणांशे तात्पर्यं प्रतीयत इति, तस्य प्रयोजनमेव प्रष्टव्यम् । तत् चोद्यरूपेण पृष्टवान् इत्यर्थः ।

**न वाचमिति ।** न केवलं मद्वचनमेव विजानीहि ; वक्तारं मां च विजानीहि इत्यर्थः ।

---

[सूत्रार्थः । **जीवमुख्यप्राणलिङ्गात्**—त्वाष्ट्रहननादेः जीवासाधारणधर्मस्य, आयुःकारणीभूतशरीरवासादेः मुख्यप्राणासाधारणधर्मस्य च श्रुतौ कथनात्, **न**-अध्यात्मसम्बन्धाधिक्येन परमात्मत्वनिश्चयः न कार्यः, **इतिचेत्**—एवमाशङ्कनं तु, **न**—न युक्तम्, **उपासात्रैविध्यात्**—(परमात्मनः स्वरूपेण, भोक्तृवर्गशरीरकत्वेन, भोग्यभोगोपकरणशरीरकत्वेनेति) त्रिविधमुपासनमुपदेष्टुम् (जीव-प्राणवाचकैः शब्दैः परमात्मनः) अभिधानात्, **आश्रितत्वात्**—(अस्यैव क्रमस्य अन्यत्राऽन्यत्र उपनिषत्सु) अवलम्बितत्वात्, **इह**—प्रतर्दनविद्यायामपि, **तद्योगात्**—उपासनात्रैविध्यस्य सम्भवात् ॥

इन्द्रजीवप्राणलिङ्गान्नात्र ब्रह्मेति चेन्न हि ।
अन्यत्रोपास्तित्रैविध्यात्तथाऽऽख्यानमिहापि हि ।। (ब्र.प.मा ३२)

---

[1] इत्यादिवददिति—ध, [2] ब्रह्मणः—ध, [3] चोद्यमाह—इ [4] दिह च—ध

'अरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छम्' (कौषी.उ. 3–10)

इत्यादिजीवलिङ्गात्,

'यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः' (कौषी.उ. 3–15)

'अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति' (कौषी.उ. 3–26)

इति मुख्यप्राणलिङ्गाच्च, न अध्यात्मसम्बन्ध[1]भूमा[1]—इति चेत्,

न; उपासात्रैविध्यात् हेतोः। उपासनात्रैविध्यमुपदेष्टुं तत्तच्छब्देनाऽभिधानम्। निखिलकारण[2]भूतस्य ब्रह्मणः[2] स्वरूपेणानुसन्धानम्, भोक्तृवर्ग[3]शरीरकत्वानु[3]सन्धानम्, भोग्य-भोगोपकरणशरीरकत्वानुसन्धानं चेति, त्रिविधमनुसन्धानम् उपदेष्टुम् इत्यर्थः।

तदिदं त्रिविधं ब्रह्मानुसन्धानं [4]प्रकरणान्तरेष्वप्याश्रितम्[4]—

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.आन. 1–1)

'आनन्दो ब्रह्म' (तै.उ.भृ 6–1)

इत्यादिषु स्वरूपानुसन्धानम्।

'तत्सृष्ट्वा। तदेवाऽनुप्राविशत्। तदनुप्रविश्य' (तै.उ.आन. 6–2)

'सच्च त्यच्चाऽभवत्। निरुक्तं चाऽनिरुक्तं च। निलयनं चाऽनिलयनं च। विज्ञानं चाऽविज्ञानं च। सत्यं चाऽनृतं च सत्यमभवत्' (तै.उ.आन. 6-3)

---

**मुख्यप्राणः**—पञ्चवृत्तिः। 'मुख्य'शब्दः इन्द्रियादिव्यावृत्त्यर्थः। नञः निषेध्याकांक्षायाम् अनतिविप्रकृष्टं सौत्रं पदमध्याहृतम् **अध्यात्मेति**।

**उपासनेति,** [अनेन 'हेतोः' इत्युक्त] हेतुत्वं विवृणोति। **उपदेष्टुम्** इत्यनेन, प्रयोजनतया हेतुत्वं स्पष्टम्। **निखिलेति,** [उपासना]त्रैविध्यं विवृणोति। **स्वरूपेणानुसन्धानम्** अद्वारकगुणविशिष्टानुसन्धानम्।

**आश्रितम्**-प्रतिपन्नम्। **तत्सृष्ट्वेत्यादि**। 'सत्यं ज्ञानमनन्तम्' इति देशकालवस्तु-परिच्छेदरहितस्य ब्रह्मणः, 'ब्रह्मविदाप्नोति' इति वेद्यत्वविधानात्, प्रकरणस्य वेद्यब्रह्मप्रतिपादन परत्वात्, 'स य एवंवित्' इति निगमनवाक्येऽपि पूर्वोक्तसमस्तप्रकारविशिष्टवेदनप्रतीतेश्च, चिदचिच्छरीरकत्वानुसन्धानमत्र विवक्षितमिति भाष्याभिप्रायः। एवं 'भोक्ता भोग्यं प्रेरितारं च मत्वा, सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' इत्यदीनि सदृशानि श्रुत्यन्तराणि च विवक्षितानि; त्रिविधोपासनस्य स्फुटतरत्वात्। भोक्तृ-भोग्ययोः ईश्वरविधात्वं कथम्? इत्यपेक्षायाम्,

---

[1] भूमेति—न [2] भूतब्रह्मणः—ध,न, [3] शरीरकत्वेनानु—ध,न

[4] प्रकरणान्तरेऽप्याश्रितम्—ध,न

इत्यादिषु, भोक्तृशरीरतया, भोग्य-भोगोपकरणशरीरतया च अनुसन्धानम् । इहाऽपि प्रकरणे, [1]तत् त्रिविध[1]मनुसन्धानं युज्यत एव इत्यर्थः ।

[विशिष्टोपासनपरताचिह्नप्रदर्शनम् ]

एतदुक्तं भवति—यत्र हिरण्यगर्भादिजीवविशेषाणां, प्रकृत्याद्यचेतनविशेषाणां च परमात्मासाधारणधर्मयोगः, तदभिधायिनां शब्दानां परमात्म[2]वाचिशब्दैः सामाना[2]धिकरण्यं वा दृश्यते, तत्र परमात्मनः तत्तच्चिदचिद्विशेषान्तरात्मत्वानुसन्धानं प्रतिपिपादयिषितम्—इति ।

अतः—अत्र इन्द्र-प्राणशब्दनिर्दिष्टः [3]जीवादर्थान्तरभूतः[3] [4]परमात्मैव[4]—इति सिद्धम् ॥ ३१ ॥

इति इन्द्रप्राणाधिकरणम् ॥ ११ ॥

**इति श्रीशारीरकमीमांसाभाष्ये प्रथमस्याध्यायस्य प्रथमः पादः**

---

चिदचिदनुप्रवेशात् ईश्वरस्य तत्प्रकारित्वमिति, त्रिविधोपासनपरश्रुत्यन्तरार्थविशदीकारहेतुत्वात्, आनन्दवल्लीवाक्यम् इहोदाहृतम् । अन्यत्तु अभिप्रेतम् ।

**इहाऽपीति,** 'इह तद्योगात्' इत्येतद्व्याख्यानमिदम्। 'आनन्दोऽजरोऽमृतः' इति, स्वेन रूपेण अनुसन्धानम् । 'प्राणोऽस्मि' इति, अचिद्विशिष्टानुसन्धानम् । 'माम्....उपास्व' इति, चिद्विशिष्टानुसन्धानमिति, त्रिविधानुसन्धानम् इहोपपद्यते इत्यर्थः ।

**यत्रेति** । अयं न्यायः न प्रतर्दनविद्यामात्रविषयः ; अपि तु ईदृशसर्वप्रकरणविषयः इति भावः । **हिरण्यगर्भादीति** । [अनेन] 'परमात्मा व्यवस्थितः । स ब्रह्मा स शिवः सेन्द्रः' इति श्रुतिः स्मार्यते । अनन्यपरेण नारायणानुवाकेन सर्वविद्यासूपास्यः नारायण एवेति निर्णीतत्वात्, इन्द्राद्युपासनेऽपि तदन्तर्यामी नारायण एवोपास्यः इति भावः ; पाशुपताधिकरणे तथा अनुवदिष्यमाणत्वात् । **परमात्मासाधारणेति** । परमात्मासाधारणधर्म योगात्, तद्वाचिशब्दसामानाधिकरण्याच्च विशिष्टोपासनपरत्वम् अवगम्यते इत्यर्थः (श्रु.प्र) ॥ ३१ ॥

[सूत्राणि—१. प्राणस्तथा २. न वक्तुरात्मोप ३. शास्त्रदृष्ट्या
४. जीवमुख्यप्राण]

॥इति इन्द्रप्राणाधिकरणम् ॥ ११ ॥

---

1 त्रिविध—आ, इ, वा
2 वाचिभिः शब्दैः सामाना—थ वाचिशब्दसामाना—ध
3 जीवादर्थांतरः—थ
4 परमात्मा—इ

## ॥ अधिकरणार्थसूचनी ॥

[द्वितीयः अन्ययोगव्यवच्छेदत्रिपाद्यां प्रथमः अस्पष्टजीवादिलिङ्गकवेदान्तवाक्यविचारपादः]

| क.सं | अधिकरणनामानि | सूत्रसंख्या | अधिकरणार्थः |
|---|---|---|---|
| 1 | सर्वत्रप्रसिद्ध्यधिकरणम् [शाण्डिल्यविद्या (छां.उ. 3–14–1, बृ. 7–6)] | 1–8 | ब्रह्मण एव, सर्वात्मभावेनाऽवस्थानम् ; न जीवस्य । |
| 2 | अत्त्रधिकरणम् [नाचिकेतविद्या (कठ)] | 9–12 | सर्वजगत्संहाररूपम् अत्तृत्वं ब्रह्मण एव ; न जीवस्य । |
| 3 | अन्तराधिकरणम् [उपकोसलविद्या (छां.उ.4–10–15)] | 13–18 | अक्ष्याधारपुरुषत्वं, ब्रह्मण एव ; न जीवादेः । |
| 4 | अन्तर्याम्यधिकरणम् [अन्तर्यामिविद्या (बृ.उ.5-7-1-27)] | 19–21 | ब्रह्मण एव सर्वान्तर्यामित्वम् ; न जीवस्य । |
| 5 | अदृश्यत्वादिगुणकाधिकरणम् [अक्षरविद्या (मुण्ड.उ. 1–2)] | 22–24 | अदृश्यत्वादिगुणयोगो ब्रह्मण एव ; न प्रधान-पुरुषयोः । |
| 6 | वैश्वानराधिकरणम् [वैश्वानरविद्या (छां.उ.5–11–24)] | 25–33 | वैश्वानरशब्दवाच्यः, परमात्मैव ; न जाठराग्न्यादिकम् । |

॥ इति द्वितीयः पादाधिकरणार्थाः ॥

श्रीशारीरकमीमांसाभाष्ये प्रथमे समन्वयाध्याये

[अन्ययोगव्यवच्छेदत्रिपादी]

# द्वितीयः पादः

[अस्पष्टजीवादिलिङ्गकवेदान्तवाक्यविचाररूपः]

अधि. 1-6] [पादार्थः—परमात्मनः सर्वशरीरकत्वम्] [सू. 1-65

[पूर्वपादीयः जिज्ञासाधिकरणार्थः]

**[1]प्रथमे पादे[1]—अधीतवेदः पुरुषः कर्ममीमांसाश्रवणाधिगतकर्मयाथात्म्यविज्ञानः, केवलकर्मणाम् अल्पास्थिरफलत्वम् अवगम्य, वेदान्तवाक्येषु च आपातप्रतीतानन्तस्थिर-फलब्रह्मस्वरूपतदुपासनसमुप[2]जात[2]परमपुरुषार्थलक्षणमोक्षापेक्षः, अवधारितपरिनिष्पन्न-वस्तु[3]बोधन[3]शब्दशक्तिः, वेदान्तवाक्यानां परस्मिन् ब्रह्मणि निश्चितप्रमाणभावः, तदितिकर्तव्यतारूपशारीरकमीमांसाश्रवणम् आरभेत—इत्युक्तं, शास्त्रारम्भसिद्धये ॥**

---

**प्रथमे पादे** इत्यादि । किमर्थमत्र प्रथमपादाधिकरणार्थानुक्रमणम् ? पादानुयायिनः अर्थस्य प्रत्यधिकरणम् अनुयायित्वस्फुटीकरणाय । अनुयायित्वकथनं, त्रिपादीसङ्गत्यर्थम् । त्रिपादीसङ्गतिश्च सूत्रकाराभिप्रेतत्वात् । पादभेदो हि अर्थभेदात् । तत्क्रमश्च सङ्गतिविशेषात् । तत्र प्रमाणं संप्रदायक्रमः ॥

अत्र अधिकरणार्थानुक्रमणेन त्रिपाद्याः अनारम्भणीयत्वशङ्का च अर्थात् परिहृता भवति ; त्रिपाद्याम् उदाहरिष्यमाणानां श्रुतीनां प्रथमपादाधिकरणोक्तन्यायाविषयत्वज्ञापनार्थत्वात् अनु-क्रमणस्य । अत एव प्रथमपादे वेदान्तवाक्यानां परमात्मपरत्वे दर्शितेऽपि त्रिपाद्या आरम्भणीयत्व सिद्धम् । प्रथमे पादेऽपि ईक्षत्यानन्दमयाधिकरणयोः कारणस्य चिदचिद्वैलक्षण्ये सिद्धेऽपि, पूर्वाधिकरणन्यायाविषयश्रुतिवाक्यार्थनिर्णयार्थो हि उत्तराधिकरणारम्भः ; तद्वदत्राऽपि इति ॥

चतुःसूत्र्याः शास्त्रोपोद्घातरूपत्वात् अर्थतः प्रथमपादान्तर्गतत्वम् ; न तु प्रथमपादस्य प्रथमाध्यायस्य वा असाधारणत्वात् (श्रु.प्र.) ॥

**अधीतवेदः**—कृतसाङ्गसशिरस्काध्ययनः । तावति अपर्यवसानं [वक्तुम्] **कर्मेत्यादि** तत्राप्यपर्यवसाने हेतुः **केवलेत्यादि** । सिद्धे वस्तुनि (शब्दस्य) व्युत्पत्त्यभावाशङ्कायां,

---

[1] प्रथमपादे—ट [2] जनित—इ,वा [3] प्रबोधन—द

[जन्माद्यधिकरणार्थः]

[1]अनन्त[1]विचित्रस्थिरत्रसरूपभोक्तृ-भोग्य-भोगोपकरण-भोगस्थानलक्षणनिखिल-जगदुदय-विभव[2]लय[2]-महानन्दैककारणं परं ब्रह्म, 'यतो वा [3]इमानि[3], इत्यादिवाक्यं बोधयति — इति च प्रत्यपादि ॥

[शास्त्रयोनित्वाधिकरणार्थः]

जगदेककारणं परं ब्रह्म, सकलेतरप्रमाणाविषयतया शास्त्रैक[4]प्रमाणकम्[4] — [5]इत्यभ्यधाम[5] ॥

[समन्वयाधिकरणार्थः]

[6]शास्त्र[6]प्रमाणकत्वं च ब्रह्मणः प्रवृत्ति-निवृत्त्यन्वयविरहेऽपि, स्वरूपेणैव परम-पुरुषार्थभूते परस्मिन् ब्रह्मणि वेदान्तवाक्यानां समन्वयात् निरुह्यते—इत्यब्रूम ॥

[ईक्षत्यधिकरणार्थः]

निखिलजगदेककारणतया वेदान्तवेद्यं [7]ब्रह्म च[7], ईक्षणाद्यन्वयात् आनुमानिक-प्रधानादर्थान्तर[8]भूतः चेतनविशेष[8] एव—इत्युपापीपदाम ॥

[आनन्दमयाधिकरणार्थः]

स च स्वाभाविकानवधिकातिशयानन्द-विपश्चित्त्व-निखिलचेतनभयाभयहेतुत्व-

---

[तन्निवारणाय] प्रथमसूत्रस्य तात्पर्यं [वक्तुम्] **अवधारितेत्यादि** । वेदान्तवाक्यैरेवाऽलम्, किमर्थः ब्रह्मविचारः ? इत्यत्रोत्तरतया **तदितिकर्तव्यतेत्यादि** । **शास्त्रारम्भसिद्धये** इति पदम्, उत्तराधिकरणत्रये अनुषज्यत इति, चतुःसूत्र्याः शास्त्रारम्भसिद्ध्यर्थत्वम् उक्तं भवति ।

**अनन्तेत्यादिविशेषणैः** ['जन्माद्यस्य यतः' इत्यत्र] सौत्रस्य **अस्य** इति पदस्य विवक्षितमर्थमाह । **अनन्त-विचित्र** शब्दौ भोक्तृ-भोग्यसाधारणौ । **महानन्दैककारणत्वं** 'तद्विजिज्ञासस्व' इति वाक्याभिप्रेतम् ; तापत्रयातुरजिज्ञास्यस्य हि लक्षणमुक्तम् । **एककारण**मिति **एक** शब्दप्रयोगः, 'अविरुद्धविशेषणभेदः न विशेष्यभेदावहः' इत्यभिप्रायेण, निमित्तो-पादानैकत्वाभिप्रायेण वा (श्रु प्र.) ॥

**समन्वयात्**—परमपुरुषार्थभूतस्यैव ब्रह्मणः प्रतिपादकतया, शास्त्रस्य तेनाऽन्वयात् ।

---

1 अनन्तर—थ,द　2 लयलीलं—वा　3 इमानि भूतानि—इ,घ,ङ,वा　4 प्रमाणम्—द
5 इत्यभ्यधायि—आ,इ,वा　6 शास्त्रैक—वा　7 च—न　8 भूतचेतनविशेषः—द

सत्यसङ्कल्पत्व-समस्तचेतनाचेतनान्तरात्मत्वादिभिः बद्धमुक्तोभयावस्थात् जीवशब्दाभिलपनीयाच्च [1]अर्थान्तरभूतः[1]—इति च समार्तथामहि ॥

[अन्तरधिकरणार्थः]

स च, अप्राकृताकर्मनिमित्तस्वासाधारणदिव्यरूपः—इत्युदैरिराम ॥

[आकाशाधिकरणार्थः]

आकाशप्राणाद्यचेतनविशेषाभिधायिभिः, जगत्कारणतया प्रसिद्धवत् निर्दिश्यमानः, सकलेतर[2]चेतनाचेतन[2]विलक्षणः स एव—इति समगरिष्महि ॥

[ज्योतिरधिकरणार्थः]

परतत्त्वासाधारणनिरतिशयदीप्तियुक्तज्योतिश्शब्दाभिधेयः, द्युसम्बन्धितया [3]प्रत्यभिज्ञानात् स एव[3]—इत्यातिष्ठामहि ॥

[इन्द्रप्राणाधिकरणार्थः]

[4]परमकारणासाधारणा[4]मृत[5]त्वप्राप्ति[5]हेतुभूतः परमपुरुष एव, शास्त्रदृष्ट्या इन्द्रादिशब्दैः अभिधीयते—इत्यब्रूमहि ॥

[आहत्य प्रथमपादार्थसारः]

तदेवम्—अतिपतितसकलेतरप्रमाणसम्भावनाभूमिः, सार्वज्ञ्य-सत्यसङ्कल्पत्वाद्यपरिमितोदारगुणसागरतया स्वेतरसमस्तवस्तुविलक्षणः परं ब्रह्म, पुरुषोत्तमो नारायण एव वेदान्तवेद्यः—इत्युक्तम् ॥

---

**स्वाभाविकानवधिकातिशयशब्दौ** प्रतिविशेषणमन्वितौ ॥

**आकाशेति** । आकाश-प्राणाधिकरणार्थयोः पृथगनुक्तिः, न्यायस्य अनतिभिन्नत्वात् ।

**परमेति** । **परमकारणासाधारणम्**—[परमकारणमात्र] तद्धर्मभूतम् अमृतत्वम् । **तत्प्राप्तिः**—परमसाम्यापत्तिः ।

**अतिपतितेति**. 'पुरुषत्वात् ; अस्मदादिवत्' इत्यादिकुतर्कपरिहारार्थम् । तेषां धर्मिग्राहकमानबाधः इति भावः । **पुरुषोत्तम**शब्दः, ज्योतिरधिकरणार्थाभिप्रायः । **नारायण**शब्दः, प्रतर्दनविद्याभिप्रायः । 'मामुपास्व' इत्यस्याऽपि नारायणानुवाकैक्येन सर्वविद्योपास्यतया उक्तनारायणोपासनपरत्वात्, चिदचिद्विलक्षणकारणास्तित्वं पादानुगतार्थः—इत्यर्थः ॥

---

[1] अर्थान्तरः—ध [2] चेतन—दि [3] स एव—इ [4] परत्वासाधारणा—अ [5] त्वादिप्राप्ति—थ

[अनन्तरत्रिपाद्या अर्थः]

अतः परं द्वितीय-तृतीय-चतुर्थेषु पादेषु—यद्यपि वेदान्तवेद्यं ब्रह्मैव ; तथाऽपि, कानिचिद्वेदान्तवाक्यानि प्रधान[1]क्षेत्रज्ञानन्तर्भूत[1]वस्तुविशेषस्वरूपप्रतिपादनपराण्येव इत्याशङ्क्य, तन्निरसनमुखेन तत्तद्वाक्योदितकल्याणगुणाकरत्वं ब्रह्मणः प्रतिपाद्यते ॥

[त्रिपाद्यामपि प्रतिपाद्यम् अर्थसारः]

तत्र अस्पष्ट[2]जीवादि[2]लिङ्गकानि वाक्यानि [3]द्वितीये पादे[3] विचार्यन्ते ।
[4]स्पष्ट[4]लिङ्गकानि तृतीये ।
तत्तत्प्रतिपादनच्छायानुसारीणि चतुर्थे ॥

---

**अतः परमिति** । 'नारायण एव' इत्यवधारणाक्षेपेण द्वितीयादिपादोत्थानम् इत्यभिप्रायः । द्वितीयेत्यादि । प्रथमपादस्य न केवलम् अनन्तरपादेन सङ्गतिः ; अपि तु त्रिपाद्यैव—इति भावः । **कानिचिदि**त्यादि । यथा 'चोदनालक्षणोऽर्थो धर्मः' (पू.मी.सू. 1–1–2) इत्यत्र, चोदनैव प्रमाणम् , प्रमाणमेव चोदना' इत्यवधारणद्वयम् ; तत्र 'प्रमाणमेव चोदना' इत्यवधारणम् 'औत्पत्तिक' सूत्रे (पू.मी.सू. 1–1–5) साधितम्, 'चोदनैव प्रमाणम्' इत्यवधारणम् 'प्रत्यक्ष' सूत्रे (पू.मी.सू. 1–1–4) स्थापितम् ; तथा जन्मादिकारणत्वस्य ब्रह्मलक्षणत्वात् । तत्र व्यक्त्यैक्यात् लक्षणस्य न अव्याप्तिः । असम्भवपरिहाररूपः अयोगव्यवच्छेदः प्रथमपादे उक्तः । अतिव्याप्तिपरिहाररूपः अन्ययोगव्यवच्छेदः त्रिपाद्या क्रियते इति विभागोऽभिप्रेतः इति भावः । **तत्तद्वाक्येति** । चिदचिद्विलक्षणस्वरूपं साधितम् ; अथ तस्य गुणविशेषप्रतिपादनं त्रिपाद्यां क्रियते इति च, प्रथमपाद त्रिपाद्योः विभागः इति भावः ।

**जीवादीति**, द्वितीय-तृतीयपादाद्याधिकरणयोः जीवस्य पूर्वपक्षितत्वादुक्तम् । **तत्तत्प्रतिपादनम्** जीवादिलिङ्गिप्रतिपादनम् ; न तल्लिङ्गप्रतिपादनम् । अस्पष्ट-स्पष्ट-स्पष्टतरपूर्वपक्षोत्थानहेतुभेदेन भिन्नाः त्रयः पादाः इत्यर्थः ।

प्रथमपादचरमाधिकरणे-अवयवभूतोपक्रमगतजीवलिङ्गम्, अवयविभूत [महा] वाक्यार्थ स्वारस्येन बाधितम्-इत्युक्तम् ।

द्वितीयपादप्रथमाधिकरणे-सर्वतादात्म्य-मनःप्राणसम्बन्ध-अर्भकौकस्त्व-अणीयस्त्वव्यपदेशरूपलिङ्गानाम् अवयविगतत्वेन अबाध्यत्वम् इति प्रत्यवस्थानं परिह्रियते इति, अवान्तरसङ्गतिः (श्रु.प्र) ॥

---

[1] क्षेत्रज्ञान्तरभूत—थ [2] जीव—वा [3] द्वितीये—द, द्वितीयपादे—वा [4] स्पष्टजीव—वा

२१ सर्वत्रप्रसिद्ध्यधिकरणम् ॥ १–२–१ ॥ (सू. 1–8)

[अधिकरणार्थः—ब्रह्मण एव सर्वात्मभावेनाऽवस्थानम् ; न जीवस्य ।]

[शाण्डिल्यविद्या (छां.उ. 3–14)

## ३३. सर्वत्र प्रसिद्धोपदेशात् ॥ १–२–१ ॥

[विषयवाक्यप्रदर्शनम् ]

इदमाम्नायते छान्दोग्ये—

'अथ खलु 'क्रतुमयः[1] पुरुषः, यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति, स क्रतुं कुर्वीत' (छां.उ 3–14–1)

'मनोमयः प्राणशरीरो भारूपः' (छां.उ. 3–14–2)

इत्यादि ।

---

**अथेति**। 'सर्वं खलु' इत्यादेर्द्वितीययोजनायाम् उदाहरिष्यमाणत्वात्, प्रथमयोजनापेक्षितम् 'अथ खलु' इत्यादिकम् उपात्तम्। द्वितीयसूत्रे 'भारूपः' इत्यस्य उपरितनवाक्यस्य उपादास्यमानत्वात्, अत्र **'भारूपः'** इत्यन्तम् उपात्तम्। **आदिशब्देन** अन्यद्गृहीतम्। अत्र 'रात्रिसत्र'न्यायेन (पू.मी.अ. 4–3–8) मनोमयः उपास्यतया सम्बध्यते; आर्थवादिकस्याऽपि विध्यपेक्षितस्य स्वीकार्यत्वात् ।

**'स क्रतुं कुर्वीत'** इत्यादिकमेवोपात्तं चेत्, फलाश्रवणनिमित्तं 'फलवत्सन्निधौ अफलं तदङ्गम्' (पू.मी.अ) इति न्यायेन पूर्वविहितोपासनाङ्गत्वं मा भूत् इति, फलसम्बन्धप्रदर्शनार्थम् **'अथ खलु'** इत्येतदुपादानम्। 'शान्त उपासीत' इति विहितोपासनाधिकृतस्यैव उपासनान्तरविधानम् अनुपपन्नम् इति शङ्काव्यावृत्त्यर्थम् 'अथ खलु' इति वाक्यं घटकत्वेनोपात्तम्। जीवस्य बहुविधोपासनप्रचुरत्वात् अनेकोपासनविधानं युक्तम्–इति भावः ॥

---

[सूत्रार्थः। **सर्वत्र**—'सर्वं खल्विदम्' इति निर्दिष्टसर्वानुयोगिकतादात्म्यप्रतियोगिभूतं वस्तु, **ब्रह्म**—जिज्ञास्यं परं ब्रह्मैव, **प्रसिद्धोपदेशात्**—ज्ञातार्थनिर्देशे इव, अत्र 'खलु' इति प्रसिद्धिद्योतनपूर्वकं (तज्जत्व-तस्मिँल्लीयमानत्व-तदायत्तजीवनत्वानि हेतूकृत्य) तादात्म्यस्य उपदेशात ॥

सर्वं खल्विदमित्यत्र प्रसिद्धस्योपदेशतः ।
सर्वात्मा परमात्मैव मनोमय उदीर्यते ॥ (ब्र.प.मा.३३)

---

[1] क्रतुमयोऽयं—थ,द

[जिज्ञास्यो विषयः]

अत्र—'स क्रतुं कुर्वीत' इति प्रतिपादितस्य उपासनस्य, उपास्यः 'मनोमयः प्राणशरीरः' इति निर्दिश्यते—इति प्रतीयते ॥

[संशयाकारः]

[1]तत्र[1] संशयः—किं मनोमयत्वादि[2]गुणकः[2], क्षेत्रज्ञः? उत परमात्मा?—इति ॥

[पूर्वपक्षस्वरूपम्]

किं युक्तम्?

क्षेत्रज्ञः—इति।

कुतः?

---

**अत्रेति**। मनोमयादिपदानां प्रकृतोपास्यविषयत्वे प्रमाणाभावात्, ब्रह्मपरत्वानिश्चयात्, 'स क्रतुम्' इति निर्दिष्टोपासकविशेषणत्वाश्रयणे, तस्याऽनाविर्भूतगुणाष्टकस्य सत्यसङ्कल्पत्वादेः अघटमानत्वाच, पाश्चात्त्यविद्यान्तरोपास्यपरत्वनिश्चये सति, तद्विशेषनिश्चयाभावात् विचारस्य आरम्भणीयत्वम्—इत्यर्थः। **उपासनस्येति** पदेन 'तं यथा यथोपासते' 'यथाक्रतुरस्मिंल्लोके पुरुषः' इत्यनयोर्वाक्ययोः ऐकार्थ्यात्, 'क्रतुं कुर्वीत' इत्यत्र 'क्रतु'शब्दश्चोपासनपरः इति तदुपास्ये मनोमयत्वादिगुणके संशयः—इति भावः।

**संशयाकारः**। 'स क्रतुं कुर्वीत' इत्यत्र उपास्यतया निर्दिष्टः, मनोमयत्वादिगुणकः, किं जीवः? उत परमात्मा? इति विचारः। तदर्थं कर्मकर्तृव्यपदेशशब्दविशेषोपसंहारगत-ब्रह्मशब्दादयः किं मुख्याः? उत अमुख्याः? तदर्थं मनोमयत्वादिकं जीवस्यैव सम्भवति? उत परमात्मनोऽपि घटते? इति तदर्थम् 'अप्राणो ह्यमनाः' इति, किं मनआदिसम्बन्धमात्रनिषेधः? उत सम्बन्धविशेषनिषेधः?—इति।

पूर्वपक्षे फलफलिभावः—यदा 'अप्राणो ह्यमनाः' इति मनआदिसम्बन्धमात्रनिषेधः; तदा मनोमयत्वादेः जीवस्यैवाऽसाधारणतया, कर्मकर्तृव्यपदेशादीनाम् अमुख्यत्वेन, 'स क्रतुं कुर्वीत' इति विहितोपासनस्य उपास्यः जीवः—इति ॥

सिद्धान्ते फलफलिभावः—यदा मनआदिना सम्बन्धविशेषनिषेधः; तदा मनोमयत्वादेः परस्मिन् सम्भवेन, कर्मकर्तृव्यपदेशादीनां मुख्यत्वात्, तत्र उपास्यतया विहितः परमात्मा—इति ॥

---

[1] अत्र—इ,द,ध.　[2] गुणः—अ.

मनःप्राणयोः क्षेत्रज्ञोपकरणत्वात् ; परमात्मनस्तु,

'अप्राणो ह्यमनाः' (मुण्ड.उ. 2-1-2)

इति तत्प्रतिषेधाच्च। न च—

'सर्वं खल्विदं ब्रह्म' (छां.उ. 3-14-1)

इति [1]पूर्वनिर्दिष्टं[1] ब्रह्म, अत्र उपास्यतया सम्बद्धुं शक्यते ;

'शान्त उपासीत' (छां.उ. 3-14-1)

इति उपासनोपकरणशान्तिनिर्वृत्त्युपायभूतब्रह्मात्मकत्वोपदेशाय उपात्तत्वात् ।।

[सिद्धान्तमाशङ्क्य पूर्वपक्षस्थिरीकरणम्]

न च—

'स क्रतुं कुर्वीत' (छां.उ. 3-14-1)

इति उपासनस्य [2]उपास्यसाकाङ्क्षत्वात्[2], वाक्यान्तरस्थमपि ब्रह्म सम्बद्ध्यते — इति युक्तं वक्तुम् ; स्ववाक्योपात्तेन मनोमयत्वादिगुणकेन निराकाङ्क्षत्वात् ;

'मनोमयः प्राणशरीरः' (छां.उ 3-14-2)

इति [3]अनन्यार्थतया[3] निर्दिष्टस्य, विभक्ति[4]विपरिणाम[4]मात्रेण उभयाकाङ्क्षानिवृत्तिसिद्धेः।

---

**मनःप्राणयोरिति**। स्पष्टस्य मनःसम्बन्धमात्रस्य जीवलिङ्गत्वाभावात्, जीवलिङ्गभूतस्य [मनसा सह] उपकरणोपकरणित्वलक्षणसम्बन्धविशेषस्य अस्पष्टत्वाच्च, अस्य पादस्य अस्पष्टजीवलिङ्गकवाक्यविषयत्वम् इत्यभिप्रायेण **क्षेत्रज्ञोपकरणत्वात्** इत्युक्तम्। **न च........शक्यते** इति अन्यार्थतया निराकाङ्क्षत्वात् इत्यर्थः (श्रु.प्र) ।।

**स्ववाक्योपात्तेनेति**। विच्छेदकाभावात् महावाक्यैकत्वं विवक्षितम्। ततश्च, 'एष आत्मा' इति स्ववाक्यस्थेन अनन्यार्थेन समानलिङ्गेन आत्मशब्देन विशेष्याकाङ्क्षाशमनात्, वाक्यान्तरस्थान्यार्थभिन्नलिङ्गब्रह्मशब्दापकर्षः न युक्तः— इति भावः। **मनोमय** इति। प्रथमान्तानां मनोमयादिपदानाम्, उपासनवाचिपदेन (उपासीत) अन्वयायोगात्, 'ब्रह्म'पदम् अन्वेतव्यम्—इत्यत्रोत्तरमिदम्। 'क्रतु'शब्देन द्वितीयान्तपदस्याऽपि अनन्वयात्, षष्ठ्यन्ततया विभक्तिविपरिणामे कार्ये, संनिहितस्य साकाङ्क्षस्यैव पदस्य विभक्तिविपरिणामो न्याय्यः ; न तु वाक्यान्तरस्थस्य निराकाङ्क्षस्य इत्यर्थः। **उभयाकाङ्क्षा**—मनोमयादिपदस्य 'क्रतुं कुर्वीत' इत्यस्य च आकाङ्क्षा। **सिद्धेः** इति पञ्चम्यन्तेन, **न वक्तुं युक्तम्** इत्यस्यान्वयः।

---

[1] पूर्ववाक्यनिर्दिष्टं—आ, वा [2] उपास्याकाङ्क्षत्वात्—ध [3] अन्यार्थतया—इ.
[4] परिणाम—ई.

[1]एवं[1] निश्चिते जीवत्वे,

'[2]एतद्ब्रह्म[2] (छां.उ. 3-14-4)

इति उपसंहारस्थ[3]ब्रह्मपदमपि[3], जीवे एव पूजार्थं प्रयुक्तम्, [4]इत्यध्यवसीयते[4] इति ॥

[सिद्धान्तारम्भः]

एवं प्राप्ते, ब्रूमः—सर्वत्र प्रसिद्धोपदेशात् ।

[सूत्रार्थविवरणम्]

मनोमयत्वादिगुणकः [5]परमात्मा[5] ॥

कुतः ?

सर्वत्र—[6]वेदान्तेषु[6] परस्मिन्नेव ब्रह्मणि, प्रसिद्धस्य—मनोमयत्वादेः, [7]उपदेशात्[7] । प्रसिद्धं हि मनोमयत्वादि ब्रह्मणः । यथा—

'मनोमयः प्राणशरीरनेता' (मुण्ड.उ. 2-2-8)

'स य एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः' (तै.उ.शीक्षा. 6-1)

---

**मनोमयत्वादिगुणकेनेति** । मनोमयत्वादि च सत्यसङ्कल्पत्वात् पूर्वमेव प्रतिपन्नम् ; अणीयस्त्वं च ज्यायस्त्वात्पूर्वं श्रुतम् । व्यतिरेकनिर्देशश्च, मनोमयत्वादेः पाश्चात्त्यः । अतः मनोमयत्वादिस्वारस्यानुगुणम् इतरत् नेयम्-इत्यभिप्रायः (श्रु प्र.) ॥

**मनोमयत्वादीति,** प्रतिज्ञावाक्यम् अध्याहरति । **'परमात्मा'** इति, सत्यसङ्कल्पत्वादिविशेषितप्राकरणिकात्मशब्दानुरोधेनोक्तम् ।

सर्वत्र इति, व्याख्येयं पदं; तद्व्याचष्टे, **वेदान्तेषु** इति । सामान्यशब्दवत्सु, विशेषशब्दवत्सु च [वेदान्तवाक्येषु] इति भावः । **मनोमयः** इति, मनस्सामान्येन सम्बन्धसामान्यपरं वाक्यम् । **अमृतो हिरण्मयः** इति, परमात्मपरत्ववैशद्यायोक्तम् ।

---

[1] एतस्मिन्—द. [2] तद्ब्रह्म—थ. [3] पदमपि—इ [4] इत्यभ्यधीयते—आ. [5] परमात्मैव—वा [6] वेदान्तवाक्येषु—इ,वा. [7] इह उपदेशात्—न.

**'हृदा, मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति'** (तै.ना.उ. 1-11)

**'न चक्षुषा गृह्यते, नापि वाचा'** (मुण्ड.उ. 3-1-8)

**'मनसा तु विशुद्धेन'** (व्या.स्मृ)

**तथा,**

**'प्राणस्य प्राणः'** (केन.उ. 1-2)

**'अथ खलु प्राण एव प्रज्ञात्मा, इदं शरीरं परिगृह्योत्थापयति'** (कौषी.उ. 3-26)

**'सर्वाणि ह वा इमानि भूतानि प्राणमेवाऽभिसंविशन्ति, प्राणमभ्युज्जिहते'** (छां.उ. 1-11-5)

**इत्यादिषु ॥**

[परमात्मनि मनःप्राणसम्बन्धोपपादनम्]

**मनोमयत्वम्—विशुद्धेन मनसा ग्राह्यत्वम्। प्राणशरीरत्वम्—[1]प्राणस्याप्या[1]-धारत्वम्, नियन्तृत्वं च। [2]एवं च[2] सति,**

**'एष म आत्माऽन्तर्हृदये, एतद्ब्रह्म'** (छां.उ. 3-14-4)

**इति 'ब्रह्म'शब्दोऽपि मुख्य एव भवति।**

**'अप्राणो ह्यमनाः'** (मुण्ड.उ. 2-1-2)

**इति, मन आयत्तं ज्ञानं, प्राणायत्तां स्थितिं च ब्रह्मणः निषेधति ॥**

---

**हृदा मनीषा** इति, मनस्सामान्येन सम्बन्धविशेषपरं वाक्यम्। 'हृत्' इति भक्तिः, **'मनीषा'** इति धृतिश्च उच्येते; 'न सन्दृशे तिष्ठति' इति पूर्वार्धम् एकरूपं पठित्वा, 'भक्त्या च धृत्या च समाहितात्मा ज्ञानस्वरूपं परिपश्यतीह' इति महाभारते उक्तत्वात्। **अभिक्लृप्तः**—ग्राह्यः। **न चक्षुषा** इति, मनोविशेषेण सम्बन्धविशेषवाचिवाक्यम् (श्रु प्र.) ॥

**प्राणस्य प्राणः**—आधारः। 'सर्वाणि ह वा' इत्यादिवाक्ये 'प्राण'शब्दस्य यौगिक-वृत्त्या परमात्मपरत्वं प्रागुक्तम्। इदानीम् अपर्यवसानवृत्त्याऽपि परमात्मपरत्वेन तद्वाक्यमुपात्तम्। वैश्वानराधिकरणन्यायेन (ब्र.सू.अ. 1-2-6) उभयथाऽपि परमात्मपरत्वं युक्तम् इति भावः ॥

**ग्राह्यत्वमिति।** ग्राह्य-ग्राहकलक्षणसम्बन्धविशेषाभिप्रायेण मनोमयः इत्युक्तम् इत्यर्थः। **एवं च** इति, उपसंहारस्वारस्यमाह। **मन आयत्तम्** इत्यादिना, उक्तार्थाविरुद्धं मनः-प्रभृतिनिषेधवाक्यार्थमाह। ग्राह्य-ग्राहकभावनियन्तृ-नियाम्यत्वादिरूपसम्बन्धविशेषः विधेयः। उपकरणोपकरणित्वलक्षणसम्बन्धविशेषः निषेध्यः इत्यभिप्रायः ॥

---

[1] प्राणस्या—थ. [2] एवं—थ.

[स्वाभिमता अधिकरणयोजना, तत्र जिज्ञास्यविषयनिर्देशः]

अथवा —

'सर्वं खल्विदं ब्रह्म, तज्जलानिति शान्त उपासीत' (छां.उ. 3-14-1)
इति अत्रैव उपासनं विधीयते 'सर्वात्मकं ब्रह्म शान्तः सन् उपासीत' इति।

'स क्रतुं कुर्वीत' (छां.उ. 3-14-1)
इति तस्यैव गुणोपादानार्थः अनुवादः। उपादेयाश्च गुणाः मनोमयत्वादयः। अतः 'सर्वात्मकं ब्रह्म मनोमयत्वादि[1]गुणकम्[1] उपासीत' इति वाक्यार्थः॥

[संशयस्वरूपनिर्देशः]

तत्र सन्देहः—किम् इह 'ब्रह्म'शब्देन, प्रत्यगात्मा निर्दिश्यते? उत परमात्मा?—इति।

[सयुक्तिकः पूर्वपक्षः]

किं युक्तम्?

प्रत्यगात्मा—इति।

कुतः?

तस्यैव सर्वपदसामानाधिकरण्यनिर्देशोपपत्तेः।

---

**अथवेति**। पूर्वस्यां योजनायां सूत्रे प्रतिज्ञावाक्यस्य अध्याहार्यत्वात्, श्रवणमननाभ्यामेव निष्पाद्यायाः शान्तेः, उपासननिष्पादकत्वस्य 'एवंविच्छान्तः' इति श्रुतिसिद्धत्वात्, अन्यत्राऽपि शान्त्युपायत्वेन उपासनविधानादर्शनात्, 'शान्त'पदस्य शान्तिकामपरत्वास्वारस्यात्, वृत्त्यनुरोधाच्च इयमेव योजना समुचिता—इति भावः। **अत्रैवेति**। अत्र शान्त्युपायोपासनम्, उत्तरत्र मोक्षोपायोपासनम् इति नाऽयमर्थः; अपि तु अत्रैव मोक्षार्थोपासनं विधीयते इत्यर्थः। **शान्तः सन्** इति। न तु 'आशंसायां क्तः' इह विहितोऽयम्—इति भावः। **उपादेयाः**—विधेयाः। यथा 'अग्निहोत्रं जुहोति' इति होमे विहिते, 'दध्ना जुहोति' इत्यत्र दध्नः होमसाधनत्वमात्रं विधेयम्, जुहोतीत्यनुवादः, तद्वत्—इति॥

**तत्र**—एकविषयत्वे सिद्धे।

---

[1] गुणम्—द.

'सर्व'शब्दनिर्दिष्टं हि ब्रह्मादिस्तम्बपर्यन्तं कृत्स्नं जगत् । ब्रह्मादिभावश्च प्रत्यगात्मनः अनाद्यविद्यामूलकर्मविशेषोपाधिकः विद्यत एव । परस्य तु ब्रह्मणः सर्वज्ञस्य सर्वशक्तेः अपहतपाप्मनः निरस्तसमस्ताविद्यादिदोषगन्धस्य समस्त[1]हेयाकर[1]सर्वभावः नोपपद्यते ॥

[जीवे ब्रह्मशब्दप्रयोगोपपत्तिः]

प्रत्यगात्मन्यपि क्वचित्क्वचित् 'ब्रह्म'शब्दः प्रयुज्यते । अत एव 'परमात्मा, परं ब्रह्म' इति परमेश्वरस्य [2]क्वचित्सविशेषणो[2] निर्देशः । प्रत्यगात्मनश्च निर्मुक्तोपाधेः बृहत्त्वं च विद्यते ;

'स चाऽऽनन्त्याय कल्पते' (श्वे.उ. 5-9)

इति श्रुतेः । अविदुषस्तस्यैव कर्मनिमित्तत्वात् [3]जगज्जन्म[3]स्थितिलयानाम् ,

'तज्जलान्' (छां.उ. 3-14-1)

इति हेतुनिर्देशोऽप्युपपद्यते । तदयमर्थः—अयं जीवात्मा स्वतः अपरिच्छिन्न[4]स्वरूपत्वेन[4] [5]ब्रह्मभूतः[5] सन् , अनाद्यविद्यया देवतिर्यङ्मनुष्यस्थावरात्मना अवतिष्ठते—इति ॥

[सिद्धान्तस्वरूपम् ]

अत्र प्रतिविधीयते—सर्वत्र प्रसिद्धोपदेशात् । [6]सर्वत्र—'सर्वं खल्विदम्'[6]

---

**ब्रह्मादिभावः**—चतुर्मुखादिभावः । **अनादीति** । अहितकर्मोत्पादनहेतुः अविद्या, तद्धेतुः कर्म इति बीजाङ्कुरनयात् अनादिः । **परस्येति** । सर्वज्ञत्वात् हेयं जानाति, सर्वशक्तित्वात् निवारयितुं शक्नोति । न च ज्ञान-शक्त्योः सङ्कोचः ; अविद्यामूलकर्मविरहात् । अतः न सर्वभावः सम्भवति इति भावः ॥

**परमात्मा** इति, दृष्टान्ततयोक्तम् । यथा 'आत्म'शब्दः जीवेश्वरसाधारणः, तद्वत् 'ब्रह्म'शब्दः इति भावः (श्रु.प्र.) ॥

**'सर्वत्रेति** । यथा 'अन्तस्तद्धर्मोपदेशात्' इत्यत्र 'अन्तः'शब्दः प्रतिज्ञापरः, एवं 'सर्वत्र' इति सूत्रपदं प्रतिज्ञापरमित्याशयः । **सर्वमिति** । 'सर्वत्र' इति पदं न वाचकवेदान्त-

---

1 हेयाकार—थ 2 क्वचिद्विशेषणो—इ 3 जन्म—क, च, ञ, वा 4 रूपत्वेन—वा
5 ब्रह्मरूपः—इ, ब्रह्मस्वरूपः—न 6 सर्वं खल्विदं ब्रह्म—ध, सर्वत्र 'सर्वं खल्विदं ब्रह्म'—श्रा,इ,वा

इति निर्दिष्टे सर्वस्मिन् जगति, ब्रह्मशब्देन [1]तदात्मतया[1] [2]विधीयमानं[2], परं ब्रह्मैव ; न प्रत्यगात्मा ।

कुतः ?

प्रसिद्धोपदेशात्—तज्जलान् इति हेतुतः, 'सर्वं खल्विदं ब्रह्म' इति, प्रसिद्धवत् [3]उपदेशात्[3] । 'ब्रह्मणो जातत्वात्, ब्रह्मणि [4]लीनत्वात्[4], ब्रह्माधीनजीवनत्वाच्च हेतोः 'ब्रह्मात्मकं सर्वं खल्विदं जगत्' इत्युक्ते, 'यस्माज्जगज्जन्म-स्थिति-लयाः वेदान्तेषु प्रसिद्धाः, तदेव अत्र ब्रह्म' इति प्रतीयते ॥

[सूत्रोक्तार्थोपपादनम्]

तच्च परमेव ब्रह्म । तथा हि—

'यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्म' (तै.उ.भृ. 1-1)

[5]इत्युपक्रम्य[5],

'आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि [6]जायन्ते[6]' (तै.उ.भृ. 6-1)

इत्यादिना, [7]पूर्वानुवाक[7]प्रतिपादितानवधिकातिशयानन्दयोगिनः विपश्चितः परस्मात् [8]ब्रह्मण[8] एव, जगदुत्पत्तिस्थितिलयाः निर्दिश्यन्ते । तथा,

---

परम् ; अपि तु वाच्यजगत्परम् इत्यर्थः । **न प्रत्यगात्मेति,** 'न शारीरः' इत्यत्र वक्ष्यमाणमनुसन्धाय ।

**तज्जेति।** जगज्जन्म-स्थिति-लयानां, तत्कृततादात्म्यस्य च प्रसिद्धत्वेन उपदेशात् इत्यर्थः। **इति**शब्देन हेतुतया उक्तत्वात्, जन्मादीनां प्रसिद्धत्वम् । प्रमाणसिद्धस्यैव हि हेतुता । तत्कृततादात्म्यस्य प्रसिद्धत्वं 'खलु'ना सिद्धम् । **ब्रह्मण** इति । कारणत्वनिबन्धनतादात्म्यस्य च अत्र प्रसिद्धत्वेनोपदेशः फलितः (श्रु.प्र) ॥

**'आनन्दो ब्रह्मेति,** 'यतो वा इमानि' इति वाक्यस्य जीवविषयत्वव्यावृत्यर्थम् । **तदात्मकतया तादात्म्यमिति।** 'तदात्मकतया' इति श्रुत्यन्तरविषयम् । तज्जत्व-तदनत्व-तल्लत्वैः श्रुत्यन्तरेषु तदात्मकत्वेन उपपादनात् इह प्रतिपन्नमपि तादात्म्यम् उपपन्नम् इत्यर्थः ॥

---

[1] तदन्तर्यामितया—अ　[2] अभिधीयमानं—वा　[3] निर्देशात्—इ,वा　[4] प्रलीनत्वात्—थ　[5] इति प्रक्रम्य—ध,न　[6] जायन्ते । आनन्देन जातानि जीवन्ति—थ　[7] पूर्वानुवाकेन—द,ध　[8] परब्रह्मणः—द

'स कारणं करणाधिपाधिपो न चाऽस्य कश्चिज्जनिता न चाधिपः' (श्वे.उ. 6-9) इति, करणाधिपस्य जीवस्याऽधिपः परं ब्रह्मैव कारणं व्यपदिश्यते। [1]एवं[1] सर्वत्र परस्यैव ब्रह्मणः कारणत्वं प्रसिद्धम्। अतः परब्रह्मणो जातत्वात्, तस्मिन् [2]प्रलीनत्वात्[2] तेन प्राणनात्, तदात्मकतया तादात्म्यम् उपपन्नम्॥

[जगद्ब्रह्मणोः तादात्म्यस्य स्थिरीकरणम्]

अतः 'सर्वप्रकारं [3]सर्वशरीरं[3] सर्वात्मभूतं परंब्रह्म शान्तो भूत्वा उपासीत' इति श्रुतिरेव [4]परस्य ब्रह्मणः[4] सर्वात्मकत्वमुपपाद्य, तस्य उपासनम् उपदिशति। [5]परं ब्रह्म[5] हि कारणावस्थं कार्यावस्थं सूक्ष्म-स्थूलचिदचिद्वस्तुशरीरतया, [6]सर्वदा सर्वात्मभूतम्[6]॥

[ब्रह्मणः सर्वतादात्म्येऽप्यपुरुषार्थासंस्पर्शः]

एवम्भूततादात्म्यस्य प्रतिपादने, परस्य ब्रह्मणः सकलहेयप्रत्यनीककल्याणगुणाकरत्वं न विरुध्यते; प्रकारभूतशरीरगतानां दोषाणां, प्रकारिणि आत्मनि अप्रसङ्गात्। प्रत्युत निरतिशयैश्वर्यापादनेन गुणायैव [7]भवति[7]—इति पूर्वमेवोक्तम्॥

[जीवस्य सर्वतादात्म्यायोगः]

यदुक्तम्—जीवस्य सर्वतादात्म्यम् उपपद्यते—इति,

तदसत्; जीवानां प्रतिशरीरं भिन्नानाम्, अन्योऽन्यतादात्म्यासम्भवात्।

---

अत इति, चिदचिद्विलक्षणस्य [ब्रह्मणःसर्व]तादात्म्योपपत्तिः। **सर्वप्रकारमिति,** आकृत्यधिकरणन्यायेन (पू.मी.अधि. 1-3-7) प्रकारिपर्यन्ताभिधानसिद्ध्यर्थम्। **सर्वशरीरमिति,** सर्वात्मशब्दवैशद्यायोक्तम्। **श्रुतिरेव**—सर्वं खल्वित्यादिरेव। **उपपाद्येति**। 'तज्जलान्' इत्यंशेन, कार्यकारणभावेन शरीरात्मभावेन च उपपाद्येत्यर्थः। तत्र हि अन्तर्यामिरूपेण कृतस्य प्राणनस्य शरीरात्मभावापेक्षत्वात् तेन च तथा उपपादितं भवति। **परं ब्रह्म हीति**। स्थितौ शरीरात्मभावोपपादनात्, उभयलिङ्गस्य ब्रह्मणः कारणावस्थायामपि विशिष्टत्वम् अर्थसिद्धम्, श्रुत्यन्तरैः कण्ठोक्तं च इत्यभिप्रायः। **स्थूलेत्यादि,** सदा विशिष्टं चेत्! कार्यकारणावस्थयोः को भेदः? इति शङ्कापरिहारायोक्तम्॥

---

[1] एवं हि—इ [2] लीनत्वात्—वा [3] सर्वशरीरकं—ध,न [4] परब्रह्मणः—ध,न
[5] परब्रह्म—न [6] सर्वात्मभूतम्—ध [7] भवन्ति—थ

"[1]मुक्तस्याऽपि[1], अनवच्छिन्नस्वरूपस्याऽपि जगत्तादात्म्यं, जगज्जन्म-स्थिति-प्रलय[2]-कारणत्वनिमित्तं[2] न सम्भवति' इति,

'जगद्व्यापारवर्जम्' (ब्र.सू. 4-4-17)

इत्यत्र वक्ष्यते।

जीवकर्मनिमित्तत्वात् जगज्जन्म-स्थिति-लयानां, स एव कारणम्—इत्यपि, न साधीयः ; तत्कर्मनिमित्तत्वेऽपि, ईश्वरस्यैव जगत्कारणत्वात् ॥

[सूत्रार्थोपसंहारः]

अतः परमात्मैव अत्र 'ब्रह्म'शब्दाभिधेयः। इममेव सूत्रार्थम् अभियुक्ताः [3]बहुमन्वते[3]। [4]यथाऽऽह[4] वृत्तिकारः—

'सर्वं खल्विति सर्वात्मा ब्रह्मेशः' (बो वृ)

इति ॥ १ ॥

[श्रुत्युक्तगुणयोगस्य ब्रह्मणि सर्वतादात्म्योपपादकत्वम्]

## ३४. विवक्षितगुणोपपत्तेश्च ॥ १-२-२ ॥

**जगज्जन्मस्थितिप्रलयकारणत्वनिमित्तम्** इति बहुव्रीहिः। कारणत्वप्रयुक्तम् इत्यर्थः। **तत्कर्मनिमित्तत्वेऽपीति**। न हि कर्म जगतः कर्तृरूपनिमित्तम्, उपादानं च। उभयम् ईश्वर एव। कर्म तु केवलं वैषम्यहेतुः। यथा घटादिनिर्माणस्य भोक्तृकर्मनिमित्तत्वेऽपि, भोक्तृकर्मणां न कर्तृत्वम् उपादानत्वं वा। कुलाल-मृत्पिण्डयोरेव हि तदुभयम्। 'तज्जलान्' इत्यत्र तच्छब्दस्य च न कर्मवाचित्वम्। अतः न जीवस्य जगत्कारणत्वकृतं तादात्म्यमस्ति इत्यभिप्रायः।

**इममेवे**त्यादिना, द्वितीययोजनोक्तार्थस्यैव सांप्रदायिकत्वम्। **सर्वमिति**। सर्वं खल्वित्यादिवाक्येन सर्वात्मतयोक्तं ब्रह्म, **ईशः**—परमात्मा, इत्यर्थः (श्रु.प्र.) ॥

---

[सूत्रार्थः। **विवक्षितगुणानाम्**—उद्दिष्टानां सत्यसङ्कल्पत्वसहकृतानां मनोमयत्वादीनां गुणानाम् (इतरत्र बाधितानाम्) **उपपत्तेश्च**—योग्ये धर्मिणि अन्वयस्य सम्पादनीयत्वाद्धेतोरपि, (सर्वतादात्म्यप्रतियोगिभूतं वस्तु, परं ब्रह्मैव ; न जीवः।)]

वक्ष्यमाणगुणानां तु परस्मिन्नेव सम्भवात्।
तज्जलानित्युपास्यत्वं परमात्मनि युज्यते ॥ (ब्र.प.मा. ३४)

---

[1] मुक्तस्य—क्षा, इ, ङ　[2] कारणत्वनिमित्तं च—ध, कारणत्वं—वा　[3] बहुमन्यते—इ, बहुमन्यन्ते—वा　[4] यदाह—वा

वक्ष्यमाणाश्च गुणाः, परमात्मन्येव उपपद्यन्ते —

'मनोमयः प्राणशरीरो [1]भारूपः[1] सत्यसङ्कल्पः आकाशात्मा [2]सर्वकर्मा सर्वकामः[2] सर्वगन्धः [3]सर्वरसः[3] सर्वमिदमभ्यात्तोऽवाक्यनादरः' (छां.उ. 3–14–2)

इति। मनोमयः—परिशुद्धेन मनसैकेन ग्राह्यः; विवेकविमोकादिसाधनसप्तकानुगृहीतपरमात्मोपासननिर्मलीकृतेन हि [4]मनसा गृह्यते[4]। अनेन हेयप्रत्यनीककल्याणैकतानतया, सकलेतरविलक्षणस्वरूपता उच्यते, मलिनमनोभिः मलिनानामेव ग्राह्यत्वात्। [5]प्राणशरीरः[5]—जगति सर्वेषां प्राणानां धारकः। प्राणः यस्य शरीरम्—आधेयं विधेयं शेषभूतं च, सः प्राणशरीरः। आधेयत्व-विधेयत्व-शेषत्वानि शरीरशब्दप्रवृत्ति-[6]निमित्तानि[6]—इत्युपपादयिष्यते। भारूपः—भास्वररूपः। अप्राकृतस्वासाधारणनिरतिशय-[7]कल्याण[7]दिव्यरूपत्वेन निरतिशयदीप्तियुक्तः—इत्यर्थः। सत्यसङ्कल्पः—अप्रतिहतसङ्कल्पः। आकाशात्मा—आकाशवत् सूक्ष्मस्वच्छस्वरूपः, सकलेतरकारणभूतस्य

विवक्षितत्वम्—वक्तुमिच्छाविषयत्वम्। वक्ष्यमाणा इति। विवक्षितानामेव वक्ष्यमाणत्वात्, 'विवक्षित'शब्देन वक्ष्यमाणत्वं लक्ष्यते इत्यर्थः। 'सर्वं खलु' इति प्रथमवाक्यापेक्षया वक्ष्यमाणं हि अनन्तरवाक्यगतगुणजातम्। [अतः] अपौरुषेयवाक्यप्रतिपाद्यगुणानां पुरुषेच्छापूर्वकत्वायोगात् कथं विवक्षितत्वम्? इति [न शङ्का]) मनोमय इति। निषेधवाक्यविरोधपरिहाराय सामान्यं मनोमयशब्दं विशेषवाक्यानुगुणं व्याचष्टे। मनसैकेनेति। 'अब्भक्षः' 'वायुभक्षः' इतिवत् अवधारणगर्भः इति 'एक'शब्दस्य भावः। तच्च 'न चक्षुषा गृह्यते, नाऽपि वाचा' 'मनसा तु विशुद्धेन' इति श्रुत्यानुगुण्यात्। मलिनेति। मलिनमनोग्राह्यत्वं हेयार्हत्वव्यापकम्। अतः व्यापकनिवृत्त्या व्याप्यनिवृत्तिरिति, उभयलिङ्गकत्वसिद्धिः इति भावः। मुक्तस्याऽपि विशुद्धमनोग्राह्यत्वं न सम्भवति। मुक्तं स्वातन्त्र्येण गृह्णाति चेत्, मनः अशुद्धम्। ब्रह्मपर्यन्तत्वेन चेत्, विशिष्टस्य ब्रह्मण एव विशुद्धमनोग्राह्यत्वम्—इति। भारूप इति। ज्ञानस्वरूपः इत्यर्थस्तु अतिक्लिष्टः। 'रूप'शब्दो हि धर्मवाची। 'भा'शब्दो हि दीप्तिपरः। दीप्तिधर्मकत्वं विग्रहद्वारकम्। 'आदित्यवर्णं तमसः परस्तात्' 'रुक्मवर्णम्' इत्यादिश्रुत्यैकार्थ्यादित्यभिप्रायेण भास्वररूपः इति (श्रु.प्र)। सूक्ष्मत्वम्—व्याप्त्यर्हत्वम्। स्वच्छत्वम्—निर्मलत्वम्। सकलेत्यादिना, आकाश एव

[1] भारूपः सत्यकामः—थ [2] सर्वकामः—थ [3] सर्वरसः सर्वकर्मा—थ [4] गृह्यते—ध
[5] प्राणशरीर इति—थ [6] निमित्तम्—द [7] कल्याणादि—आ

[1]आकाशस्याऽपि[1] आत्मभूतः—इति वा, आकाशात्मा। स्वयं च प्रकाशते, अन्यानपि प्रकाशयति—इति वा, आकाशात्मा। सर्वकर्मा—क्रियते इति कर्म। सर्वं जगत् यस्य [2]कर्म असौ—सर्वकर्मा[2]। सर्वा वा क्रिया यस्य, असौ—सर्वकर्मा। सर्वकामः—काम्यन्ते इति कामाः—भोग्य-भोगोपकरणादयः; ते परिशुद्धाः सर्वविधाः तस्य सन्ति—इत्यर्थः। सर्वगन्धः सर्वरसः—

'अशब्दमस्पर्शम्' (कठ.उ. 3-15)

इत्यादिना प्राकृतगन्धरसादिनिषेधात्, अप्राकृताः स्वासाधारणाः [3]निरवद्याः निरतिशयाः[3] कल्याणाः स्वभोग्यभूताः सर्वविधाः गन्धरसाः तस्य सन्ति—इत्यर्थः। सर्वमिदमभ्यात्तः [4]उक्तं[4] रसपर्यन्तं [5]सर्वमिदं कल्याण[5]गुणजातं स्वीकृतवान्। 'अभ्यात्तः' इति 'भुक्ता ब्राह्मणाः' इतिवत्, कर्तरि क्तः प्रतिपत्तव्यः। अवाकी, वाकः—उक्तिः; सः अस्य

---

तदोतं च प्रोतं च' इति वाक्यं स्मारितम्। 'अक्षरमम्बरान्तधृतेः' (ब्र.सू. 1-3-9) इति न्यायात् 'आकाश'शब्दः प्रकृतिवाचीति भावः। **अन्यानपि** स्वस्मै **प्रकाशयति** इत्यर्थः। **सर्वा वा** इति। असौ लौकिक-वैदिकसर्वक्रियाणां सद्वारककर्ता। यद्वा सर्वा वैदिकक्रिया आराधनं यस्य, सः सर्वक्रियः इत्यर्थः। **काम्यन्ते** इत्यादि, इच्छाबाहुल्यव्यावृत्त्यर्थम्। **ते परिशुद्धाः** इति। अप्राकृता इत्यर्थः। 'सत्यकाम'पदैकार्थ्यात् इत्यभिप्रायः। **रसादि-निषेधात्** इत्यत्र **आदि**शब्दः रूपस्पर्शादिनिषेधपरवाक्यान्तराणामपि तुल्यन्यायत्वद्योतनार्थः। 'भारूपः' इति दिव्यविग्रहस्य प्रकृतत्वात् अप्राकृतदेहद्वारकगन्धरसादिविधिः इत्यर्थः। **गुणजातमिति**। जगतोऽपि सर्वकर्मादिगुणान्तर्भावात् गुणपरं तद्व्याख्यातम्। **इतिवदिति**। प्रयुक्तानुशासनत्वात् व्याकरणस्य, यथाप्रयोगम् अनुशासनं कार्यम्; न तु यथानुशासनं प्रयोगा-न्यथाकरणम् इति भावः। **कर्तरि क्त** इति। [भुक्ताः—भुक्तवन्तः इति मत्वर्थं मनसिकृत्य 'भुक्तम् एषामस्ति' इत्यर्थे 'भुक्ताः' इति शब्दः प्रयुज्यते चेत्, तदा 'अर्श आदिभ्योऽच्' (पा. सू. 5-2-127) इत्यर्शआदिगणे आकृतिगणत्वं कल्पनीयम्।] कर्त्रर्थतया प्रयोग एव हि भुक्तादीनाम् आकृतिगणान्तर्भावकल्पननिमित्तम्। तेनैव [प्रयोगेन] कर्त्रर्थत्वं क्तप्रत्ययस्य कल्प्यताम्, किम् अश्रूयमाणाकारप्रश्लेषेण? इति भावः। **अवाकीति**। वाकः, उक्तिः अवाकः—तदभावः; अवाकः अस्य अस्तीति अवाकशब्दात् तद्धितप्रत्ययः।

---

[1] आकाशस्य—इ,वा [2] कर्म—इ,वा [3] निरवद्यनिरतिशयाः—थ [4] उक्तमिदं—वा. [5] सर्वकल्याण—न सर्वं कल्याण—वा.

नाऽस्ति इति अवाकी। कुतः? [1]इत्याह[1]—अनादरः इति। अवाप्तसमस्तकामत्वेन आदर्तव्याभावात् आदररहितः। अत एव अवाकी अजल्पाकः। परिपूर्णैश्वर्यत्वात् ब्रह्मादिस्तम्बपर्यन्तं निखिलं जगत् तृणीकृत्य जोषमासीनः इत्यर्थः।

[2]ते[2] एते विवक्षिताः [3]गुणाः[3] परमात्मन्येव उपपद्यन्ते ॥ २ ॥

[उक्तानां गुणानां, व्यतिरेकतः परमात्मनि दृढीकारः]

## ३५. अनुपपत्तेस्तु न शारीरः ॥ १–२–३ ॥

तमिमं गुणसागरं पर्यालोचयतां, खद्योतकल्पस्य, शरीरसम्बन्धनिबन्धनापरिमितदुःखसम्बन्धयोग्यस्य, [4]बद्धमुक्तावस्थस्य जीवस्य[4] प्रस्तुतगुणलेश[5]सम्बन्धगन्धोऽपि[5] नोपपद्यते—इति, न अस्मिन् प्रकरणे शरीरपरिग्रहशङ्का जायते इत्यर्थः ॥ ३ ॥

---

[अतः] सोऽस्य नास्तीति अवाकी, इति फलितार्थकथनमेतत्। कुत इत्याहेति। कुतः इत्यत्राह इत्यर्थः। अवाप्तेति। अवाकत्वं वाक्सामर्थ्याभावात्—इति शङ्काव्यावृत्त्यर्थम् अनादरः इति पदम्, इति भावः। अजल्पाकः इति निषेध्यो वाकः, हेयरूपः इति दर्शयति।

ते एते इति, सूत्रार्थम् उपसंहरति ॥

योग्यस्येति योग्यशब्दः, शरीरशब्देन मुक्तावस्थस्याऽपि [जीवस्य] क्रोडीकारोपपादकः। 'अनुपपत्तेस्तु नेतरः' इति वक्तव्येऽपि, मुक्तावस्थस्य जीवस्य प्रतिपाद्यत्वानुपपत्तिस्फोरणार्थं [सूत्रे] शारीरशब्दनिर्देशः इति भावः। बद्धोपादानं दृष्टान्ततया। यथा निग्राह्यस्य निग्राहकस्वरूपैक्यानुपपत्तिः, तथा अनुग्राह्यस्याऽपि अनुग्राहकस्वरूपैक्यानुपपत्तिः इत्यभिप्रायः। प्रस्तुतगुणानुपपत्तिः प्रतिगुणमनुसन्धेया। पर्यालोचयतां....शङ्का न जायते इत्यन्वयः ॥

---

[सूत्रार्थः। शारीरः—कर्मकृतशरीरसम्बन्धवान् जीवः, न—'सर्वं खल्विदम्' इत्युक्तसर्वतादात्म्यप्रतियोगी न भवितुमर्हति, अनुपपत्तेस्तु—विवक्षितानां गुणानां शारीरे असम्भवादपि हेतोः ॥]

मनोमयो न जीवोऽत्र स्रष्टृत्वादेरसम्भवात्।
सङ्कल्पेनैव सर्वत्र बहुस्यामिति कीर्तनात् ॥ (ब्र.प.मा. ३५)

---

1 इत्यत्राह—ध  2 अतः—इ, वा  3 गुणाः विवक्षिताः—ध, न.
4 बद्धमुक्तावस्थजीवस्य—न  5 सम्बन्धोऽपि—ध

[एतदधिकरणीयपरमसाध्यहेतुकथनम् ]

## ३६. कर्मकर्तृव्यपदेशाच्च ॥ १–२–४ ॥

'एतमितः प्रेत्याऽभिसम्भविताऽस्मि' (छां.उ. 3–14–4)

इति, प्राप्यतया परं ब्रह्म व्यपदिश्यते ; प्राप्तृतया च जीवः । अतः प्राप्ता जीवः उपासकः ; प्राप्यं परं ब्रह्म उपास्यम्—इति, 'प्राप्तुः अन्यदेवेदम्' इति [1]विज्ञायते[1] ॥४॥

[विभक्तिविशेषनिर्देशात् ब्रह्मपदवाच्यः परमात्मा]

## ३७. शब्दविशेषात् ॥ १–२–५ ॥

---

**अभिसम्भवितास्मि**—प्राप्तास्मि । **अत** इति । प्राप्य-प्राप्तारावेव हि उपास्योपासकौ । अतः उपास्यं ब्रह्म, उपासकात् जीवात् विलक्षणम् इत्यर्थः । स्वरूपस्यैव प्राप्यत्वमिति चेत् ! श्रुतिस्वारस्यभङ्गः । अत्र **इदम्** इति निर्देशः, 'ब्रह्म'शब्दाभिहितवस्त्वभिप्रायः ॥

**शब्दविशेषादिति** । अवस्थाभेदेन प्राप्यत्व-प्राप्तृत्वोपपत्तिरिति शङ्कापरिहारार्थम्, एकस्यामेव अवस्थायां भेदव्यपदेशं दर्शयति अनन्तरसूत्रद्वयेन **[शब्दविशेषात्, स्मृतेश्च]** । अस्मिन् सूत्रे असमानविभक्तिकनिर्देशो विवक्षितः ।

---

[सूत्रार्थः । **शारीरः**—शरीरसम्बद्धो जीवः, **न**—सर्वतादात्म्यप्रतियोगी न भवति, **कर्मकर्तृव्यपदेशाच्च**—'एतम्' इति परमात्मनः प्राप्तिकर्मतया, 'अभिसम्भवितास्मि' इति जीवस्य प्राप्तिकर्तृतया च श्रुतौ स्पष्टीकरणादपि हेतोः ॥]

प्रेत्याभिसम्भवानीति कर्मकर्तृत्वशंसनात् ।
प्राप्योपासकयोरत्र प्राप्यं ब्रह्म हि कारणम् ॥ (ब्र.प.मा. ३६)

[सूत्रार्थः । **शारीरः**—जीवः, **न**—सर्वतादात्म्यप्रतियोगी न भवति ; किन्तु परं ब्रह्मैव, **शब्दयोः**—उपायोपासकवाचकयोः 'एष आत्मा, मे' इति शब्दयोः, **विशेषात्**—('एषः' इति) प्रथमान्ततया (उपास्यस्य, 'मे' इति उपासकस्य जीवस्य) षष्ठ्या च निर्देशरूपात् वैलक्षण्यात् ॥]

एष म आत्मा चेत्यादिषष्ठ्या प्रथमया च तौ ।
निर्दिष्टौ प्रथमान्तार्थस्तयोर्मध्ये मनोमयः ॥ (ब्र.प.मा. ३७)

---

[1] ज्ञायते—थ.

'एष म आत्माऽन्तर्हृदये' (छां.उ. 3–14–3)

इति शारीरः षष्ठ्या निर्दिष्टः ; उपास्यस्तु प्रथमया ।

एवं समानप्रकरणे, वाजिनां च श्रुतौ शब्दविशेषः श्रूयते जीव-परयोः । यथा—

'व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वा, [1]एवमयमन्तरात्मन्[1]
पुरुषो हिरण्मयः ; यथा ज्योतिरधूमम्' (अग्निर. 10-10-6)

इति । अत्र 'अन्तरात्मन्' इति सप्तम्यन्तेन, शारीरो निर्दिश्यते । 'पुरुषो हिरण्मयः' इति प्रथमया उपास्यः । अतः पर एव [2]उपास्यः[2] ॥५॥

[हृदयस्थे ईश्वरतायाः उपबृंहणतः स्थापनम् ]

[3]इतश्च शारीरादन्यः—

## ३८. स्मृतेश्च[3] ॥ १–२–६ ॥

---

एवं समानप्रकरणे इति। तत्राऽपि शाण्डिल्यविद्यायाम् इत्यर्थः। सौत्रपदशक्तेः सङ्कोचकाभावात्, समानप्रकरणेन प्रकृतोपपादनस्य, अन्यत्र दृष्टत्वाच्च न छान्दोग्यवाक्यमात्र-विषयमिदं सूत्रमिति भावः। जीवपरयोरिति। उपास्योपासकयोः इत्यर्थः। [इयम्] उक्तिः फलितार्थाभिप्रायेण ; अतः न अन्योन्याश्रयः। अत्र हिरण्मयशब्देन दिव्यविग्रहवत्त्वं च सिद्धम्। अन्तरात्मन् इत्यत्र नकारलोपाभावात्, ङिसम्बुद्ध्योरेव [परयोः] 'न ङिसम्बुद्ध्योः' (पा.सू. 8–2–8) इति नकारलोपप्रतिषेधात्, इह सम्बुद्ध्यन्तत्वे अनन्वयाच्च 'आत्मन् पश्यन् सर्वाणि भूतानि' इतिवत्, लुप्तसप्तमीकोऽयं निर्देशः इति भावः। एवं स्वप्रकरणे षष्ठी प्रथमात्मकः, समानप्रकरणे सप्तमीप्रथमात्मकश्च शब्दविशेषो विवक्षितः (श्रु.प्र) ॥

[सूत्रार्थः—शारीरः—जीवः, न—सर्वतादात्म्यप्रतियोगितया उपास्यो न भवति, किन्तु तदन्यः परमात्मैव, स्मृतेश्च—'सर्वस्य चाऽहं हृदि' इति स्मृतौ उपास्यस्य हृदिस्थस्य जीवाद-न्यत्वप्रतीतेः ॥

सर्वस्य चाऽहमित्यादि स्मृत्याचैव हृदि स्थितः ।
जीवादन्यस्स्मृतेर्दाता ज्ञानदः परमेश्वरः ।। (ब्र.प.मा. ३८)

---

[1] एवमयमन्तरात्मनि—थ, द. [2] आत्मा उपास्यः—अ, न. [3] स्मृतेश्च ।। इतश्च शारीरादन्यः—थ, द.

'सर्वस्य चाऽहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च' (भ.गी. 15-15)
'यो मामेवमसंमूढो जानाति पुरुषोत्तमम्' (भ.गी. 15-19)
'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया'॥ (भ.गी. 18-61)
'तमेव शरणं गच्छ' (भ.गी. 18-62)

इति [1]शारीरम्[1] उपासकम्, परमात्मानं च उपास्यं स्मृतिः दर्शयति ॥ ६ ॥

[हृदयाख्याल्पदेशस्थितेः जीवत्वज्ञापकताशङ्का-परिहारौ]

## ३१ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न, निचाय्यत्वादेवं व्योमवच्च ॥ १-२-७ ॥

**सर्वस्येति,** 'एष म आत्मान्तर्हृदये' इति हृदयशब्दप्रत्यभिज्ञापनार्थम् । **यो माम्** इति तदनन्तरवाक्यम् उपास्यत्वज्ञापनार्थम् । **ईश्वर** इति, हृत्स्थस्य ईश्वरत्वकण्ठोक्तिः । **'तमेव शरणं गच्छ'** इत्युपादानं च, हृदयस्थस्य भजनप्रदर्शनार्थम् । **सर्वस्य** इत्यत्र **सर्व**शब्दो जीवविषयः ; पराधीनस्मृत्याद्याश्रयभूतवस्तुविषयत्वात् । **पुरुषोत्तम**शब्दवाच्यस्य जीववैलक्षण्यं तत्रैवोक्तम् । **सर्वभूतशब्दो**ऽपि जीवविषयः ; भ्रान्त्याश्रयत्वात्, देहाख्ययन्त्रारूढत्वाच्च । अत्र **च**शब्दः अवान्तरशङ्कापरिहारहेतुद्वयसमुच्चयार्थः, अन्वाचये वा (श्रु.प्र) ॥ ६ ॥

---

[सूत्रार्थः । **अर्भकौकस्त्वात्**-हृदयान्तःप्रदेशरूपाल्पस्थानावस्थितत्वात्, **तद्व्यपदेशाच्च**— 'अणीयान्' इति अल्पपरिमाणतायाः स्पष्टं कथनाच्च, **न**—सर्वतादात्म्येनोपास्यतयोक्तः, न परं ब्रह्म, **इति चेत्**—एवं कथनम्, **न**—न समीचीनम्, **एवं निचाय्यत्वात्**—हृदयावस्थितत्वेन उपासनीयत्वात् परमात्मनः ; न अल्पपरिमाणस्वरूपवत्त्वम्, **व्योमवच्च**—महतोऽपि आकाशस्य सूचीरन्ध्रपरिच्छिन्नत्वानुसन्धानमिव परमात्मनोऽपि औपाधिकं हृदयस्थानपरिच्छिन्नत्वानुसान्धानमिति ॥]

अल्पत्वाल्पस्थानवत्त्वव्यपदेशात् स नेश्वरः ।
इति चेन्न निचाय्यत्वान्महत्त्वं व्योमवत्स्वतः ॥ (ब्र.प.मा. ३९)

---

[1] शरीरम्—अ, च शारीरम्—न, शारीरकम्—वा

[1]अल्पायतनत्वम्[1]— अर्भकौकस्त्वम्। तद्व्यपदेशः—अल्पत्वव्यपदेशः।

'एष म आत्माऽन्तर्हृदये' (छां.उ. 3-14-3)

इति अणीयसि हृदयायतने स्थितत्वात्,

'अणीयान् व्रीहेर्वा यवाद्वा' (छां.उ. 3-14-3)

इत्यादिना अणीयस्त्वस्य स्वरूपेण व्यपदेशाच्च, न अयं परमात्मा; अपि तु जीव एव।

'सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' (मुण्ड.उ. 1-1-6)

इत्यादिभिः परमात्मनः अपरिच्छिन्नत्वावगमात्, जीवस्य च आराग्रमात्रत्वव्यपदेशात्—इति चेत्,

नैतदेवम्; परमात्मैव हि 'अणीयान्' इत्येवं निचाय्यत्वेन व्यपदिश्यते। एवं निचाय्यत्वेन—एवं द्रष्टव्यत्वेन-एवम् उपास्यत्वेन, इति यावत्। न पुनः अणीयस्त्वमेव अस्य स्वरूपम्—इति। व्योमवच्च अयं [2]व्यपदिश्यते। स्वाभाविकं महत्त्वं च, अत्रैव व्यपदिश्यते[2]—

'ज्यायान् पृथिव्या ज्यायानन्तरिक्षात् ज्यायान् दिवो, ज्यायानेभ्यो लोकेभ्यः' (छां.उ. 3-14-3)

इति। अतः [3]उपासनार्थमेव[3] अल्पत्वव्यपदेशः। तथा हि—

**अणी....स्थितत्वात्**—अणीयस्त्वाक्षेपकार्थव्यपदेशात्। **अणी....व्यपदेशाच्च**—साक्षादणीयस्त्वस्य व्यपदेशात्।

**सर्वगतम्** इति परमात्मनः वैधर्म्यम्।

**द्रष्टव्यत्वेनेति**। 'चायृ-दर्शने' (पा.धा.पा. 880) इति हि धातुः। **उपास्यत्वेनेति**, फलरूपदर्शनव्यावृत्त्यर्थम्। **व्योम....व्यपदिश्यते** इति। 'व्योमवत् द्रष्टव्यम्' इत्युक्ते, प्रतिज्ञामात्ररूपत्वात् प्रमाणाकाङ्क्षा भवति। 'व्यपदिश्यते' इत्युक्ते, प्रमाणमेव दर्शितं भवतीति, अध्याहृत्य व्याख्यातम्। **स्वाभाविकम्** इति, व्योमवच्छब्दफलितम्। **ज्यायान्** इति। 'वृद्ध'शब्दस्य 'ज्य'आदेशे, 'ज्यायान्' इति शब्दनिष्पत्तिः। 'ज्य च' (पा.सू. 5-3-61) 'वृद्धस्य च' (पा.सू. 5-3-62) इति हि सूत्रम्। वृद्धिश्च परिमाणाधिक्यम् इह विवक्षितम्; न तु कालाधिक्यम्। अत्र अणीयस्त्वप्रतिसम्बन्ध्याकारपरत्वात् ज्यायश्शब्दस्य। **अतः**—पृथिव्यादिभ्योऽपि ज्यायस्त्वव्यपदेशात्। 'महत्तया अवगतस्य वस्तुनः, उपाध्युक्तिपूर्वकम् उक्तं परिमाणम् औपाधिकम्; असंभावितोपाधिकं परिमाणं स्वाभाविकम्' इति न्यायः इह शिक्षितो भवति।

---

[1] अल्पावयवत्वम्—ई. [2] व्यपदिश्यते—द. [3] उपासनार्थ एव—द.

[अल्पायतनत्वाद्युपदेशस्य उपासनार्थत्वदृढीकरणम् ]

'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' (छां.उ. 3-14-1)

इति, 'सर्वोत्पत्तिप्रलयकारणत्वेन, सर्वस्यात्मतयाऽनुप्रवेशकृत[1]जीवयितृत्वेन च[1] सर्वात्मकं ब्रह्म उपासीत' इति उपासनं विधाय,

'अथ खलु क्रतुमयः पुरुषः। यथाक्रतुरस्मिंल्लोके पुरुषो भवति, तथेतः प्रेत्य भवति' (छां.उ. 3-14-1)

इति, यथोपासनं प्राप्यसिद्धिमभिधाय,

'स क्रतुं कुर्वीत' (छां.उ. 3-14-1)

इति, गुणविधानार्थम् उपासनम् अनूद्य,

'मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्पः आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः' (छां.उ. 3-14-2)

इति, जगदैश्वर्यविशिष्टस्य स्वरूपगुणांश्च उपादेयान् प्रतिपाद्य,

'एष म आत्माऽन्तर्हृदये अणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा' (छां उ. 3-14-3)

इति उपासकस्य हृदये, अणीयस्त्वेन [2]तदात्मतया[2] उपास्यस्य परमपुरुषस्य उपासनार्थम् अवस्थानमुक्त्वा,

'एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षात् ज्यायान् दिवः ज्यायानेभ्यो लोकेभ्यः (छां.उ. 3-14-3)

---

**सर्वात्मकमिति**। सर्वस्य ब्रह्मात्मकत्वं शास्त्रादवगम्य, रागद्वेषादिरहितः सन्, वक्ष्यमाणगुणकं ब्रह्म उपासीत इत्यर्थः। 'सर्वात्मकं ब्रह्म' इत्यनेन, उपक्रमस्य अणीयस्त्वविरोधित्वं दर्शितम् (श्रु.प्र.)। **अथ खलु** इत्यादि; प्रकरणाविच्छेदद्योतनाय। **अनूद्येति**। यथा 'अग्निहोत्रं जुहोति' इति विहितहोमः 'दध्ना जुहोति' इत्यत्र दध्नः होमसाधनत्वविधानार्थं 'जुहोति'पदेन अनूद्यते, तथा —इति भावः। **जगदैश्वर्येति**, 'तज्जलान्' इत्यस्य अनुवादः। **स्वरूपगुणान्**—अद्वारकगुणान्। न हि ते प्रकृति-पुरुषद्वारकाः (श्रु.प्र.)।

---

[1] जीवनियन्तृत्वेन च—इ, जीवयितृत्वेन—थ	[2] तथात्मतया—थ तदात्मकतया—द.

'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदम्भ्यात्तोऽवाक्यनादरः'
(छां.उ. 3-14-4)

इति, अन्तर्हृदये अवस्थितस्य [1]उपास्यमानस्य[1] प्राप्याकारं निर्दिश्य,

'एष म आत्माऽन्तर्हृदये, एतद्ब्रह्म' (छां.उ. 3-14-4)

इति, 'एवम्भूतं परं ब्रह्म, परमकारुण्येन, अस्मदुज्जिजीवयिषया, अस्मद्हृदये संनिहितम्' इतीदमनुसन्धानं विधाय,

'एतमितः प्रेत्याऽभिसम्भविताऽस्मि' (छां.उ. 3-14-4)

इति, यथोपासनं प्राप्तिनिश्चयानुसन्धानं च विधाय,

'इति यस्य स्यादद्धा न विचिकित्साऽस्ति' (छां.उ. 3-14-4)

इति, एवंविधप्राप्य-प्राप्तिनिश्चयोपेतस्य उपासकस्य, प्राप्तौ न संशयोऽस्ति—इत्युपसंहृतम्। अतः उपासनार्थम् अर्भकौकस्त्वम् अणीयस्त्वं च ॥७॥

[ब्रह्मणः जीवशरीरान्तर्वर्तित्वे, सुख-दुःखोपभोगशङ्कापरिहारौ]

## ४०. सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ १-२-८ ॥

जीवस्येव, परस्याऽपि ब्रह्मणः शरीरान्तर्वर्तित्वम् अभ्युपगतं चेत्! तद्वदेव शरीरसम्बन्धप्रयुक्तसुखदुःखोपभोगप्राप्तिः—इति चेत्,

---

**एवंभूतमिति,** 'निचाय्यत्वात्' इत्यस्यार्थमाह। [उपनिषदि] सर्वकर्मत्वादिगुणानां द्विरुक्तिः; उपास्यतया प्राप्यतया च। हृदि स्थितेः द्विरुक्तिः; हृदयस्थितिज्ञापनार्थं सौलभ्यानुसन्धानार्थं च। एवम् अत्र पूर्वत्र उत्तरत्र च विभुत्वाभिधानात्, अर्भकौकस्त्व-रूपोपाधिकथनाच्च मध्यगतम् अल्पत्वम् औपाधिकम्—इत्ययमर्थः उक्तो भवति (श्रु.प्र) ॥

**शरीरान्तर्वर्तित्वम्**—हृदयवर्तित्वम्।

---

[सूत्रार्थः। परमात्मनः हृदयाख्यशरीरैकदेशवृत्तित्वे, **सम्भोगस्य**—परमात्मनोऽपि सुखाद्यनुभवस्य, **प्राप्तिः**—प्रसङ्गः, **इति चेन्न**—एवं शङ्कनं न सङ्गतम्; **वैशेष्यात्**—विलक्षणस्य शरीरवर्तित्वाद्भिन्नस्य कर्मपरवशत्वात्मकस्य सम्भोगहेतुत्वात् ॥]

हृदये वर्तमानत्वे जीवस्येव परात्मनः।
दुःखादिप्राप्तिरिति चेन्नास्याः कर्म हि कारणम् ॥ (ब्र.प.मा. ४०)

---

[1] उपासमानस्य—द

[1]तत्र[1] ; हेतुवैशेष्यात्। न हि शरीरान्तर्वर्तित्वमेव सुख[2]दुःखोपभोगहेतुः[2] ; अपि तु—पुण्य-पापरूपकर्मपरवशत्वम्। तच्च अपहतपाप्मनः परमात्मनः न सम्भवति। तथा च श्रुतिः—

'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' (मुण्ड.उ. 3-1-1) इति॥

॥ इति सर्वत्रप्रसिद्ध्यधिकरणम् ॥ १ ॥

---

वैशेष्यम्—विशेषः। भोगप्रसञ्जने सुखग्रहणं, सांसारिकसुखस्य आदिमध्यावसानेषु दुःखमिश्रत्वेन अपुरुषार्थपक्षनिक्षेपनिबन्धनम्। तथा च श्रुतिरिति। शरीरान्तर्वर्तित्वेऽपि फलसम्बन्धासम्बन्धावाह इत्यर्थः। अधिकरणार्थनिगमनम् अर्थसिद्धम्॥

सर्वत्र इति सूत्रं, स्ववाक्यस्थहेतुपरम्। [विवक्षितेति] द्वितीयं, तदनन्तरवाक्यस्थहेतुपरम्। [अनुपपत्तेस्तु इति] तृतीयं, तद्व्यतिरेकपरम्। [कर्मकर्तृ इति] चतुर्थं, उपसंहारस्थहेतुपरम्। [शब्दविशेषात्, स्मृतेश्च इति] अनन्तरसूत्रद्वयम्, तत्र शङ्काविशेषपरिहारपरम्। तदनन्तरसूत्रद्वयम् [अर्भकौकस्त्वात्, सम्भोगप्राप्तिरिति] सूत्रद्वयोक्तहृदयावस्थानप्रयुक्तचोद्यपरिहारपरम् इति सूत्रसङ्गतिः (श्रु.प्र)॥

[सूत्राणि—1. सर्वत्र प्रसिद्ध्य   2. विवक्षितगुण
3. अनुपपत्तेस्तु   4. कर्मकर्तृव्यप
5. शब्दविशेषात्   6. स्मृतेश्च
7. अर्भकौकस्त्वात्   8. सम्भोगप्राप्तिः]

॥ इति सर्वत्रप्रसिद्ध्यधिकरणम् ॥ १ ॥

---

[1] न—वा.   [2] दुःखोपभोगे हेतुः—वा.

## १३. अत्त्रधिकरणम् ॥१-२-२॥ (सू. 9–12)

[अधिकरणार्थः—सर्वजगत्संहाररूपम् अत्तृत्वम् परमात्मन एव ; न जीवस्य]

[नाचिकेतविद्या (कठ.उ. 2)]

[पूर्वाधिकरणान्तिमसूत्रेण अवान्तरसङ्गतिः]

यदि परमात्मा न भोक्ता, एवं तर्हि ! [1]सर्वत्र भोक्तृतया[1] प्रतीयमानः, जीव एव स्यात् ; इति आशङ्क्याह—

### ४१. अत्ता चराचरग्रहणात् ॥ १-२-९ ॥

[विषयवाक्यप्रदर्शनम् ]

कठवल्लीषु आम्नायते—

'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः ।

'मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥' (कठ.उ. 2–25)

इति ॥

---

यत्र स इति । यस्मिन् प्रकारे स्थितः, यत्प्रकारविशिष्टः तं प्रकारं को वेद ? इत्यर्थः ।

सूचित इति । 'यस्य' इति षष्ठी निर्दिष्टः सम्बन्धः ओदनोपसेचनसामर्थ्यात् अदनीयात्तृभाव लक्षणविशेषपर्यवसितः । तस्मात् अत्ता सूचितः इत्यर्थः ॥

---

[सूत्रार्थः । **अत्ता**—'यस्य ब्रह्म....ओदनः' इति ब्रह्मक्षत्त्रौदनक-मृत्यूपसेचनकादन-कर्तृत्वेन विवक्षितोऽर्थः, **न शारीरः**—जीवो न भवितुमर्हति ; **चराचरग्रहणात्**—जङ्गम-स्थावरात्मकस्य कृत्स्नस्यैव जगतः उपलक्षणीभूतेन ब्रह्मक्षत्रेण बोधनात् ॥]

सूचितोऽत्ता तु संहर्ता परमात्मेति निश्चयः ।
मृत्यूपसेचनब्रह्मक्षत्रान्नं हि जगद्भवेत् ॥ (ब्र.प.मा. ४१)

---

[1] भोक्तृतया—द

[अधिकरणाङ्गभूतः संशयः]

अत्र ओदनोपसेचनसूचितः अत्ता, किं [1]जीव एव[1] ? उत परमात्मा ?—इति सन्दिह्यते ॥

[पूर्वः पक्षः]

किं युक्तम् ?

जीवः—इति ।

कुतः ?

भोक्तृत्वस्य कर्मनिमित्तत्वात्, जीवस्यैव तत्सम्भवात् ।

संशयाकारः—अत्ता जीवः, उत परमात्मा ?—इति विचारः । तदर्थम् इदम् अत्तृत्वं किं कर्मफलभोक्तृत्वरूपम् ? उत जगदुपसंहर्तृत्वरूपम् ? किमत्र पूर्वप्रस्तुतब्रह्मप्रकरणं विच्छिन्नम् ? न ?–इति 'ऋतं पिबन्तौ' इति, किं बुद्धिजीवौ निर्दिश्येते ? उत जीवपरौ ? 'पिबन्तौ' इति निर्देशः किं छत्रिवत् लक्षणया, शब्दशक्त्या वा प्रयोज्यप्रयोजकविषयतया नेयः ? उत न ?—इति । 'तं दुर्दर्शम्' 'या प्राणेन' इति जीवपरयोः दर्शनं, किं लक्षणम् आपादयति, उत न, इति । उपक्रमे 'येयं प्रेते' इति प्रश्नः, किं जीवविषयः? उतपरविषयः ?—इति ।

पूर्वपक्षे—उपक्रमे 'येयं प्रेते' इति प्रश्नः,—यदा जीवविषयः ; तदानीम् उपक्रमानुरोधेन, 'तं दुर्दर्शम्' इत्यादिना ऋतपाननिर्देशस्य प्रयोज्य-प्रयोजकविषयतापादनायोगात्, 'ऋतं पिबन्तौ' इति वाक्यस्य बुद्धिजीवपरत्वेन, ब्रह्मप्रकरणं विच्छिन्नमिति, इह प्रतिपन्नम् अत्तृत्वं कर्मफलभोक्तृत्वरूपमिति, 'अत्ता जीवः' इति फलितम् ।

सिद्धान्ते—यदा येयमिति प्रश्नः परविषयः ; तदानीम् उपक्रमानुगुण्येन 'तं दुर्दर्श'-मित्यादिना ऋतपाननिर्देशस्य प्रयोज्यप्रयोजकविषयतापादनोपपत्तेः, 'ऋतम् इत्यादिवाक्यस्य जीव-परमात्मपरत्वेन ब्रह्मप्रकरणविच्छेदाभावात् इह प्रतिपन्नम् अत्तृत्वं जगदुपसंहर्तृत्वरूपमेवेति 'अत्ता परमात्मा' इति फलितम् (श्रु.प्र.) ॥

**भोक्तृत्वस्येति** । ओदनोपसेचनसामर्थ्यावगतस्येति भावः । **जीवस्यैवेति** । 'सर्वभूतान्तरात्माऽपहतपाप्मा' 'न कर्मणा वर्धते नो कनीयान्' 'अनश्नन्नन्यः' इति परस्य भोक्तृत्वं निषिद्धमिति भावः । **तत्सम्भवात्**—कर्मफलभोक्तृत्वसम्भवात् । ब्रह्मक्षत्रशब्दवाच्यानां देहिनां स्त्री-पुंसात्मकत्वात्, तत्तद्रूपजीवानां परस्परं भोक्तृभोग्यभावः सम्भवति । जीवानां नित्यत्वादेव मृत्युवश्यत्वाभावात्, मृत्युः जीवस्य विधेयः इत्यभिप्रायेण मृत्यूपसेचनवादोऽपि सम्भवतीति भावः ॥

---

[1] जीवः—इ, द.

[सिद्धान्तः]

अत्रोच्यते—अत्ता चराचरग्रहणात् । अत्ता परमात्मैव ।

कुतः ?

चराचरग्रहणात्—[1]चराचरस्य कृत्स्नस्य[1] [2]अत्तृत्वं[2] हि तस्यैव सम्भवति । न च—इदं कर्मनिमित्तं भोक्तृत्वम् ; अपि तु जगज्जन्मस्थिति[3]लयहेतुभूतस्य[3] परस्य ब्रह्मणो विष्णोः संहर्तृत्वम् ;

'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' (कठ.उ. 2–9)

इति अत्रैव दर्शनात् । तथा च,

'मृत्युर्यस्योपसेचनम्' (कठ.उ. 2–25)

इति [4]वचनात्[4],

'ब्रह्म च क्षत्रं च' (कठ.उ. 2–25)

इति, कृत्स्नं चराचरं जगत् इह अदनीयौदनत्वेन गृह्यते । उपसेचनं हि नाम स्वयम् अद्यमानं सत्, [5]अन्यस्याप्यदनहेतुः[5] । अतः उपसेचनत्वेन मृत्योरपि अद्यमानत्वात्, [6]तदुपसिच्यमानस्य[6] कृत्स्नस्य ब्रह्मक्षत्रपूर्वकस्य जगतः चराचरस्य अदनम्, अत्र विवक्षितमिति [1]गम्यते[1] । ईदृशं च अदनम् उपसंहार एव । तस्मात् [2]ईदृशं[2] जगदुपसंहारित्वरूपं भोक्तृत्वं परमात्मन एव ॥ ९ ॥

---

**न चेति ।** कृत्स्नचराचरविषयम् अत्तृत्वं जीवस्य अनुपपन्नम् इति भावः । अत्तृत्वं विष्णुकर्तृकं चराचरसंहर्तृत्वमित्यत्र [विषये] प्रकरणे परमात्मवाचिपदश्रवणं प्रथमो हेतुः, **तथा चे**त्यादिना द्वितीयो हेतुः ।

**उपसेचनं हीति ।** मृत्युः उपसेचनम्, 'अबाधकः' इत्युक्ते, विशेषाकारोपस्थापनं न स्यात् ; अबाधकत्वस्य लोष्टतृणादिसाधारणत्वात् । स्वयम् अद्यमानत्वे सति अन्यस्यादनहेतुत्वं तु विशेषाकार इति, तेनैव औपचारिकप्रयोगो युक्तः इति भावः । अत्र व्युत्पादितो न्यायः—साधारणाकारं विहाय अवान्तराकारेण गौणार्थो वर्णनीयः—इति । **अत इति ।** परमात्मनः कृत्स्नजगत्संहारे मृत्यवपेक्षाऽभावेऽपि अत्र मृत्योरद्यमानत्वं, व्यष्टिसंहारस्य तद्द्वारकत्वं च अभिप्रेतम् । एवं मृत्यूपसेचनत्वसामर्थ्यात् ब्रह्मक्षत्रशब्दौ कृत्स्नचराचरप्रदर्शनार्थौ इति भावः ।

---

1 कृत्स्नस्य—ई 2 भोक्तृत्वं—द, अत्तृत्वं भोक्तृत्वं—थ 3 हेतुभूतस्य—द 4 दर्शनात्—भ
5 अन्यस्यादनहेतुः—वा 6 ततः उपसिच्यमानस्य—थ

[अत्तृत्वस्य परमात्मगतत्वे प्राकरणिको हेतुः]

## ४२. प्रकरणाच्च ॥ १-२-१० ॥

प्रकरणं च इदं परस्यैव ब्रह्मणः ;

'महान्तं विभुमात्मानं मत्वा धीरो न शोचति' (कठ.उ. 2-22)

'नाऽयमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।

यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥' (कठ.उ. 2-23)

[3]इति हि[3] प्रकृतम् ।

'क इत्था वेद यत्र सः' (कठ.उ. 2-25)

इत्यपि हि, तत्प्रसादादृते तस्य दुरवबोधत्वमेव [4]पूर्वप्रस्तुतं[4] प्रत्यभिज्ञायते ॥ १० ॥

[आनन्तरिकऋतपानश्रुत्या अत्तुः जीवत्वशङ्का]

अथ स्यात्—न अयं ब्रह्मक्षत्रौदनसूचितः [5]पुरुषः[5], [6]अपहतपाप्मा परमात्मा[6] ; अनन्तरम्,

'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परार्ध्ये ।

छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेत' ॥ (कठ.उ. 3-1)

---

प्रकरणाच्चेति । स्ववाक्यस्थहेतुः पूर्वमुक्तः ; प्राकरणिकहेतुः अत्रोच्यते । ['क इत्था' इति प्रकृतत्वोपपादनम् ] (श्रु.प्र) ॥

---

[सूत्रार्थः । अत्ता—पूर्वोक्तादनक्रियाकर्तृत्ववान्, (न जीवः ; किन्तु परमात्मैव), प्रकरणाच्च—'महान्तं विभुमात्मानम्' इत्यदिना परमात्मन एव प्रक्रमादपि हेतोः । (न हि अन्यं प्रक्रम्य अन्यो वर्ण्यते) ॥]

महान्तं विभुमित्यादि प्रक्रमात्पर एव सः ।
अत्ता चराचरस्येति संहर्ता जगतो भवेत् ॥ (ब्र.प.मा.४२) ॥

---

[1] अवगम्यते—वा [2] ईदृशं च—थ [3] इति—न [4] प्रस्तुतं पूर्वं—न
[5] पुरुषोत्तमः—वा. [6] अपहतपाप्मा—द.

इति, कर्मफलभोक्तुरेव सद्वितीयस्य अभिधानात्। द्वितीयश्च प्राणः, बुद्धिर्वा स्यात्। ऋतपानं हि कर्मफलभोग एव। स च परमात्मनो न संभवति; बुद्धिप्राणयोस्तु भोक्तुर्जीवस्य उपकरणभूतयोः, यथाकथञ्चित् पाने अन्वयः सम्भवतीति, तयोः अन्यतरेण सद्द्वितीयो जीव एव प्रतिपाद्यते। तदेकप्रकरणत्वात्, पूर्वप्रस्तुतः अत्ताऽपि स एव भवितुमर्हति—इति॥

[अत्तृत्वे जीवगतत्वशङ्कायाः समाधानम्]

'तत्रोच्यते'[1]—

## ४३. गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ १-२-११ ॥

**ऋतं पिबन्तौ** इति प्रकरणविच्छेदं दर्शयति। लिङ्गाद्धि प्रकरणं दुर्बलम्। ऋतपानलिङ्गबलात् प्रकरणविच्छेदोऽत्र प्रतिपाद्यते। **कर्मफलभोक्तुरेवेति**। 'महान्तं विभुम्' इत्यादिवाक्यानां व्यवहितत्वात् विच्छेदो युक्तः; न तु 'यस्य ब्रह्म च' इत्यादिवाक्येन अव्यवहितस्य 'ऋतं पिबन्तौ' इति वाक्यस्य इति भावः। **सद्वितीयस्येति** द्वयोः समप्राधान्यशङ्कापरिहारार्थम्। **कर्मफलभोग एवेति**। [अत्तृत्वम्] सर्वसंहर्तृत्वमुच्यते इतिवत्, ऋतपानस्य न हि निर्वाहान्तरं सुवचम् इति भावः। **यथाकथञ्चित्**—उपकरणत्वेन। करणे कर्तृत्वोपचारात् 'ऋतं पिबन्तौ' इत्युक्तम् इति भावः॥

सूत्रे, **गुहां प्रविष्टाविति** [निर्देशः] 'यो वेद निहितं गुहायाम्' [इत्यादिना] परमात्मनो गुहाप्रवेशप्रसिद्धिप्राचुर्यात, बुद्धि-प्राणयोः अन्यतरस्य तादृशप्रसिद्ध्यभावाच्च। सूत्रे 'हि'शब्दः, सौत्रार्थस्य परमसाध्योपपादकत्वसूचकः इति भावः (श्रु.प्र)।

---

[सूत्रार्थः। **हि**—यतः, **गुहां प्रविष्टौ**—हृदयगुहां प्रविश्याऽवस्थितौ, **आत्मानौ**—जीवपरमात्मरूपौ चेतनावेव, **तद्दर्शनात्**—तयोरेव जीवपरयोः हृदयगुहाप्रवेशस्य 'गुहाहितं गह्वरेष्ठं पुराणम्' इति, 'गुहां प्रविश्य तिष्ठन्ती' इति च प्रक्रान्तत्वश्रुतेः, (अतः जीवद्वितीयः परमात्मैव अत्र अत्ता; न तु अन्तःकरणद्वितीयो जीवः)॥]

हृत्प्रविष्टौ जीवपरौ बुद्धिजीवौ न चात्र हि।
गुहाहितं प्रविश्येति तयोरेव तदुक्तितः ॥ (ब्र.प.मा. ४३)

---

[1] अत्रोच्यते—आ,इ,त्रा

न प्राण-जीवौ, बुद्धि-जीवौ वा 'गुहां प्रविष्टौ, ऋतं पिबन्तौ' इत्युच्येते ; अपि तु जीव-परमात्मानौ हि तथा व्यपदिश्येते।

कुतः ?

तद्दर्शनात्—अस्मिन् प्रकरणे जीव-परयोरेव गुहाप्रवेशव्यपदेशो दृश्यते। परमात्मनस्तावत्—

'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्।
अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्ष-शोकौ जहाति ॥' (कठ.उ. 2-12)

इति। जीवस्याऽपि—

'या प्राणेन सम्भवत्यदितिर्देवतामयी।
गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत ॥' (कठ.उ. 4-7)

इति। कर्मफलानि अत्ति—इति, अदितिः जीव उच्यते। प्राणेन संभवति—प्राणेन सह वर्तते। देवतामयी—इन्द्रियाधीनभोगा। गुहां प्रविश्य तिष्ठन्ती—हृदयपुण्डरीकोदरवर्तिनी। [1]भूतेभि[1]र्व्यजायत—पृथिव्यादिभिर्भूतैः सहिता देवादिरूपेण विविधा जायते।

एवं च सति 'ऋतं पिबन्तौ' इति व्यपदेशः, 'छत्त्रिणो गच्छन्ति' इतिवत् प्रतिपत्तव्यः। यद्वा, प्रयोज्य-प्रयोजकरूपेण पाने कर्तृत्वं जीव-परयोः उपपद्यते ॥११॥

---

इति इत्यस्य गुहाप्रवेशव्यपदेशो दृश्यते इत्यनेनाऽन्वयः। कर्मफलानीति। 'अदिति' शब्दस्य देवमातरि, भूमौ च वेदप्रसिद्धेः, तद्व्यावृत्त्यर्थमिदम्। रूढार्थस्य गुहाप्रवेशासम्भवात्, [अत्तीति अदितिः इति] योगपरिग्रहः इति भावः। 'कर्मफल'शब्देन ऋतशब्दार्थोऽपि दर्शितो भवति।

यद्वेति। 'छत्रिणो गच्छन्ति' इति न्यायेन निर्वाहे, लाक्षणिकत्वं स्यादिति, मुख्यकल्पनिर्वाहः। तत्प्रयोजको हेतुश्च (पा.सू. 1-4-55) इत्युक्तप्रक्रियया, परमात्मनः प्रयोजककर्तृतायाः कर्तृत्वविशेषत्वात्, तद्वाचित्वे 'ऋतं पिबन्तौ' इति निर्देशः स्वरसः इति भावः। इदं च निर्देशस्वारस्यम् उभयोश्चेतनत्वे एव घटते, 'उभौ गृहं प्रविष्टौ' इति निर्देशो हि! न दण्डसद्वितीयपुरुषविषयः ; अपि तु पुरुषद्वयविषयः ॥

अत्र शिक्षितं न्यायद्वयम्—१) गत्यभावे यत् अमुख्यम्, तत्र द्वयोः प्रतिपन्नयोः, प्रकरणानुगुणस्य ग्राह्यत्वम्। २) सजातीययोरेव द्विवचननिर्देशार्हत्वं चेति (श्रु.प्र) ॥११॥

---

[1] या भूतेभि—क्षा

[अज्ञत्व-सर्वज्ञत्वरूपविशेषणयोः जीव-परमात्मज्ञापकत्वम्]

## ४४. विशेषणाच्च ॥ १–२–१२ ॥

अस्मिन् प्रकरणे जीव-परमात्मानावेव उपास्यत्वोपासकत्वप्राप्यत्व-प्राप्तृत्वविशिष्टौ सर्वत्र प्रतिपाद्येते। तथा हि—

'ब्रह्मजज्ञं देवमीड्यं विदित्वा, निचाय्येमां शान्तिमत्यन्तमेति' (कठ.उ. 1–17)

इति। ब्रह्मजज्ञः—जीवः ; ब्रह्मणो जातत्वात् [1]ज्ञत्वाच्च[1]। तं देवमीड्यं विदित्वा—जीवात्मानमुपासकं ब्रह्मात्मकत्वेन अवगम्य, इत्यर्थः। तथा,

'यः सेतुरीजानानामक्षरं ब्रह्म यत् परम्।
अभयं तितीर्षतां पारं नाचिकेतं शकेमहि ॥' (कठ.उ 3–2)

इति उपास्यः परमात्मा उच्यते। नाचिकेतम्—नाचिकेतस्य कर्मणः प्राप्यम्, इत्यर्थः।

'आत्मानं रथिनं विद्धि शरीरं रथमेव च' (कठ.उ. 3–13)

इत्यादिना, उपासको जीव उच्यते। तथा,

'विज्ञानसारथिर्यस्तु मनः प्रग्रहवान् नरः।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥' (कठ.उ. 3-9)

इति, प्राप्य-प्राप्तारावभिधीयेते जीव-परमात्मानौ। इहाऽपि 'छायातपौ' इति, अज्ञत्व-सर्वज्ञत्वाभ्यां तावेव विशिष्य व्यपदिश्येते ॥

---

**उपास्यत्वे**त्यादि। तत्तद्वाक्योदितविशेषणान्तराणि च प्राप्यत्वप्राप्तृत्वोपास्यत्वोपासकत्वान्तर्भूतानि इत्यभिप्रायः। **ब्रह्मजज्ञमिति** उपासकं वदति। [**सेतुरीजानानामिति**। **ईजानानाम्**—यज्वनाम्, **सेतुः**—आधारभूतः, कर्मफलप्रदः इत्यर्थः।] **शकेमहि** इति। उपासितुं प्राप्तुम् इति शेषः।

**उपासक** इति। शरीराद्युपासनपरिकरसहितो जीव उच्यते इत्यर्थः। **इहाऽपि**—'ऋतं पिबन्तौ' इति वाक्येऽपि। '**अज्ञत्वसर्वज्ञत्वाभ्याम्**' इत्यनेन 'ज्ञाज्ञौ द्वौ' इति

---

[सूत्रार्थः। **अत्ता**—अस्मिन् प्रकरणे अदनकर्तृत्वेनोक्तः (परमात्मैव), **विशेषणाच्च**—जीव-परयोरुभयोरेव प्राप्तृत्व-प्राप्यत्वाभ्यां, प्रापकत्व-प्राप्यत्वाभ्यां च असाधारणधर्माभ्यां श्रुतौ उक्तेः ॥]

**तयोरेव प्रकरणे ह्युपस्योपासकत्वतः।
विशिष्य वचनादत्र ब्रह्मजीवौ गुहाहितौ ॥ (ब्र.प.मा ४४)**

---

[1] तज्ज्ञत्वाच्च—थ

[प्रकरणस्य जीवपरत्वशङ्का]

अथ स्यात्—

'येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नाऽयमस्तीति चैके' (कठ.उ. 1-21) इति, जीवस्वरूपयाथात्म्यप्रश्नोपक्रम(त्वा)त्, सर्वमिदं प्रकरणं जीवपरमिति प्रतीयते-इति॥

[जीवपरत्वशङ्कापरिहारः]

नैतदेवम्; न हि जीवस्य देहातिरिक्तस्य अस्तित्व-नास्तित्व[1]शङ्कया अयं[1] प्रश्नः; तथा सति, पूर्ववरद्वयवरणानुपपत्तेः।

तथा हि—पितुः सर्ववेदसदक्षिणक्रतुसमाप्तिवेलायां दीयमानदक्षिणावैगुण्येन क्रतुवैगुण्यं मन्यमानेन कुमारेण नचिकेतसा आस्तिकाग्रेसरेण, स्वात्मदानेनाऽपि पितुः क्रतुसाद्गुण्यमिच्छता,

'कस्मै मां दास्यसि?' (कठ.उ. 1-4)

इति, असकृत् पितरं पृष्टवता, स्वनिर्बन्धरुष्ट[2]पितृवचनात्[2] मृत्युसदनं प्रविष्टेन, स्वसदनात् प्रोषुषि यमे, तददर्शनात् तत्र तिस्रो रात्रीः उपोषुषा, स्वोपवासभीततत्प्रतिविधानप्रवृत्त-मृत्यु[3]प्रत्ते[3] वरत्रये, आस्तिक्यातिरेकात् प्रथमेन वरेण, स्वात्मानं प्रति पितुः प्रसादो वृतः। एतच्च सर्वं देहातिरिक्तमात्मानम् अजानतः नोपपद्यते।

---

वाक्यं स्मारितम्। उदाहृतवाक्यैकार्थ्यात् 'छायाऽऽतप'शब्दयोरपि अयमेवाऽर्थः। **विशेषणाच्च** इति सूत्रे छायाऽऽतपत्वरूपविशेषणमपि विवक्षितमिति भावः॥

**अथ स्यादिति।** अस्मिन् प्रकरणे जीव-परमात्मनोः विशेष्यत्वम् अयुक्तम्; उपक्रमस्य जीवपरत्वात् इत्याशयः (श्रु.प्र)॥

[**सर्ववेदसदक्षिणेति।** सर्ववेदसं—सर्वस्वं, दक्षिणा—ऋत्विग्भ्यो देयं धनं, यस्मिन् सः सर्ववेदसदक्षिणः। स चाऽसौ क्रतुश्च। स च विश्वजिन्नामको यागः। सर्वं—स्वकीयं समस्तं धनं, वेदयति—ऋत्विग्भ्यो लम्भयति इति तादृशो यजमानः सर्ववेदाः। तेन सर्ववेदसा प्रवृत्तः अध्वरः—सर्ववेदसः इति वा। **वैगुण्यम्**—क्रतौ, न्यूनगुणता, उद्दिष्टफलजनकता-वच्छेदकरूपासम्पत्तिः। दक्षिणायां **वैगुण्यम्**—शास्त्रविहितस्वरूपराहित्यम्। **साद्गुण्यम्**—शास्त्रविहितस्वरूपपूर्तिः। **प्रोषुषि**—प्रवासमापन्ने। **उपोषुषा**—कृतोपवासेन। **प्रति-विधानम्**—परिहारः। **प्रत्ते**—प्रकर्षेण दत्ते।]

---

[1] शङ्कायां—द.　[2] पितुः वचनात्—वा.　[3] प्रदत्ते—थ.

[1]द्वितीयेन च[1] वरेण, उत्तीर्णदेहात्मानुभाव्यफलसाधनभूता अग्निविद्या वृता। तदपि देहातिरिक्तात्मानभिज्ञस्य न सम्भवति।

अतः तृतीयेन वरेण यदिदं व्रियते—

'येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नाऽयमस्तीति चैके।

एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः॥' (कठ.उ. 1–21)

इति, अत्र परमपुषार्थरूपब्रह्मप्राप्तिलक्षणमोक्षयाथात्म्यविज्ञानाय, तदुपायभूतपरमात्मोपासनपरावरात्मतत्त्वजिज्ञासया अयं प्रश्नः क्रियते। एवं च 'येयं प्रेते' इति, न शरीरवियोगमात्राभिप्रायम्; अपि तु सर्वबन्धविनिर्मोक्षाभिप्रायम्। यथा—

'न प्रेत्य संज्ञाऽस्ति' (बृ.उ. 4–4–12)

इति। अयमर्थः—मोक्षाधिकृते मनुष्ये प्रेते—सर्वबन्धविनिर्मुक्ते, तत्स्वरूपविषया वादिविप्रतिपत्तिनिमित्ता अस्ति-नाऽस्त्यात्मिका येयं विचित्सा, तदपनोदनाय, तत्स्वरूपयाथात्म्यं त्वया अनुशिष्टः अहं विद्याम्—जानीयाम्, इति॥

[मोक्षविषयिण्यो विप्रतिपत्तयः]

तथा हि बहुधा विप्रतिपद्यन्ते—

१. केचित्—वित्तिमात्रस्य आत्मनः स्वरूपोच्छित्तिलक्षणं मोक्षमाचक्षते।

---

पितृप्रसादवरणस्य, अग्निविद्यावरणस्य च प्रत्येकनिरपेक्षहेतुत्वसूचनार्थम्, एतच्च सर्वं, तदपि इति द्विरुक्तम्।

अत्रेति। यदिदं व्रियते, यत् वरणं क्रियते तत्र वरणे इत्यर्थः। **मोक्ष.... क्रियते** इति। मोक्षज्ञानाय मोक्षानुबन्धिजिज्ञासया अयं प्रश्नः इत्यर्थः। 'येयम्' इत्यादिप्रश्नवाक्ये मोक्षस्वरूपप्रश्नः कण्ठोक्तः। प्रतिवचनप्रकारेण उपासनादिप्रश्नश्च अर्थसिद्धः इत्यवगम्यते। एवं विभागज्ञापनार्थं **विज्ञानाय, जिज्ञासया** इति पृथगुक्तिः। मोक्षप्राप्तिप्रश्ने प्राप्य-प्रापक-प्राप्तृप्रश्नोऽपि अन्तर्गतः इति भावः दर्शितो भवति। **अस्ति-नास्त्यात्मिका**—'अस्ति-नाऽस्ति' इत्येवमादिरूपा। **जानीयामिति** 'विद्याम्' इति पदस्य द्वितीयान्तकारकपदत्वशङ्कानिवर्तनम् (श्रु.प्र)॥

1. **केचित्**—बौद्ध-माध्यमिकाः (भा. द.)। [**वित्तिमात्रस्य**—विज्ञानैकस्वरूपस्य। मात्रपदेन धर्म-धर्मिभावादेः दूरीकरणम्। 'अविभागोऽपि बुद्ध्यात्मा विपर्यासितदर्शनैः। ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते'॥ इति तदीया कारिका।]

---

[1] द्वितीयेन—द.

२. अन्ये—वित्तिमात्रस्यैव सतः अविद्याऽस्तमयम्।

३. अपरे—पाषाणकल्पस्यात्मनः ज्ञानाद्यशेषवैशेषिकगुणोच्छेदलक्षणं कैवल्यरूपम्।

४. अपरे तु—अपहतपाप्मानं परमात्मानम् अभ्युपगच्छन्तः, तस्यैव उपाधिसंसर्गनिमित्तजीवभावस्य, उपाध्यपगमेन तद्भाव[1]लक्षणं मोक्षमातिष्ठन्ते[1]।

५. त्रय्यन्तनिष्णातास्तु—निखिलजगदेककारणस्य, अशेषहेयप्रत्यनीकानान्तज्ञानानन्दैकस्वरूपस्य स्वाभाविकानवधिकातिशयासङ्ख्येयकल्याणगुणाकरस्य, सकलेतरविलक्षणस्य; सर्वात्मभूतस्य, परस्य ब्रह्मणः, शरीरतया प्रकारभूतस्य, अनुकूलापरिच्छिन्न[2]ज्ञानस्वरूपस्य[2], परमात्मानुभवैकरसस्य, जीवस्य, अनादिकर्मरूपाविद्यातिरोहितस्वरूपस्य, अविद्योच्छेदपूर्वकस्वाभाविकपरमात्मानु[3]भवमेव[3] मोक्षम्—आचक्षते।

तत्र 'मोक्षस्वरूपं, तत्साधनं च त्वत्प्रसादात् विद्याम्' इति नचिकेतसा पृष्टो मृत्युः, तस्यार्थस्य दुरवबोधत्वप्रदर्शनेन, विविधभोगवितरणप्रलोभनेन च एनं परीक्ष्य, योग्यताम् अभिज्ञाय, परावरात्मतत्त्वविज्ञानम्, परमात्मोपासनम्, तत्पदप्राप्तिलक्षणं मोक्षं च,

---

2. **अन्ये**—शाङ्कराः (भा.द)। [**अविद्याऽस्तमयमिति**। अविद्योपाधिकत्वात् बन्धस्य, बन्धविनाश एव मोक्षः इति।]

3. **अपरे**—तार्किकाः (भा.द)। [**पाषाणकल्पस्येति**। आत्मनः स्वरूपतः ज्ञानत्वाभावात् पाषाणकल्पतेति भावः।] **वैशेषिकगुणाः**—विशेषगुणाः, बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावताः।

4. **अपरे तु**—भास्करीयास्तु।

5. **त्रय्यन्तनिष्णाताः**—विशिष्टाद्वैतिनः (भा.द)। **निखिलेति** कारणशोधकगुणप्रतिपादकवाक्यानां योऽर्थः तद्विशिष्टमाह। **अनुकूलेति**। **अनुकूलम्**—आनन्दरूपम्, अपरिच्छिन्नज्ञानकं स्वरूपं यस्य, तस्य (भा.द)। **स्वरूपशब्दः** धर्म-धर्मिणोः साधारणः।

**परावरेति**। ज्ञातव्यपरावरात्मतत्त्वम् उपदिश्य इत्यन्वयः। **विशेषान्**—प्रणवाग्निविद्यादीन्।

---

[1] लक्षणम् आतिष्ठन्ते—द, लक्षणमोक्षमातिष्ठन्ते—वा [2] स्वरूपस्य—द.
[3] नुभव एव—थ.

'तं दुर्दर्शं गूढमनुप्रविष्टम्' (कठ.उ. 2-12)

इत्यारम्य,

'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' (कठ.उ. 3-9)

इत्यन्तेन उपदिश्य, तदपेक्षितांश्च विशेषान् उपदिदेश—इति सर्वं समञ्जसम्। अतः 'परमात्मैव अत्ता' इति सिद्धम् ॥ १२ ॥

॥ इति अत्त्रधिकरणम् ॥ २ ॥

---

अत्ता इति सूत्रे स्ववाक्यस्थो हेतुरुक्तः। **द्वितीयं** (प्रकरणाच्चेति) सूत्रं प्राकरणिकपूर्ववाक्यस्थहेतुपरम्। **तृतीयं** (गुहां प्रविष्टाविति) अनन्तरवाक्यशङ्कापरिहारपरम्। अतः तत्र 'च'शब्दप्रयोगः। **चतुर्थम्** (विशेषणाच्चेति) सूत्रम् उपरितनवाक्यस्थहेतुभिः तृतीयसूत्रार्थोपपादकम् इति सूत्रसङ्गतिः (श्रु.प्र) ॥ १२ ॥

[**सूत्राणि**—1. अत्ता चराचर 2. प्रकरणाच्च
3. गुहां प्रविष्टौ 4. विशेषणाच्च]

॥ इति अत्त्रधिकरणम् ॥ २ ॥

## १४. अन्तराधिकरणम् ॥ १-२-३ ॥ (सू. 13-18)

[अधिकरणार्थः—अक्ष्याधारपुरुषत्वं परमात्मन एव ; न जीवादेः ।]

[उपकोसलविद्या (छां.उ. 4-10)]

# ४५. अन्तर उपपत्तेः ॥ १-२-१३ ॥

[विषयवाक्यप्रदर्शनम् ]

[1]इदमामनन्ति[1] च्छन्दोगाः—

'य एषोऽक्षिणि पुरुषो दृश्यते । एष आत्मेति होवाच, एतदमृत-[2]मेतदभय[2]मेतद्ब्रह्म' (छां.उ. 4-15-1)

इति ॥

[संशयस्वरूपम्]

[3]तत्र[3] सन्देहः—किमयम् अक्ष्याधारतया निर्दिश्यमानः पुरुषः, १) प्रतिबिम्बात्मा ? २) उत चक्षुरिन्द्रिया[4]धिष्ठाता देवता[4]विशेषः ? ३) उत जीवात्मा

---

अन्तर इति । अत्र सङ्गतिः पूर्वोक्तया दिशा सिद्धेति न कण्ठोक्ता । 'गूढोत्मा न प्रकाशते' 'तं दुर्दर्शम्' इत्यादिना परमात्मा दुर्दर्श[एव] चेत् , ['य एष....दृश्यते' इति] सुदर्शनतया प्रसिद्धत्वेन निर्दिष्टः, न परमात्मा भवितुमर्हति—इति शङ्कया सङ्गतिः ।

तत्र सन्देह इति । किम् अक्ष्याधारतया निर्दिश्यमानः प्रतिबिम्बचक्षुराधिष्ठातृजीवानामन्यतमः ? उत परमात्मा ?—इति । तदर्थं किम् अमृतत्वादयो यथाकथञ्चित् नेयाः ? उत मुख्याः?—इति 'कं ब्रह्म' इति प्रकृतमेव ब्रह्म इह किम् उपासनस्थानगुणविधानार्थं निर्दिश्यते?

---

[सूत्रार्थः । अन्तरः—'य एषोऽक्षिणि पुरुषः' इति अक्ष्यन्तर्वर्तितया उक्तः पुरुषः, परमात्मैव, उपपत्तेः—वक्ष्यमाणानां संयद्वामत्वादीनां गुणानां परमात्मन्येव अबाधिततया सम्भवात् ]

अक्ष्यन्तर्वर्तिपुरुषो जीवबिम्बसुरात्परः ।
अमृतत्वाभयत्वादिगुणानामुपपत्तितः ।। (ब्र.प.मा ४५)

---

[1] इदं समामनन्ति—श्रा, वा. [2] मभय—वा. [3] अत्र—थ [4] धिष्ठातृदेवता—न

४) अथ परमात्मा ?—इति ॥

[सयुक्तिकः पूर्वपक्षः]

किं युक्तम् ?

१) प्रतिबिम्बात्मा—इति ।

कुतः ?

प्रसिद्धवन्निर्देशात्, 'दृश्यते' इति अपरोक्षाभिधानाच्च ।

२) जीवात्मा वा ; तस्याऽपि हि चक्षुषि विशेषेण संनिधानात्, प्रसिद्धिः उपपद्यते । उन्मीलितं हि चक्षुः उद्वीक्ष्य, जीवात्मनः शरीरे स्थिति-गती निश्चिन्वन्ति ।

३) 'रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः' (बृ उ. 7-5-1)

---

उत न ?—इति । किं मध्यस्थाग्निविद्यया ब्रह्मप्रकरणं विच्छिन्नम् ? उत न ? किम् अग्निविद्या ब्रह्मविद्याङ्गम् ? उत न ? किम अग्निविद्याफलं ब्रह्मविद्याङ्गत्वानुगुणम् ? उत न ?—इति विचारः ।

अत्र पूर्वपक्षे फलितम्—यदा अग्निविद्याफलं ब्रह्मविद्याङ्गत्वाननुगुणम् ; तदा अग्निविद्यायाः ब्रह्मविद्याङ्गत्वाभावेन, ब्रह्मप्रकरणविच्छेदेन, पूर्वप्रकृतब्रह्मणः इह परामर्शाभावेन अमृतत्वादीनाममुख्यतया [अक्ष्याधारपुरुषः] प्रतिबिम्बादिष्वन्यतमः—इति ॥

सिद्धान्ते फलितम्—यदा अग्निविद्याफलं ब्रह्मविद्यानुगुणम् ; तदा अङ्गत्वेनाऽग्निविद्यायाः ब्रह्मविद्याप्रकरणविच्छेदकत्वाभावेन प्रकृतब्रह्मणः इह परामर्शसम्भवेन, अमृतत्वादीनां च स्वतः-प्राप्तमुख्यत्वसिद्धेः [अक्ष्याधारपुरुषः] परमात्मा—इति फलितम् ॥

प्रतिबिम्ब-जीव-आदित्यानां प्रसिद्धयः ; अपरोक्षप्रसिद्धिः, यौक्तिकप्रसिद्धिः, श्रुति-प्रसिद्धिश्चेति यथाक्रममनुसन्धेयाः ।

**प्रसिद्धवन्निर्देशः** 'य, एषः' इति पदाभ्याम् ।

**सन्निधानात्**—संनिधानावगमात् । जीवस्य देहसंनिधेः चक्षुषि अवगमात् इत्यर्थः । **उन्मीलितं…निश्चिन्वन्ति** इति । यथा 'अस्मिन् कर्मणि, अस्य सामर्थ्यं दृष्टम्' इत्युक्ते, 'तत्कर्म, तत्सामर्थ्यसूचकम्' इत्युक्तं भवति, एवम् 'अक्षणि दृश्यते' इत्युक्ते, 'देहे जीवावस्थानं चक्षुरधीननिश्चयम्' इत्युक्तं भवति इत्यर्थः । अन्यत् उपक्रमानुगुणं नेयम् । तस्मात् अमृतत्व-संयद्वामत्वाद्युक्तिः स्तुतिरूपा । 'एष आत्मेति' इति 'इति'करणं च अर्थात् तात्पर्यद्योतकम् ।

इति श्रुति[1]प्रसिद्ध्या, चक्षुःप्रतिष्ठः[1] देवताविशेषो वा।

एष्वेव प्रसिद्धवन्निर्देशोपपत्तेः, एषामन्यतमः—

[सिद्धान्तः]

एति प्राप्ते, प्रचक्ष्महे—अन्तर उपपत्तेः। अक्ष्यन्तरः परमात्मा।

कुतः ?

'एष आत्मेति होवाच। एतदमृत[2]मेतदभय[2]मेतद्ब्रह्मेति' (छां.उ. 4–15–1)

'एतं 'संयद्वाम' इत्याचक्षते ; एतं हि सर्वाणि वामान्यभिसंयन्ति'(छां.उ.4–15–2)

'एष उ एव वामनीः ; एष हि सर्वाणि वामानि नयति' (छां.उ. 4–15–3)

'एष उ एव भामनीः ; एष हि सर्वेषु लोकेषु भाति' (छां.उ. 4–15–4)

इत्येषां गुणानां, परमात्मन्येव उपपत्तेः ॥ १३ ॥

[परमात्मनः चक्षुष्यवस्थानं श्रुतिसिद्धम्]

## ४६ स्थानादिव्यपदेशाच्च ॥१–२–१४॥

[3]चक्षुषि स्थिति[3]-नियमनादयः परमात्मन एव,

'यश्चक्षुषि तिष्ठन्' (बृ.उ 5–7–22)

[4]इत्येवमादौ[4] व्यपदिश्यन्ते। अतश्च,

---

देवताविशेषः—आदित्यः। **एष्वेवेति**। न तु परमात्मनि इत्यर्थः (श्रु.प्र) ॥

राद्धान्ते, **एषां गुणानामिति**। निरुपाधिकाः अमृतत्वादयः, न जीवादिषु सम्भवन्ति इत्यर्थः। उपक्रमस्थमेकं लिङ्गम् उपरितनानेकगुणविरोधे दुर्बलम्। अत एव च, न अमृतत्वाद्युक्तिः स्तुतिः इति भावः। 'इति होवाच' इत्यादिषु 'इति'करणम् अर्थपरमेव दृष्टम् इति चानुसन्धेयम्। **उपपत्तेः अक्ष्यन्तरः परमात्मा** इत्यन्वयः (श्रु.प्र) ॥१३॥

---

[सूत्रार्थः। **स्थानादीनाम्**—चक्षुः स्थिति-चक्षुर्नियमनादीनाम्, **व्यपदेशाच्च**—'यश्चक्षुषि तिष्ठन्' 'चक्षुरन्तरो यमयति' इत्यादिश्रुतिषु स्पष्टं कथनादपि, (अक्ष्यन्तर्वर्तितया उक्तः पुरुषः परमात्मैव ; न जीवः) ।।]

यश्चक्षुषीति श्रुत्या च स्थानादिव्यपदेशतः।
नियन्तृत्वामृतत्वादिगुणेभ्यश्च परः पुमान् ।। (ब्र.प.मा. ४६)

---

[1] प्रसिद्धचक्षुःप्रतिष्ठः—आ, [2] मभय—वा [3] चक्षुस्थिति—ई [4] इत्यादिना—वा

'[1]य एषो[1]ऽक्षिणि पुरुषः' (छां.उ. 4-15-1)

इति, स एव प्रतीयते। अतः प्रसिद्धवन्निर्देशश्च परमात्मनि उपपद्यते। तत एव, 'दृश्यते' इति साक्षात्कारव्यपदेशोऽपि, योगिभिः दृश्यमानत्वात् उपपद्यते ॥ १४ ॥

[प्रकरणप्रतिपादितं निरवधिकानन्दत्वं परमात्मन एव]

## ४७. सुखविशिष्टाभिधानादेव च ॥ १-२-१५ ॥

इतश्च—अक्ष्याधारः, पुरुषोत्तमः ;

'कं ब्रह्म खं ब्रह्म' (छां.उ. 4-10-5)

इति प्रकृतस्य सुखविशिष्टस्य ब्रह्मणः उपासनस्थानविधानार्थं, संयद्वामत्वादिगुण-विधानार्थं च,

'य एषोऽक्षिणि पुरुषः' (छां उ. 4-15-1)

इत्यभिधानात्। [2]एवकारः[2] नैरपेक्ष्यं हेतोः द्योतयति ॥

---

**स्थितीति**। 'अनवस्थितेः' (ब्र.सू 1-2-18) इति व्यतिरेकस्य वक्ष्यमाणत्वात्, 'चक्षुषि तिष्ठन्' इति श्रुत्यनुरोधेन, **'स्थान'**शब्दः स्थितिपरतया व्याख्यातः ; न प्रदेशपरतया सौत्रस्य आदिशब्दस्य व्याख्यानं **नियमनेति**। अत्र 'आदि'शब्देन धारकत्वादिरभिप्रेतः। **तत एव**—श्रुतिप्रसिद्धेरेव। शास्त्रप्रतिपन्नं हि तत्त्वं योगिभिरुपास्यं दृश्यं च ; 'यत्तदद्रेश्यम्' इत्युक्त्वा, 'परिपश्यन्ति धीराः' इत्युक्तेः (श्रु.प्र) ॥१४॥

**सुखविशिष्टम्**—सुखत्वविशिष्टम् ; द्व्येकयोः (पा.सू. 1-4-22) इतिवत्। 'तद्गुणसारत्वात्' (ब्र.सू. 2-3-29) इति न्यायेन, धर्मभूतसुखविशिष्टम् इति वा।

**उपासन....भिधानादिति**। 'कं ब्रह्म' इत्युक्तस्य ब्रह्मणः, 'एतदमृतमेतदभयमेतद्ब्रह्म' इति, 'ब्रह्म'शब्देन प्रत्यभिज्ञानात् इत्यर्थः। **नैरपेक्ष्यमिति**। पूर्वसूत्रोक्तं हेतुद्वयं, व्यतिरेकोक्तिसापेक्षम् ; 'अनवस्थितेरसंभवात्' (ब्र.सू. 1-2-18) इति हि वक्ष्यते। अयं तु हेतुः, व्यतिरेकोक्तिनिरपेक्षः इति भावः (श्रु.प्र)।

---

[सूत्रार्थः। **सुखविशिष्टस्य**—अपरिच्छिन्नसुखविशिष्टतया अग्निभिरुपदिष्टस्यैव परस्य ब्रह्मणः **अभिधानादेव च**—'य एषोऽक्षणि' इति वाक्ये 'य एषः' इत्यनेन उपास्यतया कथनादेव च, **सः**—अक्ष्यन्तःपुरुषः, परं ब्रह्मैव ; न जीवः ॥]

कं ब्रह्मेति सुखाढ्यस्य ध्यानार्थमिह चाक्षणि।
अभिधानात् स्थितेरत्र ह्यक्ष्यन्तस्थः परः पुमान् ॥ (ब्र.प.मा. ४७)

---

1 एषोऽन्तर—थ 2 एवकारात्—वा

[प्रकरणविच्छेदप्रदर्शनेन परमात्मपरत्वाभावशङ्का]

ननु—अग्निविद्याव्यवधानात्, 'कं ब्रह्म' इति प्रकृतं ब्रह्म, न इह संनिधत्ते। तथा हि; अग्नयः,

'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' (छां.उ. 4–10–5)

इति ब्रह्मविद्याम् उपदिश्य,

'अथ हैनं गार्हपत्योऽनुशशास' (छां.उ. 4–11–1)

इत्यारभ्य, अग्नीनामुपासनम् उपदिदिशुः।

न च—अग्निविद्या ब्रह्मविद्याङ्गम्—इति [1]शक्यं वक्तुम्[1];

ब्रह्मविद्या[2]फलानन्तर्गत[2]तद्विरोधिसर्वायुःप्राप्ति-सन्तत्यविच्छेदादिफलश्रवणात्॥

[प्रकरणाविच्छेदसमर्थनेन परमात्मपरतानिर्णयः]

उच्यते—

'प्राणो ब्रह्म' (छां.उ. 4–10–5)

'एतदमृत[3]मेतदभय[3]मेतद्ब्रह्म' (छां.उ. 4–15–1)

इति, उभयत्र ब्रह्मसंशब्दनात्,

'आचार्यस्तु ते गतिं वक्ता' (छां.उ. 4–14–1)

इति अग्निवचनाच्च गत्युपदेशात्पूर्वं ब्रह्मविद्यायाः असमाप्तेः 'तन्मध्यगता अग्निविद्या ब्रह्मविद्याङ्गम्' इति निश्चीयते;

'अथ हैनं गार्हपत्योऽनुशशास' (छां.उ. 4–11–1)

इति, ब्रह्मविद्याधिकृतस्यैव अग्निविद्योपदेशाच्च। किं च—

---

ब्रह्मविद्याङ्गमिति। 'फलवत्सन्निधावफलं तदङ्गम्' इति न्यायात् इति भावः। तद्विरोधीति, अङ्गानामपि अङ्गिफलाविरुद्धफलमुपपद्यते इति शङ्कापरिहारार्थमुक्तम्। प्राणो....निश्चीयत इति। उभयत्र—उपक्रमोपसंहारयोः ब्रह्मसंशब्दनम्, अग्निविद्यायाः प्राक् ब्रह्मविद्यायाः असमाप्तिः, ब्रह्मविद्याधिकृतस्य अग्निविद्योपदेशः, तापत्रयातुरस्य तच्छान्त्यर्थम् उभयोः समुच्चित्योपदेशश्च इति हेतुचतुष्टयेन अङ्गाङ्गित्वम् [इत्याशयः]। **एनमिति**। 'एनम्'

---

[1] वक्तुं युक्तम्—वा  [2] फलानन्तर्गतं—थ  [3] मभय—वा

'व्याधिभिः प्रतिपूर्णोऽस्मि' (छां.उ. 4-10-3)

[1]इति, ब्रह्मप्राप्ति[1]व्यतिरिक्तनानाविधकामोपहतिपूर्वकगर्भजन्म-जरा-मरणादि[2]भवभयोपतप्ताय[2] उपकोसलाय,

'एषा सोम्य ते [3]अस्मद्विद्या आत्म[3]विद्या च' (छां.उ. 4-14-1)

इति समुच्चित्योपदेशात्, मोक्षैकफलात्मविद्याङ्गत्वम् अग्निविद्यायाः प्रतीयते। एवं च अङ्गत्वे अवगते सति, 'फलानुकीर्तनम् अर्थवादः [4]इति गम्यते[4] ॥

[अर्थवादोक्तफलस्य मोक्षाऽविरोधिता]

न च—अत्र मोक्षविरोधिफलं किञ्चित् श्रूयते ;

'अहपते पापकृत्याम्। लोकिभवति। सर्वमायुरेति।
ज्योक् जीवति। नाऽस्यावरपुरुषाः क्षीयन्ते। उप वयं तं
भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च' (छां.उ. 4-13-2)

इत्यमीषां फलानां मोक्षाधि[5]कृतस्य[5] अनुगुणत्वात्। अपहते पापकृत्याम्—ब्रह्मप्राप्तिविरोधि पापं कर्म [6]अपहन्ति[6]। लोकी भवति—तद्विरोधिनि पापे निरस्ते, ब्रह्मलोकं प्राप्नोति। सर्वमायुरेति—ब्रह्मोपासन[7]समाप्तेः[7], यावत् आयुः अपेक्षितम्, तत्सर्वम् एति। ज्योक् जीवति— [8]व्याध्यादिभिः[8] अनुपहतः, यावद्ब्रह्मप्राप्ति जीवति। न अस्य अवरपुरुषाः क्षीयन्ते—अस्य शिष्य-प्रशिष्यादयः, [9]पुत्र-पौत्रादयोऽपि[9] ब्रह्मविद एव भवन्ति।

---

इति अन्वादेशेन निर्देशः, श्रुतब्रह्मविद्यस्यैव अग्निविद्याधिकारित्वज्ञापकः। शब्दतः प्रकृतस्यैव पुनः परामर्शो हि! अन्वादेशः, न तु यथाकथञ्चित् बुद्धिस्थपरामर्शः (श्रु.प्र)।

**समुच्चित्योपदेशादिति**। 'समुच्चय'शब्दः, उपदेष्टव्यत्वविशेषविवक्षया समसमुच्चयपरः। यद्वा, सम्बन्धमात्रपरः। स च अङ्गाङ्गिभावे पर्यवस्यति। **अर्थवाद** इति। 'द्रव्यगुणसंस्कारकर्मसु परार्थत्वात्, फलश्रुतिरर्थवादः स्यात्' (पू.मी.सू. 4-3-1) इति हि कर्ममीमांसासूत्रम् (श्रु.प्र)।

**ज्योक**—उज्ज्वलः। अनेन व्याध्याद्यनुपहतत्वं फलितम्।

---

[1] ब्रह्मप्राप्ति—द [2] भवमयाभितप्ताय—वा, भवभयाभितप्ताय—अ, आ, इ, थ
[3] अग्निविद्या आत्म—थ, अस्मद्विद्या चात्म-द [4] इत्यवगम्यते—न [5] कृतया—थ [6] अपहते—इ, अभिहते—थ [7] परिसमाप्तेः—न [8] व्याधिभिः—वा [9] पुत्रपौत्रादयश्च—न

'नाऽस्याऽब्रह्मवित् कुले भवति' (मुण्ड.उ. 3-2-1)

इति च श्रुत्यन्तरे ब्रह्मविद्याफलत्वेन श्रूयते। उप वयं तं भुञ्जामोऽ[1]स्मिंश्च[1] लोकेऽमुष्मिंश्च, वयम्—अग्नयः, तम् एनम् उपभुञ्जामः—यावद्ब्रह्मप्राप्तिविघ्नेभ्यः परिपालयाम इति॥

[उक्तार्थनिगमनम्]

अतः अग्निविद्यायाः ब्रह्मविद्याङ्गत्वेन तत्सन्निधानाविरोधात्, सुखविशिष्टं प्रकृतमेव ब्रह्म, [2]उपासन[2]स्थानविधानार्थं, गुणविधानार्थं [3]चोच्यते[3]॥

[ब्रह्मणः पुनरवक्तव्यत्वाक्षेपः]

ननु—

'आचार्यस्तु ते गतिं वक्ता' (छां.उ. 4-14-1)

इति गतिमात्रपरिशेषणात् आचार्येण गतिरेव उपदेश्या, इति गम्यते। तत्कथं स्थानगुणविध्यर्थता उच्यते?

[पूर्वोक्तशङ्कापरिहारः]

तदभिधीयते—

'आचर्यस्तु ते गतिं वक्ता' (छां.उ. 4-14-1)

इत्यस्य, अयमभिप्रायः—ब्रह्मविद्याम् अनुपदिश्य प्रोषुषि गुरौ, तदलाभात् अनाश्वांसम् उपकोसलम् उज्जीवयितुं, स्वपरिचरणप्रीताः गार्हपत्यादयः गुरोरग्नयः, तस्मै ब्रह्मस्वरूपमात्रं, तदङ्गभूतां च अग्निविद्यामुपदिश्य,

---

नाऽस्येति, [स्व]कुले ब्रह्मविदुत्पत्तेः ब्रह्मविद्यानुगुणफलत्वं दर्शयति। भुञ्जाम इति। 'भुज पालनाभ्यवहारयोः' (पा.धा.पा. 1455) इति धातोः 'भुजोऽनवने' (पा.सू. 1-3-66) इति हि आत्मनेपदम्। अतः परस्मैपदित्वान् अयं धातुः, अवनार्थ इत्यर्थः। परिपालयाम इति। श्रुतौ 'उप'शब्दार्थः, 'परि'णा उपसर्गेण सूचितः। विघ्ननिवारणपर्यन्तः किञ्चित्कारः ब्रह्मविद्यां प्रति अग्निविद्यायाः अङ्गत्वनिर्वाहकः इत्यभिप्रायः (श्रु.प्र)॥

नन्विति। स्थान-गुणयोः विधेयत्वे सति हि, तदर्थं पुनर्ब्रह्मणोऽभिधानम्। तत्तु नाऽस्ति; पूर्वं तयोः आचार्येण वक्ष्यमाणत्वाकथनात्। अतः स्थानादिपरवाक्यं न परमात्मविषयमिति; अन्यपरमिदं वाक्यम् इत्यर्थः।

---

[1] स्मिन्—वा [2] इहोपासन—क्ष, थ, [3] चोद्यते—थ

'[1]आचार्याद्धैव[1] विद्या विदिता साधिष्ठं [2]प्रापत्[2]' (छां.उ. 4-9-3)
इति श्रुत्यर्थ[3]मालोच्य[3], 'साधुतमत्वप्राप्त्यर्थम् आचार्य एव अस्य संयद्वामत्वादिगुणकं ब्रह्म, तदुपासनस्थानम्, अर्चिरादिकां च गतिम् उपदिशतु'
इति मत्वा,

'आचार्यस्तु ते गतिं वक्ता' (छां.उ. 4-14-1)

इत्यवोचन्। 'गति'ग्रहणम उपदेश्यविद्याशेषप्रदर्शनार्थम्। अत [4]एव[4] आचार्योऽपि,

'अहं तु ते तद्वक्ष्यामि, [5]यथा[5] पुष्करपलाश आपो न श्लिष्यन्ते एवम्, एवंविदि पापं कर्म न श्लिष्यते' (छां.उ. 4-14-3)

इत्युपक्रम्य, संयद्वामत्वादिकल्याणगुणविशिष्टं ब्रह्म, अक्षिस्थानोपास्यम्, [6]अर्चिरादिकां च[6] गतिम् उपदिदेश। अतः,

'कं ब्रह्म खं ब्रह्म' (छां.उ. 4-10-5)

इति, सुखविशिष्टस्य प्रकृतस्यैव ब्रह्मणः, [7]अत्राऽभिधानात्[7], अयम् अक्ष्याधारः परमात्मा ॥ १५ ॥

[कं ब्रह्मेति वाक्यस्य ब्रह्मपरत्वाभावमाशङ्क्य, उत्तरसूत्रसङ्गतिः]

ननु च—

'कं ब्रह्म खं ब्रह्म' (छां.उ. 4-10-5)

इति, परं [8]ब्रह्माभिहितम्[8] इति, कथमवगम्यते? यस्य इह अक्ष्याधारतया अभिधानं ब्रूषे यावता—

---

साधुतमत्व शब्देन, साधिष्ठशब्दः [उपनिषद्गतः] व्याख्यातः। 'साधिष्ठम्' इति भावप्रधानो निर्देशः इत्यर्थः (श्रु.प्र)। **गतिग्रहणमिति**। 'उपदेश्यविद्याशेषम् आचार्यो वक्ता' इति, 'आचार्यस्तु ने गतिं वक्ता' इति बदतामभिप्रायः इत्यर्थः। **संयद्वामत्वादीति**। [आदिपदेन, वामनीत्व-भामनीत्वे गृह्येते] संयन्ति-सङ्गतानि, वामानि-वननीयानि, प्रार्थनीयानि यस्मिन्, सः—संयद्वामः। सर्वकल्याणगुणाश्रयत्वं सत्यसङ्कल्पत्वं वा संयद्वामत्वम्। वामनीत्वम्—स्वाश्रितेषु शोभनप्रापकत्वम्। भामनीत्वम् सर्वलोकव्याप्तदीप्तिमद्विग्रहयुक्तत्वम् (उ.रं.भा)। **अतः**—उपकोसलविषादपरिहारस्य अपेक्षितत्वात्, गुरुमुखाच्छ्रवणेन साधुतमत्वाय अपुष्कलमुपदिष्टत्वाच्च 'गति'ग्रहणस्य प्रदर्शनार्थत्वात् इत्यर्थः (श्रु.प्र) ॥१५॥

---

[1] आचार्यात्—द [2] प्रापयति—वा [3] मालोक्य—थ [4] एव च—थ
[5] इत्यभिधाय यथा—वा, तथा—थ, इति यथा—द [6] अर्चिरादिकां—थ [7] अत्राविधानात्—थ
[8] ब्रह्माभिधीयते—इ

**'कं ब्रह्म खं ब्रह्म'** (छां.उ. 4-10-5)

**इति, प्रसिद्धाकाश-लौकिकसुखयोरेव ब्रह्मदृष्टिः विधीयते—इति प्रतिभाति ;**

**'नाम ब्रह्म'** (छां.उ. 7-1-5)

**'मनो ब्रह्म'** (छां.उ. 7-3-2)

**इत्यादिवचनसारूप्यात् ; तत्राऽह—**

## ४८. अत एव च स ब्रह्म ॥ १-२-१६ ॥

**यतस्तत्र, 'यदेव कं, तदेव खम्' इति [1]सुखविशिष्टस्य आकाशस्या[1]ऽभिधानम्, अत एव 'ख'शब्दाभिधेयः सः—आकाशः [2]परं ब्रह्म[2]। एतदुक्तं भवति—अग्निभिः,**

---

**यावता**-प्रत्युत । [**प्रसिद्धाकाशलौकिकसुखयोः**—अब्रह्मभूताकाशलौकिकसुखात्मक-धर्मिविशेष्यिका । **ब्रह्मदृष्टिः**—ब्रह्मत्वप्रकारिका उपासनाख्या मतिः । **विधीयते**—(निरन्तरानुवर्तनीयतया) ज्ञाप्यते । **प्रतिभाति**—पूर्वापरपर्यालोचनेन स्फुरति ।] **वचन-सारूप्यादिति** । 'नाम ब्रह्म' 'मनो ब्रह्म' इत्यादिवत् दृष्टिविशेषणस्य ब्रह्मणः पश्चादुपादानं, विशेष्यस्य प्रथमोपादानं च सारूप्यमभिप्रेतम् । 'प्राणं च हाऽस्मै तदाकाशं चोचुः' इति, 'प्राणाकाश'शब्दाभ्यां निगमितम् ; न तु 'ब्रह्म'शब्देन । ततोऽपि दृष्टिविधिः इति भावः । तस्याऽपि उत्तरत्र परिहरिष्यमाणत्वात् (श्रु प्र) ।

**यतस्तत्रेति**, [सूत्रस्थम्] 'अत एव' इत्येतद्व्याचष्टे । सूत्रे 'सः'इति निर्देशः निगमन-वाक्यस्य पुलिङ्गाकाशशब्दकटाक्षेण । **अतः**शब्दः सुखविशिष्टाभिधानपरः । भाष्ये 'यदेव.... खम्' इति न वाक्योपादानम् ; अपि तु अर्थोपादानम् । 'यद्वाव कं तदेव खम्' इति हि वाक्यम् ।

**अग्निभिरित्यादि** । दृष्टिविधित्वे, 'प्राणो ब्रह्म' इत्यस्य ज्ञातत्वं, 'कं च तु खं च' इत्यस्य अज्ञातत्वं च नोपपद्यते ; दृष्टिविधित्वेन सर्वस्य ज्ञातत्वात् इति भावः ॥

---

[सूत्रार्थः । **अत एव च**—अपरिच्छिन्नसुखस्य ब्रह्मत्वाभिधानादेव हेतोरपि, **सः**—अपरिच्छिन्नानन्दरूपः अक्ष्यन्तरपुरुषः, **ब्रह्म**—परं ब्रह्मैव ; न जीवः ॥]

**तस्मात् कं ब्रह्म खं ब्रह्मेत्यत्राकाशस्य कीर्तनात् ।**
**अक्ष्याधारतया तस्य त्वाकाशो हि परः पुमान् ॥ (ब्र.प.मा. ४८)**

---

[1] सुखविशिष्टाकाशस्या—थ [2] परब्रह्म—थ

'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' (छां.उ. 4-10-5)
इत्युक्ते, उपकोसल उवाच—

'विजानाम्ययं यत् प्राणो ब्रह्म, कं च तु खं च न विजानामि' (छां.उ. 4-10-5) इति ॥

['विजानाम्यहम्' इति वाक्याभिप्रायविवरणम् ]

अस्य अयमभिप्रायः—न तावत् प्राणादिप्रतीकोपासनम् अग्निभिः अभिहितम्; जन्म-जरा-मरणादिभवभयभीतस्य मुमुक्षोः ब्रह्मोपदेशाय प्रवृत्तत्वात्। अतः ब्रह्मैव उपास्यमुपदिष्टम्। तत्र प्रसिद्धैः प्राणादिभिः समानाधिकरणं ब्रह्म निर्दिष्टम्। [1]तेषु च[1] प्राणविशिष्टत्वं-जगद्विधरणयोगेन वा, [2]प्राणशरीरतया[2] प्राणस्य नियन्तृत्वेन वा ब्रह्मणः उपपद्यते इति,

'विजानाम्यहं यत् प्राणो ब्रह्म' (छां.उ 4-10-5)
इत्युक्तवान्।

तथा सुखाकाशयोरपि, [3]ब्रह्मणः शरीरतया[3] [4]तन्नियाम्यत्वेन[4] विशेषणत्वम्? उत अन्योन्यव्यवच्छेदकतया[5]निरतिशयानन्दरूप[5]ब्रह्मस्वरूपसमर्पणपरत्वेन वा?

तत्र पृथग्भूतयोः शरीरतया विशेषणत्वे—वैषयिकसुख-भूताकाशयोः [6]नियामकत्वं[6] ब्रह्मणः स्यात्—इति, स्वरूपावगतिः न स्यात्।

---

**न तावदित्यादि**. मुमुक्षोः उपदिष्टत्वात्, प्रतीकोपासनव्युदासः। 'मुमुक्षोः प्रतीकोपासनं न कर्तव्यम्' इति ज्ञानं पूर्वमेव सम्भवति। यथा 'मुमुक्षूपास्यं ब्रह्म' इति ज्ञानं संभवति, तद्वत्। शरीरवाचिशब्दस्य शरीरिपर्यन्ताभिधायित्वं च देवमनुष्यादिशब्देषु व्युत्पन्नमेव (श्रु.प्र)।

'**तथेति**। शरीरं च नियाम्यमिति, लोकसिद्धत्वात् ज्ञातमेव। 'यदेव आकाश आनन्दः' इत्यादिश्रुतिषु 'ब्रह्म'शब्देन विनापि, 'आकाश'शब्दस्य आनन्दविशेषणत्वेन प्रयोगदर्शनात्, तस्य च महत्वोपस्थापनेनैव आनन्दविशेषणत्वोपपत्तेः, ब्रह्मणः अपरिच्छिन्नसुखरूपत्वप्रतीतिसम्भवात्, एवं विचारः उपपद्यते इति भावः (श्रु.प्र)।

[1] तेषु—द, [2] प्राणः प्राणशरीरतया—थ [3] ब्रह्मशरीरतया—थ [4] तन्नियाम्यत्वे—द
[5] आनन्दरूप—द, निरतिशयानन्द—न [6] नियाम्यकत्वं—थ

अन्योन्यव्यवच्छेदकत्वे—[1]अपरिच्छिन्नानन्दैक[1]स्वरूपत्वं ब्रह्मणः स्यात्—इति, अन्यतरप्रकारनिर्दिधारयिषया,

'कं च तु खं च न विजानामि' (छां उ 4-10-5)

इत्युक्तवान् ।

उपकोसलस्य इमम् आशयं जानन्तः अग्नयः,

'यद्वाव कं तदेव खं, यदेव खं तदेव कम्' (छां.उ. 4-10-5)

इत्यूचिरे। ब्रह्मणः सुखरूपत्वमेव अपरिच्छिन्नम् इत्यर्थः। अतः—प्राणशरीरतया प्राणविशिष्टं यत् ब्रह्म, तदेव अपरिच्छिन्नसुखरूपं च – इति निगमितम्;

'प्राणं च हाऽस्मै तदाकाशं चोचुः' (छां.उ. 4-10 5)

इति। अतः,

'कं ब्रह्म खं ब्रह्म' (छां उ. 4-10-5)

इत्यत्र, अपरिच्छिन्न[2]सुखं[2] ब्रह्म प्रतिपादितमिति, परं ब्रह्मैव तत्र प्रकृतम्। तदेव च अत्र अक्ष्याधारतया [3]अभिधीयते[3] इति, अक्ष्याधारः परमात्मा ॥१६॥

[अन्योन्यव्यवच्छेदकता—मिथो व्यावर्तकत्वम्। समर्पणम्—बोधविषयताऽऽपादनम् निर्दिधारयिषा—निर्धारणेच्छा ।]

उपकोसलस्येत्यादि। 'यद्वाव कं तदेव खं, यदेव खं तदेव कम्' इत्यत्र न दृष्टिविधित्वं शङ्कनीयम्; तथा सति 'कं च तु खं च न विजानामि' इत्यस्य उत्तरत्वायोगात्। न हि अर्थान्तरदृष्टिविध्यज्ञानस्य, दृष्टिविध्यन्तरम् उत्तरं भवति—इत्यभिप्रायः।

एवं 'कं च तु – विजानामि' इति अज्ञानवचनात्, मुमुक्षोरुपदिष्टत्वात्, अर्थान्तराज्ञानं प्रति, दृष्टविध्यन्तरस्य उत्तरत्वायोगाच्च 'यद्वाव कम्' इत्यादिवाक्यस्य दृष्टिविधिपरत्वानुपपत्तेः, अन्योन्यव्यवच्छेदपरत्वं स्थितम्। 'अस्मद्विद्या चाऽऽत्मविद्या च' इति अग्नीनां वचने पूर्वप्रकृत-विद्यायाः आत्मविद्यात्वावगमाच्च ब्रह्मणो दृष्टिविशेषणत्वशङ्का निरस्ता। प्राणं चेति। उपसंहारस्य उपक्रमानुगुण्यस्य न्याय्यत्वात्। 'प्राणं च'इत्युपसंहारवाक्यम् उक्तार्थपरम् इत्यर्थः। 'प्राणं च' इति, 'प्राणो ब्रह्म' इत्युक्तार्थनिगमनम्। 'तदाकाशं च' इति 'यद्वाव कम्' इत्यादिवाक्यार्थनिगमनम्। 'तदाकाशम्' इत्यत्र प्रकृतपरामर्शिना तच्छब्देन सुखरूपत्वमभिप्रेतम्। तदेव चेति। अन्यथा वाक्यभेदश्च प्रसजेत्; सम्भवत्येकवाक्यत्वे वाक्यभेदोऽनुपपन्नः इति भावः। इतीति। 'कं ब्रह्म' इति प्रकृतस्यैव अक्ष्याधारत्वप्रतिपादनात्, अक्षिपुरुषः परमात्मा—इत्यर्थः (श्रु.प्र) ॥१६॥

---

[1] अपरिच्छिन्नानन्द—वा　[2] सुखरूपं—ख, ग, सुखस्वरूपं—ङ　[3] विधीयते—थ

[अक्षिपुरुषस्य परमात्मत्वे ज्ञापकान्तरम्]

## ४९. श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १-२-१७ ॥

श्रुतोपनिषत्कस्य—अधिगतपरमपुरुषयाथात्म्यस्य, अनुसन्धेयतया श्रुत्यन्तरप्रतिपाद्यमाना अर्चिरादिका गतिः या; ताम् अपुनरावृत्तिलक्षणपरमपुरुषप्राप्तिकरीम्, उपकोसलाय [1]अक्षिपुरुषं[1] श्रुतवते,

'[2]तेऽर्चिषमेवाऽभि[2]संभवन्ति अर्चिषोऽहः अह्नः आपूर्यमाणपक्षम्' (छां.उ.4-15-5)

इत्यारभ्य,

'चन्द्रमसो विद्युतम्, तत्पुरुषोऽमानवः' (छां.उ. 4-15-5)

'स [3]एनान्[3] ब्रह्म गमयति। एष देवपथो ब्रह्मपथः। एतेन [4]प्रतिपद्यमाना[4] इमं मानवमावर्तं नाऽऽवर्तन्ते' (छां.उ. 4-15-6)

इत्यन्ते[5]नोपदिशति[5]। अतोऽपि, अयम् अक्षिपुरुषः परमात्मा ॥१७॥

---

**श्रुतोपनिषत्कस्य** इति, व्याख्येयं पदं समस्तमपि, व्याख्यानार्थं व्यस्य निर्दिष्टम्। **अधिगतेत्यादि,** उपनिषत्सु प्रतीकोपासनानाम् अर्चिरादिगतिरहितानामपि विद्यमानत्वात्, तद्व्यावृत्त्यर्थम्। **परमपुरुषशब्देन,** 'तं त्वौपनिषदं पुरुषम्' इति श्रुतिः स्मारिता। **श्रुत्यन्तरप्रतिपाद्यमानेति।** छान्दोग्य एव प्रदेशान्तरे—'तद्य इत्थं विदुः' इत्यादिः, वाजसनेयके—'य एवमेतद्विदुः' इत्यादिः, कौषीतकीनां पर्यङ्कविद्यायां—'सोऽग्निलोकम्' इत्यादिः; ताभिः प्रतिपाद्यमाना इत्यर्थः। गतिचिन्तनस्य ब्रह्मविद्याङ्गत्वज्ञापकश्रुत्यन्तरज्ञापनार्थं श्रुतोपनिषत्कत्वव्यपदेशः इत्यभिप्रायः। **अपुनरावृत्तीति।** अक्षिपुरुषस्य अब्रह्मत्वे, तत्क्रतुनयविरोधः इत्यभिप्रायः। 'अर्चिषमेव' इत्यतः पूर्वम् 'अथ यदु चैवाऽस्मिन्....यदु चन' इति वाक्यम्। अत्र अस्मिन्निति एकवचनं जात्यभिप्रायम्; 'तेऽर्चिषम्' इति बहुवचनानुरोधात्। पञ्चाग्निविद्यात्मिका गतिः इहानूदिता अपुनरावृत्तिविधानार्थम् (श्रु.प्र.) ॥

---

[सूत्रार्थः। **श्रुतोपनिषत्कस्य**—अधिगतपरमपुरुषयाथात्म्यस्य विदुषः, **गतेः**—(श्रुत्यन्तरप्रतिपन्नायाः ब्रह्मवर्तन्याः) अर्चिरादिगतेः, **अभिधानाच्च**—अक्षिपुरुषं श्रुतवते उपकोसलाय आचार्येण उपदेशरूपेण ज्ञापकात्, (अक्ष्यन्तः पुरुषः, परं ब्रह्मैव; न जीवः) ॥]

श्रुतोपनिषदां या च गतिरुक्ताऽर्चिरादिका।
सैवाऽक्ष्युपासकस्योक्तेत्यतोऽपि स परः पुमान् ॥ (ब्र.प.मा. ४९)

---

[1] आदिपुरुषं—च. [2] तेऽर्चिषमभि—न, आर्चिषमेवाऽभि—क. [3] एतान्—न.
[4] प्रतिपाद्यमाना—थ. [5] नोपदिशतीति—वा

[व्यतिरेकोक्त्या जीवनिषेधः]

## ५०. अनवस्थितेरसम्भवाच्च नेतरः ॥ १-२-१८ ॥

प्रतिबिम्बादीनाम् अक्षणि नियमेनाऽनवस्थानात्, अमृतत्वादीनां च निरुपाधिकानां तेष्वसम्भवात्, न परमात्मन इतरः छायादिः अक्षिपुरुषो भवितुमर्हति।

प्रतिबिम्बस्य तावत्—पुरुषान्तरसन्निधानायत्तत्वात्, न नियमेनाऽवस्थानसम्भवः।

जीवस्याऽपि—सर्वेन्द्रियव्यापारानुगुणत्वाय, सर्वेन्द्रियकन्दभूते स्थानविशेषे वृत्तिरिति, चक्षुषि न अवस्थानम्।

देवतायाश्च—

'रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः' (बृ.उ. 7-5-1)

इति रश्मिद्वारेणाऽवस्थानवचनात्, देशान्तरावस्थितस्याऽपि इन्द्रियाधिष्ठानोपपत्तेः;

---

**प्रतिबिम्बा....सम्भवात्** इति, अनवस्थितेः इति [सौत्रं] पदं व्याचष्टे। **अमृतत्वा.... सम्भवात्** इति, [सौत्रं] 'असम्भवात्' इति पदं व्याचष्टे। **असंभवात्** इत्यनेन, 'अन्तर उपपत्तेः' इति सूत्रार्थस्य व्यतिरेकः उक्तः। **अनवस्थितेः** इत्यनेन, 'स्थानादिव्यपदेशाच्च' इति सूत्रार्थस्य व्यतिरेको दर्शितः। इतरसूत्रोक्तहेतूनां व्यतिरेकोपपादनानपेक्षत्वात्, व्यतिरेकश्च अर्थसिद्ध इति वा, व्यतिरेको न प्रदर्शितः।

**सर्वे....विशेष** इति। हृदीत्यर्थः। 'शतं चैका च हृदयस्य नाड्यः' 'सन्ततं सिराभिः' इत्युक्तप्रकारेण हृदयसम्बन्धनाडीसम्बद्धानि इन्द्रियाणि, इत्यर्थः। एवंविधे हृदि जीवस्याऽवस्थानं, 'हृदि ह्ययमात्मा' इति श्रुतेरवगम्यते। सर्वेन्द्रियकन्दभूते हृदिस्थितस्य धर्मभूतज्ञानप्रसरणद्वारेण सर्वेन्द्रियाधिष्ठातृत्वम् इत्यभिप्रायः।

**रश्मिद्वारेणेति**। खट्वादिद्वारकप्रासादशयनवत्, रश्मिद्वारकं चक्षुष्यवस्थानम् इत्यर्थः। चक्षुष्यवस्थानं नाम चक्षुःसम्बन्धित्वम्। जीवानां परमात्मोपासनेन अभयत्वामृतत्वादयो

---

[सूत्रार्थः। **अनवस्थितेः**—नियमेन अक्ष्यवस्थानस्य प्रतिबिम्बादौ अयोगात्, **असम्भवाच्च**—निरुपाधिकामृतत्वादीनां जीवादौ बाधादपि हेतोः, **इतरः**—ब्रह्मणोऽन्यः, **न**—अक्ष्यन्तरपुरुषो न भवति।]

नियमेनाक्षण्यवृत्तेर्न जीवोऽक्षिगतस्त्विह।
नियन्तृत्वामृतत्वादिपूर्वोक्तासम्भवाच्च हि॥ (ब्र.प.मा ५०)

न चक्षुष्यवस्थानम्। सर्वेषामेव एषां निरुपाधिकामृतत्वादयः न सम्भवन्त्येव। तस्मात् अक्षिपुरुषः परमात्मा ॥ १८ ॥

॥ इति अन्तराधिकरणम् ॥ ३ ॥

---

भवन्तीति तद्व्यावृत्त्यर्थं **निरुपाधिकाः** इत्युक्तम्। अन्तर इति सूत्रे, स्ववाक्यस्थहेतुरुक्तः। श्रुत्यन्तरप्रदर्शनमुखेन स्वाक्यस्थशङ्कापरिहारपरं द्वितीयं [स्थानादि] सूत्रम्। स्ववाक्यस्थशङ्कायां परिहृतायां, प्राकरणिकपूर्ववाक्येन परमात्मपरत्वोपपादकं तृतीयं [सुखविशिष्टा] सूत्रम्। पूर्ववाक्यस्य ब्रह्मपरत्वोपपादकं चतुर्थम् [अत एव च] सूत्रम्। ततः पाश्चात्स्यवाक्येन साध्योपपादकं पञ्चमम् [श्रुतोपनिषत्क....सूत्रम्]। षष्ठं तु [अनवस्थिते] साध्यद्रढिम्ने पूर्वसूत्रद्वयोक्तहेतुव्यतिरेकप्रदर्शकम् इति सूत्रसङ्गतिः (श्रु.प्र) ॥१८॥

[सूत्राणि— १. अन्तर २. स्थानादिव्यप
३. सुखविशिष्टा ४. अत एव च
५. श्रुतोपनिषत्क ६. अनवस्थितेः]

॥ इति अन्तराधिकरणम् ॥ ३ ॥

## १५ अन्तर्याम्यधिकरणम् ॥१-२-४॥ (सू. 19-21)

[अधिकरणार्थः—ब्रह्मणः सर्वान्तर्यामित्वम् ; न जीवस्य]

[अन्तर्यामिविद्या (बृ.उ 5-7)]

[पूर्वानुवादपुरस्सरं तदुक्तार्थसमर्थनात् सङ्गतिः]

'स्थानादिव्यपदेशाच्च' (ब्र.सू. 1-2-14)

इत्यत्र,

'यश्चक्षुषि तिष्ठन्' (बृ.उ. 5-7-22)

इत्यादिना प्रतिपाद्यमानं, चक्षुषि स्थिति-नियमनादिकं परमात्मन एव—इति सिद्धं कृत्वा अक्षिपुरुषस्य परमात्मत्वं साधितम् ॥

इदानीं तदेव समर्थयते —

## ५१ अन्तर्याम्याधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् ॥१-२-१९॥

[विषयवाक्यप्रदर्शनम्]

काण्वाः माध्यान्दिनाश्च वाजसनेयिनः समामनन्ति—

'यः पृथिव्यां तिष्ठन्, पृथिव्या अन्तरो, यं पृथिवी न वेद यस्य पृथिवी शरीरं, यः पृथिवीमन्तरो यमयति एष त आत्माऽन्तर्याम्यमृतः' (बृ.उ. 5-7-7)

---

[सिद्धं कृत्वा—निश्चितं विभाव्य । साधितम्—न्यायपूर्वकं निर्णीतम् । तदेव—चक्षुषि स्थिति-नियमनादिकमेव ।]

[समर्थयते—विचारेण निर्णयति ; 'सूत्रकारः' इति शेषः ।]

काण्वाः इत्यादिना, विषयं शोधयति ।

---

[सूत्रार्थः । अधिदैवाधिलोकादिषु—अधिदैव-अधिलोकादिपदचिह्नितेषु वाक्येषु श्रूयमाणः, अन्तर्यामी—अन्तर्यामिपदवाच्योऽर्थः, ब्रह्म—परं ब्रह्मैव, तद्धर्माणाम्—परमात्मसाधारणानां सर्वान्तरत्वादिधर्माणाम्, व्यपदेशात्—स्पष्टतया कथनात् ।]

अन्तर्याम्यधिदैवाधिलोकादिषु परात्परः ।
सर्वाऽवेद्यनियन्तृत्वब्रह्मधर्मस्य शंसनात् ॥ (ब्र.प.मा.५१)

इति । एवम् अब्ध्यग्न्यन्तरिक्षवाय्वादित्यदिक्चन्द्रतारकाकाशतमस्तेजस्सु [1]देवेषु च,[1] [2]सर्वेषु भूतेषु च[2], प्राणवाक्चक्षुःश्रोतमनस्त्वग्विज्ञानरेतःसु [3]आत्मात्मीयेषु च[3] तिष्ठन्तं तत्तदन्तरभूतं, तत्तदवेद्यं, तत्तच्छरीरकं, तत्तत् यमयन्तं कञ्चित् निर्दिश्य,

'एष त आत्माऽन्तर्याम्यमृतः' (बृ.उ. 5-7-7)

इत्युपदिश्यते ।

माध्यन्दिनपाठे तु--

'यः सर्वेषु लोकेषु तिष्ठन् (बृ.उ.मा.पा. 3-7-17)

'[4]यः सर्वेषु वेदेषु[4]' (बृ.उ.मा.पा. 3-7-18)

'यः सर्वेषु [5]यज्ञेषु[5]' (बृ.उ.मा.पा. 3-7-19)

इति च पर्यायाः ।

'यो विज्ञाने तिष्ठन्' (बृ उ. 5-7-26)

इत्यस्य पर्यायस्य स्थाने,

'य आत्मनि तिष्ठन्' (बृ.उ.प.मा. 3-7-30)

[6]इति[6] पर्यायः ।

'स त आत्माऽन्तर्याम्यमृतः' (बृ.उ.मा.पा. 3-7-7)

इति च विशेषः ॥

[संशयस्वरूपप्रदर्शनम्]

तत्र संशय्यते—किमयम् अन्तर्यामी, प्रत्यगात्मा ? उत परमात्मा ? इति ॥

[पूर्वपक्षनिर्देशः, तत्र युक्तिश्च]

किं युक्तम् ?

प्रत्यगात्मा—इति ।

---

वेद-यज्ञशब्दौ तदभिमानिदेवताविशेषपरौ ; गुणक्रियादेः अद्रव्यतया शरीरत्वायोगात् अद्रव्यस्याऽपि शरीरत्वम् अनेनैव प्रयोगेण कल्प्यताम् इति चेत् न; अनन्यथासिद्धस्यैव प्रयोगस्य कल्पकत्वात । अभिमानिदेवतापरत्वेनाऽपि द्रव्यपरत्वमेव उचितम्—इति ।

प्रत्यगात्मशब्दः ऐश्वर्ययोगविशेषनिमित्तप्रकर्षात् उत्कृष्टजीवपरः । 'द्रष्टा श्रोता' इत्यादिशब्देन करणायत्तज्ञानवत्ताप्रतीतिबलात्, अमृतत्वादिलिङ्गानाम्, 'आत्मनि तिष्ठन्'

---

[1] देवेषु च– द, दैवतेषु च—वा, दैवतेषु—थ [2] सर्वेषु भूतेषु—द, सर्वेषु च भूतेषु—वा सर्वेषु च भूतेषु लोकेषु—थ [3] आत्मात्मीयेषु—वा [4] सर्वेषु वेदेषु वा, सर्वेषु वेदेषु तिष्ठन्—थ, इदं प्रमाणं 'द' पुस्तके नास्ति [5] यज्ञेषु तिष्ठन्—थ [6] इत्यपि—थ

**कुतः ?**

**वाक्यशेषे,**

**'द्रष्टा...श्रोता'** (बृ.उ 5-7-27)

**इति, करणायत्तज्ञानताश्रुतेः । एवं द्रष्टुरेव अन्तर्यामित्वोपदेशात् ,**

**'नाऽन्योऽतोऽस्ति द्रष्टा'** (बृ.उ. 5-7-27)

**इति द्रष्टन्तरनिषेधाच्च—इति ।**

---

इत्यादिव्यतिरेकनिर्देशस्य, नियमनस्य च अमुख्यत्वशङ्कया, समस्तचेतनाचेतनान्तर्यामित्वेन श्रूयमणस्याऽपि जीवत्वशङ्कया अधिकरणोत्थानम् । संशयाकारः— किम् अन्तर्यामी, जीवः ? उत परमात्मा ?—इति प्रथमविचारः । तदर्थम्—'आत्मनि तिष्ठन्' इत्यादिकं, किं मुख्यम् ? उत अमुख्यम् ? तदर्थं, द्रष्टृत्वं किं जीवस्यैव ? उत अन्तर्यामिणोऽपि सम्भवति ? तदर्थं द्रष्टा श्रोता' इति किं करणायत्तज्ञानत्वमुच्यते ? उत रूपादिसाक्षात्कारः ?—इति । तदर्थं रूपादि-साक्षात्कर्ता चेत् ! द्रष्ट्रन्तरनिषेधः किं नोपपद्यते ? उत उपपद्यते ?—इति विचारः ।

नोपपद्यते इति पूर्वः पक्षः । उपपद्यते इति सिद्धान्तः ।

[पूर्वपक्षेफलफलिभावः—] यदा निषेधोऽनुपपन्नः ; तदा द्रष्टृत्वादिकं करणायत्तज्ञान-त्वमिति, तस्य जीवात्मन्येव सम्भवात् , आत्मनि स्थित्यादिकम् अमुख्यमिति, अन्तर्यामी जीवः स्यात् [इति] ।

[सिद्धान्ते फलफलिभावः—] यदा निषेधः उपपन्नः ; तदा रूपादिसाक्षात्काररूप-द्रष्टृत्वादेः परमात्मनि सम्भवेन आत्मनि स्थित्यादीनां मुख्यतया नेयत्वात् , अन्तर्यामी परमात्मा—इति ।

**कुतः** इति । प्रत्यगात्मनोऽपि अन्तर्यामित्वेन श्रुतस्य, कथं प्रत्यगात्मत्वम् ? इति भावः ।

**करणायत्तेति** । ज्ञानस्य करणाधीनत्वोक्त्या, नियमनस्य करणाधीनत्वम् अर्थसिद्धम् ; परप्रेरणरूपसङ्कल्पस्य मनःकरणकत्वदर्शनात् ।

**नाऽन्योऽत** इति । रूपादिसाक्षात्कारस्य जीव-परयोः साधारणत्वात्, सः निषेद्धुं न शक्यते । करणायत्तज्ञानवत्वं तु, जीवस्यैवेति, तत् अन्यस्य निषेद्धुं शक्यम्—इत्यर्थः (श्रु.प्र) ॥

[सिद्धान्तारम्भः सयुक्तिकः]

एवं प्राप्ते अभिधीयते—अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात्। अधिदैवाधिलोकादिपदचिह्नितेषु वाक्येषु श्रूयमाणः अन्तर्यामी, अपहतपाप्मा [1]परमात्मा नारायणः[1]।

काण्वपाठसिद्धेभ्यः अधिदैवादिमद्भ्यो [2]वाक्येभ्यः अधिकानि[2], अधिलोकादिमन्ति वाक्यानि, माध्यन्दिनपाठे सन्ति—इति ज्ञापनार्थम्, '[3]अधिदैवाधिलोकादिषु[3]' इति, उभयोरुपादानम्। तदेवम् उभयेष्वपि वाक्येषु अन्तर्यामी परमामा—इत्यर्थः।

कुतः ?

तद्धर्मव्यपदेशात्—परमात्मधर्मो हि ऽयम्; यत्, एक एव सन् सर्वलोक-सर्वभूत-सर्वदेवादीन् नियमयति—इति।

तथा हि! उद्दालकप्रश्नः—

'य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति
(बृ.उ. 5–7–3)

इत्युपक्रम्य,

'तम् (?) अन्तर्यामिणं ब्रूहि' (बृ.उ. 5–7–6)

इति। तस्य च उत्तरम्—

'यः पृथिव्यां तिष्ठन्' (बृ.उ. 5–7–7)

इत्यारभ्य उक्तम्।

---

अधिदैवादीति। [सूत्रे 'अधिदैवम्, अधिलोकम्' इति न निर्दिष्टम्। 'दैवलोकादिषु' इत्यपि न निर्दिष्टम्। 'अधिदैवाधिलोकादिषु' इत्येव निर्दिष्टम्। तस्मात् न अर्थपरम्। तथा सति, अधिशब्द-सप्तम्योः पौनरुक्त्यात्; अपि तु वाक्यपरम् इत्यभिप्रायः।] अनेन सर्वसूत्रेषु तत्तत्पदचिह्नितवाक्यप्रतिपाद्यत्वं विवक्षितमिति गम्यते।

उभयोरुपादानमिति। माध्यन्दिनपाठे अधिलोकाद्यधिकपर्यायश्रवणेन, काण्व-माध्यदिनयोः विषयभेदशङ्कायाम्, उभयसाधारणबहुपर्यायप्रदर्शनार्थेन अधिदैवशब्देन, उभयत्र एकविषयत्वप्रत्यभिज्ञानार्थम्, [तथा] न्यूनपर्यायेऽपि पाठे 'अनुक्तमन्यतो ग्राह्यम्' इति न्यायेन अधिकपर्यायपाठार्थविवक्षाज्ञापनार्थं च उभयोरुपादानम् इत्यर्थः।

तथा हीति। एकस्यैव सतः, सर्वनियमनं कथमवगतम् इत्यत्रोत्तरमिदम्।

---

[1] नारायणः—द [2] अधिकानि—थ [3] अधिदैवाद्यधिलोकादिषु—थ, अधिदैवाधिलोकात्—द

[अन्तर्यामित्वस्य परमात्मासाधारणता]

तदेतत्—सर्वान् लोकान्, सर्वाणि च भूतानि, सर्वान् देवान् सर्वान् वेदान्, सर्वांश्च यज्ञान् अन्तःप्रविश्य, सर्वप्रकारनियमनम्, सर्वशरीरतया सर्वस्यात्मत्वं च, सर्वज्ञात् सत्यसङ्कल्पात् पुरुषोत्तमादन्यस्य न सम्भवति। [1]तथा हि—[1]

'अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा' (तै.आर. 3-11-3)

'तत् सृष्ट्वा। तदेवाऽनु प्राविशत्। तदनु प्रविश्य' (तै.उ.आन. 6-2)

'सच्च त्यच्चाऽभवत्' (तै.उ.आन 6-3)

इत्यादीनि औपनिषदानि वाक्यानि, परमात्मन एव सर्वस्य प्रशासितृत्वम् सर्वस्यात्मत्वम् —इत्यादीनि वदन्ति।

तथा सुबालोपनिषदि—

'नैवेह किञ्चनाऽग्र आसीदमूलमनाधारम्। इमाः प्रजाः प्रजायन्ते
दिव्यो देव एको नारायणः। चक्षुश्च द्रष्टव्यं च नारायणः।
श्रोत्रं च श्रोतव्यं च नारायणः' (सुबा.उ. 6)

इत्यारभ्य,

'अन्तः शरीरे निहितो गुहायामज एको नित्यः। यस्य पृथिवी शरीरम्,
यः पृथिवीमन्तरे सञ्चरन्, यं पृथिवी न वेद' (सुबा.उ. 7)

'यस्याऽऽपः शरीरम्' (सुबा.उ. 7)

इत्यादि।

'यस्य मृत्युः शरीरं, यो मृत्युमन्तरे सञ्चरन्, यं मृत्युर्न वेद, एष सर्व-
भूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' (सुबा.उ. 7)

इति, परस्यैव ब्रह्मणः सर्वात्मत्वं, [2]सर्वशरीरत्वं[2], [3]सर्वस्य नियन्तृत्वं च[3] प्रतिपाद्यते। स्वाभाविकं च अमृतत्वं, परमात्मन एव धर्मः॥

---

सर्वज्ञात्, सत्यसङ्कल्पात् इति, नियाम्यापरिज्ञाने, मोघसङ्कल्पत्वे च सर्वनियमनायोगादुक्तम्। पुरुषोत्तमादिति, सुबालोपनिषदि समानप्रकरणे 'पुरुष एवेदं सर्वम्' इत्युक्तत्वात्। तथा हीत्यादिना, पुरुषोत्तमस्यैव सर्वनियमनादिसम्भवे श्रुत्यन्तराणि दर्शयति (श्र.प्र)।

परमात्मन एवेति। अत्र सर्वनियन्तृत्वात्, इतरेषां नियाम्यकोटिनिवेशात् 'अस्यैव' इत्यवधारणं फलितम्—इति भावः॥

---

[1] तथा—न [2] सर्वशरीरकत्वं—न [3] सर्वनियन्तृत्वं च—वा

[परमात्मनः करणायत्तज्ञानतारााहित्यम्]

न च [1]परस्यात्मनः[1] करणायत्तं द्रष्टृत्वादिकम् ; अपि तु स्वभावत एव सर्वज्ञत्वात् सत्यसङ्कल्पत्वाच्च स्वत एव । तथा च श्रुतिः—

'पश्यत्यचक्षुः स शृणोत्यकर्णः' (श्वे.उ. 3-19)

'अपाणिपादो जवनो ग्रहीता' (श्वे.उ. 3-19)

इति ।

न च—'दर्शनश्रवणा'दिशब्दाः चक्षुरादिकरणजन्मनो ज्ञानस्य वाचकाः ; अपि तु रूपादिसाक्षात्कारस्य । स च रूपादिसाक्षात्कारः कर्मतिरोहितस्वाभाविकज्ञानस्य जीवस्य चक्षुरादिकरणजन्मा ; परस्य तु स्वत एव ॥

['नाऽन्योऽतः' इति द्रष्ट्रन्तरनिषेधसाङ्गत्यम्]

'नाऽन्योऽतोऽस्ति द्रष्टा' (बृ.उ. 5-7-27)

इत्येतदपि—पूर्ववाक्योदितात् नियन्तुर्द्रष्टुरन्यः द्रष्टा नाऽस्ति—इति वदति ।

'यं पृथिवी न वेद' (बृ.उ. 5-7-7)

---

**न च परस्येति** । अत्राऽयमभिप्रायः—श्रुत्यन्तरेषु 'न दृष्टेर्द्रष्टारं पश्येः....विजानीयाः' इति, 'आत्मा वा अरे....तव्यः' इत्यादिवाक्यैः श्रवणमननादिकर्तृत्वं परस्य [ब्रह्मणः] प्रतिषिद्धम् तत्कर्मत्वं च श्रुतम् । तस्मात्, इह 'द्रष्टा....विज्ञाता' इति प्रतीयमानं परस्यात्मनः श्रवणादिकर्तृत्वं, तत्प्रतिषेधकश्रुतिविरुद्धम् । रूपादिसाक्षात्कर्तृत्वं तु 'पश्यत्यचक्षुः' इत्यादिश्रुत्यन्तरावगतम् । अतः इह श्रूयमाणाः द्रष्ट्रादिशब्दाश्च रूपादिसाक्षात्कारवाचकाः ; न तु श्रमणमननध्यान-तत्साध्यदर्शनपराः—इति । **करणायत्त**मित्यादि । 'स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुत्या करणनिषेधः अर्थसिद्धः । तस्य स्वाभाविकत्वोक्तिबलात्, तद्विशेषभूतदर्शनश्रवणादेः करणनैरपेक्ष्यमपि सामान्यतः सिद्धम् । तदुभयं कण्ठोक्तं च-इत्यर्थः । **जवनः**—झटिति दूरस्थसम्बन्धक्षमः ; अतः विभुत्वाविरोधः (श्रु.प्र) ।

**अपि तु** इति, सर्वप्रयोगानुगतं प्रवृत्तिनिमित्तमाह । एवं च सति, **द्रष्टा श्रोता** इति 'रूपशब्दयोः साक्षात्कर्ता' इत्यर्थः । मन्ता—ये मानसमननाख्यविचारविषयाः, तेषां

---

[1] **परमात्मनः—वा**

'यमात्मा न वेद' (बृ.उ.मा.पा. 3–7–30)

इत्येवमादिभिः वाक्यैः, पृथिव्यात्मादि[1]नियाम्यैः[1] अनुपलभ्यमान एव नियमयति इति, [2]यत् पूर्वमुक्तम्[2], तदेव,

'अदृष्टो द्रष्टा अश्रुतः श्रोता' (बृ.उ. 5–7–27)

इति निगमय्य,

'नाऽन्योऽतोऽस्ति द्रष्टा' (बृ.उ. 5–7–27)

इत्यादिना, तस्य नियन्तुः नियन्त्रन्तरं निषिध्यते ॥

[व्यतिरेकनिर्देशात् अन्तर्यामिणः पृथक्त्वम्]

'एष त आत्मा' (बृ.उ. 5–7–7)

'स त आत्मा' (बृ.उ.मा.पा. 3-7–7)

इति [3]च 'ते' इति[3] व्यतिरेकविभक्तिनिर्दिष्टस्य जीवस्य, आत्मतया उपदिश्यमानः अन्तर्यामी न प्रत्यगात्मा भवितमर्हति ॥ १९ ॥

---

साक्षात्कर्ता । विज्ञाता—बुद्ध्या अध्यवसेयाः ये, तेषां साक्षात्कर्ता, इत्यर्थः ; तत्तदिन्द्रिय-विषयसाक्षात्कारपरत्वात् प्रकरणस्य । **स चेति** । कर्मवश्यस्यैव करणापेक्षा ; न तु अकर्मवश्यस्य इत्यर्थः ।

**निगमय्येति**। अदृष्टो द्रष्टा—पृथिव्यादिनियाम्यादृष्टः तत्तन्नियन्तृरूपद्रष्टा इति, उक्तार्थ-निगमनम्–इत्यर्थः (श्रु.प्र) ॥

**एष त इति** । एतत्पादाद्याधिकरणे 'शब्दविशेषात्' (ब्र.सू. 1–2–5) इति, व्यतिरेक-निर्देशो हेतुतयोक्तः । तस्य प्रदर्शनार्थत्वात् तदुपजीवनेन [भाष्येऽप्यत्र] व्यतिरेकानिर्देशो हेतुतयोक्तः 'एषः ते' इति सर्वपर्यायानुवृत्तषष्ठीनिर्देशः अत्र विवक्षितः । पर्यायविशेषस्थसप्तमी-निर्देशस्तु 'उभयेऽपि' (ब्र.सू. 1-2–21) इति सूत्रविवक्षितः इति विशेषः ॥१९॥

---

[1] नियम्यैः—द  [2] पूर्वमुक्तम्—थ  [3] चेति—थ, ते इति—द.

[प्रधानस्य अन्तर्यामिपदावाच्यत्वम् ]

## ५२. न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च ॥ १–२–२० ॥

**स्मार्तम्**—प्रधानम्। शारीरः–जीवः। [1]स्मार्तं च[1] शारीरश्च न अन्तर्यामी ; अतद्धर्माभिलापात्—तयोरसम्भावितधर्माभिलापात्। [2]स्वभावत एव सर्वस्य द्रष्टृत्वम्[2], सर्वस्य नियन्तृत्वम्, सर्वस्य आत्मत्वम् स्वत एवाऽमृतत्वं च तयोः न सम्भावनागन्धमर्हति।

एतदुक्तं भवति—यथा स्मार्तम् अचेतनं सर्वज्ञत्व-[3]नियन्तृत्व[3]-सर्वात्मत्वादिकं नाऽर्हति, तथा जीवोऽपि ; अतद्धर्मत्वात्—इति ॥२०॥

[उत्तरसूत्रावतरणम् ]

अमीषां गुणानां परमात्मनि अन्वयः, प्रत्यगात्मनि व्यतिरेकश्च सूत्रद्वयेन दर्शितः ; निरपेक्षं च हेत्वन्तरमाह—

---

[**न अन्तर्यामी** इति, स्मार्तं च न अन्तर्यामी, शारीरश्च न अन्तर्यामी, इति प्रत्येकमन्वयः। **सम्भावनागन्धम्**—शङ्कायोग्यत्वम् ।]

**एतदुक्तमिति**। प्रधानस्य अन्तर्यामित्वप्रसङ्गाभावेऽपि, किमर्थं सूत्रेण तन्निरसनम् ? इत्यत्रोत्तरमिदम् ॥ २० ॥

**अमीषामिति,** पूर्वसूत्रे तद्धर्मा उक्ताः ; अस्मिन् सूत्रेऽपि प्रकृति-पुरुषयोरसम्भाविता धर्मा उक्ताः इति सूत्रस्य पौनरुक्त्यमाशङ्क्य परिहरति। **निरपेक्षं चेति**। पूर्वं व्यतिरेकनिर्देशसापेक्षहेतुरुक्तः ; अयं तु वक्ष्यमाणः निरपेक्षः इत्यर्थः ॥

---

[सूत्रार्थः। **स्मार्तम्**—साङ्ख्यस्मृत्युक्तं प्रधानम्, (तथा) **शारीरश्च**—जीवोऽपि, **न च अन्तर्यामी**—अन्तर्यामिपदवाच्यो न भवितुमर्हति ; **अतद्धर्माभिलापात्**—प्रधान-पुरुषयोः असम्भावितानां सर्वाविदितत्वादिधर्माणां श्रुतौ स्पष्टतया कथनात् ॥]

प्रधानजीवौ नैवात्र त्वन्तर्यामितयोदितौ ।
असम्भावितधर्माणां तयोरत्राभिधानतः ॥ (ब्र.प.मा. ५२)

---

[1] स्मार्तम्—न [2] स्वभावत एव—द [3] सर्वनियन्तृत्व—न.

## ५३. उभयेऽपि हि भेदेनैनमधीयते ॥ १-२-२१ ॥

उभये—माध्यन्दिनाः काण्वाश्च, अन्तर्यामिणः नियाम्यत्वेन, वागादिभिः अचेतनैः समम्, एनं शारीरमपि विभज्य अधीयते।

'य आत्मनि [1]तिष्ठन् आत्मनोऽन्तरः यमात्मा न वेद, यस्याऽऽत्मा शरीरं, य आत्मानमन्तरो यमयति, स त आत्माऽन्तर्याम्यमृतः[1]'

(बृ.उ.मा.पा. 3-7-30)

इति माध्यन्दिनाः,

'यो विज्ञाने तिष्ठन्' (बृ.उ. 5-7-26)

इत्यादि च काण्वाः; परमात्मनियाम्यतया तस्माद्विलक्षणत्वेन एनम् अधीयते इत्यर्थः। अतः—अन्तर्यामी प्रत्यगात्मनो विलक्षणः अपहतपाप्मा परमात्मा नारायणः—इति सिद्धम् ॥ २१ ॥

॥ इति अन्तर्याम्यधिकरणम् ॥ ४ ॥

---

य आत्मनीत्यादि। अत्र एकैकवस्तुषु परिपूर्णत्वेन नियन्तृतया स्थितिज्ञापनार्थं यच्छब्दावृत्तिः। 'स ते' इति व्यतिरेकनिर्देशः, देवादिशब्दानां शरीरमात्रपरत्वं च अस्वरसम्। तच्च अपवादाभावे अनुपपन्नम्। 'आत्म'शब्दस्य स्ववाचित्वे, 'तिष्ठन्' इत्यादयोऽपि अस्वरसाः। 'यो विज्ञाने तिष्ठन्' इति काण्वपाठैकार्थ्यात् 'आत्म'शब्दस्य स्ववाचित्वमयुक्तम्। प्रश्नवाक्यस्य च अस्वारस्यम्, इति भिदा। यच्छब्दावृत्तिः एकत्वेऽपि सम्भवति—इति भावोऽनुसन्धेयः। **परमात्मेति।** भेदकधर्मश्रवणात् भेदेन व्यपदेशः सिद्धः इत्यर्थः। न केवलं व्यतिरेकनिर्देशादीनाम् अपवादाभावः; किन्तु तदस्वारस्यापवादश्चाऽस्ति इति भावः (श्रु.प्र) ॥२१॥

[सूत्राणि—1. अन्तर्यामी। 2. न च स्मार्तम्। 3. उभयेऽपि हि।]

॥ इति अन्तर्याम्यधिकरणम् ॥ ४ ॥

---

[सूत्रार्थः। **उभयेऽपि**—काण्व-माध्यंदिनाख्यशाखाद्वयाध्यायिनोऽपि, **हि**—यतः, **एनम्**—अन्तर्यामिणम्, **भेदेन**—जीवादन्यत्वेन, **अधीयते**—स्वासुशाखासु पठन्ति; ('यो विज्ञाने तिष्ठन्' 'य आत्मनि तिष्ठन्' इति।) अतः जीवाद्विलक्षण एव अन्तर्यामी ॥]

उभयेऽन्तर्यामिणोऽपि यो विज्ञाने य आत्मनि।
इत्यक्ष्यादिवदत्राऽपि भेदेनैनमधीयते ॥ (ब्र.प.मा. ५३)

---

[1] तिष्ठन्—थ.

१६. अदृश्यत्वादिगुणकाधिकरणम् ॥ १-२-५ ॥ (सू. 22-24)

[अधिकरणार्थः — अदृश्यत्वादिगुणकं ब्रह्मैव ; न प्रधान-पुरुषौ]

[अक्षरविद्या (मुण्ड.उ. 1-1, 2-1)]

## ५४. अदृश्यत्वादिगुणको धर्मोक्तेः ॥ १-२-२२ ॥

[विषयवाक्यप्रदर्शनम्]

आथर्वणिकाः अधीयते—

'अथ परा यया तदक्षरमधिगम्यते' (मुण्ड.उ. 1-1-5)

'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' (मुण्ड.उ. 1-1-6)

इति । तथा उत्तरत्र—

'अक्षरात्परतः परः' (मुण्ड.उ. 2-1-2)

इति ॥

[संशयाकारः]

तत्र सन्दिह्यते—किमिह अदृश्यत्वादिगुणकमक्षरम्, [1]अक्षरात्परतः परश्च[1] ; प्रकृति-पुरुषौ ? अथ उभयत्र परमात्मैव ?—इति ॥

---

**अथेत्यादि** । [सूत्रे] अदृश्यत्वादिगुणकशब्देन अक्षरम्, पुल्लिङ्गनिर्देशेन अक्षरात्परतः परश्च द्वयमपि विषयीक्रियते इत्यभिप्रायेण वाक्यद्वयमपि विषयतया उपात्तवान् । **अद्रेश्यम्**—ज्ञानेन्द्रियाविषयः । **अग्राह्यम्**—पाण्यादिकार्यहानोपादानाद्यविषयः (श्रु.प्र) ॥

**किमिहेति** । अदृश्यत्वादिगुणकाक्षरस्य प्रकृतित्वम्, अक्षरात्परतः परस्य जीवत्वं च शङ्क्यते ; न तु उभयोरुभयात्मकत्वम् । **उभयत्र**—वाक्यद्वयेऽपि ।

---

[सूत्रार्थः । **अदृश्यत्वादिगुणकः**—'अद्रेश्यम्' इत्यादिना श्रुत्युक्तानाम् अदृश्यत्वादिगुणानां धर्मिभूतः अक्षररूपोऽर्थः, (परमात्मैव; न प्रधान-पुरुषौ) **धर्मोक्तेः**—परमात्मासाधारणानां सर्वज्ञत्वादीनां धर्माणां 'यः सर्वज्ञः सर्ववित्' इत्यादिना तत्रैवोक्तत्वात् ।]

**अदृश्यत्वादिगुणकमक्षरं परमः पुमान् ।**
**सर्वज्ञत्वादिधर्मोक्तेश्चाक्षरात्परतः परः ॥** (ब्र.प.मा. ५४)

---

[1] अक्षरात्परतः परः—ई.

[सयुक्तिकः पूर्वः पक्षः]

[1]किं तावत् प्राप्तम्[1] ?

प्रकृति-पुरुषौ—इति ।

कुतः ?

अस्य अक्षरस्य,

'अदृष्टो द्रष्टा' (बृ.उ. 5-7-27)

इत्यादाविव, न द्रष्टृत्वादिः चेतन[2]धर्मविशेषः[2], इह श्रूयते ।

'अक्षरात्परतः परः' (मुण्ड.उ. 2-1-2)

इति च, सर्वस्माद्विकारात्परभूतात् अक्षरादस्मात्परः [3]क्षेत्रज्ञ[3]समष्टिपुरुषः प्रतिपाद्यते ।

संशयाकारः—किम् अदृश्यत्वादिगुणकम् अक्षरात्परतः परश्च प्रधानपुरुषौ? उत परमात्मा? इति विचारः। तदर्थं, पृथिव्यादिसम्बन्धितया दृष्टं दृश्यत्वादिकं निषिध्यमानं, किम्—पृथिव्यादि-सजातीयम् । अचेतनमेवाश्रयमुपस्थापयति ? किम्—ऊर्णनाभिदृष्टान्तोपादानम्, अचेतना-श्रयोपस्थापकत्वम् उपबृंहयति ? उत न ?—इति । किम्—'अक्षरात् सम्भवतीह विश्वम्' इति 'विश्व'शब्दः, चिदचिदात्मकप्रपञ्चमुपस्थापयति ? उत अचेतनम् ?—इति ।

[पूर्वपक्षे फलफलिभावः]—अचेतनोपस्थापकत्वे सति, उर्णनाभिदृष्टान्तस्य च अचिदा-श्रयोपस्थापकतोपबृंहकतया निषिध्यमानं दृश्यत्वादिकम् अचिदुपस्थापकमिति, अदृश्यत्वादिगुणकं, प्रधानम् ; ततः परश्च जीवः—इति स्यात् ।

[सिद्धान्ते फल-फलिभावः]—यदा 'विश्व'शब्दः चिदचिदात्मकजगदुपस्थापकः ; तदा ऊर्णनाभिदृष्टान्तस्य च अचेतनोपस्थापकत्वानुपबृंहकत्वात्, निषिध्यमानं दृश्यत्वादिकमपि न अचेतनोपस्थापकमिति, अदृश्यत्वादिगुणकः परमात्मा ; परमात्मनश्च परान्तरासम्भवात्, अक्षरात् परतः परश्च परमात्मा—इति ।

**अस्य अक्षरस्येति।** अन्तर्यामिविद्यायामपि, न केवलमदृष्टत्वं परमात्मत्वसाधकम् ; किन्तु द्रष्टृत्वादिसचिवम् । इह तु तत्साचिव्याभावात्, अदृश्यत्वं न अचिद्व्यावर्तकम् इत्यर्थः। **अदृष्टो द्रष्टा** इत्यादिना, सङ्गतिश्च अभिप्रेता । **सर्वस्माद्विकारात्परभूतात् अक्षरात्** इति । समानविभक्तिनिर्देशस्वारस्यात्, 'परतः अक्षरात्' इति सामानाधिकरण्यम् इति भावः (श्रु प्र) ॥

[1] किं प्राप्तम्—इ, च, न.  [2] धर्मः—द.  [3] क्षेत्रज्ञः—वा.

[दृष्टान्तस्य चेतनकारणत्वानुगुण्यम्]

एतदुक्तं भवति—रूपादिमत्स्थूलरूपाचेतनपृथिव्यादिभूताश्रयं दृश्यत्वादिक प्रतिषिध्यमानं, पृथिव्यादिसजातीयसूक्ष्मरूपाचेतनमेव उपस्थापयति। तच्च प्रधानमेव। तस्मात्परत्वं च, समष्टिपुरुषस्यैव प्रसिद्धम्। तदधिष्ठितं च प्रधानं महदादिविशेषपर्यन्तं विकारजातं प्रसूते—इति, तत्र [1]दृष्टान्ताः[1] [2]उपन्यस्यन्ते[2] —

'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति।
यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वम्॥'
(मुण्ड.उ. 1-1-8)

इति। अतः अस्मिन् प्रकरणे प्रधानपुरुषावेव प्रतिपाद्येते—इति॥

[सिद्धान्तप्रदर्शनम्]

एवं प्राप्ते, [3]ब्रूमः[3]—अदृश्यत्वादिगुणको धर्मोक्तेः।
अदृश्यत्वादिगुणकः, अक्षरात्परतः परश्च परमपुरुष एव।
कुतः ?
तद्धर्मोक्तेः।
'यः सर्वज्ञः सर्ववित्' (मुण्ड.उ. 1-1-10)

---

**रूपादि....उपस्थापयतीति।** तदन्यार्थकनञुपश्लिष्टाः अब्राह्मणादयः शब्दा हि ब्राह्मणादिप्रत्यासन्ने सजातीये क्षत्रियादौ वर्तन्ते; न तु श्वपचादौ, पश्वादौ वा। 'अबालाकृश'शब्दादयः, प्रत्यासन्नावस्थान्तराश्रये तस्मिन्नेव धर्मिणि वर्तन्ते; न तु धर्म्यन्तरे। संनिकृष्टबोधनस्य न्याय्यत्वात्। एवम् अदृश्यत्वादिगुणानां धर्मिविशेषाकाङ्क्षायां निषिध्यमान-दृश्यत्वस्य अचिदाधारत्वेन अचेतने प्रतिपन्ने, तस्यैव सूक्ष्मावस्थस्य अदृश्यत्वादौ च सम्भवति, विजातीयधर्म्यन्तरकल्पने गौरवप्रसङ्गात्, तत्परत्वाश्रयणम् अयुक्तमिति भावः। **तच्चेति।** न दृश्यत्वादिव्याप्यम् अचेतनत्वम्; मनआदौ व्यभिचारात् इति भावः। **यथा पृथिव्यामिति,** चेतनानाधिष्ठितत्वेऽपि दृष्टान्तः। **यथा सत** इति, चेतनसंनिधिमात्रापेक्षत्वे दृष्टान्तः। **अत** इति, पूर्वपक्षमुपसंहरति (श्रु.प्र)॥

**परमपुरुषः** इति, 'परात्परं पुरुषम्' इति वाक्यं स्मारयति।

---

[1] दृष्टान्तः—द. [2] उपन्यस्यते—द. [3] अभिधीयते—वा.

इत्यादिना, सर्वज्ञत्वादिकाः तस्यैव धर्मा उच्यन्ते । तथा हि—

'यया तदक्षरमधिगम्यते' (मुण्ड.उ. 1-1-5)

इत्यादिना, अदृश्यत्वादिगुणकम् [1]अक्षरमभिधाय[1],

[2]'अक्षरात् सम्भवतीह विश्वम्' (मुण्ड.उ. 1-1-8)

इति, तस्मात् विश्वसंभवं चाऽभिधाय,

'यः सर्वज्ञः[2] सर्ववित् यस्य ज्ञानमयं तपः ।
तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते ॥' (मुण्ड.उ. 1-1-10)

इति, भूतयोनेः अक्षरस्य सर्वज्ञत्वादिः प्रतिपाद्यते । पश्चात्,

'अक्षरात्परतः परः' (मुण्ड उ. 2-1-2)

इति च, प्रकृतम् अदृश्यत्वादिगुणकं भूतयोन्यक्षरं सर्वज्ञमेव, परत्वेन व्यपदिश्यते । अतः, 'अक्षरात्परतः परः' इति, 'अक्षर'शब्दः पञ्चम्यन्तः, प्रकृतम् अदृश्यत्वादिगुणकम् अक्षरं, न अभिधत्ते; तस्य सर्वज्ञस्य विश्वयोनेः, सर्वस्मात्परत्वेन, तस्मादन्यस्य परत्वासम्भवात् । अतः अत्र 'अक्षर'शब्दः, भूतसूक्ष्मम् अचेतनं ब्रूते ॥२२॥

---

**तथा हीति**। ननु अक्षरं प्रकृतिः ; सर्वज्ञस्तु स्वसन्निधानात् प्रकृत्युपकारकः प्रकृष्टपुण्यो जीवः, तदवस्थोपलक्षितः मुक्तो वा—इति शङ्कायामिदम् । **तस्मात्** इति । 'अक्षर' शब्दः प्रकृताक्षरपरः इति भावः (श्रु.प्र) ।

**भूतयोनेः अक्षरस्येति**। सार्वज्ञ्यादेः धर्मिविशेषापेक्षायां, प्रकृत एव, धर्मी स्वीकार्यः ; उपक्रमप्रतिपन्नपरित्यागेन अप्रतिपन्नकल्पनायोगात् , 'भूतयोनिम् , तस्मादेतत्' इति कारणत्वप्रत्यभिज्ञानाच्च । अतः, 'यः सर्वज्ञः, तस्मादेतत्' इति यत्तच्छब्दौ प्रकृताक्षरविषयौ । ततश्च अक्षरस्य कारणत्वमनूद्य सृष्टि-स्थित्युपयोगित्वेन सार्वज्ञ्यादि विधीयते इत्यर्थः । **परत्वेन व्यपदिश्यते**—प्रथमान्तेन 'पर'शब्देन व्यपदिश्यते । **प्रकृतम् अदृश्यत्वादिगुणकमिति** । अदृश्यत्वादिगुणकत्वेन प्रकृतत्वात् इत्यर्थः । **प्रकृतमिति** । अदृश्यत्वादिगुणकम् अक्षरमेव, 'येनाऽक्षरं पुरुषम्' इति पूर्वस्मिन् सन्निकृष्टवाक्ये प्रकृतम् । तदेव 'प्रोवाच' इति वक्तव्यतया प्रतिपादितमिति, तस्यैव प्राधान्येन प्रतिपाद्यत्वमवगम्यते । अतः अक्षरपुरुष एव अक्षरात्परतः परत्वेनोच्यते इत्यभ्युपेत्यम् । **परत्वासम्भवादिति** । भूतयोन्यक्षरादनन्यत्वेन सर्वज्ञस्य, ततः परत्वासम्भवः । उपक्रमविरोधेन अक्षरादर्थान्तरस्य परत्वासम्भवः इत्युक्तं भवति । **अत इति** । यस्य परमात्मधर्मोक्तिः, स हि परमात्मा ; प्रथमान्ताक्षरशब्दनिर्दिष्टस्य

---

[1] अक्षरमभिधाय, तथा—वा   [2] यः सर्वज्ञः—थ, न

[ब्रह्मण एवाऽक्षरत्वे हेतुद्वयम्]

[1]इतश्च न प्रधानपुरुषौ —

## ५५. विशेषण[1]भेदव्यपदेशाभ्यां च नेतरौ ॥ १–२–२३ ॥

[2]विशिनष्टि हि[2] प्रकरणं, प्रधानाच्च पुरुषाच्च भूतयोन्यक्षरम्, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनादिभिः (व्यावर्तयतीत्यर्थः)। तथा, ताभ्याम् अक्षरस्य भेदश्च व्यपदिश्यते—

'अक्षरात्परतः परः' (मुण्ड.उ. 2-1-2)

इत्यादिना। तथा हि—

'स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह' (मुण्ड.उ. 1-1-1)

इति, सर्वविद्याप्रतिष्ठाभूता ब्रह्मविद्या प्रक्रान्ता। परविद्यैव च सर्वविद्याप्रतिष्ठा।

---

तद्धर्मश्रवणात्, पञ्चम्यन्ताक्षरशब्दनिर्दिष्टस्य तदभावाच्च इत्यर्थः। अक्षरशब्दयोः भिन्नविषयत्वमुपपन्नम्; अस्मिन्नेव प्रकरणे 'तपसा चीयते ब्रह्म' 'इति ह स्म यद्ब्रह्मविदः' 'तस्मादेतद्ब्रह्म नाम रूपम्' इत्यत्र, 'ब्रह्म'शब्दयोः भिन्नविषयत्वदर्शनात्।

यत्तु—समानविभक्तिनिर्देशस्वारस्यात् सामानाधिकरण्यम्—इति,

तन्न; 'पर'शब्दस्य पञ्चम्यन्तपदसापेक्षत्वात्, तत्स्वारस्यार्थं न सामानाधिकरण्यम्। किं च 'परतोऽक्षरात्' इति न निर्दिष्टम्; 'अक्षरात्परतः परः' इति हि क्रमः। तत्स्वारस्याच्च न सामानाधिकरण्यम् (श्रु.प्र.) ॥२२॥

**विशिनष्टि हि** इति, 'विशेषण'शब्दं [सूत्रगतं] व्याचष्टे। **तथा** इति, 'भेदव्यपदेश'

---

[सूत्रार्थः। **विशेषणात्**—भूतयोन्यक्षरस्य 'कस्मिन्नु भगवो विज्ञाते, सर्वमिदं विज्ञातं भवति' इति सर्वविज्ञानकारणीभूतज्ञानविषयत्वेन विशिष्य कथनात्, **भेदव्यपदेशा(भ्याम्)त्**—'अक्षरात्परतः परः' इति प्रधानात्, तथा पुरुषाच्च भेदस्य स्पष्टं प्रतिपादनाच्च, **इतरौ**—प्रधानपुरुषौ, **न**—भूतयोन्यक्षरपदाभिधेयौ न ॥]

स्वज्ञानात्सर्वविज्ञानादक्षरं नेतरौ भवेत्।
अक्षरात्परतो जीवात्परत्वेन पृथक् श्रुतेः॥ (ब्र.प.मा. ५५)

---

[1] विशेषण—वा,न. [2] इतश्च न प्रधानपुरुषौ। विशिनष्टि हि—वा.
इतश्च न प्रधानपुरुषौ। विशिनष्टि—न.

तामिमां सर्वविद्याप्रतिष्ठां विद्यां, चतुर्मुखाथर्वादिगुरुपरम्परया अङ्गिरसा प्राप्तां जिज्ञासुः,

'शौनको [1]ह वै[1] महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ—कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति ? ' (मुण्ड.उ. 1-1-3)

इति 'ब्रह्मविद्यायाः सर्वविद्याश्रयत्वात्, ब्रह्मविज्ञानेन सर्वं विज्ञातं भवति' इति कृत्वा, ब्रह्मस्वरूपम् अनेन पृष्टम् ।

'तस्मै स होवाच—द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवाऽपरा च' (मुण्ड.उ. 1-1-4)

इति। ब्रह्मप्रेप्सुना, द्वे विद्ये वेदितव्ये—ब्रह्मविषये परोक्षापरोक्षरूपे द्वे [2]विज्ञाने[2] उपादेये इत्यर्थः ॥

[विद्याविभाग-तत्फलयोः प्रदर्शनम्]

[3]तत्र[3] परोक्षं, शास्त्रजन्यं ज्ञानम् ; अपरोक्षं योगजन्यम् । तयोः ब्रह्मप्राप्त्युपायभूतम्, अपरोक्षं ज्ञानम् । तच्च भक्तिरूपापन्नम् ;

'यमेवैष वृणुते तेन लभ्यः' (मुण्ड.उ. 3-2-3)

इति अत्रैव विशेष्यमाणत्वात् । तदुपायश्च, आगमजन्यं विवेकादिसाधनसप्तकानुगृहीतं ज्ञानम् ;

'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' (बृ.उ. 6-4-22)

---

शब्दं व्याचष्टे । तथा हि इति, हेतुद्वयं विवरीतुम् । सर्वविद्याप्रतिष्ठात्वम्—सर्वविद्याश्रयत्वम् । ज्ञातव्ये ब्रह्मणि कृत्स्नज्ञातव्यान्तर्भावात्, ब्रह्मज्ञाने कृत्स्नविषयज्ञानानि अन्तर्भूतानि इत्यर्थः । परविद्यैव चेति । परब्रह्मविषया विद्या—परविद्या । न केवलं विशेष्यवाचिना 'ब्रह्मविद्या' शब्देन ; विशेषणवाचिना 'सर्वविद्याप्रतिष्ठाम्' इति शब्देनाऽपि ब्रह्मविषयत्वं सिद्धम् [इत्यर्थः] (श्र.प्र.) ।

द्वे विद्ये इति । 'तस्य' इति आदिः [ब्रह्मणः इत्यर्थः] । [इयमुक्तिः] 'स तपोऽतप्यत' 'ओदनपाकं पचति' इतिवत् । तत्र फलितम् 'उपादेये इत्यर्थः' इति ॥

उपायभूतम्—अव्यवहितोपायभूतम् । तदुपायश्चेति । साधनसप्तकं, शास्त्रजन्यज्ञानं

---

[1] ह—थ [2] ज्ञाने—द [3] अत्र—द

इति श्रुतेः। आह च भगवान् पराशरः—

'तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं [1]महामुने[1] ॥
आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथोच्यते।' (वि.पु. 6-5-60, 61)

इति।

'तत्राऽपरा ऋग्वेदो यजुर्वेदः' (मुण्ड.उ. 1-1-5)

इत्यादिना,

'धर्मशास्त्राणि' (मुण्ड.उ. 1-1-5)

इत्यन्तेन, आगमोत्थं ब्रह्मसाक्षात्कारहेतुभूतं परोक्षज्ञानमुक्तम्; साङ्गस्य [2]सेतिहासपुराणस्य सधर्मशास्त्रस्य[2] समीमांसस्य वेदस्य ब्रह्मज्ञानोत्पत्ति[3]हेतुत्वात्[3]।

'अथ परा यया तदक्षरमधिगम्यते' (मुण्ड.उ. 1-1-5)

इति, उपासनाख्यं ब्रह्मसाक्षात्कारलक्षणं भक्तिरूपापन्नं ज्ञानम्।

'[4]यत्तदद्रेश्यमग्राह्यम्[4]' (मुण्ड.उ. 1-1-6)

इत्यादिना, परोक्षापरोक्षरूपज्ञानद्वयविषयस्य परस्य ब्रह्मणः स्वरूपमुच्यते॥

[ब्रह्मणो जगदुत्पत्तिः]

'यथोर्णनाभिः सृजते गृह्णते च' (मुण्ड.उ. 1-1-8)

इत्यादिना, यथोक्तस्वरूपात् परस्माद्ब्रह्मणः अक्षरात् कृत्स्नस्य चेतनाचेतनात्मकप्रपञ्चस्य उत्पत्तिरुक्ता। 'विश्वम्' इति वचनात्, न अचेतनमात्रस्य।

---

च, उभयमपि उपासनात्मकज्ञानस्य हेतुः—इति यावत्। **आह चेति**। अनेन विद्याद्वयस्य भिन्नविषयत्वोक्तिः उपबृंहणविरुद्धेति दर्शितं भवति। **विवेकाच्चेति**। उत्थितम् इत्यर्थः।

**साङ्गस्येति**। सपरिकरस्यागमस्य तज्ज्ञानहेतुत्वात् 'अपरा विद्या' इत्युक्तम् इत्यर्थः। 'द्विधा ज्ञानम्' इति पूर्वोक्तोपबृंहणवचनेन, 'तत्राऽपरा' इत्यादिवाक्यस्य आगमोत्थज्ञानविषयत्वं स्पष्टीकृतम् (श्रु.प्र)।

**अथेति**, 'अथ परा' इत्यादिवाक्यस्य विवेकजन्यज्ञानविषयत्वमाह। 'उक्तम्' इति [पूर्वेण] अन्वयः॥

**यथोर्णनाभिरिति**। भूतयोनित्वविवरणमित्यर्थः।

---

[1] द्विधा मुने—थ [2] इतिहासपुराणस्य सधर्मस्य—वा, इतिहासपुराणधर्मशास्त्रस्य—थ.
[3] हेतुभूतत्वात्—वा [4] यत्तदद्रेश्यम्—वा.

'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते ।

अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चाऽमृतम् ॥' (मुण्ड.उ. 1-1-9)

इति, ब्रह्मणः विश्वोत्पत्तिप्रकार उच्यते। तपसा—ज्ञानेन ;

'यस्य ज्ञानमयं तपः' (मुण्ड.उ. 1-1-10)

इति वक्ष्यमाणत्वात् । चीयते—उपचीयते ।

'बहु स्याम्' (छां.उ. 6-2-3)

इति सङ्कल्परूपेण ज्ञानेन, ब्रह्म सृष्ट्युन्मुखं भवति—इत्यर्थः। ततोऽन्नमभिजायते—अद्यते इति अन्नम्। विश्वस्य भोक्तृवर्गस्य भोग्यभूतं भूतसूक्ष्मम् अव्याकृतं, परस्माद्ब्रह्मणो जायते—इत्यर्थः। प्राण-मनःप्रभृति च स्वर्गापवर्गरूपफलसाधनभूतकर्म-पर्यन्तं [1]सर्वं विकारजातं[1], तस्मादेव जायते।

'यः सर्वज्ञः सर्ववित्' (मुण्ड.उ. 1-1-10)

इत्यादिना, सृष्ट्युपकरणभूतं [2]सार्वज्ञ्य[2]-सत्यसङ्कल्पत्वादिकमुक्तम्। सर्वज्ञात् सत्य-सङ्कल्पात् परस्माद्ब्रह्मणः अक्षरात्, एतत्—कार्याकारं ब्रह्म, नाम-रूप-विभक्तं भोक्तृ-भोग्य[3]रूपं[3] च जायते।

[मुण्डकगतद्वितीयखण्डार्थोपपादनम्]

'तदेतत्सत्यम्' (मुण्ड.उ. 1-2-1)

इति, परस्य ब्रह्मणः निरुपाधिकसत्यत्वमुच्यते—

---

**लोकाः**—स्वर्गादयः। **कर्मसु चामृतम्**—कर्मसु आयत्तम् अमृतम्। अमृतत्वसाधनभूतं कर्मेत्यर्थः इति भावः (श्रु.प्र)।

**विश्वस्य भोक्तृवर्गस्य** इत्यनेन, ['तपसा चीयते....'] एतद्वाक्यस्थ'सत्य'शब्दः व्याख्यातो भवति। 'सत्य'शब्दवाच्यस्य भोक्तृवर्गस्येत्यर्थः।

**यः सर्वज्ञः** इति। यथा—'दध्ना जुहोति' इति वाक्ये 'जुहोति'पदेन, 'अग्निहोत्रं जुहोति' इति विहितं होममनूद्य, दध्नः तत्साधनत्वं विधीयते; तथा कारणानुवादेन सर्वज्ञत्वादि-गुणविधानम्—इत्यर्थः। **भोक्तृ-भोग्यरूपं च जायते** इत्यनेन, 'अन्न'शब्दः व्याख्यातो भवति। 'अद्यतेऽत्ति च भूतानि' (तै.उ.आन. 2-2) इति हि 'अन्न'शब्दनिर्वचनम्।—

---

[1] सर्वविकारजातं—द　[2] सर्वज्ञत्व—इ,ग　[3] स्वरूपं—थ

'मन्त्रेषु कर्माणि कवयो [1]यान्यपश्यन्[1],
तानि त्रेतायां बहुधा सन्ततानि ।
[2]तान्याचरत[2] नियतं सत्यकामाः' (मुण्ड.उ. 1-2-1)

इति, सार्वज्ञ्य-सत्यसङ्कल्पत्वादिकल्याणगुणाकरम् अक्षरं पुरुषं [3]स्वतस्सत्यं नित्यं[3] कामयमानाः, तत्प्राप्तये फलान्तरेभ्यो विरक्ताः, ऋग्यजुस्सामाथर्वसु कविभिर्दृष्टानि, वर्णाश्रमोचितानि, त्रेताग्निषु बहुधा सन्ततानि कर्माण्याचरत—इति ।

'एष वः पन्थाः' (मुण्ड.उ. 1-2-1)

इत्यारभ्य,

'एष वः पुण्यः सुकृतो ब्रह्मलोकः' (मुण्ड.उ. 1-2-6)

इत्यन्तेन, कर्मानुष्ठानप्रकारम्, श्रुति-स्मृतिचोदितेषु कर्मसु [4]एकतर[4]कर्मवैधुर्येऽपि, [5]इतरेषाम[5]नुष्ठितानामपि निष्फलत्वम्, अयथानुष्ठितस्य च अननुष्ठितसमत्वमभिधाय,

'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्त[6]मवरं[6] येषु कर्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्यू ते पुनरेवाऽपियन्ति॥' (मुण्ड.उ 1-2-7)

---

**परस्येति** । कारणत्वशङ्कितदोषव्यावृत्त्यर्थमुक्तम् इत्यभिप्रायः । केचित्—'सत्यकाम' पदं चतुर्मुखलोककामपरं व्याचक्षते—इति, तद्व्युदासार्थम् **सार्वज्ञ्येति** । **कल्याणगुणाकरत्वं**, कमनीयत्वायोक्तम् । **अक्षरं....स्वतस्सत्यं....कामयमाना** इति । 'तदेतत्सत्यम्' 'येनाऽक्षरं पुरुषं वेद सत्यम्', पुनश्च 'तदेतत्सत्यम्' इति पूर्वापरयोः ब्रह्मवाचित्वेन प्रयुक्त'सत्य'शब्दैकार्थ्यात्— इति भावः। **बहुधा**—अधिकार-मन्त्र-फलभेदेन । **त्रेतेति** । 'अग्नित्रयमिदं त्रेता' इति नैघण्टुकाः । **आचरत इतीति** । 'उच्यते' इति पूर्ववाक्यादनुषङ्गः । **एकतर.... निष्फलत्वम्** इत्यनेन, 'यस्याऽग्निहोत्रमदर्शपूर्णमासमनाग्रयणमतिथिवर्जितं च । अहुतमवैश्वदेवम्' इत्यस्यार्थोऽभिप्रेतः । **अयथानुष्ठितस्य चे**त्यनेन, 'अश्रद्धया अविधिना हुतमासप्तमांस्तस्य लोकान् हिनस्ति' इत्यस्यार्थ उक्तः । इदं त्रिवर्गफलसाधनकर्मविषयमुक्तम् ; 'प्लवा ह्येते अदृढाः' इति तत्प्रकरणत्वात् । नेहाभिक्रमनाशोऽस्ति' इति मोक्षसाधनकर्मणां यथोक्तविपरीतत्वप्रतिपादनाच्च । **अष्टादशोक्तम्**—अष्टादशस्मृत्युक्तम् । श्रुतेरपि प्रदर्शनार्थमिदम् ; श्रुति-स्मृतिचोदितं कर्म इत्यर्थः । यद्वा—षोडशर्त्विक्पत्नीयजमानरूपाष्टादशपुरुषेषु विहितम् । यज्ञशब्दः कर्मसामान्यवाची । येषु पुरुषेषु स्मृतिविहितम् अवरं कर्म फलाभिसन्धिमत्,

---

[1] यान्यदर्शयत—थ [2] कर्माण्याचरत—थ [3] स्वतः सत्यं—वा
[4] इतर—थ [5] परेषाम—थ [6] मपरं—थ,द

[1]इत्यादिना[1], फलाभिसन्धिपूर्वकत्वेन ज्ञानविधुरतया च [2]अवरं कर्म[2] आचरतां, पुनरावृत्तिमुक्त्वा,

'तपश्श्रद्धे ये ह्युपवसन्ति' (मुण्ड.उ. 1-2-11)

इत्यादिना पुनरपि, 'फलाभिसन्धिरहितं ज्ञानिना अनुष्ठितं कर्म, ब्रह्मप्राप्तये भवति' इति [3]प्रशस्य[3],

'परीक्ष्य लोकान्' (मुण्ड.उ. 1-2-12)

इत्यादिना, केवलकर्मफलेषु [4]विरक्तस्य[4], यथोदितकर्मानुगृहीतं ब्रह्मप्राप्त्युपायभूतं ज्ञानं जिज्ञासमानस्य च आचार्योपसदनं विधाय,

[तृतीयखण्डार्थानुवादः]

'तदेतत्सत्यं, यथा सुदीप्तात्' (मुण्ड.उ. 2-1-1)

इत्यादिना,

'सोऽविद्याग्रन्थिं विकिरतीह सोम्य' (मुण्ड.उ. 2-1-10)

इत्यन्तेन, पूर्वोक्तस्य, अक्षरस्य भूतयोनेः परस्य ब्रह्मणः, परमपुरुषस्य, अनुक्तैः स्वरूपगुणैः सह सर्वभूतान्तरात्मतया [5]विश्व[5]शरीरत्वेन विश्वरूपत्वम्, तस्माद्विश्वसृष्टिं च विस्पष्टमभिधाय,

---

एतच्छ्रेयो ये अभिनन्दन्ति, ते पुरुषाः जरामृत्यू अपियन्ति—इत्यन्वयः। **ब्रह्मप्राप्तये भवति** इत्यनेन, 'सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा' इत्यस्यार्थ उक्तः। **परीक्ष्य लोकान्** इत्यादिवाक्ये, गुरूपसत्तिविषयनियमविधिः। अन्यत् न्यायसिद्धार्थानुवादरूपम्॥

**पूर्वोक्तस्य** इत्यादिपदैः, भूतयोन्यक्षरस्य, अक्षरात्परतः परस्य च अनन्यत्वसिद्धये, प्रथमतृतीयखण्डयोः ऐकार्थ्यप्रत्यभिज्ञापकविशेषणानि दर्शयति। पूर्वोक्तस्यैव इह प्रतिपाद्यत्वोपपादकानि विशेषणान्तराणि। **अक्षरपुरुषशब्दाभ्यां**, 'येनाऽक्षरं पुरुषम्' इति द्वितीयखण्डैकार्थ्यं च दर्शितं भवति। **अनुक्तैः स्वरूपगुणैः** इत्यनेन 'दिव्यो ह्यमूर्तः' इत्याद्युक्ताः दिव्यत्वमूर्तत्वविभुत्वादयो गुणाः विवक्षिताः। **विश्वरूपत्वम्**—विश्वप्रकारत्वम्। तदेव **विश्वशरीर**शब्देन विशेषितम्। तदुपपादकं **सर्वभूतान्तरात्मतया** इति पदम्। अन्तःप्रविश्य नियन्तृत्वात्, अस्य विश्वं, शरीरतया प्रकारः इत्यर्थः। **विस्पष्टम्** इत्यनेन, प्रथम-तृतीयखण्डयोः पौनरुक्त्यपरिहारः। पूर्वोक्तसृष्टिप्रपञ्चनपरत्वात् न पुनरुक्तिः—इत्यभिप्रायः॥

---

[1] इत्यादिना पुनरपि—ई.    [2] अपरं कर्म—थ, द.    [3] प्रशंस्य—न.
[4] विरक्तस्य अक्षरस्य भूतयोनेः परस्य ब्रह्मणः—द    [5] सर्व—थ

[चतुर्थखण्डार्थविवरणम् ]

'आविः संनिहितम्' (मुण्ड.उ. 2-2-1)

इत्यादिना, तस्यैवाऽक्षरस्य :अव्याकृतात्परतोऽपि पुरुषात् परभूतस्य परस्य ब्रह्मणः, परमव्योम्नि प्रतिष्ठितस्य अनवधिकातिशयानन्दस्वरूपस्य, [1]हृदय[1]गुहायाम् उपासनप्रकारम्, उपासनस्य च [2]परभक्ति[2]रूपत्वम्, उपासीनस्य अविद्या[3]विमोक[3]पूर्वकं [4]ब्रह्मसमं[4] ब्रह्मानुभवफलं च उपदिश्य उपसंहृतम् ।

अतः, एवं विशेषणात् भेदव्यपदेशाच्च, न अस्मिन् प्रकरणे प्रधानपुरुषौ प्रतिपाद्येते ॥

[सूत्रोक्तभेदव्यपदेशप्रपञ्चनम् ]

भेदव्यपदेशोऽपि हि ताभ्यां परस्य ब्रह्मणः, अत्र विद्यते—

'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः ।

अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥' (मुण्ड.उ. 2-1-2)

[5]इत्यादिभिः[5] । अक्षरात्—अव्याकृतात्, परो यः समष्टिपुरुषः, तस्मादपि परभूतः अदृश्यत्वादिगुणकः अक्षरशब्दाभिहितः परमात्मा इत्यर्थः। 'अश्नुते' इति वा, 'न क्षरति' इति वा अक्षरं तत्। अव्याकृतेऽपि स्वविकारव्याप्त्या वा महदादिवत् नामान्तरा[6]भिलापयोग्यक्षरणाभावाद्वा[6] अक्षरत्वं कथञ्चिदुपपद्यते ॥ २३ ॥

---

आविः संनिहितम्—योगिनामपरोक्षं संनिहितम् । तस्यैव—प्रथम-द्वितीय-खण्डप्रतिपादितस्य । अव्याकृतादिति । 'अक्षरात्परतः परस्य' इति तृतीयखण्डप्रतिपादितस्येत्यर्थः । 'परमं साम्यमुपैति' इति वाक्यं हृदि निधाय ब्रह्मसमम् इति । ब्रह्मानुभवफलमिति, भोगमात्रेण साम्यमाह । अविद्याविमोकपूर्वकम् इत्यनेन, 'पुण्यपापे विधूय' इत्यस्याऽर्थः उक्तः ।

भेदव्यपदेशाच्च इति भेदव्यपदेशोपादानं, तस्य प्रपञ्चनाकाङ्क्षाजननार्थम् ॥

अश्नुते इत्यादि । [अनेन] 'अक्षर'शब्दस्य अव्याकृतवाचित्वं कथम् ? इत्यपेक्षायां, 'प्रोक्षणीष्वर्थसंयोगात्' (पू.मी.सू. 1-4-11) इति न्यायमभिप्रेत्य अवयवशक्तिं दर्शयति । स्वविकारेति कार्याकारेण विकृतमंशं विकृतादन्यः कारणांशः सूक्ष्मतया व्याप्नोतीत्यर्थः (श्रु.प्र)।

---

[1] हृदये—थ [2] भक्ति—द [3] मोक—द [4] ब्रह्मणा समं—थ [5] इत्यादिना—भ
[6] भिलापायोग्यक्षरणाभावाद्वा—थ, भिलापयोग्याक्षरणाभावाद्वा—द

## ५६. रूपोपन्यासाच्च ॥ १–२–२४ ॥

'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः ।
वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा' ॥

(मुण्ड.उ. 2-1-4)

इतीदृशं रूपं, सर्वभूतान्तरात्मनः परमात्मन एव सम्भवति ; अतश्च परमात्मा ॥२४॥

॥ इति अदृश्यत्वादिगुणकाधिकरणम् ॥ ५ ॥

---

ईदृशं रूपम्—'अग्निर्मूर्धा' इत्यादिनोक्तं त्रैलोक्यशरीरत्वम् । सर्वभूतान्तरात्मन इति । सर्वभूतान्तरात्मसम्बन्धितया उच्यमानम् ईदृशं रूपं परमात्मन एव सम्भवतीत्यर्थः (श्रु.प्र) ॥२४॥

[सूत्राणि—१. अदृश्यत्वादि २. विशेषणभेद
३. रूपोपन्यासाच्च]

॥ इति अदृश्यत्वादिगुणकाधिकरणम् ॥५॥

---

[सूत्रार्थः । रूपस्य—त्रैलोक्यशरीरत्वात्मकस्य परमात्मासाधारणस्य व्यावर्तकधर्मस्य, उपन्यासाच्च—भूतयोन्यक्षरसम्बन्धिरूपत्वेन 'अग्निर्मूर्धा चक्षुषी' इत्यादिश्रुतौ कथनादपि, भूतयोन्यक्षरं परमात्मैव ; न प्रधानपुरुषौ ॥]

अग्निर्मूर्धेत्यक्षरस्य चन्द्रसूर्यौ च चक्षुषी ।
सर्वदेवाद्यङ्गकत्वशंसनात् परमेश्वरः ॥ (ब्र.प.मा. ५६)

१७. वैश्वानराधिकरणम् ॥ १–२–६ ॥ (सू. 25–33)

[अधिकरणार्थः – वैश्वानरशब्दार्थः परमात्मैव ; न जाठराग्न्यादिकम् ]

[वैश्वानरविद्या —(छां.उ. ५-११)]

## ५७. वैश्वानरः साधारणशब्दविशेषात् ॥ १–२–२५ ॥

[विषयवाक्यप्रदर्शनम्]

**इदमामनन्ति छन्दोगाः—**

**'आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि, तमेव नो ब्रूहि'** (छां.उ. 5–11–6) **इति प्रक्रम्य,**

**'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते'** (छां.उ. 5–18–1) **इति,**

---

एवं त्रैलोक्यशरीरत्वेन परमात्मत्वे साधिते, तादृशशरीरत्वं तद्व्यतिरिक्तस्याऽपि श्रूयते– इति शङ्कया उत्थानात् सङ्गतिः ॥

**अध्येषि** इति । 'इक्–स्मरणे' (पा.धा.पा. 1047) स्मरसि —उपास्से इत्यर्थः । यद्वा 'इण्–गतौ' (पा.धा.पा. 1045) गत्यर्था: बुद्ध्यर्थाः । अवगच्छसि इत्यर्थः (श्रु.प्र) ।

**प्रादेशमात्रम्**—द्युलोकादिसम्बन्धिनी प्रादेशी । प्रादेशी मात्रा यस्य तम् ; द्युप्रभृति-देशपरिच्छिन्नम् । **अभिविमानम्**—सर्वाभिव्याप्ततया विगतमानम् । **वैश्वानरम्**—विश्वेषां नराणां नेतारम् (रं.भा) ।

---

[सूत्रार्थः । **वैश्वानरः**—'आत्मानमेवेमं वैश्वानरम्' इत्यत्र वैश्वानरशब्दनिर्दिष्टोऽर्थः, (न जाठराग्न्यादित्रिकम् ; किन्तु परमात्मैव), **साधारणस्य**–जाठराग्नौ, पञ्चभूतान्तर्गते तृतीये भूते, देवताविशेषे, (तथा) परमात्मनि च सामान्यतः प्रयोगार्हस्य, **शब्दस्य**—वैश्वानरेति शब्दस्य, **विशेषात्**–(परमात्मासाधारणधर्मबोधकशब्दसमभिव्याहारतः) असाधारणार्थबोधकतया ज्ञापनात् ।।]

**वैश्वानरः परं ब्रह्म जाठरादिविलक्षणम् ।**
**ब्रह्मशब्दप्रभृतिभिः सामान्यस्य विशेषणात् ।।** (ब्र.प.मा. ५७)

[संशयस्वरूपम्]

**तत्र सन्देहः—किमयं वैश्वानर आत्मा, परमात्मेति शक्यनिर्णयः? उत न?—इति।**

[सयुक्तिकः पूर्वपक्षः]

**किं प्राप्तम्?**

**अशक्यनिर्णयः—इति।**

**कुतः?**

**'वैश्वानर'शब्दस्य चतुर्ष्वर्थेषु प्रयोगदर्शनात्।**

---

**तत्र सन्देह** इति। यद्यपि....'को न आत्मा? किं ब्रह्म?' इति 'आत्म-ब्रह्म' शब्दाभ्यामुपक्रमात्, उपसंहारस्य च तदानुगुण्येन नेयत्वात्, न सन्देहोदयः; तथापि समानप्रकरणे वाजसनेये अग्नि-वैश्वानरशब्दाभ्यामुपक्रमात्, संशयः सम्भवतीत्यभिप्रायः। शक्यनिर्णयत्वाशक्यनिर्णयत्वे, सन्देहशिरसी कृते। तच्च 'साधारण'शब्दस्य सूत्रस्थत्वनिबन्धनम्।

संशयाकारः—किमयं वैश्वानरात्मा, परमात्मेति शक्यनिर्णयः? उत न? तदर्थम् आत्म-ब्रह्मशब्दोपक्रमः वैश्वानरस्य ब्रह्मभावमवगमयति? न?—इति। तदर्थम् अग्निशब्दसामानाधिकरण्य-त्रेताकल्पन-प्राणाहुत्याधारत्वानि, किं वैश्वानरस्य ब्रह्मभावविरोधीनि? उत न?—इति। किम् 'एषोऽग्निर्वैश्वानरः' इति 'अग्नि'शब्दः, अग्निमात्रपरः? उत अग्न्यवस्थपरमात्मपरः?—इति।

[पूर्वपक्षे फलफलिभावः] 'अग्नि'शब्दस्य अग्निमात्रपरत्वे, अग्निशब्दसामानाधिकरण्यादीनां ब्रह्मभावविरोधितया, 'आत्म-ब्रह्म'शब्दोपक्रमस्याऽपि ब्रह्मभावावगमकत्वाभावेन अशक्यनिर्णयः—इति।

[सिद्धान्ते फलफलिभावः]—'अग्नि'शब्दस्य परमात्मपरत्वे, अग्निशब्दसामानाधिकरण्यादीनां ब्रह्मभावाविरोधितया, 'आत्म-ब्रह्म'शब्दोपक्रमस्य ब्रह्मभावावगमकत्वोपपत्तेः, वैश्वानरः परमात्मेति शक्यनिर्णयः—इति॥

**चतुर्ष्विति।** जीव-परसाधारणात्मशब्दसद्भावेऽपि, 'आत्म'शब्दस्य 'वैश्वानरमात्मानम्' इति 'वैश्वानर'शब्दविशेषितत्वात्, 'वैश्वानर'शब्दस्य च जीवमात्रे प्रयोगाभावात्, इह जीवविषयत्वशङ्का न सम्भवतीति 'पञ्चसु' इत्यनुक्तिः (श्रु.प्र.)।

१. जाठराग्नौ तावत्—

'अयमग्निर्वैश्वानरो....येनेदमन्नं पच्यते यदिदमद्यते ।
तस्यैव घोषो भवति; [1]यावदेत[1]त्कर्णावपिधाय शृणोति ।
स यदोत्क्रमिष्यन् भवति, नैनं घोषं शृणोति' (बृ उ. 7–9–1)

इति ।

२. महाभूततृतीये च—

'विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्' (ऋ.सं. 10–88–12)

इति ।

३. देवतायां च—

'वैश्वानरस्य सुमतौ स्याम राजा हिकं भुवनानामभिश्रीः' (ऋ.सं. 1–98–1)
(तै.सं. 1–5–11–8)

इति ।

४. परमात्मनि च—

'तदात्मन्नेव हृदय्येऽग्नौ वैश्वानरे प्रास्यत्' (तै.ब्रा. 3–11–8)

इति,

'स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते' (प्रश्न.उ. 1–7)

इति च । वाक्योपक्रमादिषु उपलभ्यमानान्यपि लिङ्गानि, सर्वानुगुणतया नेतुं शक्यानि—इति ॥

---

**विश्वस्मै भुवनाय**—विश्वभुवनोपकारार्थम् । **वैश्वानरम्**—महाभूततृतीयम् । **अह्नां केतुम्**—आदित्यम् ।

**सुमतिः**—शोभनमतिः । **सुमतौ स्याम**—तद्विषयभूताः स्याम । **अभिश्रीः**—अभितः श्रीः यस्य, सः ; 'श्रियमिच्छेद्धुताशनात्' इति न्यायात् । **हिकम्** इति अव्ययम्, [हिशब्दार्थे] ।

**सर्वानुगुणतयेति** । काल्पनिकं त्रेतारूपत्वं सर्वत्र सम्भवति । ब्रह्माग्निशब्दौ मिथः प्रतिबन्धकत्वात् अनिर्धारकौ । अन्नादनरूपं फलं च सर्वत्रोपपन्नम् इत्यभिप्रायः ॥

---

[1] यमेत—क

[सिद्धान्तस्वरूपम्]

एवं प्राप्ते, अभिधीयते—वैश्वानरः साधारणशब्दविशेषात् । वैश्वानरः [1]पर एव आत्मा[1] ।

कुतः ?

साधारणशब्दविशेषात् । विशेष्यत इति विशेषः । साधारणस्य 'वैश्वानर'-शब्दस्य, परमात्मासाधारणैः धर्मैः विशेष्यमाणत्वात्—इत्यर्थः ।

तथा हि ; औपमन्यवादयः [2]पञ्चेमे[2] महर्षयः समेत्य,

'को न आत्मा ? किं ब्रह्म ?' (छां.उ. 5-11-1)

इति विचार्य,

'उद्दालको ह वै भगवन्तोऽयमारुणिः संप्रतीममात्मानं
वैश्वानरमध्येति, तं हन्ताऽभ्या[3]गच्छाम[3]' (छां.उ. 5-11-2)

इति, उद्दालकस्य वैश्वानरात्मविज्ञान[4]मवगम्य[4], तमभ्याजग्मुः । स च उद्दालकः, एतान् वैश्वानरात्मजिज्ञासून् अभिलक्ष्य, आत्मनश्च तत्र अकृत्स्नवेदित्वं मत्वा, तान् होवाच—

'अश्वपतिर्वै भगवन्तोऽयं [5]कैकयः[5] संप्रतीममात्मानं
वैश्वानरमध्येति तं हन्ताऽभ्यागच्छाम' (छां.उ. 5-11-4)

---

**विशेष्यते** इत्यादि । नेदं विशेषशब्दस्य प्रत्ययार्थव्याख्यानम् ; अपि तु 'साधारण-शब्दविशेषात्' इति समासान्तर्गतषष्ठीव्याख्यानम् । कर्मणि षष्ठी ; न तु कर्तरि इत्यर्थः । 'विशेषः इति कृदन्तं पदं कर्मार्थषष्ठीनिमित्तम्' इत्यभिप्रायेण विशेषपदोपादानम् । यद्वा— 'विशेष्यते इति विशेषः' इति घञः कर्मार्थतामाह । 'साधारणशब्द एव विशेषः' इति कर्म-धारयः । **धर्मैः** इति, 'धर्म'शब्दः लिङ्गपरः । **विशेष्यमाणत्वात्** इति, फलितार्थ उक्तः ; न आभिधानिकः ।

'को न आत्मा ? किं ब्रह्म ?' इति 'किं'शब्दद्वयम्, आत्मत्व-ब्रह्मत्वयोः द्वयोरपि ज्ञातव्यत्वाभिप्रायम् । 'आत्म-ब्रह्म'शब्दवाच्यधर्म्यैकत्वानेकत्वजिज्ञासया वा 'किं'शब्द द्वयप्रयोगः । **आत्मनश्चेति**, विषयवाक्ये 'न मे स्तेनः' इत्यादेः प्रयोजनमाह (श्रु.प्र) ।

---

[1] परमात्मा—वा [2] पञ्च—ड [3] गच्छामो वयम्—थ [4] मधिगम्य—थ [5] कैक(के)यः—फ

इति। ते च उद्दालकषष्ठाः, तमश्वपतिम् अभ्याजग्मुः। स च तान् महर्षीन् यथार्हं पृथगभ्यर्च्य,

'न मे स्तेनः' (छां.उ. 5-11-5)

इत्यादिना,

'यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि' (छां.उ. 5-11-5)

इत्यन्तेन, आत्मनो व्रतस्थतया प्रतिग्रहयोग्यतां ज्ञापयन्नेव, ब्रह्मविद्भिरपि प्रतिषिद्ध-परिहरणीयतां विहितकर्मकर्तव्यतां च प्रज्ञाप्य,

'यावदेकैकस्मा ऋत्विजे धनं दास्यामि, तावद्भगवद्भ्यो दास्यामि, वसन्तु [1]भवन्तः[1]' (छां.उ. 5-11-5)

इत्यवोचत्। ते च मुमुक्षवः, [2]वैश्वानरमात्मानं[2] जिज्ञासमानाः, 'तमेवाऽऽत्मानमस्माकं ब्रूहि' इत्यवोचन्। तदेवम्,

'को न आत्मा ? किं ब्रह्म ?' (छां.उ. 5-11-1)

इति, जीवात्मनामात्मभूतं ब्रह्म जिज्ञासमानैः, तज्ज्ञम् अन्विच्छद्भिः, वैश्वानरात्मज्ञ-सकाशमागम्य, पृच्छ्यमानो [3]वैश्वानरात्मा[3], परमात्मा—इति विज्ञायते।

'[4]आत्म[4]-ब्रह्म'शब्दाभ्यामुपक्रम्य, पश्चात् सर्वत्र 'आत्म-वैश्वानर'शब्दाभ्यां व्यवहाराच्च, 'ब्रह्म'शब्दस्थाने निर्दिश्यमानः 'वैश्वानर' शब्दः, 'ब्रह्मैवाऽभिधत्ते' इति विज्ञायते। किं च—

[भगवन्तः इति तेषां सम्बोधनम्। **उद्दालकषष्ठाः**—उद्दालकः षष्ठः येषां, ते। औपमन्यवादयः पञ्च—प्राचीनशाल-सत्ययज्ञ-इन्द्रद्युम्न-जन-बुडिलाख्याः, षष्ठश्च उद्दालक इति। **यथार्हम्**—यथायोग्यम्; तेषां तेषां योग्यतामनतिक्रम्य। **पृथक्**—पृथक् पृथक्। **आत्मनः**—राज्ञः अश्वपतेः स्वस्य। **व्रतस्थतया**—सङ्कल्पितयागोपयोगिव्रतसम्पन्नतया। **प्रतिग्रहयोग्यता**—प्रतिग्रहार्हधनत्यागिना। **प्रज्ञाप्य**—स्वीयाचारव्यवहारद्वारा इतरान् बोधयित्वा।]

**तदेवमिति**, फलितानि साधकलिङ्गानि दर्शयति। मुमुक्षुभिः पृच्छ्यमानत्वम्, आत्मत्वम्, ब्रह्मत्वम्, ब्रह्मशब्दस्थाने वैश्वानरशब्दप्रयोगः, फलनिर्देशश्च वैश्वानरस्य परमात्मत्वसाधकलिङ्गानि इत्यर्थः। द्युमूर्धत्वादिविशिष्टतारूपधर्मस्य अत्रानुक्तिः, तस्य अनन्तरसूत्रोक्तत्वात् (श्रु.प्र)। [**विज्ञायते**—निर्णयगोचरीभवति।]

---

[1] भगवन्तः—वा [2] वैश्वानरात्मानम्—द [3] वैश्वानरः आत्मा—द [4] अतः आत्म—ध

'स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' (छां.उ. 5-18-1)

'तद्यथेषीक(का)तूलमग्नौ प्रोतं प्रदूयेतैवं हाऽस्य सर्वे पाप्मानः प्रदूयन्ते'

(छां.उ. 5-24-3)

[1]इति च[1] वक्ष्यमाणं वैश्वानरात्मविज्ञानफलम्, वैश्वानरात्मानं 'परं ब्रह्म' इति ज्ञापयति ॥२५॥

[वैश्वानरस्य परमात्मत्वे ज्ञापकान्तरम्]

इतश्च वैश्वानरः परमात्मा—

## ५८. स्मर्यमाणमनुमानं स्यादिति ॥ १-२-२६ ॥

द्युप्रभृति पृथिव्यन्तम्, अवयवविभागेन, वैश्वानरस्य रूपम् इहोपदिश्यते। तच्च, श्रुतिस्मृतिषु परमपुरुषरूपतया प्रसिद्धम्। तदिह 'तदेवेदम्' इति स्मर्यमाणं— प्रत्यभिज्ञायमानम्, वैश्वानरस्य [1]परमपुरुषत्वे[2] अनुमानं—लिङ्गम्, इत्यर्थः।

[व्यवहारात्—निर्देशात्। ब्रह्मैव अभिधत्ते—जाठराग्नि-भूततृतीय-देवताविशेषानभिधानेन ब्रह्माभिधायकम् भवति।] सर्वेषु....अत्ति—सर्वलोक-सर्वभूत-सर्वात्मवर्ति ब्रह्मरूपम् अन्नम् अनुभवति। तद्यथेति। यथा इषीकायाः—मुञ्जान्तर्वर्तितृणविशेषस्य, तूलम् अग्नौ प्रक्षिप्तं सद्यो दह्यते; एवं सर्वाणि पापानि एतादृशविद्यापूर्वकप्राणाग्निहोत्रानुष्ठानेन दग्धानि भवन्ति इत्यर्थः (रं.भा)। [वैश्वानरा....ज्ञापयति—वैश्वानरात्मविशेष्यकपरब्रह्मत्वप्रकारकज्ञानजनकं भवति।]

द्युप्रभृतीति, 'स्मर्यमाण'शब्दस्य विशेष्यं दर्शयन् सूत्रं व्याचष्टे। लिङ्गमित्यर्थः इति। [सूत्रस्थः] 'अनुमान'शब्दः करणार्थल्युडन्तः; श्रुतिलिङ्गवाक्येत्यादिसूत्र (पू.मी.सू. 3-3-14) पठितलिङ्गपरश्च इति भावः ॥२५॥

---

[सूत्रार्थः। इति—'अग्निर्मूर्धा चक्षुषी' इत्येवंरीत्या, स्मर्यमाणम्—प्रत्यभिज्ञायमानं रूपम्, अनुमानं स्यात्—वैश्वानरशब्दवाच्यस्य परमात्मत्वे लिङ्गं भवेत्।]

अग्निर्मूर्धेति यद्रूपं ब्रह्मणोऽन्यश्रुतौ स्मृतम्।
वैशवनरः परं ब्रह्म तद्रूपस्मरणादिह ॥ (ब्र.प.मा. ५८)

---

[1] इति—द   [2] परमपुरुषरूपत्वे—थ, परमात्मत्वे—द

'इति'शब्दः प्रकारवचनः। इत्थम्भूतं रूपं प्रत्यभिज्ञायमानं, वैश्वानरस्य परमात्मत्वे अनुमानं स्यात्। श्रुति-स्मृतिषु हि परमपुरुषस्य इत्थं रूपं प्रसिद्धम्। यथा आथर्वणे—

'अग्निमूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः।
वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा॥'

(मुण्ड.उ. 2-1-4)

इति। अग्निरिह द्युलोकः;

'असौ वै लोकोऽग्निः' (बृ.उ. 8-2-9)

इति श्रुतेः। स्मरन्ति च मुनयः—

'द्यां मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिं[1] चन्द्रसूर्यौ च नेत्रे।
दिशः श्रोत्रे विद्धि पादौ क्षितिं च सोऽचिन्त्यात्मा सर्वभूतप्रणेता॥'

इति;

'यस्याऽग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः।
सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नमः॥' (म.भा.शा. 46-70)

इति च॥

[द्युप्रभृतीनां वैश्वानरावयवत्वरूपणम्]

इह च—द्युप्रभृतयः, वैश्वानरस्य मूर्धाद्यवयवत्वेनोच्यन्ते। तथा हि—तैः औपमन्यवप्रभृतिभिर्महर्षिभिः,

---

**इतिशब्द** इति। 'अनुमान'शब्देन हेतुत्वसिद्धेः इतिशब्दवैयर्थ्यम् इत्यत्रोत्तरमिदम्। परमात्मपरत्वेन साधितत्वात्, 'अग्निर्मूर्धा' इति वाक्यमुदाहृतम् (श्रु.प्र)। **वाग्विवृताः**—वागिन्द्रियव्यापाराः। **वायुः प्राणः**—महावायुरेव देहधारकः प्राणः। **हृदयं विश्वमस्य**—जगत् सर्वम् अस्य देहान्तर्वर्तिहृदयाख्यमांसविशेषः। **पद्भ्यां पृथिवी**—पादावेव पृथिवी। **सर्वभूतान्तरात्मा**—सर्वभूतानां तच्छरीरत्वात्, सर्वेषामन्तरात्मा (रं.भा)।

**अग्निरिहेति**। [छान्दोग्ये, 'मूर्धैव सुतेजाः' इति] द्यौः मूर्धत्वेन श्रूयते। [मुण्डकगतवाक्ये] 'अग्निः मूर्धा' इति। तत्कथमैकार्थ्यम्? इत्यत्रोत्तरमिदम्। **यस्याऽग्निरास्यम्** इत्यत्र, 'अग्नि'शब्दः प्रसिद्धाग्निपरः; 'द्यौर्मूर्धा' इति पृथगुक्तेः (श्रु.प्र)।

[1] नाभिः—द

'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि, तमेव नो ब्रूहि' (छां.उ. 5-11-6) इति पृष्टः केकयः, तेभ्यः वैश्वानरात्मानम् उपदिदिक्षुः, विशेषप्रश्नान्यथानुपपत्त्या, 'वैश्वानरात्मनि एतैः किञ्चित् ज्ञातम्, [1]किञ्चिदज्ञातम्[1]' इति विज्ञाय, ज्ञाताज्ञातांश-बुभुत्सया, तान् एकैकं पप्रच्छ। तत्र,

'औपमन्यव कं त्वमात्मानमुपास्से' (छां.उ. 5-12-1)

इति पृष्टे,

'दिवमेव भगवो राजन्' (छां.उ. 5-12-1)

इति तेन चोक्ते, दिवि तस्य पूर्णवैश्वानरात्मबुद्धिं निवर्तयन्, 'वैश्वानरस्य द्यौर्मूर्धा' [2]इति च[2] उपदिशन्, तस्याः वैश्वानरांशभूतायाः दिवः, 'सुतेजाः' इति गुणनामधेय प्राचिख्यपत्।

एवं सत्ययज्ञादिभिः आदित्यवाय्वाकाशाप्पृथिवीनाम् एकैकेन एकैकम् उपास्य-मानतया कथितानां, 'विश्वरूपः, पृथग्वर्त्मा, बहुलः, रयिः, प्रतिष्ठा' इति एकैकगुण-नामधेयानि, वैश्वानरात्मनः चक्षुः-प्राण-सन्देह-बस्ति-पादावयवत्वं च उपदिष्टम्। सन्देहः—मध्यकाय उच्यते। अतः, एवम्भूतद्युमूर्धत्वादिविशिष्टं परमपुरुषस्यैव रूपमिति, [2]वैश्वानरः[2] परमपुरुष एव ॥२६॥

---

**विशेषप्रश्नेति**। न हि 'आत्म-ब्रह्मादिशब्दैः प्रश्नः कृतः; 'वैश्वानर'शब्देन हि प्रश्नः। अनेन द्युप्रभृतीनाम् अपूर्वनामनिर्देशहेतुश्च उक्तो भवति। अज्ञातांशः सर्वोऽपि हि उपदेष्टव्यः। **गुणनामधेयानीति**। द्यौः नक्षत्रादितेजस्विनी इति **सुतेजाः**।

प्रकाशकस्य आदित्यस्य, विश्वं रूपं प्रकाश्यम्। तस्मात्, आदित्यो **विश्वरूपः**। वायुः विविधगतिस्वभावत्वात्, **पृथग्वर्त्मा**। आकाशः, भूतान्तरेभ्यः महत्त्वात् **बहुलः**। आपः वेगवत्त्वात् **रयिः**। रयो हि वेगः। इकारान्तत्वं छान्दसम्। रै-रूपधनप्राप्तिहेतुत्वाद्वा **रयिः**। पृथिवी, प्राण्याधारत्वात् **प्रतिष्ठा** इति भावः। **मध्यकाय** इति। मध्यं हि पूर्वा-परांशसाधारण्यात् कुत्राऽनुप्रविष्टम्? इति सन्दिह्यते। एतत् ज्ञापयितुं **सन्देहो मध्यकायः** इत्युक्तम्; न तु 'नाभिः' इति। **गुणनामधेयानि** इत्यनेन, अन्यदपि प्रयोजनं फलितम्। न केवलं नामधेयानि; अपि तु गुणनामधेयानि। तत्तद्गुणकत्वं मूर्धादित्वेनोपदिष्टानां

---

[1] किञ्चिच्चाज्ञातं—वा　　[2] इति—द.

[उत्तरसूत्रावतरणम्]

पुनरपि [2]अनिर्णयमेवाऽऽशङ्क्य[2] परिहरति—

## ५९. शब्दादिभ्योऽन्तः[3]प्रतिष्ठानाच्च नेति[3] चेन्न तथादृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते ॥ १–२–२७ ॥

---

द्यप्रभृतीनामनुसन्धेयम् इत्यर्थः । [अस्मिन् सूत्रे] 'स्मर्यमाण'शब्दश्च प्रत्यभिज्ञायमानोपस्थापकः ; तर्कपादे 'अनुस्मृतेश्च (ब्र सू. 2–2–24) इति सूत्रे 'अनुस्मृति'शब्दस्य प्रत्यभिज्ञापरत्वेन सूत्रकारैः प्रयुक्तत्वात् । [तस्मात् 'अग्निरिह द्युलोकः' 'द्यां मूर्धानम्' इति श्रुति-स्मृतिभ्याम् ऐकार्थ्यप्रत्यभिज्ञानमेव, अस्मिन् सूत्रे हेतुतया विवक्षितम्] (श्रु.प्र) ॥२६॥

---

[सूत्रार्थः । **शब्दादिभ्यः**—'स एषोऽग्निर्वैश्वानरः' इति वैश्वा नरशब्दसमानाधिकरणात् अग्निशब्दात् (तथा) हृदयादिस्थानस्थस्य वैश्वानरस्य अग्नित्रयत्वपरिकल्पनात. (एवं) प्राणाहुत्याधारत्वाच्च, **अन्तः प्रतिष्ठानाच्च**—'पुरुषेऽन्तः प्रतिष्ठितम् वेद' इति, वैश्वानरस्य पुरुषान्तःप्रतिष्ठितत्वश्रवणादपि, **न**—'वैश्वानर'शब्दवाच्यः परमात्मा न भवितुमर्हति, **इति चेत्**—एवं शङ्कनं तु, **न**—युक्तं न भवति, **तथा**—वैश्वानरस्य ब्रह्मणः जाठराग्निशरीरतया, **दृष्टयपदेशात्**—उपासनविधानात्, **वैश्वानरः**—वैश्वानरशब्दवाच्योऽर्थः (जाठराग्निशरीरः परमात्मैव ; न केवलं जाठरः), **असम्भवात्**—केवलस्य जाठरस्य त्रैलोक्यशरीरत्वस्य बाधात्, **एनम्**—वैश्वानरम्, **पुरुषमपि च**—निरुपाधिकपुरुषत्वेनाऽपि, **अधीयते**—'वैश्वानरो यत्पुरुषः' इति वाजसनेयिनः पठन्ति ।]

**पुनरपीति** । अर्थचतुष्टये प्रयोगसाधारण्यात् अनिर्णयः पूर्वमुक्तः । इदानीं तु, विशेषकधर्माणां 'ब्रह्म' शब्दादीनां तत्तदनुरूपविशेषकात् शब्दादेः प्रतिरोधादनिर्णयः विवक्षितः । [**परिहरति**-अविद्यमानतया बोधयति ।]

होमाधारान्तराग्नित्वश्रुतेर्ब्रह्म न चेन्नहि ।
जाठराग्निशरीरस्योपास्तये पुरुषस्य सा ।। (ब्र.प मा. ५९)

---

[1] वैश्वानरः आत्मा—द, वैश्वानरात्मा—आ. [2] अनिर्णयमाशङ्क्य—द.
[3] प्रतिष्ठानादिति—थ

[ वैश्वानरशब्दस्य परमात्मपरत्वाभावशङ्कनम् ]

यदुक्तम्—वैश्वानरः परमात्मेति निश्चीयते—इति,

तन्न ; शब्दादिभ्यः, अन्तःप्रतिष्ठानाच्च [1]जाठरस्याऽप्यग्नेः[1] इह प्रतीयमानत्वात् । शब्दस्तावत्, वाजिनां वैश्वानरविद्याप्रकरणे—

'स एषोऽग्निर्वैश्वानरः' (अग्निर. 10-5-6-11)

इति वैश्वानरसमानाधिकरणतया 'अग्निः' इति श्रूयते । अस्मिन् प्रकरणे च—

'हृदयं गार्हपत्यः, मनोऽन्वाहार्यपचनः, आस्यमाहवनीयः' (छां.उ. 5-18-2)

इति वैश्वानरस्य हृदयादि[2]स्थस्य[2], अग्नित्रयकल्पनं क्रियते ।

'तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयम् । स यां प्रथमामाहुतिं जुहुयात्, तां जुहुयात् प्राणाय स्वाहा' (छां.उ. 5-19-1)

इत्यादिना, प्राणाहुत्याधारत्वं च वैश्वानरस्य अवगम्यते । तथा वैश्वानरस्य अस्मिन् पुरुषे अन्तःप्रतिष्ठानं, वाजसनेयिनः समामनन्ति—

'स यो [3]हैतमेव[3]मग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद'

(अग्निर. 10-5-6-11)

इति । अतः 'अग्नि'शब्दसामानाधिकरण्यात्, अग्नित्रेतापरिकल्पनात्, प्राणाहुत्याधारभावात्, [4]अन्तःप्रतिष्ठानाच्च[4] वैश्वानरस्य जाठरत्वमपि प्रतीयत इति, न एकान्ततः परमात्मत्वम्—इति चेत्,

---

**यदुक्तमिति,** [सौत्रं] नेति पदं व्याचष्टे । श्रुत्यन्तरस्थहेत्वोभरुयोः दूरस्थत्वात्, तौ कण्ठोक्तौ । एतत्प्रकरणस्थभू अग्नित्रयकल्पनं प्राणाहुत्याधारत्वं च 'आदि'शब्दोपात्तम् ; संनिकृष्टत्वात् । एतदभिप्रायेण **'वाजिनां....प्रकरणे, वाज....मनन्ति'** इत्युक्तम् ।

**अस्मिन् प्रकरणे च** इति **च**शब्देन वाजिनामप्यस्तीति सूचितम् । **अग्नित्रयेति,** होमाधारत्वमात्रं फलितम् । **तद्यद्भक्तमिति,** होमाधारत्वविशेषः । अन्तःप्रतिष्ठानं 'अग्नि' शब्दनिर्देशसहितं विवक्षितम् । अन्तःप्रतिष्ठत्वमात्रं हि परस्याऽपि सम्भवति । 'स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद' इति हि श्रूयते ।

**शब्दादिभ्यः** इत्यादिसूत्रखण्डं जाठरशङ्कामात्रपरम्, न तु देवताभूतपरम् ; अन्तःप्रतिष्ठानोपन्यासात्, हेत्वन्तराणां च तत्साहचर्यात् (श्रु.प्र) ॥

---

[1] जाठरस्याग्नेः—वा [2] स्थानगतस्य—थ [3] हैनमेव—द [4] तदन्तःप्रतिष्ठानाच्च—थ.

[उक्ताशङ्कानिरसनम् ]

तन्न ; तथा दृष्ट्युपदेशात्—[1]पूर्वोक्तस्य त्रैलोक्यशरीरस्य[1] [2]परस्य ब्रह्मणो[2] वैश्वानरस्य जाठराग्निशरीरतया, [3]तद्विशिष्टस्य उपासनोपदेशात्[3]। 'अग्नि'शब्दादिभिर्हि न केवलो जाठरः प्रतिपाद्यते ; अपि तु जाठराग्निविशिष्टः [4]परमात्मा[4] । कथमिदमवगम्यते ?—इति चेत्,

असम्भवात्—जाठरस्य केवलस्य त्रैलोक्यशरीरत्वासम्भवात् । त्रैलोक्यशरीरतया प्रतिपन्नवैश्वानरसमानाधिकरणः, जाठरविषयतया प्रतीयमानः 'अग्नि'शब्दः, जाठरशरीरतया तद्विशिष्टं परमात्मानमेव अभिदधातीत्यर्थः । यथोक्तं भगवता—

'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥' (भ.गी. 15-14)

इति । जाठरानलशरीरो भूत्वा—इत्यर्थः । अतः तद्विशिष्टस्योपासनम् अत्रोपदिश्यते :

किञ्च—पुरुषमपि च एनमधीयते वाजसनेयिनः—

---

तन्नेति, शङ्कितं जाठरविषयत्वं परिहरति । जाठराग्निशरीरतया इति, 'यस्याग्निः शरीरम्' इति श्रुत्यभिप्रायेण । उपासनशब्देन सौत्रदृष्टिशब्दव्याख्यानम् ; 'आत्मा वा अरे द्रष्टव्यः' 'तस्मिन् दृष्टे परावरे' इति श्रौतप्रयोगात् । 'वैश्वानरमुपास्ते' इति च अत्र श्रूयते । परमार्थविषयत्वे सम्भवति, अपरमार्थविषयत्वाश्रयणायोगात्, न 'मनो ब्रह्म' इत्यादिदृष्टितुल्यत्वशङ्का । जाठरे हि द्युमूर्धत्वादिकम् अत्यन्तबाधितम् । 'जाठराग्निशरीरतया' इत्यनेन, परमार्थविषयसम्भवश्च दर्शितः । उत्कृष्टे परमात्मनि, अपकृष्टाग्निदृष्टययोगाच्च न परस्मिन् अग्निदृष्टिः । परमात्मलिङ्गानां जाठराग्निलिङ्गानां च दर्शनात् [जाठराग्नि]विशिष्टो-[परमात्मा]पासनपरत्वम् अभ्युपगन्तव्यम् । यथा प्रतर्दनविद्यायाम्—इति वाक्यार्थः—प्रतिपाद्यते । ज्ञाप्यते । कथमित्यादि । केवलाग्नौ प्रसिद्धस्य कथं तद्विशिष्टपरत्वम् ? इत्यर्थः ।

यथोक्तमिति, जाठरविषयतया प्रसिद्धस्य शब्दस्य, तद्विशिष्टे परमपुरुषे प्रवृत्तिं स्मृत्या दृढयति (श्रु.प्र) ।

पुरुषमपि चेति । [सूत्रे] अपि च इत्यत्र विभक्तः चशब्दः हेतुसमुच्चयार्थः । न केवलम् अग्नित्वं पुरुषेऽन्तःप्रतिष्ठितत्वं च ; किन्तु 'पुरुष'शब्दवाच्यतयाऽप्यधीयते

---

[1] पूर्वोक्तत्रैलोक्यशरीरस्य—न, पूर्वोक्तस्य त्रैलोक्यशरिरकस्य—द, [2] ब्रह्मणः—श [3] तद्विशिष्टोपासनस्य उपदेशात्—न [4] परमात्माऽपि प्रतीयत इति न एकान्ततःपरमात्मत्वम्—श

'स एषोऽग्निर्वैश्वानरः यत् पुरुषः' (अग्निर. 10-5-6-11)

इति। न हि जाठरस्य केवलस्य पुरुषत्वम्; परमात्मन एव हि निरुपाधिकं पुरुषत्वम्। यथा—

'सहस्रशीर्षा पुरुषः' (तै.आर.पु. 3-12-1)

'पुरुष एवेदं सर्वम्' (तै.आर.पु. 3-12-2)

इत्यादौ ॥ २७ ॥

[अग्न्याख्यदेवतायाः, तृतीयभूतस्य तेजसश्च वैश्वानरशब्दावाच्यत्वम्]

## ६०. अत एव न देवता भूतं च ॥ १-२-२८ ॥

उक्तेभ्य एव हेतुभ्यः, देवतायाश्च, तृतीयस्य महाभूतस्याऽपि, न वैश्वानरत्वप्रसङ्गः ॥ २८ ॥

---

इत्यभिप्रायः। **पुरुषत्वम्**—पुरुषशब्दवाच्यत्वम्। **निरुपाधिकमिति**। जीवस्य 'पुरुष' शब्दवाच्यत्वं, 'द्वाविमौ पुरुषौ लोके' 'प्रधानपुरुषावेतौ' इत्यादिषु प्रधानादिपदान्तरसमभिव्याहाराक्षरत्वाद्युपाधिना आश्रीयते; न तु स्वतः। अतः 'पुरुष'शब्दवाच्यत्वं परमात्मन एव निरुपाधिकम्। अतः जाठरस्य पुरुषत्वं दूरतो निरस्तम्—इति भावः। **यथेत्यादिना**, 'स एषोऽग्निर्वैश्वानरः यत् पुरुषः' इति प्रसिद्धवन्निर्देशात्, तस्य च प्रापकप्रमाणसापेक्षत्वात्, परमात्मन एव निरुपाधिकपुरुषत्वविवक्षायां प्रमाणतः प्रसिद्धिं दर्शयति ॥२७॥

**अत एवेति**। जाठरप्रसिद्धिशङ्का पूर्वसूत्रे परिहृता। तद्व्यतिरिक्तार्थद्वयशङ्का अत्र परिह्रियते। देवता-भूततृतीययोः, जाठरवत् परिच्छिन्नत्वाभावात् त्रैलोक्यशरीरत्वोपपत्तिः। देवतायाः, अधिष्ठातृतयास्य त्रैलोक्यशरीरत्वम्। महाभूततृतीय च त्रिवृत्कृतस्य त्रैलोक्यरूपेण परिणतत्वात्, समुदितस्य द्यावापृथिव्यादयः मूर्धाद्यवयवाः स्युः। अतः त्रैलोक्यशरीरत्वकल्पनोपपत्तिरिति, असम्भवाक्षेपेण अधिकाशङ्का।

**उक्तेभ्य** इति। 'आत्म-ब्रह्म-पुरुष' शब्दनिर्देशासङ्कुचितफलावाप्ति-सर्वपापप्रदाहादयः सर्वे हेतवः, तयोः अनुपपन्नाः—इति परिहारः इत्यभिप्रायः (श्रु.प्र) ॥ २८ ॥

---

[सूत्रार्थः। **अत एव**—वैश्वानरस्य त्रैलोक्यशरीरत्वात्, (तथा) 'पुरुष'शब्दनिर्दिष्टत्वादेव च, **देवता**—अग्न्याख्या देवता, **भूतं च**—भूततृतीयं तेजश्च, **न**—'वैश्वानर'शब्दवाच्यं न भवितुमर्हति ॥]

लोकत्रयशरीरत्वात् पुरुषत्वेन कीर्तनात्।
वैश्वानरो नाग्निदेवो न च भूततृतीयकम् ॥ (ब्र.प.मा. ६०)।

[अग्निशब्दादेः अव्यवधानेन भगवद्वाचकता]

## ६१. साक्षादप्यविरोधं जैमिनिः ॥ १-२-२९ ॥

[सङ्गतिप्रदर्शनम्]

वैश्वानरसमानाधिकरणस्य 'अग्नि'शब्दस्य, जाठराग्निशरीरतया तद्विशिष्टस्य परमात्मनो वाचकत्वम्, तथैव परमात्मनः उपास्यत्वं चोक्तम् ।

जैमिनिस्त्वाचार्यः– 'वैश्वानर'शब्दवत्, 'अग्नि'शब्दस्याऽपि परमात्मन एव, साक्षात्—अव्यवधानेन, वाचकत्वे न कश्चिद्विरोधः—इति मन्यते ।

[शब्दानां परमात्मनि अव्यवहितवृत्तेरुपपादनम्]

एतदुक्तं भवति—यथा 'वैश्वानर'शब्दः साधारणोऽपि, परमात्मासाधारण-धर्म[1]विशेषितः[1], विश्वेषां नराणां नेतृत्वादिना गुणेन, परमात्मानमेवाभिदधाति,

---

सूत्रार्थस्य सङ्गतत्वाय वैश्वानरेति, पूर्वोक्तमनुवदति । 'तथा दृष्ट्युपदेशात्' इत्यनेन सङ्गतिः इत्यर्थः ।

वैश्वानरशब्दवत् इति । 'अग्नि'शब्दसमानाधिकरण 'वैश्वानर'शब्दस्य अवयव-शक्त्या परमात्मविषयत्वे, वाक्यान्तरेष्वपि एकप्रयोजकत्वाय अवयवशक्त्यैव वृत्तिरास्थेया इत्यभिप्रायेण, अव्यवधानेन वाचकत्वे, 'वैश्वानर'शब्दः दृष्टान्ततयोक्तः । साक्षात् इति, व्याख्येयं पदम् । साक्षाच्छब्दस्य विशदतरत्वेऽपि, प्रयोगात् तद्व्यावृत्त्यर्थम् अव्यवधानेनेति ।

एतदुक्तमिति । 'वैश्वानर'शब्दस्य अवयवशक्त्या, [केन गुणेन] वृत्तिः ? तद्वत्, 'अग्नि'शब्दः केन गुणयोगेन वर्तते ? तेन तस्य परमात्मनि अव्यवधानेन वृत्तिः कथम् ? इत्यत्र [उत्तरमिदम्] । नेतृत्वादिना इति आदिशब्देन, विश्वैर्नरैः नेयत्वं-प्राप्यत्वं

---

[सूत्रार्थः । साक्षादपि—अग्न्यादिशब्दानाम् अवयवशक्त्या अव्यवधानेनैव परमात्म-वाचकत्वेऽपि, अविरोधम्—अर्थविशेषवाचकतया निर्णीतस्य शब्दस्य तदितरार्थवाचकत्ववर्णना-धीनविरोधस्याऽप्रसङ्गम्, जैमिनिः—जैमिनिनामा आचार्यः मन्यते ॥]

वैश्वानरपदेनेवाग्निशब्देनाऽपि योगतः ।
बोधने चाऽविरोधं तु ब्रह्मणो जैमिनिर्जगौ ॥ (ब्र.प.मा ६१)

इति निश्चीयते ; एवम् 'अग्नि'शब्दोऽपि, अग्रनयना[2]दिना येनैव[2] गुणेन योगात्। ज्वलने वर्तते, तस्यैव गुणस्य निरुपाधिकस्य काष्ठागतस्य परमात्मनि सम्भवात्, अस्मिन् प्रकरणे परमात्मासाधारणधर्मविशेषितः, परमात्मानमेव अभिधत्ते— इति ॥ २९ ॥

[उत्तरसूत्रोपयोगिनी शङ्का]

'यस्त्वेतमेवं प्रादेशमात्रमभिविमानम्' (छां.उ. 5-18-1) इति, अपरिच्छिन्नस्य परस्य ब्रह्मणः, द्युप्रभृति[3]पृथिव्यन्तप्रदेश[3]सम्बन्धिन्या मात्रया परिच्छिन्नत्वं कथमुपपद्यते ? तत्राऽऽह—

## ६२. अभिव्यक्तेरित्याश्मरथ्यः ॥ १-२-३० ॥

[परमात्मनः प्रादेशमात्रतावर्णनफलम्]

उपासकाभिव्यक्त्यर्थं प्रादेशमात्रत्वं परमात्मनः इति, आश्मरथ्य-आचार्यो मन्यते । 'द्यौर्मूर्धा, आदित्यश्चक्षुः, वायुः प्राणः, आकाशो मध्यकायः, आपो वस्तिः,

---

विवक्षितम्। **अग्रनयनादिना** इति **आदि**शब्देन, अग्रत्वेन प्राप्यत्वं विवक्षितम् । **काष्ठागतस्येति**। 'अग्नि'शब्दावयवार्थस्य ब्रह्मणि पुष्कलत्वात्, 'ब्रह्म'शब्दरूढिः न त्याज्या । 'ब्रह्म'शब्दावयवार्थपौष्कल्यस्य अग्नौ असम्भवात्, 'अग्नि'शब्दरूढिरेव त्याज्या इति भावः । **परमात्मा.... विशेषित** इति । उपक्रमाद्यानुगुण्याच्च 'ब्रह्म'शब्दः प्रबलः ; 'अग्नि'शब्दस्तु तदनुगुणार्थो नेयः इति भावः (श्रु.प्र) ॥२९॥

**अभिव्यक्तेरिति** । परिच्छिन्नत्वं महाभूततृतीय-देवतयोरेव सम्भवतीति शङ्कापरिहारार्थमिदं सूत्रम् । **अभिव्यक्त्यर्थम्**—बुद्धिसौकर्याय । परिच्छिन्नत्वे हि बुद्धिसौकर्यं स्यात् ।

---

[सूत्रार्थः । (अपरिच्छिन्नस्याऽपि परमात्मनो वैश्वानरस्य प्रादेशप्रमाणपरिमितत्वोक्तिः) **अभिव्यक्तेः**—उपासकानां बुद्धिसौकर्यार्थम्, **इति**—ईदृशमर्थम्, **आश्मरथ्यः**—आश्मरथ्यनामा आचार्यः मन्यते ।]

द्युमूर्धत्वादिमात्राभिः परिच्छिन्नत्वमत्र तु ।
उपासकाभिव्यक्तेरित्याश्मरथ्यमुनेर्मतम् ।। (ब्र.प.मा.६२)

---

[1] विशेषितोऽपि—अ,इ,  [2] दिन्यायेनैव —थ  [3] पृथिव्यन्तावयवस्य प्रादेश—वा.

पृथिवी पादौ' इति, द्युप्रभृति[1]प्रदेश[1]सम्बन्धिन्या मात्रया परिच्छिन्नत्वं, [2]कृत्स्न[2]मभिव्याप्तवतः विगतमानस्य हि, अभिव्यक्तेरेव हेतोर्भवति ॥ ३० ॥

[ब्रह्मणः पुरुषविधत्ववर्णनफलम् ]

मूर्धप्रभृत्यवयवविशेषैः पुरुषविधत्वं, [3]परस्य ब्रह्मणः[3] किमर्थम्?—इति चेत्, तत्राऽऽह—

## ६३. अनुस्मृतेर्बादरिः ॥ १-२-३१ ॥

तथोपासनार्थम्, इति बादरिराचार्यो मन्यते ।

'यस्त्वेतमेवम्.... [4]अभिविमान[4]मात्मानं वैश्वानरमुपास्ते, स [5]सर्वेषु लोकेषु, सर्वेषु[5] भूतेषु, सर्वेष्वात्मस्वन्नमत्ति' (छां उ. 5-18-1)

इति, ब्रह्मप्राप्तये हि! उपासनमुपदिश्यते। एतमेवमिति—उक्तप्रकारेण पुरुषाकारम् इत्यर्थः। सर्वेषु लोकेषु, सर्वेषु भूतेषु, सर्वेष्वात्मसु वर्तमानं यदन्नं—भोग्यम्, तदत्ति—सर्वत्र वर्तमानं, स्वत एवानवधिकातिशयानन्दं ब्रह्मानुभवति ।

यत्तु—सर्वैः कर्मवश्यैरात्मभिः, प्रत्येकम् अनन्यसाधारणम् अन्नं भुज्यते—तत्, मुमुक्षुभिस्त्याज्यत्वात् इह न गृह्यते ॥ ३१ ॥

---

द्युप्रभृतिप्रदेशेत्यादिना, प्रदेशमात्रशब्दो व्याख्यातः । अभिविमानम् इत्यत्र अभिशब्दं व्याचष्टे, कृत्स्नमभिव्याप्तवतः इति । विगतमानस्य इति, विमानशब्दं व्याचष्टे ॥ ३० ॥

मूर्धेति । प्राकृतमूर्धादिद्रव्यावयवत्वम् अप्राकृतरूपस्य परमात्मनः न संभवति; अपि तु देवताया एव इत्यभिप्रायः ।

[किमर्थम्? इति प्रश्नस्योत्तरम्, तथोपासनार्थम् इति ।] अनुस्मृतिः—उपासनम् । उपासनार्थं पुरुषविधत्वम् इत्यर्थः। [मुमुक्षुभिस्त्याज्यत्वात्—मुमुक्षूणाम् उपासनादिना असम्पादनीयत्वात् । इह—मोक्षार्थोपासनप्रकरणे । न गृह्यते—उपासनफलतया न स्वीक्रियते ।] ॥ ३१ ॥

---

[सूत्रार्थः । ('द्यौर्मूर्धा' इत्यादिना, परमात्मनः पुरुषाकारतापरिकल्पनम्) अनुस्मृतेः—ब्रह्मप्राप्तिहेतुभूतोपासनसम्पत्त्यर्थम्, इति—ईदृशमर्थम्, बादरिः-बादरिनामा आचार्यो मन्यते ॥]

द्युलोकप्रभृतीनां तु मूर्धत्वादिप्रकल्पनम् ।
तथैवोपासनं वक्तुम् इति बादरिरब्रवीत् ॥ (ब्र.प.मा ६३)

---

[1] प्रादेश—थ [2] कृत्स्नमिद—न [3] परब्रह्मणः—ई, [4] प्रादेशमात्रमभिविमान—वा, [5] सर्वेषु—द

[उरःप्रभृतीनां वेद्यादिरूपताकल्पनप्रयोजनम्]

यदि परमात्मा वैश्वानरः, कथं तर्हि उरःप्रभृतीनां [1]वेद्यादित्वो[1]पदेशः? यावता जाठराग्निपरिग्रहे एव एतदुपपद्यते, इत्यत्राह —

## ६४. सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ १-२-३२ ॥

अस्य परमात्मन एव वैश्वानरस्य द्युप्रभृतिपृथिव्यन्तशरीरस्य, समाराधनभूतायाः, उपासकैः अहरहः क्रियमाणायाः प्राणाहुतेः, अग्निहोत्रत्वसंपादनाय, अयम् उरःप्रभृतीनां वेदित्वाद्युपदेशः—इति, जैमिनिराचार्यो मन्यते।

तथा हि—परमात्मोपासनोचितमेव फलं, प्राणाहुत्या अग्निहोत्रसम्पत्तिं च दर्शयति, [2]इयं श्रुतिः[2]—

'स य [3]इदमविद्वान[3]ग्निहोत्रं जुहोति, यथा अङ्गारनापोह्य भस्मनि जुहुयात्, तादृक् तत् स्यात्' (छां.उ. 5-24-1)

---

**यदीति**। परमात्मनः द्युप्रभृतिप्रदेशसम्बन्धिन्या मात्रया परिच्छिन्नत्वे, पुरुषविधत्वे च प्रयोजनमुखेन भूततृतीय-देवताव्युदासः कृतः। अथ जाठरशङ्काव्युदासकत्वं [प्रदर्श्यते]—**यावतेति**। प्रत्युतेत्यर्थः।

**सम्पत्तिः**—सम्पादनम्; अतस्मिन् तत्कल्पनम्। [**वेदिः**—यज्ञार्थं निर्मितः स्थण्डिलविशेषः।]

**परमात्मो....दर्शयति** इति। अग्निहोत्रसम्पत्तेः परमात्मसमाराधनार्थत्वम्, 'तस्य सर्वेषु लोकेषु' इत्याद्युक्तफलविशेष एव ज्ञापयतीति भावः। **इदमविद्वान्**—उरःप्रभृतीनामग्निहोत्रोपकरणतामजानन् यः। **अग्निहोत्रम्**—प्राणाहुतिम्। **जुहोति**—अनुतिष्ठति, इत्यर्थः।

---

[सूत्रार्थः। (वैश्वानरस्य परमात्मनः उपासकावयवे वेद्यादिपरिकल्पनम्) **सम्पत्तेः**—उपासककृतायाः प्राणाहुतेः अग्निहोत्ररूपतासम्पादनार्थम्, **इति**—एवमर्थम्, **जैमिनिः**—जैमिनिनामा आचार्यः मन्यते, **तथा हि**—अग्निहोत्रत्वसिद्धिरूपं तमेव प्रकारम्, **दर्शयति**—श्रुतिः विशदयति 'य एवं विद्वानग्निहोत्रं जुहोति' इति॥]

अग्निहोत्रत्वसम्पत्तेः प्राणाहुत्यास्तु जैमिनिः।
उरोवेदित्वादिक्लृप्तिमब्रवीदाह हि श्रुतिः॥ (ब्र.प.मा. ६४)

---

[1] वेदित्वाद्यु—थ  [2] श्रुतिरियम्—न  [3] इदं विद्वान—थ

'अथ य [1]एतदेवं[1] विद्वानग्निहोत्रं जुहोति, तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति' (छां.उ. 5-24-2)

'तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेत, एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' (छां.उ. 5-24-3)

इति ॥ ३२ ॥

[परमात्मनः द्युप्रभृतिशरीरकत्वोपपत्तिः]

## ६५. आमनन्ति चैनमस्मिन् ॥ १-२-३३ ॥

एनम्—परमपुरुषं द्युमूर्धत्वादिविशिष्टं वैश्वानरम्, अस्मिन्—उपासकशरीरे, प्राणाहुत्या[2]धारत्वाय[2], आमनन्ति च—

'तस्य ह वा एतस्याऽऽत्मनो वैश्वानरस्य मूर्धैव सुतेजाः' (छां.उ. 5-18-2) [3]इत्यादिना[3] । अयमर्थः—

'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' (छां.उ. 5-18-1) इति, त्रैलोक्यशरीरस्य परमात्मनो वैश्वानरस्य उपासनं विधाय,

---

**एतदेवं विद्वान्** इत्यत्रापि, एवमेवार्थः । **सर्वेष्वात्मसु हुतं भवतीति** । सर्वात्मकभगवदाराधनेन सर्वेनाराधितं भवतीति, हुतप्रकर्षोक्तिः । **तद्यथेषीकेति**, अस्याग्निहोत्रस्य परमात्माराधनत्वज्ञापनार्थं तदङ्गकपरोपासनफलं दर्शयति (श्र.प्र) ॥३२॥

**एनमि**त्यादि । अन्वादेशविषयो हि ['एनम्' इति] एनादेशः । अन्वादेशः—अन्वाख्यानम् । तस्मात् **एनम्** इति पदम्, उक्तधर्मोपेतम् उक्तधर्मिणं परामृशति इति भावः ।

---

[सूत्रार्थः । **एनम्**—द्युपृथिव्यादिशरीरं वैश्वानरं परमात्मानम्, **अस्मिन्**—उपासकसम्बन्धिनि शरीरे, **आमनन्ति च**—(उपासनवेलायामनुसन्धानेन प्राणाग्निहोत्रेण आराध्यत्वाय) तत्सदृशाकारवत्तया वदन्ति च श्रुतयः ।]

द्युमूर्धादीनवयवानुपासकतनौ तथा ।
ध्यात्वाऽऽहुत्याऽर्चनार्थं च वैश्वानरमिहामनत् ।। (ब्र.प.मा. ६५)

---

[1] एवं—द [2] धारताम्—द [3] इति—थ

'सर्वेषु लोकेषु' (छां.उ. 5-18-1)

इत्यादिना ब्रह्मप्राप्तिं च फलमुपदिश्य, अस्यैवोपासनस्य [1]अङ्गभूतं[1] प्राणाग्निहोत्रं,

'तस्य ह वा एतस्य' (छां.उ. 5-18-2)

इत्यादिना [2]उपदिशति[2]। यः पूर्वमुपास्यतया उपदिष्टो वैश्वानरः, [3]तस्य[3] अवयवभूतान् [4]अग्न्यादित्यादीन्[4] सुतेजो-विश्वरूपादिनामधेयान्, उपासकशरीरे मूर्धादि-पादान्तेषु [5]सम्पादयति[5]।

मूर्धैव सुतेजाः—उपासकस्य मूर्धैव, परमात्ममूर्धभूता द्यौः इत्यर्थः। चक्षुर्विश्वरूपः—आदित्य इत्यर्थः। प्राणः पृथग्वर्त्मा—वायुरित्यर्थः। सन्देहो बहुलः—उपासकस्य मध्यकाय एव परमात्ममध्यकाय[6]भूतः आकाशः[6] इत्यर्थः। वस्तिरेव रयिः—अस्य वस्तिरेव तदवयवभूताः आपः इत्यर्थः। [7]पृथिव्येव पादौ[7]—अस्य पादावेव तत्पादभूता पृथिवी इत्यर्थः।

एवम् उपासकः [8]स्वशरीरे[8] परमात्मानं त्रैलोक्यशरीरं वैश्वानरं संनिहितमनुसन्धाय, स्वकीयानि उरो-लोम-हृदय-मन-आस्यानि, प्राणाहुत्याधारस्य परमात्मनो वैश्वानरस्य, वेदिबर्हिर्गार्हपत्यान्वाहार्यपचनाहवनीयान्, अग्निहोत्रोपकरणभूतान् परिकल्प्य, प्राणाहुतेश्च अग्निहोत्रत्वं परिकल्प्य, एवंविधेन प्राणाग्निहोत्रेण, परमात्मानं वैश्वानरमाराधयेत्—इति,

'उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यः' (छां.उ. 5-18-2)

इत्यादिना उपदिश्यते।

---

उपासकशरीरे द्युमूर्धताद्यनुसन्धानं परमात्मनो द्युमूर्धत्वादेः न विरोधि; उभयस्याऽपि विहितत्वात्। अतः उपासकशरीर एव द्युमूर्धत्वाद्यवयवत्वम् इति अवधारणकल्पनमयुक्तम् इत्यर्थः (श्रु.प्र)।

ब्रह्म....दिश्येति। 'फलवत्सन्निधावफलं तदङ्गम्' (पू.मी.न्या 4-4-34) इति न्यायेन ब्रह्मप्राप्तिफलकत्वेनोक्तस्य वैश्वानरोपासनस्य प्राणाग्निहोत्रम् अङ्गम्, इत्यभिप्रायः।

[अस्य वस्तिरेव—उपासकस्य नाभ्यधोभागमलभूतं जलमेव] ॥३३॥

---

[1] आत्मभूतं—ई  [2] उपदिश्य—थ  [3] तस्यैव—द  [4] वाय्वादित्यादीन्—थ
[5] सम्पादयतीति—वा  [6] भूताकाशः—द  [7] पृथिव्येव—च,ठ  [8] स्वशरीरे एव—न

अतः—परमात्मा पुरुषोत्तम एव वैश्वानरः—इति सिद्धम् ॥ ३३ ॥

॥ इति वैश्वानराधिकरणम् ॥

॥ इति श्रीमद्भगवद्रामानुजविरचिते श्रीशारीरकमीमांसाभाष्ये प्रथमस्याऽध्यायस्य द्वितीयः पादः ॥

---

[सूत्राणि—१) वैश्वानरस्साधा २) स्मर्यमाण ३) शब्दादिभ्योऽन्तः
४) अत एव ५) साक्षादप्य ६) अभिव्यक्ते ७) अनुस्मृतेः
८) सम्पत्तेरिति ९) आमनन्ति च]

॥ इति वैश्वानराधिकरणम् ॥

## अधिकरणार्थसूचनी

### प्रथमाध्याये तृतीयः अन्ययोगव्यवच्छेदपादः

| क्र. सं | अधिकरणनामानि | सूत्रसंख्या | अधिकरणार्थाः |
|---|---|---|---|
| 1 | द्युभ्वाद्यधिकरणम् [अक्षरपरब्रह्मविद्या (मुण्ड उ. 1–2)] | 1–6 | द्यु-पृथिव्यादीनामायतनं, परमात्मैव ; न जीवः । |
| 2 | भूमाधिकरणम् [भूमविद्या (छां उ. 7)] | 7–8 | भूमशब्दवाच्योऽर्थः, सत्यशब्दनिर्दिष्टं परं ब्रह्मैव ; न जीवादिः । |
| 3 | अक्षराधिकरणम् [गार्ग्यक्षरविद्या (बृ.उ 5–8)] | 9–11 | अक्षरशब्दवाच्योऽर्थः, प्रधानस्याऽप्याधारतया निर्दिष्टः परमात्मैव । |
| 4 | ईक्षतिकर्माधिकरणम् [त्रिमात्रप्रणवपुरुषविद्या (प्रश्न.उ. 5)] | 12 | 'पुरुषमीक्षते' इत्युक्तेक्षणक्रियाकर्मभूतोऽर्थः, पुरुषशब्दवाच्यः परमात्मैव; न समष्टिपुरुषः । |
| 5 | दहराधिकरणम् [दहरविद्या (छां.उ. 8–1... 15) (तै.ना.उ. 10–23)] | 13–22 | दहराकाशशब्दवाच्योऽर्थः, परमात्मैव ; न भूताकाशः, नाऽपि प्रत्यगात्मा । |
| 6 | प्रमिताधिकरणम् *[अङ्गुष्ठप्रमितविद्या, नाचिकेतविद्या वा (कठ. सम्पूर्णम्)]* | 23–24 | अङ्गुष्ठप्रमाणपरिमितत्वेन श्रुत्युक्तोऽर्थः, *परमात्मैव ; न कर्मवश्यो जीवः ।* |
| 7 | देवताधिकरणम् [विद्यासामान्यसम्बन्धि] | 25–29 | श्रुत्युक्तब्रह्मोपासनाधिकारः, देवानामप्यस्त्येव । |
| 8 | मध्वधिकरणम् [मधुविद्या (छां उ. 3-1...10) ज्योतिषां ज्योतिर्विद्या वा (बृ.उ. 6–4–16....18)] | 30-32 | वस्वादिपदं प्राप्तानामपि, मधुविद्यादिषु अधिकारः अस्त्येव । |
| 9 | अपशूद्राधिकरणम् [संवर्गविद्या (छां.उ. 4-1,2,3)] | 33–39 | त्रैवर्णिकेतरेषां ब्रह्मविद्यासु अनधिकारः । |
| 10 | प्रमिताधिकरणशेषः | 40, 41 | |
| 11 | अर्थान्तरत्वादिव्यपदेशाधिकरणम् [दहरविद्याशेषः (छां.उ. 8–14)] | 42–44 | नामरूपनिर्वोढा आकाशः परमात्मा । |



श्रीः

श्रीशारीरकमीमांसाभाष्ये प्रथमे समन्वयाध्याये
अन्ययोगव्यवच्छेदत्रिपाद्यन्तर्गतः स्पष्टजीवादि-
लिङ्गकवेदान्तवाक्यविचारात्मकः

अधि. 1-10] **तृतीयः पादः** [सू. 1-44

[पादार्थः—ब्रह्मैव सर्वजगत्कारणम्]

१८. द्युभ्वाद्यधिकरणम् ॥ १-३-१ ॥ (सू. 1-6)

[अधिकरणार्थः—द्यु-पृथिव्यादीनाम् आयतनं परमात्मैव, न जीवः ।]

[अक्षरपरब्रह्मविद्या (मुण्ड.उ. 1,2)]

## ६६. द्युभ्वाद्यायतनं स्वशब्दात् ॥ १-३-१ ॥

[विषयवाक्यम्]

**आथर्वणिका अधीयते—**

**'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः ।**
**तमेवैकं जानथाऽऽत्मानमन्या वाचो विमुञ्चथ, अमृतस्यैष सेतुः॥'**

(मुण्ड.उ. 2-2-5)

**इति ॥**

**द्युभ्वादीति ।** एवम् [पूर्वम्] अस्पष्टजीवलिङ्गकानि वाक्यानि परमात्मपरत्वेन निर्णीतानि । अथ स्पष्टजीवलिङ्गकानि विचार्यन्ते—इति पादसङ्गतिः ।

पूर्वस्मिन् अधिकरणे, द्यु-पृथिव्यादिसम्बन्धिनः परमात्मत्वमुक्तम् । द्यु-पृथिव्यादि-सम्बन्धित्वं परमात्मव्यतिरिक्तस्य दृश्यते—इति शङ्कया, अनन्तराधिकरणसङ्गतिः । 'द्याद्यायतनम्' इत्येतावति वक्तव्येऽपि, ऊर्ध्वा अधराश्चेति कोटिद्वयान्तर्गताः लोकाः [इति] तत्प्रदर्शनार्थौ **द्यु-भूशब्दौ** (श्रु प्र) ।

---

[सूत्रार्थः । **द्युभ्वाद्यायतनम्**—'यस्मिन् द्यौः पृथिवी च' इत्यादिना द्युलोक-पृथिवी-लोकादीनामाधारतया श्रूयमाणं वस्तु, (परं ब्रह्मैव ; न जीवः), **स्वशब्दात्**—स्वा(पर-ब्रह्म)साधारणधर्मवाचकात् निरुपाधिकामृतत्वप्रापकत्वबोधकात् श्रुतिस्थात् शब्दात् ।]

**द्युभ्वाद्यायतनं ब्रह्म नाड्याधारं च तद्विदुः ।**
**स्वशब्दादमृतस्यैष सेतुरित्यादिकादिह ॥ (ब्र.प.मा. ६६)**

[अधिकरणाङ्गभूतः संशयः]

तत्र संशयः—किमयं द्यु-पृथिव्यादीनामायतनत्वेन श्रूयमाणः ; जीवः ? उत परमात्मा ?— इति ॥

[सयुक्तिकः पूर्वपक्षः]

किं युक्तम् ?

जीवः —इति ।

कुतः ?

'अरा इव रथनाभौ संहता यत्र नाड्यः।

स एषोऽन्तश्चरते बहुधा जायमानः' (मुण्ड उ. 2-2-6)

इति परस्मिन् श्लोके, [1]पूर्ववाक्य[1]प्रस्तुतं [2]द्यु-पृथिव्याद्यायतनं,[2] 'यत्र' इति, पुनरपि सप्तम्यन्तेन परामृश्य, तस्य नाड्याधारत्वमुक्त्वा, पुनरपि,

'स एषोऽन्तश्चरते बहुधा जायमानः' (मुण्ड.उ. 2-2-6)

इति, तस्य बहुधा जायमानत्वं च उच्यते। नाडीसम्बन्धः, देवादिरूपेण बहुधा जायमानत्वं च, जीवस्यैव धर्मः। अस्मिन्नपि श्लोके,

---

**तत्रेति** । किं द्यु-पृथिव्याद्यायतनं, जीवः ? उत परमात्मा ?—इति विचारः। तदर्थम्—'यस्मिन् द्यौः' इत्यादिवाक्यजातं, किम् अदृश्यत्वादिगुणकप्रकरणात् भिन्नम् ? उत अभिन्नम् ? तदर्थं—मनःप्राणादिसम्बन्धः, किम् उपकरणोपकरणित्वलक्षणः ? उत आधाराधेयभावलक्षणः ? तदर्थं—द्यु-पृथिव्याद्यायतनत्वामृतसेतुत्वादिधर्माः, किं कर्मफलात्तुः जीवस्य सम्भवन्ति ? उत अनश्नतः ?— इति ।

[पूर्वपक्षे—] यदा कर्मफलात्तुः [जीवस्य] सम्भवन्ति ; तदा मनआदिसम्बन्धस्य करण-तद्वत्तारूपतया, तस्य प्रकरणविच्छेदकत्वेन, द्युभ्वाद्यायतनं, जीवः स्यात् ।

[सिद्धान्ते—]यदा अमृतसेतुत्वादयः अनश्नतो धर्माः; तदा मनआदिसम्बन्धस्य आधारा-धेयभावरूपत्वेन परप्रकरणाविच्छेदात्, द्यु-पृथिव्याद्यायतनं परमात्मा—इति फलितं स्यात् ।

**नाडीसम्बन्ध** इति। नाडीनाम् इन्द्रियसम्बन्धित्वेन जीवस्य ज्ञानप्रसरहेतुत्वात्, 'ताभिः प्रत्यवसृप्य पुरीतति शेते' 'तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' इत्यादिश्रुतिभिः जीवस्य नाडीसंयोगप्रसिद्धेश्च, तत्सम्बन्धः जीवलिङ्गम् इति भावः। **देवादिरूपेण** इति, **बहुधाशब्दविवरणम्**। अन्तरादित्यविद्यायाम् अकर्मकृतस्वेच्छागृहीतदिव्यविग्रहयोगः

---

[1] पूर्ववाक्ये—थ　[2] द्युपृथिव्यायतनं—थ.

'ओतं मनस्सह प्राणैश्च सर्वैः' (मुण्ड.उ. 2-2-5)

इति, प्राणपञ्चकस्य मनसश्च आश्रयत्वमुच्यमानं, जीवधर्म एव। एवं जीवत्वे [1]निश्चिते सति[1], [2]द्यु-पृथिव्याद्यायतनत्वादिकं[2] यथाकथञ्चित् [3]सङ्गमयितव्यम्[3]—इति ॥

[सयुक्तिकः सिद्धान्तः]

एवं प्राप्ते, प्रचक्ष्महे—द्युभ्वाद्यायतनं स्वशब्दात्। द्यु-पृथिव्यादीनामायतनं, परं ब्रह्म।

कुतः?

स्वशब्दात् -परब्रह्मासाधारणशब्दात्।

'अमृतस्यैष सेतुः' (मुण्ड.उ. 2-2-5)

इति, परस्य ब्रह्मणः असाधारणश्शब्दः।

'तमेवं विद्वानमृत इह भवति,
नाऽन्यः पन्था अयनाय विद्यते' (तै.आर पु. 3-12-17)

इति, सर्वत्र उपनिषत्सु, स एव अमृतत्व[4]प्राप्तिहेतुः[4] श्रूयते। [5]सिनोतेश्च[5] बन्धनार्थत्वात्, सेतुः—अमृतस्य प्रापकः, इत्यर्थः। सेतुरिव वा सेतुः। नद्यादिषु सेतुर्हि कूलस्य प्रतिलम्भकः; संसारार्णवपारभूतस्य अमृतस्य, एष प्रतिलम्भक इत्यर्थः।

---

[परमात्मनः] समर्थितः; न तु देवादिसजातीयरूपैर्बहुधाजायमानत्वं 'बहुधा'शब्दार्थः इति, सूत्रकारेण निरूपितम्। अतः तस्य जीवत्वशङ्का युक्ता—इति भावः। **एवं जीवत्वे** इति। द्वयोरपि जीव-परयोर्लिङ्गप्रतिभासेन, विरोधात अन्यतरलिङ्गभङ्गे अवश्यं भाविनि, यल्लिङ्गस्य उत्तरश्लोकप्रतिपन्नलिङ्गद्वयानुगुण्यम्, तल्लिङ्गानुसारिणि अर्थनिर्णये कर्तव्ये सति इत्यर्थः। **यथाकथञ्चिदिति**। जीवस्य द्यु-पृथिव्याद्याधारत्वं स्वरूपेण वा, कर्मद्वारा वा, मुक्तावस्थायां विकसितेन ज्ञानेन वा सम्भवति इति भावः (श्रु प्र) ॥

**सिनोतेरित्यादि**। **सेतु**शब्दस्य सलिलनिरोधके प्रसिद्धत्वेन, ['अमृतस्य सेतुः' इत्युक्ते] अमृतस्य निरोधकत्वप्रसङ्गेन रूढार्थानुपपत्तौ सत्याम्, अस्वारस्यसाम्यात् उभयथा [व्याख्यातम्] **सिनोतेः** इति, **सेतुरिव** वा इति च। प्रथमनिर्वाहे रूढिपरित्यागात् अस्वारस्यम्। द्वितीये तु अगत्या रूढार्थगतगुणयोगपरत्वात् अस्वारस्यम्। **संसारेति,** गुणयोगफलितमर्थमाह। श्येनसादृश्यात् यागे 'श्येन'शब्दवत्, सेतुसादृश्यात् परमात्मनि 'सेतु'शब्दः। विहङ्ग-यागयोर्हि निपत्याऽऽदानं साम्यम्।

---

[1] निश्चिते—थ [2] द्युपृथिव्यायतनत्वादिकं—थ [3] सङ्गमनीयम्—इ [4] प्राप्तिहेतुश्च—न
[5] सिनोतेः—द

'आत्म'शब्दश्च निरुपाधिकः, [1]परस्मिन् ब्रह्मणि[1] मुख्यवृत्तः। आप्नोति [2]इति हि[2] आत्मा। स्वेतरसमस्तस्य नियन्तृत्वेन व्याप्तिः, तस्यैव सम्भवति। अतः सोऽपि तस्यैव शब्दः।

'यस्सर्वज्ञःसर्ववित्' (मुण्ड उ 2-2-7)

इत्यादयश्च उपरितनाः, परस्यैव ब्रह्मणः शब्दाः।

नाड्याधारत्वं तस्याऽपि सम्भवति ;

'सन्ततं सिराभिस्तु लम्बत्याकोशसन्निभम्' (तै.ना.उ. 11-8)

इत्यारभ्य,

'तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः' (तै.ना.उ. 11-8)

इति [3]श्रवणात्[3]॥

[स्वाधीनः परमात्मनोऽवतारः]

'बहुधा जायमानः' (मुण्ड.उ. 2-2-6)

इत्यपि, परस्मिन् ब्रह्मणि सङ्गच्छते ;

'अजायमानो बहुधा विजायते, तस्य धीराः परिजानन्ति योनिम्'

(तै.आर.पु. 3-13-3)

इति, देवादीनां समाश्रयणीयत्वाय, तत्तज्जातीयरूप-संस्थान-[4]गुण-कर्म[4]-समन्वितः, स्वकीयं स्वभावम् अजहदेव, स्वेच्छया बहुधा [5]विजायते[5] [6]परः पुरुषः[6]—इत्यभिधानात्। स्मृतिरपि—

---

**आत्मशब्दश्च** इति, 'अन्तः प्रविष्टःशास्ता जनानां सर्वात्मा' इति श्रुत्यनुसारेण 'आत्म'शब्दः न व्याप्तृमात्रवाची ; किन्तु व्याप्तृविशेषवाची ; योगरूढत्वात्। न हि गगनादिषु 'आत्म'शब्दप्रयोगः। अतः नियन्तृरूपव्याप्तृविशेषवाची इत्यर्थः। 'अमृतस्यैष सेतुः' 'आत्मानम्' 'यः सर्वज्ञः सर्ववित्' इत्यादयः स्वशब्दा इत्यर्थः।

**नाड्याधारत्वमिति**। नाड्याधारत्वं हृदयद्वारा परमात्मनः सम्भवतीत्यर्थः। [अनेन] परोक्तहेतुनिर्वाहमाह (श्रु.प्र)॥

**अजायमान** इति। जन्मनो हेतुविशेषः फलविशेषश्चेति भावः। **स्मृतिरपीति,** तद्वैशद्यायाह। [**देवादीनामिति,** भगवदवतारप्रयोजनम्। **तत्तज्जातीयेति,** समाश्रयणसौलभ्योपपादनम्। **स्वकीयमिति,** आश्रयणशालिनामभिमतसिद्धिः। **स्वेच्छया**—

---

[1] परब्रह्मणि—इ  [2] इति—थ.  [3] वचनात्—इ  [4] गुणधर्म—वा, गुणकधर्म—थ
[5] जायते—द  [6] परमपुरुषः—थ

'अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।

प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ।।' (भ.गी. 4-6)

इति ।

मनःप्रभृतिजीवोपकरणाधारत्वं च, सर्वाधारस्य परस्यैव उपपद्यते ।।१।।

[मुक्तप्राप्यत्वं परमात्मत्वे लिङ्गम् ]

इतश्च परमपुरुषः—

## ६७. मुक्तोपसृप्यव्यपदेशाच्च ।। १-३-२ ।।

अयं द्यु-पृथिव्याद्यायतनभूतः पुरुषः, संसारबन्धान्मुक्तैरपि प्राप्यतया व्यपदिश्यते —

'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।

तदा विद्वान् पुण्य-पापे विधूय निरञ्जनः परमं साम्यमुपैति।।' (मुण्ड.उ. 3-1-3)

'यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नाम रूपे विहाय ।

तथा विद्वान् नाम-रूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्।।' (मुण्ड.उ 3-2-8)

इति। संसारबन्धनाद्विमुक्ता एव हि! विधूतपुण्य-पापाः, निरञ्जनाः नाम-रूपाभ्यां [1]विनिर्मुक्ताश्च[1] । पुण्य-पापनिबन्धनाचित्संसर्गप्रयुक्तनाम-रूपभाक्त्वमेव हि! संसारः ।

स्वसङ्कल्पेन। अनेन अकर्मवश्यता । **विजायते**—आविर्भवति । **स्वां प्रकृतिम्**—स्वकीयं स्वभावम्, **अधिष्ठाय**—आश्रित्य । अवतारोपादानभूतं दिव्यं विग्रहं स्वीकृत्येति यावत् । **आत्ममायया**—आत्मीयेन ज्ञानेन, आत्मसङ्कल्पेनेत्यर्थः । **सम्भवामि** —अवतरामि ।]

['यदा पश्यः' 'यथा नद्यः' इति] श्रुतिवाक्यद्वयोपादानम्, नामरूपप्रहाणमात्रं प्रलयदशायामप्यस्तीति, तद्व्यावृत्त्यर्थं नाम-रूपप्रहाणस्य विधूतपुण्य-पापत्वपूर्वकत्वं दर्शयितुम् । उपात्तश्रुतिवाक्ये 'बन्धान्मुक्तः' इति शब्दस्याश्रुतत्वात्, मुक्तिप्रतिपादनं दर्शयति **संसार-बन्धनादिति** । वाक्यद्वयोक्तविशेषणानि आह **विधूतेति** ।

[सूत्रार्थः । (द्यु-पृथिव्याद्याधारतयोक्तोऽर्थः, परमात्मैव) **मुक्तानाम्**—संसारनिगलात् विमोकं प्राप्तानां चेतनानाम्, **उपसृप्यव्यपदेशाच्च**—प्राप्यत्वस्य 'विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इति श्रुतौ स्फुटतया कथनादपि ।]

प्रक्रमेऽस्मिन् यदा पश्यो रुक्मवर्णं च पश्यति ।
साम्यं परं तदैतीति श्रुतेर्ब्रह्म द्युभूधरम् ।। (ब्र.प.मा. ६७)

[1] विमुक्ताश्च—इ

अतः विधूतपुण्य-पापैः निरञ्जनैः—प्रकृतिसंसर्गरहितैः परेण ब्रह्मणा [1]परमं साम्यमापन्नैः[1], प्राप्यतया निर्दिष्टः द्यु-पृथिव्याद्यायतनभूतः पुरुषः, परं ब्रह्म ॥२॥

[प्रकरणे जीवासाधारणशब्दाभावोऽपि ज्ञापकः]

[2]परब्रह्मासाधारण[2]शब्दादिभिः, 'परमेव ब्रह्म' इति [3]प्रसाध्य[3], '[4]प्रत्यगात्मा[4]-साधारणशब्दाभावाच्च अयं पर एव' इत्याह—

## ६८. नानुमानमतच्छब्दात्प्राणभृच्च ॥ १-३-३ ॥

यथा अस्मिन् प्रकरणे [5]प्रतिपादक[5]शब्दाभावात्, प्रधानं न प्रतिपाद्यम्; एवं प्राणभृदपि इत्यर्थः। अनुमीयत इति अनुमानम्; परोक्षं प्रधानमुच्यते। अनुमानप्रमितत्वात् आनुमानम् इति वा। अतच्छब्दात्—तद्वाचिशब्दाभावात्, इत्यर्थः।

---

**प्रकृतिसंसर्गरहितैः** इति पदम्, **निरञ्जन**शब्दव्याख्यानम्। **परमं साम्यमिति।** येन गुणेन [परमात्मना साकं] साम्यं, तस्य अपरिच्छिन्नत्वम्—परमसाम्यम्, न तु सर्वथा साम्यम् (श्रु.प्र) ॥२॥

**परब्रह्मेति।** पूर्वमन्वयः उक्तः; अथ तद्दार्ढ्याय व्यतिरेक उच्यते इत्यर्थः।

**यथेति।** मुक्तोपसृप्यत्वे अभिहिते, 'प्रधान'शङ्कानुदयेन तस्य व्युदसनीयत्वाभावात्, तदुपन्यासः दृष्टान्ततया इति भावः। **'अनुमीयत इति'** इति प्रधानोपस्थापकं व्याख्येयं पदं व्याचष्टे। 'कृत्यल्युटो बहुलम्' (पा.सू. 3-3-113) इति बहुलग्रहणात्, 'कर्मणि ल्युट्' इति भावः। **आनुमानम्** इति रूपम्, [अनुमानशब्दात्] 'शेषे' (पा.सू. 4-2-92) इति 'अण्'प्रत्यये, आदिवृद्धौ च सत्यां भवति। **तद्वाचीति,** 'अतच्छब्दात्' [इत्यतः] तद्व्यतिरिक्तवाचिशब्दात्, इति प्रतीतिशङ्कानिवृत्त्यर्थम्।

---

[सूत्रार्थः। **आनुमानम्**—अनुमानगम्यं प्रधानम्, **अतच्छब्दात्**—तद्वाचकशब्दाभावात्, **न**—यथा द्यु-पृथिव्याद्याधारतया अत्र न ग्राह्यं तथा, **प्राणभृच्च**—जीवोऽपि, **अतच्छब्दात्**—तदसाधारणवाचकशब्दाभावात्, **न**—द्यु-पृथिव्याद्याधारतया न ग्राह्यः।]

प्रधानवच्च जीवोऽपि द्युभ्वाद्यायतनं न हि।
तद्वाचकानां शब्दानामभावादिति सिद्ध्यति ॥ (ब्र.प.मा. ६८)

---

[1] परमसाम्यमापन्नैः—थ. [2] एवं परब्रह्मासाधारण—इ [3] प्रतिपाद्य—इ
[4] एवं प्रत्यगात्मा—इ [5] प्रधानप्रतिपादक—अ, इ, वा.

'अर्थाभावे [1]यदव्ययम्[1]' इति अव्ययीभावः ॥३॥

[श्रुतौ जीवभेदज्ञापकः शब्दः, परमात्मत्वे लिङ्गम् ]

इतश्च अयं न प्रत्यगात्मा—

## ६९. [2]भेदव्यपदेशात्[2] ॥ १–३–४ ॥

'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥' (श्वे.उ. 4–7)

इत्यादिभिः, जीवाद्विलक्षणत्वेन अयं व्यपदिश्यते । अनीशया—भोग्यभूतया प्रकृत्या,

---

'अर्थाभावे' इति न सूत्रोपादानम्; अपि तु अर्थोपादानम्; सूत्रस्य द्राघीयस्त्वात् । [अव्ययं विभक्ति-समीप-समृद्धि-व्यृद्ध्यर्थाभावात्ययासम्प्रति-शब्दप्रादुर्भाव-पश्चाद्यथानुपूर्व्ययौगपद्य-सादृश्य-सम्पत्ति-साकल्यान्तवचनेषु (पा.सू. 2-1-6) इति पूर्णं सूत्रम् । तच्छब्दस्य अभावः अतच्छब्दम् इति, अर्थाभावे बोद्धव्ये विहितः, अस्वपदविग्रहोऽव्ययीभाव इत्यर्थः ।]

**इतश्चेति ।** प्राणभृत्प्रतिषेधकसूत्रानन्तर्यात्, तदनन्तरसूत्रस्यापि प्राणभृत्प्रतिक्षेपः साध्यः इत्यर्थः । **अयंशब्दः** द्युभ्वाद्यायतनात्मविषयः । [सूत्रगत]**भेदव्यपदेश**शब्देन 'समाने वृक्षे' इति मन्त्रे 'अन्य'शब्दार्थः विवक्षितः ।

**अनीशया** इति, स्त्रीलिङ्गसामर्थ्यात्, प्रकृतेः विशेष्यत्वमुक्तम् । **स्वस्मात्** इति, 'अन्य'शब्दसामर्थ्यलब्धं प्रतियोगिनं निर्दिशति । **सर्वस्य** इति, 'ईश'शब्दसामर्थ्यप्राप्तम् ईशितव्यं मानान्तरानुरोधेनाह । **प्रीयमाणम्** इति, 'जुष्ट'शब्दं व्याचष्टे । 'आदिकर्मणि क्तः' (पा.सू. 3-4-71) इति भावः । **महिमानं चेति ।** समुच्चेतव्यसामर्थ्यप्राप्तः **च**शब्दः इति भावः । **नियमनरूपमिति ।** [श्रुतौ] **'इति'**शब्दः बुद्धिस्थप्रकारपरः । **ईश**शब्द-श्रवणात्, नियमनरूपप्रकारः बुद्धिस्थः इति भावः । **तदा** इति, यत्तदोर्नित्यसम्बन्धात् ।

---

[सूत्रार्थः । **भेदस्य**—जीवाद्भेदस्य, **व्यपदेशात्**—'अन्यमीशम्' इति श्रुत्या स्पष्टं प्रतिपादनाद्धेतोः, (अयं द्यु पृथिव्यादीनामाधारभूतः परमात्मैव ; न जीवः) ।]

यदा पश्यत्यन्यमीशमिति श्रुत्या तयोरिह ।
भेदेन व्यपदेशाच्च न जीवस्सर्वधारकः ॥ (ब्र.प.मा. ६९)

---

[1] अव्ययम्—द  [2] भेदव्यपदेशाच्च—थ

मुह्यमानः, [1]शोचति जीवः[1]; अयं यदा स्वस्मादन्यं, सर्वस्येशं, प्रीयमाणम्, अस्य--ईश्वरस्य, महिमानं च—निखिलजगन्नियमनरूपं पश्यति; तदा वीतशोको भवति ॥४॥

## ७०. प्रकरणात् ॥ १–३–५ ॥

प्रकरणं चेदं परस्य ब्रह्मणः—इति,

'अदृश्यत्वादिगुणको धर्मोक्तेः'- (ब्र.सू. 1–2–22)

इत्यत्रैव [2]प्रदर्शितम्[2]। [3]नाडीसम्बन्ध[3]-बहुधाजायमानत्व-मनःप्राणाधारत्वैश्च [4]प्रकरण[4]-विच्छेदाशङ्का[5]मात्रम् अत्र[5] पर्यहार्ष्म ॥५॥

---

द्रष्टृत्वसमानाधिकरणं मुह्यमानत्वादिकं, दृश्यत्वसमानाधिकरणं जुष्टत्वादिकम्, अन्यत्वं च व्यपदिशन्ती इयं श्रुतिः, 'तमेवैकं जानथ' इति ज्ञेयतया निर्दिष्टं द्युभ्वाद्यायतनम् आत्मानम्, 'अन्य'शब्दवाच्यत्वेन प्रत्यभिज्ञापयन्ती तस्य जीवत्वं वारयतीति वाक्यार्थः।

**प्रकरणादिति।** भाष्ये अस्य सूत्रस्य साध्यनिर्देशाभावः, प्रकरणाख्यस्य हेतोः प्राणभृत्प्रतिक्षेपे परमात्मसाधने च सामर्थ्यात्, पूर्वत्रोत्तरत्र च अन्वयो भविष्यति इत्यभिप्राय-निबन्धनः। उत्तरसूत्रव्याख्याने हि उभयमपि साध्यत्वेन निर्दिश्यते।

**प्रदर्शितमिति।** अदृश्यत्वादीत्यस्मिन् अधिकरणे (ब्र.सू.अ. 1–2–5) 'विशेषण-भेदव्यपदेशाभ्याम्' (ब्र.सू. 1–2–23) इति सूत्रव्याख्यानावसरे, **तथा हि** इत्यादिना **उपसंहृतम्** इत्यन्तेन भाष्येण, प्रकरणस्य परब्रह्मपरत्वं प्रतिपादितम् इत्यर्थः। **नाडीति।** प्रकरणस्य, लिङ्गेन बाधः परिहृतः इत्यर्थः। 'नाड्याधारत्वं तस्यापि सम्भवति' इत्यादिना भाष्येण, अस्याधिकरणस्य लिङ्गबाधपरिहारपरत्वं हि दर्शितम् ॥५॥

---

[सूत्रार्थः। **प्रकरणात्**—'अथ परा' इत्यादिना परमात्मन एव प्रकृतत्वाद्धेतोः, **द्युभ्वाद्यायतनम्**—द्यु-पृथिव्याद्याधारतया श्रुत्युक्तः, (परमात्मैव; न अप्रकृतः इतरः)।]

**अथ परा ययेत्यादिब्रह्मप्रकरणात् ततः।**
**द्युभ्वाद्यायतनं ब्रह्म निश्चेयं नेतराविह॥ (ब्र.प.मा. ७०)**

---

[1] शोचति—दि. [2] प्रतिपादितम्—वा, दर्शितम्—न [3] नाडीसम्बन्धात्—थ, द
[4] परप्रकरण—इ [5] मात्रं—थ.

## ७१. स्थित्यदनाभ्यां च ।। १–३–६ ।।

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ।।' (श्वे.उ. 4–6)

इति [1]एकस्य[1] कर्मफलादनम्, [2]अन्यस्य च[2] कर्मफलमनश्नत एव दीप्यमानतया शरीरान्तःस्थितिमात्रं प्रतिपाद्यते। तत्र कर्मफलमनश्नन् दीप्यमान एव सर्वज्ञः, [3]अमृतसेतुः[3], सर्वात्मा द्युभ्वाद्यायतनं भवितुमर्हति ; न पुनःकर्मफलमदन्, शोचन् प्रत्यगात्मा। अतः द्युभ्वाद्यायतनं परमात्मा—इति सिद्धम् ।।६।।

।। इति द्युभ्वाद्यधिकरणम् ।।१।।

---

**स्थित्यदनाभ्यां च** इति, अनुक्तं प्रधानभूतं हेतुमाह। [अदनं च स्थितिश्च इति विग्रहे] 'स्थिति'शब्दस्य पूर्वनिपातः, 'अल्पाच्तरम्' (पा.सू. 2–2–34) इति, 'अभ्यर्हितं पूर्वं प्रयोक्तव्यम्' (पा.सू.वा. 2–2–34) इति वा । स्थितेः अभ्यर्हितत्वम्, परमात्मप्रत्यभिज्ञापनेन प्रकरणाविच्छेदहेतुत्वात् । भाष्ये श्रुतिक्रमेण व्याख्यातम् ; न पुनः सूत्रक्रमेण ।

**सर्वज्ञ** इति। 'सर्वज्ञः' 'अमृतसेतुः' इत्यादिविशेषणानि प्राकरणिकतयोक्तानि । उभयोः प्रस्तुतत्वेऽपि सार्वज्ञ्यादिसमानाश्रयत्वात्, स्वयं योग्यत्वात्, मनःप्राणसम्बन्धादेः परमात्मनि अमुख्यत्वाभावाच्च द्युभ्वाद्यायतनत्वं परमात्मधर्मः इत्यर्थः। **'अनश्नन्' 'अदन्'** इति सौत्रहेत्वनुवादः । **शोचन्** इति, 'भेदव्यपदेशात्' इति सौत्रहेतोः इहान्वयोऽभिप्रेतः । 'शोचति मुह्यमानः' इति हि तद्विषयवाक्यम्। तदपि प्रत्यगात्मपरत्वप्रतिक्षेपद्वारा परमात्मपरत्वसाधकम् ; व्यतिरेकस्य अन्वयशेषत्वात् इति भावः (श्रु.प्र) ।।६।।

[सूत्राणि—१. द्युभ्वाद्या २. मुक्तोप ३. नाऽनुमान
४. भेदव्यप ५. प्रकरणात् ६. स्थित्य]

।। इति द्युभ्वाद्यधिकरणम् ।।१।।

---

[सूत्रार्थः। **स्थितेः**—'अनश्नन्नन्यः' इति कर्मफलभोगराहित्येन दीप्यमानतया स्थितेः, **अदना(भ्यां)त्** च—'स्वाद्वत्ति' इति कर्मपारवश्येन तत्फलास्वादनाच्च मिथोभेदकात् श्रुत्युक्तात्, (अयं द्यु-पृथिव्याद्याधारः अमृतत्वलम्भकश्च परमात्मैव ; न जीवः) ।]

**एकत्रैव तनौ तिष्ठन् अन्योऽनश्नन् फलं स्वराट् ।**
**अश्नन् जीवो मुह्यतीति तत्राऽभोक्ता परः पुमान् ।। (ब्र.प.मा. ७१)**

---

[1] **एकस्य च—द** [2] **अन्यस्य—इ, क, ग, घ, ञ, वा.** [3] **अमृतस्यैष सेतुः—थ.**

१९. **भूमाधिकरणम्** ।। १-३-२ ।। (सू. 7, 8)

[अधिकरणार्थः —'भूम'शब्दवाच्यं, सत्यशब्दनिर्दिष्टं परं ब्रह्मैव ; न जीवादिः ।]

[भूमविद्या (छां.उ. 7-1)]

## ७२. भूमा सम्प्रसादादध्युपदेशात् ।। १-३-७ ।।

[विषयवाक्यनिर्देशः]

[1]इदमामनन्ति च्छन्दोगाः[1]—

'यत्र नाऽन्यत्पश्यति, नाऽन्यच्छृणोति, नाऽन्यद्विजानाति, स भूमा ।

अथ यत्राऽन्यत्पश्यति, अन्यच्छृणोति अन्यद्विजानाति तदल्पम् ।।'

(छां.उ. 7-24-1)

इति ।।

[अत्र भूमशब्दार्थनिर्वचनम् )

[2]अत्र[2] अयं 'भूम'शब्दः भावप्रत्ययान्तो व्युत्पाद्यते । तथा हि—पृथ्व्यादिषु 'बहु'शब्दः पठ्यते । ततः,

---

**भूमेति** । परमात्मप्रकरणाविच्छेदेन परमात्मपरत्वं साधितम् ; तर्हि जीवप्रकरणाविच्छेदेन जीवपरत्वम्—इति शङ्कोत्थानात् सङ्गतिः। इयं प्रमाणद्वारिका । पूर्वम्, 'ओतं मनः सह प्राणैश्च सर्वैः' इति प्राणसम्बन्धिनः परमात्मत्वमुक्तम् । अत्र प्राणसम्बन्धिन एव हिंसायोग्यत्वश्रवणात् जीवत्वं प्रतीयते इति अर्थद्वारा च सङ्गतिः ।।

**अत्राऽयं भूमेति,** विशेषविषयसंशयसम्भवप्रदर्शनाय 'भूम'शब्दव्युत्पत्तिप्रकारमनुसरन् विचारविषयसंशयसिद्धिं दर्शयति । **तथा हीति,** भावप्रत्ययान्तत्वमुपपादयति । **पठ्यते** इति,

---

[सूत्रार्थः । **भूमा**—बहुत्त्व(महत्त्व)गुणविशिष्टः निरतिशयवैपुल्यविशिष्टसुखस्वरूपः अर्थः (परमात्मैव ; न जीवः) **सम्प्रसादादधि**—जीवात्मापेक्षया अधिकतया, **उपदेशात्**—'एष तु वा अतिवदति, यस्सत्येनातिवदति' इति श्रुत्या (सत्यरूपपरमात्मातिवादिनः प्राणसंज्ञकजीवातिवाद्यपेक्षया आधिक्यस्य) ज्ञापनात् ।]

जीवादूर्ध्वं चोपदेशात् भूमाऽत्र परमः पुमान् ।
सनत्कुमारगुरुणा नारदाय विशेषतः ।। (ब्र.प.मा. ७२)

---

[1] इदमाम्नायते छान्दोग्ये – इ, द [2] तत्र—वा

पृथ्वादिभ्य इमनिज्वा' (पा.सू. 5-1-122)
इति 'इमनिच्' प्रत्यये कृते,

'बहोर्लोपो भू च बहोः' (पा.सू. 6-4-158)
इति प्रकृति-प्रत्यययोः विकारे, '[1]भूमा' इति[1] भवति। भूमा—बहुत्वमित्यर्थः।

[2]अत्र च[2], अयं 'बहु'शब्दः वैपुल्यवाची, न सङ्ख्यावाची;

'यत्राऽन्यत्पश्यति.........तदल्पम्' (छां.उ. 7-24-1)
इति अल्पप्रतियोगित्वश्रवणात्! [3]'अल्प'शब्द[3]निर्दिष्टधर्मिप्रतियोगिप्रतिपादनपरत्वादेव, [4]धर्मिपरश्च[4] निश्चीयते; न धर्ममात्रपरः। तदेवं, भूमेति विपुल इत्यर्थः। [5]वैपुल्यविशेष्यश्च[5] इह, आत्मा इत्यवगतः;

'तरति शोकमात्मवित्' (छां.उ. 7-1-3)
इति प्रक्रम्य भूमविज्ञानम् उपदिश्य,

'आत्मैवेदं सर्वम्' (छां.उ. 7-25-2)
इति तस्यैव उपसंहारात्॥

[अधिकरणाङ्गभूतः संशयः]

अत्र संशय्यते—किमयं भूमगुणविशिष्टः प्रत्यगात्मा? उत परमात्मा?—इति॥

---

आकृतिगणत्वव्यावृत्त्यर्थम्। **विकारे** इति। 'बहु'शब्दात्परस्य प्रत्ययस्य आदेरचो लोपः, 'आदेः परस्य' (पा.सू. 1-1-54) इति सूत्रवशात्। 'बहु'शब्दस्य 'भू'शब्दादेशश्च, इत्येवं प्रकृति-प्रत्यययोर्विकारः।

**अत्र चायामिति**। 'बहु'शब्दस्य 'बहवः पुरुषाः' इत्यादौ सङ्ख्यायाम्, 'अल्पं वा बहु वा' इत्यादौ वैपुल्ये च प्रयोगो दृश्यते। तस्मात् सङ्ख्याव्यावृत्त्यर्थम् [अयं ग्रन्थः] (श्रु.प्र)। **तदेवमिति**। 'बहु'शब्दस्य सङ्ख्या-विपुलत्वयोः प्रयोगदर्शनात्, 'अल्प'शब्दस्य सङ्ख्यायां प्रयोगादर्शनाच्च अनन्यथासिद्धाल्पशब्दानुगुणार्थः 'बहु'शब्द इति [भावः]। **प्रक्रम्य....उपसंहारादिति**। उपक्रमोपसंहारयोः 'आत्म'शब्ददर्शनात् इत्यर्थः॥

**अत्र संशय्यते** इति। [इमे विचारोपयोगिनः संशयाः]—१. किं भूमा, प्रत्यगात्मा? उत परमात्मा? २. प्राणशब्दनिर्दिष्टे प्रत्यगात्मनि प्रश्न-प्रतिवचनसमाप्त्या 'भूम'शब्दः तत्र पर्यवसितः? उत अतिरिक्तविषयः? ३. किम् 'एष तु वा अतिवदति, यः सत्येनाति

---

[1] भूमा—द  [2] अत्र—थ  [3] अन्यशब्द—न  [4] धर्मिपरत्वं—थ
[5] वैपुल्यविशिष्टश्च—इ

[सयुक्तिकः पूर्वः पक्षः]

किं युक्तम्?

प्रत्यगात्मा — इति।

कुतः?

'श्रुतं ह्येव मे भगवद्दृशेभ्यः, तरति शोकमात्मवित्' (छां.उ. 7-1-3)

इति आत्मजिज्ञासया उपसेदुषे नारदाय, नामादिप्राणपर्यन्तेषु उपास्यतया उपदिष्टेषु,

'अस्ति भगवो नाम्नो भूयः' (छां.उ. 7-1-5)

'अस्ति भगवो वाचो भूयः' (छां.उ. 7-2-2)

इत्यादयः प्रश्नाः,

'वाग्वाव नाम्नो भूयसी' (छां.उ. 7-2-1)

'मनो वाव वाचो भूयः' (छां.उ. 7-3-1)

इत्यादीनि च प्रतिवचनानि, प्राणात् प्राचीनेषु दृश्यन्ते; प्राणे तु न पश्यामः। अतः—प्राणपर्यन्त एवायम् आत्मोपदेशः—इति प्रतीयते। तेन इह 'प्राण'-शब्दनिर्दिष्टः, प्राणसहचारी प्रत्यगात्मैव; न वायुविशेषमात्रम्।

---

वदति' इति प्राणातिवादिनः अङ्गतया सत्यवचनं विधत्ते? उत 'सत्य'शब्दवाच्यपरोपासकस्य अतिवादित्वं वदति? ४. किम् अस्मिन् वाक्ये प्राणातिवादिनः प्रत्यभिज्ञा अस्ति? न? ५. 'तु'शब्दः किं प्रतिज्ञाविरोधी? न?— इति।

पूर्वः पक्षः—यदा 'तु'शब्दः प्रत्यभिज्ञाविरोधी न भवति; तदा प्राणातिवादिनः प्रत्यभिज्ञासम्भवात्, 'एष तु वा' इति वाक्यं तदङ्गभूतसत्यवचनविधिपरमिति, प्राणातिरिक्तवस्त्वभावात्, 'भूम'शब्दः प्राणे पर्यवसित इति, भूमा प्रत्यगात्मा—इति।

राद्धान्तः—यदा 'तु'शब्दः प्रत्यभिज्ञाविरोधी भवति; तदा प्राणातिवादिनः प्रत्यभिज्ञानाभावेन, 'सत्येनातिवदति' इति वाक्यस्य सत्योपासकातिवदनपरत्वेन प्राणातिरिक्तवस्तुसद्भावेन, प्रश्न-प्रतिवचनसमाप्तावपि 'भूम' शब्दस्य प्राणपर्यवसितत्वभावात्, भूमा परमात्मा—इति (श्रु.प्र)॥

**[नामादीति।** नाम, वाक्, मनः, सङ्कल्पः, चित्तम्, ध्यानम् विज्ञानम् बलम्, अन्नम्, आपः, तेजः, आकाशः, स्मरः, आशा, प्राणः, एते नामादिप्राणपर्यन्ताः।] **तेन**—आत्मजिज्ञासया प्रक्रान्ते प्रकरणे प्राणपर्यन्तोपास्योपदेशेन हेतुना। **न वायुविशेषमात्रमिति।**

'प्राणो ह पिता, प्राणो ह माता' (छां.उ. 7-15-1)
इत्यादयश्च, प्राणस्य चेतनतामवगमयन्ति ।

'पितृहा.........मातृहा' (छां.उ. 7-15-2)
इत्यादिना, सप्राणेषु पितृप्रभृतिषु उपमर्दकारिणि हिंसकत्वनिमित्तोपक्रोशवचनात्, तेष्वेवविगतप्राणेषु अत्यन्तोपमर्दकारिण्यपि उपक्रोशाभाववचनाच्च, हिंसायोग्यः चेतन एव प्राणशब्दनिर्दिष्टः। अप्राणेषु स्थावरेष्वपि चेतनेषु उपमर्दभावाभावयोः हिंसा-तदभावदर्शनात्, अयं हिंसायोग्यतया निर्दिष्टः प्राणः, [1]प्रत्यगात्मैव[1] इति निश्चीयते। अत एव च, अर-नाभिदृष्टान्ताद्युपन्यासेन 'प्राणशब्दनिर्दिष्टः परः' इति न भ्रमितव्यम्; परस्य हिंसाप्रसङ्गाभावात्, जीवादितरस्य तद्भोग्य-[2]भोगोपकरण-भूतस्य[2]कृत्स्नस्य अचिद्वस्तुनः जीवायत्तस्थितित्वेन, प्रत्यगात्मन्येव अर-नाभिदृष्टान्तोपपत्तेश्च ।

अयमेव च प्राणशब्दनिर्दिष्टो भूमा; 'अस्ति भगवः प्राणाद्भूयः' इति प्रश्नस्य, 'अदो वाव प्राणाद्भूयः' इति प्रतिवचनस्य च अभावात्, [3]भूमसंशब्दनात्[3] प्राक् [4]प्राणप्रकरणस्य[4] अविच्छेदात् ॥

['तु'शब्दस्य प्रकरणविच्छेदकत्वशङ्कापरिहारः]

किं च — प्राणवेदिनः अतिवादित्वमुक्त्वा, तमेव

---

उपक्रान्तस्य आत्मोपदेशस्य प्राणपर्यन्तत्वसिद्धेः, प्राणस्य च आत्मत्वयोगात् इति भावः। **प्राणो हेति**। न हि केवलं देहस्य वायुविशेषस्य वा पितृत्वादिकं वेदान्तिषु कश्चित् अभ्युपगच्छति। **हिंसायोग्य** इति। हिंसाकर्मत्वं 'प्राण'शब्दवाच्यस्य जीवत्वसाधकम् इत्यर्थः। **स्थावरेष्विति**। 'ओषधिवनस्पतयः यत् किञ्चित् प्राणभृत्, स आत्मानमाविस्तरां वेद' इत्यादिभिः स्थावराणां ज्ञातृत्व-कर्मफलभोक्तृत्वावगमात्, तेषां चेतनत्वं, वेदान्तान् स्मृति-वचनानि च प्रमाणयद्भिः अभ्युपेत्यम् इति भावः। **दृष्टान्तादीति**, 'आदि'शब्देन धारकत्वम्।

**अविच्छेदादिति**। प्रश्न-प्रतिवचनाभावः, प्रकरणाविच्छेदहेतुः; तदविच्छेदः, भूमविशिष्टस्य जीवत्वहेतुः इत्यर्थः ॥

**किञ्चेति**, 'तु'शब्दस्य प्रकरणाविच्छेदकत्वमाशङ्क्योक्तम्। 'एष तु वा अग्निहोत्री, यः सत्यं वदति' इत्यत्र अग्निहोत्रिवत् प्राणातिवादिनः प्रत्यभिज्ञानात्, तस्यैव तदङ्गतया

---

[1] प्रत्यगात्मा—थ [2] भोगोपकरणस्य—द [3] भूमसंशब्दात्—थ [4] प्रकरणस्य—द

'एष तु वा अतिवदति' (छां.उ. 7-16-1)

इति प्रत्यभिज्ञाप्य,

'यस्सत्येनातिवदति' (छां.उ. 7-16-1)

इति, तस्य [1]सत्यवदनं[1] प्राणोपासनाङ्गतया[2] उपदिश्य[2], उपादेयस्य सत्यवदनस्य [3]शेषितया[3] पूर्वनिर्दिष्टप्राणयाथात्म्यविज्ञानम्,

'यदा वै विजानात्यथ सत्यं वदति' (छां.उ. 7-17-1)

इति उपदिश्य, [4]तत्सिद्ध्यर्थं च[4] [5]मनन[5]-श्रद्धा-निष्ठा-प्रयत्नान् उपदिश्य, तदारम्भाय च, प्राप्यभूतप्राणशब्दनिर्दिष्टप्रत्यगात्मस्वरूपस्य सुखरूपताज्ञानम् उपदिश्य, तस्य च सुखस्य विपुलता,

'भूमा त्वेव विजिज्ञासितव्यः' (छां.उ. 7-23-1)

इत्युपदिश्यते। तदेवं प्रत्यगात्मन एव अविद्याविमुक्तं रूपं, विपुलसुखमित्युपदिष्टमिति;

'तरति शोकमात्मवित्' (छां.उ. 7-1-3)

इत्युपक्रमाविरोधश्च। अतः भूमगुणविशिष्टः प्रत्यगात्मा। यत एवं भूमगुण[6]विशिष्टः प्रत्यगात्मा[6], [7]अत एव[7] अहमर्थे प्रत्यगात्मनि,

'अहमेवाऽधस्तात् अहमुपरिष्टात्' (छां.उ. 7-25-1)

इत्यारभ्य,

'अहमेवेदं सर्वम्' (छां.उ. 7-25-1)

इति प्रत्यगात्मनो वैभवमुपदिशति। एवं प्रत्यगात्मत्वे निश्चिते सति, तदनुगुणतया वाक्यशेषो नेतव्यः—इति॥

[सिद्धान्तारम्भः]

एवं प्राप्ते, अभिधीयते—भूमा सम्प्रसादादध्युपदेशात्॥

---

सत्यकथनमुक्तम् इत्यर्थः (श्रु.प्र)। [उपादेयस्य—विधेयस्य। शेषितया—अङ्गितया।] उपक्रमाविरोधश्चेति। बद्धो हि सशोकः; मुक्तस्वरूपं विपुलसुखमित्यर्थः। अहमर्थ प्रत्यगात्मनीति। अहमर्थस्य प्रत्यगात्मत्वात् इत्यर्थः। तदनुगुणतयेति। स्वमहिमप्रतिष्ठितत्वादिपराणि वाक्यानि अस्वरसं योजनीयानीत्यर्थः॥

---

[1] सत्यवचनं—थ [2] उपदिश्यते—न [3] शेषतया—वा [4] तत्सिद्ध्यर्थं—द
[5] मननः—थ [6] विशिष्टः—न [7] तत एव—थ

[सूत्रार्थविवृतिः]

**भूमगुणविशिष्टः न प्रत्यगात्मा ; अपि तु परमात्मा ।**

**कुतः ?**

**संप्रसादादध्युपदेशात् । सम्प्रसादः—प्रत्यगात्मा ;**

**'एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय, परं ज्योतिरुपसम्पद्य, स्वेन रूपेणाऽभिनिष्पद्यते'** (छां.उ. 7-12-2)

**इति उपनिषत्प्रसिद्धः । सम्प्रसादात्—प्रत्यगात्मनः, अधिकतया[1]भूमविशिष्टस्य[1] सत्यशब्दाभिधेयस्य उपदेशात् इत्यर्थः । सत्यशब्दाभिधेयं च परं ब्रह्म ।**

**एतदुक्तं भवति—यथा नामादिषु प्राणपर्यन्तेषु पूर्वपूर्वाधिकतया उत्तरोत्तराभिधानात्, पूर्वेभ्यः उत्तरेषाम् अर्थान्तरत्वम्, [2]एवं प्राणशब्द[2]निर्दिष्टात् प्रत्यगात्मनः अधिकतया[3]निर्दिष्टः[3] सत्यशब्दाभिधेयः, तस्मात् अर्थान्तरभूत एव ; [4]सत्यशब्दनिर्दिष्ट एव[4] भूमा इति, 'सत्याख्यं परं[5]ब्रह्मैव[5] भूमा' इत्युपदिश्यते—इति ।**

**तदाह वृत्तिकारः—**

**'भूमा त्वेवेति भूमा [6]ब्रह्म[6]; नामादिपरम्परया आत्मन ऊर्ध्वमस्योपदेशात्'** (बो.वृ.) **इति ।**

**प्राणशब्दनिर्दिष्टात् अधिकतया सत्यस्य उपदेशः कथमवगम्यते?—इति चेत्,**

---

सूत्रे सम्प्रसादनिर्देशः शुद्धस्वरूपाभिप्रायेण कृतः (श्रु.प्र) ॥

**सत्येति ।** 'सत्य'शब्दात्पश्चात् प्रकरणविच्छेदाभावेन 'सत्य'शब्दवाच्य एव भूमविशिष्टः इति भावः ।

**एतदुक्तमिति ।** पूर्वनिर्दिष्टादूर्ध्वमभिधानं हि, पूर्वनिर्दिष्टप्रतियोगितया उत्तरोत्तरेषामधिकतया अर्थान्तरत्वे हेतुः । **यथेति ।** [उक्तस्य] हेतोः सपक्षे व्याप्तिः । **एवंशब्देन** हेतुरभिप्रेतः (श्रु.प्र.) ।

**भूमात्वेव.....शात्** इति । पूर्वनिर्दिष्टादधिकतया उत्तरोत्तरनिर्देशप्रकरणत्वात्, 'प्राण'-शब्दवाच्यात् जीवादूर्ध्वमुक्तः 'सत्य'शब्दवाच्यः उपास्यो भूमा, ततोऽधिकं परं ब्रह्म इति वृत्तिकारग्रन्थस्यार्थः । **आत्मन ऊर्ध्वम्** इत्यनेन, 'प्राण'शब्दनिर्दिष्टस्य जीवात्मत्वं

---

[1] भूमगुणविशिष्टस्य—वा [2] प्राणशब्द—द [3] भूमगुणविशिष्टो निर्दिष्टः—वा

[4] अतः सत्यशब्दनिर्दिष्ट एव—वा अत्र सत्यशब्दनिर्दिष्टमेव—द [5] ब्रह्म—द

[6] परब्रह्म—इ, परं ब्रह्म—वा

'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन् अतिवादी भवति'
(छां.उ. 7-15-4)

इति, प्राणविदः अतिवादित्वमुक्त्वा,

'एव तु वा अतिवदति, यस्सत्येनातिवदति' (छां.उ. 7-16-1)

इति, सत्यवेदित्वेन अतिवादिनं 'तु'शब्देन पूर्वस्मात् अतिवादिनः व्यावर्तयति ॥

['एषः' इत्यस्य पूर्वप्रत्यभिज्ञापकतानिरासः]

[1]अत एव[1]—

'एष तु वा अतिवदति' (छां.उ. 7-16-1)

इत्यत्र प्राणातिवादिनः न प्रत्यभिज्ञा। अतः, अस्य अतिवादित्वनिमित्तं सत्यम्, पूर्वातिवादित्वनिमित्तात् प्राणात् अधिकम् इति विज्ञायते।

ननु च—[2]प्राणवेदिन[2] एव सत्यवदनम् अङ्गत्वेन उपदिष्टम्। अतः प्राण-प्रकरणाविच्छेदः—इत्युक्तम्।

नैतद्युक्तम्; [3]'तु'शब्देन हि[3] अतिवाद्येव अन्यः प्रतीयते; न तु तस्यैव अतिवादिनः सत्यवदनाङ्गविशिष्टतामात्रम् ॥

---

वृत्तिकाराभिमतम्; न तु पञ्चवृत्तिप्राणपरत्वम इत्यवगतम्। अतः 'प्राण'शब्दवाच्यस्य जीवत्वमाश्रित्यैव पूर्वपक्षसिद्धान्तवर्णनं वृत्तिकाराभिमतमिति ज्ञापनम्, वृत्तिकारग्रन्थोपादानफलम्। व्यावर्तयतीति। अधिकतया व्यावर्तयतीत्यर्थः। उपासकाधिक्यात् तन्निमित्तोपास्याधिक्यं वक्तुं तुशब्दस्वारस्येन उपासकवैलक्षण्यमुक्तम्। तुशब्दो हि असङ्कुचितवृत्तिः धर्म-धर्मिणोः अविशेषेण भेदकः ॥

अत एवेति। प्रकृत-प्रकरिष्यमाणसाधारणः एतच्छब्दः; नाऽयमेकान्ततः प्रकृतमभि-निविशते। पाश्चात्त्ययद्वृत्तप्रतिनिर्देशरूपत्वाच्च नाऽयं प्रकृतपरः। तुशब्दस्वारस्यं च प्रकरण-विच्छेदकम्। अतः पूर्वातिवादिनः प्रत्यभिज्ञा नास्तीति अतिवाद्यन्तरं प्रतिपन्नमित्यर्थः (श्रु.प्र) ॥

अग्निहोत्र्यन्तराप्रतीतेरिति। अतिवादिस्थानीयः अग्निहोत्री; उपासनस्थानीयमग्नि-होत्रम्। द्रव्य-देवतास्थानीयम् उपास्यम्। अत्र अग्निहोत्र्यन्तराप्रतीतिः, अग्निहोत्रान्तराप्रतीतेः। सा च द्रव्य-देवताविशेषाप्रतीतेः। सा च 'सत्यवचन'शब्दस्य दध्यादिद्रव्य-देवताविशेषोप-

---

[1] अतः—द   [2] प्राणवादिनः—थ   [3] तुशब्देन—द

[दृष्टान्तापेक्षया वैलक्षण्योपपादनम् ]

'एष तु वा अग्निहोत्री, यस्सत्यं वदति'
इत्यादिषु अग्निहोत्र्यन्तराप्रतीतेः, प्रतीतस्यैव अग्निहोत्रिणः सत्यवदनाङ्गविधानम् इति क्लिष्टा गतिः आश्रीयते। अत्र तु अतिवाद्यन्तरत्वनिमित्तं सत्यशब्दाभिधेयं परं ब्रह्म प्रतीयते। सत्यशब्दश्च,

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.आन. 1-1)
इत्यादिषु परस्मिन् ब्रह्मणि प्रयुक्तः ॥

['तु'शब्दस्वारस्यफलितार्थः]

अतः तन्निष्ठस्य अतिवादिनः पूर्वस्मात् अधिकत्वं [1]सम्भवति[1] इति, वाक्यस्वरस-सिद्धम् अन्यत्वं न बाधितव्यम्। अतिवादित्वं हि, वस्त्वन्तरात् पुरुषार्थतया अति-क्रान्तस्योपास्यवस्तुवादित्वम्। नामाद्याशापर्यन्तोपास्यवस्त्वतिक्रान्तस्योपास्यप्राणशब्द-निर्दिष्टप्रत्यगात्मवादित्वात् प्राणविदः, अतिवादित्वम्। तस्याऽपि सातिशयपुरुषार्थत्वात्, निरतिशयपुरुषार्थतया उपास्यपरब्रह्मवादिन एव साक्षादतिवादित्वमिति,

'एष तु वा अतिवदति, यस्सत्येनातिवदति' (छा.उ. 7-16-1)
इत्युक्तम् ॥

---

स्थापनासामर्थ्यात्। एवम् अग्निहोत्र्यन्तरसमर्पकशब्दाभावात्, तत्र 'तु'शब्दस्वारस्यं भग्नम् इत्यर्थः। अत्र त्विति। अत्र तु, अतिवाद्यन्तरत्वनिमित्तम् उपासनान्तरं तद्धेतुभूतमुपास्यान्तरं च प्रतीयते। इह तत्समर्पणसमर्थस्य 'सत्य'शब्दस्य सद्भावात्, 'तु'शब्दस्वारस्यं न भञ्जनीयम्। अतः अतिवाद्यन्तरं सिद्धमित्यर्थः ॥

अतिवादित्वं हीति। न हि प्राणातिवादिन्येव 'अतिवादि'शब्दो रूढः; 'क्लृप्ताव-यवशक्त्यैव लब्धे स्वार्थावबोधने। नष्टावयवनामत्वं प्रत्याचष्टे हि सूत्रकृत्' इति दर्शितात्, 'प्रोक्षणीष्वर्थसंयोगात्' (पू.मी.सू. 1-4-11) इति सूत्रितात् प्रोक्षणीनयात्, अवयवशक्त्या स्वार्थबोधे सम्भवति, रूढिकल्पनाऽयोगात्। अतः न प्राणातिवादिन्येव 'अतिवादि'शब्दस्वारस्यम् इत्यर्थः। तस्यापीति। अस्य ['अतिवादि']शब्दप्रवृत्तिनिमित्तस्य [अतिक्रान्तस्वोपास्यवस्तुवादित्वस्य] परमात्मोपासके एव पुष्कलत्वात्, तस्मिन्नेव 'अतिवादि'शब्दो मुख्य इति, 'यः सत्येनातिवदति' इति वदत आचार्यस्याभिप्रायः [इत्याशयः]। तुशब्दातिवादिशब्दयोरुभयोरपि अस्मत्पक्ष एव स्वारस्यमिति भावः।

---

[1] भवति इ

[सत्येनेति तृतीयोपपत्तिः]

'सत्येन' इति इत्थम्भूतलक्षणे तृतीया। सत्येन—परेण ब्रह्मणा उपास्येन उपलक्षितः यः [1]अतिवदति इत्यर्थः[1]। अत एव, एवं शिष्यः प्रार्थयते—

'सोऽहं भगवः सत्येनातिवदानि' (छां.उ. 7–16–1)

इति। आचार्यश्च,

'सत्यं त्वेव विजिज्ञासितव्यम्' (छां.उ. 7–16–1)

इत्याह ॥

[आत्म-प्राणौ मिथो भिन्नौ]

'आत्मतः प्राणः' (छां उ. 7–26–1)

इति च प्राणशब्दनिर्दिष्टस्य [2]आत्मन[2] उत्पत्तिरुच्यते। अतः,

'तरति शोकमात्मवित्' (छां.उ. 7–1–3)

इति प्रक्रान्तः आत्मा, प्राणशब्दनिर्दिष्टादन्यः—इति गम्यते ॥

[पूर्वपक्षार्थानुवाद-तन्निराकरणे]

[3]यत्तूक्तम्[3]—'अस्ति भगवः प्राणाद्भूयः' इति प्रश्नस्य, 'अदो वात्र प्राणाद्भूयः' इति प्रतिवचनस्य च अदर्शनात्, प्रक्रान्तः आत्मोपदेशः, प्राणोपदेशपर्यवसानो गम्यते—इति,

तदयुक्तम्; न हि प्रश्नप्रतिवचनाभ्यामेव अर्थान्तरत्वं गम्यते; प्रमाणान्तरेणाऽपि तत्सम्भवात्। उक्तं च प्रमाणान्तरम् ॥

---

तृतीयेति। सत्यवदनपक्षे एव तृतीयाऽनुपपत्तिः उपसर्ग(अति)वैयर्थ्यं च इति भावः। अत एव—'सत्य'शब्दस्य उपास्यान्तरपरत्वादेव। 'सोऽहं भगवः सत्येनातिवदानि' इति शिष्यः प्रार्थयते; न तु प्राणेनातिवदानीति इत्यर्थः। आचार्यश्चेति। 'सत्यं त्वेव विजिज्ञासितव्यम्' इत्याह; न तु प्राण एवेति इत्यर्थः (श्रु प्र) ॥

आत्मत इति, सूत्राभिप्रेतेन हेत्वन्तरेणाऽपि अधिकतया उपास्यान्तरत्वमुपपादयन् सम्प्रसादादध्युपदेशं विवृणोति। [आत्मनः उत्पत्तिः—आत्मनःसकाशादुत्पत्तिः।]

उक्तं चेति। प्रश्न-प्रतिवचने हि लिङ्गम्। तदभावेऽपि 'तु'शब्दश्रुतिः, आत्मनः प्राणोत्पत्तिश्च लिङ्गमिति प्रमाणान्तरमुक्तम् इत्यर्थः ॥

---

[1] अतिवदति—थ [2] आत्मना—द [3] यदुक्तम्—श, आ, ज, ठ

[प्रश्नविशेषाभावाशयः]

'अस्ति भगवः प्राणाद्भूयः' इत्यपृच्छतः अयमभिप्रायः—नामादिषु आशापर्यन्तेषु अचेतनेषु पुरुषार्थभूयस्तया पूर्वपूर्वमति[1]क्रान्तेष्वपि[1] [2]उत्तरोत्तरेषु[2] उपदिष्टेषु, तत्तद्वेदिनः आचार्येण अतिवादित्वं नोक्तम्। प्राणशब्दनिर्दिष्टप्रत्यगात्मयाथात्म्यवेदिनस्तु पुरुषार्थभूयस्त्वातिशयं मन्वानेन,

'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति' (छां.उ. 7-15-4)

इति, अतिक्रान्तवस्तुवादित्वमुक्तम्। अतः अत्रैव आत्मोपदेशः समाप्तः इति मत्वा, शिष्यः भूयो न पप्रच्छ ॥

[आचार्याभिप्रायः]

आचार्यस्तु इदमपि सातिशयं मत्वा, निरतिशयपुरुषार्थभूतं 'सत्य'शब्दाभिधेयं परं ब्रह्म,

'एष तु वा अतिवदति, यस्सत्येनातिवदति' (छां.उ. 7-16-1)

इति स्वयमेव उपचिक्षेप। शिष्योऽपि परमपुरुषार्थरूपे परस्मिन् ब्रह्मणि उपक्षिप्ते, तत्स्वरूप-तदुपासनयाथात्म्यबुभुत्सया,

'सोऽहं भगवः सत्येनातिवदानि' (छां.उ. 7-16-1)

इति प्रार्थयामास ॥

[उत्तरोपदेशस्य, विशिष्टातिवादित्वसिद्ध्यर्थता]

ततः ब्रह्मसाक्षात्कारनिमित्तातिवादित्वसिद्धये, ब्रह्मसाक्षात्कारोपायभूतं ब्रह्मोपासनम्,

---

**पुरुषार्थ....मन्वानेनेति**। आत्मोपदेशस्य तत्पर्यन्तत्वं मन्वानेनेत्यर्थः (श्रु.प्र) ॥

**उपचिक्षेपेति**। भगवद्गीतायामपि 'तस्माद्योगी भवाऽर्जुन' इति जीवात्मयोगं परिसमाप्य 'योगिनामपि सर्वेषां मद्गतेनान्तरात्मना। श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥' इति परमात्मोपासनं भगवानेव हि उपक्षिप्तवान्, तद्वत् इति भावः ॥

**ब्रह्मसाक्षात्कारनिमित्ते**त्यनेन, 'यदा वै विजानाति अथ सत्यं वदति' इत्यस्य वाक्यस्य अर्थः उक्तो भवति। **विजानाति**शब्दः, साक्षात्कारपरः न तु शास्त्रजन्यज्ञानपरः; 'यदा वै मनुते, अथ विजानाति' इति जानात्यर्थस्य मननसाध्यत्वावगमात्। **सत्यं वदति**—सत्य-

---

[1] क्रान्तेषु—थ [2] उत्तरोत्तरेष्वपि—द

'सत्यं त्वेव विजिज्ञासितव्यम्' (छां.उ. 7-16-1)

इत्युपदिश्य, तदुपायभूतं ब्रह्ममननम्,

'मतिस्त्वेव विजिज्ञासितव्या' (छां.उ. 7-18-1)

इत्युपदिश्य, श्रवणप्रतिष्ठार्थत्वात् मननस्य, मननोपदेशेन [1]श्रवणम्[1] अर्थसिद्धं मत्वा, श्रवणोपायभूतां ब्रह्मणि श्रद्धाम्,

'श्रद्धा त्वेव विजिज्ञासितव्या' (छां.उ. 7-19-1)

इत्युपदिश्य, तदुपायभूतां च तन्निष्ठाम्;

'निष्ठा त्वेव विजिज्ञासितव्या' (छां.उ. 7-20-1)

इत्युपदिश्य, [2]तदुपायभूतां च[2] [3]तदुद्योग[3]प्रयत्नरूपां कृतिमपि,

'कृतिस्त्वेव विजिज्ञासितव्या' (छां.उ. 7-21-1)

इत्युपदिश्य, श्रवणाद्युपक्रमरूपकृतिसिद्धये, प्राप्यभूतस्य सत्यशब्दाभिहितस्य ब्रह्मणः सुखरूपता ज्ञातव्या इति,

---

मतिवदति, इत्यर्थः ; अतिवादस्य प्रकृतत्वात् । यदा ब्रह्म साक्षात्करोति ; तदा अतिवदति । तस्मात् अतिवादित्वनिमित्त-तत्साक्षात्काराय तदुपायभूतं सत्योपासनं कुर्यात् इत्यर्थः । **श्रवणो... श्रद्धामिति** । श्रवण-मनन-निदिध्यासन-प्राप्तिविषयो हि ब्रह्म । तद्विषयश्रद्धा च तत् श्रोतुं मन्तु द्रष्टुं प्राप्तुं च भवति । तत्र 'श्रवणोपायभूतां .. श्रद्धाम्' इत्यनेन श्रोतुं श्रद्धा विवक्षिता । **श्रद्धा** — त्वरा । **तन्निष्ठा** — तस्मिन् ब्रह्मणि निष्ठा । 'ब्रह्मैव श्रोतव्यं नाऽन्यत्' इति व्यवसायः— **निष्ठा** । श्रोतव्यत्वनिश्चये हि श्रोतुं त्वरा भवति । **तदुद्योगेति** । उद्योगशब्द-वाच्यप्रयत्नरूपां कृतिम् इत्यर्थः । सा च श्रोतव्यान्तरेषु हेयत्वानुसन्धानेन मनसो नियमनरूपा । अन्यस्मिन् उपादेयबुद्ध्या प्रवणमनस्कस्य हि, 'ब्रह्मैव श्रोतव्यं, नाऽन्यत्' इत्यध्यवसायो न भवति । **श्रवणादीति** । जिज्ञासितस्य पुरुषार्थत्वे, तस्य निरतिशयत्वे च ज्ञाते सति मनसः सातिशयपुरुषार्थान्तरवैमुख्यकरणं सम्भवति, इत्यभिप्रायः । **सुखरूपतेति** । निरतिशय-पुरुषार्थत्वावगमश्च शास्त्रादेव आपातप्रतीतिदशायां भवति ; यादृच्छिकसज्जनसंवादादिना च सिद्ध्यति । 'यदा वै श्रद्धधाति........' [इत्यादिना] मननादीनां श्रद्धाद्यानन्तर्यश्रवणात् भाष्ये तेषामुपायोपेयभावः उक्तः । 'यदा वै सुखं लभते' इति श्रुतौ 'लाभ'शब्दो बुद्धिवाची ; लभतेः प्राप्त्यर्थत्वात्, इत्यभिप्रायः ; न हि श्रवणादेः पूर्वमेव निरतिशयसुखप्राप्तिरुपपद्यते । **विजिज्ञासितव्यमिति** । सत्यव्यतिरिक्तविषयाणि 'जिज्ञासितव्य'पदानि सम्पाद्यत्ववाचीनि ॥

---

[1] श्रवणमपि—आ, इ, वा [2] तदुपायभूतां—वा [3] तदुद्योगभूतां—द

'सुखं त्वेव विजिज्ञासितव्यम्' (छां.उ. 7-22-1)
इत्युपदिश्य, निरतिशयविपुलमेव सुखं परमपुरुषार्थरूपं भवति इति, तस्यैव ब्रह्मणः सुखरूपस्य निरतिशय[1]विपुलता[1] ज्ञातव्या इति,

भूमा त्वेव विजिज्ञासितव्यः' (छां.उ. 7-23-1)
इत्युपदिश्य, निरतिशयविपुलसुखरूपस्य ब्रह्मणः लक्षणमिदमुच्यते—

'यत्र नाऽन्यत्पश्यति, नाऽन्यच्छृणोति, नाऽन्यद्विजानाति, स भूमा'
(छां.उ. 7-24-1)
इति ॥

[भूमेतरादर्शनादौ हेतुः]

अयमर्थः—अनवधिकातिशयसुखरूपे ब्रह्मणि अनुभूयमाने, ततोऽन्यत्किमपि न पश्यति [2]अनुभविता[2]; ब्रह्मस्वरूप-तद्विभूत्यन्तर्गतत्वाच्च कृत्स्नस्य वस्तुजातस्य। अतः ऐश्वर्यापरपर्यायविभूतिगुणविशिष्टं, निरतिशयसुखरूपं ब्रह्म अनुभवन् तद्व्यतिरिक्तस्य वस्तुनः अभावादेव किमप्यन्यत् न पश्यति। अनुभाव्यस्य सर्वस्य सुखरूपत्वादेव दुःखं च न पश्यति। तदेव हि सुखम्; यदनुभूयमानं पुरुषानुकूलं भवति ॥

---

**अयमर्थ** इति 'यत्र नान्यदिति वाक्ये अन्यदर्शनश्रवणादिनिषेधात्, दृश्यमिथ्यात्वशङ्का स्यादिति, तद्व्युदासाय। **अनुभूयमाने** इति, अर्थस्वभावादध्याहारः कृतः; न हि ब्रह्मसद्भावात् दुःखरूपवस्त्वन्तरादर्शनं भवति। **ततोऽन्यत्**—सुखरूपात् ब्रह्मणोऽन्यत्। **न पश्यति**—दुःखरूपं तद्व्यतिरिक्तं च किंचिन्न पश्यति, इत्यर्थः। तत्र दुःखदर्शनाभावहेतुः [ब्रह्मणः] अनवधिकातिशयसुखरूपत्वम्। **कृत्स्नस्येति**। स्वरूपान्तर्गताः ज्ञानादिगुणाः, विभूत्यन्तर्गतं जगदखिलम् इत्यभिप्रायः। अभिप्रेतहेतुसमुच्चयार्थः **चशब्दः**। **अतः**—ब्रह्मणः सुखरूपतायाः, कृत्स्नविभूतेः तदन्तर्भावस्य च प्रामाणिकत्वात्। विभूतिविषयो गुणः विभूतिगुणः। स एव ऐश्वर्यापरपर्यायं नियमनम्; तद्विशिष्टं ब्रह्म। न हि ईशितव्यज्ञानं विना ऐश्वर्यविशिष्टानुभवसम्भवः; निरूपकेण विना निरूप्यज्ञानायोगात्। **तद्व्यतिरिक्तस्येति**। विशिष्टब्रह्मणः (सकाशात्) अन्यदर्शनं निषिध्यते; न तु (केवलम्) अन्यदर्शनं इत्यर्थः। **सर्वस्येति**। सविभूतिकस्येत्यर्थः। पूर्वाभिप्रेतादेव हेतोः इति, **एवकाराभि** ायः। **अनुकूलमिति**। अनुकूलत्वं नाम स्वत इष्टत्वम्। तच्च अनिष्टनिवृत्तिरूपतया, इष्टसाधनतया च विनाऽपि इष्टत्वम् (श्रु.प्र) ॥

---

[1] विपुलमेव—आ [2] अयमनुभविता—द

[एकस्यैव जगतः सुख-दुःखोभयरूपत्वानुपपत्ति-तत्परिहारौ]

ननु च—इदमेव जगत्, ब्रह्मणोऽन्यतया अनुभूयमानं, दुःखरूपं परिमित-[1]सुखरूपं च[1] भवत्, कथमिव [2]ब्रह्मविभूतित्वेन[2] तदात्मकतयाऽनुभूयमानं, सुखरूपमेव भवेत् ?

उच्यते—कर्मवश्यानां क्षेत्रज्ञानां [3]ब्रह्मणोऽन्यत्वेन[3] अनुभूयमानं कृत्स्नं जगत्, तत्तत्कर्मानुरूपं दुःखं च परिमितसुखं च भवति। अतः [4]ब्रह्मणोऽन्यतया[4], परिमिति-सुखत्वेन, [5]दुःखत्वेन च[5] जगदनुभवस्य कर्मनिमित्तत्वात्, कर्मरूपाविद्या[6]विमुक्तस्य[6], तदेव जगत् विभूतिगुणविशिष्टब्रह्मानुभवान्तर्गतं सुखमेव भवति। यथा—पित्तोपहतेन पीयमानं पयः पित्ततारतम्येन अल्पसुखं, विपरीतं च भवति; तदेव पयः पित्तानु-पहतस्य सुखायैव भवति। [7]यथैव[7] राजपुत्रस्य, पितुर्लीलोपकरणम् अतथात्वेनानु-[8]सन्धीयमानं[8] प्रियत्वमनुपगतं, [9]तथात्वानुसन्धाने[9] प्रियतमं भवति, तथा—[10]निरति-शया[10]नन्द[11]स्वरूपस्य[11] ब्रह्मणः अनवधिकातिशयासङ्ख्येयकल्याण[12]गुणाकरस्य[12] लीलो-पकरणं, तदात्मकं च अनुसन्धीयमानं जगत् निरतिशयप्रीतये भवत्येव ॥

[यत्र नाऽन्यदिति श्रुत्यर्थनिगमनम्]

अतः जगदैश्वर्यविशिष्टम् अनवधिकातिशयसुखरूपं ब्रह्म अनुभवन्, ततोऽन्यत्किमपि न पश्यति, दुःखं च न पश्यति। एतदेव उपपादयति वाक्यशेषः—

---

**ननु चेति**। न हि एकम् एकदैव सुख-दुःखात्मकविरुद्धस्वभावालिङ्गितमिति युज्यते। न च जगतः शक्यं दुःखरूपत्वमपह्नोतुम्। अतः सुखरूपत्वमेव त्यक्तव्यमित्यभिप्रायः।

**उच्यत** इति। स्वतोऽपरिच्छिन्नसुखरूपस्याऽपि (ब्रह्मणः) उपाधितः अन्यथारूपसम्भवात् अविरोधः। कर्म, तत्तिरोधानकृतम् अब्रह्मात्मकत्वज्ञानं च उपाधिः (इति भावः)। **यथेत्यादि** स्वतो मधुरस्याऽपि दोषसम्बन्धादननुकूलत्वे, अनुकूलबुद्ध्यविषयस्य केनचित्सम्बन्धित्वज्ञानात् अनुकूलत्वे च दृष्टान्तद्वयम् ॥

**एतत्**—औपाधिकदुःखरुपतायाः, तद्विगमे अनवस्थानम्। [**वाक्यशेषः**—पूर्ववाक्योपकारकं पश्चात्तनं वाक्यान्तरम्।] **रत्यादि**शब्दानां प्रीतिपरत्वे, व्यधिकरणबहुव्रीहिः [आत्मनि

---

[1] सुखं च—क्ष,थ [2] ब्रह्मणः विभूतित्वेन—थ [3] ब्रह्मणोऽन्यतया—द [4] ब्रह्मणोऽन्यत्वेन—थ [5] दुःखत्वेन—न [6] विनिर्मुक्तस्य—द [7] यथा च—द [8] सन्धीयमानत्वे—द [9] तथात्वेनानुसन्धीयमानत्वे—इ, तथात्वेनानुसन्धीयमानं—वा, तथात्वानुसन्धानेन—न. [10] निरवधिकातिशया—इ, द. [11] सुखरूपस्य—द [12] गुणगणाकरस्य—द.

'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीडः
आत्ममिथुन आत्मानन्दस्स स्वराड्भवति, तस्य सर्वेषु लोकेषु
कामचारो भवति, अथ येऽन्यथाऽतो विदुरन्यराजानस्ते क्षय्य-
लोका भवन्ति, तेषां सर्वेषु लोकेष्वकामचारो भवति' (छां.उ. 7-25-2)

इति। स्वराट्—अकर्मवश्यः। अन्यराजानः—कर्मवश्याः। तथा—

'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्।
सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः॥' (छां.उ. 7-26-2)

[1]इति च[1]॥

[उक्तार्थनिगमनम्]

निरतिशयसुखरूपत्वं च ब्रह्मणः,
'आनन्दमयोऽभ्यासात्' (ब्र.सू. 1-1-13)

इत्यत्र प्रपञ्चितम्। अतः प्राणशब्दनिर्दिष्टात् प्रत्यगात्मनः अर्थान्तरभूतस्य सत्यशब्दाभिधेयस्य ब्रह्मणः 'भूमा'इत्युपदेशात्, भूमा परं ब्रह्म ॥७॥

## ७३. धर्मोपपत्तेश्च ॥ १-३-८ ॥

रतिर्यस्य, सः आत्मरतिः।] अनुकूलविषयपरत्वे साक्षाद्बहुव्रीहिः। [आत्मा रतिर्यस्य, सः आत्मरतिः] **आत्मशब्दः** विभूतिगुणविशिष्टब्रह्मपरः। **रतिः** स्रक्-चन्दनादिजन्या प्रीतिः। **क्रीडा**—उद्यानादिजन्या [प्रीतिः]। **मिथुनम्**—स्त्रीसम्भवा [प्रीतिः]। **आनन्दः**—विभूतिजन्या (प्रीतिः) एवं सर्वविधसुखानुभव उक्तः। **अकर्मवश्य** इति। (इदं विवरणं,) 'स्वराड् भवति' (इत्यादिना) परमात्मप्रतिक्षेपः प्रतीयते इत्याशङ्क्य (तद्व्युदासाय)। **'अन्यराजानः, स्वराट्'** इति पदद्वयेन उपाधि-तद्विगमौ दर्शितौ। **न पश्य** इत्यादि। सर्वं पश्यति, न तत्र दुःखतां पश्यति; सुखरूपतामेव पश्यतीत्यर्थः।

**निरतिशयेति**। 'रसो वै सः' 'आनन्दो ब्रह्मेति' (इत्यादि) वाक्येषु कार्यकारणावस्थविभूत्यादिविशिष्टस्यैव आनन्दत्वं हि स्फुटतरम् (श्रु.प्र.) ॥७॥

**धर्मोपपत्तेश्चेति** (सूत्रोक्ताः) कस्य धर्माः? इत्याकाङ्क्षायाम्, **अस्येति**।

[सूत्रार्थः। **धर्माणाम्**—(भूमपदार्थसम्बन्धितया उक्तानां) स्वाभाविकामृतत्वादीनाम् धर्माणां, **उपपत्तेश्च**—परमात्मन्येव अबाधिततया सम्भवादपि (भूमगुणविशिष्टः परमात्मैव)।]

प्रतिष्ठितः स्वे महिम्नि भूमेति वचनादिह।
अनन्याधारकत्वादिगुणवत्त्वाच्च तत्परम्॥ (ब्र.प.मा ७३)

[1] इति—इ, द

[पूर्वसूत्रोक्तार्थे उपपत्तिबोधकसूत्रव्याख्या]

अस्य भूम्नः ये धर्माः आम्नायन्ते, तेऽपि परस्मिन्नेव उपपद्यन्ते ।

"[1]एतदमृतम्[1]" (छां.उ 7-24-1)

इति स्वाभाविकममृतत्वम्,

'स्वे महिम्नि' (छां.उ. 7-24-2)

इत्यनन्याधारत्वम्,

'स एवाधस्तात्' (छां.उ. 7-25-1)

इत्यादि,

'स एवेदं सर्वम्' (छां.उ. 7-25-1)

इति [2]सर्वात्मकत्वम्[2],

'आत्मतः प्राणः' (छां.उ. 7-26-1)

इत्यादि[3]प्राणप्रभृतिसर्वस्यो[3]त्पादकत्वम्, इत्यादयो हि धर्माः परमात्मन एव ॥

[पूर्वपक्षयुक्तेः परिहारः]

यत्तु—

'अहमेवाधस्तात्' (छां.उ. 7-25-1)

इत्यादिना, [4]सर्वात्मकत्व[4]मुपदिष्टम्; तत् [5]भूमविशिष्टस्य[5] ब्रह्मणः [6]अहङ्ग्रहेणोपासन[6]-मुपदिश्यते;

'अथातोऽहङ्कारादेशः' (छां.उ. 7-25-1)

इति अहङ्ग्रहोपदेशोपक्रमात्। अहमर्थस्य [7]प्रत्यगात्मनोऽपि[7] हि आत्मा परमात्मा इति, अन्तर्यामिब्राह्मणादिषु उक्तम्। अतः प्रत्यगर्थस्य परमात्मपर्यवसानात् 'अहं'शब्दोऽपि परमात्मपर्यवसायी इति, प्रत्यगात्म[8]शरीरकत्वेन[8] परमात्मानुसन्धानार्थः, अयम् अहङ्ग्रहोपदेशः ।

---

अहङ्ग्रहेणोपासनम्—अहमर्थ-शब्दयोः परमात्मपर्यन्तत्वबुद्ध्या उपासनम्। अहमर्थ-स्येति। (उक्तमुपासनम्) अतस्मिंस्तद्बुद्धिः स्यादित्यत्र (उत्तरम्) ॥

---

1 तदमृतम्—पा　एतदमृतत्वम्—थ,न　2 सर्वात्मत्वम्—न　3 प्राणप्रभुतेस्सर्वस्यो—वा, सर्वस्यो—द　4 सर्वात्मत्व—वा　5 भूमगुणविशिष्टस्य—इ,वा　6 अहङ्ग्रहणोपासन—द
7 प्रत्यगात्मनः—थ　8 शरीरत्वेन—थ

परमात्मनः सर्वशरीरतया सर्वात्मत्वात्, प्रत्यगात्मनोऽप्यात्मा परमात्मा। [1]तदेव,

'अथाऽत[1] आत्मादेशः' (छां.उ. 7-25-2)

इत्यादिना,

'आत्मैवेदं सर्वम्' (छां.उ. 7-25-2)

इत्यन्तेनोच्यते ॥

[उक्तार्थस्य श्रुत्या कण्ठोक्तत्वोपपादनम्]

एतदेव उपपादयितुं, प्रत्यगात्मनोऽप्यात्मभूतात् परमात्मनः, सर्वस्योत्पत्तिरुच्यते–

'तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राणः....आत्मत आकाशः' (छां.उ. 7-26-1)

इत्यादिना। उपासकस्य अन्तर्यामितया उपस्थितात्परमात्मनः सर्वस्योत्पत्तिः इत्यर्थः। अतः परमात्मनः प्रत्यगात्मशरीरकत्वज्ञानप्रतिष्ठार्थम् [2]अहङ्ग्रहोपासनं[2] कर्तव्यम्। तस्मात्, भूमविशिष्टः परमात्मा, इति सिद्धम् ॥८॥

॥ इति भूमाधिकरणम् ॥२॥

---

उपासकस्येति, श्रुतिस्थस्य 'विजानतः' इति पदस्य षष्ठ्यन्तत्वज्ञापनाय ॥ ८ ॥

[सूत्राणि—१) भूमा, २) धर्मोप]

॥ इति भूमाधिकरणम् ॥२॥

---

[1] अथातः—भ [2] अहङ्ग्रहेणोपासनं—भ, आ अहङ्ग्रहणोपासनं—द

## २०. अक्षराधिकरणम् ॥१-३-३॥ (सू. 9-11)

[अधिकरणार्थः—'अक्षर'शब्दवाच्यः प्रधानस्याऽपि आधारतया निर्दिष्टः परमात्मैव ।]

[गार्ग्यक्षरविद्या (बृ.उ. 5-8)]

## ७४. अक्षरमम्बरान्तधृतेः ॥ १-३-९ ॥

[विषयवाक्यप्रदर्शनम्]

वाजसनेयिनः गार्गिप्रश्ने समामनन्ति—

'स होवाच एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति,

अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायम्' (बृ.उ. 5-8-7)

इत्यादि ॥

[संशयप्रकारः]

तत्र संशयः—किम् एतदक्षरं प्रधानम्? जीवो वा? उत परमात्मा?—इति ॥

[सयुक्तिकः पूर्वपक्षः]

किं युक्तम्?

[1]प्रधानम्[1]—इति ।

---

**अक्षरमिति** । पूर्वाधिकरणे स्वे महिम्नि प्रतिष्ठितत्वमुक्तम् । तत्तु परमात्मव्यतिरिक्तस्य श्रूयते, इति शङ्कया सङ्गतिः ॥

**संशय** इति । अक्षरम्—प्रधानं वा? जीवो वा? परमात्मा वा?—इति संशयः । तदर्थम्—लौकिकप्रमाणाविषये शब्दप्रतीतिशैघ्र्यमस्ति, न?—इति । 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' इत्यत्र 'आकाश'शब्दनिर्दिष्टः—किं भूताकाशः? उत अव्याकृताकाशः? —इति । धारणं च किं सत्तामात्रेण? उत प्रशासनेन?—इति च ।

[पूर्वपक्षे] 1. यदा प्रतीतिशैघ्र्यमस्ति, 'आकाश'शब्दवाच्यश्च भूताकाशः, धारणं च सत्तया स्यात्; तदा तद्धारणस्य प्रधानेऽसम्भवात्, तद्धारकम् अक्षरं प्रधानम् ।

---

[सूत्रार्थः । **अक्षरम्**—'एतद्वै तदक्षरं गर्गि' इति श्रुति-निर्दिष्टाक्षरपदाभिधेयम्, परं ब्रह्मैव, **अम्बरान्तस्य**—वायुमदाकाशकारणभूतस्य अव्याकृताकाशशब्दवाच्यस्य प्रधानस्य, **धृतेः**—('कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' इति श्रुत्युक्तात्) धारणात् ज्ञापकात् ।]

अक्षरं तु परं ब्रह्म ह्यव्याकृतधृतेरिह ।
ओतत्वेन च सर्वस्य प्रोतत्वेनाऽक्षरे श्रुतेः ॥ (ब्र.प.मा. ७४)

---

[1] प्रधानमेव—इ.

कुतः ?

'अक्षरात्परतः परः' (मुण्ड.उ. 2-1-2)

इत्यादिषु 'अक्षर'शब्दस्य प्रधाने प्रयोगदर्शनात्, अस्थूलत्वादीनां [1]च तत्र[1] समन्वयात् ॥

[सिद्धान्तिनः पार्श्वस्थस्य वा चोद्यं, तत्परिहारश्च]

'यया तदक्षरमधिगम्यते' (मुण्ड.उ. 1-1-5)

इत्यादिषु परस्मिन्नपि 'अक्षर'शब्दो दृश्यते— इति चेत्,

न ; प्रमाणान्तरप्रसिद्ध-श्रुतिप्रसिद्धयोः, प्रमाणान्तरप्रसिद्धस्य प्रथमप्रतीतेः ; प्रतीतपरिग्रहे [2]विरोधाभावात् । किं च[2]—

'यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्याः' (बृ.उ. 5-8-6)

इत्यारभ्य, सर्वस्य [3]कालत्रितयवर्तिनः[3] कारणभूताकाशाधारत्वे प्रतिपादिते,

'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' (बृ.उ. 5-8-6)

इति, आकाशस्यापि कारणं तदाधारभूतं किम् ?—इति पृष्टे, प्रत्युच्यमानम् अक्षरं, सर्वविकारकारणतया तदाधारभूतं, प्रमाणान्तरप्रसिद्धं प्रधानम्—इति प्रतीयते । अतः अक्षरं प्रधानम् ॥

[सिद्धान्तारम्भः]

इति प्राप्ते, उच्यते—अक्षरमम्बरान्तधृतेः । अक्षरम्, परं ब्रह्म ।

2. यदा, 'आकाश'शब्दवाच्यः अव्याकृताकाशः, धारणं च सत्तामात्रेण ; तदा जीवेऽपि तत्सम्भवात्, तद्धारकम् अक्षरं, जीवः—[इति फलफलिभावः] ।

राद्धान्ते—यदा शब्दप्रतीतिशैघ्र्यस्य लौकिकप्रमाणगोचरत्वम् अप्रयोजकम्, 'आकाश' शब्दवाच्यश्च अव्याकृताकाशः, धारणं च प्रशासनेन ; तदा, तस्य जीवेष्वसम्भवात्, तदाधारभूतमक्षरम्, परमात्मा—[इति फलफलिभावः] (श्रु.प्र) ॥

**न प्रमाणान्तरेति**। अनुमानस्य प्रत्यक्षमात्रापेक्षा; श्रुतेस्तु व्युत्पत्त्यादौ उभयापेक्षाऽस्ति। अतः आनुमानिकादक्षरात्, श्रुतिप्रतिपन्नस्य विलम्ब इति, लौकिकालौकिकयोः लौकिकस्य प्रसिद्धिप्राथम्यात् प्राबल्यम्। श्रुतिलिङ्गादिष्वपि हि शीघ्रधीहेतुत्वात् प्राबल्यमिति भावः। **विरोधाभावादिति**। [अतः] 'अक्षर'शब्दस्य प्रधानपरत्वमित्यर्थः ॥

**अम्बरान्तेति**। 'अन्त'शब्दः अवधिवचनः। कार्यस्य अम्बरस्य, देशतः कालत-

[1] तत्र—थ, च तत्रैव—वा [2] विरोधाभावात्—च, ठ. [3] कालत्रयवर्तिनः—वा.

कुतः ?

अम्बरान्तधृतेः ; अम्बरस्य—आकाशस्य, अन्तः—[1]पारभूतम्[1] अव्याकृतम्, अम्बरान्तः। तस्य धृतेः—तदाधारतया अस्य अक्षरस्य उपदेशात्, इति यावत् ॥

[सूत्राशयः]

अयमर्थः—

'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' (बृ उ. 5-8-6)

इत्यत्र 'आकाश'शब्दनिर्दिष्टं, न वायुमदम्बरम् ; अपि तु तत्पारभूतम् अव्याकृतम्। अतः तस्य अव्याकृतस्याऽपि आधारत्वेन उच्यमानम् अक्षरं, न अव्याकृतं [2]भवितुमर्हति—इति[2] ॥

[आशङ्कापूर्वकम् उक्तार्थे गमकप्रदर्शनम्]

ननु 'आकाश'शब्दनिर्दिष्टः, न वायुमान्—इति कथमवगम्यते ?

उच्यते—

'यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावा-पृथिवी
इमे यद्भूतं च [3]भवच्च[3] भविष्यच्चेत्याचक्षते आकाश
एव तदोतं च प्रोतश्च' (बृ.उ. 5-8-6)

इत्युक्ते, [4]त्रैकाल्यवर्तिनो[4] विकारजातस्य आधारतया निर्दिष्टः आकाशः, न वायुमदाकाशो भवितुमर्हति ; तस्याऽपि विकारान्तर्गतत्वात्। अतः अत्र आकाशशब्दनिर्दिष्टं भूतसूक्ष्मम्, इति प्रतीयते। ततः तस्याऽपि भूतसूक्ष्मस्य आधारभूतं किम् ?—इति पृच्छयते—

'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' (बृ.उ. 5-8-5)

इति। अतः तदाधारतया निर्दिश्यमानम् अक्षरं, न प्रधानं भवितुमर्हति ॥

---

श्चावधिः, कारणम् ; नियतपूर्वभाविनः कारणत्वात्, कार्यं प्रति कारणतत्त्वानाम् आवरणतया बहिर्विद्यमानत्वाच्च। अतः 'अम्बरान्त'शब्दः अव्याकृतवाची इति भावः ॥

नन्विति। व्युत्पत्तिसिद्धार्थलङ्घनम् अयुक्तम् ; अपवादाभावात् इत्यर्थः।

उच्यत इति। अर्थविरोधात् न वायुमदम्बरग्रहणम् इत्यर्थः। न हि स्वयं विकारान्तर्भूतः, कृत्स्नविकारजातस्याधारो भवितुमर्हति ॥

---

[1] परभूतम्—थ　[2] भवितुमर्हति—थ　[3] भव्यच्च—द　[4] त्रैलोक्यवर्तिनः—वा.

[आशङ्कितार्थस्य अनुवादपूर्वकं निरासः]

यत्तु—श्रुतिप्रसिद्धात् प्रमाणान्तरप्रसिद्धं प्रथमं प्रतीयते—इति,

तन्न ; 'अक्षर'शब्दस्य अवयवशक्त्या स्वार्थप्रतिपादने प्रमाणान्तरानपेक्षणात्। सम्बन्धग्रहणदशायाम् अर्थस्वरूपं येन प्रमाणेन अवगम्यते, न तत् प्रतिपादनदशाया-मपेक्षणीयम् ॥९॥

[उत्तरसूत्रावतारिका शङ्का]

एवं तर्हि—'अक्षर'शब्दनिर्दिष्टः जीवोऽस्तु ; तस्य, भूतसूक्ष्मपर्यन्तस्य कृत्स्नस्य अचिद्वस्तुनः [1]आधारत्वोपपत्तेः[1], अस्थूलत्वाद्युच्यमानविशेषणोपपत्तेश्च ।

'अव्यक्तमक्षरे लीयते' (सुबा.उ. 2)

'यस्याऽव्यक्त शरीरं....यस्याक्षरं शरीरम्' (सुबा.उ. 7)

'क्षरःसर्वाणि भूतानि कूटस्थोऽक्षर उच्यते' (भ गी 15-16)

इत्यादिषु, प्रत्यगात्मन्यपि अक्षरशब्दप्रयोगदर्शनात्—इत्यत्र उत्तरम् ;

## ७५. सा च प्रशासनात् ॥ १-३-१० ॥

सा च—अम्बरान्तधृतिः, अस्य अक्षरस्य प्रशासनादेव भवति ; इत्युपदिश्यते—

'एतस्य वा अक्षरस्य प्रशासने गार्गि ! सूर्याचन्द्रमसौ विधृतौ तिष्ठतः ।
एतस्य वा अक्षरस्य प्रशासने गार्गि ! द्यावापृथिव्यौ विधृते तिष्ठतः ।
एतस्य वा अक्षरस्य प्रशासने गार्गि ! निमेषा मुहूर्ता अहोरात्राण्यर्ध-मासा मासा [2]ऋतवःसंवत्सरा इति[2] विधृतास्तिष्ठन्ति' (बृ.उ. 5-8-8)

---

**अक्षरशब्दस्येति** । अवयवशक्तिरेव अर्थप्रतिपत्तिकारणमिति, न प्रमाणान्तरमपेक्षितम् । न हि 'दण्डि'शब्दः स्वार्थप्रतिपादने दण्डदेवदत्तग्राहिप्रत्यक्षापेक्षः [इत्याशयः] ॥

**अव्यक्तमिति** । 'अव्यक्तमक्षरे' इति अव्यक्तस्य पृथगुपादानात् 'अक्षर'शब्दः जीवपरः ; न प्रधानपरः, इति ज्ञापनाय अव्यक्तमुपात्तम् ।

---

[सूत्रार्थः। **सा च**—पूर्वमुक्ता 'अम्बरान्त'शब्दवाच्यप्रधानधृतिश्च, **प्रशासनात्**—(अक्षरकृतात्) प्रकृष्टात् शासनात् अप्रतिहताज्ञारूपात्, (भवतीति, तादृशमक्षरम् परं ब्रह्मैव; न जीवः) ।]

प्रशासने त्वक्षरस्य विधृताविति शंसनात् ।
शासनात् सा विधृतिरित्यज्ञो जीवो न कारणम् ॥ (ब्र.प.मा. ७५)

---

[1] आधा तोपपत्तेः—थ. [2] ऋतवस्संवत्सरा—द

इत्यादिना। प्रशासनम्—प्रकृष्टं शासनम्। न च—[1]ईदृशं स्वशासनाधीन[1]सर्ववस्तुविधरणं, बद्ध-मुक्तोभयावस्थस्याऽपि प्रत्यगात्मनः सम्भवति। अतः पुरुषोत्तम एव प्रशासितृ अक्षरम् ॥१०॥

## ७६. अन्यभावव्यावृत्तेश्च ॥ १–३–११ ॥

[प्रशासितुरक्षरस्य प्रकृति-पुरुषाधिकता]

अन्यभावः - अन्यत्वम्, प्रधानादिभावः। अस्य अक्षरस्य परमपुरुषादन्यत्वं [2]वाक्यशेषे[2] व्यावर्त्यते—

[3]तद्वा एतदक्षरं[3] गार्गि! अदृष्टं द्रष्टृ, अश्रुतं श्रोतृ, अमतं मन्तृ,
अविज्ञातं विज्ञातृ, नाऽन्यदतोऽस्ति द्रष्टृ, नाऽन्यदतोऽस्ति श्रोतृ,
नाऽन्यदतोऽस्ति मन्तृ, नाऽन्यदतोऽस्ति विज्ञातृ, एतस्मिन्नु
खल्वक्षरे गार्गि! आकाश ओतश्च प्रोतश्च' (बृ.उ 5-8-10)

---

प्रकृष्टं शासनमिति। क्वचिदपि अप्रतिहतत्वेन विषयप्रकर्षात्, शासनस्य प्रकर्षः। प्रकर्षस्य निवारकाभावात्, शासनस्य अम्बरान्तविषयत्वमपि सिद्ध्यतीति हृदयम्। अनपोदितात् शासनप्रकर्षात् 'सर्वस्य वशी.... सर्वमिदं प्रशास्ति' इति श्रुत्यन्तरानुग्रहाच्च अम्बरधृतिरपि प्रशासनाधीनेति। अतः—अम्बरान्तधृतिः प्रशासनादेव सिद्ध्यतीति यतः, तत एवेत्यर्थः। 'प्रशासितारं सर्वेषां.... विद्यात्तु पुरुषं परम्' इति, 'उत्तमः पुरुषस्त्वन्यः' इत्यादिवचनाभिप्रायेण 'पुरुषोत्तम एव प्रशासितृ अक्षरम्' इत्युक्तम् ॥१०॥

व्यावर्त्यते—निवर्त्यते, निवर्तकधर्मः प्रतिपाद्यते, इत्यर्थः। ततश्च सूत्रस्थ'व्यावृत्ति' शब्दो व्यावर्तकधर्मपरः इति दर्शितं स्यात्। तेन विषयवाक्यानुगुण्यं सूत्रस्य स्यात् (श्रु.प्र) ॥

---

[सूत्रार्थः। अन्यभावस्य—(अक्षरशब्दवाच्ये वस्तुनि परमपुरुषात्) भेदस्य, व्यावृत्तेश्च—(परमपुरुषाद्भेदवति प्रधाने जीवे च असम्भावनीयार्थस्य सर्वैरदृष्टत्वे सति द्रष्टृत्वात्मकस्य वाक्यशेषे प्रतिपादनेन) निवारणात्।]

अदृष्टं द्रष्टृति श्रुत्या ह्यन्यभावनिषेधतः।
अक्षरं परमात्मा हि जगत्कारणमुच्यते॥ (ब्र.प.मा. ७६)

---

[1]ईदृशं शासनाधीन—थ, इदं स्वशासनाधीनं—द [2] वाक्यशेषेण—थ. [3] एतदक्षरं—इ.

इति। अत्र द्रष्टृत्व-श्रोतृत्वाद्युपदेशात्, [1]अस्य[1] अक्षरस्य अचेतनभूतप्रधानभावः व्यावर्त्यते। सर्वैः अदृष्टस्यैव सतः सर्वस्य द्रष्टृत्वाद्युपदेशाच्च, प्रत्यगात्मभावः व्यावर्त्यते। अतः इयम् अन्यभावव्यावृत्तिः, अस्य अक्षरस्य परमपुरुषतां [2]द्रढयति[2]।

एवं वा अन्यभावव्यावृत्तिः। अन्यस्य सद्भावव्यावृत्तिः—अन्यभावव्यावृत्तिः। [3]यथा[3] एतदक्षरम् अन्यैरदृष्टं सत्, अन्येषां द्रष्टृ च सत् स्वव्यतिरिक्तस्य समस्तस्य आधारभूतम्; एवम् '[4]अन्येन[4] अदृष्टम्, एतस्य द्रष्टृ च सत्, एतस्य आधारभूतम् अन्यन्नास्ति' इति वदन्,

'नाऽन्यदतोऽस्ति द्रष्टृ' (बृ.उ. 5-8- 0)

इत्यादिवाक्यशेषः, अन्यस्य सद्भावं व्यावर्तयन्, अस्य अक्षरस्य प्रधानभावं प्रत्यगात्मभावं च प्रतिषेधति॥

---

अत्र—अदृष्टमिति वाक्ये। द्रष्ट्रादिशब्दाः रूप-शब्दप्रभृतिबाह्याक्षविषयाणां, मन्तव्याध्यवसेयाद्यन्तःकरणविषयाणां च साक्षात्कर्तृवाचकाः। शासनस्य शासितव्यवस्तुदर्शनसाकाङ्क्षत्वात्, 'न दृष्टेर्द्रष्टारम्' इत्यादिना परस्य [ब्रह्मणः] श्रवण-मननादिकर्तृत्वनिषेधेन, तेषाम् अयोग्यत्वात् 'पश्यत्यचक्षुः' इति रूपादिसाक्षात्कर्तृत्वश्रवणाच्च। **सर्वैः**—योगिभिः। सर्वशब्दः रूप–तदाश्रयादिषु एकैकवर्गकात्स्न्र्यपरः। अदृष्टत्वादिविशेषितं द्रष्टृत्वादिकं प्रत्यगात्मव्यावर्तकम् इत्यर्थः। **अश्रुतम्**—शब्दश्रवणदशायामज्ञातम्। **अमतम्**—स्थाणुपुरुषाद्यर्थविचारदशायां तद्विषयवत् अप्रतिपन्नम्। **अविज्ञातम्**—अध्यवसायदशायां घटादिवत् स्वस्वरूपवच्च अनवगतम्। अत एव हि विशेषितं द्रष्टृत्वादिकं परमात्मासाधारणम्॥

**यथेति**। यथा 'अस्मिन् ग्रामे देवदत्त एव पुरुषः, नाऽन्यः' इत्युक्ते, न पुरुषमात्रनिषेधः; अपि तु प्रस्तुततुल्यपुरुषान्तरनिषेधः स्यात्; पुरुषान्तराणां प्रमाणसिद्धतया निषेद्धुमशक्यत्वात्; एवमिहापि द्रष्ट्राद्यन्तराणां प्रामाणिकत्वात्, प्रकृततुल्यद्रष्ट्रादिनिषेधपरमिदं वाक्यमित्यभिप्रायेण प्रकृतगुणविशिष्टत्वमुक्तम्। **आधारभूतम्**—प्रशासनेन धारकम्। अक्षरादन्यत् समस्तजगतः प्रशासनेन धारकं, तेन अदृष्टं, द्रष्टृ, नास्तीत्यर्थः। **अन्यस्येत्यादि**। सूत्रस्थैः अन्य-भाव-व्यावृत्तिशब्दैः, श्रुतिवाक्यस्थाः **'अन्यत्, अस्ति, न'** इति शब्दाः प्रत्यभिज्ञाप्यन्ते इति भावः। [**प्रधानभावम्**—प्रकृत्यात्मकताम्]॥

---

[1] एतस्य—थ. [2] प्रथयति—द. [3] यत्—थ. [4] अनेन—थ

[सूत्रस्थ 'च'शब्दस्य आशयः]

किं च—

'एतस्य वा अक्षरस्य प्रशासने गार्गि! ददतो मनुष्याः प्रशंसन्ति,
यजमानं देवाः, दर्वीं पितरोऽन्वायत्ताः' (बृ.उ. 5-8-8)

इति, श्रौतं स्मार्तं च याग-दान-होमादिकं सर्वं कर्म यस्य आज्ञया प्रवर्तते ; तदक्षरं [1]परब्रह्मभूतः[1] पुरुषोत्तम एव—इति विज्ञायते।

अपि च—

'यो वा एतदक्षरं गार्गि! अविदित्वाऽस्मिँल्लोके जुहोति, यजते,
तपस्तप्यते, बहूनि वर्षसहस्राणि ; अन्तवदेवास्य तद्भवति।
यो वा एतदक्षरं गार्गि! अविदित्वाऽस्माँल्लोकात्प्रैति ; स कृपणः।
[2]अथ य[2] एतदक्षरं गार्गि! विदित्वाऽस्माँल्लोकात्प्रैति ; स ब्राह्मणः'
(बृ.उ. 5-8-9)

इति, यदज्ञानात् संसारप्राप्तिः, यज्ज्ञानाच्च अमृतत्वप्राप्तिः, तदक्षरं परं ब्रह्मैव—इति सिद्धम् ॥११॥

॥ इति अक्षराधिकरणम् ॥३॥

---

**किं च** इति, चशब्दार्थमाह। 'च'शब्दः पूर्ववत् न उक्तसमुच्चयपरः ; अपि तु अनुक्तसमुच्चयपरः इत्यभिप्रायः। **अन्वायत्ताः**—अनुवशाः। इदं पदं, देव-मनुष्य-पितृसाधारणम्। द्वितीयान्तपदानां **प्रशंसन्ती**त्यनेनाऽन्वयः (श्रु.प्र)।

[**यदज्ञाना**दिति। अयमेवाऽर्थः अन्यत्र श्रूयते—

'यदप्रबोधात् कार्पण्यं ब्राह्मण्यं यत्प्रबोधतः।
तदक्षरं प्रबोद्धव्यं यथोक्तस्वरवर्त्मना॥' इति॥] ॥११॥

[सूत्राणि—१) अक्षर  २) सा च प्रशा  ३) अन्यभाव]

॥ इति अक्षराधिकरणम् ॥३॥

---

[1] परं ब्रह्मभूतः—थ  [2] अथ—न

११. ईक्षतिकर्माधिकरणम् ॥ १–३–४ ॥

[अधिकरणार्थः—'पुरुषमीक्षते' इत्युक्तेक्षणक्रियाकर्मभूतः 'पुरुष'शब्दवाच्योऽर्थः, परमात्मैव ; न समष्टिपुरुषः ]

[त्रिमात्रप्रणवपुरुषविद्या (प्रश्न.उ. 5-5)]

## ७७. ईक्षतिकर्म व्यपदेशात् सः ॥ १–३–१२ ॥

[विषयवाक्यप्रदर्शनम् ]

**आथर्वणिकाः सत्यकामप्रश्ने अधीयते—**

**'यः पुनरेतं त्रिमात्रेणोमित्यनेन(त्येते)नैवाक्षरेण [1]परं पुरुष[1]मभिध्यायीत, स तेजसि सूर्ये सम्पन्नः ; यथा पादोदरस्त्वचा विनिर्मुच्यते, एवं [2]ह वै[2] स पाप्मना विनिर्मुक्तः, स सामभिरुन्नीयते ब्रह्मलोकम् स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते'** (प्रश्न. उ. 5-5)

**इति ॥**

---

अत्र **सः** इत्युक्तिः, अस्मिन् पादे सर्वाधिकरणेषु साध्यप्रतिज्ञानुवृत्त्यर्था । यथा प्रथमपादे 'भेदव्यपदेशाच्चाऽन्यः' इति 'अन्य'शब्दोक्तिः, यथा च द्वितीये, 'अत एव च स ब्रह्म' इति 'ब्रह्म'शब्दोक्तिः, यथा चतुर्थे 'वदतीति चेन्न प्राज्ञः' इति 'प्राज्ञ'शब्दोक्तिश्च ; तद्वत् ।

पूर्वम् 'अदृष्टं द्रष्टृ' इति परमात्मनः द्रष्टृत्वमुक्तम् ; तर्हि ईक्षतिकर्मत्वेनोक्तः न परमात्मा—इति शङ्कया सङ्गतिः ।

**सामभिः**—'एतत् सामगायन्नास्ते' इतिवत् सामगानसहितैः ।

---

[सूत्रार्थः । **ईक्षतिकर्म**—'पुरिशयं पुरुषमीक्षते' इत्युक्तेक्षणक्रियाविषयभूतं, 'पुरुषमभिध्यायीत' इति ध्यानविषयभूतं च वस्तु, **सः**—परमात्मा, **व्यपदेशात्**—(ईक्षति-ध्यायति-कर्मभूतमर्थमुद्दिश्य परमात्मधर्माणां शान्तत्वाऽमृतत्वादीनां) श्रुतौ स्पष्टतया कथनात ।]

**ईक्षते पुरुषमिति ह्यजरत्वादिशंसनात् ।**
**चतुर्मुखादन्य इति पुरुषोऽसौ परः पुमान् ।। (ब्र.प.मा. ७७)**

---

1 परमपुरुष—द. 2 हैव—द.

[ध्यैधातोः ईक्षधातोश्चात्र समानकर्मकता]

**अत्र 'ध्यायतीक्षति'शब्दौ एकविषयौ ; ध्यानफलत्वात् ईक्षणस्य ।**

**'यथाक्रतुरस्मिँल्लोके पुरुषः'** (छां.उ. 3-14-1)

**इति न्यायेन, ध्यानविषयस्यैव प्राप्यत्वात्,**

**'[1]परं पुरुषम्[1]'** (प्रश्न.उ. 5-5)

**इति, उभयत्र कर्मभूतस्यार्थस्य प्रत्यभिज्ञानाच्च ॥**

[संशयाकारप्रदर्शनम्]

**तत्र संशय्यते—[2]किमिह[2],**

**'[3]परं पुरुषम्[3]'** (प्रश्न.उ. 5-5)

**इति निर्दिष्टः, जीवसमष्टि[4]रूपः अण्डाधिपति[4]श्चतुर्मुखः ? उत सर्वेश्वरः पुरुषोत्तमः? — इति ।।**

---

**अत्र ध्यायतीति** । यथोपासनफलप्राप्तिन्यायात् ध्यायतिकर्मैव ईक्षतिकर्म । एकत्र, 'परं पुरुषम्' इति, अन्यत्र 'परात् परं पुरुषम्' इति च श्रूयते । यत्र पञ्चम्यन्तपदं नाऽस्ति तत्राऽपि अर्थसामर्थ्यात् तत् प्राप्नोति इति भावः ॥

**तत्र संशय्यत** इति । किं ध्यायति-ईक्षतिकर्म, चतुर्मुखः ? उत परमात्मा ? तदर्थम्–शान्तत्वाजरत्वादयः, किं मुख्याः ? उत अमुख्याः ? तदर्थम्–किं 'जीवघन'शब्देन, चतुर्मुख-व्यतिरिक्तस्य ग्रहणम् ? उत तस्याऽपि ग्रहणम् ?—इति । किमत्र, 'ब्रह्मलोक'शब्दः, चतुर्मुख-स्थानपरः ? उत परमव्योमपरः ? किम् ईक्षतिकर्मविषये वाक्ये, 'यत्तत् कवयो वेदयन्ते' इति वैष्णवं पदं प्रत्यभिज्ञाप्यते ? उत न ?—इति ।

पूर्वपक्षः—यदा प्रत्यभिज्ञानासम्भवात् 'ब्रह्मलोक'शब्दस्य चतुर्मुखलोकपरत्वम्, यदा 'जीवघन'शब्देन चतुर्मुखस्याऽग्रहणम् ; तदा शान्तत्वादीनाममुख्यत्वात्, ध्यायतीक्षतिकर्म, चतुर्मुखः स्यात् [इति] ।

सिद्धान्तः—यदा वैष्णवपदप्रत्यभिज्ञानेन 'ब्रह्मलोक'शब्दः परमव्योमवाची, यदा च 'जीवघन'शब्देन चतुर्मुखस्याऽपि ग्रहणम् ; तदानीम्, शान्तत्वाजरत्वादीनां मुख्यत्वात्, ध्यायतीक्षतिकर्म, परमात्मा इति ॥

---

[1] परमपुरुषम्—थ,द [2] किमिहायं—वा, किमयं—द [3] परमपुरुषः—द

[4] रूपाण्डाधिपति—न.

[सयुक्तिकः पूर्वपक्षः]

किं युक्तम्?

समष्टिक्षेत्रज्ञः—इति।

कुतः?

'स यो ह वै तद्भगवन्! मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत,
कतमं वाव स तेन लोकं जयति' (प्रश्न.उ. 5-1)

इति प्रक्रम्य, एकमात्रं प्रणवमुपासीनस्य, मनुष्यलोकप्राप्तिम् अभिधाय, द्विमात्रमुपासीनस्य अन्तरिक्षलोकप्राप्तिम् अभिधाय, त्रिमात्रमुपासीनस्य [1]प्राप्यतया अभिधीयमानः[1] ब्रह्मलोकः, अन्तरिक्षात् परः जीवसमष्टिरूपस्य चतुर्मुखस्य लोकः—इति विज्ञायते। तद्गतेन च ईक्ष्यमाणः तल्लोकाधिपतिः चतुर्मुख एव।

'एतस्माज्जीवघनात् परात्परम्' (प्रश्न.उ 5-5)

इति च, देहेन्द्रियादिभ्यः परात् देहेन्द्रियादिभिः सह घनीभूतात् [2]जीव[2]व्यष्टिपुरुषात् ब्रह्मलोकवासिनः समष्टिपुरुषस्य चतुर्मुखस्य परत्वेन, उपपद्यते। अतः अत्र निर्दिश्यमानः [3]परः पुरुषः[3], [4]समष्टिपुरुषश्चतुर्मुख एव[4]। [5]एवं चतुर्मुखत्वे निश्चिते[5], अजरत्वादयः यथाकथञ्चित् [6]नेतव्याः[6]॥

[सिद्धान्तारम्भः]

इति प्राप्ते, प्रचक्ष्महे—[7]ईक्षति[7]कर्म व्यपदेशात् सः। ईक्षतिकर्म, सः—परमात्मा।

कुतः?

व्यपदेशात्; व्यपदिश्यते हि ईक्षतिकर्म, परमात्मत्वेन। तथा हि, ईक्षतिकर्मविषयतया उदाहृते श्लोके—

---

**चतुर्मुखस्य लोक** इति। भूम्यन्तरिक्षक्रमप्राप्तः चतुर्मुखलोकः इत्यर्थः। **एतस्मादिति**। 'जीवघनात् परात् परम्' इति निर्देशः, **जीवघन-परशब्दयोः** सामानाधिकरण्येन उपपद्यते इत्यर्थः। **समष्टीति**। ब्रह्मणः समष्टिपुरुषत्वं देवतिर्यग्भावाद्यपेक्षया। **नेतव्या** इति। चिरकालस्थायित्वाभिप्रायेण वा, चतुर्मुखस्यैव परिशुद्धावस्थस्वरूपपरत्वेन वा निर्वाहः इति भावः। अत एव, उपक्रमे 'परं चापरं च' इति निर्देशश्च कृतनिर्वाहः॥

---

[1] अभिधीयमानः—द [2] जीवस्य—न [3] परमपुरुषः—इ,वा [4] चतुर्मुखः समष्टिपुरुष एव—थ, चतुर्मख एवेति—द [5] निश्चिते—द [6] नेयाः—वा [7] ईक्षण—श्रा

'तमोङ्कारेणैवाय(त)नेनान्वेति विद्वान्, यत्तच्छान्तमजरममृतमभयं परं च' (प्रश्न.उ. 5-7)

इति। 'परं, शान्तम्, अजरम्, [1]अभयम्, अमृतम्' इति हि[1] परमात्मन एव एतद्रूपम्;

'एतद[2]मृतमभय[2]मेतद्ब्रह्म' (छां.उ 4-15-1)

इत्येवमादिश्रुतिभ्यः।

'एतस्माज्जीवघनात्परात्परम्' (प्रश्न.उ. 5-5)

इति च परमात्मन एव व्यपदेशः, न [3]चतुर्मुखस्य; तस्याऽपि[3] 'जीवघन'शब्द-गृहीतत्वात्। यस्य हि कर्मनिमित्तं देहित्वं, सः 'जीवघनः' इत्युच्यते, चतुर्मुखस्याऽपि तत् श्रूयते—

'यो ब्रह्माणं विदधाति पूर्वम्' (श्वे.उ. 6-18)

इत्यादौ॥

[चतुर्मुखपरत्वे युक्तिः, तन्निरासश्च]

यत्पुनरुक्तम्—अन्तरिक्षलोकस्योपरि निर्दिश्यमानः ब्रह्मलोकः चतुर्मुखलोकः इति प्रतीयते, अतः तत्रस्थः चतुर्मुखः—इति।

तदयुक्तम्;

'यत्तच्छान्त[4]मजरममृतमभयम्[4]' (प्रश्न.उ. 5-7)

इत्यादिना ईक्षतिकर्मणः परमात्मत्वे निश्चिते सति, [5]ईक्षितुः स्थानतया[5] निर्दिष्टः ब्रह्मलोकः, न क्षयिष्णुः चतुर्मुखलोको भवितुमर्हति॥

---

**एतद्रूपम्**—नपुंसकान्तशब्दनिर्दिष्टं स्वरूपम्। चतुर्मुखपरत्वे हि पुल्लिङ्गान्तता स्यात्। **एतदमृतमिति**। अनेन **'सः'** इति सौत्रपदस्य प्रयोजनं दर्शितं भवति। अधिकारादेव साध्यप्रतिज्ञासिद्धेः, तस्य प्रयोजनं वक्तव्यम्। **शान्त....मभयमिति** व्यपदेशस्य, कथं परमात्म-साधकत्वम्? इत्यपेक्षायां श्रुत्यन्तरेषु परमात्मनः तादृक्त्वेन प्रसिद्धेः इति वक्तव्यम्। अतः तथात्वेन श्रुत्यन्तरप्रसिद्धिद्योतनं **सः** इति पदस्य प्रयोजनमिति। **चतुर्मुखस्याऽपि** इति। सशरीरत्वादेव हि चतुर्मुखत्वम् इति भावः। [**तत्**—कर्मनिमित्तम्।] **आदौ** इति 'आदि'पदेन 'यो वै वेदांश्च प्रहिणोति तस्मै' इति पादोऽपि विवक्षितः। तेन....सृज्यत्वात्, उपदेशसापेक्षज्ञान-प्रसरतया सङ्कुचितज्ञानत्वेन कर्मवश्यत्वाच्च चतुर्मुखस्य **जीवघन**शब्दगृहीतत्वसिद्धिः (श्रु.प्र)॥

---

[1] अमृतमभयमिति—द [2] भयमेतदमृत—थ [3] चतुर्मुखस्याऽपि—द
[4] मजरमभयम्—थ, मजरममृतम्—द [5] क्षेमस्थानतया—द

[परमात्मस्थानपरत्वे अभ्युच्चायकयुक्तिः]

किं च—

'यथा पादोदरस्त्वचा विनिर्मुच्यते, एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम्' (प्रश्न.उ. 5-5)

इति सर्वपापविनिर्मुक्तस्य प्राप्यतया उच्यमानम्, न चतुर्मुखस्थानम्। अत [1]एव च[1] उदाहरणश्लोके इममेव ब्रह्मलोकमधिकृत्य श्रूयते—

'यत्तत्कवयो वेदयन्ते' (प्रश्न.उ. 5-7)

इति। कवयः—सूरयः। सूरिभिः दृश्यमानं च वैष्णवं पदमेव,

'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' (सुबा.उ. 6)

इत्येवमादिभ्यः। न च अन्तरिक्षात्परः चतुर्मुखलोकः; मध्ये स्वर्गलोकादीनां [2]बहूनां सद्भावात्[2]। [3]अतः[3]

'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारः तस्माद्विद्वाने-तेनै[4]वायनेनैक[4]तरमन्वेति' (प्रश्न.उ. 5-2)

इति प्रतिवचने, यत् अपरं कार्यं [5]ब्रह्म निर्दिष्टं[5], तत् ऐहिकामुष्मिकत्वेन द्विधा विभज्य, एकमात्रं प्रणवमुपासीनानाम् ऐहिकं मनुष्यलोकावाप्तिरूपं फलम् अभिधाय, [6]द्विमात्र[6]मुपासीनानाम् आमुष्मिकम् अन्तरिक्षशब्दोपलक्षितं फलं च अभिधाय, त्रिमात्रेण परब्रह्म-

---

**कवयः**—क्रान्तदर्शिनः। अकर्मवश्यत्वात् असङ्कुचितज्ञानाः। **सूरयश्च** ज्ञानाधिकाः प्रसिद्धाः। अतः अर्थवशात् सूरिप्रत्यभिज्ञानम् इत्यर्थः। **एवमादिभ्य** इति **आदिशब्देन**, 'तद्विप्रासो विपन्यवः' 'यत्रर्षयः प्रथमजा ये पुराणाः' 'यत्र पूर्वे साध्याः सन्ति देवाः' इत्यादिवाक्यानि विवक्षितानि। अजरत्वादिभिः निश्चितपरमात्मभावस्य स्थानत्वात्, सर्वकर्मविनिर्मुक्तस्य प्राप्यस्थानत्वात्, सूरिभिर्दृश्यत्वप्रत्यभिज्ञानाच्च न चतुर्मुखलोकः इत्यर्थः। **अतः**—उदाहृतबहुवाक्यस्वारस्यानुगुण्यात्। **ब्रह्म यदोङ्कारः** इति सामानाधिकरण्यं, वाच्यवाचकभावनिबन्धनम्; अनन्तरम् **एतेन, एकतरम्** इति पदाभ्याम् ओङ्कारस्य ब्रह्मणश्च निर्देशात्। **अयनेन**—उपायभूतेन। एकतरम्—कार्यकारणब्रह्मणोरन्यतरत्। **विभज्येति**। उपरि पृथक्फलत्वेन कीर्तनात् विभागोऽभिप्रेतः इत्यर्थः ॥१२॥

---

1 एव – द  2 सद्भावात्—थ  3 अत एव—वा  4 वायतनेनैक—वा
5 ब्रह्मनिर्दिष्टम्—द  6 द्विमात्रप्रणव—ई

वाचिना प्रणवेन [1]परं पुरुषं[1] ध्यायतां, परमेव ब्रह्म प्राप्यतया उपदिशति — इति सर्वं समञ्जसम् । [2]अतः[2] ईक्षतिकर्म, परमात्मा ॥१२॥

॥ इति ईक्षतिकर्माधिकरणम् ॥४॥

[सूत्रम् । १) ईक्षतिकर्म]

॥ इति ईक्षतिकर्माधिकरणम ॥४॥

[1] परमपुरुषं—वा [2] ततः—थ

२२. दहराधिकरणम् ॥ १–३–५ ॥ (सू. 13–22)

[अधिकरणार्थः—दहराकाशशब्दवाच्यः परमात्मैव ; न भूताकाशः, नाऽपि प्रत्यगात्मा ।]

[दहरविद्या (छां.उ 8–1)]

## ७८. दहर उत्तरेभ्यः ॥ १–३–१३ ॥

[विषयवाक्यप्रदर्शनम्]

[1]इदमामनन्ति छन्दोगाः[1]—

'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' (छां.उ 8–1–1)

इति ॥

[संशयाकारप्रदर्शनम्]

तत्र सन्देहः—किमसौ हृदयपुण्डरीक[2]मध्यवर्ती दहराकाशः[2], महाभूतविशेषः ? उत प्रत्यगात्मा ? अथ परमात्मा ?—इति ॥

---

दहर इति । पूर्वाधिकरणे 'परात्परं पुरिशयं पुरुषम्' इत्युक्तस्य परमात्मत्वं साधितम् । अत्र पुरिशयस्य 'आकाश'शब्दवाच्यस्य अपरमात्मत्वं निरस्यते [इत्यादिका] सङ्गतिः । परस्मिन् अन्वेष्टव्यान्तरानुपपत्तेः, पक्षान्तरद्वयेऽपि उपमानोपमेयभावाद्यनुपपत्तेश्च संशयः ।

सन्देह इति । किं दहराकाशः, भूताकाशः ? उत जीवः ? अथ परमात्मा ?—इति । तदर्थम्—अन्वेष्टव्यान्तरनिर्देशः, किं दहराकाशस्य परमात्मत्वविरोधी ? उत न ? 'तस्मिन् यदन्तः' इति निर्देशः, किं दहराकाशस्य गुणजातविषयः ? उत अर्थान्तरपरः ? 'एष आत्मा' इति वाक्योक्तम् अपहतपाप्मत्वादिकम्, किं प्रजापतिवाक्योक्तजीवधर्मः ? उत न ?—इति । जीवधर्मत्वे, अपहतपाप्मत्वादिश्रुतिस्वारस्यमस्ति ? उत न ?—इति विचारः ।

---

[सूत्रार्थः । **दहरः**—आकाशशब्दसमानाधिकरणदहरशब्दाभिधेयः, **सः**—परमात्मैव ; **उत्तरेभ्यः**—'एष आत्माऽपहतपाप्मा' इत्याद्युत्तरवाक्यप्रतिपाद्येभ्यः परमात्मासाधारणेभ्यो धर्मेभ्यः ज्ञापकीभूतेभ्यः ।]

दहरोऽस्मिन्नन्तर इत्युक्तो हि दहरः परः ।
उत्तरेभ्यस्तु वाक्येभ्यः प्रतिपन्नगुणान्वयात् ॥ (ब्र.प.मा. ७८)

---

[1] इदमाम्नायते छान्दोग्ये—द [2] मध्यवर्तिदहराकाशः—वा

[पूर्वपक्षः]

किं तावद्युक्तम् ?

महाभूतविशेषः—इति ।

कुतः ?

आकाशशब्दस्य भूताकाशे, ब्रह्मणि च प्रसिद्धत्वेऽपि, भूताकाशे प्रसिद्धिप्रकर्षात्,

'तस्मिन् यदन्तस्तदन्वेष्टव्यम्' (छां.उ. 8-1-1)

इति अन्वेष्टव्यान्तरस्य आधारतया प्रतीतेश्च ॥

[सिद्धान्तारम्भः]

इत्येवं प्राप्ते, अभिधीयते—दहर उत्तरेभ्यः । दहराकाशः परं ब्रह्म ।

कुतः ?

उत्तरेभ्यो वाक्यगतेभ्यो हेतुभ्यः ॥

[सिद्धान्तार्थोपपादनम्]

'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामस्सत्यसङ्कल्पः' (छां.उ. 8-1-5)

---

पूर्वपक्षे—यदा 'तस्मिन् यदन्तः' इति निर्देशः अर्थान्तरपरः ; तदा 'अन्वेष्टव्य' शब्दस्य गुणविषयत्वाभावेन दहराकाशस्य भूताकाशत्वं स्यात् । यदा 'एष आत्मा' इति वाक्योक्तगुणाष्टकस्य प्रजापतिवाक्योक्तजीवधर्मत्वे स्वारस्यमस्तिः ; तदानीम् 'एष आत्मा' इति वाक्यस्य जीवविषयतया, दहराकाशो जीवः स्यात्—इति फलफलिभाव ।

राद्धान्ते—यदा 'तस्मिन् यदन्तः' इति गुणजातविषयोक्तिः ; तदा 'अन्वेष्टव्य'शब्दस्य गुणजातविषयत्वात् दहराकाशः भूताकाशातिरिक्तः इति स्यात् । यदा 'एष आत्मा' इति वाक्यस्य प्रजापतिवाक्योक्तजीवधर्मविषयत्वे स्वारस्यं नाऽस्ति ; तदा स्वरसतो गुणाष्टकविशिष्ट-परमात्मप्रतिपादकतया दहराकाशः परमात्मा स्यात्—इति फलफलिभावः ॥

**वाक्यगतेभ्य** इति । न हि परमात्मधर्माणाम् उत्तरत्वाधरत्वादिकमस्ति ; तस्माद्धेतोः उत्तरत्वं वाक्यद्वारकम्—इत्याशयः । **हेतुभ्य** इति । 'उत्तरेभ्यः' इत्युक्ते चतुर्थ्यन्तत्वशङ्का मा भूदिति, पञ्चमीस्फुटीकरणायोक्तम् । 'षष्ठी हेतुप्रयोगे' (पा.सू. 2-3-26) इति नियमः, प्रयोजनतया हेतुत्वविवक्षायाम् ; न सर्वदा। यथा 'अल्पस्य हेतोर्बहु हातुमिच्छन्' (रघु. 2-47) इत्यादौ ॥

इति निरुपाधिकात्मत्वम्, अपहतपाप्मत्वादिकं, सत्यकामत्वं, सत्यसङ्कल्पत्वं चेति दहराकाशे श्रूयमाणाः गुणाः दहराकाशं परं ब्रह्म, इति ज्ञापयन्ति ।

'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान् तेषां
सर्वेषु लोकेषु कामचारो भवति' (छां.उ. ८–1–6)

[1]इत्यादिना[1],

'यं कामं कामयते, सोऽस्य सङ्कल्पादेव [2]समुत्तिष्ठति[2] ।
तेन सम्पन्नो महीयते' (छां.उ. 8–2–10)

[3]इत्यनेन[3], दहराकाशवेदिनः सत्यसङ्कल्पत्वप्राप्तिश्च उच्यमाना, दहराकाशं 'परं ब्रह्म' इत्यवगमयति ॥

[आकाशयोरुपमानोपमेयभावः]

'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' (छां.उ. 8–1–3)

इति उपमानोपमेयभावश्च, दहराकाशस्य भूताकाशत्वे, नोपपद्यते ।

हृदयावच्छेदनिबन्धनः उपमानोपमेयभावः—इति चेत्,
तथा सति, हृदयावच्छिन्नस्य द्यावापृथिव्यादिसर्वाश्रयत्वं नोपपद्यते ॥

[औपम्यानुपपत्तिशङ्का–परिहारौ]

ननु च — दहराकाशस्य परमात्मत्वेऽपि, बाह्याकाशोपमेयत्वं न सम्भवति ;
'ज्यायान् पृथिव्या ज्यायानन्तरिक्षात्' (छां.उ. 3–14–3)

इत्यादौ सर्वस्माज्ज्यायस्त्वश्रवणात् ।

---

**निरुपाधिकेति,** जीवस्याऽपि व्यावर्तनक्षममात्मत्वम् इत्यभिप्रायेण । निरुपाधिकत्वं— देवादिकतिपयशरीरविशेषानवच्छिन्नत्वम् । अपहतपाप्मत्वादेरपि निरुपाधिकत्वमभिप्रेतम् । **'अपहतपाप्मत्वादिकम्'** इति 'आदि'शब्देन सत्यकामत्वादिग्रहणे शक्येऽपि, गुणानां विधि-निषेधरूपेण द्वैविध्यज्ञापनाय, **सत्यकामत्वादेः** पृथगुपादानम् ॥

**उपमानेति ।** एकस्यैव उपमानोपमेयभावो न सङ्घटते इत्यर्थः ॥

**ननु चेति ।** न्यूनपरिमाणस्येव अधिकपरिमाणस्याऽपि न मध्यमपरिमाणेन साधर्म्यं युक्तमिति चोद्याशयः ॥

---

[1] इत्यारभ्य—थ [2] समुत्तिष्ठते—थ [3] इत्यन्तेन—थ

नैवम् ; दहराकाशस्य हृदयपुण्डरीकमध्यवर्तित्व[1]प्राप्ताल्पत्व[1]निवृत्तिपरत्वात् अस्य वाक्यस्य। यथा—अधिकजवेऽपि सवितरि, 'इषुवद्गच्छति सविता' इति वचनं गतिमान्द्यनिवृत्तिपरम् ॥

[दहरशब्दस्य परमात्मपरत्वाभावशङ्का-परिहारौ]

अथ स्यात् ;

'एष आत्माऽपहतपाप्मा' (छां.उ. 8-1-5)

[2]इत्यादिना, दहराकाशो[2] न निर्दिश्यते,

'दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम्' (छां.उ. 8-1-1)

इति दहराकाशान्तर्वर्तिनः ततोऽन्यस्य अन्वेष्टव्यत्वेन प्रकृतत्वात्, इह

'एष आत्माऽपहतपाप्मा' (छां.उ. 8-1-5)

इति, तस्यैव अन्वेष्टव्यस्य निर्देष्टुं युक्तत्वात् ।

स्यादेतदेवम् ; यदि श्रुतिरेव दहराकाशं, तदन्तर्वर्तिनं च न व्यभाङ्क्ष्यत् ; व्यभाङ्क्षीत्तु सा । तथा हि—

[3]'अथ यदिदमस्मिन्[3] ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः तस्मिन् यदन्तस्तदन्वेष्टव्यम्' (छां.उ. 8-1-1)

इति ब्रह्मपुरशब्देन, उपास्यतया सन्निहितपरब्रह्मणः पुरत्वेन उपासकशरीरं निर्दिश्य, तन्मध्यवर्ति च तदवयवभूतं पुण्डरीकाकारम् अल्पपरिमाणं हृदयं परस्य ब्रह्मणो वेश्मतया अभिधाय, सर्वज्ञं सर्वशक्तिम् आश्रितवात्सल्यैकजलधिम् उपासकानुग्रहाय वेश्मनि सन्निहितं, सूक्ष्मतया ध्येयं दहराकाशशब्देन निर्दिश्य, तदन्तर्वर्ति च अपहतपाप्मत्वादि

---

**नैवमिति,** अन्यूनपरिमाणत्वमात्रं साधर्म्यमिति परिहरति ॥

[**ततोऽन्यस्य**—दहराकाशपदवाच्यात् पृथग्भूतस्यार्थस्य ।]

[**न व्यभाङ्क्ष्यत्**—विभज्य पृथक्तया न प्रादर्शयिष्यत् । **व्यभाङ्क्षीत्तु सा** विभज्य प्रदर्शितवत्येव श्रुतिः ।] **उपास्यतयेति,** ब्रह्मपुरशब्दार्थमाह । न केवलं ब्रह्मणः सर्वव्यापित्वात् शरीरेण साधारणं सम्बन्धमात्रम् ; अपि तु उपासनस्थानभूतहृदयाधारत्वात् सम्बन्धविशेषश्च विद्यते । ब्रह्मशब्दश्च परस्मिन् मुख्यः । अतः ब्रह्मपुरं शरीरमित्यर्थः । **अल्पपरिमाण-मित्यनेन,** 'दहरं पुण्डरीकम्' इत्यत्र 'दहर'शब्दः व्याख्यातो भवति ॥

---

[1] प्राप्ताल्पत्वस्य—न [2] दहराकाशः—थ [3] यदिदमस्मिन्—वा, अथ यदस्मिन्—द, न

स्वभावतो निरस्तनिखिलहेयत्व-सत्यकामत्वादिस्वाभाविकानवधि[1]कातिशय[1]कल्याणगुण-[2]जातं च ध्येयम्[2],

"[3]तदन्वेष्टव्यम्[3]" (छां.उ. 8-1-1)

इत्युपदिश्यते ॥

[अन्वेष्टव्यमुभयम् ]

अत्र 'तदन्वेष्टव्यम्' इति तच्छब्देन, दहराकाशं [4]तदन्तर्वर्ति[4]गुणजातं च परामृश्य, [5]तदुभयम[5]न्वेष्टव्यम् इत्युपदिश्यते ।

'यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' (छां.उ. 8-1-1)

इत्यनूद्य, तस्मिन् [6]दहर[6]पुण्डरीकवेश्मनि यः दहराकाशः, यच्च तदन्तर्वर्तिगुणजातं तदुभयम् अन्वेष्टव्यम् इति विधीयते—इत्यर्थः ॥

[गुणिनो गुणजातस्य चान्वेष्टव्यत्वे गमकचिन्ता]

दहराकाशशब्दनिर्दिष्टस्य परब्रह्मत्वम्,

'तस्मिन् यदन्तः' (छां.उ. 8-1-1)

इति निर्दिष्टस्य च तद्गुणत्वम्, तच्छब्देन उभयं परामृश्य, [7]उभयस्याऽपि[7] अन्वेष्टव्यतया विधानं च कथमवगम्यते—इति चेत्,

---

**यदिदमिति**, तच्छब्दस्य उभयपरामर्शित्वमाह । **अनूद्येति** । अयमर्थः—'यदिदं दहरं पुण्डरीकं वेश्म, तस्मिन् दहराकाशः' इति दहराकाशस्य पुण्डरीकवेश्माधारत्वस्य उक्तत्वात्, पुनरपि 'तस्मिन् यदन्तः' इति आकाशस्य पुण्डरीकवेश्माधारत्वकथनवैयर्थ्यं स्यादिति । 'तस्मिन् यदन्तः' इति गुणविषयत्वे तु न वैयर्थ्यं; पूर्वमनुक्तत्वात् । अतः अपेक्षितविधेः अनपेक्षितविधानं दुर्बलम् । **तस्मिन् दहरेति** । श्रुतिवाक्ये 'अन्तः'शब्दः अन्तर्वर्तिपरः । अस्मिन् वर्तमानो दहराकाशः, तदन्तर्वर्ति च यत्, तदुभयमन्वेष्टव्यमिति वाक्यस्यार्थः इत्यर्थः । 'त्यदादीनि सर्वैर्नित्यम्' (पा.सू. 1-2-72) इति पुंलिङ्ग-नपुंसकलिङ्गयोः एकशेषः । 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' (पा. सू. 1-2-69) इति नपुंसकान्तत्वमेकवचनान्तत्वं च । तस्मात् आकाश-तदन्तर्गतान्वेष्टव्यगुणपरं पुं-नपुंसकान्तयच्छब्दद्वयार्थविषयं 'तत्' इति पदम् इत्यभिप्रायः । एवं, 'तदन्वेष्टव्यम्' इति तत्पदेनैव आत्मनोऽप्युक्तत्वात्, अन्वेष्टव्यतया प्राधान्यावगतिः, अन्वेष्टव्यस्य आत्मत्वप्रसिद्धिश्च उपपन्ने इति चोद्यपरिहारसिद्धिः ।

**दहराकाशेति** । विवक्षितार्थस्य प्रामाणिकत्वे सिद्धे हि क्लिष्टनिर्वाहाश्रयः उपपद्यते ।

---

[1] कातिशयासङ्ख्येय—द. [2] जातं ध्येयम्—थ. जातम्—द. [3] अन्वेष्टव्यम्—द.
[4] तदन्तर्वर्तिनं—न [5] तदुभयमप्य—द [6] दहरत्वं—द. [7] उभयस्य—द.

[उक्तार्थे गमकप्रदर्शनम् ]

तत् , अवहितमनाः शृणु –

'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' (छां.उ. ४-1-3)

इति, दहराकाशस्य अतिमहत्त्वाम् अभिधाय,

'उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च
वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि' (छां.उ. ९-1-3)

इति प्रकृतमेव दहराकाशम् 'अस्मिन्' इति निर्दिश्य तस्य सर्वजगदाधारत्वम् अभिधाय,

'[1]यच्चास्येहाऽस्ति[1] यच्च नाऽस्ति सर्वं तदस्मिन् समाहितम्' (छां उ. 8-1-3)

इति, पुनरपि 'अस्मिन्' इति, तमेव दहराकाशं परामृश्य, तस्मिन् अस्य उपासकस्य

तस्मात् दहराकाशस्य परब्रह्मत्वे तदन्तर्वर्तिनः गुणजातत्वे, तयोरन्वेष्टव्यत्वे च प्रमाणं वक्तव्यमित्यर्थः ।

**तदिति,** प्रतिवक्ति 'तदन्वेष्टव्यम्' 'यावान्वा अयम्' इति वाक्ययोर्मध्ये, 'किं तदत्र विद्यते' इति वाक्यं श्रूयते । परमात्मनोऽन्तर्वर्तिनः कस्यचित् असम्भवात् , 'किं तत्' इति वाक्यम् आक्षेपपरम् इत्याहुः परे । प्रश्नपरमिदं वाक्यमिति उचितम् । बुभुत्साख्यापनमात्रं **प्रश्नः** । अनुपपत्त्युद्घाटनेन अर्थाक्षेपपूर्वकं परिहारबुभुत्साख्यापनं—**चोद्यम्** । अबुभुत्सित-परिहारेण वक्त्रा प्रतिषेधः—**प्रतिक्षेपः** । 'कुतस्तु खलु सोम्य' इतिवत् । न प्रतिक्षेपपरमिदम् ; परिहारस्य वक्ष्यमाणत्वात् । न केवलः प्रश्नः ; अनुपपत्तेर्विद्यमानत्वात् । सर्वान्तरस्य परमात्मनो हि, अन्तरभूतं तत्त्वान्तरम् असम्भावितम् । अनुपपत्त्युद्घाटनमुखेनाक्षेपस्य कण्ठोक्त्यभावात् , न केवलं चोद्यम् इत्यप्युचितम् । अतः विनयं प्रकाशयता शिष्येण अनुपपत्तिमभिप्रेत्य, तामस्फुटं ब्रुवता, बुभुत्साख्यापनं क्रियत इति, प्रश्नवाक्यतुल्यं फलतः चोद्यपरमिदं वाक्यम् । तच्छब्दनिर्दिष्टयोः आकाश-तदन्तर्वर्तिनोः अन्तर्वर्तिविशेषानवगमात् उक्तानुपपत्तिगर्भः तदन्तर्वर्त्यंशविषयः प्रश्नः—किं तदत्रेति । स ब्रूयात्—आचार्यो ब्रूयादित्यर्थः । प्राकरणिकानाम् इदमेतच्छब्दानाम् आकाशपरामर्शपरत्वार्थं, तस्य अव्यवहितत्वज्ञापनार्थं, शब्दतः अर्थतश्च आकाशस्य प्राधान्यज्ञापनार्थं च **'यावान् वा अयम्'** इत्यादि प्रदर्श्यते । इदं वाक्य दहराकाशस्य अल्पत्वनिवृत्तिपरम् इत्यभिप्रायेण **अतिमहत्ताम्** इत्युक्तम् । **प्रकृतमेवेति** । अन्तर्वर्ति अन्वेष्टव्यम् ; 'आकाश'शब्दाव्यवहितत्वात् न 'इदं'शब्दविषयः इति भावः । **तमेवेति,** दहराकाशस्य अनुगत्यविच्छेदं दर्शयति । **अस्येति,** व्याख्येयम् । **उपासकस्येति,** व्याख्यानम् ।

[1] यच्चेहाऽस्ति —थ.

इह लोके यद्भोग्यजातमस्ति, यच्च मनोरथमात्रगोचरम् इह नाऽस्ति, सर्वं तद्भोग्यजातम्, अस्मिन् दहराकाशे समाहितमिति, निरतिशयभोग्यत्वं दहराकाशस्य अभिधाय, तस्य दहराकाशस्य देहावयवभूतहृदयान्तर्वर्तित्वेऽपि, देहस्य जराप्रध्वंसादौ सत्यपि, परमकारणतया अतिसूक्ष्मत्वेन निर्विकारत्वमुक्त्वा, तत एव

'एतत्सत्यं ब्रह्मपुरम्' (छां.उ. ८-१-५)

इति तमेव दहराकाशं, [1]सत्यभूतं[1] ब्रह्माख्यं पुरं निखिलजगदावासभूतम् इति उपपाद्य,

'अस्मिन् कामाः समाहिताः' (छां.उ. 8-1-5)

इति दहराकाशम् 'अस्मिन्' इति निर्दिश्य, काम्यभूतांश्च गुणान् 'कामाः' इति निर्दिश्य, तेषां दहराकाशान्तर्वर्तित्वमुक्त्वा, तदेव दहराकाशस्य काम्यभूतकल्याणगुणविशिष्टत्वं तस्य आत्मत्वं च,

'एष आत्माऽपहतपाप्मा' (छां.उ. ८-1-5)

इत्यादिना,

---

[अस्येति] 'इद'शब्दः षष्ठ्यन्तः बुद्धिस्थपरः इत्यर्थः। अन्वेषण-विजिज्ञासयोः कर्तृत्वेन, उपासको हि बुद्धिस्थः। अस्येहास्ति नास्तीति, अस्तित्व-नास्तित्वयोः सप्रतियोगिकत्वावगमात्, अनन्तरं चोदयितुः अनुभाषणवाक्ये 'सर्वे च कामाः' इत्यनुभाषणात्। यच्छब्दो भोग्यजातपरः इत्यभिप्रायः। **निरतिशयेति**। यथा समुद्रे गोष्पद-पल्वलादीनामन्तर्भाववचनात्, समुद्रस्य अनवधिकजलौघत्वं सिद्ध्यति ; एवं 'सर्वं तदस्मिन् समाहितम्' इत्यनेन निरतिशयभोग्यत्वसिद्धिरित्यर्थः। **निर्विकारत्वमिति**। कार्यात् वाय्वादेः कारणम् आकाशादिकं हि सूक्ष्मम्। तत एव वाय्वादिविकारेऽपि आकाशस्य न तादृशविकारसम्भव इति तत्तत्कारणतत्त्वान्तरात्मनः निरतिशयसूक्ष्मत्वात् निर्विकारत्वमिति भावः। **तत एवेति**। श्रुतिवाक्यस्थसत्यशब्दस्य निर्विकारत्वमर्थः इति भावः। **ब्रह्माख्यमिति**, षष्ठीतत्पुरुषव्यावृत्त्यर्थम्। सत्यशब्दसामानाधिकरण्यात् न प्राकृतशरीरपरम् इत्यभिप्रायः। **निखिलेति**, 'पुर'शब्दविषयत्वहेतुं गुणमाह। **काम्यभूतानिति**। अवयवशक्त्येत्यर्थः। **अन्तर्वर्तित्वमिति**, 'समाहिताः' इति पदस्यार्थमाह। एवं दहराकाशस्य कामवैशिष्ट्यमुक्तम्। **तदेवेति**। को दहराकाशः ? स च कैः कामैर्विशिष्टः ? इत्यपेक्षायाम्, 'एष आत्मा' इति वाक्यं गुणविशेषविशिष्टधर्मिविशेषप्रतिपादकम् इत्यर्थः। [अस्मिन्] वाक्ये 'सत्यकाम'शब्देन भोग्य-भोगोपकरण-भोगस्थानरूपाः नित्याः काम्याः अस्य

---

[1] **सत्यकारणतया सत्यभूतं—वा.**

'सत्यसङ्कल्पः' (छां.उ. 8-1-5)

इत्यन्तेन स्फुटीकृत्य,

'यथा ह्येवेह प्रजा अन्वाविशन्ति' (छां.उ. 8-1-5)

इत्यारभ्य,

'तेषां सर्वेषु लोकेष्वकामचारो भवति' (छां.उ. 8-1-6)

इत्यन्तेन, तदिदं गुणाष्टकं [1]तद्विशिष्टं दहरा[1]काशशब्दनिर्दिष्टमात्मानं च अविदु[2]षाम् एतद्व्यतिरिक्त[2]भोग्यसिद्धये च कर्म कुर्वताम्, अन्तवत्फलावाप्तिम् असत्यसङ्कल्पत्वं च अभिधाय,

'अथ य इहात्मानमनुविद्य [3]व्रजन्त्येतांश्च[3] सत्यान् कामांस्तेषां
सर्वेषु लोकेषु कामचारो भवति' (छां.उ. 8-1-6)

इत्यादिना, दहराकाशशब्दनिर्दिष्टमात्मानम्, तदन्तर्वर्तिनश्च काम्यभूतान् अपहतपाप्मत्वादिकान् गुणान् विजानताम् उदारगुणसागरस्य तस्य परमपुरुषस्य प्रसादादेव सर्वकामावाप्तिः सत्यसङ्कल्पता च उच्यते ॥

[उभयस्यान्वेष्टव्यतानिगमनम्]

अतः दहराकाशः परं ब्रह्म, तदन्तर्वर्ति च अपहतपाप्मत्वादिकाम्यगुणजातं तदुभयमन्वेष्टव्यं, विजिज्ञासितव्यम् इति च उच्यते – इति निश्चीयते ।

---

सन्तीत्युच्यते । नित्यविभूतिविशिष्टत्वं 'सत्यकाम'शब्दार्थः । **स्फुटीकृत्येति ।** आकाङ्क्षितगुणगुणिविशेषप्रदर्शनं स्फुटीकारः । **इह**—लोके **प्रजाः** यथाऽनुशासनं—राजशासनं यथा, तथा **अन्वाविशन्ति**—लभन्ते । **असत्यसङ्कल्पत्वञ्चेति,** 'अकामचार'शब्दार्थमाह । अनाविर्भूतगुणाष्टकत्वं विवक्षितम् । [**अनुविद्य**—उपास्य ] **व्रजन्ति,** परलोकम् इति शेषः । **आत्मानम्**... **कामानिति,** दहराकाश-तदन्तर्वर्तिशब्दार्थानुवादः । **कामचारो भवतीति,** सत्यसङ्कल्पत्वपर्यन्तगुणाष्टकाविर्भावो विवक्षितः । **सत्यान् कामानिति** वाक्ये, '**काम**'शब्दः अपहतपाप्मत्वादिगुणाष्टकपरः ; न तु 'सत्यकाम'पदोक्तकामपरः । **एतांश्चेति** एतच्छब्दस्य प्रकृतगुणविषयतया, 'काम'शब्दस्य काम्यन्ते इति अवयवशक्त्या वृत्त्युपपत्तेः । 'अस्मिन् कामाः समाहिताः' इति वाक्यस्थकामशब्दैकार्थ्याच्च ।

---

[1] तद्विशिष्टदहरा—द [2] षामेव तद्व्यतिरिक्त—न, षामेतद्व्यतिरिक्तवस्तु—थ.
[3] प्रव्रजन्त्येतांश्च—न.

तदेतत्, वाक्यकारोऽपि स्पष्टयति—

'तस्मिन् यदन्तरिति [1]काम[1]व्यपदेशः (व्र.नं.वा.)

इत्यादिना। अतः एतेभ्यो हेतुभ्यः, दहराकाशः परमेव ब्रह्म ॥१३॥

[2]इतश्च दहराकाशः परं ब्रह्म[2]—

## ७९. गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥ १-३-१४ ॥

[सूत्रार्थविवरणम्]

'तद्यथा हिरण्य[3]निधिं[3] [4]निहित[4]मक्षेत्रज्ञा [5]उपर्युपरि[5] सञ्चरन्तो
न विन्देयुः एवमेवेमास्सर्वाः प्रजाः अहरहर्गच्छन्त्य एतं
ब्रह्मलोकं न विदन्त्यनृतेन हि प्रत्यूढाः' (छां.उ. ८-3-2)

इति, 'एतम्' इति प्रकृतं दहराकाशं निर्दिश्य, तत्र अहरहः सर्वेषां क्षेत्रज्ञानां गमनम्, [6]गन्तव्यस्य तस्य[6] दहराकाशस्य '[7]ब्रह्मलोक'शब्द[7]निर्देशश्च दहराकाशस्य परब्रह्मतां गमयतः ॥

[गति-शब्दयोः परमात्मत्वसाधकत्वोपपादनम्]

कथमनयोः, अस्य परब्रह्मत्वसाधकत्वम्? [8]इत्यत[8] आह 'तथा हि दृष्टम्' इति।

---

तदेतदिति, अन्तर्वर्तिनः कामत्वं सम्प्रदायतो द्रढयति ॥१३॥

'अहरहर्गच्छन्त्य' इति, सुषुप्तौ गमनं विवक्षितम्। तच्च पृथक्प्रतिपत्तिव्यवहारानर्हतया स्थितिः। निर्गमनम्—पृथक्प्रतिपत्त्यर्हतापत्तिः ॥

कथमिति। श्रुतिषु परमात्मधर्मत्वेन अन्वयदर्शनाद्वा, जीवादिप्रतिपादकवाक्येष्वदर्शनेन जीवादिषु असम्भावितत्वाद्वा, गति-शब्दयोः परमात्मत्वसाधकत्वम् इत्यर्थः। 'लिङ्गं च'

---

[सूत्रार्थः। **गत्या**—अहरहः सर्वासां प्रजानां दहराकाशे ज्ञानराहित्येन गमनक्रियया, **शब्देन (शब्दाभ्यां)**—तस्मिन्नेव विषये प्रयुक्तेन ब्रह्मलोकशब्देन च, ज्ञापकीभूतेन, **दहरः**—दहरशब्दवाच्योऽर्थः परमात्मा इति ज्ञायते, **हि**—यतः, **तथा**—परस्मिन् ब्रह्मणि एवंरूपगमनम्, ब्रह्मलोकपदं च, **दृष्टम्**—श्रुतौ प्रतिपादितम्, **लिङ्गं च**—इदमेव च पर्याप्तं ज्ञापकम् ॥]

तस्मिन् गति-ब्रह्मलोकशब्दाभ्यां दहरः परः।
सम्पद्येति ब्रह्मलोक इत्यन्यश्रुतिलिङ्गतः ॥ (ब.प.मा. ७९)

---

[1] काम्य—वा [2] 'इतश्च दहराकाशं परं ब्रह्म' इति वाक्यं वा पुस्तके सूत्रानन्तरं विद्यते।
[3] निधिमपवरके—थ [4] विनिहित—न. [5] उपरि—थ. [6] गन्तव्यस्य—थ.
[7] ब्रह्मलोक—द. [8] इत्यत्र—वा.

परस्मिन् ब्रह्मणि सर्वेषां क्षेत्रज्ञानाम् अहरहः सुषुप्तिकाले गमनम् अन्यत्र अभिधीयमानं दृष्टम्—

'एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः,
सति [1]सम्पत्स्यामह[1] इति' (छां.उ. 6-10-2)

इति,

'सत आगम्य न विदुः सत आगच्छामह इति' (छां.उ. 6-10-2)

इति च। तथा, ब्रह्मलोकशब्दश्च परस्मिन् ब्रह्मणि दृष्टः—

'एष ब्रह्मलोकः सम्राडिति होवाच' (बृ.उ. 6-3-33)

इति ॥

[अवशिष्टसूत्रखण्डार्थः]

मा भूदन्यत्र, ब्रह्मणि गमनदर्शनम्। एतदेव तु दहराकाशे सर्वेषां क्षेत्रज्ञानां प्रलयकाल इव, निरस्तनिखिलदुःखानां सुषुप्तिकाले अवस्थानं श्रूयमाणम्, अस्य परब्रह्मत्वे पर्याप्तं लिङ्गम्। तथा ब्रह्मलोकशब्दश्च समानाधिकरणवृत्त्या अस्मिन् दहराकाशे प्रयुज्यमानः, अस्य ब्रह्मत्वे प्रयोगान्तरनिरपेक्षं पर्याप्तं लिङ्गम्, इत्याह 'लिङ्गञ्च' इति। 'निषादस्थपति'न्यायाच्च षष्ठीसमासात् समानाधिकरणसमासो न्याय्यः॥

इति सूत्रखण्डं व्याचष्टे **मा भूदिति**। **एतदेव तु** इति, गतेः श्रुत्यन्तरेऽन्वयदर्शननैरपेक्ष्येण साधकत्वमाह। **श्रूयमाणमिति**। निदिदृष्टान्तसचिवमिति भावः। निदिदृष्टान्तश्च परमपुरुषार्थत्वज्ञापकः। अतः दृष्टान्तानुगृहीतम् अहरहर्गमनम् एकं पर्याप्तं लिङ्गम् इत्यर्थः। **निषादस्थपतीति**। 'एतया निषादस्थपतिं याजयेत्' इत्यत्र कर्मधारयपरिग्रहे—निषादजातीयस्य स्थपतेः अग्निविद्ययोरसम्भवेन, स्वतो निरधिकारत्वात्; षष्ठीसमासपरिग्रहे च—त्रैवर्णिकान्तर्भूतस्थपतिकटाक्षेणापि 'निषादस्थपति'शब्दनिर्वाहसम्भवात्, षष्ठीसमासपरिग्रहेण 'अपशूद्राधिकरण' (पू.मी. 6-1-7) न्यायानुरोधो युक्तः इति प्राप्ते, 'स्थपतिर्निषादः स्यात् शब्दसामर्थ्यात्' (पू.मी.सू. 6-1-51) इत्यभिहितम्। अयमर्थः—षष्ठीसमासपक्षे निषादसम्बन्धविशिष्टोऽभिधेयः। कर्मधारयपक्षे, निषादत्वविशिष्टः। तत्र षष्ठ्याः अश्रवणात्, निषादप्रातिपदिकेन विभक्त्यर्थो लक्षणीयः। न चेदं युक्तम्; श्रौतार्थपरिग्रहे विरोधाभावात्। न च अग्नि-विद्याराहित्यं दोषः, द्रव्यवत् एतदुपयोग्यग्नि-विद्ययोरपि यथाकथञ्चिदार्जनस्य विध्यनुमतिसम्भवात्। तस्मात् कर्मधारय एव न्याय्यः इति। एतन्न्यायानुगृहीतो 'ब्रह्मलोक'शब्दः श्रुत्यन्तरेऽन्वयनिरपेक्षः परमात्मत्वसाधकः इत्यर्थः॥

[1] सम्पद्यामह—वा.

[श्रुतेः प्रकारान्तरेण नयनम् ]

अथवा

'अहरहर्गच्छन्त्यः' (छां उ. 8-3-2)

इति, न सुषुप्तिविषयं गमनमुच्यते ; अपि तु, अन्तरात्मत्वेन सर्वदा वर्तमानस्य दहराकाशस्य परमपुरुषार्थभूतस्य उपर्युपरि अहरहर्गच्छन्त्यः—सर्वस्मिन् काले वर्तमानाः, तमजानत्यः, तं न विन्दन्ति—न लभन्ते। यथा—हिरण्यनिधिं निहितं, तत्स्थानमजानानाः, तदुपरि सर्वदा वर्तमाना अपि न लभन्ते, तद्वत्—इत्यर्थः ॥

[द्वितीयनयनरीत्याऽपि तदर्थस्य ब्रह्मत्वगमकता]

[1]सेयम् , एवमन्त[1]रात्मत्वेन [2]स्थितस्य[2] दहराकाशस्योपरि तन्नियमितानां सर्वासां प्रजानामजानतीनां सर्वदा गतिः, अस्य दहराकाशस्य परब्रह्मतां गमयति। तथा हि—अन्यत्र परस्य ब्रह्मणः अन्तरात्मतया अवस्थितस्य, स्वनियाम्याभिः स्वस्मिन् वर्तमानाभिः प्रजाभिः अवेदनं दृष्टम् । यथा, अन्तर्यामिब्राह्मणे—

'य आत्मनि तिष्ठन् आत्मनोऽन्तरो यमात्मा न वेद,
यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति' (बृ.उ मा.पा. 5-7-26)

इति,

'अदृष्टो द्रष्टा अश्रुतश्श्रोता' (बृ.उ. 5-7-27)

इति च।

मा भूदन्यत्र दर्शनम् ; स्वयमेव तु इयं निधिदृष्टान्तावगतपरमपुरुषार्थभावस्य अस्य हृदयस्थस्य उपरि तदाधारतया अहरहः,सर्वदा सर्वासां प्रजानाम् अजानतीनां गतिः, अस्य [3]परब्रह्मत्वे[3] पर्याप्तं लिङ्गम् ॥१४॥

---

**अथवेत्यादि**, [सूत्रस्थस्य] 'गति'शब्दमात्रस्य योजनान्तरम् । पूर्वयोजनायां दृष्टान्ते एव उपरिशब्दान्वयः । अत्र तु दार्ष्टान्तिकेऽपि ॥

**दहराकाशस्योपरि** इति, धर्म्यैक्याभिप्रायेणोक्तम् । अन्तरात्मतया स्थितत्वेन हि आधारः ; न तु उपासकानुग्राहकतया स्थितत्वेन । **उपरि तन्नियमितानामिति** । अस्मिन् प्रकरणे 'सत्य'शब्दनिर्वचनावगतं हि चेतनाचेतनयोर्नियन्तृत्वं परस्य, 'य आत्मानमन्तरो यमयति' इत्यादिश्रुत्यन्तरप्रसिद्धं चेत्यभिप्रेतम् । **अस्य परब्रह्मत्वे पर्याप्तं लिङ्गम्** इति, 'लिङ्गम्' इत्यस्यैवार्थः ॥१४॥

---

1 एवमेव अन्त— थ 2 अवस्थितस्य —वा. 3 परब्रह्मभावे —इ. द.

इतश्च दहराकाशः परं ब्रह्म —

## ८०. धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १-३-१५ ॥

[सूत्रार्थोपपादनम्]

**'अथ य आत्मा'** (छां.उ. ८-4-1)

**इति, प्रकृतं दहराकाशं निर्दिश्य,**

**'स सेतुर्विधृतिरेषां लोकानामसम्भेदाय'** (छां.उ. 8-4-1)

**इति, अस्मिन् जगद्विधरणं श्रूयमाणं, दहराकाशस्य परब्रह्मतां गमयति। जगद्विधरणं हि ! परस्य ब्रह्मणो महिमा ;**

**'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरणः,**
**एषां लोकानामसम्भेदाय'** (बृ.उ. 6-4-22)

**इति,**

**'एतस्य वा अक्षरस्य प्रशासने गार्गि ! सूर्याचन्द्रमसौ विधृतौ तिष्ठतः'** (बृ.उ. 5-8-8)

**इत्यादिभ्यः। स चायं तस्य परस्य ब्रह्मणो [1]धृत्याख्यो महिमा[1] अस्मिन् [2]दहराकाशे[2] उपलभ्यते। अतः दहराकाशः परं ब्रह्म ॥१५॥**

---

**धृतेरिति। अस्य**—परमात्मनः। **महिमा**—धृतिः। तस्य, **अस्मिन्**—दहराकाशे, उपलब्धेः। **धृतिः**—विधृतिः। **परं ब्रह्मेति**। भूताकाशादन्यत्वे तात्पर्यम् ; 'भूताकाशत्वं प्रतिक्षिप्तम्' इति हि वक्ष्यते। स एव वस्तुगत्या परमात्मा—परं ब्रह्म इत्युक्तम् (श्रु.प्र) ॥

**सः**—उक्तलक्षणः आत्मा, **सेतुः**—सेतुरिव। **विधृतिः**—विधारकः। **असम्भेदः**—असङ्करः। सिनोति—बध्नाति, स्वस्मिन् चिदचिद्वस्तुजातम् असङ्कीर्णम्, इति सेतुरुच्यते। यद्ययं परमात्मा स्वशासनेन जगत् न धारयेत्, [तदा] सर्वधर्माणां साङ्कर्यमेव स्यात्। पृथिव्याः गन्धवत्त्वम्, जलस्य शैत्यम्, तेजस औष्ण्यम्, इत्यादयो हि धर्माः परमात्माज्ञया व्यवस्थिता भवन्ति (उ रं.भा) ॥१५॥

---

[सूत्रार्थः। **अस्य**—परमात्मासाधारणस्य, **धृतेः**—जगद्विधरणरूपस्य, **महिम्नः**—महत्त्वस्य, **अस्मिन्**—दहराकाशशब्दवाच्येऽर्थे (विद्यमानतया), **उपलब्धेश्च**—'एष सेतुर्विधरणः' इति श्रुतौ दर्शनादपि ज्ञापकात् (दहराकाशः परं ब्रह्म)।]

असम्भेदाय लोकानां महिम्नो विधृतेरिह ।
परस्य तस्य चास्मिंस्तु श्रवणाद्दहरः परः ॥ (ब्र.प.मा. ८०)

---

[1] धृत्याख्यमहिमा—थ. [2] दहराकाशे एव—थ.

# ८१. प्रसिद्धेश्च ॥ १-३-१६ ॥

[सूत्रार्थविवरणम् ]

आकाशशब्दश्च [1]परस्मिन् ब्रह्मणि प्रसिद्धः[1] ;

'को ह्येवाऽन्यात्कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्'

(तै.उ.आन. 6-1)

'सर्वाणि ह वा इमानि भूतान्याकाशादेव [2]समुत्पद्यन्ते[2]' (छां.उ. 1-9-1) इत्यादिषु। 'अपहतपाप्मत्वादिगुणसनाथा प्रसिद्धिः, भूताकाशप्रसिद्धेर्बलीयसी' इत्यभिप्रायः ॥१६॥

[सूत्रसङ्गतिः]

एवं तावत् दहराकाशस्य भूताकाशत्वं प्रतिक्षिप्तम्। अथ इदानीं दहराकाशस्य प्रत्यगात्मत्वमाशङ्क्य निराकर्तुमुपक्रमते—

---

अपहतेति। [यद्यपि] प्रसिद्धिप्राचुर्यं भूताकाशे, [तथाऽपि इति, वाक्यादिभागः]। [गुणसनाथा—गुणचिन्तनसहकृता। प्रसिद्धेर्बलीयसी—प्रसिद्ध्यधीनज्ञानोत्पत्तिबाधिका सती, स्वप्रयोज्यज्ञानविशेषजनिका।] ॥१६॥

एवं तावत् इत्यादिना, पूर्वसूत्रचतुष्टयकृत्यं वदन्, उत्तरेषां सूत्राणां कर्तव्यमाह। पूर्वोक्तहेतूनां स्वरसतः जीवव्यावर्तनक्षमत्वेऽपि, वक्ष्यमाणशङ्काप्रतिक्षेपानन्तरमेव स्वारस्यस्य अनपोद्यत्वसिद्धिः। अतः भूताकाशत्वव्युदसने तात्पर्यमिति भावः। उपक्रमते इत्यनेन, अनन्तरसूत्रं न अधिकरणान्तरम् इति सूचितम्; अविच्छेदप्रतीतेः ॥

---

[सूत्रार्थः। दहरः आकाशः—दहराकाशशब्दवाच्योऽर्थः (परं ब्रह्म); प्रसिद्धेश्च—आकाशशब्दस्य ब्रह्मरूपेऽर्थे, 'सर्वाणि ह वा....आकाशादेव' इत्यादिवाक्येषु सुविदितत्वादपि।]

प्राणनादिसनाथायाः प्रसिद्धेः प्रबलत्वतः।
भूताकाशप्रसिद्धेरप्यत्र दह्रः परः पुमान् ॥ (ब्र.प.मा. ८१)

---

[1] प्रसिद्धः परस्मिन् ब्रह्मणि—त. [2] समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति—वा.

## ८२. इतरपरामर्शात्स इति चेन्नासम्भवात् ॥ १-३-१७ ॥

[सूत्रगताक्षेपभागानुवादः]

यदुक्तम्—वाक्यशेषवशात् दहराकाशः परं ब्रह्म—इति,
तदयुक्तम्; वाक्यशेषे परस्मादितरस्य जीवस्यैव साक्षात्परामर्शात्,
'अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य,
स्वेन रूपेणाभिनिष्पद्यते एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्म'
(छां.उ. 8-3-4)

इति। यद्यपि,
'दहरोऽस्मि[1]न्नन्तर आकाशः[1]' (छां.उ. 8-1-1)
इति हृदयपुण्डरीकमध्यवर्तितया उपदिष्टस्य आकाशस्य, उपमानोपमेयभावाद्यसम्भवात्, भूताकाशत्वं न सम्भवति; तथापि वाक्यशेषवशात् प्रत्यगात्मत्वं युक्तमाश्रयितुम्।
आकाशशब्दोऽपि, प्रकाशादियोगात् जीव एव वर्तिष्यते—इति चेत्,

**परस्मात्** इति, [सूत्रस्थस्य] **इतरशब्दस्य** प्रतिसम्बन्धिसापेक्षत्वादाह। **जीवस्यैवेति**। दहराकाशस्य परमात्मत्वं वदतोऽपि, अस्य वाक्यस्य जीवपरत्वं संप्रतिपन्नमिति, **एवकाराभिप्रायः**। **साक्षादिति**। न जीवसम्बन्धिलिङ्गद्वारा परामर्शः; किन्तु तद्वाचकशब्देन परामर्शः। तस्मात् इत्यर्थः। 'अथ य एषः' इति एतच्छब्दो हि प्रकृतपरामर्शी। अतः पूर्ववाक्येष्वपि जीव एव प्रतिपाद्यत इति **परामर्शशब्दाभिप्रायः**। जीवपरामर्शसहकारिणी तदन्तर्वर्त्यन्वेष्टव्यान्तरप्रतीतिश्च जीवत्वहेतुरनुसन्धेयः। **यद्यपीति**। उपमानोपमेयभावाद्यस्वारस्यं वाक्यशेषवशात् सोढव्यम् इति भावः ॥

[सूत्रार्थः। **इतरस्य**—ब्रह्मणोऽन्यस्य जीवस्य, **परामर्शात्**—'संप्रसादः, अस्माच्छरीरात् समुत्थाय' इति दहरविद्यामध्यस्थवाक्ये पूर्वोक्तस्य प्रतिपादनदर्शनात्, **सः**—जीव एव, दहराकाशशब्दवाच्यः, **इति चेत्**—एवं कथनं तु, **न**—न युक्तिमत्, **असम्भवात्**—पूर्वोक्तानां गुणानां जीवे बाधात्।]

जीवस्य च परामर्शात्संप्रसाद इति श्रुतेः।
वाक्यशेषे स इति चेन्न जीवेऽनुपपत्तितः ॥ (ब्र.प.मा. ८२)

[1] स्मन्तराकाशः— वा.

[समाधानार्थविवृतिः]

[1]अत्रोत्तरम्[1]—नासम्भवात्—इति। न अयं जीवः; न हि अपहतपाप्मत्वादयो गुणाः जीवे सम्भवन्ति ॥१७॥

## ८३. उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १-३-१८ ॥

[सूत्रगतचेदन्तार्थविवरणम्]

उत्तरात्—[2]प्रजापति[2]वाक्यात्, जीवस्यैव अपहतपाप्मत्वादिगुणयोगो निश्चीयते—[3]इति चेत्[3],

एतदुक्तं भवति—प्रजापतिवाक्यं जीवपरमेव। तथा हि—

'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च [4]कामान्[4]; यस्तमात्मान[5]मनुविद्य[5] विजानाति'

(छां.उ. ८-7-1)

इति प्रजापतिवचनम् ऐतिह्यरूपेण उपश्रुत्य, अन्वेष्टव्यात्मस्वरूपजिज्ञासया प्रजापति-

न हीति। परामर्शान्यथासिद्धेः वक्ष्यमाणत्वात्, अपहतपाप्मत्वादिश्रुतिस्वारस्यम् अनपोदितम् इति भावः ॥१७॥

उत्तरादिति। उतरवाक्यानुसारेण दहरवाक्येऽपि जीवस्यैव [निर्देशः] इति निश्चीयते इत्यर्थः।

जीवपरमेवेति। 'स उत्तमः पुरुषः' इत्यनेन परमात्मपरत्वं न शङ्क्यम्; तदुक्तिः प्रासङ्गिकी इति भावः। मघवते इति। यद्यपि, विरोचनोऽपि प्रजापतिमुपासदत्; तथाऽपि, छायापुरुषाधिगममात्रतृप्ततया अपक्रान्तः; अतस्तदनुक्तिः। इन्द्र एव अर्थतत्त्वबुभुत्सया

[सूत्रार्थः। उत्तरात्—प्रजापतिवाक्यात्, चेत्—जीवः अपहतपाप्मत्वादिगुणवत्तया अवगम्यते इति कथनं तु, न सम्यक्, आविर्भूतस्वरूपस्तु—परब्रह्मोपासनजनिततदुपसम्पत्त्या निरस्ततिरोधानतया प्रकटतापन्नस्वस्वरूप एव जीवः, प्रजापतिवाक्योक्तः, (न तु स्वभावतोऽपहत-पाप्मत्ववत्तया)।]

य आत्माऽपहतेत्यादिश्रुत्या जीव इहेति चेत्।
आविर्भूतगुणोक्त्यात्र न जीवो दहरो भवेत्॥ (ब्र.प.मा. ८३)

[1] तत्रोत्तरम्—न. [2] प्राजापत्यात्—द. [3] चेत्—न. [4] कामानाप्नोति—त. [5] मनुविद्य—द.

मुपसेदुषे मघवते, प्रजापतिः जागरित-स्वप्न-सुषुप्त्यवस्थं जीवात्मानं [1]सशरीरं[1] क्रमेण शुश्रूषुयोग्यता[2]परीचिक्षिषया[2] उपदिश्य, [3]तत्र तत्र[3] भोग्यमपश्यते, परिशुद्धात्मस्वरूपोपदेशयोग्याय तस्मै मघवते,

'मघवन् मर्त्यं वा इदं शरीरमात्तं मृत्युना, तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानम्' (छां.उ. 8-12-1)

इति शरीरस्य[4]अधिष्ठानताम्[4], आत्मनश्च अधिष्ठातृताम्, [5]अशरीरस्य च[5] तस्य अमृतत्वस्वरूपतां च उक्त्वा,

'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति ।
अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ॥' (छां.उ. 8-12-1)

इति, कर्मारब्धशरीरयोगिनः तदनुगुणसुख-दुःख[6]भागित्व[6]रूपानर्थं, तद्विमोक्षे च तदभावम् अभिधाय,

'एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य,
स्वेन रूपेणाभिनिष्पद्यते' (छां.उ. 8-12-2)

इति, जीवात्मनः स्वरूपमेव शरीरवियुक्तम् उपदिदेश ।

---

स्थित इति, सच्छिष्यत्वात् तन्निर्देशः । **जागरितेत्यादिना**, खण्डपञ्चकस्यार्थं सङ्क्षेपेणाह । [**शुश्रूषुः**—आत्मविषयकश्रवणेच्छावान् । **योग्यता** —योगमर्हति—योग्यः । उपदेशसम्पत्तेरर्हः । तस्य भावः—योग्यता । **परीचिक्षिषा**—परीक्षितुमिच्छा । सर्वप्रकारेण तत्स्वरूपप्रवृत्त्यादिज्ञानविषयिणी इच्छा । **भोग्यमपश्यते**—स्वप्रवृत्तिचरमप्रयोजनीभूतस्य अमृतत्वाभयत्वात्मत्वरूपस्य धर्मस्याभावं ज्ञातवते । यद्वा तादृशं धर्ममजानते ।] **शुश्रूषुयोग्यतापरीचिक्षिषया** इति, अनतिस्फुटं गहनमुपदिशतः प्रजापतेस्तात्पर्यमुक्तम् । **मघवन्! मर्त्यं वा इदम्** इत्यादिना, निष्कृष्टात्मस्वरूपं स्फुटतरमुपादिक्षत् । **एवमेवैष** इति, मुक्त्यवस्थोपदेशं दर्शयति । **एवमेव**—वाय्वभ्रस्तनयित्न्वादिवदेव ; **एष सम्प्रसादः**—अयं जीवोऽपि । **अस्मात् शरीरात्**—स्वाधिष्ठानतया स्थितात् देहात् अवधिभूतात् । **समुत्थाय**—मार्गविशेषेण गत्वा । **परं ज्योतिरुपसम्पद्य**—परं ब्रह्म प्राप्य । **स्वेन रूपेण**—संसारावस्थाप्रहाणेन परमात्मतुल्यरूपेण । **अभिनिष्पद्यते**—आविर्भवति । एवमर्थे सति हि दृष्टान्त-दार्ष्टान्तिकवाक्यसामञ्जस्यं भवति ।

---

[1] शरीरं—थ. [2] परिविचिक्षिषया—थ, परिचिक्षिषया—वा. [3] तत्र—वा.
[4] अधिष्ठानत्वम्—थ. [5] अशरीरस्य—द. [6] भोगित्व—थ.

'स उत्तमः पुरुषः, स तत्र पर्येति, [1]जक्षत्क्रीडन्[1] रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरम्' (छां.उ. 8–12–3)

इति प्राप्यस्य परस्य ज्योतिषः पुरुषोत्तमत्वम्, निवृत्ततिरोधानस्य परं ज्योतिरुपसम्पन्नस्य प्रत्यगात्मनः ब्रह्मलोके यथेष्टभोगावाप्तिम्, [2]प्रियाप्रियावियुक्त[2]कर्मनिमित्तशरीराद्य-पुरुषार्थाननुसन्धानं च अभिधाय,

'स यथा[3]प्रयोग्य आचरणे[3] [4]युक्त एवमस्मिन्[4] शरीरे प्राणो युक्तः'

(छा.उ. 8–12–3)

इति यथोक्तस्वरूपस्यैव [5]संसारदशायां कर्मतन्त्रं शरीर[5]योगं युग्यशकटयोगदृष्टान्तेन अभिधाय,

'अथ यत्रैतदाकाशमनुविषण्णं [6]चक्षुः,[6] सः चाक्षुषः पुरुषः, दर्शनाय चक्षुः। अथ यो वेदेदं जिघ्राणीति, स आत्मा; गन्धाय घ्राणम्। अथ यो वेदेदमभिव्याहराणीति, स आत्मा; अभिव्याहाराय वाक्। अथ यो वेदेदं शृणवानीति, स आत्मा; श्रवणाय श्रोत्रम्' (छां.उ. 8–12–4)

'अथ यो वेदेदं मन्वानीति, स आत्मा; [7]मनो[7]ऽस्य [8]दिव्यं[9] चक्षुः'

(छां.उ. 8–12–5)

इति चक्षुरादीनां करणत्वं, रूपादीनां ज्ञेयत्वम्, अस्य च ज्ञातृत्वं प्रदर्श्य, तत एव शरीरेन्द्रियेभ्यः अस्य व्यतिरेकमुपपाद्य;

---

[सम्प्रसीदति अस्मिन् परमात्मा इति, परमात्मप्रसादविषयभूतो जीवः सम्प्रसादः।] **प्राप्यस्य परस्येति**। ['स उत्तमः पुरुषः' इत्यादिना] पुरुषोत्तमप्रसङ्गः, जीवस्य प्राप्यतया; न तु प्रकरण-प्रतिपाद्यतया, इति भावः। **सः**—यत् उपसम्पद्यते सः उपसदनीयः पुरुषः उत्तमः इत्यर्थः। **स तत्र पर्येतीति**। **सः**—उपसम्पत्ता। **तत्र**—परमात्मनि। **पर्येति**—परितोऽनुभवति। [तं परमात्मानं परितोऽनुभवति इत्यर्थः।] **प्रियाप्रियेति**, 'नोपजनं स्मरन्' इत्यस्यार्थमाह। अनुभूतस्य हि स्मरणम्। पूर्वम् अब्रह्मात्मकतया दुःखात्मकत्वेन हि अनुभूतम्। न तथा स्मरति; कृत्स्नस्य भगवदात्मकत्वेन अनुभाव्यत्वात् इत्यर्थः। **प्रयोग्यः**—युग्यः। [रथादौ प्रकर्षेण योजयितुमर्हः]। **आचरणम्**—शकटम्। **अथ यत्रेत्यादि**। **आकाशम्**—प्रकाशकम् आलोकादि। प्रकाशमानं रूपं वा। प्रकाशयति यः, सः **चाक्षुषः**—चक्षुरुपकरणकः।

---

[1] जक्षन् क्रीडन्—थ. [2] प्रियाप्रियादियुक्त—वा. [3] प्रयोग्याचरणे—थ. [4] प्रयुक्त एवमेवायमस्मिन्—द. [5] संसारदशाकर्मतन्त्रशरीर—द [6] व्याप्तं चक्षुः—थ [7] मननाय मनो—थ [8] दैवं—वा.

'स वा एष एतेन दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते,
य एते ब्रह्मलोके' (छां.उ. 8-12-5)

इति, तस्यैव [1]विधूत[1]कर्मनिमित्तशरीरेन्द्रियस्य मनश्शब्दाभिहितेन दिव्येन स्वाभाविकेन ज्ञानेन सर्वकामानुभवमुक्त्वा,

'तं वा एतं देवा आत्मानमुपासते तस्मात्तेषां सर्वे च लोका आत्ताः
सर्वे च कामाः' (छां.उ. 8-12-6)

इति एवंविधमात्मानं ज्ञानिनो [2]जानन्ति[2] इत्यभिधाय,

'सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य
विजानातीति ह प्रजापतिरुवाच' (छां.उ. 8-12-6)

इति एवंविधमात्मानं विदुषः, सर्वलोक-सर्वकामावाप्त्युपलक्षितं ब्रह्मानुभवं फलमभिधाय, उपसंहृतम् ॥

[दहराकाशस्य परिशुद्धजीवस्वरूपत्वरूपस्याक्षेपोसंहारः]

अतः तत्र अपहतपाप्मत्वादिगुणकः ज्ञातव्यतया प्रक्रान्तः जीव एव, इत्यवगतम्। अतः [3]जीवस्य[3] अपहतपाप्मत्वादयः सम्भवन्ति। [4]अतः[4] दहरवाक्यशेषे श्रूयमाणस्य जीवस्य अपहतपाप्मत्वादिगुणसम्भवात् 'स एव दहराकाशः' [5]इति निश्चीयते, इति चेत्—इति[5] ॥

[आक्षेपपरिहारभागार्थविवृतिः]

तत्राऽऽह—आविर्भूतस्वरूपस्तु—इति। पूर्वम् अनृततिरोहितापहतपाप्मत्वादि-[6]गुणकस्वरूपः[6], पश्चात् विमुक्तकर्मबन्धः, शरीरात्समुत्थितः, परं ज्योतिरुपसम्पन्नः, आविर्भूतस्वरूपस्सन् अपहतपाप्मत्वादिगुणविशिष्टः, तत्र प्रजापतिवाक्ये अभिधीयते।

[अभिव्याहारः—उक्तिः। दिव्यं चक्षुः; सकलेन्द्रियविषयमननसाधनत्वात्। व्यतिरेकम्—भेदम्। कामान्—दहराकाशनिष्ठान् काम्यमानान् कल्याणगुणान्। रमते—मोदते। ज्ञानिनः—योगिनः, निष्पन्नोपासनतया जीव-परमात्मस्वरूपयाथात्म्यसाक्षात्कारवन्तो वा। उपलक्षितमिति। दिग्दर्शकतया ज्ञापितमित्यर्थः। उपसंहृतम्—निगमितम्।]

आविर्भूतस्वपस्यापि इति। आविर्भूतस्वरूपस्य प्रजापतिवाक्योक्तत्वात्, दहराकाशस्य

---

1 अविधूत—द. 2 जानन्तीत्यन्तम्—द 3 जीवस्याऽपि—थ. 4 ततः—द.
5 इति चेत्—थ 6 गुणकःस्वस्वरूपः—वा

दहरवाक्ये तु—[1]अतिरोहित[1]स्वभावापहतपाप्मत्वादिविशिष्ट एव दहराकाशः प्रतीयते। आविर्भूतस्वरूपस्याऽपि जीवस्य असम्भावनीयाः सेतुत्व-[2]सर्वलोकविधरण[2]त्वादयः, सत्यशब्दनिर्वचनावगतं चेतनाचेतनयोः [3]नियन्तृत्वं,[3] दहराकाशस्य परब्रह्मतां साधयन्ति। सेतुत्व-सर्वलोकविधरणत्वादयः आविर्भूतस्वरूपस्याऽपि न सम्भवन्ति, इति

'जगद्व्यापारवर्जम्' (ब्र.सू. 4-4-17)

इत्यत्र उपपादयिष्यामः ॥ १८ ॥

[उत्तरसूत्रावतारिणी शङ्का]

यद्येवं, दहरवाक्ये—

[4]अथ य एष[4] सम्प्रसादः' (छां.उ. 8-3-4)

इत्यादिना जीवप्रस्तावः किमर्थः—इति चेत्, तत्राऽऽह—

## ८४. अन्यार्थश्च परामर्शः ॥ १·३·१९ ॥

[दहरवाक्य-प्रजापतिवाक्ययोः जीवपरामर्शोपयोगः]

दहराकाशस्यैव अपहत[5]पाप्मत्व[5]-जगद्विधरणत्वादिवत्, मुक्तस्य तदुपसम्पत्त्या अपहतपाप्मत्वादि[6]कल्याणगुण[6]विशिष्टस्वाभाविकरूपप्राप्तिकथनेन, तद्धेतुत्वरूपं परमपुरुषासाधारणं गुणमुपदेष्टुं, प्रजापतिवाक्योक्तस्य जीवस्य अत्र परामर्शः।

---

स्वत एव अपहतपाप्मत्वादिप्रतिपादनात्, तच्छरीरान्तःस्थितस्यैव गुणाष्टकप्रतिपादनात्, मुक्तेष्वसम्भावितसर्वलोकविधरणादिश्रुतेश्च, दहराकाशः परं ब्रह्म इत्यर्थः ॥ १८ ॥

[**किमर्थः**—किम्प्रयोजनकः।] दहरवाक्ये जीवप्रस्तावः, न प्रष्टृ-प्रतिवक्तृभावेन; तथा श्रवणाभावात्। नापि अङ्गोपासनविषयतया; दहरविद्यायाम् उपासनविध्यन्तराभावात्। अतः प्रकृतोपासनकर्मत्वेनैव जीवपरामर्शः; अन्यथा तत्प्रतिपादनवैयर्थ्यात्। प्रकृतोपासनकर्मत्वे च दहराकाशः जीवः स्यात् इत्यभिप्रायः।

---

[सूत्रार्थः। **परामर्शश्च**—दहरविद्यावाक्ये जीवात्मनः प्रस्तावस्तु, **अन्यार्थः**—जीवस्वरूपाविर्भावकारित्वरूपस्य अतिशयितस्य परमात्मवैभवस्य प्रतिपादनायैव; न तु दहराकाशताप्रतिपादनाय।]

माहात्म्यकीर्तनार्थं तु ब्रह्मणोऽन्यस्य कीर्तनम्।
सम्प्रसादस्य मुक्त्यादौ स्वरूपापादनेन तु ॥ (ब्र.प.मा. ८४)

---

[1] अतिरोहितस्वरूप—क्ष [2] विधरण—द. [3] नियन्तृत्वं च—इ. [4] य एष—थ.
[5] पाप्मत्वादि— [6] गुण—थ.

प्रजापति[1]वाक्ये च[1] मुक्तात्मस्वरूपयाथात्म्यविज्ञानं, दहरविद्योपयोगितया उक्तम्। ब्रह्मप्रेप्सोर्हि जीवात्मनः [2]स्वस्वरूपं[2] च ज्ञातव्यमेव। स्वयमपि कल्याणगुण एव सन्, अनवधिकातिशयासङ्ख्येयकल्याण[3]गुणगणं[3] [4]परं ब्रह्म[4] अनुभविष्यति इति; ब्रह्मोपासनफलान्तर्गतत्वात् [5]स्वरूपयाथात्म्य[5]विज्ञानस्य।

'[6]सर्वांश्च[6] लोकानाप्नोति सर्वांश्च कामान्' (छां.उ. 8-12-6)

'स तत्र पर्येति [7]जक्षत्क्रीडन्[7]' (छां उ. 8-12-3)

इत्यादिकं प्रजापतिवाक्ये कीर्त्यमानं फलमपि, दहरविद्याफलमेव ॥१९॥

## ८५. अल्पश्रुतेरिति चेत्तदुक्तम् ॥ १-३-२० ॥

[सूत्रार्थविवृतिः]

'दहरोऽस्मिन्' (छां.उ. 8-1-1)

---

स्वयमपीति। प्राप्यान्तर्भावात्, तस्य ज्ञातव्यत्वम्। अतः तज्ज्ञानं दहरविद्योपयोगि इत्यर्थः। दहरविद्याफलमेवेति। जीवात्मज्ञानं दहरविद्याङ्गं चेत्, कथं पृथक्फलकीर्तनम्? 'फलवत्संनिधौ अफलं तदङ्गम्' इति हि न्यायः, [इति नाशङ्कनीयम्]; अङ्गिनः फलमेव अङ्गे कथितम् इत्यर्थः। अनेन सूत्रेण उपसंहारगतहेतुः प्रत्युक्तः ॥१९॥

अल्पश्रुतेरिति, उपक्रमगतहेतुं प्रतिवक्ति। इह वाक्यशेषसहकृताल्पत्वश्रुतेः अल्पत्वं स्वाभाविकमिति अधिकाशङ्का। न हि शाण्डिल्यविद्यायां वाक्यशेषसहकृताल्पत्वश्रुतिः। प्रकरणरूपवाक्यशेषापेक्षया अपहतपाप्मत्वादि[रूपं] लिङ्गं प्रबलमिति अधिकः परिहारः।

---

[सूत्रार्थः। अल्पश्रुतेः—दहरशब्दबोध्यस्य अल्पस्य परिमाणस्य श्रुत्युक्तत्वात्, (जीव एव अल्पपरिमाणः दहरवाक्योक्तः) इति चेत्—इति कथने तु, तत्—अत्र यदुत्तरं वक्तव्यं तत्, उक्तम्—'निचाय्यत्वादेवम्' (ब्र.सू. 1-2-1) इत्यत्र उत्तरितम्।]

अल्पत्वाल्पस्थानत्वाश्रुत्या ब्रह्म न तद्यदि।
निचाय्यत्वादेवमिति दत्तोत्तरमिदं पुरा॥ (ब्र.प.मा ८५)

---

[1] वाक्ये—अ, [2] स्वरूपं—वा. [3] गुणं—वा. [4] ब्रह्म—इ. [5] स्वरूप—अ, स्वस्वरूपयाथात्म्य—वा. [6] सः सर्वांश्च—अ. [7] जक्षत्क्रीडन्—घ, थ.

इति, अल्प[1]परिमाण[1]श्रुतिः, आराऽग्रोपमितस्य जीवस्यैव उपपद्यते; न तु सर्वस्माज्जायसो ब्रह्मणः—इति चेत्,

तत्र यदुत्तरं वक्तव्यं, तत् पूर्वमेवोक्तम्—

'निचाय्यत्वादेवम्' (ब्र.सू. 1-2-7)

इत्यनेन। अतः दहराकाशः अनाघ्रातावियाद्यशेषदोषगन्धः स्वाभाविकनिरतिशयज्ञान-बलैश्वर्य-वीर्य-शक्ति-तेजःप्रभृत्यपरिमितोदारगुणसागरः पुरुषोत्तम एव। प्रजापति[2]वाक्य[2]-निर्दिष्टस्तु—

'घ्नन्ति [3]त्वेवैनं[3] विच्छादयन्ति' (छां.उ. 8-10-2)

इत्येवमादिभिः अवगतकर्मनिमित्तदेहपरिग्रहः, पश्चात् परं ज्योतिरुप[4]सम्पद्य[4] आविर्भूताऽपहतपाप्मत्वादिगुणस्वस्वरूपः इति, [5]न[5] दहराकाशः ॥२०॥

[6]इतश्चैतदेवम्[6]—

## ८६. अनुकृतेस्तस्य च ॥ १-३-२१ ॥

[सूत्रार्थोपपादनम्]

तस्य—दहराकाशस्य, [7]परस्य ब्रह्मणः अनु[7]कारात्, अयम् अपहतपाप्मत्वादिगुणकः,

[अल्पपरिमाणश्रुतिरिति। 'दहर'शब्दस्य 'सूक्ष्मः' इति व्याख्यानात् इत्यर्थः। आराग्रेति। 'आरा चर्मप्रभेदिन्याम्' इति कोशः। अतः चर्मप्रभेदकस्य अस्त्रादेः धारा—आराग्रम्, तत्सदृशसूक्ष्मपरिमाणपरिमितः जीवः इत्यर्थः।]

अनाघ्रातेति, वस्तुसामर्थ्यं दर्शयति। अत्र ज्ञान शक्त्यादयः सत्यसङ्कल्पत्वफलितत्वादुक्ताः (श्रु प्र)। घ्नन्ति त्विति। एवशब्दः इवार्थः। एनम्—स्वप्नात्मानम्, केचन घ्नन्तीव, केचन विच्छादयन्ति—द्रावयन्तीव भान्तीत्यर्थः (उ.रं.भा.) ॥२०॥

---

[सूत्रार्थः। तस्य—स्वभावतः अपहतपाप्मत्वादिविशिष्टस्य परमात्मनः, अनुकृतेश्च—अनुकारादेव हि!—साम्यापत्त्यैव हि! आविर्भूतस्वरूपत्वम्—स्वस्वरूपाविर्भावः; (अतः दहराकाशः जीवेनानुकार्यः परमात्मा, अनुकर्तुर्जीवादन्य एव)।]

परमं साम्यमित्यादिश्रुत्या साम्यानुकारतः।
जीवोऽनुकर्ता दहरस्त्वनुकार्यः परः पुमान्॥ (ब्र.प.मा. ८६)

---

[1] परिमाणत्व—अ. [2] वाक्ये—न [3] त्वेवैनं हि—थ, द. [4] सम्पत्त्या—थ. [5] न स ह—द [6] इतश्च तदेव—वा. [7] ब्रह्मानु—थ

विमुक्तबन्धः प्रत्यगात्मा ; न दहराकाशः। तदनुकारः—तत्साम्यम्। तथा हि प्रत्यगात्मनः [1]विमुक्तस्य[1] परब्रह्मानुकारः श्रूयते—

'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्।
तदा विद्वान् पुण्य-पापे विधूय निरञ्जनः परमं साम्यमुपैति॥'

(मुण्ड.उ. 3-1-3)

इति। अतः अनुकर्ता, प्रजापति[2]वाक्य[2]निर्दिष्टः। अनुकार्यं ब्रह्म, दहराकाशः॥२१॥

## ८७. अपि स्मर्यते ॥ १-३-२२ ॥

[अनुकरणस्य स्मृतिसिद्धत्वोपपादनम्]

[3]संसारिणोऽपि[3], मुक्तावस्थायां परमसाम्यापत्तिलक्षणः परब्रह्मानुकारः, स्मर्यते—

'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ (भ.गी. 14-2)

इति ॥

[परोक्ताधिकरणान्तरत्वानौचित्यम्]

केचित्—
'अनुकृतेस्तस्य च' (ब्र.सू. 1-3-21)
'अपि स्मर्यते' (ब्र.सू. 1-3-22)
इति सूत्रद्वयम् अधिकरणान्तरम्,

---

तदनुकारः—तत्साम्यमिति. अतथाभूतस्य तथाभावाभिनयशङ्काप्रतिक्षेपार्थमाह। तद्वत् वृत्तिः, इह अनुकारो विवक्षितः। तेन तन्मूलभूतं गुणसाम्यमपि लक्षितं भवति। सारे तु—'स्वच्छन्दवृत्तिरूपः तदनुकारः श्रूयते' इत्युक्तिः गुणसाम्योपलक्षणार्था ॥२१॥

अपि स्मर्यत इति। 'साम्यमुपैति' इत्युक्ते, केन धर्मिणा साम्यम्? इत्यपेक्षापूरणार्थम्, 'मम साधर्म्यमागताः' इति वचनमुपात्तम्।

---

[सूत्रार्थः। तस्य—परमात्मनः, अनुकृतिः—तत्साम्यापत्तिरूपम् अनुकरणं (जीवस्य) स्मर्यतेऽपि—'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' इति स्मृतौ उच्यत एव।]

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।
इति स्मृत्याऽनुकर्ता च जीवस्त्विति न कारणम्॥ (ब्र.प.मा. ८७)

---

[1] विमुक्तबन्धस्य—अ, अपि मुक्तस्य—थ  [2] वाक्ये—न  [3] संसारिणा—थ.

'तमेव भान्तमनु[1]भाति[1] सर्वं तस्य भासा सर्वमिदं विभाति' (मुण्ड.उ. 2-2-11) इत्यस्याः श्रुतेः [2]परब्रह्मपरत्व[2]निर्णयाय प्रवृत्तं वदन्ति ।

तत्तु—

'अदृश्यत्वादिगुणको धर्मोक्तेः' (ब्र.सू. 1-2-22)

'द्युभ्वाद्यायतनं स्वशब्दात्' (ब्र.सू. 1-3-1)

इत्यधिकरणद्वयेन, तस्य प्रकरणस्य [3]परब्रह्म[3]विषयत्वप्रतिपादनात्,

'ज्योतिश्चरणाभिधानात्' (ब्र.सू. 1-1-25)

इत्यादिषु परस्य ब्रह्मणः [4]भारूप[4]त्वावगतेश्च, पूर्वपक्षानुत्थानात् अयुक्तम्, सूत्राक्षरवै[5]रूप्यं च[5] ॥२२॥

॥ इति दहराधिकरणम् ॥५॥

---

**ज्योतिश्चरणेति** । भारूपत्वश्रवणात् प्राकृतज्योतिष्ट्वशङ्कानिवृत्त्यर्थम् । अधिकरणारम्भो युक्तः इत्यत्र [उत्तरमिदम्] । एकप्रकरणस्य अनेकाधिकरणनिरूप्यत्वं हि अधिकाशङ्कायां सत्याम् उचितम्; अत्र तदभावादयुक्तम् इत्यभिप्रायः ।

**सूत्राक्षरवैरूप्यमिति** । 'अनुकृतिः'— अनुभानम् इति, हि! परैरुक्तम्, तदयुक्तम्; करोति-भात्योः एकार्थत्वाभावात् । 'तस्य च' इति श्रुतिप्रतीकोपादानम्, इत्युक्तम् । तदप्ययुक्तम्; 'यदेव विद्ययेति हि' (ब्र.सू. 4-1-18) इतिवत् इतिकरणाभावात् । 'तस्यानुकृतेः' इत्यन्वये स्वारसिकेऽपि, तत्प्रहाणेनार्थवर्णनं च क्लिष्टम् ॥ २२ ॥

[सूत्राणि—(१) दहर (२) गतिशब्दा (३) धृतेश्च (४) प्रसिद्धेश्च
(५) इतरपरामर्शात् (६) उत्तराच्चेत् (७) अन्यार्थश्च
(८) अल्पश्रुतेः (९) अनुकृतेः (१०) अपि स्मर्यते]

॥ इति दहराधिकरणम् ॥ ५ ॥

---

[1] भातीति—आ. [2] परब्रह्मत्व—वा, ब्रह्मत्व—न. [3] पर—न. [4] भावरूप—द
[5] रूप्याच्च—अ, इ.

## २३· प्रमिताधिकरणम् ॥ १–३–६ ॥ (सू. 23, 24)

[अधिकरणार्थः—अङ्गुष्ठप्रमाणपरिमितत्वेन श्रुत्युक्तः परमात्मैव ; न कर्मवश्यो जीवः ।]

[अङ्गुष्ठप्रमितविद्या, नाचिकेतविद्या वा (कठ.उ. 4–12)

## ८८. शब्दादेव प्रमितः ॥ १-३-२३ ॥

[विषयवाक्यप्रदर्शनम् ]

कठवल्लीषु श्रूयते—

'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।
ईशानो भूतभव्यस्य न ततो विजुगुप्सते ॥ एतद्वै तत् ॥' (कठ.उ. 4–12)
'अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ।
ईशानो भूतभव्यस्य स एवाद्य स उ श्वः ॥ एतद्वै तत् ॥' (कठ.उ. 4–13)
'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः ।
तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण ॥
तं विद्याच्छुक्रममृतम्' (कठ.उ. 6–17)

इति ॥

---

**शब्दादेवेति** । 'अल्पश्रुतेरिति चेत्' इत्यत्र 'अल्पपरिमाणत्वं भगवतः' इत्युक्तम् । अथ—अल्पपरिमाणत्वविशेषः परमात्मव्यतिरिक्तस्य दृश्यते—इति शङ्कया सङ्गतिः ॥

[**अङ्गुष्ठमात्र** इति । अङ्गुष्ठस्य (अङ्गौ-हस्ते, प्रधानतया तिष्ठतीति, अङ्गुष्ठः—वृद्धाङ्गुलिः) **मात्रा**—परिमाणमिव, मात्रा—परिमाणं यस्य सः, अङ्गुष्ठमात्रः । **ततः**—ईशानत्वादेव हेतोः । **न विजुगुप्सते**—दोषान् न पश्यति ।]

[**प्रवृहेत्**—विविच्य जानीयात् । **धैर्येण**—ज्ञानकौशलेन ।] **शुक्रममृतम्** इत्यन्तं विषयवाक्यमुपाददानस्यायं भावः—केचित्, 'अङ्गुष्ठप्रमितत्वमात्रं श्रुतम् । न तु स्थानविशेषः,

---

[सूत्रार्थः । **प्रमितः**—अङ्गुष्ठप्रमाणप्रमिततया श्रुत्युक्तः, (परमात्मैव ;) **शब्दादेव**—(तस्यैव अङ्गुष्ठमात्रतया उक्तस्य परमात्मत्वबोधकात्, 'ईशानो भूतभव्यस्य' इति) श्रुतिरूपात् शब्दादेव ज्ञापकात् ।]

**अङ्गुष्ठमात्रः पुरुषः कठवल्ल्यामिहोदितः ।**
**भूतभव्यादीशितृत्वशब्दादेव परः पुमान् ॥ (अ. प. मा. ८८)**

[संशयाकारः]

तत्र सन्दिह्यते—किमयम् अङ्गुष्ठमात्रप्रमितः प्रत्यगात्मा? उत परमात्मा?—इति ।

[सयुक्तिकः पूर्वः पक्षः]

किं युक्तम् ?

प्रत्यगात्मा — इति ।

कुतः ?

जीवस्य अन्यत्र अङ्गुष्ठ[1]मात्रत्वश्रुतेः[1],

'[2]प्राणाधिपः[2] सञ्चरति स्वकर्मभिः' (श्वे उ. 5-7)

'अङ्गुष्ठमात्रो रवितुल्यरूपः सङ्कल्पाहङ्कारसमन्वितो यः' (श्वे.उ. 5-8)

इति । न च—अन्यत्र उपासनार्थतयाऽपि परमात्मनः अङ्गुष्ठमात्रत्वं श्रूयते । एवं निश्चिते जीवत्वे, ईशानत्वं शरीरेन्द्रियभोग्यभोगोप[3]करणापेक्षयाऽपि[3] भविष्यति ॥

[सिद्धान्तारम्भः]

एवं प्राप्ते, ब्रूमः—शब्दादेव प्रमितः ।

---

न चोपासनम् । अतः परमात्मपरत्वानादरेण जीवपरत्वं शङ्क्यते' इति पूर्वपक्षमाहुः । तदयुक्तम्; 'हृदये संनिविष्टः । तं विद्यात्' इति अनन्तरवाक्ये स्थानोपासनावगमात्, तदनवगमस्य हेतुत्व-कथनायोगात्—इति ।

**सन्दिह्यते** इति । परमात्मनः अङ्गुष्ठप्रमितत्वानुपपत्तेः, जीवस्य सर्वेशानत्वानुपपत्तेश्च संशयः; अङ्गुष्ठप्रमितः किं प्रत्यगात्मा ? उत परमात्मा ?—इति । तदर्थम्—ईशानत्वं किं देहेन्द्रियाद्यपेक्षम् ? उत सर्वापेक्षम् ?—इति । उपक्रमावगतं प्रमितत्वं—किम् ईशानत्व-लिङ्गस्वारस्यविरोधि ? उत अविरोधि ?—इति । तत् प्रमितत्वं—किं जीवे समञ्जसम् ? उत उभयत्र असमञ्जसम् ?—इति ।

पूर्वः पक्षः—यदा जीवे समञ्जसम्; तदानीं स्वसामञ्जस्यसिद्ध्यर्थम् उपक्रमावगतं प्रमितत्वम्, ईशानत्वलिङ्गस्वारस्यविरोधि इति, ईशानत्वस्य देहेन्द्रियाद्यपेक्षत्वात्, अङ्गुष्ठप्रमितो जीवः—इति।

राद्धन्ते—यदा उभयत्र प्रमितत्वमसमञ्जसम्; तदा प्रत्यगात्मन्यपि स्वारस्यासिद्धेः । तदर्थम् ईशानत्वलिङ्गस्वारस्यानुपरोधकत्वात्, ईशानत्वं सर्वापेक्षमिति, अङ्गुष्ठप्रमितः परमात्मा—इति फलफलिभावः ।

**न चेति** । प्राणाधिपस्य कर्मवश्यस्य, अङ्गुष्ठमात्रत्वम् अमुख्यमपि हि श्रुतम्; न तु परमात्मनः । अतः जीवस्य बुद्धिस्थत्वात् तस्य प्रतिपाद्यत्वशङ्का—इत्यर्थः ।

---

[1] मात्रश्रुतेः—द [2] विश्वाधिपः—अ [3] करणापेक्षया—अ, इ, वा

[1]अङ्गुष्ठ[1]प्रमितः, परमात्मा ।

कुतः ?

'ईशानो भूतभव्यस्य' (कठ. उ. 4-13)

इति शब्दादेव । न च भूतभव्यस्य सर्वस्येशितृत्वं, [2]कर्मपरवशस्य[2] जीवस्य उपपद्यते ॥ २३ ॥

[उत्तरसूत्रार्थशङ्का]

कथं [3]तर्हि[3], परमात्मनः अङ्गुष्ठमात्रत्वम् ? इत्यत्राऽऽह—

## ८९. हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ १-३-२४ ॥

[परमात्मनः अङ्गुष्ठप्रमिततानिदानम् ]

परमात्मनः, उपासनार्थम् उपासकहृदये वर्तमानत्वात्, उपासकहृदयस्य अङ्गुष्ठप्रमाणत्वात्, तदपेक्षया इदमङ्गुष्ठ[4]प्रमितत्वम्[4] उपपद्यते । [5]जीवस्याऽपि[5] अङ्गुष्ठप्रमितत्वं, हृदयान्तर्वर्तित्वात् तदपेक्षमेव ; तस्य आराग्रमात्रत्वश्रुतेः । मनुष्याणामेव उपासकत्वसम्भावनया शास्त्रस्य मनुष्याधि[6]कारत्वात्[6], मनुष्यहृदयस्य च [7]तत्तदङ्गुष्ठ[7]प्रमितत्वात्, खर-तुरग-भुजगादीनाम् अनङ्गुष्ठप्रमितत्वेऽपि, न कश्चिद्दोषः । स्थितं तावत् उत्तरत्र समापयिष्यते ॥ २४ ॥

ईशानो....शब्दादेवेति । [शब्दात् —श्रुतेः । सा च श्रुतिः 'ईशानो भूतभव्यस्य' इति शब्द इत्येकेत्यर्थः ।] किम् ईश्वरः ? किं जीवः ? इति विचारे, न ईश्वरसम्बन्धिलिङ्गात् निर्णयः ; किन्तु ईशत्ववाचिशब्दादेव इति एवकाराभिप्रायः ॥२३॥

वर्तमानत्वादिति, अध्याहारेण योजना : जीवस्याऽपीति। अङ्गुष्ठप्रमितस्य जीवत्वपक्षे, अङ्गुष्ठप्रमित-ईशानशब्दयोरुभयोरपि अस्वारस्यम् । परमात्मत्वपक्षे, अङ्गुष्ठप्रमितशब्दस्यैकस्यैव अस्वारस्यम् ॥ २४ ॥

[सूत्रार्थः । हृदि—हृदयाख्ये शरीरान्तर्वर्तिनि स्थानविशेषे, (परमात्मनः अवस्थानात्, अपेक्षया तु—तस्मिन् स्थाने परमात्मनः उपासकार्थमभिव्यक्तिमभिप्रेत्यैव, प्रमितः—अङ्गुष्ठपरिमित इति व्यपदेशः, मनुष्याधिकारत्वात्—उपासनविधायकस्य शास्त्रस्य, उपासकं मनुष्यमधिकृत्यैव प्रवृत्तत्वात् (मनुष्यहृदयस्थानस्य तत्तन्मनुष्याङ्गुष्ठप्रमाणत्वात् ।]

उपासने मनुष्याणामधिकारात्परात्मनः ।
अङ्गुष्ठप्रमितत्वं च हृदयापेक्षया भवेत् ॥ (ब्र.प.मा. ८९)

[सूत्राणि—(१) शब्दादेव (२) हृद्यपेक्षया]

॥ इति प्रमिताधिकरणम् ॥ ६ ॥

---

[1] अङ्गुष्ठमात्र—वा. [2] कर्मवश्यस्य—इ [3] तस्य—द [4] प्रमितत्वमात्रम्-थ [5] जीवस्य-न [6] कारित्वात्-त. [7] तदङ्गुष्ठ-वा

२४. प्रमिताधिकरणगर्भे देवताधिकरणम् ॥ १-३-७॥ (सू. 25-29)

[अधिकरणार्थः—श्रुत्युक्तब्रह्मोपासनाधिकारः देवानामप्यस्त्येव ।]

[विद्यासामान्यसम्बन्धि]

## १०. तदुपर्यपि बादरायणस्सम्भवात् ॥ १-३-२५ ॥

[विषय-संशययोः प्रदर्शनम् ]

परस्य ब्रह्मणः [1]अङ्गु[1]प्रमितत्वोपपत्तये, 'मनुष्याधिकारं ब्रह्मोपासनशास्त्रम्' इत्युक्तम् । तत्प्रसङ्गेन, इदानीं ब्रह्मविद्यायां देवादीनामपि अधिकारः अस्ति? नाऽस्ति? —इति विचार्यते ॥

[पूर्वः पक्षः सयुक्तिकः]

किं तावद्युक्तम्?

नाऽस्ति देवानामधिकारः—इति ।

---

परस्य इति, प्रसङ्गसङ्गतिमाह । 'मनुष्याधिकारत्वात्' इत्यत्र 'मनुष्य'-शब्देन तिर्यङ्मात्रं व्यावर्तितम्? उत देवादिरपि?—इति बुभुत्सया सङ्गतिः इत्यर्थः ।

[सन्देहाकारः] किं ब्रह्मविद्यायां देवादीनामधिकारः अस्ति? न?—इति विचारः : तदर्थं—किं तेषां साङ्गब्रह्मविद्योपसंहारसामर्थ्यम् अस्ति? न?—इति । तदर्थं—किं तेषां विग्रहवत्त्वं सम्भवति? न?—इति । किं तद्विग्रहप्रतिपादकमन्त्रार्थवादानां तत्परत्वं संभवति? न?—इति। किं मन्त्रार्थवादानाम् अनुष्ठेयार्थप्रकाशन-स्तुतिपरत्वं, विग्रहादिविवक्षाविरोधि? उत न?—इति । किं विग्रहादिमत्त्वम्, अनुष्ठेयार्थप्रकाशनस्तुत्योः उपयोगि? न?—इति ।

[पूर्वपक्षे]—यदा अनुपयोगि; तदा अनुष्ठेयार्थप्रकाशन-स्तुतिपरत्वस्य विग्रहादिविवक्षा-

---

[सूत्रार्थः । तत्—ब्रह्मोपासनम्, उपर्यपि—मनुष्याणामुपरि देवादिष्वपि, (सम्भवति इति), बादरायणः—बादरायणनामा आचार्यः (मन्यते); सम्भवात्—देवादीनामपि अर्थित्वसामर्थ्ययोः सम्भवात् ।]

देवानां तु भवेद्ध्यानम् अर्थित्वादेश्च सम्भवात् ।
बादरायण आचार्यस्त्वेवमेवेति मन्यते ॥ (ब्र.प.मा. १०)

---

[1] अङ्गुष्ठमात्र-थ

कुतः ?

सामर्थ्याभावात्। न हि अशरीराणां देवादीनां विवेक-विमोकादिसाधन-सप्तकानुगृहीतब्रह्मोपासनोपसंहारसामर्थ्यमस्ति। न च देवादीनां सशरीरत्वे प्रमाण-मुपलभामहे ॥

[देवादीनां विग्रहसम्बन्धस्य प्रमाणतोऽसिद्धिः]

यद्यपि, [1]परिनिष्पन्नेऽपि[1] वस्तुनि व्युत्पत्तिसम्भावनया, वेदान्तवाक्यानि परे ब्रह्मणि प्रमाणभावमनुभवन्ति। तथाऽपि, देवादीनां विग्रहवत्त्वप्रतिपादनपरं न किञ्चिदपि वाक्यमुपलभ्यते। मन्त्रार्थवादास्तु कर्मविधिशेषतया अन्यपरत्वात् न देवादि-विग्रहसाधने प्रभवन्ति। कर्मविधयश्च स्वापेक्षितोद्देश्यकारकत्वातिरेकि देवतागतं किमपि न साधयन्ति।

---

विरोधितया, मन्त्रार्थवादानां देवताविग्रहादिपरत्वाभावेन, देवानां विग्रहविरहेण सामर्थ्याभावात्-तदनधिकारः—इति फलितम्।

[सिद्धान्ते]—यदा उपयोगि ; तदा अनुष्ठेयार्थप्रकाशनस्तुतिपरत्वस्य विग्रहादिविवक्षानु गुणतया मन्त्रार्थवादानां तत्परत्वेन, देवानां विग्रहवत्तया साङ्गब्रह्मविद्योपसंहारसामर्थ्यात् अस्ति ब्रह्मविद्याधिकारः—इति फलितम्।

**सामर्थ्याभावादिति,** अर्थित्वाभावस्याप्युपलक्षणमेतत्। **उपसंहारः**—अनुष्ठानम्।

**यद्यपीति।** प्रयोजनपर्यवसायितयैव हि शब्दस्य प्रामाण्यम्। तत्र पूर्वभागवचसां, प्रवृत्ति-निवृत्तिरूपप्रयोजनपर्यवसानात् तत्र तात्पर्यम। ब्रह्मणः पुरुषार्थतया तत्र वेदान्तान तात्पर्यम्। देवादीनां विग्रहेषु तथात्वाभावात् न तात्पर्यम् इत्यर्थः।

**मन्त्रेति।** मन्त्राश्च अर्थवादाश्च इत्यर्थः। **अन्यपरत्वादिति।** अनुष्ठेयार्थप्रकाशन--स्तुत्योः अन्यपरत्वात् इत्यर्थः। **कर्मविधयश्चेति।** मा सैत्सीत् अन्यपरेण मन्त्रार्थवादेन देवताः विग्रहादि। किं तु कर्मविधिभिस्त्वेव सेत्स्यति ; कर्मणः द्रव्य-देवतानिरूप्यत्वात्। क्षणध्वंसिन कर्मणः कालान्तरभाविफलसाधनत्वनिर्वाहाय, देवतैश्वर्यस्य अपेक्षितत्वात्। श्रुतहानेन अश्रुतापूर्व-कल्पनायोगाच्च, इत्यतः [उत्तरम्]। अयमभिप्रायः—यद्यपि देवतावस्तु यागहोमादिकर्मसु देवतैश्वर्याङ्गीकारेणाऽपि फलप्रदत्वनिर्वाहसम्भवः ; तथाऽपि दानतपःप्रभृतिषु देवतानामभावात्, कल्पनीयमेव अपूर्वम्। तथा च समानन्यायतया याग-होमादावपि अपूर्वमेव कल्प्यताम् ; किम् अर्धवैशसेन ?—इति। [**उद्देश्यकारकत्वम्**—सम्प्रदानत्वम्।]

---

[1] परिनिष्पन्ने—द

अत एव तासामर्थित्वमपि न सम्भवति। अतः सामर्थ्यार्थित्वयोः अभावात् देवादीनाम् अनधिकारः—इति ॥

[सिद्धान्तारम्भः]

एवं प्राप्ते, प्रचक्ष्महे—[1]तदुपर्यपि बादरायणः[1] सम्भवात्।

तदुपर्यपि। तत्—ब्रह्मोपासनम् , उपरि—देवादिष्वपि, सम्भवति इति भगवान् बादरायणो मन्यते ; [2]तेषाम्[2] अर्थित्व-सामर्थ्ययोः सम्भवात्।

अर्थित्वं तावत्—आध्यात्मिकादिदुर्विषहदुःखाभितापात् , परस्मिन् ब्रह्मणि च निरस्तनिखिलदोषगन्धे अनवधिकातिशयासङ्ख्येयकल्याणगुणगणे निरतिशयभोग्यत्वादि-ज्ञानाच्च, सम्भवति। सामर्थ्यमपि, पटुतरदेहेन्द्रियादिमत्तया सम्भवति ॥

[देवादीनां विग्रहादिमत्तायाः प्रामाणिकता]

देहेन्द्रियादिमत्त्वं च, ब्रह्मादीनां सकलोपनिषत्सु सृष्टिप्रकरणेषु उपासनप्रकरणेषु च श्रूयते। तथा हि—

'सदेव सोम्येदमग्र [3]आसीत्[3]' (छां.उ. 6-2-1)

'तदैक्षत बहु स्यां प्रजायेयेति। तत्तेजोऽसृजत' (छां.उ. 6-2-3)

इत्यारभ्य, सर्वमचेतनं तेजोबन्न[4]प्रमुखावस्था[4]विशेषवत् व्याकृत्य,

'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नाम-रूपे व्याकरवाणि' (छां.उ. 6-3-2)

इति सङ्कल्प्य, ब्रह्मादिस्थावरान्तं [5]चतुर्विधं भूतजातं[5], तत्तत्कर्मोचित[6]शरीरं[6] तदुचित-[7]नाम[7]भाक् च [8]अयमकरोत्[8] इत्युक्तम्।

---

अत एवेति। यत एव न विग्रहवत्त्वं देवतानाम्, अत एव अर्थित्वमपि न सम्भवति ; दुःखस्य तज्जिहासायाश्च देहसम्बन्धमूलत्वात्, अर्थित्वस्य दुःखजिहासारूपत्वाच्च, इत्यर्थः ॥

पटुतरशब्दः मनुष्यदेहादपि पटुत्वातिशयपरः ॥

सकलोपनिषत्सु इति। तत्त्वोपदेशप्रधानमन्त्र-ब्राह्मणरूपवेदभागाः उपनिषदः। ताश्च द्विविधाः—तत्त्वपराः, उपासनपराश्चेति। उभयीष्वपि तासु, देवतानां विग्रहादिमत्त्वम् अवगम्यते इत्यर्थः। सदेवेत्यादि। नामरूपव्याकरणस्य कण्ठोक्त्या नामरूपाणां चातुर्विध्यस्य प्रमाणसिद्धत्वात् , नामरूपव्याकरणश्रुत्यैव देवताविग्रहवत्त्वं सामान्येन सिद्धम् इत्यर्थः। 'इन्द्रो वरुणः सोमो रुद्रः

---

[1] बादरायणः—अ. थ [2] तेषामपि—द [3] आसीदेकमेवाद्वितीयम्—वा [4] प्रमुखमवस्था—थ [5] चतुर्विधभूतजातं—थ [6] भूतशरीरं—न [7] नामरूप—ई [8] अकरोत्—वा

एवं, सर्वत्र सृष्टिवाक्येषु, देव-तिर्यङ्-मनुष्य-स्थावरात्मना चतुर्विधा सृष्टिः आम्नायते। देवादिभेदश्च, तत्तत्कर्मानुगुणब्रह्मलोकप्रभृति चतुर्दशलोकस्थफलभोगयोग्य-देहेन्द्रियादि[1]योगायत्तः[1] ; आत्मनां स्वतो देवादित्वाभावात् ॥

[विग्रहादिमत्त्वे उपष्टम्भकम्]

तथा—

'[2]तद्धोभये[2] [3]देवासुरा[3] अनुबुबुधिरे, ते होचुः....इन्द्रो ह वै [4]देवानामभि[4]-प्रवव्राज, विरोचनोऽसुराणां, तौ [5]हासंविदानावेव[5] समित्पाणी, प्रजापतिसकाशमाजग्मतुः' (छां.उ 8-7-2)

'तौ ह द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुः, तौ ह प्रजापतिरुवाच' (छां.उ. 8-7-3)

इत्यादिना, स्पष्टमेव शरीरेन्द्रियवत्त्वं देवादीनां प्रतीयते।

कर्मविधिशेषभूतमन्त्रार्थवादेष्वपि,

'वज्रहस्तः पुरन्दरः' (तै.ब्रा. 2-6-7-3)

'तेनेन्द्रो वज्रमुदयच्छत्' (तै.सं. 2-4-12-5)

इत्यादिभिः प्रतीयमानं विग्रहादिमत्त्वं, प्रमाणान्तराविरुद्धं तत्प्रमेयमेव ॥

[आख्यायिकादीनाम् अन्यपरत्वशङ्का, तत्परिहारश्च]

न च अनुष्ठेयार्थप्रकाशन-स्तुतिपरत्वाभ्यां प्रतीयमानार्थान्तराविवक्षा शक्यते वक्तुम्; स्तुत्याद्युप[1]योगित्वात्[1], तेन विना स्तुत्याद्यनुपपत्तेश्च। गुणकथनेन हि

---

पर्जन्यो यमो मृत्युरीशानः' 'नारायणात् ब्रह्मा जायते' इत्यादीनि विशेषोक्तिमन्ति च वाक्यान्यभिप्रेतानि।

देवादीति। उपासनदशायां परमकारणभूतस्य उपास्यस्य लक्षणत्वेन, प्राप्यदशायां प्राप्यविशेषणत्वेन, विग्रहादिमत्त्वं सिद्धम् इत्यर्थः ॥

कर्मविधीति। तत्र प्रथमसूत्रे, सिद्धवस्तुनि तात्पर्यसम्भवस्य फलत्वेन, सिद्धिरुक्ता। अत्र, स्तावकत्व-प्रकाशकत्वहेतुतया, 'फलमत उपपत्तेः' (ब्र. सू. 3-2-37) इत्यत्र फलसाधनत्वेन, इति त्रिधा विभाग [उक्तः]। प्रमाणान्तराविरुद्धमिति, 'आदित्यो यूपः' इत्यादिव्यावृत्त्यर्थम् ॥

न चेत्यादिना, अन्यपरत्वमनूद्य निरस्यति। स्तुत्यादि इति, आदिना अनुष्ठेयार्थ-

---

[1] भोगायत्तः—वा  [2] तदुभये—थ  [3] देवा असुराः—द, न  [4] देवानामधिपः—थ.
[5] ह संविदानावेव—श.

स्तुतित्वम्। गुणानाम् असद्भावे, स्तुति[2]त्वमेव हीयेत[2]। [3]न च असता गुणेन कथितेन[3] प्ररोचना जायते। अतः कर्म प्ररोचयन्तः, गुणसद्भावं बोधयन्त्येव अर्थवादाः।

मन्त्राश्च कर्मसु विनियुक्ताः, तत्र तत्र किञ्चित्करत्वाय [4]अनुष्ठेयमर्थं[4] प्रकाशयन्तः, देवतादिगत[5]विग्रहादि[5]गुणविशेषम् अभिदधत एव, [6]तत्र[6] किञ्चित्कुर्वन्ति; अन्यथा इन्द्रादिस्मृत्यनुपपत्तेः। न च निर्विशेषा [7]देवता[7] धियमधिरोहति। तत्र प्रमाणान्तरा-प्राप्तान् गुणान् स्वयमेव बोधयित्वा, तैः कर्म[8] प्ररोचयन्ति, गुणविशिष्टं वा प्रकाशयन्ति[8]। प्राप्तांश्च [9]अनूद्य तैः[9] प्ररोचन-[10]प्रकाशने[10] कुर्वन्ति। विरुद्धत्वे तु, तद्वाचिभिश्शब्दैः, अविरुद्धान् गुणान् लक्षयित्वा कुर्वन्ति॥

[कर्मविध्यादीनां देवतैश्वर्यपरत्वस्यावर्जनीयता]

कर्मविधेश्च, [11]देवताया[11] ऐश्वर्यम् अपेक्षितमेव। कामिनः कर्तव्यतया कर्म

प्रकाशनं मन्त्रकृत्य गृह्यते। 'मन्त्रार्थवादेषु' इति उद्देशे, अनुष्ठेयार्थप्रकाशन-स्तुतिपरत्वाभ्याम् इत्यनूद्देशे च अवगतः क्रमः, अत्र परित्यक्तः; तत्र कारणं —'अर्हन् बिभर्षि सायकानि धन्वेत्याह। स्तौत्येवैनमेतत्' इति ब्राह्मणेनैव, 'अर्हन्' इत्यादिमन्त्रस्य स्तुतिपरत्वमवगम्यते, इति स्तुतेः व्यापकत्वम्। **तेन विना**—प्रतीयमानार्थेन विना। **स्तुतित्वमेव**—प्ररोचकत्वमेव। **हीयेतेति**। शेषभूतस्य शेषिणं प्रति किञ्चित्कारोऽपेक्षितः। स न सिद्ध्यतीति यावत्। **न च . . . . जायत** इति। अनेन, 'न असता स्तुतिरुपपद्यते' इति द्रमिडभाष्यं स्मार्यते।

**देवतादिगतेति**। द्रव्य-देवते हि कर्मनिरूपिके। 'एतद्दैवत्यम् इदं कर्म' इति प्रतिपत्तौ देवताविशिष्टत्वेन हि कर्मप्रतिपत्तिः। देवता च 'ईदृशी' इत्येव प्रतिपत्तव्या। तस्मात् अनुष्ठेयार्थप्रकाशकत्वसिद्ध्यर्थं, मन्त्राणां विग्रहादिमत्त्वे प्रामाण्यमस्त्येवेत्यर्थः। **[प्रमाणान्तरा-प्राप्तान्**—प्रत्यक्षादिभिरसिद्धान्।] **बोधयित्वा**—विधाय। **प्ररोचयन्ति**, अर्थवादाः। **प्रकाशयन्ति**, मन्त्राः। **लक्षयित्वा**—लक्षणया बोधयित्वा। **कुर्वन्ति**, प्ररोचन-प्रकाशने॥

**कर्मविधेश्चेति**। 'फलमत उपपत्तेः' (ब्र.सू. 3-2-37) इत्यधिकरणार्थः बुद्धि-सौकर्यार्थम् अत्र सङ्गमय्य कथ्यते; न च एतदधिकरणासाधारणार्थतया। असाधारणः

1 योगात्-न 2 मेव हीयते-द, मपि हीयते-वा 3 न ह्यसता गुणेन कथितेन-वा, न चासति गुणे कथिते तेन-न 4 अनुष्ठेयार्थ-वा 5 विग्रहादिगत-थ 6 तत्र तत्र-थ 7 देवतापीयं-वा 8 प्रमाणान्तरप्राप्तं तत्प्ररोचयन्तो गुणविशिष्टं प्रकाशयन्तः-थ 9 अनूद्य-इ, थ 10 प्रकाशे-इ 11 देवतायाः प्रमाणान्तरप्राप्तं वा

विधीयमानं, स्वयं क्षणप्रध्वंसि, कालान्तरभाविनः [1]फलस्य स्वर्गादेः[1] साधकम् अपेक्षते। मन्त्रार्थवादयोश्च,

'वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति' (तै.सं. 2-1-1-1)

'यदनेन हविषाऽऽशास्ते तदश्यात्तदृध्यात् तदस्मै देवा [2]राधन्ताम्[2]' (तै.ब्रा. 3-5-10)

इत्यादिषु देवतायाः कर्मणा आराधितायाः फलदायित्वं, [3]तदनुगुणं च[3] ऐश्वर्यं प्रतीयमानम् अपेक्षितत्वेन वाक्यार्थे समन्वीयते। देवपूजाभिधायिनो 'यजि' धातोश्च [4]यागाख्यं कर्म[4] स्वाराध्यदेवताप्रधानं प्रतीयते॥

[मीमांसकोक्तस्य अपूर्वस्य अकिञ्चित्करता]

तदेवं, कृत्स्नवाक्यपर्यालोच[5]नया[5], वाक्यादेव विध्यपेक्षितं सर्वम् अवगतमिति, न अपूर्वादिकं व्युत्पत्तिसमयानवगतं कर्मविधिषु [6]अभिधेयतया[6], कल्प्यतया [7]वा[7] आश्रयितव्यम्।

तथा सङ्कीर्णब्राह्मणमन्त्रार्थवादमूलेषु धर्मशास्त्रेतिहासपुराणेषु, ब्रह्मादीनां देवासुर-

---

अर्थस्तु, स्तावकत्व-अनुष्ठेयप्रकाशकत्वसिद्ध्यर्थं प्रतीयमानार्थे प्रामाण्यमस्तीत्ययमर्थः। **वायुर्वा इति।** श्रुतहानम् अश्रुतकल्पनं च अनुपपन्नम्; रात्रिसत्रादिष्विव [न अपूर्वकल्पनावकाशः] इति भावः। **समन्वीयत इति।** आर्थवादिकार्थानां श्रूयमाणत्वात्, तद्विशिष्टे वाक्यतात्पर्यमिति निश्चिते सति, 'रक्तः पटो भवति' इतिवत्। उत्थापिताकाङ्क्षत्वेन विधिना एकवाक्यतया [समन्वयः] अर्थवादानाम् इति भावः। **देवपूजेत्यादि।** यत्र वाक्यशेषवशात् अपेक्षितदेवताप्रीतिद्वारकत्वं न सिद्ध्यति, तत्राऽपि यजिसामार्थ्यात् तत् सिद्ध्यति; अर्थवादाभावेऽपि विधिसामर्थ्यात् स्तुतिरेव, इत्याशयः॥

कृत्स्नशब्देन मन्त्रार्थवादविधयो विवक्षिताः। **व्युत्पत्तिसमयानवगतमिति।** कल्प्यापूर्ववादे अपूर्वमेव कल्प्यम्; वाच्यपक्षे वाच्यत्वमपि [तस्य] कल्प्यम् इत्यभिप्रायः॥

**तथेत्यादि।** 'ब्राह्मण' शब्देन, विध्युद्देशग्रहणम्। विधि-अर्थवाद-मन्त्ररूपेण

---

[1] फलस्य-न. [2] रासन्ताम्-ई [3] तदनुगुणम्-द [4] यागाख्यकर्म-भ [5] नायां-द. [6] अविधेयतया-द [7] च-न.

[1]प्रभृतीनां च[1] देहेन्द्रियादयः, स्वभावभेदाः, स्थानानि ,भोगाः, कृत्यानि च इत्येवमादयः सुव्यक्ताः प्रतिपाद्यन्ते । अतः विग्रहादिमत्त्वात् देवादीनामपि अधिकारः अस्त्येव ॥२५॥

## ११. विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ १-३-२६ ॥

[वेदन्तार्थस्य विरोधाक्षेपस्य उपपादनम्]

देवादीनां विग्रहादिमत्त्वाभ्युपगमे, कर्मणि विरोधः प्रसज्यते। बहुषु यागेषु युगपत् , एकस्येन्द्रस्य विग्रहवत्त्वे,

'अग्निमग्न आवह' (तै.ब्रा. 3-5-9)

'इन्द्र आगच्छ हरिव आगच्छ' (तै.आर. 1-12)

इत्यादिना [2]आहूतस्य तस्य[2], सन्निधानानु[3]पपत्तेः[3] । दर्शयति च अग्न्यादीनां तत्र तत्र आगमनम्—

विभागवताम् , अस्मदादिभिरनधीतासु अधीतासु च शाखासु, तत्राऽपि अन्यतरप्रकरणेषु प्रसङ्गादनुप्रविष्टानां, भगवता व्यासेन व्यस्तेषु अव्यस्तेषु च वेदभागेषु विप्रकीर्णानां वाक्यानाम्, अर्थाः इतिहासादिषु सङ्कलय्य प्रकाश्यन्ते इति भावः । 'सङ्कीर्ण'शब्देन, नित्यानुमेय-श्रुतिमूलत्व—उत्सन्नशाखामूलत्वयोः व्युदासः ; तदुभयमपि हि अनुपपन्नम् । **देवादीनामपि** इति । देवतानां हि, विद्या—कर्मणी न क्वचित् प्रतिषिद्धे । प्राक्तनज्ञानाप्रमोषात् सामर्थ्यं च स्थितम् ॥ २५ ॥

**विरोध** इति । विग्रहाभ्युपगमे, तद्वत् आर्थवादिके आह्वानागमने च अभ्युपेये । तदा युगपत् अनेककर्मसु आह्वाने विरोधः ; शरीराधीनत्वादागमनस्य इत्यर्थः ॥

---

[सूत्रार्थः । (देवादीनाम् उपासनयोग्यपटुतरदेहेन्द्रियाद्यभ्युपगमे) **कर्मणि**—बहुभिः एकदा क्रियमाणे यागादौ कर्मणि, **विरोधः**—एकस्य मूर्तिमतः युगपत् विभिन्नानेकदेशवर्तितानुपपत्तिरूपो विरोधः, **इति चेत्**—इति चिन्तनं तु, **न**—नोचितम्, **अनेकप्रतिपत्तेः**—सौभर्यादिषु एकदा अनेकशरीरपरिग्रहेण अनेकत्र सन्निधानस्य, **दर्शनात्**—पुराणादिषु श्रवणात् ।]

शरीरवत्त्वे देवानां विरोधः कर्मणीति चेत् ।
नैवं नानावपुः प्राप्तेः सौभर्यादिषु दर्शनात् ॥ (अ. प. मा. ९१)

---

[1] प्रभृतीनां-अ, इ, घ. [2] आहूतस्य-न [3] पपत्तिः-इ

'कस्य [1]वा ह[1] देवा यज्ञमागच्छन्ति, कस्य वा न, बहूनां यजमानानां
योवै देवताः पूर्वः परिगृह्णाति, स एनाश्श्वोभूते यजते' (तै.सं. 1-6-7-21)
इति। अतः—विग्रहादिमत्त्वे कर्मणि विरोधः प्रसज्यते—इति चेत्,

[प्राप्तस्य विरोधस्य परिहारः]

[2]तन्न[2]; अनेकप्रतिपत्तेर्दर्शनात्। दृश्यते हि सौभरिप्रभृतीनां शक्तिमतां युगपत् अनेकशरीरप्रतिपत्तिः ॥ २६ ॥

## ९२. शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ॥१-३-२७॥

[प्रकारान्तरेण विरोधप्रदर्शनम्]

विरोध इति वर्तते। मा भूत् कर्मणि विरोधः; अनेकशरीरप्रतिपत्तेः। शब्दे तु वैदिके, विरोधः प्रसज्यते; अनित्यार्थसंयोगात्। विग्रहवत्त्वे हि, सावयवत्त्वेन इन्द्रादेरर्थस्य, अनित्यत्वमनिवार्यम्। [3]ततः, देवदत्तादि[3]शब्दवत् इन्द्राद्यर्थजन्मनः प्राक्, [4]विनाशात्[4] ऊर्ध्वं च, इन्द्रादिशब्दानां वैदिकानाम्, अर्थशून्यत्वम् अनित्यत्वं वा वेदस्य स्यात्— इति चेत्,

---

**दृश्यते हीति।** 'आत्मनो वै शरीराणि बहूनि मनुजेश्वर। योगी कुर्यात् बलं प्राप्य तैश्च सर्वां महीं चरेत् ॥' इति भारतवचनादि द्रष्टव्यम्। योग्यानुपलम्भस्तु, मन्त्रौषधादिभिः मनुष्याणामिव शक्तिविशेषैः देवानामपि सम्भवतीति न विरोधः इति भावः ॥ २६ ॥

[**वर्तत** इति। पूर्वसूत्रतः अनुवृत्तं सत्, अत्र वर्तते इत्यर्थः।] **वैदिके** इति, [सूत्रस्थं] शब्दशब्दं विशिनष्टि।

**अर्थशून्यत्वम् अनित्यत्वं वा** इति। देवदत्तादिविनाशे देवदत्तादिशब्दस्येव,

---

[सूत्रार्थः। **शब्दे**—वेदप्रयुक्ते इन्द्रादिशब्दे, (**विरोधः**—अर्थशून्यत्वानित्यत्वाद्यात्मकः अनभ्युपगतार्थसंसर्गः) **इति चेत्**—इत्येवमापादनम्, **न**—न सङ्गच्छते, **अतः**—वेदपठितादेव इन्द्रादिशब्दात्, **प्रभवात्**—इन्द्रादिदेवानां सृष्टेरभ्युपगमात्, (अस्यार्थस्य सिद्धिस्तु) **प्रत्यक्षानुमानाभ्याम्**—'वेदेन रूपे व्याकरोत्' इति श्रुत्या, तथा 'वेदशब्देभ्य एवादौ . . . . निर्ममे' इति स्मृत्या च भवति।]

देवादीनां तनोर्नाशे वेदोऽनित्यार्थयुग्भवेत्।
इत्ययुक्तमिदं शब्दात्तत्सृष्टेश्च श्रुतेस्स्मृतः ॥ (ब्र. प. मा. ९२)

---

[1] ह—द. [2] न—इ, वा. [3] देवदत्तादि—इ, द. [4] अविनाशात्—द.

[विरोधपरिहारः]

[1]तन्न[1]; अतः प्रभवात् । अस्मात् इन्द्रादिशब्दादेव, [2]पुनःपुनः[2] इन्द्राद्यर्थस्य प्रभवात् ॥

[जगत्सृष्टिकार्ये वेदोपयोगप्रकारः]

एतदुक्तं भवति—न हि देवदत्तादिशब्दवत् इन्द्रादिशब्दाः वैदिकाः, व्यक्ति-विशेष[3]मात्रे सङ्केत[3]पूर्वकाः प्रवृत्ताः ; अपि तु स्वभावत एव गवादिशब्दवत् आकृति-विशेषवाचित्वेन । ततश्च एकस्याम् इन्द्रव्यक्तौ विनष्टायाम्, अत एव वैदिकात् इन्द्रशब्दात् मनसि [4]विपरि[4]वर्तमानात्, अवगततद्वाच्यभूतेन्द्राद्यर्थाकारः धाता, तदाकारमेव अपरम् इन्द्रं सृजति ; यथा कुलालः, घटशब्दात् मनसि [5]विपरि[5]वर्तमानात्, तदाकारमेव घटम्—इति ॥

[एतादृशार्थावगतिनिदानम् ]

कथमिदम् अवगम्यते ?

प्रत्यक्षानुमानाभ्याम् । श्रुति-स्मृतिभ्याम् इत्यर्थः । श्रुतिस्तावत्,

'वेदेन रूपे व्याकरोत् । सतासती प्रजापतिः' (तै ब्रा. 2-6 2)

इति । तथा,

---

अनर्थकत्वम् ; अनित्यत्वम् अनुच्चार्यमाणत्वम् । नित्यत्वे, अर्थशून्यत्वम् । विग्रहादिमदिन्द्राद्यर्थस्य यावच्छब्दभावित्वाभावात् । अर्थवत्त्वे अनित्यत्वं वा ; शब्दस्य यावदर्थभावित्वात्, अर्थानां च अनित्यत्वात् इत्यर्थः । अयमभिप्रायः—'इन्द्र आगच्छ हरिव आगच्छ' इत्यादिकं मन्त्रजातं, वैदिककर्मसु विनियुज्यते । तत्र पूर्वमेव इन्द्रव्यक्तौ विनष्टायाम् 'इन्द्र'शब्दवाच्यव्यक्तेः पाश्चात्त्ययज्ञकर्मणि आगमनाभावात्, 'इन्द्र आगच्छ' इत्यादिशब्दानाम्, उच्चार्यमाणनाम् अर्थशून्यत्वम् अनुच्चार्यमाणत्वं वा स्यात्—इति ।

**धाता तदाकारमेव** इति पदैः, 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' इति श्रुतिः, 'यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥' इति स्मृतिश्च स्मार्यते । धीस्थस्य शब्दस्य तत्तदाकृतिस्मारकतया हेतुत्वम् । **मनसि विपरिवर्तमानत्वम्**—आलोच्यमानत्वम् ।

प्रत्यक्षग्राह्यो वेदः, **प्रत्यक्ष**शब्दवाच्यः । स्वानुरूपवेदानुमापिका स्मृतिः, **अनुमान**-शब्दवाच्या इत्यर्थः । **सतासती**—चिदचिती रूपे । **व्याकरोत्**—विविधमकरोत्,

---

[1] न-न [2] पुनः-भ [3] मात्रसङ्केत-थ [4] परि- थ. [5] परि—इ, थ.

'स भूरिति व्याहरत् । स भूमिमसृजत । स भुव इति व्याहरत् ।
सोऽन्तरिक्षमसृजत' (तै.ब्रा. 2-2-4)

इत्यादि । वाचकशब्दपूर्वकं तत्तदर्थसंस्थानं स्मरन्, तत्तत्संस्थानविशिष्टं तं तमर्थं सृष्टवान्, इत्यर्थः । स्मृतिरपि,

'अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा ।
आदौ वेदमयी दिव्या यतस्सर्वाः प्रसूतयः ॥' (म.शा.मो. 222-55)

इति ।

'सर्वेषां तु स नामानि कर्माणि च पृथक्पृथक् ।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥' (मनु. 1-21)

इति । संस्थाः—संस्थानानि, रूपाणि इति यावत् । तथा,

'नाम रूपं च भूतानां कृत्यानां च प्रपञ्चनम् ।
वेदशब्देभ्य एवादौ देवादीनां चकार सः ॥' (वि.पु. 1-5-63)

इति । अतः देवादीनां विग्रह[1]वत्त्वेऽपि[1], वैदिकशब्दानाम् आनर्थक्यं, वेदस्य आदिमत्त्वं [2]च न[2] प्रसज्यते ॥ २७ ॥

## ९३. अत एव च नित्यत्वम् ॥ १-३-२८ ॥

इत्यर्थः । [व्याहरत्—उच्चारयामास । संस्थानम्—आकृतिविशेषम् । **अनादिनिधना**—उत्पत्तिविनाशरहिता । **उत्सृष्टा**—प्रादुर्भावं प्रापिता । **दिव्या**—द्युशब्दवाच्यतृतीयस्थानगा । **प्रसूतयः**—सृज्यमानाः चिदचिद्विस्ताराः ।]

[**वैदिकशब्दानाम्**—वेदानुपूर्व्यन्तर्गतानां शब्दानाम् । **आनर्थक्यम्**—यत्किञ्चिदर्थाबोधकत्वम् । **आदिमत्त्वम्**—लौकिककाव्यादिग्रन्थानामिव उत्पत्तिमत्ता, उत्पत्तिमत्ताव्यवहारस्य प्रामाणिकत्वं वा ॥] ॥२७॥

---

[सूत्रार्थः । **अतश्च**—यतः स्रष्टा प्रजापतिः वैदिकेभ्य एव शब्देभ्यः अर्थाकारं स्मृत्वा सर्वं सृजति, अतश्च, **नित्यत्वमेव**—(वसिष्ठादीनां मन्त्रादिकृत्त्वेऽपि) वेदस्य नित्यत्वं वर्तत एव ।]

**सूर्याचन्द्रमसौ धाता यथापूर्वमिति श्रुतेः ।**
**धाता वेदं हि संस्मृत्य सृजतीत्यस्य नित्यता ॥ (ब्र.प.मा. ९३)**

---

[1] वत्त्वेऽपि न— न [2] च—न

[वेदनित्यत्वोपपादनम्]

यत एव इन्द्र-वसिष्ठादिशब्दानां देवर्षिवाचिनां तत्तदाकारवाचित्वम्, तत्तच्छब्देन [1]तत्तदर्थ[1]स्मृतिपूर्विका च [2]तत्तदर्थ[2]सृष्टिः, तत एव ;

'मन्त्रकृतो वृणीते' (आप.श्रौ.सू. 2-16-6)

'नम ऋषिभ्यो मन्त्रकृद्भ्यः ( तै. आर. 4-1)

'[3]अयं[3] सोऽग्निरिति विश्वामित्रस्य सूक्तं भवति' (तै.सं. 5-2-3)

इत्यादिभिः; वसिष्ठादीनां मन्त्रकृत्व-[4]काण्डकृत्त्व-ऋषित्वादौ[4] प्रतीयमानेऽपि, वेदस्य नित्यत्वम् उपपद्यते ॥

[ऋषीणां मन्त्रकृत्त्वोपपादनम्]

एभिरेव,

'मन्त्रकृतो वृणीते' (आप.श्रौ.सू. 2-16-6)

इत्यादिभिः वेदशब्दैः, तत्तत्काण्डसूक्तमन्त्रकृताम् ऋषीणाम्, आकृतिशक्त्यादिकं परामृश्य, [5]तत्तदाकारान्[5] तत्तच्छक्ति[3]युक्तांश्च[6] सृष्ट्वा, प्रजापतिः तानेव [7]तत्तन्मन्त्रादिकरणे[7] नियुङ्क्ते। तेऽपि प्रजापतिना आहितशक्तयः, [8]तत्तदनुगुणं[8] तपस्तप्त्वा,

**यत एवेति** । अर्थवादानां प्रतीयमानार्थे तात्पर्यमस्ति इति चेत्, 'मन्त्रकृतः' इत्यादिवाक्येष्वपि, मन्त्रकृत्त्वे तात्पर्यसम्भवात्, अनित्यत्वमिति शङ्का । इयमपि इन्द्रादिशब्दानामाकृतिवाचित्वात्, तत्तच्छब्देन तत्तदर्थस्मृतिपूर्वकतत्तदर्थसृष्ट्या परिहृतेत्यर्थः । **मन्त्रकृत्त्वं** नाम अनधीत्यैव, मन्त्राणाम् अस्खलितक्रमस्वरवर्णतया दर्शनम् । तच्च तत्तन्मन्त्रस्मृतिपूर्वकं प्रजापतिना यथापूर्वं सृष्टैः, तत्तन्नामरूपभाग्भिः, प्रवाहपरम्परया आगतैः, वसिष्ठादिभिः क्रियत इति, वेदनित्यत्व-मन्त्रकृत्त्वाविरोधः इत्यर्थः । [**काण्डकृत्त्वम्**—प्राजापत्य-सौम्य-आग्नेय-वैश्वदेवेत्यादिरूपेण तत्तच्छाखासु काण्डविभागकृत्त्वम् । **ऋषित्वम्**—मन्त्रद्रष्टृत्वम् । 'ऋषी-गतौ' (पा. धा. पा. 1288) गतिः अत्र ज्ञानम् ।]

**नियुङ्क्ते**—'मन्त्रदर्शनानुगुणं तपश्चरत' इति नियुङ्क्ते इत्यर्थः । **अस्खलितान् पश्यन्ति**। पूर्वकल्पाधीतवेदमन्त्रत्वप्रत्यभिज्ञापूर्वकं पश्यन्ति ; न तु इदम्प्रथमतया, इत्यर्थः । श्रुतिरपि च ऋषिज्ञानपूर्वकमेव मन्त्राणाम्, अनुष्ठानं दर्शयति । उक्तं च भगवता व्यासेनैव ; 'युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः । लेभिरे तपसा पूर्वम् अनुज्ञाताः स्वयम्भुवा ॥' इति ।

[1] तदर्थ—द [2] तदर्थ—द [3] आयन्—थ [4] काण्डर्षित्वादौ—वा [5] तदाकारान्—द
[6] युतांश्च—न [7] तन्मन्त्रादिकरणे—द, तत्तन्मन्त्रादिस्मरणे—थ [8] तदनुगुणं—द

[1]नित्य[1]सिद्धान् पूर्वपूर्ववसिष्ठादि[2]दृष्टान्[2] तानेव मन्त्रादीन् अधीत्यैव, स्वरतो वर्णतश्च अस्खलितान् पश्यन्ति। अतश्च वेदानां नित्यत्वम्, एषां च मन्त्रकृत्त्वम् उपपद्यते ॥२८॥

[प्राकृतप्रलयान्तरसृष्ट्यनुपपत्त्याक्षेपः]

अथ स्यात्, नैमित्तिकप्रलयादिषु इन्द्राद्युत्पत्तौ, वेदशब्देभ्यः [3]पूर्वपूर्वेन्द्रादि[3] स्मरणेन प्रजापतिना देवादिसृष्टिः उपपद्यतां नाम। प्राकृतप्रलये तु स्रष्टुः [4]प्रजापतेः[4] भूताद्यहङ्कारपरिणामशब्दस्य च [5]विनष्टत्वात्[5], कथं प्रजापतेः शब्दपूर्विका सृष्टिः उपपद्यते? कथन्तरां विनष्टस्य वेदस्य नित्यत्वम्?

अतः—वेदनित्यत्ववादिना, देवादीनां विग्रहवत्त्वाऽभ्युप[6]गमेऽपि[6], लोकव्यवहारस्य प्रवाहानादिता आश्रयणीया—इति॥

[उक्तानुपपत्तिपरिहारः]

अत्र उत्तरं पठति—

## ९४ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ १-३-२९ ॥

---

अत्र 'इतिहास'शब्देन वेदशब्दान्तर्गतानां पुरावृत्तानां विवक्षितत्वात्, 'सेतिहासान्' इत्यनेन, वेदानाम् अर्थज्ञानेन सह लब्धत्वमुक्तं भवति॥

**अथ स्यात् . . . . इतीति।** महाप्रलये तत्तदर्थस्मृतिपूर्वकस्रष्टृसम्प्रदायप्रवर्तकस्य प्रजापतेः, तत्प्रवर्त्यस्य शब्दस्य च अभावात्, न शब्दनित्यत्वमिति, प्रपञ्चप्रवाहानादित्वमाश्रयणीयम्, इति चोद्यपरिहारार्थम् इदं सूत्रमित्यर्थः॥

---

[सूत्रार्थः। **आवृत्तावपि**—महाप्रलयानन्तरम् अव्याकृतसृष्टेः पुनरावृत्तावपि, **समाननामरूपत्वाच्च**—सृज्येषु वस्तुषु, प्राक्तनसर्गस्थवस्तुगतनामरूपसुसदृशनामरूपवत्त्वादेव, **अविरोधः**—वेदानां नित्यत्वविरोध्यनित्यत्वाभावः, (अस्यार्थस्य अवगतिस्तु) **दर्शनात्**—'यो ब्रह्माणं विदधाति पूर्वम्' इत्यादिश्रुतेः, **स्मृतेश्च**—'यथर्तृष्वृतुलिङ्गानि' इत्यादिस्मृतेरपि च ज्ञापकात्।]

समाननामरूपाभ्यां पुनर्ब्रह्म सृजत्यतः।
अविरोधो लय इति श्रुत्या स्मृत्या च गम्यते॥ (ब्र.प.मा. ९४)

---

[1] वीर्य—वा [2] सृष्टान्—वा [3] पूर्वेन्द्रादि—द [4] प्रजापतिः—थ [5] नष्टत्वात्—न
[6] गमे च-थ, गमे-वा.

कृत्स्नोपसंहारे जगदुत्पत्त्यावृत्तावपि, पूर्वोक्तात् समाननामरूपत्वादेव न कश्चिद्विरोधः। तथा हि—[1]स भगवान्[1] पुरुषोत्तमः, प्रलयावसानसमये पूर्वसंस्थानं जगत् [2]स्मरन्[2],

'बहु स्याम्' (छां उ. 6-2-3)

इति सङ्कल्प्य, भोग्य-भोक्तृजातं स्वस्मिन् शक्तिमात्रावशेषं प्रलीनं विभज्य, महदादि-[3]ब्रह्माण्डं हिरण्य[3]गर्भपर्यन्तं यथापूर्वं सृष्ट्वा, वेदांश्च पूर्वानुपूर्वीविशेषसंस्थितान् आविष्कृत्य हिरण्यगर्भाय उपदिश्य, पूर्व[4]वदेव[4] देवाद्याकारजगत्सर्गे [5]तं नियुज्य[5], स्वयमपि तदन्तरात्मतया अवतस्थे। अतः यथोक्तं सर्वमुपपन्नम् ॥

[वेदापौरुषेयत्वनित्यत्वयोः स्वरूपे]

एतदेव च वेदस्य अपौरुषेयत्वं नित्यत्वं च—यत् पूर्वपूर्वोच्चारणक्रमजनितसंस्कारेण तमेव क्रमविशेषं स्मृत्वा, तेनैव क्रमेण उच्चार्यत्वम्। तत् अस्मासु सर्वेश्वरेऽपि समानम्। इयांस्तु विशेषः—संस्कारानपेक्षमेव स्वयमेव अनुसन्धत्ते पुरुषोत्तमः ॥

---

[**कृत्स्नोपसंहारे**— महाप्रलये। **पूर्वोक्तात्**—'शब्द इति चेन्न' 'अत एव च' इति प्राक्तनसूत्रद्वयनिष्पन्नात्।] एवकारेण सूत्रस्थः **च**शब्दः, अवधारणार्थः इति गम्यते। **भगवान्** इति, ज्ञानशक्त्यादिवैचित्र्यम्। **भगवत्पुरुषोत्तम**शब्दाभ्याम्, 'सर्वव्यापी च भगवान्' 'महान् प्रभुर्वै पुरुषः' इत्यादिश्वेताश्वतरवाक्यं स्मारितम्। [**भोग्यजातम्**—प्राकृतः अचिद्वर्गः। **भोक्तृजातम्**—तत्संसृष्टः चिद्वर्गः। **शक्तिमात्रावशेषम्**—उपसंहृत-सकलस्वीयविस्तारं प्रपञ्चाङ्कुरजननयोग्यतामात्रवत्। अनष्टशक्तिकमिति यावत्। **प्रलीनम्**—पृथक्स्थितिप्रतिपत्त्यनर्हतया संश्लिष्टम्।] विद्यमानस्यैव भोग्य-भोक्तृवर्गस्य भोग्यत्वाद्यनुगुण-शक्तिरस्ति। न तु तत्कार्यं भोक्तृत्वादिकमिति भावः। [**तम्**—हिरण्यगर्भम्। **तदन्तरात्मतया**—तस्यान्तःप्रविश्य नियन्तृतया।] **स्वयमपीति**, चतुर्मुखादेरेव स्वतन्त्रस्रष्टृत्वभ्रमनिरासाय। अनेन चतुर्मुख-परमात्मनोः कर्तृत्ववचसाम्, ऐककण्ठ्यसिद्धिः। 'तवान्तरात्मा मम च' इति चतुर्मुखवचनम्, 'सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते' इति च भगवद्वचनम्। 'तदनु प्रविश्य' इति च सामान्यविषया श्रुतिः। **सर्वमुपपन्नमिति**—समाननामरूपवत्व-तत्कृत-वेदनित्यत्व-तत्सार्थकत्वानि उपपन्नानि इत्यर्थः ॥

**संस्कारानपेक्षम्**—अध्यापकोच्चारणस्वोच्चारणजनितसंस्कारानपेक्षम्। **स्वयमेव अनुसन्धत्ते**—इति। वेदाख्यं शब्दराशिं पूर्वपूर्वक्रमविशिष्टमेव उच्चारयेयम्; न तु क्रमान्तरं

---

[1] भगवान्—थ. [2] संस्मरन्—थ. [3] ब्रह्माण्डहिरण्य—न. [4] वत्—द. [5] नियुज्य—इ

[उक्तार्थप्रतिष्ठापिकाः श्रुतिस्मृतयः]

कुत इदं यथोक्तमवगम्यते ?—इति चेत्,

तत्राऽऽह—दर्शनात् स्मृतेश्च । दर्शनं तावत्—

'यो ब्रह्माणं विदधाति पूर्वं, यो वै वेदांश्च प्रहिणोति तस्मै' (श्वे. उ. 6-18)

इति । स्मृतिरपि मानवी—

'आसीदिदं तमोभूतम्' (म.स्मृ. 1-5)

इत्यारभ्य,

'सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु वीर्यमपासृजत्' ॥ (म.स्मृ 1-8)
'तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥' (म.स्मृ 1-9)

इति । तथा पौराणिकी—

'तत्र सुप्तस्य देवस्य नाभौ पद्ममजायत ।
तस्मिन् पद्मे महाभाग वेदवेदाङ्गपारगः ॥
ब्रह्मोत्पन्नस्स तेनोक्तः प्रजास्सृज महामते ॥' (ना.पु. 3-1)

तथा—

'परो नारायणो देवस्तस्माज्जातश्चतुर्मुखः' (वा.पु. 2)

इति । तथा—

'आदिसर्गमहं वक्ष्ये' (वा.पु. 2)

इत्यारभ्य उच्यते—

'सृष्ट्वा नारं तोयमन्तःस्थितोऽहं येन स्यान्मे नाम नारायणेति ।
कल्पे कल्पे तत्र शयामि भूयस्सुप्तस्य मे नाभिजं स्याद्यथाब्जम् ॥' (वा.पु. 2)
'एवम्भूतस्य मे देवि नाभिपद्मे चतुर्मुखः ।
उत्पन्नस्स मया चोक्तः प्रजास्सृज महामते ॥' (वा.पु. 2)

इति ।

---

कल्पयेयम् इति, 'बहु स्याम्' इतिवत् स्वसङ्कल्पादेव क्रमान्तरमपरिकल्पयन्, यथापूर्वमनुसन्धत्ते ; न तु अन्यपरतन्त्रतयेत्यर्थः । **अनुसन्धत्ते**—जानाति, इत्यर्थः । स्मरणार्थत्वे संस्कारानपेक्षत्वव्याघातात् ॥

[देवानां ब्रह्मविद्याधिकारनिगमनम्]

अतः देवादीनामपि अर्थित्वसामर्थ्ययोगात्, [1]ब्रह्मविद्यायामधिकारः[1] अस्ति इति सिद्धम् ॥२९॥

॥ इति प्रमितािधिकरणगर्भे देवताधिकरणम् ॥ ७ ॥

---

[सूत्राणि— १. तदुपर्यपि २. विरोधः ३. शब्द इति
४. अत एव च ५. समाननामरूप]

॥ इति प्रमितािधिकरणगर्भे देवताधिकरणम् ॥ ७ ॥

---

[1] ब्रह्मविद्यायां समधिकारः–इ, न

२५. प्रमिताधिकरणगर्भे मध्वधिकरणम् ॥१-३-८॥ (सू. 30-32)

[अधिकरणार्थः—वस्वादिपदं प्राप्तानामपि मधुविद्यादिषु अधिकारः]

[मधुविद्या (छां.उ. 3-1), ज्योतिषां ज्योतिर्विद्या च (बृ.उ. 6-4)]

## ९५. मध्वादिष्वसम्भवादनाधिकारं जैमीनिः ॥ १-३-३० ॥

[पूर्वोत्तरार्थयोः साङ्गत्यं, प्रकृतो विषयश्च]

**ब्रह्मविद्यायां, देवादीनामपि अधिकारोऽस्तीति, उक्तम् ॥**

[संशयाकारः]

**इदमिदानीं चिन्त्यते—येषु उपासनेषु [1]या देवता[1] एव उपास्याः, तेषु तासामधिकारः, अस्ति ? न ?—इति ॥**

---

**मध्वादिष्विति ।** पूर्वाधिकरणे 'उपासनसामान्ये देवतासामान्यस्य अधिकारोऽस्ति' इत्युक्तम् । अथ उपासनविशेषे देवताविशेषस्य अधिकारो निरूप्यते इति सङ्गतिः ।

**येषु उपासनेष्विति ।** इदमधिकरणं न मधुविद्यामात्रविषयम्; अपि तु ईदृशसर्ववाक्यविषयम् । अत एव हि '**मध्वादिषु**' इति आदिशब्दप्रयोग इत्यभिप्रेत्योक्तम् ।

[संशयाकारः] मधुविद्यादिषु या देवता उपास्या, तासु किं तस्या अधिकारोऽस्ति ? न ?—इति विचारः । तदर्थम्—'य एतदेवममृतं वेद' इति यच्छब्दः, किं सङ्कोचेन वस्वादिव्यतिरिक्तविषयः ? उत असङ्कुचितवृत्तिः ?—इति । किं तस्याः देवतायाः, तद्विद्योपसंहारसामर्थ्यम् अस्ति ? न ?—इति । किं मधुविद्यायां वस्वादिदेवतामात्रमुपास्यम् ? उत तदवस्थं ब्रह्म ?—इति । किं वसुत्वमात्रं मधुविद्याफलम् ? उत ब्रह्मप्राप्तिपर्यन्तं वसुत्वम् ?—इति [विचाराः] ।

---

[सूत्रार्थः । **मध्वादिषु**—मधुविद्यादिरूपासु विद्यासु, **अनधिकारम्**—प्राप्तवस्वादिपदानां चेतनानाम् अधिकाराभावम्, **जैमिनिः**—जैमिनिनामा आचार्यः मन्यते, **असम्भवात्**—उपास्यानाम् उपासकत्वासम्भवात्, वस्वादिपदस्य प्राप्तत्वेन पुनः प्राप्यत्वासम्भवाच्च ।]

मध्वादिषु वसूनां चाऽनधिकारं तु जैमिनिः ।
प्राप्तत्वाच्च वसुत्वस्याऽनर्थित्वान्मनुते मुनिः ॥ (ब्र.प.मा. ९५)

---

[1] देवता—ई, ग

[जैमिनेर्मतम्]

[पूर्वः पक्षः]

किं प्राप्तम्?

नास्त्यधिकारः, तेषु मध्वादिषु—इति जैमिनिः मन्यते।

कुतः?

असम्भवात्। न हि! आदित्यवस्वादिभिः उपास्याः आदित्यवस्वादयः, [1]अन्ये[1] सम्भवन्ति। न च [2]वस्वादीनां[2] सतां, वस्वादित्वं प्राप्यं [3]भवति[3]; प्राप्तत्वात्। मधुविद्यायाम् ऋग्वेदादिप्रतिपाद्यकर्म[4]निष्पाद्यस्य[4], रश्मिद्वारेण प्राप्तस्य रसस्य आश्रयतया लब्धमधुव्यपदेशस्य आदित्यस्य [5]अंशानां[5] [6]वस्वादिभिः[6] भुज्यमानानाम् उपास्यत्वं, वस्वादित्वं च प्राप्यं श्रूयते—

'असौ वा आदित्यो देवमधु' (छां.उ. 3-1-1)

इत्युपक्रम्य,

'तद्यत्प्रथमममृतं तद्वसव उपजीवन्ति' (छां.उ. 3-6-1)

इत्युक्त्वा,

---

[पूर्वपक्षे]—यदा वसुत्वमात्रं फलम्; तदा वस्वादिदेवतामात्रस्य उपास्यत्वेन, तस्या देवतायाः तद्विद्योपसंहारसामर्थ्याभावात्, यच्छब्दस्य तद्व्यतिरिक्तविषयत्वात्, तत्रानधिकारः—इति।

[राद्धान्ते]—यदा ब्रह्मप्राप्तिपर्यन्तं वसुत्वं फलम्; तदा तदवस्थब्रह्मणः उपास्यत्वेन, तद्विद्योपसंहारसामर्थ्यात्, यच्छब्दस्य तद्व्यतिरिक्तविषयत्वाभावात्, तस्या देवतायाः, तस्यां विद्यायाम् अस्त्यधिकारः—इति।

**असम्भवादिति**। 'अर्थित्व-सामर्थ्ययोः' इति शेषः। **न** हीत्यादि। कर्मकर्तृविरोधात् सामर्थ्याभावः इत्यर्थः। **न चेति**। प्राप्तफलत्वात् अर्थित्वाभाव इत्यर्थः। **वस्वादयः** इति **आदि**शब्देन, मरुद्रुद्रसाध्याः विवक्षिताः। **ऋग्वेदादीति**। 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते' इति वचनार्थोऽभिप्रेतः। **भुज्यमानानामुपास्यत्वमिति**। वस्वादिभिः भोक्तृभिः सह, तद्भोग्यभूताः आदित्यांशाः उपास्याः इत्यर्थः। पूर्वोक्तः

---

[1] वेति—थ [2] आदित्यवस्वादीनां—न [3] सम्भवति—इ, न [4] निष्पाद्यास्य—व [5] अंशस्य—क्ष [6] वस्वादित्यादिभिः—न

'स य एतदेवममृतं वेद, वसूनामेवैको भूत्वा, अग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति' (छां.उ. 3-6-3)

इत्यादिना ॥ ३० ॥

## ९६. ज्योतिषि भावाच्च ॥ १-३-३१ ॥

[उक्तस्यैव पक्षस्य उपष्टम्भकयुक्त्यन्तरम्]

'तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' (बृ.उ. 6-4-16) इति, ज्योतिषि—परस्मिन् ब्रह्मणि उपासनं देवानां श्रूयते। देव-मनुष्योभयसाधारणे परब्रह्मोपासने, देवानाम् उपासकत्वकथनं, [1]देवानाम्[1] इतरोपासननिवृत्तिं द्योतयति। अतः एषु वस्वादीनाम् अनधिकारः ॥ ३१ ॥

[सिद्धान्तः, बादरायणमतम्]

इति प्राप्ते, अभिधीयते—

---

कर्मकर्तृविरोधस्त्वेवम्—स्वयमेव स्वाभीष्टसम्प्रदानाशक्तेन फलार्थिना पुरुषेण उपास्या देवता स्वोपासनप्रीता, फलार्थिने फलं दिशति। वस्वादीनां तु स्वोपासनजनितस्वप्रीत्या स्वस्य फलप्रदत्वमयुक्तमिति, उपासनप्रीणनीयत्वाकारेण कर्मकर्तृविरोधः—इति। **इत्यादिना** इति यथोक्तार्थः श्रूयते, इत्यन्वयः ॥ ३० ॥

**देव-मनुष्येति**। 'देवा एव ज्योतिरुपासते' इति, 'देवाः ज्योतिरेवोपासते' इति वा वाक्यभङ्गी स्यात्। तत्र न प्रथमः कल्पो युज्यते; मनुष्याणामनधिकारप्रसङ्गात्। तस्मात् ज्योतिरेवोपास्यम् इत्यर्थः। अन्यथा विशेषवचनवैयर्थ्यं स्यात् इत्यभिप्रायः ॥ ३१ ॥

---

[सूत्रार्थः। **ज्योतिषि**—परस्मिन् ब्रह्मण्येव उपास्यमाने, **भावाच्च**—देवानाम् उपासनाधिकारसद्भावस्य, 'तं देवा....अमृतम्' इति श्रुत्या अवगमादपि, (**अनधिकारः**—परब्रह्मातिरिक्तविषयकोपासनाधिकाराभाव एव)]

ज्योतिर्होपासते देवा इत्येवं ब्रह्मचिन्तने।
अधिकारप्रतीत्यैषामन्यत्रानधिकारिता ॥ (ब्र.प.मा. ९६)

---

[1] देवादीनाम्-थ, न

# १७. भावं तु बादरायणोऽस्ति हि ॥ १-३-३२ ॥

आदित्य वस्वादीनामपि, तेषु अधिकारभावं भगवान् बादरायणो मन्यते। अस्ति हि आदित्य-वस्वादीनामपि स्वात्रस्थब्रह्मो[1]पासनेन[1] [2]वस्वादित्व[2]प्राप्तिपूर्वकब्रह्म-प्रेप्सासम्भवः। इदानीं [3]वस्वादीनामपि सतां[3], [4]कल्पान्तरेऽपि[4] वस्वादित्वप्राप्तिश्च अपेक्षिता भवति ॥

[उक्तार्थोपपादनम्]

अत्र हि कार्य-कारणोभयावस्थब्रह्मोपासनं विधीयते ;

'असौ वा आदित्यो देवमधु' (छां.उ. 3-1-1)

इत्यारभ्य,

'अथ तत ऊर्ध्व उदेत्य' (छां.उ. 3-11-1)

इत्यतः प्राक्, आदित्य-वस्वादिकार्य[5]विशेषा[5]वस्थं [6]ब्रह्म, उपास्यमुप[6]दिश्यते।

---

स्वावस्थब्रह्मोपासनशब्देन कर्म-कर्तृविरोधः परिहृतः ॥

अत्र हीति। उपासनस्य ब्रह्मपर्यन्तत्वे, फलस्य ब्रह्मप्राप्तिपर्यन्तत्वे च प्रतिपाद्ये सति हि, कर्म कर्तृविरोधाभावः प्राप्तफलत्वाभावश्च। तत् कथम्? इत्यत्र [उत्तरमिदम्]।

असौ वा इत्यादि। आदित्यादिनाम तद्रूपविशिष्टजीवशरीरकं ब्रह्म कार्यावस्थम्; तदुपासनं विहितम् [इत्याशयः]। अथ तत इत्यादि। इदानीमादित्यादिनामरूपभाजोऽपि सृष्टेः पूर्वम् आदित्यादिनाम-रूपरहितजीवमात्रस्य अन्तर्यामि ब्रह्म कारणावस्थम्; तदुपासनं विधीयते [इत्याशयः] ॥

---

[सूत्रार्थः। भावं तु—प्राप्तवस्वादीनामपि वस्वाद्युपासनाधिकारसद्भावमेव, बादरायणः—बादरायणो भगवान् (मन्यते), अस्ति हि—प्राप्तवस्वादिपदानामपि कल्पान्तरे वस्वादिपदस्य प्राप्यत्वम्, ब्रह्मात्मभावानुसन्धानेन स्वात्मनामपि उपास्यत्वं च सम्भवत्येव खलु।]

जन्मान्तरे वसुत्वस्य प्राप्त्यर्थं स्वतनोर्भवेत्।
परस्योपासनं तेषां बादरायण आह हि ॥ (ब्र.प.मा. ९७)

---

[1] पासनं-थ [2] वस्वादित्यत्व-वा [3] वसूनां सतामपि-वा, वसूनामपि सतां-थ [4] अपि कल्पान्तरे-थ [5] शेषा-द [6] ब्रह्मोपासनमुप-न, ब्रह्म उपास्यमित्युप-इ, वा

'अथ [1]तत[1] ऊर्ध्व उदेत्य' (छां.उ. 3-11-1)

इत्यादिना, आदित्यान्तरात्मतया अवस्थितं, कारणावस्थमेव ब्रह्म [2]उपास्यमुप[2]दिश्यते। तदेवं कार्य-कारणोभयावस्थं ब्रह्म उपासीनः, कल्पान्तरे वस्वादित्वं प्राप्य, तदन्ते कारणं परं ब्रह्मैव आप्नोति॥

[मधुविद्यायाः ब्रह्मविद्यात्वम्]

'न ह वा अस्मा उदेति, न निम्रोचति सकृद्दिवा हैवास्मै भवति,
य एतामेवं ब्रह्मोपनिषदं वेद' (छां.उ. 3-11-3)

इति कृत्स्नायाः मधुविद्यायाः ब्रह्मोपनिषत्वश्रवणात्, ब्रह्मप्राप्तिपर्यन्तवस्वा[3]दित्वफलस्य श्रवणाच्च[3], वस्वादिभोग्यभूतादित्यांशस्य विधीयमानम् उपासनं, तदवस्थस्यैव ब्रह्मणः इत्यवगम्यते। अतः एवंविधमुपासनम्, आदित्यवस्वादीनामपि सम्भवति। एवञ्च ब्रह्मण एव उपास्यत्वात्,

'तं देवा ज्योतिषां ज्योतिः' (बृ.उ. 6-4-16)

इत्यपि, उपपद्यते। तदाह वृत्तिकारः—

'अस्ति हि मध्वादिषु सम्भवो ब्रह्मण एव सर्वत्र निचाय्यत्वात्' (बो.वृ)

इति ॥३२॥

॥प्रमिताधिकरणगर्भे मध्वधिकरणम् ॥८॥

---

**ब्रह्मोपनिषदं वेद**—ब्रह्मविद्यां वेद; ब्रह्मोपासनं करोति, इत्यर्थः। 'ओदनपाकं पचति' इतिवत्। **तदाह वृत्तिकारः** इति, अब्रह्मोपासनपरत्वेन यैः व्याख्यातम्, तन्मतात् अस्य प्रामाणिकत्वं दर्शयति ॥ ३२ ॥

[सूत्राणि—१. मध्वादिषु २. ज्योतिषि ३. भावं तु]

॥ प्रमिताधिकरणगर्भे मध्वधिकरणम् ॥ ८ ॥

---

[1] अत–द, न [2] उपास्यमित्युप–वा. [3] दित्यफलस्य श्रवणाच्च–थ, दित्वफलश्रवणाच्च–वा.

२६. प्रमिताधिकरणगर्भे अपशूद्राधिकरणम् ॥१-३-९॥ (सू. 33-39)

[अधिकरणार्थः—त्रैवर्णिकेतरेषां ब्रह्मविद्यासु अनधिकारः]

[संवर्गविद्या, (छां.उ. 4-1,2,3)]

## ९८. शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॥ १-३-३३ ॥

[विषय-संशययोः स्वरूपम्]

**ब्रह्मविद्यायां शूद्रस्याऽपि अधिकारः अस्ति? न वा?—इति विचार्यते ॥**

[पूर्वः पक्षः]

**किं युक्तम्?**

**अस्ति—इति।**

---

**शुगस्येति।** मनुष्यव्यतिरिक्तवस्वादिदेवताविशेषाणाम् अर्थित्व-सामर्थ्यसम्भवात् अधिकारोऽस्ति इत्युक्तम् ॥

**ब्रह्मविद्यायामिति।** अथ अर्थित्व-सामर्थ्ययोः प्रयोजकत्वे, मनुष्यविशेषाणां शूद्राणामपि अधिकारः स्यात् इति शङ्कया सङ्गतिः [इत्यर्थः]। [संशयाकारः—]किं ब्रह्मविद्यायां शूद्रस्य अधिकारोऽस्ति? न? इति विचारः। तदर्थं—तस्य तदुपसंहारसामर्थ्यम्, अस्ति? न? इति। किं ब्रह्मविषयमनोवृत्तिरूपा ब्रह्मविद्या, अनधीतवेदस्याऽपि सम्भवति? न? इति। किं वेदादेव ब्रह्मावगतिः? उत इतिहासपुराणाभ्यामपि सम्भवति? इति। किं तयोः वेदोपबृंहणं कुर्वतोरेव ब्रह्मावगतिहेतुत्वम्? उत स्वातन्त्र्येण? इति। किं जानश्रुतेः 'शूद्र!' इत्यामन्त्रणम्, इतिहासपुराणयोः निरपेक्षब्रह्मावबोधकत्वम् उपोद्बलयति? न? इति। किं तत्र 'शूद्र'शब्दः रूढ्या जातिपरः? उत यौगिकतया शोकवत्परः? इति।

पूर्वः पक्षः—यदा रूढः; तदा 'शूद्र'शब्दस्य इतिहास-पुराणयोः नैरपेक्ष्योत्तम्भकतया

---

[सूत्रार्थः। **अस्य**—जानश्रुतेः, **शुक्**—ब्रह्मविद्यायाः अलाभकृतः शोकः, **तदनादरश्रवणात्**—हंसोक्तानादरवाक्यस्य श्रवणात्, **तदा**—अनादरवाक्यश्रवणसमनन्तरमेव, **आद्रवणात्**—ब्रह्मोपदेष्टारम् आचार्यं प्रति अनुधावनाच्च, **हि**—यतः, **सूच्यते**—अनुमीयते,(अतः जानश्रुतेः शूद्रत्वं, ब्रह्मविद्यालाभकृतात् शोकादेव; न शूद्रवर्णजातत्वात्)।]

**हंसेनानादरश्रुत्या तदैवाद्रवणाद्गुरौ।**

**शूद्रेत्यामन्त्रणं शोकात् न शूद्रस्त्वागतस्स हि॥ (ब्र.प.मा. ९८)**

कुतः ?

अर्थित्व-सामर्थ्यप्रयुक्तत्वात् अधिकारस्य ; शूद्रस्याऽपि तत्सम्भवात् ॥

[शूद्रेषु कर्मानधिकार-विद्याधिकारयोः उपपत्तिः]

यद्यपि अग्निविद्यासाध्येषु कर्मसु, अनग्निविद्यत्वात् शूद्रस्य अनधिकारः ; तथाऽपि मनोवृत्तिमात्रत्वात् ब्रह्मोपासनस्य, तत्र अधिकारः अस्त्येव । शास्त्रीयक्रियापेक्षत्वेऽपि उपासनस्य, तत्तद्वर्णाश्रमोचितक्रियाया एव अपेक्षितत्वात्, शूद्रस्याऽपि स्ववर्णोचितपूर्ववर्णशुश्रूषैव क्रिया भविष्यति ।

'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' (तै.सं. 7-1-1)

इत्यपि, अग्निविद्यासाध्ययज्ञादिकर्मानधिकार एव न्यायसिद्धः, अनूद्यते ॥

[अश्रुतवेद-वेदान्तस्याऽपि शूद्रस्य उपासनोपपत्तिः]

ननु—अनधीतवेदस्य अश्रुतवेदान्तस्य ब्रह्म[1]स्वरूप-तदुपासन[1]प्रकारानभिज्ञस्य कथं ब्रह्मोपासनं सम्भवति ?

उच्यते—अनधीतवेदस्य अश्रुतवेदान्तवाक्यस्याऽपि, इतिहास-पुराणश्रवणेनाऽपि ब्रह्मस्वरूप-तदुपासनज्ञानं सम्भवति । अस्ति च शूद्रस्याऽपि इतिहास-पुराणश्रवणानुज्ञा ;

तयोः स्वातन्त्र्येण ब्रह्मावगतिहेतुत्वात्, ब्रह्मविषयस्मृतिसन्ततिः अनधीतवेदस्याऽपि सम्भवतीति, सामर्थ्यलाभात् शूद्रस्याऽप्यधिकारः सम्भवति—इति ।

राद्धान्तः—यदा 'शूद्र'शब्दो यौगिकः ; तदा 'शूद्र !' इति आमन्त्रणस्य इतिहास-पुराणयोः ब्रह्मावबोधनैरपेक्ष्यानवगमकतया स्वातन्त्र्येण ब्रह्मावबोधकत्वात्, वेदादेव ब्रह्मावगतिरिति, अनधीतवेदस्य तदसम्भवेन, सामर्थ्याभावात्, न ब्रह्मोपासनाधिकारः—इति ।

विद्या—वेदविद्या । अग्निः—आहितः । ['अग्नीनादधीत' इति विधिविहिताधानक्रियया सम्पादितः यावज्जीवं धार्यः अग्निः ।]

न्यायसिद्धः अनूद्यते इति । न हि असावर्थः श्रुत्येकसमधिगम्यः ; येन यावद्वचनता स्यात्, परिसङ्ख्या वा । किन्तु न्यायसिद्धः । न्यायश्च अग्निविद्यासाध्येषु अनग्निविद्यस्य अधिकारानुपपत्तिरूपः कर्मोपासनसाधारणः । नैतावता ब्रह्मविद्यानधिकारः ; अग्निविद्यासाध्यकर्मविषयत्वात् न्यायस्य । यज्ञादिकर्मणामेव अग्निविद्यासाध्यत्वात्, ब्रह्मविद्यायाः तन्निरपेक्षत्वाच्च । [अयं च] कर्मकाण्डापशूद्राधिकरणन्याय (पू.मी. 6-1-7) सिद्धः इत्यर्थः ॥

[1] स्वरूपोपासन—म

'श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः' (म.शा.मो. 314-45)
इत्यादौ। दृश्यन्ते च इतिहास-पुराणेषु विदुरादयो ब्रह्मनिष्ठाः।

तथा उपनिषत्स्वपि, संवर्गविद्यायां शूद्रस्याऽपि [1]ब्रह्मविद्याधिकारः[1] प्रतीयते। [2]शुश्रूषुं हि[2] जानश्रुतिम्, आचार्यो रैक्वः, 'शूद्र!' इत्यामन्त्र्य, तस्मै ब्रह्मविद्याम् उपदिशति,

'आजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथाः' (छां.उ. 4-2-5)
इत्यादिना। अतः [3]शूद्रस्याऽपि[3] अधिकारः सम्भवति॥

[सिद्धान्तारम्भः]

इति प्राप्ते, उच्यते—न शूद्र[4]स्याऽ[4]धिकारः [5]सम्भवति[5]; सामर्थ्याभावात्। न हि ब्रह्म[6]स्वरूप[6]-तदुपासनप्रकारम् अजानतः, तदङ्गभूतवेदानुवचनयज्ञादिषु अनधिकृतस्य, उपासनोपसंहार[7]सामर्थ्यसम्भवः[7]। असमर्थस्य च अर्थित्वसद्भावेऽपि अधिकारो न सम्भवति। असामर्थ्यं च वेदाध्ययनाऽभावात्॥

[कर्मानधिकारवदेव विद्यास्वनधिकारोऽपि]

यथैव हि, त्रैवर्णिकविषयाध्ययनविधिसिद्धस्वाध्यायसम्पाद्यज्ञानलाभेन, कर्मविधयः ज्ञान-तदुपायादीन् अपरान् न स्वीकुर्वन्ति; तथा ब्रह्मोपासनविधयोऽपि। अतः अध्ययनविधिसिद्धस्वाध्यायाधिगतज्ञानस्यैव ब्रह्मोपासनोपायत्वात्, शूद्रस्य ब्रह्मोपासनसामर्थ्यासम्भवः॥

[इतिहास-पुराणयोः ज्ञानोपायत्वप्रकारः]

इतिहास-पुराणे अपि वेदोपबृंहणं कुर्वती एव, उपायभावमनुभवतः;

---

**श्रावयेदिति**। प्रयोज्याभावे प्रयोजकासिद्धेः, प्रयोज्योपादानम् अर्थसिद्धम् इति भावः। न च [अयं] 'अन्नाद्यकामं याजयेत्' इतिवत् (पू.मी. 4-2) प्रयोज्यव्यापारविधिः; अधिकार विशेषाश्रवणात्। एतदभिप्रायेण **इतिहास-पुराणश्रवणानुज्ञा** इत्युक्तम्।

**असामर्थ्यमिति**। अलौकिकसामर्थ्याभावात् इत्यर्थः॥

**उपायादीन्** इति आदिशब्देन अध्ययनव्रतोपनयनादय उच्यन्ते। **अपरान्**—अत्रैवर्णिकमतान्, ज्ञानतदुपायादीन् नापेक्षन्ते इत्यर्थः।

---

[1] अधिकारः - द. [2] शुश्रूषुं—भ. [3] शूद्रस्य—थ. [4] स्याप्य - क्ष. [5] सम्भवति। कुतः?—वा. [6] रूप—थ. [7] सामर्थ्यं सम्भवति—वा.

न स्वातन्त्र्येण। शूद्रस्य इतिहास-पुराणश्रवणानुज्ञानं पाप[1]क्षयादिफलार्थम्[1] ; न उपासनार्थम्। विदुरादयस्तु, भवान्तराधिगतज्ञानाप्रमोषात् ज्ञानवन्तः ; प्रारब्धकर्मवशाच्च ईदृशजन्मयोगिन इति, तेषां ब्रह्मनिष्ठत्वम् ॥

[जानश्रुतेः शूद्रपदप्रयोगौचित्यम्]

[2]यत्तु[2]—संवर्गविद्यायां शुश्रूषोः 'शूद्र !' इति सम्बोधनम्, शूद्रस्य अधिकारं [3]सूचयति—इति[3],

तन्नेत्याऽऽह— शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि।

शुश्रूषोः जानश्रुतेः पौत्रायणस्य ब्रह्मज्ञानवैकल्येन हंसोक्तानादरवाक्यश्रवणात्, [4]तदैव[4] ब्रह्मविदो रैक्वस्य सकाशं प्रति आद्रवणात्, 'शुक् अस्य सञ्जाता' इति [5]हि सूच्यते[5]। अतः सः 'शूद्र' इत्यामन्त्र्यते ; न चतुर्थवर्णत्वेन ॥

[शूद्रपदव्युत्पत्तिः]

शोचति इति हि शूद्रः।

'शुचेर्दश्च' (उ.सू. 176)

इति 'र'प्रत्यये, धातोश्च दीर्घे, चकारस्य च दकारे, 'शूद्र' इति भवति। अतः शोचितृत्वमेव अस्य [6]शूद्रशब्दप्रयोगेन[6] सूच्यते ; न जातियोगः।

---

**न उपासनार्थमिति**। उपबृंहणीयवेदज्ञानानधिकारात्, उपबृंहणमात्रेण उपासनोपयोगिज्ञानपौष्कल्यं न सम्भवति। न हि व्याख्येयानधिकारिणः, व्याख्यानमात्रेण पुष्कलज्ञानसम्भवः इति, दृष्टसामर्थ्यवैकल्यम्। 'इतिहास....बृंहयेत्' (म.भा.आ. 1-273) इति वेदार्थविशदीकारहेतुतयैव तदवगमविधानात, अङ्गतया विहितस्य स्वतन्त्रतयोपादाने, तज्जन्यज्ञानस्य पुस्तकपाठादिलब्धवेदार्थज्ञानस्येव शास्त्रविरोधात् अदृष्टसामर्थ्यवैकल्यं च। अतः तदविरोधस्य न्याय्यत्वात्, श्रावण-विध्यवैयर्थ्याच्च [उक्तमेव सम्यक्]॥

शूद्र इति। शोचितृत्वं, 'शूद्र'शब्दार्थः। शोककारणम्, अनादरवाक्यश्रवणम्; तत्कार्यम्, आद्रवणम्। **'र'प्रत्यये** इति। 'रक्'प्रत्ययः प्रकरणसिद्धः चकाराकृष्टः। 'अमितम्योर्दीर्घश्च' (उ.सू. 173) इति सूत्रे 'दीर्घश्च' इत्यंशोऽनुवर्तते इति भावः। शुच एव हि उपपाद्यत्वं प्रतीयते; प्रथमान्तनिर्देशात्। श्रवणाद्रवणशब्दौ हि पञ्चम्यन्तौ। तस्मात् शोक एव 'शूद्र'शब्दप्रवृत्तिनिमित्तम्—[इत्याशयः]।

---

[1] क्षयार्थम्—द.　[2] यच्च—च, ठ.　[3] सूचयति—थ.　[4] तथैव—थ.　[5] सूच्यते—द.
[6] शूद्रशब्देन—थ.

[आख्यायिकार्थः]

जानश्रुतिः किल पौत्रायणः, बहुद्रव्यप्रदः बह्वन्नप्रदश्च बभूव। तस्य धार्मिकाग्रेसरस्य धर्मेण प्रीतयोः, कयोश्चिन्महात्मनोः अस्य ब्रह्मजिज्ञासामुत्पिपादयिषतोः, हंसरूपेण निशायाम् अस्य अविदूरे गच्छतोः, अन्यतरः इतरमुवाच—

'[1]भो भोयि[1] भल्लाक्ष! भल्लाक्ष! जानश्रुतेः पौत्रायणस्य समं
दिवा ज्योतिराततं तन्मा प्रसाङ्क्षी[2]स्तत्त्वा[2] मा प्रधाक्षीत्' (छां.उ. 4-1-2)

इति।

एवं जानश्रुतिप्रशंसारूपं वाक्यम् उपश्रुत्य, परो हंसः प्रत्युवाच—

'कम्वर एनमेतत्सन्तं सयुग्वानमिव रैक्कमात्थ' (छां.उ. 4-1-3)

इति। कं सन्तमेनं जानश्रुतिं, सयुग्वानं रैक्वं ब्रह्मज्ञमिव गुणश्रेष्ठम् एतदात्थ? स ब्रह्मज्ञो रैक्व एव लोके गुणवत्तरः। महता धर्मेण संयुक्तस्यापि अस्य जानश्रुतेः अब्रह्मज्ञस्य को गुणः? यद्गुणजनितं तेजः, रैक्वतेज इव मां दहेत् इत्यर्थः॥

[रैक्वपरिचयसम्पादनम्]

एवमुक्तेन परेण 'कोऽसौ रैक्वः?' इति पृष्टः, 'लोके यत् किञ्चित् साध्वनुष्ठितं कर्म, यच्च सर्वचेतनगतं विज्ञानम्, तदुभयं यदीयज्ञानकर्मान्तर्भूतम्, स रैक्वः' इत्याऽऽह॥

[रैक्वोपसदनम्]

तदेतत् हंसवाक्यं, ब्रह्मज्ञानविधुरतया आत्मनिन्दागर्भम्, तद्वत्तया च रैक्वप्रशंसारूपम्, जानश्रुतिः उपश्रुत्य, तत्क्षणादेव क्षत्तारं रैक्वान्वेषणाय प्रेष्य, तस्मिन्

---

**भल्लाक्षः**—हंसः। **समं दिवा**—स्वर्गेण समम्। स्वर्गेऽपि तत्तेजः प्रसृतमित्यर्थः। ['दिव्'शब्दात् तृतीयान्तम्] यद्वा दिवसेन समम् इत्यर्थः; 'निशायाम्' इत्युक्तत्वात्। [अह्नः कालवाचकं 'दिवा' इति आकारान्तमव्ययम्।] **मा प्रसांक्षीः**—मा प्रसक्तः स्याः। **मा प्रधाक्षीत्**—त्वं मा दहेत् इत्यर्थः।

**परो हंस** इति। ['तमु ह परः'] इति श्रुतौ 'पर'शब्दः हंसवाचीति भावः। **सयुग्वानमिति**। युग्वा—शकटम्; तद्वन्तमित्यर्थः। **गुणश्रेष्ठम्** इति, प्रकरणसिद्धार्थोक्तिः।

[**विधुरतया**—शून्यतया। **उपसद्य**—उपसृत्य] **त्वदुपास्यमिति**, 'उपास्से' इति

---

[1] भो भो—वा. [2] स्तत्वां—थ, द.

विदित्वा आगते, स्वयमपि रैक्व[1]मुपसद्य[1], गवां षट्छतं निष्कम् अश्वतरीरथं च, रैक्वाय उपहृत्य, रैक्वं प्रार्थयामास—

'अनु म एतां भगवो देवतां शाधि, यां देवता[2]मुपास्से[2]' (छां उ. 4-2-2)

इति। त्वदुपास्यां परां देवतां [3]मम[3] अनुशाधि इत्यर्थः ॥

[रैक्वेण शूद्रपदप्रयोगहेतुः]

स च रैक्वः, स्वयोगमहिमविदितलोकत्रयः—जानश्रुतेः ब्रह्मज्ञानविधुरतानिमित्तानादरगर्भहंसवाक्यश्रवणेन शोका[4]विष्टतां[4], तदनन्तरमेव ब्रह्मजिज्ञासया उद्योगं च विदित्वा, अस्य ब्रह्मविद्यायोग्यताम् अभिज्ञाय, 'चिरकालसेवां विना [5]द्रव्यप्रदानेन[5] शुश्रूषमाणस्य अस्य, यावच्छक्तिप्रदानेन ब्रह्मविद्या प्रतिष्ठिता भवति', इति मत्वा तमनुगृह्णन्, [6]तस्य[6] शोकाविष्टताम् उपदेशयोग्यताख्यापिकां, शूद्रशब्देनामन्त्रणेन ज्ञापयन्, इदमाह—

'अह हारे त्वा शूद्र! तवैव सह गोभिरस्तु' (छां उ. 4-2-7)

इति। सह गोभिः, अयं रथः तवैव अस्तु; न एतावता मह्यं दत्तेन, ब्रह्मजिज्ञासया शोकाविष्टस्य तव, ब्रह्मविद्या प्रतिष्ठिता भवति इत्यर्थः ॥

[पुनरुपसत्तिः रैक्वेण उपदेशश्च]

स च जानश्रुतिः, भूयोऽपि स्वशक्त्यनुगुणमेव [7]गवादिकं[7] धनं कन्यां च प्रदाय, उपससाद। स रैक्वः, पुनरपि तस्य योग्यतामेव ख्यापयन्, शूद्रशब्देन आमन्त्र्य आह—

'आजहारेमाः शूद्र! अनेनैव मुखेनालापयिष्यथाः' (छां.उ. 4-2-5)

इति। इमानि धनानि शक्त्यनुगुणानि आजहर्थ, अनेनैव द्वारेण चिरसेवया विनापि, [8]मां[8] त्वदभिलषितं ब्रह्मोपदेशरूपवाक्यम् आला[9]पयिष्यसि[9] इत्युक्त्वा, तस्मै उपदिदेश।

मध्यमपुरुषनिर्देशाभिप्रायं व्यञ्जयति। यदुपासनात्, तव ईदृशी प्रशस्तिर्जाता; तं मे ब्रूहि इत्यभिप्रायः इत्यर्थः।

**चिरकालेति**। चिरकालसेवा, यावच्छक्तिप्रदानं वा ब्रह्मविद्याप्रतिष्ठाहेतुः इत्यर्थः। **तमनुगृह्णन्**; न तु रागात्, इत्यर्थः।

**आजहर्थेति**। 'आजहार भवान्' इति भवच्छब्दाध्याहारेण, छान्दसव्यत्ययेन वा श्रुतियोजना इत्यभिप्रायः ॥ ३३ ॥

---

[1] मासाद्य—अ. [2] मुपास्ते—थ. [3] मा—द. [4] विनष्टतां—थ. [5] द्रव्यप्रदानेन वा—थ, अर्थप्रदानेन—न. [6] अस्य—वा. [7] ग्रामादिकं—थ. [8] इदं—थ. [9] यिष्यामि—थ.

[विवक्षितोपसंहारः]

अतः शूद्रशब्देन [1]विद्योपदेश[1]योग्यताख्यापनार्थं, शोक एव अस्य [2]सूचितः[2]; न चतुर्थवर्णत्वम् ॥ ३३ ॥

## ९९. [3]क्षत्रियत्वगतेश्च[3] ॥ १-३-३४ ॥

[द्विजत्वस्थिरीकरणम् ]

'बहुदायी' (छां.उ. 4-1-1)

इति दान[4]पतित्वेन[4],

'बहुपाक्यः' (छां.उ. 4-1-1)

इत्यादिना,

'सर्वत [5]एव मेऽन्नमत्स्यन्ति[5]' (छां.उ. 4-1-1)

इत्यन्तेन, बहुतरपक्वान्नप्रदायित्वप्रतीतेः,

'स ह सञ्जिहान एव क्षत्तारमुवाच' (छां.उ. 4-1-5)

इति क्षत्तृप्रेषणात्, बहुग्रामप्रदानावगतजनपदाधिपत्याच्च, अस्य जानश्रुतेः क्षत्रियत्वप्रतीतेश्च; न चतुर्थवर्णत्वम् ॥ ३४ ॥

---

'शूद्र'शब्दस्य यौगिकार्थानुकूलहेतुरुक्तः । अथ **क्षत्रियत्वगतेरिति**, रूढिसिद्धार्थविरुद्धहेतुरुच्यते ।

[**बहुदायी**—अर्थिभ्यः बहु दातुं शीलमस्य, सः । **बहुपाक्यः**—बहु अस्य गेहे अन्नं पक्तव्यं यस्य, सः] । **सञ्जिहानः**—आसनमुज्झन्, उत्तिष्ठन्नेव इत्यर्थः ॥ ३४ ॥

---

[सूत्रार्थः । (**अस्य**—ब्रह्मविद्याशुश्रूषोः जानश्रुतेः), **क्षत्रियत्वस्य**—क्षत्रियवर्णजातत्वस्य, **गतेश्च**—('बहुदायी बहुपाक्यः' इति दानपतित्व-बहुतरपक्वान्नदायित्वाभ्यां राजन्यासाधारणधर्माभ्यां) प्रतीतेरपि ज्ञापकात् (नाऽयं चतुर्थवर्णजः ।]

जानश्रुतेस्तु तत्रैव बहुदायित्वदर्शनात् ।
क्षत्रियत्वं गम्यतेऽतो न शूद्रस्याधिकारिता ॥ (ब्र.प.मा. ९९)

---

[1] ब्रह्मविद्योपदेश—इ. [2] सूचितो भवति—अ. [3] क्षत्रियत्वावगतेश्च—इ, वा.
[4] पतित्वेन तेन—थ. [5] एवमत्स्यन्ति—वा.

[सूत्रसङ्गतिः]

तदेवम्, [1]उपक्रमगता[1]ख्यायिकायां क्षत्रियत्वप्रतीतिरुक्ता। [2]उपसंहार[2]गताख्यायिकायामपि क्षत्रियत्वम् अस्य प्रतीयते इत्याह—

## १००. उत्तरत्र चैत्ररथेन लिङ्गात् ॥ १-३-३५ ॥

[क्षत्रियत्वस्थिरीकरणम्]

अस्य जानश्रुतेः उपदिश्यमानायाम् अस्यामेव संवर्गविद्यायाम्, उत्तरत्र कीर्त्यमानेन, अभिप्रतारिनाम्ना चैत्ररथेन क्षत्रियेण, अस्य क्षत्रियत्वं गम्यते।

कथम्?

'अथ ह शौनकं च कापेयमभिप्रतारिणं च
काक्षसेनिं परि[3]विष्यमाणौ[3], ब्रह्मचारी बिभिक्षे' (छां.उ. 4-3-5)

इत्यादिना,

'ब्रह्मचारिन् नेदमुपास्महे' (छां.उ. 4-3-7)

इत्यन्तेन, कापेयाभिप्रतारिणोः, भिक्षमाणस्य ब्रह्मचारिणश्च, संवर्गविद्यासम्बन्धित्वं प्रतीयते। तेषु च अभिप्रतारी क्षत्रियः; इतरौ ब्राह्मणौ। अतः अस्यां विद्यायां [4]ब्राह्मणस्य, तदितरेषु[4] च [5]क्षत्रियस्यैव[5] अन्वयो दृश्यते; न शूद्रस्य। अतः अस्यां विद्यायामन्वितात्

---

**कथमिति**। चैत्ररथः क्षत्रियश्चेत्, जानश्रुतिरपि क्षत्रियः इति न हि नियमः इत्यर्थः।

**परिविष्यमाणौ**—सूदेन भोज्यमानौ। ब्रह्मचारिणो भिक्षणं कापेयाभिप्रतारिणोः त्रैवर्णिकत्वलिङ्गमिति अर्थसिद्धम्। एकत्र ब्राह्मण-क्षत्रियजातिद्वयसम्बन्धितया अवगतायाम्, अन्यत्राऽपि ब्राह्मणसम्बन्धितया निर्णीतायाम्, तत्सम्बन्धिपुरुषान्तरविषयसन्देहे सति, अग्रप्रायन्यायात्

---

[सूत्रार्थः। **उत्तरत्र**—एतद्विद्यासम्बन्धिनि पश्चात्तने उपनिषद्भागे कीर्त्यमानेन, **चैत्ररथेन**—चित्ररथवंश्येन अभिप्रतारिनाम्ना क्षत्रियेण, **अस्य**—जानश्रुतेरपि, **क्षत्रियत्वगतिः**—अनुमित्यात्मकः क्षत्रियत्वनिर्णयो भवति। (अभिप्रतारिणः चैत्ररथत्वं क्षत्रियत्वं च) **लिङ्गात्**—कापेयपदसाहचर्यरूपात् ज्ञापकात् सिद्ध्यति।]

उपरिष्टाच्च विद्यायां क्षत्रियत्वं तु गम्यते।
अयाजयंश्चैत्ररथं कापेया इति लिङ्गतः॥ (ब्र.प.मा. १००)

---

[1] उपक्रमागता—द. [2] अधुना उपसंहार—न. [3] वेव्यमाणौ—थ. [4] ब्राह्मणतदितरेषु—थ. [5] क्षत्रियस्य—द.

रैक्वाद्ब्राह्मणादन्यस्य जानश्रुतेरपि, क्षत्रियत्वमेव युक्तम् ; न चतुर्थवर्णत्वम् ॥

[उक्तार्थे आक्षेपः तत्परिहारश्च]

ननु—अस्मिन् प्रकरणे, अभिप्रतारिणः चैत्ररथत्वं क्षत्रियत्वं च न श्रुतम् ; तत्कथम् अस्य अभिप्रतारिणः चैत्ररथत्वम् ? कथं वा क्षत्रियत्वम् ?

तत्राऽऽह—लिङ्गात्—इति ।

'अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिम्' (छां.उ. 4-3-5)

इति अभिप्रतारिणः कापेयसाहचर्याल्लिङ्गात्, अस्य अभिप्रतारिणः कापेयसम्बन्धः प्रतीयते । अन्यत्र च,

'एतेन वै चैत्ररथं कापेया अयाजयन्' (ता.म.ब्रा. 20-12-5)

इति कापेयसम्बन्धिनः [1]चैत्ररथत्वं श्रूयते । तथा चैत्ररथस्य[1] क्षत्रियत्वम्,

'तस्माच्चैत्ररथो नामैकः क्षत्रपतिरजायत' (श.ब्रा. 11-5-3-15)

इति । अतः अभिप्रतारिणः चैत्ररथत्वं क्षत्रियत्वं च गम्यते ॥ ३५ ॥

[सूत्रयोः सङ्गतिः]

तदेवं, न्यायविरोधिनि शूद्रस्याधिकारे, लिङ्गं नोपलभ्यते—इत्युक्तम् । इदानीं [2]न्यायसिद्धः शूद्रस्य[2] अनधिकारः, [3]श्रुतिस्मृतिभिः[3] अनुगृह्यते, इत्याह—

**१०१. संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ १-३-३६ ॥**

(पू.मी. 2-2-12) तस्य पुरुषस्य ब्राह्मणक्षत्रिययोरन्यतरत्वम्, परिशेषेण क्षत्रियत्वं च निश्चीयते इत्यर्थः ।

**कापेयसाहचर्यात्**—कापेयसहपाठात् । कापेयसहपाठबलेन कापेयसम्बन्धः सिद्धः । तेन तत्पुरोहितकस्य चैत्ररथत्वं सिद्धम् । तेन क्षत्रियत्वमवगतम् इत्यर्थः ॥ ३५ ॥

**तदेवमिति** । 'शूद्र'शब्दस्य रूढिसिद्धार्थविरोधि लिङ्गं, यौगिकार्थानुगुणलिङ्गं चेति, उभयविधं लिङ्गमपि शूद्रानधिकारज्ञापकम् इत्यर्थः ।

**इदानीमिति** । अयम् अनधिकारः श्रुतिस्मृतिभिः अनुगृह्यते इत्याहेत्यर्थः ।

[सूत्रार्थः—(ब्रह्मविद्योपदेशेषु) **संस्कारस्य**—उपदेशाङ्गभूतस्य उपनयनसंस्कारस्य, **परामर्शात्**—'उप त्वा नेष्ये' इत्यादिवाक्येनोपस्थितेः, (शूद्रे तु) **तदभावस्य**—उपनयनसंस्काराराहित्यस्य, **अभिलापाच्च**—'न च संस्कारमर्हति' इत्यादिषु स्पष्टमुक्तेश्च, ('शूद्र' इत्यामन्त्रितः, न चतुर्थवर्णीयः) ।]

**ब्रह्मविद्याप्रकरणे संस्कारपरिमर्शनात् ।**
**संस्काराभाववचनान्न शूद्रस्याधिकारिता ॥ (ब्र.प.मा. १०१)**

[1] चैत्ररथस्य—द. [2] न्यायसिद्धशूद्रस्य—द. [3] श्रुतिभिः—द.

[उपनयनस्य त्रैवर्णिकतास्थापकत्वम् ]

ब्रह्मविद्योपदेशप्रदेशेषु उपनयनसंस्कारः परामृश्यते—

'उप त्वा नेष्ये' (छां.उ. 4–1–5)

'तं होपनिन्ये' ( ? )

इत्यादिषु, शूद्रस्य च उपनयनादिसंस्काराभावोऽभिलप्यते—

'न शूद्रे पातकं किञ्चिन्न च संस्कार[1]मर्हति[1]' (म.स्मृ. 10–126)

'[2]चतुर्थो वर्ण एकजातिर्न च संस्कारमर्हति' ( ? )

इत्यादिषु[2] ॥ ३६ ॥

## १०२. तदभावनिर्धारणे च प्रवृत्तेः ॥ १-३-३७ ॥

[उपदेशात् पूर्वं ब्राह्मणत्वनिर्णयप्रवृत्तिदर्शनं विद्यान्तरे]

'नैतदब्राह्मणो विवक्तुमर्हति, समिधं सोम्याहर' (छां.उ. 4–4–5)

इति शुश्रूषोः जाबालस्य शूद्रत्वाभावनिर्धारणे सत्येव [3]विद्योपदेश[3]प्रवृत्तेश्च ; न शूद्रस्याधिकारः ॥ ३७ ॥

---

**न शूद्रे पातकं किञ्चित्**—सन्ध्यावन्दनाद्यभावनिमित्त पापं नास्तीत्यर्थः । **एकजातिरिति** । न तु द्विजातिरित्यर्थः ॥ ३६ ॥

**शूद्रत्वाभावेति** । [तदभावनिर्धारणे इति सूत्रस्थ] तच्छब्दस्य पूर्वसूत्रप्रकृतसंस्कारवाचितायाम् एतत्सूत्रविषयवाक्यानुगुण्याभावात् , तच्छब्दः प्रकृतपरामर्शीति भावः ॥ ३७ ॥

---

[सूत्रार्थः । **तदभावस्य**—जबालापुत्रे शूद्रवर्णीयत्वाभावस्य, **निर्धारणे च**—निश्चये सत्येव, **प्रवृत्तेः**—विद्योपदेशप्रवृत्तेः ('नैतदब्राह्मणो विवक्तुमर्हति, समिधं सोम्याहर' इत्यादिश्रुतौ दर्शनात् ; न शूद्रवर्णीयस्य विद्योपदेशः श्रुतिसिद्धः) ।]

जाबालस्य तु शुश्रूषोः शूद्रत्वाभावनिश्चये ।
उपदेशप्रवृत्तेश्च न शूद्रस्याधिकारिता ॥ (ब्र.प.मा. १०२)

---

[1] मर्हति इति—वा.　　[2] इत्यादिषु—द.　　[3] ब्रह्मविद्योपदेश—न.

## १०३. श्रवणाध्ययनार्थप्रतिषेधात् ॥ १-३-३८ ॥

[शूद्रे अध्ययनोपासननिषेधस्य श्रौतता]

शूद्रस्य वेदश्रवण-तदध्ययन-तदर्थानुष्ठानानि प्रतिषिध्यन्ते —
'पद्यु ह वा एतच्छमशानं यच्छूद्रः, तस्माच्छूद्रसमीपे नाध्येतव्यम्'
(वसि.स्मृ. 11-9)

'तस्माच्छूद्रो बहुपशुरयज्ञीयः'

इति । बहुपशुः—पशुसदृशः इत्यर्थः । अनुपशृण्वतः अध्ययन-तदर्थज्ञान-तदर्थानुष्ठानानि न सम्भवन्ति । अतः तान्यपि प्रतिषिद्धान्येव ॥ ३८॥

## १०४. स्मृतेश्च ॥ १-३-३९ ॥

---

[सूत्रगतेन] अर्थशब्देन तदनुष्ठानं विवक्षितम् ।

**पद्यु**—जङ्गमम् । समीपोच्चारणप्रतिषेधादेव श्रवणाध्ययनप्रतिषेधः अर्थसिद्धः । **तस्माच्छूद्रः** इति, अर्थानुष्ठानप्रतिषेधं दर्शयति । **पशुसदृश इत्यर्थ** इति । ईषदसमाप्तपशुत्वः इति वक्तव्ये, सदृशशब्दग्रहणम्, 'ईषदसमाप्तेः सादृश्यपर्यवसानज्ञापनार्थम्' । 'विभाषा सुपो बहुच् पुरस्तात्तु' (पा.सू. 5-3-68) इति पाणिनीयसूत्रेण ईषदसमाप्त्यर्थे 'बहुच्'प्रत्ययः ; तस्य पुरस्तात् प्रयोगश्च विहितः । **अध्ययनेति** । 'शूद्रो नाधीयीत' इति वाक्यमपि अनुसन्धेयम् । अनेन यज्ञे विशेषनिषेधात्, अन्यत्र वैदिके कर्मणि शूद्रस्याधिकारशङ्का च निरस्ता भवति ॥ ३८ ॥

---

[सूत्रार्थः । **श्रवणस्य**—वेदाख्याक्षरराशेः श्रोत्रेण ग्रहणस्य, **प्रतिषेधात्**—'तस्मात् शूद्रसमीपे नाऽध्येतव्यम्' इति स्मृत्या तत्समीपे अध्ययनमात्रनिषेधेन, तस्य श्रवणमपि अर्थात् निषिद्धम् । **अध्ययनार्थयोः**—गुरुमुखोच्चारणानूच्चारणरूपस्वाध्यायग्रहणस्य 'शूद्रो नाधीयीत' इति वाक्येन, यज्ञादिरूपस्वाध्यायार्थानुष्ठानस्य 'बहु पशुः अयज्ञीयः' इति वाक्येन निषेधाच्च, (न शूद्रवर्णीयः विद्याधिकारितया श्रुत्युक्तः) । ]

**आम्नायश्रवणाध्याययागादिप्रतिषेधतः ।**
**उपासनेऽप्यधीकारो न शूद्रस्येति निश्चितम् ॥ (ब्र. प. मा. १०३)**

[सूत्रार्थः । **स्मृतेश्च**—वेदश्रवण-वेदग्रहण-तदर्थानुष्ठानादीनां निषेधस्य स्मृत्युक्तत्वादपि ज्ञापकात्, (न शूद्रवर्णीयः वेदोक्तविद्याधिकारी) । ]

**न चास्योपदिशेद्धर्ममित्यादिस्मृतितस्तथा ।**
**उपासने नाऽधिकारश्शूद्रस्येति च गम्यते ॥ (ब्र. प. मा. १०४)**

[उक्तार्थस्य स्मृतितः सिद्धिः]

स्मर्यते च श्रवणादिनिषेधः ;

'अथ हाऽस्य वेदमुपशृण्वतः त्रपुजतुभ्यां श्रोत्र[1]प्रति पूरणम्[1],

उदाहरणे जिह्वाच्छेदः, धारणे शरीरभेदः' (गौ.ध.सू. 2-12-4)

इति,

'न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत्' (म.स्मृ. 4-80)

इति च। अतः शूद्रस्य अनधिकारः—इति सिद्धम् ॥ ३९ ॥

[अस्याधिकरणस्य पराभिमतार्थविरुद्धता]

ये तु—निर्विशेषचिन्मात्रं ब्रह्मैव परमार्थः ; अन्यत्सर्वं मिथ्याभूतम्। बन्धश्च अपारमार्थिकः। स च वाक्यजन्यवस्तुयाथात्म्यज्ञानमात्रनिवर्त्यः ; तन्निवृत्तिरेव मोक्षः—[2]इति[2] वदन्ति,

तैः, ब्रह्मज्ञाने [3]शूद्रादेः[3] अनधिकारो वक्तुं न शक्यते ; अनुपनीतस्य अनधीतवेदस्य अश्रुतवेदान्तवाक्यस्यापि, यस्मात्कस्मा[4]दपि[4] 'निर्विशेषचिन्मात्रं ब्रह्मैव परमार्थः, अन्यत्सर्वं तस्मिन् [5]परिकल्पितं मिथ्याभूतम्[5]' इति वाक्यात् वस्तुयाथात्म्यज्ञानोत्पत्तेः ; तावतैव बन्धनिवृत्तेश्च ।

न च—तत्त्वमस्यादिवाक्येनैव ज्ञानोत्पत्तिः कार्या ; न वाक्यान्तरेण—इति नियन्तुं शक्यम् ; ज्ञानस्य अपुरुषतन्त्रत्वात्, सत्यां सामग्र्याम् अनिच्छतोऽपि ज्ञानोत्पत्तेः।

---

अथ हेत्यादि, अध्ययनादौ प्रायश्चित्तस्मरणम्, उपदेशनिषेधस्मरणं च । अनधिकारज्ञापकत्वात् उभयमपि 'स्मृति'शब्दविवक्षितमिति भावः ॥

अत इत्यादि । 'रथकारोऽग्नीनादधीत' इत्यादिषु 'रूढिर्योगमपहरति' इति न्यायेन (पू.मी. 6-1-12) रूढार्थः स्वीकृतः । तदपवादः, अर्थविरोधः । अनुकूललिङ्गसद्भावे, विरोधिलिङ्गाभावे च रूढेः प्राबल्यम् । विरोधिलिङ्गसद्भावः तदपवादः इत्युक्तं भवति । 'रथकारोऽग्नीनादधीत' इत्यत्रापि, 'सौधन्वना ऋभवः' इति अनुकूललिङ्गमुपलभ्यते इति ॥३९॥

अनुपनीतस्येति । नहि 'नाऽयं सर्पः, रज्जुरेषा' इति वाक्यात् भ्रमनिवृत्तेः, उपनयनादिसंस्कारापेक्षा इति भावः ।

सत्यां सामग्र्याम् इति, अपुरुषतन्त्रत्वे हेतुमाह ।

---

[1] प्रपूरणं—वा.　[2] इति च—थ.　[3] शूद्रस्य—थ.　[4] चिचदपि—न.　[5] मिथ्याभूतं परिकल्पितं—द, न.

[वेदायत्तज्ञानस्यैव बन्धनिवर्तकत्वाशङ्का तत्परिहारश्च]

**न च—वेदवाक्यादेव वस्तुयाथात्म्यज्ञाने सति, बन्धनिवृत्तिर्भवति—इति [1]शक्यं वक्तुम्[1]; येन केनापि वस्तुयाथात्म्यज्ञाने सति, [2]भ्रान्ति[2]निवृत्तेः। पौरुषेयादपि, 'निर्विशेषचिन्मात्रं [3]ब्रह्म परमार्थः[3]; अन्यत्सर्वं मिथ्याभूतम्' इति वाक्यात् ज्ञानोत्पत्तेः; तावतैव भ्रमनिवृत्तेश्च। यथा—पौरुषेयादपि आप्तवाक्यात्, शुक्तिकारजतादिभ्रान्तिः, ब्राह्मणस्य शूद्रादेरपि निवर्तते; तद्वदेव शूद्रस्यापि वेदवित्सम्प्रदायागतवाक्यात् वस्तुयाथात्म्यज्ञानेन, जगद्भ्रमनिवृत्तिरपि भविष्यति ॥**

[वेदविद्भिः शूद्रस्य ज्ञानासम्भवशङ्का-तत्परिहारौ]

**'न चास्योपदिशेद्धर्मम्'** (म.स्मृ. 4-80)

**इत्यादिना 'वेदविदः शूद्रादिभ्यो न वदन्ति' इति[4]च न शक्यं[4] वक्तुम्; तत्त्वमस्यादिवाक्यावगतब्रह्मात्मभावानां वेदशिरसि वर्तमानतया, दग्धाखिलाधिकारत्वेन, निषेधशास्त्रकिङ्करत्वाभावात्। अतिक्रान्तनिषेधैर्वा कैश्चित्, उक्तात् वाक्यात् शूद्रादेः ज्ञानमुत्पद्यत एव ॥**

[पौरुषेयवाक्यात् बन्धहेतुभ्रमनिवृत्तिशङ्का-तन्निरासौ]

**न च वाच्यम्—[5]शुक्तिकादौ[5] रजतादिभ्रमनिवृत्तिवत्, पौरुषेयवाक्यजन्यतत्त्वज्ञानसमनन्तरं शूद्रस्य जगद्भ्रमो न निवर्तते—इति।**

**तत्त्वमस्यादिवाक्यश्रवणसमनन्तरं ब्राह्मणस्यापि जगद्भ्रमानिवृत्तेः।**

---

**येन केनापि** इति सामान्येन अर्थशरीरोक्तिः। **भ्रमनिवृत्तेः**—भ्रमनिवृत्तेः न्याय्यत्वात्। इत्यर्थः।

**वेदशिरसि वर्तमानतया**—वेदान्ते निष्ठत्वात्। यद्वा वेदस्यापि शिरसि निहितचरणत्वात् इति यावत्। **निषेधेति**। अनेन,

दग्धाखिलाधिकारत्वात् ब्रह्मज्ञानाग्निना मुनिः।
वर्तमानः श्रुतेर्मूर्ध्नि नैव स्यात् वेदकिङ्करः ॥

इति नैष्कर्म्यसिद्धिग्रन्थः स्मार्यते। **अतिक्रान्तेति**। मुखान्तरेण ज्ञानोदयसम्भवमाह।

**न चेति,** प्रत्यक्षविरोधमाशङ्क्य परिहरति।

---

[1] वक्तुं शक्यम्—वा. [2] बन्ध—थ. [3] ब्रह्म—थ, द. [4] च न शक्यते—थ, शक्यं—द. [5] शुक्त्यादौ—द, न.

निदिध्यासनेन द्वैतवासनायां निरस्तायामेव, तत्त्वमस्यादिवाक्यं निवर्तकज्ञानमुत्पादयति—इति चेत्; पौरुषेयमपि वाक्यं, शूद्रादेः तथैवेति, न कश्चिद्विशेषः।

'निदिध्यासनं हि नाम, ब्रह्मात्मभावाभिधायि वाक्यं यदर्थप्रतिपादनयोग्यं, तदर्थभावना। सैव विपरीतवासनां निवर्तयति' इति, दृष्टार्थत्वं निदिध्यासनविधेर्ब्रूषे। वेदानुवच[1]नादीन्यपि[1], विविदिषोत्पत्तावेव उपयुज्यन्त इति, शूद्रस्याऽपि विविदिषायां जातायां, पौरुषेयवाक्यात् निदिध्यासनादिभिः विपरीतवासनायां निरस्तायाम्, ज्ञानमुत्पत्स्यते; तेनैव अपारमार्थिको बन्धः निवर्तिष्यते॥

[मुखान्तरेण ज्ञानसम्भवप्रदर्शनतः पराभिप्रायनिरसनम्]

अथवा—तर्कानुगृहीतात् प्रत्यक्षात्, अनुमानाच्च, 'निर्विशेषस्वप्रकाशचिन्मात्रप्रत्यग्वस्तुनि अज्ञानसाक्षित्वं, तत्कृतविविधविचित्रज्ञातृ-ज्ञेयविकल्परूपं कृत्स्नं जगच्च अध्यस्तम्' इति निश्चित्य, एवम्भूतपरिशुद्धप्रत्यग्वस्तुनि अनवरतभावनया विपरीतवासनां निरस्य, तदेव प्रत्यग्वस्तु साक्षात्कृत्य, शूद्रादयोऽपि विमोक्ष्यन्ते, इति मिथ्याभूतविचित्रैश्वर्य-विचित्रसृष्ट्याद्यलौकिकानन्त[2]विशेषा[2]वलम्बिना वेदान्तवाक्येन, न किञ्चित् प्रयोजनम् इह दृश्यत इति, शूद्रादीनामेव ब्रह्म[3]विद्यायामधिकारः[3] सुशोभनः।

---

**निदिध्यासनं हीति**। न हि निदिध्यासनम् अदृष्टद्वारा किञ्चित् करोति; निवर्त्यसत्यत्वप्रसङ्गात्। अदृष्टद्वारा किञ्चित्करत्वे सति हि, यज्ञादाविव शूद्रस्यानधिकारः। न च तदस्ति। अतः 'नायं सर्पः' इति वाक्येन सर्पमिथ्यात्ववासनायामिव, शूद्रादेरपि निदिध्यासने अधिकारः, न निषेद्धुं शक्यते इति भावः। **वेदानुवचनादीन्यपीति**। शूद्रस्यापि जन्मान्तरानुष्ठितयज्ञादिकर्मणः, सञ्जातविविदिषस्य, शूद्रजन्मनि निदिध्यासनम्, आप्तवाक्यावगताद्वैतविषयं कर्तुं शक्यम् इति भावः।

**तर्केत्यादि**। त्वदुक्तानां प्रमाणानुपपत्ति-प्रमेयानुपपत्त्यादीनां तर्काणाम् अवगमो हि! न श्रुत्यपेक्षः इति भावः। **सुशोभन इति**। इतः पूर्वमविद्यमानम्, ईश्वरेशितव्यादि भेदज्ञानं जनयत् वेदवाक्यं हित्वा, केवलाद्वैतज्ञानजनकतर्कावलम्बिनामेव ब्रह्मविद्याधिकारः सुलभः इत्यर्थः।

---

[1] नादीति—थ, द  [2] विक्षेपा—थ  [3] विद्याधिकारः—इ, वा, विद्यायामेवाधिकारः—थ

[ श्रुतिवैयर्थ्यरूपम् अनुपपत्त्यन्तरम् ]

अनेनैव न्यायेन, ब्राह्मणादीनामपि ब्रह्मवेदनसिद्धेः ; उपनिषच्च तपस्विनी दत्तजलाञ्जलिः स्यात् ॥

[प्रकारान्तरेण श्रुतिजन्यज्ञानावश्यकत्वशङ्का तत्परिहारश्च]

न च वाच्यम्—नैसर्गिक[1]लोक[1]व्यवहारे भ्राम्यतः अस्य, केनचित् 'अयं लौकिकव्यवहारः भ्रमः ; परमार्थस्तु, [2]एवम्[2]' इति [3]समर्पिते[3] सत्येव प्रत्यक्षानुमानवृत्तबुभुत्सा जायत इति, तत्समर्पिका श्रुतिरपि आस्थेया—इति ;

यतः, भवभयभीतानां सांख्यादय एव प्रत्यक्षानुमानाभ्यां वस्तुनिरूपणं कुर्वन्तः, प्रत्यक्षानुमानवृत्तबुभुत्सां जनयन्ति। बुभुत्सायां च जातायां, प्रत्यक्षानुमानाभ्यामेव विविक्तस्वभावाभ्याम्, 'नित्यशुद्धस्वप्रकाशाद्वितीयकूटस्थचैतन्यमेव सत् ; अन्यत्सर्वं तस्मिन् अध्यस्तम्' इति सुविवेचम् ।

एवम्भूते स्वप्रकाशे वस्तुनि, श्रुतिसमधिगम्यं विशेषान्तरं च न अभ्युपगम्यते। अध्यस्तातद्रूप[4]निवर्तिनी[4] हि ! श्रुतिरपि त्वन्मते ।

न च—[5]सतः[5] आत्मनः, आनन्दरूपताज्ञानाय उपनिषत् आस्थेया ; चिद्रूपताया एव सकले[6]तरातद्रूपव्यावृत्तायाः आनन्द[6]रूपत्वात् ।

---

**अनेनैवेति** । 'अप्राप्ते हि शास्त्रमर्थवत्' । अतः प्राप्तार्थत्वात् भेदज्ञानजनकत्वाच्च, ब्राह्मणादेरपि श्रुतिः अनादरणीया इत्यर्थः । **तपस्विनी**—शोचनीया ! देश-काल-व्रताद्यनेकनियमवती इति भावः ।

**नैसर्गिक**शब्दः अनादित्वपरः । प्रसञ्जकत्वेन श्रुतिरपेक्षिता इति शङ्काग्रन्थार्थः ।

**साङ्ख्यादय एवेति** । साङ्ख्य-हैरण्यगर्भ-नैयायिक-वैशेषिक-बौद्धार्हतादिभिरेव प्रत्यक्षानुमानादिमुखेन वस्तुनिरूपणं प्रसक्तम् । अतः न श्रुत्यपेक्षेत्यर्थः । **सुविवेचमिति** । त्वयैव हि युक्तयः उपन्यस्ताः इति भावः ।

**अध्यस्तेति**, श्रुतेः तात्त्विकविशेषानवबोधकत्वमुपपादयति ।

**चिद्रूपताया एवेति** । असुखव्यावृत्तिर्हि ! आनन्दत्वम् । तत् सकलेतरव्यावृत्तिसाधकयुक्त्यैव सिध्यतीत्यर्थः ।

---

[1] लौकिक—थ [2] एवमेव—वा [3] समर्थिते—इ,थ,द [4] वर्तिनी—थ [5] स्वतः—द.
[6] तरव्यावृत्ततया आनन्द—थ, तरातद्रूपव्यावृत्ततया तद्—न, तरव्यावृत्ततया तद्—वा.

[उपासनस्य वेदान्तविहितस्य मोक्षोपायत्ववादिना सर्वदोषाभावः]

यस्य तु—मोक्षसाधनतया वेदान्तवाक्यैर्विहितं ज्ञानम्, उपासनरूपम्; तच्च परब्रह्मभूतपरमपुरुषप्रीणनम्, तच्च शास्त्रैकसमधिगम्यम्। [1]उपासनशास्त्रं च[1] उपनयनादि-[2]संस्कृता[2]धीतस्वाध्यायजनितं ज्ञानं विवेक-विमोकादि[3]साधना[3]नुगृहीतमेव स्वोपायतया स्वीकरोति; एवंरूपो[4]पासनप्रीतः पुरुषोत्तमः[4], उपासकं स्वाभाविकात्मयाथात्म्य-ज्ञानदानेन कर्मजनिताज्ञानं नाशयन्, बन्धात् [5]मोचयति[5]—इति पक्षः, तस्य [6]यथोक्तया नीत्या[6] शूद्रादेरनधिकारः उपपद्यते ॥ ३९ ॥

॥ इति अपशूद्राधिकरणम् ॥ ९ ॥

---

[उपनयनादीति। उपनयनादिभिः त्रैवर्णिकोद्देशेन विहितैः संस्कारैः संस्कृतः—संस्कारं प्राप्तः यः त्रैवर्णिकः पुरुषः, तेन अधीतः—गुरुमुखोच्चारणानूच्चारणेन उपायेन सम्पादितः यः स्वाध्यायः—आनुवंश्येनागतः शाखाविशेषः, तज्जनितं ज्ञानमित्यर्थः। पक्ष इति। 'इति यस्य तु पक्षः' इति पूर्वेणान्वयः। उपपद्यते—उपपत्तिमान्, सयुक्तिको भवति ॥]

[सूत्राणि—१. शुगस्य २. क्षत्रियत्व ३. उत्तरत्र ४. संस्कार
५. तदभाव ६. श्रवणा ७. स्मृतेश्च]

॥ इति अपशूद्राधिकरणम् ॥ ९ ॥

---

[1] उपासनं च शास्त्रम्—इ, उपासनाशास्त्रं च—वा. [2] संस्कारसंस्कृता—वा. [3] साधन-सप्तका—इ, सप्तका—द. [4] पासनप्रीतपुरुषोत्तमः—द, पासनाप्रीतः पुरुषोत्तमः—वा. [5] विमोचयति—थ. [6] यथोक्तरीत्या—वा.

## प्रमिताधिकरण(६)शेषः (सू. 40-42)

[पूर्वेण अधिकरणेन प्रसक्तिः]

तदेवं [1]प्रसक्तानुप्रसक्ता[1]धिकारकथां परिसमाप्य, प्रकृतस्य अङ्गुष्ठप्रमितस्य, भूतभव्येशितृत्वावगतपरब्रह्मभावोत्तम्भनं हेत्वन्तरमाह—

### १०५. कम्पनात् ॥ १-३-४० ॥

[सूत्रार्थविवृतिः]

'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति' (कठ.उ. 4-12)
'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा' (कठ.उ. 6-17)
इत्यनयोर्वाक्ययोर्मध्ये,
'यदिदं किं च जगत्सर्वं प्राण एजति निःसृतम् ।
महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ॥' (कठ.उ. 6-2)

---

**प्रसक्तम्**—देवादीनामधिकारनिरूपणम् । **अनुप्रसक्तम्**—इतराधिकरणद्वयम् । **परि**.... **त्तम्भनमिति** । 'ईशानो भूतभव्यस्य' इत्यवगतस्य नियमनस्य, 'जगत्सर्वम् एजति' इति सर्वविषयत्व-तत्कार्यकम्पनज्ञापनात् उत्तम्भनम् 'ईशान'शब्दस्य अस्वरसनिर्वाहे चिकीर्षितेऽपि तस्य विरोधीत्यर्थः ।

**वाक्ययोर्मध्ये** इति । परमात्मपरत्वेनोपपादितवाक्यद्वयमध्यगतत्वात् अस्य वाक्यस्य, अस्मिन्नेव मन्त्रे 'य एतद्विदुरमृतास्ते भवन्ति' इति अमृतत्वप्राप्तिहेतुत्वावगमात्, 'प्राण'शब्दस्य परमात्मवाचकत्वस्य अनेकाधिकरणन्यायसिद्धत्वाच्च, पूर्वपक्षानुदयः इति भावः। 'प्राणः, कम्पनात्' इत्यश्रवणात् सूत्रास्वारस्यं च। स्थितानाम् इति अध्याहारः, 'प्राणे' इति सप्तम्यन्तपदसामर्थ्यात् । **भयम्**—आगाम्यनिष्टापत्तिज्ञानरूपं दुःखम् । **एजनम्**—तत्कार्यम् । **एजनं कम्पनम्** इति,

---

[सूत्रार्थः । **प्रमितः**—अङ्गुष्ठप्रमिततया श्रुत्युक्तोऽर्थः, (परमात्मैव ; न जीवः) । **कम्पनात्**—'यदिदं किं च जगत्सर्वं प्राण एजति' इति श्रुत्युक्तसर्वकम्पनहेतुभूतभयजनन-योग्यतावत्त्वात् । ]

अङ्गुष्ठप्रमितप्राणपदार्थब्रह्मजाड्यात् ।
सर्वे देवा जागरूका इति श्रुत्या परः स हि ॥ (ब्र.प.मा. १०५)

---

[1] प्रसक्ता—थ.

'भयादस्याग्निस्तपति भयात्तपति सूर्यः ।

भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥' (कठ.उ. 6-3)

इति कृत्स्नस्य जगतः, अग्नि-सूर्यादीनां च अस्मिन् अङ्गुष्ठमात्रे पुरुषे 'प्राण'शब्द-निर्दिष्टे स्थितानां सर्वेषां, ततो निःसृतानां, तस्मात् सञ्जात[1]महाभय[1]निमित्तम्, एजनम्—कम्पनं श्रूयते । तच्छासनातिवृत्तौ [2]किं[2] भविष्यति ? इति महतो भयात् वज्रादिव उद्यतात्, कृत्स्नं जगत् कम्पते इत्यर्थः ॥

[विषयवाक्यस्य योजनायाः अनुशासनादिसिद्धिः]

'भयादस्याग्निस्तपति' इत्यनेन ऐकार्थ्यात् 'महद्भयं वज्रमुद्यतम्' इति पञ्चम्यर्थे प्रथमा । अयं च [3]परस्य ब्रह्मणः स्वभावः[3];

'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' (बृ.उ. 5-8-8)

'भीषास्माद्वातः पवते । भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च ।

मृत्युर्धावति पञ्चमः' (तै.उ.आन. 8-1)

इति परस्य ब्रह्मणः पुरुषोत्तमस्य, एवं[4]विधैश्वर्या[4]वगतेः ॥ ४० ॥

---

श्रुति-सूत्रयोः अभिन्नार्थत्वं ज्ञापयति । 'एजृ कम्पने' (पा.धा.पा. 234) इति हि धातुः । प्रत्यवायभयात् स्वस्वकार्येषु प्रवृत्तिः—**कम्पनम्** । तथा इहाप्यवगम्यते—'भयादस्याग्निस्तपति' इति । तपनं हि अग्न्यादित्ययोः कार्यम् । **धावतिशब्दः** इन्द्रादीनां स्वस्वव्यापारपरः । **महतो भयादिति** 'भय'शब्दः, न भयानकपरः ; लक्षणाप्रसङ्गात् इति भावः । **वज्रशब्दः** आयुधपरः, न तु अशनिपरः ; **उद्यतशब्द**विशेषितत्वात् इति भावः । न वज्रं भयदृष्टान्तः; दृष्टान्त-दार्ष्टान्तिकवैघट्यात् । भयम् अव्यवधानेन कम्पनहेतुः । वज्रं तु भयद्वारा तद्धेतुः । अतः वज्रं भयहेतुदृष्टान्तः । उद्यताद्वज्रादिव परमपुरुषात्सञ्जातेन भयेन कृत्स्नं जगत् कम्पते इत्यर्थः ।

**भयादस्येति** । अनन्तरवाक्ये 'भयादस्य' इति भय-तद्धेतुवाचिपदयोः वैयधिकरण्य-दर्शनात्, भयपदस्य पञ्चम्यन्तत्वदर्शनात्, पूर्वापरवाक्ययोः ऐकार्थ्यस्य न्याय्यत्वात्, दृष्टान्त-दार्ष्टान्तिकसामञ्जस्याच्च इत्यर्थः । **पञ्चम्यर्थे इति** । 'सुपां सुलुक्' (पा.सू. 7-1-39) इति सूत्रेण सर्वविभक्तिषु प्रथमायाः विहितत्वात्, इयं प्रथमा पञ्चम्यर्थवाचिनी इत्यर्थ ॥ ४० ॥

---

[1] महद्भय—अ. [2] किं भयं—अ. [3] परब्रह्मस्वभावः—इ, द. [4] विधस्यैश्वर्या—अ.

इतश्च, अङ्गुष्ठप्रमितः पुरुषोत्तमः -

## १०६. ज्योतिर्दर्शनात् ॥ १-३-४१ ॥

[सूत्रार्थविवृतिः, परस्य ब्रह्मणो ज्योतिष्ट्वं च]

[1]तयोरेव[1] अङ्गुष्ठ[2]प्रमितविषययोः[2] वाक्ययोर्मध्ये, परब्रह्मासाधारणं सर्वतेजसां छादकं, सर्वतेजसां कारणभूतम् अनुग्राहकं च अङ्गुष्ठप्रमितस्य ज्योतिः दृश्यते —

'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥' (कठ.उ. 5-15)

इति । अयमेव श्लोकः आथर्वणे [3]परं ब्रह्मा[3]धिकृत्य श्रूयते । परज्योतिष्ट्वं च सर्वत्र परस्य ब्रह्मणः श्रूयते । यथा —

'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' (छां.उ. 8-12-2)

'तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' (बृ.उ. 6-4-16)

'अथ [4]यदतः[4] परो दिवो ज्योतिर्दीप्यते' (छां.उ. 3-13-7)

इत्यादिषु। अतः अङ्गुष्ठ[5]प्रमितः[5] परं ब्रह्म ॥ ४१ ॥

॥ इति प्रमिताधिकरणशेषः ॥

---

**कारणभूतमिति ।** अनुभानं—पश्चाद्भानम् । तेन कार्य-कारणभावः सिद्धः । पौर्वापर्यनियमो हि कार्य-कारणभावः इति भावः । **अनुग्राहकमिति ।** 'यस्यादित्यो भामुपयुज्य भाति' इत्यादिश्रुतिश्च अनुग्राहकत्वे प्रमाणम् । **ज्योतिः**—दीप्तिः; 'ज्योतिष्मद्भ्राजमानं महस्वत्' इति प्रयोगात् । **इत्यादिष्विति ।** एवं (पूर्वं) शब्दतः प्रत्यभिज्ञानं हेतुतया उक्तम् । अर्थतः श्रुत्यन्तरप्रत्यभिज्ञानं च अस्य मन्त्रस्य परमात्मत्वसाधकत्वोपपादकम् इत्यभिप्रायः । **आदि**शब्देन 'तच्छुभ्रं ज्योतिषां ज्योतिः' 'नारायणपरो ज्योतिः' इत्यादि अभिप्रेतम् ॥४१॥

[सूत्राणि— १. कम्पनात् २. ज्योतिर्दर्शनात्]

॥ इति प्रमिताधिकरणशेषः ॥

---

[सूत्रार्थः । **प्रमितः**—अङ्गुष्ठप्रमिततया श्रुत्युपपादितोऽर्थः, (परमात्मा; न जीवः) **ज्योतिषः**—सूर्यादिसकलतेजोऽभिभावकं, सकलतेजोऽवभासकं च यत् ज्योतिः, तत्सम्बन्धस्य, **दर्शनात्**—'न तत्र सूर्यो....सर्वमिदं विभाति' इति श्रुत्या प्रतिपादनात् ॥]

**अङ्गुष्ठमात्रस्तु परो ज्योतिषोऽत्रैव दर्शनात् ।**
**तस्य भासा सर्वमिदं विभातीति श्रुतं यतः ॥ (ब्र.प.मा. १०६)**

---

[1] तयोर्द्वयोरेव—वा. [2] प्रमितयोः—द. [3] परब्रह्मा—चा. [4] तदतः—ड. [5] प्रमितं-भ.

२७. अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ १-३-१० ॥ (सू. 42-44)

[अधिकरणार्थः—नाम-रूपनिर्वोढा आकाशः, परमात्मा]

[दहरविद्याशेषभूतम् (छां.उ. 8–14)]

## १०७. आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ १-३-४२ ॥

[विषयवाक्यप्रदर्शनम्]

छान्दोग्ये श्रूयते —

'आकाशो ह वै नाम-रूपयोर्निर्वहिता, ते यदन्तरा।
तद्ब्रह्म तदमृतं स आत्मा' (छां.उ. 8–14–1)

इति ॥

[संशयाकारः]

तत्र संशयः—किम् अयम् 'आकाश'शब्दनिर्दिष्टः, मुक्तात्मा? उत परमात्मा?—इति ॥

---

आकाशो ........शादिति। पूर्वं दहराकाशस्य परब्रह्मत्वे साध्यमाने, 'अल्पश्रुतेः' (ब्र.सू. 1–3–20) इति सूत्रेण अल्पश्रुतिः परिहृता। अल्पश्रुतिप्रसङ्गेन अङ्गुष्ठप्रमितस्य परत्वं साधितम्। तत्प्रसङ्गेन अधिकरणत्रयमुक्तम्। अथ पूर्वप्रकृतदहरविद्यायाः बुद्धिस्थत्वेन तदनन्तरभूतस्य 'आकाशो ह वै' इत्यादिप्रकरणस्य जीवपरत्वम् आशङ्क्य परिह्रियते इति सङ्गतिः ॥

संशय इति। किमाकाशशब्दनिर्दिष्टः, मुक्तः? उत परमात्मा? इति संशयः। तदर्थं—'धूत्वा शरीरम्' इति, मुक्तस्यानन्तरप्रकृतत्वम्, 'आकाश'शब्दस्य मुक्तपरतामवगमयति? न? इति। किं मुक्तस्य नाम-रूपनिर्वोढृत्वं सम्भवति? न? इति। किमत्र नाम-रूपनिर्वोढृत्वं, नाम-रूपभाक्तया? उत नाम-रूपव्याकर्तृतया? इति। किं 'ते यदन्तरा' इति निर्देशः, कर्तृतया निर्वोढृत्वमुपपादयति? न? इति।

---

[सूत्रार्थः। **आकाशः**—नाम-रूपनिर्वोढृत्वेन श्रुत्युक्तः आकाशपदार्थः, (परमात्मैव; न बद्धः मुक्तो वा आत्मा)। **अर्थान्तरत्वादेः**—नामरूपनिर्वोढृत्व-नामरूपसंस्पृष्टत्वात्मकस्य, अर्थान्तरत्वस्य, (तथा) निरुपाधिकब्रह्मत्वस्य च, **व्यपदेशात्**—'आकाशो ह वै' इत्यादिश्रुत्या स्पष्टं कथनात् ज्ञापकात् ॥]

नामरूपविनिर्वोढा ह्याकाशः परमेश्वरः।
बद्धमुक्तोभयावस्थादन्यत्वेनास्य कीर्तनात् ॥ (ब्र.प.मा. १०७)

[पूर्वपक्षः]

किं युक्तम्?

मुक्तात्मा—इति।

कुतः?

'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य।

धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानि॥' (छां.उ. 8-13-1)

इति मुक्तस्य अनन्तरप्रकृतत्वात्। 'ते यदन्तरा' इति च नाम-रूप[1]विनिर्मुक्तस्य[1] तस्य अभिधानात्। 'नाम-रूपयोर्निर्वहिता' इति च, स एव पूर्वावस्थया उपलिलक्षयिषितः। स एव हि देवादिरूपाणि नामानि च पूर्वम् अवि(भः)भृत। तस्यैव नाम-रूप[2]विनिर्मुक्ता[2] साम्प्रतिकी अवस्था, 'तद्ब्रह्म तदमृतम्' इत्युच्यते। 'आकाश'शब्दश्च तस्मिन्नपि असङ्कुचितप्रकाशयोगात् उपपद्यते॥

[परात्मप्रतिपादनवाक्यशेषत्वकृतपरमात्मपरत्वशङ्का-तद्दूषणे]

[3]ननु[3]—दहरवाक्यशेषत्वात् अस्य, स एव दहराकाशोऽयम् इति प्रतीयते। [4]तस्य च[4], परमात्मत्वं निर्णीतम्;

[5]मैवम्[5]; प्रजापतिवाक्यव्यवधानात्। प्रजापतिवाक्ये च, प्रत्यगात्मनः मुक्त्यव-

---

पूर्वपक्षः—यदा नोपपादयति; तदा नाम-रूपभाक्त्वमेव तन्निर्वोढृत्वमिति, तस्य जीवेऽपि बद्धदशायां सम्भवेन, मुक्तात्मनः प्रकृतत्वम्, 'आकाश'शब्दस्य मुक्तपरत्वावगमकमिति आकाशो मुक्तात्मा—इति।

राद्धान्तः—यदा 'ते यदन्तरा' इति निर्देशः, कर्तृतया नाम-रूपनिर्वोढृत्वमुपपादयति; तदा नाम-रूपनिर्वोढृत्वं नाम तत्कर्तृत्वरूपमिति, तस्य मुक्तात्मन्यसम्भवात्, मुक्तात्मनः पूर्व-प्रकृतत्वेऽपि, अस्मिन् वाक्ये मुक्तात्मनः अवगत्यनुपपत्तेः 'आकाश'शब्दनिर्दिष्टः परमात्मा—इति।

**ते यदन्तरेति।** उभयोर्मध्यस्थत्वात् तदस्पृष्टत्वं फलितम्; मध्यस्थस्य अन्यतर-पक्षपाताभावात्। तेन पूर्वोक्तमुक्तप्रत्यभिज्ञानात् इत्यर्थः। **स एव हीति।** नाम-रूपनिर्वोढृत्वं न नाम-रूपकर्तृत्वम्; अपि तु नामरूपभाक्त्वम्। वहनं हि धात्वर्थः। उपसर्गाणां नानार्थत्व-सम्भवात्, नितरां वोढृत्वं 'निर्वोढृ'शब्दार्थः स्यात् इति पूर्वपक्षिणोऽभिप्रायः। **साम्प्रतिकीति।** नामरूपविमोक्षानन्तरकालभाविनी अवस्था। तस्य कालस्य प्रकृतत्वात् 'साम्प्रतिकी' इत्युच्यते।

---

[1] विमुक्तस्य—इ, घ, वा. [2] विमुक्ता—इ. [3] ननु च—द. [4] तस्य—द. [5] नैवम्—वा.

स्थान्तं रूपमभिहितम्। अनन्तरं च 'विधूय पापम्' इति स एव मुक्तावस्थः प्रस्तुतः। अतः अत्र आकाशः, मुक्तात्मा॥

[सिद्धान्तारम्भः]

इति प्राप्ते, उच्यते—आकाशोऽर्थान्तरत्वादि[1]व्यपदेशात्—इति[1]।

आकाशः, [2]परं ब्रह्म[2]।

कुतः?

[3]अर्थान्तरत्वादि[3]व्यपदेशात्। [4]अर्थान्तरत्व[4]व्यपदेशस्तावत्,

'आकाशो ह वै नाम-रूपयोर्निर्वहिता' (छां.उ. 8–14–1)

इति। नाम-रूपयोर्निर्वोढृत्वं—बद्ध-मुक्तोभयावस्थात् प्रत्यगात्मनः अर्थान्तरत्वम्, आकाशस्य उपपादयति। बद्धावस्थः स्वयं [5]कर्मवशात्[5] नाम-रूपे भजमानः, न नाम-रूपे निर्वोढुं शक्नुयात्। मुक्तावस्थस्य जगद्व्यापारासम्भवात्, [6]न नितरां[6] नाम-रूप-निर्वोढृत्वम्।

ईश्वरस्य तु [7]सकल[7]जगन्निर्माणधुरन्धरस्य नाम-रूपयोर्निर्वोढृत्वं श्रुत्यैव प्रतिपन्नम्।

'अनेन जीवेनात्मनाऽनुप्रविश्य नाम-रूपे व्याकरवाणि' (छां.उ. 6–3–2)

'यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः।
तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते॥' (मुण्ड.उ. 1–1–10)

'सर्वाणि रूपाणि [8]विचित्य[8] धीरो नामानि कृत्वाभिवदन् यदास्ते'

(तै.आर.पु. 3–12–16)

इत्यादिषु। अतः निर्वाह्यनाम[9]रूपात्[9] प्रत्यगात्मनः, नाम-रूपयोर्निर्वोढा अयमाकाशः,

---

[राद्धान्ते—] व्यपदेशस्तावदिति। प्रदर्श्यते इति शेषः। अर्थान्तरत्वशब्दः तदुपपादकधर्मं लक्षयति। अर्थान्तरत्वमाकाशस्योपपादयति इति हि उक्तम्। भेदकधर्मव्यपदेशात् इत्यर्थः। नाम-रूपयोरित्यादि। नाम-रूपनिर्वोढृत्वं च स्पष्टभेदकधर्मः। अवयवशक्त्या 'निर्वोढृ'शब्दस्य वहनमात्रपरत्वादपि 'रूढिर्योगमपहरति' इति न्यायात्, कर्तृपरत्वं युक्तमिति भावः।

---

[1] व्यपदेशात्—वा. [2] परब्रह्म—न [3] अर्थान्तर—द, अर्थान्तरादि—न. [4] अर्थान्तर—न. [5] कर्मवश्यः—न. [6] नतरां—अ, द. [7] निखिल—वा. [8] विचिन्त्य—थ. [9] रूपत्वात्—थ.

अर्थान्तरभूतः परमेव ब्रह्म। तदेवोपपादयति, 'ते यदन्तरा' इति। [1]यस्मात्[1] अयमाकाशः, नाम-रूपे अन्तरा—ताभ्यामस्पृष्टः अर्थान्तरभूतः ; तस्मात्, तयोर्निर्वोढा—अपहतपाप्मत्वात्, सत्यसङ्कल्पत्वाच्च निर्वहिता इत्यर्थः। 'आदि'शब्देन ब्रह्मत्वात्मत्वामृत[2]त्वानि[2] गृह्यन्ते।

निरुपाधिकबृहत्त्वादयो हि परमात्मन एव सम्भवन्ति। तेन अत्राकाशः परमेव ब्रह्म।

[मुक्तात्मनः प्रक्रान्तत्वकृतमुक्तात्मपरत्वशङ्का, तद्व्यावृत्तिश्च]

यत् पुनरुक्तम्—'धूत्वा शरीरम्' इति, मुक्तः [3]अनन्तर[3]प्रकृतः—इति, तन्न ; 'ब्रह्मलोकमभिसम्भवानि' इति परस्यैव ब्रह्मणः, अनन्तरप्रकृतत्वात्।

[4]यद्यपि[4], अभिसम्भवितुः मुक्तस्य अभिसम्भाव्यतया [5]परं ब्रह्म[5] निर्दिष्टम् ; तथापि, अभिसम्भवितुः मुक्तस्य नाम-रूपनिर्वोढृत्वासम्भवात्, अभि[6]सम्भाव्यं[7] परमेव ब्रह्म तत्र प्रत्येतव्यम्॥

[प्रजापतिवाक्यस्य अव्यवधायकत्वम्]

किञ्च—'आकाश'शब्देन प्रकृतस्य [7]दहराकाशस्य अत्र[7] प्रत्यभिज्ञानात्, प्रजापतिवाक्यस्यापि उपासकस्वरूपकथनार्थत्वात्, उपास्य एव दहराकाशः प्राप्यतया उपसंह्रियते—इति युक्तम्। 'आकाश'शब्दश्च, प्रत्यगात्मनि न क्वचित् दृष्टचरः। अतः अत्र आकाशः, परं ब्रह्म॥ ४२॥

---

**तदेवोपपादयति ते यदन्तरेति।** कर्मकृतनामरूपभाक्त्वाभावात्, तयोः स्वेच्छया निर्वोढा परमात्मा। न हि! कर्मपराधीनचेष्टितस्य बद्धस्य, जगद्व्यापारानुगुणसङ्कल्पादिरहितस्य मुक्तस्य च नामरूपनिर्वोढृत्वं सम्भवति इत्यर्थः। **निर्वहिता** इति, श्रुतिस्थपदानुकारः।

**निरुपाधिक**शब्दः अनवच्छिन्नपरः। उपाधिर्हि! अवच्छेदकः। जीवस्य ज्ञानतो बृहत्त्वम्। तच्च परमात्मप्रसादायत्तम्। **बृहत्त्वादयः** इति। धर्माः इति शेषः।

**ब्रह्मलोकः**—ब्रह्मैव लोकः।

**यद्यपि....प्रत्येतव्यमिति।** प्रथमानिर्दिष्टस्य अभिसम्भवितुः प्राधान्येन प्राकरणिकत्वस्वारस्येऽपि, लिङ्गबलात् प्राकरणिकत्वस्वारस्यभङ्गो युक्तः इत्यभिप्रायः।

**किञ्चाकाशेति।** अवान्तरप्रकरणेन पूर्ववाक्यस्य जीवस्वरूपपरत्वमभ्युपेत्य परिहृतम्। वस्तुतस्तु, ब्रह्मलोकश्रुत्यनुगृहीतमहाप्रकरणबलात् पूर्ववाक्यमपि न जीवपरम्। किन्तु तस्य परमप्राप्यभूतपरब्रह्मपरत्वमेव इत्याशयः। **प्रजापतिवाक्यस्येति।** प्रजापतिवाक्यस्य व्यवधायकत्वशङ्काव्यावृत्त्यर्थम्। **आकाशेत्यादिना**, हेत्वन्तरमाह॥ ४२॥

---

[1] यस्मादेव—वा [2] त्वादीनि—वा [3] अनन्तरः—द. [4] यद्यपि हि—द. [5] परब्रह्म—वा. [6] सम्भाव्यः—द. [7] दहराकाशस्य—इ, दहराकाशस्य अस्य—द.

अथ स्यात्—प्रत्यगात्मनः अर्थान्तर[1]भूतम् आत्मान्तरमेव[1] नाऽस्ति; ऐक्योपदेशात्, द्वैतप्रतिषेधाच्च। शुद्धावस्थ [2]एव हि[2]! प्रत्यगात्मा 'परमात्मा' 'परं ब्रह्म' 'परमेश्वरः' [3]इति च[3] व्यपदिश्यते। अतः प्रकृतात् मुक्तात्मनः अभिसम्भवितुः, न अर्थान्तरम् अभिसम्भाव्यो ब्रह्मलोकः। अतः नाम-रूपयोः निर्वहिता आकाशोऽपि स एव भवितुमर्हति—इति।

अतः उत्तरं [4]पठति[4]—

## १०८. सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ १-३-४३ ॥

[सूत्रार्थविवरणम्]

'व्यपदेशात्' इति [5]वर्तते[5]। सुषुप्त्युत्क्रान्त्योः प्रत्यगात्मनोऽर्थान्तरत्वेन परमात्मनः व्यपदेशात्, प्रत्यगात्मनोऽर्थान्तरभूतः [6]परमात्मा अस्त्येव[6]। तथा हि वाजसनेयके—

---

**नास्तीति**। दृढप्रमाणसिद्धं न भवतीत्यर्थः। **ऐक्योपदेशादिति**। मुक्तप्राप्यतयोक्तस्य, 'ब्रह्मलोक'शब्दनिर्वाच्यतया बृहदारण्यके प्रत्यभिज्ञायमानस्य, 'एकधैवानुद्रष्टव्यम्' 'स वा एष महानज आत्मा; योऽयं विज्ञानमयः' इति, जीवेन ऐक्यप्रतिपादनात् इत्यर्थः। **द्वैतप्रतिषेधाच्चेति**। 'नेह नानाऽस्ति किंचन' इति भेदनिषेधाच्च इत्यर्थः। **'च'**शब्दः समुच्चये। ऐक्योपदेश-भेदनिषेधयोः प्रत्येकं भेदविरोधित्वात्। **ब्रह्मलोक** इति। तत्र हि 'एष ब्रह्मलोकः सम्राडिति होवाच' इति, प्रकरणावसाने तस्य परमात्मनः 'ब्रह्मलोक'शब्दनिर्देशोऽवगम्यते। **'नाम....हिता'** इति यथाश्रुति अनुवादः। अत एव हि! 'नाम-रूपयोर्निर्वोढृत्वम्' इति स्वग्रन्थे निर्दिष्टम्। आपाततः अर्थान्तरत्वे प्रतीतेऽपि, न तत् सिद्धान्तीकर्तव्यम् इति शङ्काग्रन्थस्यार्थः।

**व्यपदेशादिति वर्तत** इति। यथा 'अथ शब्दानुशासनम्' इत्यत्र, केषां शब्दानाम्? इत्युक्ते, समस्तस्यापि 'अनुशासन'पदस्य विभागेन अनुषङ्गः; तथा इहापि इति भावः। **सूत्रे सुषुप्त्युत्क्रान्त्योः** इति सप्तमी। **अर्थान्तरभूत** इति। अस्य सूत्रस्य अर्थान्तरत्वव्यपदेश-

---

[सूत्रार्थः। **सुषुप्ति-उत्क्रान्त्योः**—जीवात्मनः गाढनिद्रारूपायां दैहिकावस्थायाम्, (तथा) देहात् उत्क्रमणरूपायामवस्थायामपि, **भेदेन**—परमात्मनः जीवाद्भिन्नतया, **व्यपदेशात्**—श्रुतौ स्पष्टतया कथनात्, (प्रत्यगात्मनो जीवादन्य एव परमत्मा)।]

प्राज्ञेन सम्परिष्वक्तः सुषुप्तौ कीर्त्यते पृथक्।
भेदेन चैवमुत्क्रान्तौ जीवादन्यः परः पुमान्॥ (ब्र.प.मा. १०८)

---

[1] मेव—न, भूतपरमात्मान्तरमेव—इ.   [2] एव—द.   [3] इति—वा.   [4] वदति—इ.
[5] अनुवर्तते—न.   [6] परमात्मा—थ.

'कतम आत्मेति। योऽयं विज्ञानमयः प्राणेषु' (बृ.उ. 6-3-7)

इति [1]प्रकृतस्य[1] प्रत्यगात्मनः, सुषुप्त्यवस्थायाम् [2]अकिञ्चिज्ज्ञस्य[2], सर्वज्ञेन परमात्मना परिष्वङ्गः आम्नायते—

'प्राज्ञेनाऽऽत्मना सम्परिष्वक्तो न बाह्यं किंचन वेद, नाऽऽन्तरम्' (बृ.उ. 6-3-21) इति। तथा उत्क्रान्तावपि—

'प्राज्ञेनाऽऽत्मनाऽन्वारूढ उत्सर्जन् याति' (बृ.उ. 6-3-35) इति।

न च स्वपतः उत्क्रामतो [3]वा अकिञ्चिज्ज्ञस्य[3] तदानीमेव [4]स्वेनैव सर्वज्ञेन[4] सता परिष्वङ्गान्वारोहौ सम्भवतः। न च क्षेत्रज्ञान्तरेण; तस्याऽपि सर्वज्ञत्वासम्भवात् ॥ ४३ ॥

[उक्तार्थे हेत्वन्तरवर्णनपरसूत्रावतारणम्]

इतश्च—प्रत्यगात्मनोऽर्थान्तरभूतः परमात्मा—इत्याह,

## १०९. पत्यादिशब्देभ्यः ॥ १-३-४४ ॥

[सूत्रार्थविवरणम्]

अयं परिष्वञ्जकः परमात्मा, उत्तरत्र पत्यादिशब्दैः व्यपदिश्यते—

'[1]सर्वस्याऽधिपतिः' (बृ.उ. 6-4-22)

---

रूपहेत्वसिद्धिशङ्कापरिहारपरत्वात्, अर्थसिद्धं साध्यनिर्देशं दर्शयति [अनेन]। अवान्तरार्थप्रतिज्ञात्वात् सूत्रे कण्ठोक्त्यभावः। प्रधानार्थप्रतिज्ञानस्य हि! प्रायेण कण्ठोक्तिरुपलभ्यते।

**विज्ञान....इति प्रकृतस्येति,** देहस्य प्राज्ञपरिष्वक्तत्वशङ्काव्यावृत्त्यर्थम्। **उत्सर्जन्निति।** 'शरीरम्' इति शेषः ॥ ४३ ॥

**इतश्चेति,** मुक्तावस्थेनाऽऽत्मना अन्वारोहः [भवितुमर्हति] इत्यत्राह।

---

[सूत्रार्थः। **पत्यादिशब्देभ्यः**—परमात्मविषये प्रयुक्तेभ्यः 'अधिपतिः, ईशानः' इत्यादिभ्यः श्रुतिगतेभ्यः शब्देभ्यः, 'स्वामिभूतः परमात्मा अन्यः, स्वभूतः जीवोऽन्यः' (इति निर्णयम्) ॥]

सर्वस्याधिपतीत्यादिशब्दैश्च व्यपदेशतः।
प्राज्ञश्च परमात्मायं जीवादन्यः सुनिश्चितः ॥ (ब्र.प.मा १०९)

---

[1] प्रकृत्य तस्य—वा. [2] किञ्चिज्ज्ञस्य—द. [3] च किञ्चिज्ज्ञस्य—च, वा किञ्चिज्ज्ञस्य—छ, वाऽस्य किञ्चिज्ज्ञस्य—ङ, अस्य किञ्चिज्ज्ञस्य—न, वाप्यकिञ्चिज्ज्ञस्य—वा, [4] सर्वज्ञेन स्वेनैव—थ.

'सर्वस्य वशी सर्वस्येशानः[1]' (बृ.उ. 6-4-22)

'स न साधुना कर्मणा भूयान् नो एवाऽ[2]साधुना कर्मणा[2] कनीयान्।
एष सर्वेश्वर एष भूताधिपतिः एष भूतपालः एष सेतुर्विधरण
एषां लोकानामसम्भेदाय। तमेतं वेदानुवचनेन ब्राह्मणाः विविदिषन्ति....
एतमेव विदित्वा मुनिर्भवति। एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति'
(बृ.उ. 6-4-22)

'स वा एष महानज आत्मा अन्नादो [3]वसुदानः[3]' (बृ उ. 6-4-24)

'[4]अजरो[4]ऽमृतोऽभयो [5]ब्रह्म[5]' (बृ.उ. 6-4-25)

इति ॥

[पतित्वादेः परमात्मासाधारणत्वम् ऐक्योपदेशतात्पर्यं च]

एते च [6]पतित्व[6]-जग[7]द्विधरणत्व[7]-सर्वेश्वरत्वादयः, प्रत्यगात्मनि मुक्तावस्थेऽपि न कथञ्चित् सम्भवन्ति। अतः मुक्तात्मनोऽर्थान्तरभूतः, नाम-रूपयोर्निर्वहिता आकाशः। ऐक्योपदेशस्तु—सर्वस्य चिदचिदात्मकस्य ब्रह्मकार्यत्वेन, तदात्मकत्वायत्तः—इति,

'सर्वं खल्विदं ब्रह्म तज्जलान्' (छां.उ. 3-14-1)

---

सर्वस्येति। सूत्रे 'पत्यादिशब्देभ्यः' इति निर्दिष्टत्वात्, तदनुरोधाय श्रौतपाठ-क्रमानादरेण 'सर्वस्याधिपतिः' इति वाक्यं प्रथममुदाहृतम्। 'पत्यादिशब्देभ्यः' इति निर्देशः, हेयसम्बन्धराहित्यपरवाक्यस्य तत्पूर्वापरवाक्यानां च तन्त्रेण क्रोडीकरणार्थम्, अभ्यासरूपतात्पर्य-लिङ्गज्ञापनार्थं च। अधिपत्यादीत्यनुक्तिः, 'पतिं विश्वस्यात्मेश्वरम्' इत्यादिभिः अस्य प्रकरणस्यै-कार्थ्येन, विशेषस्य परमात्मनः नारायणत्वद्योतनार्था। अत एव हि! 'अयं परिष्वञ्जकः परमात्मा' इति भाष्ये निर्देशः। स खलु! 'पतिं विश्वस्य' इति प्रकरणस्थं 'तस्याः....परमात्मा व्यवस्थितः' इति 'परमात्म'शब्दं स्फोरयति।

**तमेतम्** इत्यादिवाक्यं, मुमुक्षूपास्यस्वरूपमहागुणवाचिशब्दत्वात् पत्यादिशब्दैः सहोपात्तम्। **अन्नादः**— अन्नदः।

**न....सम्भवन्तीति**। मुक्तस्य जगद्व्यापाररहितत्वादित्यर्थः। **तदात्मकत्वायत्त** इति। कार्य-कारणैक्यनिबन्धनः; न तु जीवेश्वरैक्यनिबन्धनः इत्यर्थः।

---

[1] 'सर्वस्य वशी सर्वस्येशानः' 'सर्वाधिपतिः'—अ [2] साधुना कर्मणः—आ, इ, वा, साधुकर्मणः—थ, न [3] वसुधानः—द [4] अजरोऽमरो—अ [5] आनन्दो ब्रह्म—वा
[6] जगत्पतित्व—वा [7] द्विधरण—वा

इत्यादिभिः वाक्यैः प्रतिपाद्यते—इति पूर्वमेव [1]समर्थितम्[1]। द्वैतप्रतिषेधश्च तत एवेति अनवद्यम् ॥४४॥

॥ इति अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ १० ॥

इति श्री भगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये

प्रथमाध्यायस्य तृतीयः पादः ॥

---

**तत एव**—कार्यकारणैक्यादिव । ऐक्योपदेशशेषत्वात् भेदनिषेधश्रुतिश्च कुतर्कसिद्ध-कार्यकारणभेदप्रतिषेधपरा, इत्यर्थः । अत्र भेदनिषेधस्य प्रकारैक्यनिबन्धनत्वम् अर्थसिद्धम् । प्रकारप्रकारिभावस्य जगत्कारणत्वनिर्वाहकत्वात् । तत्र आरम्भणाधिकरणे कार्य-कारणैकत्व-समर्थनं श्रौतम् । तेन ऐक्योपदेशस्य मुख्यत्वम् आर्थम् । सामानाधिकरण्यस्य शरीर-शरीरिभावनिबन्धनत्वम्, 'अवस्थितेरिति काशकृत्स्नः' (ब्र.सू. 1-4-22) इति वक्ष्यते । तत्र आकृतिनय (पू.मी. 1-3-10) गोचरतया मुख्यत्वसमर्थनं चिद्विषयम् अचिद्विषयं च, 'अंशो नानाव्यपदेशात्' (ब्र.सू. 2-3-42) 'उभयव्यपदेशात्' (ब्र.सू. 3-2-26) इति अधि-करणद्वयेन कृतम् । एवं वक्ष्यमाणो मुख्यनिर्वाहः इह स्मारितः । **इत्यनवद्यम्** इति पादद्वयोक्त-मर्थमभिप्रेत्य ॥ ४४ ॥

[सूत्राणि—१. आकाशो २. सुषुप्त्यु ३. पत्यादि]

॥ इति अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ १० ॥

॥ इति तृतीयः पादः ॥

---

[1] उक्तम्—न.

## ॥ अधिकरणार्थसूचनी ॥

[प्रथमे समन्वयाध्याये चतुर्थः अन्ययोगव्यवच्छेदपादः]

अधि. 1-8] [सू. 1-29

| क्र.सं. | अधिकरणनामानि विद्यानामानि च | सू.सं. | प्रतिपाद्या अर्थाः |
|---|---|---|---|
| 28 | 1 आनुमानिकाधिकरणम्<br>[नाचिकेतविद्या (कठ.उ)] | 1—7 | कठवल्लीगताव्यक्तपदप्रतिपाद्यम्, सांख्योक्तम् आनुमानिकं प्रधानं न ; किन्तु शरीरमेव । |
| 29 | 2 चमसाधिकरणम्<br>[अजाविद्या (श्वे.उ)] | 8—10 | 'अजामेकाम्' इति श्रुत्युक्ता, सांख्योक्ताब्रह्मात्मकप्रकृतिर्न ; किन्तु श्रुत्युक्तब्रह्मात्मकप्रकृतिरेव । |
| 30 | 3 संख्योपसङ्ग्रहाधिकरणम्<br>[ज्योतिषां ज्योतिर्विद्या (बृ.उ)] | 11—13 | 'यस्मिन् पञ्च पञ्चजनाः' इति श्रुत्युक्ताः पञ्चजनाः ब्रह्माश्रितानि पञ्चेन्द्रियाण्येव; न तु सांख्योक्तानि पञ्चविंशतितत्त्वानि । |
| 31 | 4 कारणत्वाधिकरणम्<br>[अव्याकृतब्रह्मविद्या<br>(तै.उ, छां.उ, बृ.उ] | 14, 15 | 'सत्, असत, अव्याकृतम्' इत्यादि-पदघटितानि वेदान्तवाक्यानि ब्रह्म-कारणतापराण्येव ; न प्रधानकारणता-पराणि । |
| 32 | 5 जगद्वाचित्वाधिकरणम्<br>[बालाकिविद्या (कौषी.उ)] | 16—18 | 'यो वै बालाके' इति वेदितव्यतया उपदिष्टः, सर्वस्रष्टा परमपुरुष एव ; न सांख्योक्तः प्रकृतिवियुक्तः पुरुषः । |
| 33 | 6 वाक्यान्वयाधिकरणम्<br>[मैत्रेयीविद्या (बृ.उ)] | 19—22 | 'आत्मा वा अरे' इति द्रष्टव्यतया उपदिष्टः परमात्मैव; न पञ्चविंशको जीवः। |
| 34 | 7 प्रकृत्यधिकरणम्<br>[सद्विद्या (छां.उ)] | 23—28 | ब्रह्मणः जगन्निमित्तत्वमिव, जगदुपा-दानत्वमपि ब्रह्मण एव ; नाऽन्यस्य । |
| 35 | 8 सर्वव्याख्यानाधिकरणम्<br>(सर्वविद्यासम्बन्धि) | 29 | सर्ववेदान्तगतानां जगत्कारणप्रतिपादन-पराणां सर्वेषां वाक्यानां ब्रह्मपरत्वमेव । |

श्रीः



श्रीशारीरकमीमांसाभाष्ये प्रथमे समन्वयाध्याये

[अन्ययोगव्यवच्छेपादः]

## चतुर्थः पादः

[स्पष्टतरजीवादिलिङ्गकवेदान्तवाक्यविचारात्मकः]

अधि· 1-8] [पादार्थः—ब्रह्मैव सर्वजगत्कारणम्] [सू· 1-29

२८. आनुमानिकाधिकरणम् ॥१-४-१॥ (सू· 1-7)

[अधिकरणार्थः—'अव्यक्त'शब्दार्थः, न सांख्योक्तं प्रधानं ; किन्तु शरीरमेव]

[नाचिकेतविद्या (कठ.उ.)]

### ११०. आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्त-गृहीतेर्दर्शयति च ॥१-४-१॥

[द्वितीय-तृतीयपादार्थसङ्ग्रहः]

**उक्तं**—परमपुरुषार्थलक्षणमोक्षसाधनतया जिज्ञास्यं जगज्जन्मादिकारणं ब्रह्म,

---

**आनुमानिकमिति** । 'प्रथमपादः, चिदचिद्विलक्षणकारणत्वायोगव्यवच्छेदपरः । अन्ययोगव्यवच्छेदपरायां त्रिपाद्याम् अस्पष्ट-स्पष्टजीवादिलिङ्गकवाक्यविषयौ द्वितीय-तृतीयौ । स्पष्टतरजीवादिप्रतिपादकवाक्यविषयः चतुर्थः' इति पादसङ्गतिः, द्वितीयपादारम्भे कथिता । सूत्रकारैस्तु, अन्ययोगव्यवच्छेदस्य त्रिपादीकृत्यत्वं चतुर्थपादारम्भे कण्ठोक्तम् ; 'आनुमानिक-मप्येकेषाम्' इति हि उक्तम् ।

अतः भाष्यकारः चतुर्थपादारम्भे त्रिपाद्यर्थस्फुटीकरणमुखेन सङ्गतिं विवक्षन् प्रथम-पादार्थानुभाषणपूर्वकं द्वितीय-तृतीययोरर्थं वृत्तं दर्शयति—**उक्तमिति** ।

---

[सूत्रार्थः । **एकेषाम्**—कठानां, शाखायाम्, **आनुमानिकमपि**—अनुमानसिद्धतया सांख्यैर्वर्ण्यमानं प्रधानमपि 'महतः परमव्यक्तम्' इति जगत्कारणतया आम्नायते, **इति चेत्**—एवं शङ्कनं तु, **न**—समीचीनं न भवति । **शरीररूपकविन्यस्तस्य**—रथित्वेन रूपितस्यात्मनः रथतया रूपितं यत् शरीरम्, तस्य, **गृहीतेः**—'अव्यक्त'पदेनात्र वशीकार्यतया ग्रहणात् । **दर्शयति च**—श्रुतिः इममर्थं 'यच्छेद्वाङ्मनसी प्राज्ञः' इत्यादिना स्पष्टं प्रतिपादयत्यपि ।]

**प्रधानमपि चैकेषां कारणं त्विति चेन्नहि ।**
**रथरूपेण विन्यस्ततनुरव्यक्तमुच्यते ।। (ब्र.प.मा. ११०)**

अचिद्वस्तुनः प्रधानादेः चेतनाच्च बद्धमुक्तोभयावस्थात् विलक्षणं, निरस्तसमस्तहेयगन्धं सर्वज्ञं सर्वशक्ति सत्यसङ्कल्पं समस्तकल्याणगुणात्मकं सर्वान्तरात्मभूतं निरङ्कुशैश्वर्यम्-इति॥

[प्रकृतचतुर्थपादार्थसङ्ग्रहः]

इदानीं—कापिलतन्त्रसिद्धाब्रह्मात्मकप्रधान-पुरुषादिप्रतिपादनमुखेन, प्रधानकारणत्वप्रतिपादनच्छायानुसारीण्यपि कानिचिद्वाक्यानि कासुचित् शाखासु सन्ति—इत्याशङ्क्य; ब्रह्मैककारणत्वस्थेम्ने, तत् निराक्रियते॥

[विषयप्रदर्शनम्]

कठवल्लीषु आम्नायते—

'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः॥' (कठ.उ. 3–10)
'महतः परमव्यक्तमव्यक्तात् पुरुषः परः।
पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः॥' (कठ.उ. 3–11)

इति॥

[अधिकरणाङ्गभूतः संशयः]

तत्र सन्देहः—किं कापिलतन्त्रसिद्धम् अब्रह्मात्मकं प्रधानम्, इह 'अव्यक्त'-शब्देनोच्यते? उत न?—इति॥

---

**प्रधानादेः** इति 'आदि'शब्देन, प्राणाकाशादिग्रहणम्। **विलक्षणम्** इत्यन्तेन प्रथमपादार्थ उक्तः। **निरस्तेत्यादिपदैः** द्वितीय-तृतीययोरप्यर्थं दर्शयति। वैलक्षण्यं च उभयलिङ्गतया [इत्यर्थः]। **समस्तशब्देन** चिद्गतम् अचिद्गतं च हेयं विवक्षितम्। **गन्धशब्देन** मुक्तव्यावृत्तिः। **सर्वज्ञं सर्वशक्ति** इति, द्वितीयपादार्थः सूचितः। **समस्त....णात्मकम्** इति पदं धर्मिस्वरूपपरम्। **निरङ्कुशैश्वर्यम्** इति तृतीयपादार्थसूचनम्।

**प्रधानकारणत्वेति**। न केवलं लिङ्गप्रतिपादकानि; किन्तु लिङ्गिनामेव प्रधानादीनां जगत्कारणत्वप्रतिपादनशङ्कास्पदानीति। अतः, जीवादिविषयतायाः स्पष्टतरत्वम् इति भावः। **ब्रह्मैकेति** 'एक'शब्देन त्रिपाद्याः अन्ययोगव्यवच्छेदपरत्वं सूचितम्। **स्थेम्ने** इत्यनेन, चतुर्थपादार्थः सूचितः। पूर्वपादद्वयप्रतिपन्नस्य अन्ययोगव्यवच्छेदस्य स्थैर्यम्, अस्मिन् पादे प्रधानादिकारणत्वप्रतिपादनव्युदसने कृते हि भवति॥

**कठेति**। तन्त्रसिद्धतत्त्वक्रमप्रत्यभिज्ञाभासजनकानि वाक्यानि विषयः। तन्त्रसिद्धक्रमतद्विपर्ययप्रतीतिभ्यां संशयः।

**तत्र सन्देह इति**। कठवल्ल्याम् अब्रह्मात्मकप्रधानकारणत्वप्रतिपत्तिः अस्ति? न वा?

[पूर्वः पक्षः]

किं युक्तम्?

प्रधानम्—इति।

कुतः?

'महतः परमव्यक्तमव्यक्तात् पुरुषः परः' (कठ.उ. 3-11)

इति [1]तन्त्रसिद्धतत्त्वप्रक्रिया[1]प्रत्यभिज्ञानेन, तस्यैव प्रतीतेः;

'पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः' (कठ.उ. 3-11)

इति पञ्चविंशकपुरुषातिरिक्ततत्त्वनिषेधाच्च। अतः 'अव्यक्तं कारणम्' इति प्राप्तम्। तदिदमुक्तम्—'आनुमानिकमप्येकेषामिति चेत्'—इति।

एकेषां शाखिनां शाखासु, आनुमानिकं प्रधानमपि कारणमाम्नायते—इति चेत्,

[सिद्धान्तारम्भः]

[2]अत्र[2] उत्तरम्; न—इति। न 'अव्यक्त'शब्देन अब्रह्मात्मकं प्रधानम् इह अभिधीयते।

कुतः?

---

इति प्रथमविचारोऽभिप्रेतः। तदर्थम—'इन्द्रियेभ्यः पराः' इत्यत्र 'अव्यक्त'शब्दः, किम् अब्रह्मात्मकप्रधानपरः? उत न? इति विचारः। तदर्थम्—किम् अस्मिन् मन्त्रे, तन्त्रसिद्धतत्त्वगणनक्रमप्रत्यभिज्ञानमस्ति? न? इति। तदर्थम्—अयक्तात्पूर्वापरनिर्दिष्ट'महत्पुरुष'-शब्दाभ्यां महज्जीवतत्त्वे निर्दिश्येते? उत जीव-परौ? इति। किमिह इन्द्रियादि-शब्दैः पूर्ववाक्यस्थरूपकरूपितेन्द्रियादिप्रतिपत्तिः अस्ति? उत न? इति। किम् अत्र परत्वं कारणभावेन? उत वशीकार्यतया? इति।

पूर्वःपक्षः—यदा कारणभावेन; तदा रूपितेन्द्रियादिप्रतिपत्त्यभावेन, 'महत्-पुरुष'-शब्दयोः महज्जीवतत्त्वसमर्पकतया तान्त्रिकप्रक्रियाप्रत्यभिज्ञानात्, 'अव्यक्त'शब्देन, अब्रह्मात्मकं प्रधानमुच्यत इति, तस्यैव कारणत्वं प्रतीयते—इति।

सिद्धान्ते तु—यदा वशीकार्यतया परत्वं विवक्षितम्; तदा पूर्वरूपितेन्द्रियादिप्रतिपत्त्या 'महत्-पुरुष'शब्दयोः जीव-परमात्मपरत्वेन, तन्त्रसिद्धप्रक्रियाप्रत्यभिज्ञानाभावात्, 'अव्यक्त'-शब्दः न अब्रह्मात्मकप्रधानपर इति, न तस्याऽत्र कारणत्वप्रतीतिः—इति फलफलिभावः॥

---

[1] तत्प्रक्रिया—वा. [2] तत्र—द.

शरीररूपकविन्यस्तगृहीतेः—शरीराख्यरूपकविन्यस्तस्य 'अव्यक्त'शब्देन गृहीतेः, आत्म शरीर बुद्धि मन-इन्द्रिय-विषयेषु रथि-[1]रथादिभावेन रूपितेषु[1], रथरूपणेन [2]विन्यस्तस्य शरीरस्य[2], अत्र 'अव्यक्त'शब्देन ग्रहणात् इत्यर्थः।

एतदुक्तं भवति—पूर्वत्र हि !

'आत्मानं रथिनं विद्धि शरीरं रथमेव च।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्॥' (कठ.उ. 3-3, 4)

इत्यादिना,

'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' (कठ.उ. 3-9)

इत्यन्तेन, संसाराध्वनः पारं वैष्णवं पदं प्रेप्सन्तम् उपासकं रथित्वेन, [3]तच्छरीरादीनि[3] च रथ-रथाङ्गत्वेन रूपयित्वा, 'यस्यैते रथादयः वशे तिष्ठन्ति, स एव अध्वनः [4]पारं[4] वैष्णवं पदम् आप्नोति' इत्युक्त्वा, तेषु रथादिरूपितशरीरादिषु, यानि येभ्यो [5]वशीकार्य-तायां[5] प्रधानानि, तान्युच्यन्ते—

'इन्द्रियेभ्यः [6]पराः[6]' (कठ.उ. 3-10)

इत्यादिना॥

---

**शरीराख्येति**। शरीरमेव रूपकविन्यस्तम्। रूप्यते अनेन इति, रूपकम्—दृष्टान्तः। रूपकत्वेन विन्यस्तम्—रूपितम् इत्यर्थः। शरीरं हि रथत्वेन रूपितम्; 'शरीरं रथमेव च' इति। रूपकविन्यस्तप्राधान्याभिप्रायः 'शरीर'शब्दपूर्वनिपातः इत्यभिप्रायः।

**पूर्वत्र हीत्यादिना**—इदमर्थजातमुच्यते। 'आत्मानम्' इत्यादिकं रूपकाभिधायि वाक्यम्। तेषामत्र ग्रहणं वशीकार्यतायां प्राधान्यज्ञापनार्थम्। स्वशब्दैरेव प्रत्यभिज्ञानात्, रथिरथादिभावेन रूपितानामत्र ग्रहणमिति ज्ञातम्। पारिशेष्यात् 'अव्यक्त'शब्देन शरीरग्रहणमिति। **यस्यैते** इति। वशीकार्यत्वज्ञापनाय रथि-रथादिभावेन रूपणम् इत्यर्थः। **यानि येभ्य** इति। रूपकरूपितानामिह ग्रहणं वशीकार्यतायां प्राधान्याप्राधान्यज्ञापनार्थमित्यर्थः। **इन्द्रियेभ्यः पराः** इत्यादिमन्त्रे 'पर'शब्दः प्रकर्षपरः। प्रकर्षश्च वशीकार्यतायां प्राधान्यमित्यवगम्यते॥

---

[1] रथादिरूपितेषु—इ, रथादिभावेन निरूपितेषु—न. [2] विन्यस्तशरीरस्य—वा. [3] तच्छरीरादि—थ. [4] परभूतं—थ. [5] वशीकार्यतया—वा. [6] परा ह्यर्थाः—वा.

[वशीकार्येषु प्राधान्यविशदीकरणम् ]

तत्र हयत्वेन रूपितेभ्यः इन्द्रियेभ्यः, गोचरत्वेन रूपिताः विषयाः, वशी[1]कार्यत्वे[1] पराः ; वश्येन्द्रियस्यापि विषय[2]संनिधौ इन्द्रियाणां[2] दुर्निग्रहत्वात् । [3]तेभ्योऽपि[3] परं, [4]प्रग्रह[4]रूपितं मनः ; मनसि विषयप्रवणे, विषयासंनिधानस्याऽपि अकिञ्चित्करत्वात् ।

तस्मादपि, सारथित्वरूपिता बुद्धिः परा ; अध्यवसाया[5]भावे[5], मनसोऽपि अकिञ्चित्करत्वात् । तस्या अपि, रथित्वरूपितः आत्मा, कर्तृत्वेन प्राधान्यात् परः । सर्वस्य [6]चास्य[6] आत्मेच्छायत्तत्वात्, आत्मैव 'महान्' इति च [7]विशेष्यते[7] । तस्मादपि, रथरूपितं शरीरं परम् ; तदायत्तत्वात् जीवात्मनः सकलपुरुषार्थसाधनप्रवृत्तीनाम् ।

तस्मादपि परः, सर्वान्तरात्मभूतः अन्तर्यामी, अध्वनः पारभूतः परमपुरुषः ; यथोक्तस्य आत्मपर्य[8]न्तस्य समस्तस्य[8] तत्सङ्कल्पायत्तप्रवृत्तित्वात् । [9]स खलु[9] ! अन्तर्यामितया उपासनस्याऽपि निर्वर्तकः ।

**'परात्तु तच्छ्रुतेः'** (ब्र सू. 2-3-40)

---

**तत्रेति** । स्वसंनिधौ इन्द्रियाणां दुर्निग्रहत्वापादनमेव, अर्थानां वशीकार्यत्वे परत्वम् । तद्वशीकरणं च—असंनिधापनं, हेयतया ज्ञापनं च । **तेभ्योऽपीति** । स्वावधानाभावे विषयासंनिधेः अकिञ्चित्करत्वहेतुकं मनसः प्राधान्यम् । तस्य वशीकरणं नाम तस्य मुहुर्मुहुः विषयदोषचिन्तनेन तेभ्यो निवर्तनसंशीलनम् । 'अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते' इति ह्युक्तम् ।

**बुद्धिशब्दः** इह, अध्यवसायरूपज्ञानविशेषपरः ; भावार्थत्वस्वारस्यात्, तदपवादाभावाच्च । **अध्यवसायशब्देन**, अल्पास्थिरत्व-दुस्साधत्व-दुःखमिश्रत्वादिदोषदर्शनेन विषयाणां हेयत्वाध्यवसायो विवक्षितः । तदभावे हि ! अन्यत्र व्यासङ्गादिना क्वचिद्विषये प्रावण्यरहितमपि मनः कदाचित् तत्प्रवणमपि स्यात् । अतः बुद्धेःपरत्वम् । तस्याश्च वशीकरणं नाम, विषयदोषदर्शनसंशीलनेन तद्दृढीकरणरूपं मनोनिवर्तनपाटवापादनम् । **कर्तृत्वेन** — अध्यवसायस्याश्रयत्वेन । **अस्य सर्वस्य**—इन्द्रियादेः अध्यवसायपर्यन्तस्य । **इच्छायत्तत्वात्**— 'इन्द्रियाणि जेतव्यानि, सम्यगर्थविषयः अध्यवसायः सम्पाद्यः' इत्येवंरूपेच्छायत्तत्वात्, इत्यर्थः । अनेन आत्मनो वशीकरणं नाम, आत्मस्वरूपयाथात्म्याध्यवसायप्रावण्यरूपेच्छापादनमेवेति फलितम् । **शरीरं परमिति** । शरीरस्य परत्वं नाम, स्वगतगुणोन्मेषानुगुणम् आत्मगतज्ञानापादकत्वम् । रजस्तमोऽनुदयसत्त्वप्राचुर्यकरपरिशुद्धाहारेण सत्त्वोद्रिक्तत्वापादनं शरीरस्य वशीकरणम् इत्यर्थः ।

---

[1] कार्यत्वेन—वा. [2] सन्निधानादिन्द्रियाणां—वा. [3] तेभ्यः—न. [4] प्रग्रहत्व—न.
[5] द्यभावे—इ. [6] चैवास्य—थ. [7] विशिष्यते—थ. [8] न्तसमस्तस्य—द. [9] न खलु—द.

इति हि! 'जीवात्मनः कर्तृत्वं परमपुरुषायत्तम्' इति वक्ष्यते। वशीकार्यो [1]पासन[1]-निर्वृत्युपायकाष्ठाभूतः परमप्राप्यश्च स एव। तदिदमुच्यते—

'पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः' (कठ.उ. 3-11)

इति। तथा च अन्तर्यामिब्राह्मणे—

'य आत्मनि तिष्ठन्' (बृ.उ.मा.पा. 5-7-26)

इत्यादिभिः, 'सर्वं साक्षात्कुर्वन् सर्वं नियमयति' इत्युक्त्वा,

'नान्योऽतोऽस्ति द्रष्टा' (बृ.उ. 5-7-27)

[2]इति[2] नियन्त्रन्तरं निषिध्यते। भगवद्गीतासु च,

'अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्।
[3]विविधा च[3] पृथक् चेष्टा दैवं चैवात्र पञ्चमम्॥' (भ.गी. 18-14)

इति। दैवमत्र पुरुषोत्तम एव;

'सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च' (भ.गी. 15-15)

इति वचनात्। तस्य च वशीकरणं, तच्छरणागतिरेव। यथाऽऽह—

'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया॥
तमेव शरणं [4]गच्छ[4]! .......................॥' (भ.गी. 18-61, 62)

इति।

[शरीरस्यैव अव्यक्तपदबोध्यता पारिशेष्यात्]

तदेवम्,

'आत्मानं रथिनं विद्धि!' (कठ.उ. 3-3)

इत्यादिना रथ्यादिरूपकविन्यस्ताः इन्द्रियादयः,

'इन्द्रियेभ्यः परा ह्यर्थाः' (कठ.उ. 3-10)

इत्यत्र स्वशब्दैरेव प्रत्यभि[5]ज्ञायन्ते; न[5] रथरूपितं शरीरमिति, परिशेषात् तत्

---

**आत्मपर्यन्तस्य**—जीवपर्यन्तस्य। **स खल्विति**। उपासननिर्वाहकत्वात् वशीकार्यत्वमित्यर्थः। **वशीकार्य**शब्दः उपायविशेष्यकः। **परमप्राप्य** इति। 'यस्मात् परं नापरमस्ति' इत्यादिश्रुत्यैकार्थ्यावगमात्, स्वस्मात्परान्तररहितस्य परमात्मत्वमर्थसिद्धमित्यभिप्रायः। **दैवमत्रेति**। 'न दैवं केशवात् परम्' इत्यादिप्रयोगात्, इत्यभिप्रायः। **तस्य चेति**। परमपुरुषस्यापि

---

[1] पासना—न. [2] इत्यादिना—वा. [3] विविधाश्च—न. [4] गच्छ सर्वभावेन भारत—वा. [5] ज्ञायते, तेन—थ.

'अव्यक्त'शब्देनोच्यते, इति निश्चीयते। अतः कापिलतन्त्र[1]सिद्धस्य[1] प्रधानस्य प्रसङ्ग [2]एव[2] नास्ति ॥

[अस्य मन्त्रस्य तन्त्रप्रक्रियापरत्वासाङ्गत्यम्]

न च अत्र [3]तत्तन्त्र[3]सिद्धप्रक्रियाप्रत्यभिज्ञा; 'इन्द्रियेभ्यः परा ह्यर्थाः' इति इन्द्रियेभ्यः, अर्थानां शब्दादीनां परत्वकीर्तनात्। न हि! शब्दादयः, इन्द्रियाणां कारणभूताः तद्दर्शने।

'अर्थेभ्यश्च परं मनः' इत्यपि, न [4]तत्तन्त्र[4]सङ्गतम्; अकारणत्वादेव। तथा 'बुद्धेरात्मा महान् परः' इत्यपि असङ्गतम्; 'बुद्धि'शब्देन [5]महत्तत्त्वस्य अभिधानाभ्युपगमात्[5]। न हि! महतो महान् परः सम्भवति। महतः 'आत्म'शब्देन विशेषणं च न सङ्गच्छते। अतः, रूपकविन्यस्तानामेव [6]ग्रहणम्[6]।

दर्शयति च तदेव—

'एष सर्वेषु भूतेषु गूढोऽत्मा न प्रकाशते।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥' (कठ.उ. 3-12)
'यच्छेद्वाङ्मनसी प्राज्ञः तद्यच्छेज्ज्ञान आत्मनि।
ज्ञानमात्मनि महति नियच्छेत् तद्यच्छेच्छान्त आत्मनि ॥' (कठ.उ. 3-13)

इति। अजितबाह्याभ्यन्तरकरणैः, अस्य परमपुरुषस्य दुर्दर्शत्वमभिधाय, हयादिरूपितानां इन्द्रियादीनां वशीकारप्रकारोऽयमुच्यते—

यच्छेद्वाङ्मनसी—वाचं मनसि नियच्छेत्, वाक्पूर्वकाणि कर्मेन्द्रियाणि

उपासननिवर्तकत्वमस्तु; कथं सर्वस्मात्परस्य अनीश्वरेण संसारिणा वशीकर्तुं शक्यत्वम्? शक्यश्चेत्, तत्प्रकारोऽपि क्वचित् श्रूयेत; न च श्रूयते; 'यच्छेद्वाङ्मनसी प्राज्ञः' इत्यादौ अनुपलब्धेः इत्यत्र [उत्तरमिदम्]।

**अकारणत्वादेवेति**। 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यत्र तन्त्रप्रक्रियाप्रत्यभिज्ञानव्युदासहेतारेवेत्यर्थः। **महत इत्यादि**। 'आत्म'शब्दः स्वतः चेतनैकान्तः; अगत्या क्वचित् तस्य अतत्परत्वाश्रयणम्। अवयवशक्त्या स्वकार्यव्याप्तिपरत्वेऽपि महत्तत्त्वादपि प्रधाने एव अवयवार्थप्रकर्षात्, महतः 'आत्म'शब्दविशेष्यत्वमयुक्तम् इत्यर्थः। **रूपकविन्यस्तानामेव ग्रहणम्** इत्येतद्व्याख्यं, **एतदुक्तं भवति** इति पूर्वेणान्वितम्। 'इति'शब्दाप्रयोगः अतिविप्रकर्षात्। **दर्शयति चेति**। [इदं] सूत्रखण्डोपादानम्। **तदेव**—वशीकार्यत्वे परत्वमेव।

[1] प्रसिद्धस्य—वा. [2] एवेह—वा. [3] तन्त्र—वा. [4] तत्र—द, तत्तन्त्रे—वा
[5] महत्तत्वाभ्युपगमात्त्वस्य—इ, वा [6] इह ग्रहणम्—वा

ज्ञानेन्द्रियाणि च मनसि नियच्छेत् इत्यर्थः । 'वाक्'शब्दे द्वितीयायाः,

'सुपां सु-लुक्' (पा.सू. 7-1-39)

इति लुक् । 'मनसी' इति, सप्तम्याः छान्दसो दीर्घः ।

'तद्यच्छेत् ज्ञान आत्मनि' । तत्—मनः, बुद्धौ नियच्छेत् । 'ज्ञान'शब्देनाऽत्र, पूर्वोक्ता बुद्धिः अभिधीयते । 'ज्ञाने' 'आत्मनि' इति, व्यधिकरणे सप्तम्यौ । आत्मनि वर्तमाने ज्ञाने नियच्छेत् इत्यर्थः ।

'ज्ञानमात्मनि महति नियच्छेत्' । बुद्धिं, कर्तरि महति आत्मनि, नियच्छेत् ।

'तद्यच्छेत् शान्त आत्मनि' । तं कर्तारं, परस्मिन् ब्रह्मणि सर्वान्तर्यामिणि, नियच्छेत् । व्यत्ययेन 'तत्' इति, नपुंसकलिङ्गता । एवम्भूतेन रथिना वैष्णवं पदं गन्तव्यम् इत्यर्थः ॥ १ ॥

'अव्यक्त' शब्देन कथं व्यक्तस्य शरीरस्याऽभिधानम् ? तत्राह—

---

[यच्छेदिति । यच्छेत् वाक् मनसी इति पदविभागः] **वाक्पूर्वकाणीति** । वाक्शब्दः सर्वेन्द्रियोपलक्षणार्थः [इत्यर्थः] । **मनसी** इति निर्देशः, 'ईदूतौ च सप्तम्यर्थे' (पा. सू. 1-1-19) इति प्रकृतिभावस्मरणनिबन्धनः ।

**ज्ञानशब्देनेति** ['ज्ञान'शब्दस्य] अहङ्कारपरत्वमस्वरसम्, बुद्धिपरत्वं तु स्वरसम् इत्यभिप्रायः । **पूर्वोक्ता बुद्धिः**—अनात्मात्मविषयहेयोपादेयताध्यवसायः । ज्ञानसामान्यवाचिशब्दस्य ज्ञानविशेषवाचित्वं मुख्यमिति भावः । **व्यधिकरणे सप्तम्यौ** इति । 'आत्म'शब्दस्य स्वतः चेतनैकान्तत्वात्, अनन्तरवाक्यस्थात्मशब्दस्य अस्य च एकरूपार्थत्वे स्वारस्याच्च, सामानाधिकरण्यमात्रस्वारस्यम् उपेक्ष्यम् इति भावः । सप्तम्यर्थस्य स्फुटीकरणाय **वर्तमान**पदम् अध्याहृतम् ।

**बुद्धिमिति** । वाचो मनसि नियमनम्—मनोऽननुगुणप्रवृत्तिवैमुख्यापादनम् । मनसो बुद्धौ नियमनम्—अध्यवसायानुगुणप्रवृत्तितापादनम् । **बुद्धिः**—अर्थेषु हेयताध्यवसायरूपा । तस्याः बुद्धेः आत्मनि नियमनं नाम 'स एव उपादेयतया साक्षात्कार्यः' इत्येतदर्थविषयत्वापादनम् । **शान्ते**—स्वतः ऊर्मिषट्कप्रतिभटे । शान्ते आत्मनि, महतः आत्मनः जीवस्य, नियमनं नाम तच्छेषताप्रतिपत्तिः । सैव परस्याऽपि वशीकरणं भवति । **व्यत्ययेनेति** । 'सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च । व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन ॥' इति शाब्दिकैरुक्तलिङ्गव्यत्ययेन तदिति नपुंसकलिङ्गतेत्यर्थः ॥१॥

**अव्यक्त....तत्राहेति** । पारिशेष्यात् 'शरीराव्यक्त'शब्दयोः ऐकार्थ्ये अवश्यं भाविनि सति, उपक्रमाधिकरणन्यायेन (पू.मी. 3-3-1) उपक्रमस्थ'शरीर'शब्दानुगुणम्, 'अव्यक्त' शब्दे नेये, तत्र 'अव्यक्त'शब्दस्य वृत्तिः कथम् ? इत्यपेक्षायामाह, इत्यभिप्रायः ॥

## १११. सूक्ष्मं तु तदर्हत्वात् ॥ १-४-२ ॥

[सूत्रार्थः]

भूतसूक्ष्मम् अव्याकृतं हि! अवस्थाविशेषमापन्नं शरीरं भवति। तत् अव्याकृतम्, इह शरीरावस्थम् 'अव्यक्त'शब्देनोच्यते। तदर्हत्वात्—तस्य अव्याकृतस्य अचिद्वस्तुन एव [1]विकारा[1]पन्नस्य, रथवत् पुरुषार्थसाधनप्रवृत्त्यर्हत्वात् ॥

[उत्तरसूत्रावतारिका]

यदि भूतसूक्ष्मम् अव्याकृतम् अभ्युपगम्यते; कापिलतन्त्रसिद्धोपादाने कः प्रद्वेषः? [2]तत्रापि हि[2] भूतकारणमेव अव्यक्तमित्युच्यते; तत्राह—

## ११२. तदधीनत्वादर्थवत् ॥ १-४-३ ॥

परमकारणभूतपरमपुरुषाधीनत्वात् प्रयोजनवत्, भूतसूक्ष्मम्।

---

**भूतेति**। द्रव्यैक्यलक्षणसम्बन्धात् कार्ये कारणशब्दोपचारः [इत्यर्थः]। **तदर्हत्वादिति**। व्याख्येयः सौत्रः तच्छब्दः 'तस्य' इति व्यस्य निर्दिष्टः। सूक्ष्मत्वं स्वशब्देनोपस्थापितम्। स्थूलावस्थं शरीरम्, 'अव्यक्त'शब्दविषयतया बुद्धिस्थम्। अतः तथाविधाचिद्द्रव्यपरामर्शः इति भावः॥ **अचि....पन्नस्येति**, ज्ञानसङ्कोच-विकासरूपविकारापत्तिः चिद्वस्तुनोऽप्यस्ति। तद्व्यावृत्त्यर्थम् इदमुक्तम्।

**भूतकारणमेवेति**। त्वयाऽपि यदभ्युपेतं भूतकारणत्वेन, तदेव इति भावः।

---

[सूत्रार्थः। **सूक्ष्मं तु**—भूतसूक्ष्मशब्दवाच्यं अव्यक्तमेव, (शरीरावस्थं भवतीति, शरीरमेवात्र 'अव्यक्त'शब्दवाच्यम्), **तदर्हत्वात्**—विकारावस्थस्य अव्याकृतस्यैव पुरुषार्थ-साधनप्रवृत्तिरूपकार्यजननसमर्थत्वात् ॥]

शरीरावस्थमव्यक्तं प्रवृत्त्यर्हं तदेव हि।
तस्मादव्यक्तशब्देन न प्रधानमिहोच्यते ॥ (ब्र.प.मा. १११)

[सूत्रार्थः। **सूक्ष्मम्**—भूतसूक्ष्मम् अव्याकृतम्, **तदधीनत्वात्**—परमपुरुषशरीरतया परमपुरुषाधीनत्वात्, **अर्थवत्**—प्रयोजनवद्भवति ॥]

परमात्माधीनतया रथत्वादिनिरूपणम्।
स्यात्प्रयोजनवत्सर्वं नाव्यक्तमिह तान्त्रिकम् ॥ (ब्र.प.मा. ११२)

---

[1] विकारमा—वा, विकारान्तरा—थ [2] तत्राऽपि—द

**एतदुक्तं भवति—[1]न[1] वयम् अव्यक्तं तत्परिणामविशेषांश्च, स्वरूपेण नाऽभ्युपगच्छामः; अपि तु, परमपुरुषशरीरतया तदात्मकत्वविरहेण। तदात्मकत्वेनैव हि प्रकृत्यादयः [2]स्वप्रयोजनं[2] साधयन्ति। अन्यथा, स्वरूप-स्थिति-प्रवृत्तिभेदाः तेषां न स्युः। तथा अनभ्युपगमादेव तन्त्रसिद्धप्रक्रियानिरसनम्—इति।**

**श्रुतिस्मृत्योर्हि, जगदुत्पत्ति-प्रलयवादेषु परमपुरुषमहिमवादेषु च, प्रकृति-विकृति-पुरुषाः तदात्मकाः सङ्कीर्त्यन्ते; यथा—**

**'पृथिव्यप्सु प्रलीयते'** (सुबा.उ. 2)

**इत्यारभ्य,**

**'तन्मात्राणि भूतादौ लीयन्ते, भूतादिर्महति लीयते, महानव्यक्ते लीयते,**
**अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते, तमः परे देव एकीभवति।'**

(सुबा.उ. 2)

**तथा,**

---

**विरहेणेति।** 'नाभ्युपगच्छामः' इत्यन्वयः। **तदात्मकत्वेनैव हि इति।** 'हि'-शब्दः प्रमाणप्रसिद्धिद्योतकः। **स्वप्रयोजनम्**—स्वकार्यम्। प्रकृतेः कार्यं हि महानेव। महदादीनामपि तत्तत्कार्यमेव प्रयोजनम्। पुरुषस्य भोगापवर्गरूपं वा। **अन्यथा**—तदात्मकत्वविरहे। **स्वरूपम्**—व्यवहारार्हत्वम्, मानसम्बन्धार्हत्वं वा। **स्थितिः**—तस्य कालान्तरावच्छिन्नाकारविरहः। **प्रवृत्तिः**—कार्योत्पत्त्यनुगुणव्यापारः। न **स्युरिति।** [यदि] स्वरूपस्थिती न स्याताम्, ततश्च प्रवृत्त्यभावः कैमुत्यन्यायसिद्धः; यथा शरीरस्य आत्मविश्लेषे इत्यर्थः। 'न तदस्ति विना यत् स्यात्' 'मयि सर्वमिदं प्रोतम्' 'मत्तः सर्वं प्रवर्तते' इत्यादिभिः तादधीन्यसिद्धिः स्वरूप-स्थिति-प्रवृत्तीनाम्॥ सूत्रे 'अर्थवत्'शब्दः, तदुपयुक्तार्थतादधीन्यस्याऽपि प्रदर्शनार्थः। अर्थोपयोगित्वात् प्रवृत्तेः, प्रवृत्त्युपयोगित्वाच्च स्वरूपस्थित्योः इत्यभिप्रायः। **प्रक्रियानिरसनमिति,** अब्रह्मात्मकप्रधानवाद एव दूष्यः; ब्रह्मात्मकं प्रधानं स्वीकृतमिति न व्याहतिरित्यभिप्रायेणोक्तम्।

**प्रलयश्रुतिः**—'पृथिव्यप्सु लीयते' इत्यादिः। **महिमवादश्रुतिः**—'यस्य पृथिवी शरीरम्' इत्यादिः। प्रलयश्रुतेरपि, 'तमः परे देव एकी भवति' इत्येतदन्तत्वात्, तदात्मकत्वसिद्धिः॥ ३॥

---

[1] न हि—वा. [2] स्वं स्वं प्रयोजनं—थ.

'यस्य पृथिवी शरीरम्, यस्यापः शरीरम्, .... यस्य तेजः शरीरम्....यस्य वायुः शरीरम्,....यस्याकाशः शरीरम्....यस्याहङ्कारः शरीरम्,... यस्य बुद्धिः शरीरम् ....[1]यस्याव्यक्तं शरीरम्,....यस्याक्षरं[1] शरीरम्,....यस्य मृत्युः शरीरम्, .... एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' (सुबा.उ. 7)

[2]तथा,

'भूमि[2]रापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥' (भ.गी. 7-4)
'अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥' (भ.गी. 7-5)
'एतद्योनीनि भूतानि सर्वाणी[3]त्युपधारय[3] ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥' (भ.गी. 7-6)
'मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥' (भ गी. 7-7)

इति,

'व्यक्तं विष्णुस्तथाऽव्यक्तं पुरुषः काल एव च' (वि.पु. 1-2-20)

इति,

'प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी ।
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥
परमात्मा च सर्वेषामाधारः [4]परमेश्वरः[4] ॥' (वि.पु. 6-4-39,40)

इति च ॥३॥

## ११३ ज्ञेयत्वावचनाच्च ॥१-४-४॥

यदि, तन्त्रसिद्धम् इह अव्यक्तमविवक्षिष्यत् ! तदा अस्य ज्ञेयत्वम् [5]अवक्ष्यत्[5];

[सूत्रार्थः । ज्ञेयत्वस्य—मुमुक्षुभिर्वेद्यत्वस्य, अवचनाच्च—अब्रह्मात्मिकायाः प्रकृतेः श्रुत्यनुक्तत्वादपि हेतोः, 'महतः परमव्यक्तम्' इत्युक्तमव्यक्तं साङ्ख्योक्तं प्रधानं न भवितुमर्हति ॥]

ज्ञेयत्वेन ह्यवचनान्न प्रधानमिहोच्यते ।
व्यक्ताव्यक्तज्ञविज्ञानादिति तेषां मतं ह्यतः ॥ (ब्र.प.मा. ११३)

1 यस्याव्यक्तं........यस्याक्षरं—इ, यस्याक्षरं—द 2 भूमि—थ 3 त्यवधारय—इ
4 पुरुषोत्तमः—वा. 5 अविवक्षिष्यत्—न.

व्यक्ताव्यक्तज्ञविज्ञानात् मोक्षं वदद्भिः तान्त्रिकैः, [1]तेषां सर्वेषां[1] ज्ञेयत्वाभ्युपगमात् । न च अस्य ज्ञेयत्वमुच्यते । अतः न तन्त्रसिद्धस्य इह ग्रहणम् ॥४॥

## ११४ वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ १-४-५ ॥

'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् ।
अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते ॥' (कठ.उ.3-15)

इति अव्यक्तस्य ज्ञेयत्वम्, अनन्तरमेव वदति इयं श्रुतिः—इति चेत्,

[2]तन्न[2] ; प्राज्ञः परमपुरुष एव हि ! अत्र श्लोके निचाय्यत्वेन प्रतिपाद्यते ।

'विज्ञानसारथिर्यस्तु मनः प्रग्रहवान् नरः ।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥' (कठ.उ. 3-9)

'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥' (कठ.उ. 3-12)

इति प्राज्ञस्यैव प्रकृतत्वात् । अत एव, 'पुरुषान्न परं किंचित्' इति, न पञ्चविंशक-पुरुषातिरिक्ततत्त्वनिषेधः । तस्य च परमपुरुषस्य अशब्दत्वादयो धर्माः,

'यत्तदद्रेश्यमग्राह्यम्' (मुण्ड.उ. 1-1-6)

---

व्यक्ताव्यक्तज्ञविज्ञानात् इति साङ्ख्यग्रन्थ एव स्ववाक्ये निवेशितः । अव्यक्तस्य ज्ञेयत्वमिति । व्यक्तधर्मभूतशब्दादिनिषेधानाम् अव्यक्तपर्यवसानस्य न्याय्यत्वात्, महतः परत्वोक्तेश्च, सामान्येन यत्तच्छब्दनिर्दिष्टमपि कारणम् अव्यक्तम् इति भावः ॥ ४ ॥

तद्विष्णोरिति । अनेन ज्ञेयस्य प्राज्ञस्य परमपुरुषासाधारणविष्णुशब्देन प्रकृतत्वं दर्शितम् ।

[श्रुतौ] दृश्यते इति पदेन, (पूर्वं श्रुतौ) 'निचाय्य' इत्युक्तस्य ज्ञानस्य प्राज्ञविषयतया

---

[सूत्रार्थः । ज्ञेयत्वम्—महतः परस्य प्रधानस्य मुमुक्षुभिर्वेद्यत्वम्, वदति—'महतः परं ध्रुवं निचाय्य' इति श्रुतिः कथयत्येव, इति चेत्—एवं शङ्कनं तु, न—न सम्यक्, हि—यतः, प्राज्ञः—परमपुरुष एव, अत्र प्रतिपाद्यते, प्रकरणात्—'एष सर्वेषु भूतेषु गूढोत्मा' इति प्राज्ञस्यैव प्रकृतत्वात् ]

अशब्दमस्पर्शमिति ज्ञेयं तद्वदति श्रुतिः ।
इति चेन्न प्रकरणात्परमात्मा हि कथ्यते ॥ (ब्र.प.मा. ११४)

---

[1] तेषां—इ.  [2] न—इ.

इत्यादिश्रुतिप्रसिद्धाः । 'महतः परम्' इत्यपि, 'बुद्धेरात्मा महान् परः' इति, पूर्वप्रकृतात् जीवात्मनः परत्वमेवोच्यते ॥५॥

## ११५ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ १-४-६ ॥

अस्मिन् प्रकरणे हि ! उपायोपेयोपेतणां [1]त्रयाणामेव च एवमुपन्यासः[1]— ज्ञेयत्वेनोपन्यासः, तद्विषयश्च प्रश्नः दृश्यते ; न अन्यस्य अव्यक्तादेः ।

तथा हि—नचिकेताः मुमुक्षुस्सन्, मृत्युप्रत्ते वरत्रये, प्रथमेन वरेण, आत्मनः पुरुषार्थयोग्यतापादिनीम् आत्मनि पितुः सुमनस्कतां प्रतिलभ्य ; द्वितीयेन वरेण, [2]मोक्षोपाय[2]भूतां नाचिकेताग्निविद्यां वव्रे—

'स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम् ।
स्वर्गलोका अमृतत्वं भजन्ते एतद्‌द्वितीयेन वृणे वरेण ॥' (कठ.उ. 1-13)

इति । 'स्वर्ग'शब्देनात्र परमपुरुषार्थलक्षणो मोक्षः अभिधीयते ; 'अमृतत्वं भजन्ते'

---

प्रकृतत्वं दर्शितम् । **महच्छब्देन** आत्मनिर्देशः, इन्द्रियादिपरिकरवत्वलक्षणप्राधान्यविवक्षातिशयात् ॥ ५ ॥

**त्रयाणामिति** । प्रथमः 'च'शब्दः हेतुसमुच्चये । द्वितीयः 'च'शब्दः प्रश्नोपन्यासयोः समुच्चये । [सूत्रे] प्रश्नस्य पश्चादुक्तिः ; [ननु] प्रश्नवाक्यं हि ! मुक्तमात्रविषयमिति, कथमत्र त्रयाणामुपन्यासः ? इति शङ्कायां, प्रतिवचनप्रकारेण प्रश्नार्थस्य विज्ञेयत्वात्, प्रश्नवाक्ये त्रयमपि पृष्टं भवति इत्यभिप्रायेण । **ज्ञेयत्वेनेति** । 'ज्ञेयत्वावचनाच्च' इति पूर्वसूत्रस्थज्ञेयत्वम् [अस्मिन् सूत्रे] 'एवं'शब्देन परामृश्यते इत्यर्थः ।

**मोक्षोपायभूतामिति** । नाचिकेताग्निविद्यायाः मोक्षोपायत्वम्, अङ्गिद्वारा भवति । तच्च तस्याः परमात्मात्मकस्वात्मानुसन्धानगर्भत्वात् । **मोक्षः अभिधीयते** इति । [अत्र] मोक्षशब्दः, मोक्षस्थानपरः ; 'लोक'शब्दसामानाधिकरण्यात्, भाष्ये **तत्रस्थस्य** इति वक्ष्यमाणत्वाच्च । **परमपुरुषार्थलक्षणशब्दः**, **'स्वर्ग'**शब्दस्य मोक्षवाचित्वोपपादकः। स्वर्गशब्दस्य

---

[सूत्रार्थः । **त्रयाणामेव च**—उपास्योपासकोपासनानाम्, उपेयोपेत्रुपायात्मकानाम् त्रयाणामेव च, **एवम्**—ज्ञेयत्वेन, **उपन्यासः**—प्रतिवचनम्, **प्रश्नश्च**—अनुयोगश्च अस्मिन् प्रकरणे आद्यन्तं दृश्यते । अतः न प्रधानस्य ज्ञेयता ॥]

उपासनमुपास्यं च ध्यातारं पृच्छतस्तदा ।
उपदेशस्त्रयाणां च न प्रधानमिहोच्यते ॥ (ब्र.प.मा. ११५)

---

[1] एवमुपन्यासः—द.    [2] मोक्षसाधन—इ,वा.

इति, तत्रस्थस्य [1]जनन[1]-मरणाभावश्रवणात्, उत्तरत्र क्षयिफलकर्मनिन्दादर्शनाच्च ;

'[2]त्रिणाचिकेत[2]स्त्रिभिरेत्य सन्धिं त्रिकर्मकृत्तरति जन्ममृत्यू' (कठ.उ. 1-17) इति च प्रतिवचनात् ।

तृतीयेन वरेण, मोक्षस्वरूपप्रश्नद्वारेण उपेयस्वरूपम्, उपेतृस्वरूपम्, उपाय-[3]भूत[3]कर्मानुगृहीतोपासनस्वरूपं च पृष्टम्—

'येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके ।

एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः ॥' (कठ.उ. 1-21)

इति । एवं मोक्षे पृष्टे, तदुपदेशयोग्यतां परीक्ष्य, उपदिदेश—

'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् ।

अध्यात्मयोगाधिगमेन देवं मत्वा धीरो [4]हर्षशोकौ जहाति[4] ॥' (कठ.उ. 2-12)

इति । तदेवं सामान्येनोपदिष्टे, नचिकेताः प्रीतः सन्, 'देवं मत्वा' इति उपास्यतया निर्दिष्टस्य प्राप्यभूतस्य देवस्य, 'अध्यात्मयोगाधिगमेन' इति वेदितव्यतया निर्दिष्टस्य प्राप्तुः प्रत्यगात्मनश्च, 'मत्वा धीरो हर्ष-शोकौ जहाति' इति निर्दिष्टस्य [5]ब्रह्मोपासनस्य[5] च, स्वरूप[6]विशोध[6]नाय पुनः पप्रच्छ—

---

प्रकृष्टसुखोपलक्षणत्वात्, मोक्षस्य निरवधिकानन्दरूपत्वाच्च 'स्वर्ग'शब्दवाच्यत्वम् इति भावः । **तत्रस्थस्येति** । [श्रुतौ] स्वर्गलोका इति हि बहुव्रीहिः । निरतिशयसुखरूपपरमव्योमस्थाः इति भावः । **क्षयिफलकर्मनिन्देति** । 'श्वोऽभावा मर्त्यस्य....जरयन्ति तेजः' इत्यादिनेत्यर्थः ।

**त्रिणाचिकेतः**—'अयं वाव यः पवते' (तै.का 2-7) इत्याद्यनुवाकत्रयाध्यायी । **त्रिकर्मकृत्**—यजनाध्ययनदानकृत्, पाकयज्ञ-हविर्यज्ञ-सोमयज्ञकृद्वा । **त्रिभिः**—अग्निभिः त्रिभिः हेतुभिः । **सन्धिम्**—परमात्मोपासनेन सम्बन्धम्, प्राप्य, जन्म-मृत्यू तरतीत्यर्थः ; 'करोति तद्येन पुनर्न जायते' इत्यनेनैकार्थ्यात् ।

**प्रेते**—परित्यक्तचरमशरीरे इत्यर्थः ; 'न प्रेत्य संज्ञाऽस्ति' इति प्रयोगात् । **दुर्दर्शम्**—द्रष्टुमशक्यम् । **गूढम्**, गुणत्रयतिरोहितत्वात् (इति हेतुगर्भम्) । **अनुप्रविष्टम्**—शरीरानुप्रविष्टम् । तत्रापि **गुहाहितम्**—हृदयगुहागतम् । **गह्वरेष्ठम्**—तदन्तर्गते वस्तुनि स्थितम् । जीवान्तःस्थितमित्यर्थः । **जहातीति, उपदिदेश** इत्यन्वयः ; 'येयं प्रेते' इत्यादिवाक्यस्य जीवप्रश्नमात्रपरत्वे, परमात्मविषयतया प्रतिवचनवैघट्यं स्यात् इत्यभिप्रायः । **वेदितव्यतयेति** । 'अध्यात्मयोग'शब्दः [श्रुतौ] प्राप्तृस्वरूपविषययोगपरः इत्यभिप्रायः ।

---

[1] जन्म—न. [2] त्रिनाचिकेत—द, न. [3] भूतानुष्ठित—इ, वा. [4] न शोचति—ब, द. [5] प्राप्यब्रह्मोपासनस्य—न [6] शोध—ब.

'अन्यत्र धर्मादन्यत्राऽधर्मादन्यत्रास्मात् कृताकृतात् ।
अन्यत्र भूताद्भव्याच्च यत्तत् पश्यसि तद्वद ॥' (कठ.उ. 2-14)

इति ।

एवं, सकलेतरातीतानागतवर्तमान-साध्य[1]साधनसाधक[1]विलक्षणे त्रये पृष्टे, प्रथमं प्रणवं प्रशस्य; तद्वाच्यं प्राप्यस्वरूपम्, तदन्तर्गतं च प्राप्तृस्वरूपम्, वाचक[2]रूपं[2] च उपायम्, पुनरपि सामान्येन ख्यापयन्, प्रणवं तावत् उपदिदेश—

'सर्वे वेदा यत् पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीमि ; ओमित्येतत् ॥'
(कठ.उ. 2-15)

[3]इति ।

एव[3]मुपदिश्य, पुनरपि प्रणवं प्रशस्य; प्रथमं तावत् प्राप्तुः प्रत्यगात्मनः स्वरूपमाह—

---

**एवमि**त्यादि । कालत्रयसम्बन्धित्वं हि ! वक्ष्यमाणत्रितयस्याप्यस्ति ; तत् कथं विलक्षणत्वम् ? इति शङ्काव्युदासार्थः **इतर**शब्दः । **वर्तमान**शब्देन, [श्रुतिगतः] **कृताकृत**शब्दो व्याख्यातः । प्रारब्धम् अपरिसमाप्तं हि वर्तमानमुच्यते । 'अन्यत्र' इति, वैलक्षण्यं विवक्षितम् । **धर्मः**—उपायः । **धर्मादन्यत्र**—प्रसिद्धोपायविलक्षणः उपायः इत्यर्थः । **अधर्मः**—धर्मेतरः ; उपेयः । **अधर्मादन्यत्र**—प्रसिद्धसाध्यविलक्षणं फलम् इत्यर्थः । **अस्मात्** इति बुद्धिस्थः तत्साधको विवक्षितः । स एव उपेता । स हि ! प्रसिद्धोपेतृसाधकविलक्षणः ; साधकावस्थायाम् इतरफलविरक्तत्वात् ; फलदशायाम् आविर्भूतगुणाष्टकविशिष्टस्वरूपत्वाच्च । **कृताकृतात्** इति, धर्मादीनां विशेषणम् । कृताकृतात् धर्मादेर्विलक्षणं यत्, भूताद्भव्याच्च धर्मादेर्विलक्षणं यत् इत्यर्थः । **प्रणवं प्रशस्येति** । 'सर्वे वेदाः' इत्यादिपादत्रयोक्तपरब्रह्मप्रतिपादकतया प्रशस्येत्यर्थः । 'तत्ते पदं संग्रहेण ब्रवीम्योम्' इति, प्रणवेन ब्रह्मप्रतिपादनं हि ! उच्यते । **प्राप्येति** । पद्यते इति व्युत्पत्त्या, **पद**शब्दः, प्राप्यवाचीति भावः । **तदन्तर्गतम्**—प्रणववाच्यान्तर्गतम्, प्रणववाच्यैकदेशम् । प्रणवैकदेशवाच्यो हि ! उपेता जीवः । **वाचकरूपं च उपायमिति** । उपायोपायतया प्रणवस्योपायत्वम् । उपायो हि ध्यानम् । वाचकशब्दश्च वाच्यस्मरणोपायः । 'ओमिति.... व्याहरन् मामनुस्मरन्' इति ध्यानोपायत्वं हि ! प्रणवस्यावगम्यते । **तपांसि**—ज्ञानप्रधानाः उपरिभागाः ।

---

[1] साधक—भ.   [2] स्वरूपं—इ, बा.   [3] एव—भ.

'न जायते म्रियते वा विपश्चित्' (कठ.उ. 2-18)

इत्यादिना । प्राप्यस्य [1]परस्य ब्रह्मणो[1] विष्णोः स्वरूपम्,

'अणोरणीयान्' (कठ.उ. 2-20)

इत्यादिना,

'क इत्था वेद यत्र सः ?' (कठ.उ. 2-25)

इत्यन्तेन उपदिशन्, मध्ये,

'नायमात्मा प्रवचनेन [2]लभ्यो न मेधया न बहुना[2] श्रुतेन' (कठ.उ. 2-23)

इत्यादिना, उपायभूतस्य उपासनस्य भक्तिरूपतामप्याह ।

'ऋतं पिबन्तौ' (कठ.उ. 3-1)

इति च, [3]उपास्यस्य उपासकेन[3] सहावस्थानात्, सूपासतामुक्त्वा,

'आत्मानं रथिनं विद्धि' (कठ.उ. 3-3)

इत्यादिना,

'दुर्गं पथस्तत् कवयो वदन्ति' (कठ.उ. 3-14)

इत्यन्तेन [4]उपासन[4]प्रकारम्, उपासी[5]नस्य च[5] वैष्णवपरमपदप्राप्तिम् अभिधाय, 'अशब्दमस्पर्शम्' इत्यादिना उपसंहृतम् ॥

अतः, त्रयाणामेव अत्र ज्ञेयत्वेनोपन्यासः, प्रश्नश्च । तस्मात्, नेह तान्त्रिकस्य अव्यक्तस्य ग्रहणम् ॥६॥

## ११६ महद्वच्च ॥१-४-७॥

यथा 'बुद्धेरात्मा महान् परः' इत्यत्र, 'आत्म' 'शब्द'सामानाधिकरण्यात्, न

---

प्रत्यगात्मनः स्वरूपमिति । लोकस्य परमात्मनि हन्तृ-हन्तव्यभावप्रतिपत्त्यभावात्, तत्प्रतिषेधानुपपत्तेः जीवविषय एवेति । उपसंहृतमिति । प्रकृतोपसंहारस्यापेक्षितत्वात् अर्थान्तरपरत्वस्य असङ्गतत्वाच्चेति भावः ॥ ६ ॥

---

[सूत्रार्थः । महद्वत् च—'बुद्धेरात्मा महान् परः' इत्यत्र 'आत्म'शब्दसमानाधिकरण-'महान्' इति शब्द इव च, ('महतः परमव्यक्तम्' इत्यत्र 'अव्यक्त'शब्दोऽपि, न प्रधानपरः) ।]

महत्तत्त्वाग्रहो यद्वत् आत्मशब्दविशेषणात् ।
प्रधानस्याप्यग्रहस्तु परत्वादात्मनस्तथा ॥ (ब्र.प.मा. ११६)

---

[1] परब्रह्मणः—द. [2] लभ्यः—द. [3] उपासकेन—थ. [4] उपासनस्य—थ. [5] नस्य—द.
[6] शब्देन—वा.

तन्त्रसिद्धं महत्तत्त्वं गृह्यते—एवम् [1]अव्यक्तमपि[1], आत्मनः [2]परत्वेनाभि[2]धानात्, न कापिलतन्त्रसिद्धं गृह्यते—इति स्थितम् ॥७॥

इति अनुमानिकाधिकरणम् ॥१॥

२९ चमसाधिकरणम् ॥१-४-२॥ (सू. 8–10)

[अधिकरणार्थः—प्रकृत्यादीनां ब्रह्मात्मकता]

[अजाविद्या (मन्त्रि.उ. 1, श्वे.उ. 4)]

## १२७ चमसवदविशेषात् ॥१-४-८॥

[प्रकृताधिकरणप्रयोजनकृत्यम्]

अत्रापि [3]तन्त्र[3]सिद्धप्रक्रिया निरस्यते। [4]न ब्रह्मात्मकानां प्रकृति[4]-महदहङ्कारादीनां स्वरूपम्; श्रुति-स्मृतिभ्यां ब्रह्मात्मकानां तेषां प्रतिपादनात्।

---

**आत्मशब्दसामानाधिकरण्यादिति,** तन्त्रसिद्धमहत्तत्त्वाग्रहणे सूत्राभिप्रेतं हेतुमाह ॥७॥

[सूत्राणि — १) आनुमानिक
२) सूक्ष्मं तु
३) तदधीनत्वादर्थवत्
४) ज्ञेयत्वावचनाच्च
५) वदतीति चेन्न
६) त्रयाणामेव
७) महद्वच्च]

॥ इति आनुमानिकाधिकरणम् ॥ १ ॥

**चमसवदिति।** कार्यशरीरवाचिपदस्य रूपके श्रवणात् तत् 'अव्यक्त'शब्देनोच्यते, इत्युक्तम्। अत्र तु कार्यशरीरवाचिशब्दाश्रवणात् कारणं प्रधानमेवोच्यते इति शङ्कया सङ्गतिः।

---

[सूत्रार्थः। ('अजामेकाम्' इति श्रुतिस्थः 'अजा'शब्दः) **चमसवत्**—भक्षणसाधनमात्रबोधके चमसशब्दे इव, ('अर्वाग्बिलश्चमसः' इति वाक्यशेषे, शिरसि बोधकतया चमसशब्दस्य प्रवृत्तौ ज्ञापकः 'यथेदं तच्छिरः' इति विशेष इव) **अविशेषात्**—'अजा'शब्दस्य प्रधानबोधकत्वनियामकस्य विशेषस्य अदर्शनात्, (साङ्ख्योक्तप्रधानबोधको न भवति) ॥]

यथेदं तच्छिर इति चमसस्य शिरस्त्ववत्।
अजाया अविशेषाच्च न परोक्ता त्वजा हि सा ॥ (ब्र. प. मा. ११७)

---

[1] अव्यक्तम्—द. [2] परत्वाभि—अ. [3] कापिलतन्त्र—वा [4] नाब्रह्मात्मकप्रकृति—द, न नाब्रह्मात्मकानां प्रकृति—वा

[मन्त्रिकोपनिषत्सिद्धं प्रकृत्यादिस्वरूपम्]

यथा आथर्वणिकाः अधीयते—

'विकारजननीमज्ञामष्टरूपामजां ध्रुवाम् ।
ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः ॥
सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत् ।
गौरनाद्यन्तवती सा जनित्री भूतभाविनी ॥
सिताऽसिता च रक्ता च सर्वकामदुघा विभोः ।
पिबन्त्येनामविषमामविज्ञाताः कुमारकाः ॥
एकस्तु पिबते देवः स्वच्छन्दोऽत्र वशानुगाम् ।
[1]ध्यान[1]क्रियाभ्यां भगवान् भुङ्क्तेऽसौ प्रसभं विभुः ॥
सर्वसाधारणीं दोग्ध्रीं पीड्यमानां तु यज्वभिः ।' (मन्त्रि.उ 1-3, 4,5,6,7)
'चतुर्विंशतिसङ्ख्यातमव्यक्तं व्यक्तमुच्यते' (मन्त्रि.उ. 2-5)

इति । अत्र प्रकृत्यादीनां स्वरूपमभिहितम् । यदात्मकाश्च एते प्रकृत्यादयः, सः परमपुरुषोऽपि,

---

**अष्टरूपत्वम्**, 'भूमिरापः' इत्याद्युक्तप्रकारेण । **आजम्**—उत्पत्तिरहिताम् । **ध्रुवाम्**—नाशरहिताम् । **ध्यायते**—परमात्मना सङ्कल्परूपेण ज्ञानेन ज्ञायते । **अध्यासिता**—अधिष्ठिता । **तन्यते**—विस्तार्यते, स्थूलावस्थं क्रियते ; समष्टिभूतरूपेण क्रियते । **प्रेर्यते**—व्यष्टिसृष्ट्यर्थं प्रेर्यते । **पुरुषार्थं**—पुरुषाणामर्थनीयं भोग्य-भोगोपकरण-भोगस्थानरूपं जगत्, सूयते । **जनित्री भूतभाविनी** इति, समष्टि-व्यष्टिसृष्टिरुच्यते । **सिताऽसिता च रक्ता च**—गौण्या वृत्त्या सत्त्वरजस्तमोमयी । **विभोः**—ईश्वरस्य । **सर्वकामदुघा**—लीलारसदोग्ध्री । **अविषमाम्**—भोक्तृकर्मानुगुणपरिणामित्वात् अपक्षपातिनीम् । **अविज्ञाताः**—देहेभ्यो विविच्य अपरिज्ञाताः । **एकस्तु** इति । कर्मवश्यबहुभोक्तृव्यावृत्त्यर्थम् 'एकः, स्वच्छन्दः' इत्युक्तम् । **ध्यानक्रियाभ्याम्**—सङ्कल्पसर्गादिव्यापाराभ्याम् ; 'ऐक्षत, असृजत' इति द्वयमपि हि श्रूयते । **पीड्यमानां तु यज्वभिरिति** । वत्सा हि ! मातरं क्षीरक्षरणार्थं पीडयित्वा, भुञ्जते ; तद्वत् कर्मवश्यैः आत्मभिः भोक्तव्यफलानुरूपं परिणम्यमानाम् इत्यर्थः । **प्रकृत्यादीनाम्**—प्रकृतिपुरुषमहदा-

---

[1] ज्ञान—ई

'तं षड्विंशकमित्याहुः सप्तविंशमथापरे ।
पुरुषं निर्गुणं साङ्ख्यमथर्वशिरसो विदुः ॥' (मन्त्रि. उ. 2-4)

इति प्रतिपाद्यते ॥

[गर्भोपनिषदि श्वेताश्वतरे च प्रकृतिपुरुषेश्वरस्वरूपम् ]

अपरे चाथर्वणिकाः—

'अष्टौ प्रकृतयः षोडश विकाराः' (गर्भोप. 3)

इत्यभिधीयते ।

श्वेताश्वतराश्च, एवं प्रकृतिपुरुषेश्वरस्वरूपमामनन्ति—

'संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः ।
अनीश[1]श्चात्मा[1] बध्यते भोक्तृभावात् ज्ञात्वा देवं मुच्यते सर्वपाशैः॥' (श्वे.उ. 1-8)
'ज्ञाज्ञौ द्वावजावीशनीशौ [2]अजा ह्येका[2] भोक्तृभोगार्थ[3]युक्ता[3] ।
अनन्तश्चात्मा विश्वरूपो ह्यकर्ता त्रयं यदा विन्दते ब्रह्म[4]मेतत्[4]॥' (श्वे.उ. 1-9)
'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः ।
तस्याभिध्यानात् [5]योजनात्[5] तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः ॥'
(श्वे.उ. 1-10)

इति । तथा,

'छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च [6]वेदा[6] वदन्ति ।
अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया संनिरुद्धः ॥' (श्वे.उ. 4-9)
'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥' (श्वे.उ. 4-10)

इति । तथा, उत्तरत्रापि—

---

दीनाम् । **स्वरूपमभिहितमिति** । एषु वाक्येषु ईश्वरप्रतिपादनं प्रधानादीनाम् ईश्वरतादधीन्यविशिष्टत्वपरम् इति भावः । एवं ब्रह्मात्मकप्रधानपरवाक्यान्युक्तानि । **षड्विंशकत्वम्**, कालस्य विशेषणत्वेन प्रकृतितद्विकारेष्वन्तर्भावात् । **सप्तविंशकत्वं**, कालस्य तदनन्तर्भावविवक्षया । पञ्चविंशकेष्वेव लब्धैश्वर्यः कश्चिदुक्तः पञ्चविंशकस्तुत्यर्थमिति, ईश्वरप्रतिपादनस्य अन्यथासिद्धिर्वक्तुमशक्या ; सङ्ख्यातः पृथङ्निर्देशात् इत्यभिप्रायः ।

---

1 श्चान्यः—घ, न. 2 अजो ह्येको—थ 3 युक्तः—थ. 4 चैतत्—वा. 5 या जनात्—थ. 6 देवाः—न.

'प्रधान-क्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः' (श्वे.उ. 6–16)
इति ।

[उक्तार्थे गीताचार्योक्तयः]

स्मृतिरपि—

'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान् ॥' (भ.गी. 13–19)
'कार्य-कारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥' (भ.गी. 13–20)
पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥' (भ.गी. 13–31)
'सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥' (भ.गी. 4–5)

तथा,

'सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥' (भ.गी. 9–7)
'प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥' (भ.गी. 2–8)
'मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनाऽनेन कौन्तेय जगद्धि परिवर्तते ।।' (भ.गी. 9–10)

इति । तस्मात् , अब्रह्मात्मकत्वेन कापिलतन्त्रसिद्धाः प्रकृत्यादयो निरस्यन्ते । श्वेताश्वतरोपनिषदि श्रूयते—

'अजामेकां लोहितशुक्लकृष्णां [1]बह्वीः प्रजाः सृजमानां सरूपाः[1] ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥' (श्वे.उ. 4–5)

इति ॥

---

एतत् त्रयं यदा विन्दते ; तदा ब्रह्म भवति—मुक्तो भवतीत्यर्थः । अभिध्यानम् —आलम्बनसंशीलनम् । योजनम्—योगः । तत्त्वभावः—तत्त्वाविर्भावः, साक्षात्कारः । अवयवभूतैः—अंशभूतैः, शरीरभूतैः इत्यर्थः ।

प्रकृत्यादयः इति, 'आदि'शब्देन महदादिरभिप्रेतः ।

---

[1] बह्वीं प्रजां जनयन्तीं सरूपाम्—द.

[अधिकरणाङ्गभूतः संशयः]

तत्र सन्देहः—किम् अस्मिन् मन्त्रे, [1]केवला तन्त्र[1]सिद्धा प्रकृतिः, अभिधीयते ? उत ब्रह्मात्मिका ?—इति ॥

[पूर्वः पक्षः]

किं युक्तम् ?

केवला—इति

कुतः ?

'अजामेकाम्' इति, अस्याः प्रकृतेः अकार्यत्वश्रवणात्, 'बह्वीः प्रजाः सृजमानां सरूपाः' इति, स्वातन्त्र्येण [2]सरूपाणां[2] बह्वीनां प्रजानां स्रष्टृत्वश्रवणाच्च—इति ॥

[सिद्धान्तारम्भः, तत्र अब्रह्मात्मकाजाग्राहकाभावः]

एवं प्राप्ते, [3]अभिधीयते[3]—चमसवद्[4]विशेषात्[4] । 'न जायते' इति अजा, इति अजात्वमात्रप्रतिपादनात्, तन्त्रसिद्धाब्रह्मा[5]त्मकाजाग्रहणे विशेषा[5]प्रतीतेः । चमसवत्; यथा—

श्वेतेति । प्रकृतेरेव कर्तृत्वप्रतीतिजनकवाक्यजातं विषयः । अचेतनत्व-सृजमानपद-स्वारस्याभ्यां संशयः । श्वेताश्वतरे 'अजामेकाम्' इति मन्त्रे, 'अजा'शब्दो यौगिकः, किं अब्रह्मात्मकप्रकृतिपरः ? उत ब्रह्मात्मकप्रकृतिपरः ? इति विचारः । 'अजा'शब्द-'सृजमाना' शब्दौ, किम् अजायाः स्वातन्त्र्येण स्रष्टृत्वमवगमयतः ? इति । तैत्तिरीयके 'अजामेकाम्' इति मन्त्रे प्रतिपन्नायाः अजायाः, किं ज्योतिरुपक्रमात्वमस्ति ? न ? इति । किम् अजात्व-ज्योति-रुपक्रमात्वे, विरुध्येते ? न ? इति ॥

पूर्वपक्षे—यदा विरुध्यते ; तदा, तैत्तिरीयकमन्त्रसिद्धायाः अजायाः ज्योतिरुपक्रमात्वा-भावेन तदैकार्थ्यात्, 'अजां, सृजमानाम्' इति पदयोः स्वातन्त्र्येण स्रष्टृत्वावगमकत्वात्, श्वेताश्वतरमन्त्रस्थाजाशब्दः ब्रह्मात्मकत्वशून्यप्रकृतिपरः । [सिद्धान्ते] यदा न विरुध्यते ; तदा, तैत्तिरीयकमन्त्रप्रसिद्धायाः अजायाः, ज्योतिरुपक्रमात्वेन तदैकार्थ्यात्, 'अजां, सृजमानाम्' इति पदयोः, स्वतन्त्रस्रष्टृत्वावगमकत्वाभावात्, श्वेताश्वतरमन्त्रस्थः 'अजा'शब्दोऽपि ब्रह्मात्मक-परः—इति ।

न जायते इत्यादि । अत्राऽपि 'कापिलतन्त्रसिद्धप्रक्रिया निरस्यते' इति उपक्रमस्थं प्रतिज्ञावाक्यमनुषज्यते इति मत्वा हेतूक्तिः । चमसवदिति । वाक्यान्तरमन्तरेण विशेषतो

---

[1] केवलतन्त्र—थ. [2] स्वरूपाणां—द. [3] प्रचक्ष्महे—द. [4] विशेषादिति—द. [5] त्मिकाजाग्रहणविशेषा—द.

'अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' (बृ.उ. 4-2-3)

इत्यस्मिन् मन्त्रे, चमसस्य भक्षणसाधनत्वमात्रं [1]चमसशब्देन प्रतीयते[1] इति, न तावन्मात्रेण चमसविशेषप्रतीतिः ; यौगिकशब्दानाम् अर्थप्रकरणादिभिर्विना [2]अर्थविशेष[2]-निश्चयायोगात् । तत्र यथा—

'इदं तच्छिरः, एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' (बृ.उ. 4-2-3)

इत्यादिना वाक्यशेषेण, शिरसः चमसत्वनिश्चयः ; तथा—अत्राऽपि अर्थप्रकरणादिभिरेव अजा निर्णेतव्या । न चात्र तन्त्रसिद्धाजाग्रहणहेतवः अर्थप्रकरणादयो दृश्यन्ते ।

न च—[3]अस्याः[3] स्वातन्त्र्येण स्रष्टृत्वं प्रतीयते ;

'बह्वीः प्रजाः सृजमानाम्' (श्वे.उ. 4-5)

इति स्रष्टृत्वमात्रप्रतीतेः । अतः अनेन मन्त्रेण, न अब्रह्मात्मिका अजा अभिधीयते ॥८॥

[ब्रह्मात्मकाजाग्राहकप्रमाणानि]

[4]ब्रह्मात्मका[4]जाग्रहणे एव विशेषहेतुरस्ति, इत्याह—

## ११८. ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ १-४-९ ॥

निर्णेतुमशक्या भवतीत्यर्थः । **यथाशब्दस्य तथा अत्रापि** इति भाष्येणान्वयः । **भक्षणेति** । चम्यते अनेन इति, 'चमस'शब्दव्युत्पत्तिरिति भावः । **मात्रशब्देन** विशेषव्यावृत्तिः । **इतिशब्दो** हेतुपरः । विशेषप्रतीत्यभावात् इत्यर्थः । विशेषप्रतीत्यभावे, चमसः साधर्म्यदृष्टान्ततया व्याख्यातः । **यौगिकेति** । साधारणम् अवयवार्थं बोधयतां यौगिकशब्दानाम् इत्यभिप्रायः । **अर्थः**—वस्तुसामर्थ्यम् । **आदिशब्दः** स्ववाक्यस्थविशेषशब्दादिपरः ।

**स्वातन्त्र्येण**—ईश्वराधिष्ठितत्वमन्तरेण । **स्रष्टृत्वमात्रेति** । स्वव्यापाराश्रयत्वलक्षणं स्वातन्त्र्यमेव कर्तृप्रत्ययवाच्यम् ; न तु अपरप्रेर्यत्वरूपम् इति 'मात्र'शब्दाभिप्रायः । यदि ब्रह्मात्मकत्वं प्रामाणिकं स्यात् ; तदानीम्, इह प्रतीयमानं स्वातन्त्र्यलक्षणकर्तृत्वं हि तद्गततया ब्रह्मात्मकत्वाविरोधि स्यात् ॥ ८ ॥

---

[सूत्रार्थः । ('अजामेकाम्' इति श्वेताश्वतरीया अजा), **ज्योतिरुपक्रमा तु**—परमात्मकारणिकैव ; न स्वतन्त्रा । **हि**—यतः, **एके**—तैत्तिरीयाः शाखिनः, **तथा**—परब्रह्मकारणकत्वात्मकम् अजागतं प्रकारमेव, **अधीयते**—'अणोरणीयान्' इत्यारभ्य, 'अजामेकाम्' इत्यन्तेन पठन्ति, (नारायणोपनिषदि) ॥]

ब्रह्मकारणिका सा तु ज्योतिषाऽधिष्ठिता ह्यजा ।
अणोरणीयानित्यत्र तैत्तिरीया ह्यधीयते ॥ (ब्र.प.मा. ११८)

---

[1] प्रतीयते—न. [2] अर्थ—थ. [3] अस्याः विशेषग्रहे—वा. [4] ब्रह्मात्मिका—थ.

'तु'शब्दः, अवधारणार्थः। ज्योतिरुपक्रमैव एषा अजा। ज्योतिः—ब्रह्म ;

'तं देवा ज्योतिषां ज्योतिः' (बृ.उ. 6-4-16)

'अथ यदतः परो दिवो [1]ज्योतिर्दीप्यते[1]' (छां.उ. 3-13-7)

इति श्रुतिप्रसिद्धेः। ज्योतिरुपक्रमा—ब्रह्मकारणिका, इत्यर्थः। तथा ह्यधीयत एके। 'हि' इति हेतौ। यस्मात्, अस्याः अजायाः ब्रह्मकारणत्वम्, एके शाखिनः तैत्तिरीया अधीयते—

'अणोरणीयान् महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः' (तै.ना.उ. 10-1)

[2]इति, हृदय[2]गुहायाम् उपास्यत्वेन संनिहितं ब्रह्म अभिधाय,

'सप्त प्राणाः प्रभवन्ति [3]तस्मात्[3]' (तै.ना.उ. 10-2)

इत्यादिना, सर्वेषां [4]लोकानां ब्रह्मादीनां[4] च तत उत्पत्तिमभिधाय, [5]सर्वकारणी[5]भूता अजा, तत उत्पन्ना अभिधीयते—

'अजामेकां लोहित-शुक्ल-कृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः॥'

(तै.ना.उ. 10-5)

इति।

सर्वस्य तद्व्यतिरिक्तस्य वस्तुजातस्य, तत उत्पत्त्या तदात्मकत्वोपदेशे [6]प्रक्रिय[6]माणे अभिधीयमानत्वात्, प्राण-समुद्र-पर्वतादिवत्, एषाप्यजा बह्वीनां सरूपाणां प्रजानां स्रष्ट्री, [7]कर्मवश्येनाऽऽत्मना[7] भुज्यमाना, अन्येन विदुषा आत्मना त्यज्यमाना च ब्रह्मण उत्पन्ना, ब्रह्मात्मिका अवगन्तव्या इत्यर्थः।

अतः वाक्यशेषात् चमसविशेषवत्, शाखान्तरीयात् एतत्सरूपात् प्रत्यभिज्ञाय-

---

**अणोरणीयान्** इति, ब्रह्मकारणत्वपरतां प्रकरणे दर्शयति।

**सर्वस्येति**। यथा 'इडो यजति' 'बर्हिर्यजति' 'तनूनपातं यजति' इत्यादिषु अङ्गत्वाश्रवणेऽपि, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादिप्रकरणस्थतया तदङ्गत्वं निश्चीयते; तद्वत् सृष्टिप्रकरणस्थत्वात् उत्पत्तिः सिद्धेत्यर्थः। 'यस्माज्जाता न परा नैव किञ्चनास' इत्युत्तरत्राऽपि सृष्ट्यनुवृत्तेः, न सृष्टिप्रकरणविच्छेदः इत्यर्थसिद्धम्।

---

[1] ज्योतिः—थ. [2] 'निहितं गुहायाम्' इति हृदय—न, इति, 'निहितं गुहायाम्' इति हृदय—वा. [3] तस्मात् सप्तार्चिषः—वा. [4] लोकादीनां—द. [5] सर्वकारण—द. [6] क्रिय—वा. [7] कर्मवश्येन—द.

[1]मानार्थात्[1] वाक्यात् नियमिता अजा, ब्रह्मात्मिका इति निश्चीयते ॥

[तान्त्रिकाजाग्रहणहेतूनामभावस्थिरीकरणम्]

इहापि प्रकरणोपक्रमे,

'किं कारणं ब्रह्म' (श्वे.उ. 1-1)

इत्यारभ्य,

'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निरूढाम्' (श्वे.उ. 1-3)

इति, परब्रह्मशक्तिरूपायाः अजायाः अवगतेः ; उपरिष्टाच्च,

'अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया संनिरुद्धः' (श्वे.उ. 4-9)

'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' (श्वे उ. 4-10)

'यो योनिर्योनिमधितिष्ठत्येकः' (श्वे.उ. 4-11)

इति च, तस्या एव प्रतीतेः; न अस्मिन् मन्त्रे तन्त्रसिद्धस्वतन्त्रप्रकृतिप्रतिपत्तिगन्धः ॥९॥

[अजात्व-ज्योतिरुपक्रमात्वयोः विप्रतिषेधशङ्का-निरासौ]

कथं तर्हि, ज्योतिरुपक्रमायाः लोहित-शुक्ल-कृष्णरूपायाः अस्याः प्रकृतेः अजात्वम् ? अजाया वा कथं ज्योतिरुप[2]क्रमात्वम्[2]? [3]इत्यत्राह[3]—

## ११९. कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १-४-१० ॥

**शक्तिरूपायाः**—अपृथक्सिद्धविशेषणरूपायाः । कार्योपयोगि अपृथक्सिद्धविशेषणं हि शक्तिः ।

**योनिम्**—जगद्योनिभूतां प्रकृतिम्, इत्यर्थः । **तस्या एव**—ब्रह्मात्मिकाया एव । **स्वतन्त्रप्रकृतिप्रतिपत्तिगन्ध** इति । न केवलं शाखान्तरैकार्थ्यात्, स्वप्रकरणाच्च ब्रह्मात्मकत्वावगमादिति भावः ॥ ९ ॥

---

[सूत्रार्थः । **कल्पनायाः**—प्रधानाख्यवस्तुनः उपकरणभूतात्, जगतः सृष्टेः, **उपदेशाच्च**—'अस्मान्मायी' इति श्रुत्या ज्ञापनादपि, **मध्वादिवत्**—यथा एकस्यैवादित्यस्य कार्यावस्थायां देवभोग्यरसाधारत्वरूपं मधुत्वम्, कारणावस्थायां नाम-रूपप्रहाणात् एकत्वेनावस्थानं चेति द्वयम् ; तद्वत्, **अविरोधः**—प्रधानाख्ये वस्तुनि, अजात्वरूपनित्यत्वस्य, ब्रह्मकारणकत्वरूपस्यानित्यत्वस्य च सामानाधिकरण्ये निर्बाधता ॥ ]

लये स्थितस्य चैकस्य मधुत्वं कार्यता रवेः ।
अजाया अपि सृष्ट्यादिवचनाच्च तथा भवेत् ॥ (ब्र.प.मा. ११९)

---

[1] मानात्—न.　[2] क्रमत्वम्—थ, वा.　[3] इत्यत आह—वा.

प्रसक्ताशङ्कानिवृत्त्यर्थः 'च'शब्दः। अस्याः प्रकृतेः अजात्वं, ज्योतिरुपक्रमात्वं च न विरुध्यते।

कुतः ?

कल्पनोपदेशात्। कल्पनम्—क्लृप्तिः, सृष्टिः। जगत्सृष्ट्युपदेशात्, इत्यर्थः। यथा—

'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' (तै.ना.उ. 1-44)

इति, कल्पनं—सृष्टिः। अत्रापि,

'अस्मान्मायी सृजते विश्वमेतत्' (श्वे.उ. 4-9)

इति, जगत्सृष्टिरुपदिश्यते। स्वेन अविभक्तात्, अस्मात्—सूक्ष्मावस्थात् कारणात्, मायी—सर्वेश्वरः, सर्वं जगत् सृजति इत्यर्थः। अनेन कल्पनोपदेशेन, अस्याः प्रकृतेः, कार्य-कारणरूपेण अवस्थाद्वयान्वयः अवगम्यते।

सा हि प्रलयवेलायां ब्रह्मतापन्ना, अविभक्तनाम[1]रूपा[1] सूक्ष्मरूपेण अवतिष्ठते; सृष्टिवेलायां तु, उद्भूतसत्त्वादिगुणा विभक्तनामरूपा व्यक्तादिशब्दवाच्या, तेजोऽ-[2]बन्नादि[2]रूपेण च परिणता, लोहित-शुक्ल-कृष्णाकारा च अवतिष्ठते। अतः, [3]कारणावस्था आजा; कार्यावस्था[3], 'ज्योतिरुपक्रमा' इति न विरोधः।

[उक्तार्थे मधुविद्यार्थदृष्टान्तीकरणम्]

मध्वादिवत्—यथा ईश्वरेण आदित्यस्य कारणावस्थायाम् एकस्यैवावस्थितस्य,

**कथं तर्हीति**। लोहित-शुक्ल-कृष्णाकारत्वं हि कार्यावस्थायामुपपद्यते। तदानीं ज्योतिरुपक्रमात्वाङ्गीकारे, अजात्वानुपपत्तिः; अजात्वे, ज्योतिरुपक्रमात्वानुपपत्तिः इत्यर्थः।

**चशब्द** इति। चस्त्वर्थः इत्यर्थः।

**कल्पनमिति**। अनेन 'कल्पन'शब्दस्य अतस्मिंस्तद्भावारोपणपरत्वव्युदासाय धातोः सृष्टिवाचित्वं दर्शयति। **कल्पनं सृष्टिरिति**। 'प्राकल्पयद्यो भुवनानि सप्त' इत्यादिस्मृतिप्रयोगश्च प्रसिद्धः। अतः 'ज्योतिःकल्पन'शब्दौ वैदिकशब्दनिर्देशानुसारिणौ। तथा निर्देशश्च मुनिसमाधिः; 'सम्प्रसादादध्युपदेशात्' 'समानो ज्योतिषा' इत्यादिषु दर्शनात्।

**ब्रह्मताऽपन्ना**—कारणावस्थब्रह्मताऽपन्ना। नात्र केवलप्रकृतेः ब्रह्मताऽपत्तिर्विवक्षिता; किन्तु प्रकृतिशरीरकब्रह्मणः कारणावस्थाप्राप्तिः। **अत इत्यादि**। कार्यावस्थाजाशरीरकं ब्रह्म कार्यम्; कारणावस्थाजाशरीरकं ब्रह्म कारणमित्यर्थः।

---

[1] रूपाव्यक्तादिशब्दवाच्या—वा. [2] बन्न—वा. [3] कारणावस्थायां, कार्यावस्थायां च—थ.

कार्यावस्थायाम् ऋग्यजुःसामाथर्वप्रतिपाद्यकर्मनिष्पाद्यरसाश्रयतया [1]वस्वादिदेवता[1]भोग्यत्वाय मधुत्वकल्पनम्, उदयास्तमयकल्पनं च न विरुध्यते। तदुक्तं मधुविद्यायाम्—

'असौ आदित्यो देवमधु' (छां.उ. 3-1-1)

इत्यारभ्य,

'अथ तत ऊर्ध्व उदेत्य नैवोदेता, [2]नास्तमेता[2], एकल एव मध्ये स्थाता'

(छां.उ. 3-11-1)

इत्यन्तेन। एकलः—एकस्वभावः। अतः अनेन मन्त्रेण, ब्रह्मात्मिका अजैव अभिधीयते; न कापिलतन्त्रसिद्धा, इति सिद्धम्॥

[एतन्मन्त्रोक्ताजास्वरूपे परमतोल्लेखो निरासश्च]

अन्ये तु—अस्मिन् मन्त्रे, तेजोऽबन्न[3]लक्षणा[3] अजा एका अभिधीयते—इति।

ते प्रष्टव्याः—किं तेजोऽबन्नान्येव, तेजोऽबन्नात्मिका अजा एका? उत तेजोऽबन्नरूपं ब्रह्मैव? किं वा तेजोऽबन्नकारणभूता काचित्?—इति।

प्रथमे कल्पे, तेजोऽबन्नानाम् अनेकत्वात्, 'अजामेकाम्' इति विरुध्यते।

न च वाच्यम्—तेजोऽबन्नानाम् अनेकत्वेऽपि, त्रिवृत्करणेन एकतापत्तिः—इति; त्रिवृत्करणे[4]ऽपि[4] बहुत्वानपगमात्।

'[5]इमा[5]स्तिस्रो देवताः' (छां.उ. 6-3-2)

'तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' (छां.उ. 6-3-3)

इति, प्रत्येकं त्रिवृत्करणोपदेशात्।

---

यथेत्यादि। उदयास्तमयमधुत्वकल्पनानि, तदभावश्च आदित्यस्य अवस्थाद्वयेन यथा उपपद्यन्ते; तथा अजात्व-ज्योतिरुपक्रमात्वे अवस्थाभेदेन प्रकृत्याकधर्मिणि अविरुद्धे इत्यर्थः। एकस्य—ईश्वरेणैकस्य, अविभक्तनामरूपस्येत्यर्थः।

किमित्यादि। एकाजात्वेन परिकल्प्यमानं वस्तु, किं तेजोऽबन्नान्येव? तेजोऽबन्नावस्थं ब्रह्म, किम् एकच्छागत्वेन कल्प्यते? तेजोऽबन्नवाचिशब्देन लक्षिता तत्कारणभूता काचित् एका, अजात्वेन किं रूप्यते? इत्यर्थः।

इमास्तिस्र इति। न समुदायैकत्वम्, अपि तु समुदायत्रयमेव इत्यर्थः।

---

[1] वस्वादि—द. [2] नैवास्तमेति—न. [3] लक्षणैवा—थ. [4] ऽपि च—न.
[5] हन्त! इमा—न.

इति, प्रत्येकं त्रिवृत्करणोपदेशात् ।

द्वितीयः [1]कल्पो[1] विकल्प्यः—किं तेजोऽबन्नरूपेण विकृतं [2]ब्रह्मैव[2] अजा एका ? किं वा स्वरूपेणावस्थितम् अविकृतम् ? — इति ।

[3]प्रथमः कल्पः[3] बहुत्वान[4]पायादेव[4] निरस्तः ।

द्वितीयेऽपि, 'लोहित-शुक्ल-कृष्णाम्' इति विरुध्यते ; 'स्वरूपेणावस्थितं ब्रह्म, तेजोऽबन्नलक्षणम्' इति वक्तुमपि न शक्यते ।

तृतीये कल्पेऽपि—'अजा'शब्देन तेजोऽबन्नानि निर्दिश्य, तैः तत्कारणावस्था, [5]उपस्थापनीया[5] इत्यास्थेयम् । ततो वरम्, 'अजा'शब्देन तेजोऽबन्नकारणावस्थायाः श्रुति[6]सिद्धाया[6] एव अभिधानम् ॥

[अजाशब्दस्य छागार्थकत्वाभिप्राये अनौचित्यम् ]

यत् पुनः—अस्याः प्रकृतेः, 'अजा'शब्देन छागत्वपरिकल्पनमुपदिश्यते—इति, तदपि असङ्गतम् ; निष्प्रयोजनत्वात् । यथा —

'आत्मानं रथिनं विद्धि' (कठ.उ. 3-3)

इत्यादिषु, ब्रह्मप्राप्त्युपायताख्यापनाय शरीरादिषु रथादिरूपणं क्रियते; [7]यथा च[7]—[8]आदित्ये वस्वादीनां[8] भोग्यत्वख्यापनाय मधुत्वकल्पनं क्रियते ; तद्वत्, अस्यां प्रकृतौ छागत्व[9]परिकल्पनं[9] क्वोपयुज्यते ?

---

**द्वितीयः कल्पोविकल्प्य** इति । तेजोबन्नरूपाः ब्रह्मणो विकाराः, किम् 'अजा'-शब्देनोच्यन्ते? उत स्वरूपम्? इति विकल्पग्रन्थार्थः ।

**द्वितीयेऽपीति** । ब्रह्मस्वरूपे लोहित-शुक्ल-कृष्णत्वाभावात् श्रुत्यस्वारस्यमित्यर्थः ।

**तृतीय** इति । लोहित-शुक्ल-कृष्णारवाजात्वैकत्वसिद्ध्यर्थम् अयं पक्षः शङ्कितः । **अजाशब्देनेति** । तेजोऽबन्नानाम् अवाचकस्य 'अजा'शब्दस्य तेजोऽबन्नपरत्वमारोप्य, तेन तत्कारणस्य लक्षणया उपस्थापनादपि, मुख्यवृत्त्या कारणप्रतिपादनपरत्वाश्रयणं युक्तम् इत्यर्थः ।

**निष्प्रयोजनत्वादिति** । सर्वत्र रूढितः अवयवशक्त्या वा प्रतिपाद्यमानमुख्यार्थपरिग्रहः स्वतः प्राप्तः । गौणार्थपरिग्रहस्तु मुख्यार्थानुपपत्त्या क्रियते । तत्र औचित्यातिशयलाभः अनेकपदमुख्यार्थत्वसिद्धिश्च प्रयोजनम् । तत्र मुख्यार्थानुपपत्त्यभावः प्रदर्शितः ; अजात्व-ज्योति-रुपक्रमात्वयोः अवस्थाभेदेन अविरोधस्योक्तत्वात् । अतः अर्थौचित्यलाभरूपप्रयोजनाभावरूपं दूषणम् [इत्यर्थः] ।

---

[1] कल्पोऽपि—थ. [2] ब्रह्म इह—थ. [3] प्रथमकल्पः—थ. [4] पगमादेव—न. [5] अवसीयत—थ. प्रसिद्धाया—वा. [7] यथा—वा. [8] आदित्यवस्वादीनां—द. [9] कल्पनं—थ.

न केवलम् उपयोगाभाव एव; विरोधश्च। कृत्स्नजगत्कारणभूतायाः, स्वस्मिन् अनादिकालसम्बद्धानां सर्वेषामेव चेतनानां निखिलसुखदुःखोपभोगापवर्गसाधनभूतायाः अचेतनायाः, अत्यल्पप्रजासर्गकरागन्तुकसङ्गमचेतनविशेषैकरूपात्यल्पप्रयोजनसाधनस्वपरित्यागाहेतुभूतस्व[1]सम्बन्धि[1]परित्यागसमर्थचेतनविशेषरूपच्छाग[2]स्वभाव[2]ख्यापनाय तद्रूपत्वकल्पनं विरुद्धमेव ॥

[एकमन्त्रगतयोः द्वयोरजपदयोः अर्थवैरूप्यविरोधः]

'अजामेकाम्' 'अजो ह्येकः' 'अजोऽन्यः' इत्यत्र '[3]अजा[3]'शब्दस्य विरूपार्थपरिकल्पनं च न शोभनम्।

सर्वत्र छागत्वं परिकल्प्यते—इति चेत्,

'जहात्येनां भुक्तभोगामजोऽन्यः' (श्वे.उ. 4-5)

इति, विदुषः आत्यन्तिकप्रकृतिपरित्यागं कुर्वतः, अनेन [4]वा अन्येन[4] वा पुनरपि सम्बन्धयोग्यछागत्वपरिकल्पनम् अत्यन्तविरुद्धम् ॥१०॥

॥ इति चमसाधिकरणम् ॥२॥

---

एकरूपेति। दुग्धादिरेव प्रयोजनमित्यर्थः। स्वसम्बन्धीत्यादि। 'अचेतनायाः' इत्यनेन, स्वसम्बन्धिपरित्यागासामर्थ्यं सिद्धमिति, तत्प्रत्यनीकाकारमाह; [अनेन] ॥ १० ॥

[सूत्राणि।—१. चमस २. ज्योतिरूपक्रमा ३. कल्पनो।]

॥ इति चमसाधिकरणम् ॥ २ ॥

---

[1] सम्बन्ध—बा. [2] स्वभावता—भ, भाव—द. [3] अज—बा. [4] वाक्येन—भ.

## ३०. सङ्ख्योपसङ्ग्रहाधिकरणम् ॥ १-४-३ ॥ (सू. 11–13)

[अधिकरणार्थः—कापिलमतानङ्गीकारेऽपि पञ्चजनशब्दार्थसिद्धिः ॥]

[ज्योतिषां ज्योतिर्विद्या (बृ.उ.6-4-16)]

## १२०. न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ॥१-४-११॥

[विषयवाक्यप्रदर्शनम्]

**वाजसनेयिनः समामनन्ति—**

**'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः ।**

**तमेवमन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम् ॥'** (बृ.उ. 6-4-17)

**इति ॥**

[संशयस्वरूपम्]

**किम् अयं मन्त्रः, कापिलतन्त्रसिद्धतत्त्वप्रतिपादनपरः ? उत न ?—इति सन्दिह्यते ॥**

---

**न सङ्ख्येति** । 'अजा'शब्दस्य स्वतन्त्रप्रकृत्युपस्थापकत्वे विशेषाभावात्, वाक्यान्तरानुरोधेन प्रकृतेः ब्रह्मात्मकत्वं साधितम् । तदत्राऽनुपपन्नम्; परमात्मपरत्वे सङ्ख्याधिक्यात्, परमात्मना विनाऽपि सङ्ख्यापूरणेन, 'अब्रह्मात्मिका प्रकृतिः' इति विशेषनिश्चयसम्भवात् इति शङ्कया सङ्गतिः ।

**वाजेति** । पञ्चविंशतिसङ्ख्यान्वय-तत्त्वाधिक्यादिप्रतीतिजनकमिदं वाक्यम् । एवंजातीयकवाक्यानि सन्ति चेत्, तान्यपि विषयः ॥

**सन्दिह्यते** इति । पञ्चविंशतिसङ्ख्यान्वय-तत्त्वाधिक्यप्रतीतिभ्यां संशयः । 'यस्मिन् पञ्च पञ्चजनाः' इति मन्त्रः, किं कापिलतन्त्रसिद्धतत्त्वपरः ? उत न ? इति । किं 'पञ्च

---

[सूत्रार्थः । **सङ्ख्यायाः**—'यस्मिन् पञ्च पञ्चजनाः' इति श्रुतौ पञ्चविंशतिसङ्ख्यायाः, **उपसङ्ग्रहादपि**—बोधकतास्वीकारादपि, **न**—श्रुत्या न सांख्याभिमततत्त्वसिद्धिः, भवितुमर्हति; **नानाभावात्**—'यस्मिन्' इति यच्छब्दार्थाधारकाणामेतेषामर्थानाम् साङ्ख्यतन्त्रोक्तेभ्यः तत्त्वेभ्यः पृथग्भावात् (तथा) **अतिरेकाच्च**—उत्तरस्मिन् पादे तत्रैव 'आकाशश्च प्रतिष्ठितः' इति आकाशस्याऽपि अधिकतया निर्देशादपि ज्ञापकात् ॥ ]

**यस्मिन् पञ्च पञ्चजना इति सङ्ख्याग्रहेऽपि च ।**
**नानाभावातिरेकाभ्यां साङ्ख्योक्तप्रक्रिया न हि ॥ (ब्र.प.मा. १२०)**

[पूर्वपक्षः]

किं युक्तम् ?

तन्त्रसिद्धतत्त्वप्रतिपादनपरः—इति ।

कुतः ?

'पञ्च'शब्दविशेषितात् 'पञ्चजन'शब्दात्, पञ्चविंशतितत्त्वप्रतीतेः ।

एतदुक्तं भवति—'पञ्चजनाः' इति समासः समाहारविषयः; [1]पञ्चानां[1] जनानां समूहाः पञ्चजनाः; पञ्चपूल्यः इतिवत्। 'पञ्चजनाः' इति लिङ्गव्यत्ययः छान्दसः। ते च समूहाः कति? इत्यपेक्षायां, 'पञ्चजन'शब्दविशेषणेन प्रथमेन 'पञ्च'शब्देन, 'समूहाः पञ्च' इति [2]प्रतीयन्ते[2]; यथ 'पञ्च पञ्चपूल्यः' इति। अतः 'पञ्च पञ्चजनाः' इति पञ्चविंशतिपदार्थावगतौ, ते कतमे? इत्यपेक्षायां, मोक्षाधिकारात्, मुमुक्षुभिः ज्ञातव्यतया स्मृतिप्रसिद्धाः प्रकृत्यादय एव ज्ञायन्ते ।

---

पञ्चजन'शब्देन पञ्चविंशतितत्त्वप्रतीतिरस्ति? न? इति । किम् आकाशस्य पृथङ्निर्देशः, अवान्तरसङ्ख्यान्वयनिमित्तविरोधी? उत न? इति । किं वाक्यशेषेण 'पञ्चजन'शब्दस्य प्राणादिविषयत्वनिश्चयः शक्यः? उत न? इति च ।

पूर्वःपक्षः—यदा न विरोधी, यदा च निश्चयो न शक्यः; तदा, अवान्तरसङ्ख्यान्वयनिमित्तसम्भवेन, समासस्य समाहारविषयतया, 'पञ्च पञ्चजन'शब्देन, पञ्च पञ्चकान्युच्यन्त इति, पञ्चविंशतितत्त्वप्रतीतेः, अयं मन्त्रः तन्त्रसिद्धतत्त्वप्रतिपादनपरः—इति ।

राद्धान्तः—यदा आकाशस्य पृथङनिर्देशः अवान्तरसङ्ख्यान्वयनिमित्तविरोधी, वाक्यशेषेण च प्राणादिविषयत्वनिश्चयः शक्यः; तदा अवान्तरसङ्ख्यान्वयनिमित्ताभावेन, समासस्य संज्ञाविषयतया, 'पञ्च पञ्चजन'शब्देन पञ्चपदार्था उच्यन्त इति, पञ्चविंशतितत्त्वाप्रतीतेः, अयं मन्त्रः न तन्त्रसिद्धतत्त्वप्रतिपादनपरः—इति ।

**पञ्चशब्देति**। अस्य 'पञ्चजन'शब्दस्य सङ्ख्याप्रतीतिस्वारस्यानुरोधे सम्भवति, तत्परित्यागायोगात्, सङ्ख्यापूर्वसमासत्वं युक्तमित्यभिप्रायः ।

**छान्दस** इति । त्रिभुवनादिशब्दवत् स्त्रीलिङ्गस्मृतेः अपवादाभावात् छान्दसत्वमिति भावः । भूतत्वज्ञानेन्द्रियत्वादिकम् अवान्तरसङ्ख्यानिवेशनिमित्तमस्तीत्यभिप्रेतम् । तद्धि स्फुटी भविष्यति ॥

---

[1] पञ्चजनाः-पञ्चानां—बा.   [2] प्रतीयते—द.

'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिः न विकृतिः पुरुषः ॥' (सां.का. 3)

इति हि ! कापिलानां प्रसिद्धिः । अतः तन्त्रसिद्धतत्त्वप्रतिपादनपरः,

[सिद्धान्तारम्भः]

[पञ्चजनशब्दस्य प्राकृततत्त्वपरत्वाभावः]

इति प्राप्ते, प्रचक्ष्महे—न सङ्ख्योपसङ्ग्रहादपि—इति । '[1]पञ्च पञ्चजनाः[1]' इति पञ्चविंशति[2]सङ्ख्योप[2]संङ्ग्रहादपि, न तन्त्रसिद्धतत्त्वप्रतीतिः ।

कुतः ?

नानाभावात् - एषां पञ्चसङ्ख्याविशेषितानां पञ्चजनानां, तन्त्रसिद्धेभ्यस्तत्त्वेभ्यः पृथग्भावात् ।

'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः' (बृ.उ. 6-4-17)

इति, [3]एतेषां[3] यच्छब्दनिर्दिष्टब्रह्मा[4]श्रयतया[4] ब्रह्मात्मकत्वं हि ! प्रतीयते ।

'तमेवमन्य आत्मानं विद्वान् ब्रह्माऽमृतोऽमृतम्' (बृ.उ. 6-4-17)

इत्यत्र, 'तम्' इति परामर्शेन, 'यच्छब्दनिर्दिष्टं ब्रह्म' इत्यवगम्यते । अतः तेभ्यः पृथग्भूताः [5]पञ्चजनाः[5] इति, न तन्त्रसिद्धा एते ॥

[पञ्चविंशत्यतिरेकस्य वाक्यावगतस्य प्राकृतेतरत्त्वज्ञापकता]

अतिरेकाच्च—तन्त्रसिद्धेभ्यस्तत्त्वेभ्यः अत्र तत्त्वातिरेकोऽपि भवति ; यच्छब्दनिर्दिष्ट आत्मा आकाशश्च अत्र अतिरिच्येते । अतः,

'तं षड्विंशकमि[6]त्याहुः[6] सप्तविंशमथाऽपरे' (मन्त्रि.उ. 2-4)

इति श्रुतिप्रसिद्धसर्वतत्त्वाश्रयभूतः [7]सर्वेश्वरेश्वरः[7] [8]परमपुरुषः[8] अत्राऽभिधीयते ।

---

नानाभावः—पृथक्त्वम् , अन्यत्वं विवक्षितम् ; न तु बहुत्वम् । 'विना नाना हिरुक् पृथक्' इति नैघण्टुकाः । तन्त्रसिद्धतत्त्वेभ्यः पृथग्भावः—अन्यत्वं, ब्रह्मात्मकत्वम् ।

अतिरेकः—सङ्ख्याधिक्यम् । षड्विंशकत्वम् ; कालस्य प्रकृतिविकाराणां विशेषणतया

---

[1] पञ्चजनाः—उ. [2] तत्त्वसङ्ख्योप—घ. [3] एषां—वा. [4] त्मकतया—न.
[5] पञ्च पञ्चजनाः—वा. [6] त्येके—पा. [7] सर्वेश्वरः—वा. [8] पुरुषोत्तमः—द.

'न सङ्ख्योपसङ्ग्रहादपि, इति 'अपि'शब्दस्य, 'पञ्च पञ्चजनाः' इत्यत्र पञ्चविंशतितत्त्व[1]प्रतिपत्तिरेव[1] न सम्भवति—इत्यभिप्रायः ।

कथम् ?

पञ्चभिरारब्धसमूहपञ्चकासम्भवात् । न हि! तन्त्रसिद्धतत्त्वेषु पञ्चसु पञ्चसु, अनुगतं तत्सङ्ख्यानिवेशनिमित्तं जात्यादि अस्ति ।

न च वाच्यम्—पञ्च कर्मेन्द्रियाणि, पञ्च ज्ञानेन्द्रियाणि पञ्च महाभूतानि, पञ्च तन्मात्राणि, अवशिष्टानि पञ्च' इति अवान्तरसङ्ख्यानिवेशनिमित्तम् अस्त्येव—इति ; आकाशस्य पृथङ्निर्देशेन, पञ्चभिरारब्धमहाभूतसमूहासिद्धेः ॥

[पञ्चजनशब्दस्य संज्ञया अर्थविशेषपरत्वम् ]

अतः 'पञ्चजनाः' इत्ययं समासः न समाहारविषयः ; [2]अयं तु[2]

'दिक्-सङ्ख्ये संज्ञायाम्' (पा.सू. 2-1-50)

इति [3]संज्ञाविषयः[3]। अन्यथा 'पञ्चजनाः' इति लिङ्गव्यत्ययश्च। पञ्चजनाः नाम केचित् सन्ति ; ते च पञ्चसङ्ख्यया विशेष्यन्ते ; 'पञ्च पञ्चजनाः' इति । 'सप्त सप्तर्षयः' इतिवत् ॥ ११ ॥

---

अन्तर्भावात्, सप्तविंशत्वम् ; कालस्य स्वतन्त्रवस्तुत्वाभिप्रायेणेत्यर्थः । **श्रुतिप्रसिद्धेति** । साङ्ख्यप्रसिद्धादपि श्रुतिप्रसिद्धं ग्राह्यम् ; अन्तरङ्गत्वात् इति भावः ।

**पञ्चभिरित्यादि** । अनेन पञ्चस्वनुगतोपाध्यसम्भवात् इत्युक्तं भवति । एकोपाधिगृहीतत्वं हि समूहत्वम् ।

**न च.........समूहासिद्धेरिति** । आकाशस्य पृथक्करणात् प्राणपञ्चमेषु, वाय्वादिषु, मनः पञ्चमेषु, रसनादिषु, गुणत्रयमहदहङ्कारेषु च अनुगतोपाध्यभावादित्यर्थः ।

**अन्यथेति** । लिङ्गव्यत्ययश्च क्लिष्टः इत्यर्थः । **सप्तेति** । 'सप्त सप्तर्षयोऽमलाः' इति श्रीमद्वैष्णवपुराणप्रयोगोऽभिप्रेतः । अयमत्राभिसन्धिः—संज्ञिपदप्रतिपन्नसङ्ख्यायाः व्युत्पत्तिसमये तटस्थत्वेनावगतायाः तात्पर्याविषयत्वात्, पुनर्वाक्यार्थान्वयित्वज्ञापनाय, 'पञ्च'शब्देन सङ्ख्यायाः विशेषणत्वज्ञापनं युक्तम् । पदद्वयस्य सामर्थ्यं चेदमेव ; यत् विग्रहवाक्ये अर्थाभिधानशक्तिः । अतः समास उपपन्नः । अतः अर्थस्य अविवक्षितत्वात्, पुनस्तया सङ्ख्यया विशेषणं सफलमिति ॥ ११ ॥

---

[1] प्रतीतिरेव—वा.　[2] अपि च—इ.　[3] संज्ञाविशेषः—इ, घ. संज्ञाविशेषविषयः—वा

[संज्ञायाः पञ्चेन्द्रियपरत्वम् ]

के पुनस्ते [1]पञ्चजनाः[1] ? [2]इत्यत[2] आह—

## १२१. प्राणादयो वाक्यशेषात् ॥ १-४-१२ ॥

'प्राणस्य प्राणमुत चक्षुष[3]श्चक्षुः[3] श्रोत्रस्य [4]श्रोत्रमन्नस्यान्नं[4]
मनसो [5]ये मनो[5] विदुः' (बृ.उ. 6-4-18)

इति वाक्यशेषात्, ब्रह्माश्रयाः प्राणादय एव पञ्च पञ्चजनाः इति विज्ञायन्ते ॥१२॥

[काण्वपाठानुरोधे इन्द्रियपरत्वानुपपत्तिशङ्का-समाधाने]

अथ स्यात्—काण्वानां माध्यन्दिनानां च,
'यस्मिन् पञ्च पञ्चजनाः' (बृ.उ. 6-4-17)

इत्ययं मन्त्रः समानः ।
'प्राणस्य प्राणम्' (बृ.उ. 6-4-18)

---

**के पुनस्ते** इति । सङ्ख्यापूर्वसमासत्वमयुक्तम् ; अस्मिन् वाक्ये सङ्ख्येयविशेषाप्रतिपत्तेः इति [शङ्कार्थः] ॥

**प्राणादय** इति । प्राणादिषु....इन्द्रियत्वरूपैकोपाधिसिद्ध्युपपादनेन वाक्यशेषार्थनिर्णयाय सूत्रप्रणयनं प्रयोजनवत् । सन्देहव्युदासकश्चात्र अग्र्यप्रायन्यायः (पू.मी.सू. 2-2-12) ['प्राये वचनाच्च' श्रेष्ठप्राये लिखितस्य श्रेष्ठत्वम् ] अभिप्रेतः । प्राणान्नशब्दौ द्वौ । चक्षुःश्रोत्रमनःशब्दाः त्रयः । अतः तदनुगुणतया प्राणान्नशब्दयोरपि इन्द्रियपरत्वात् प्राणादयः पदार्थाः इन्द्रियाणीति त एव पञ्चजनाः इत्यर्थः ॥ १२ ॥

---

[सूत्रार्थः । **प्राणादयः**—(पञ्चजनसंज्ञिताः पञ्चपदार्थाः) ब्रह्मात्मकानि पञ्चेन्द्रियाण्येव, **वाक्यशेषात्**—'प्राणस्य प्राणं....मनसो ये मनः' इत्येवंरूपात् पूर्वमन्त्रोक्तार्थविवरणरूपात् उत्तरवाक्यात् ज्ञापकात् ॥]

प्राणादयः पञ्चजना इन्द्रियाणीति निश्चिताः ।
प्राणस्य प्राणमिति च वाक्यशेषो हि दृश्यते ॥ (ब्र.प.मा १२१)

---

[1] पञ्च पञ्चजनाः—वा. [2] इत्यत्र—वा. [3] श्चक्षुरुत—पा. [4] श्रोत्रं—पा.
[5] यत् मनो—थ. मनो ये—न.

इत्यादिवाक्यशेषे, काण्वानाम् अन्नस्य पाठो न विद्यते। तेषां, 'पञ्च पञ्चजनाः प्राणादयः, इति न [1]शक्यं[1] वक्तुम्—इति,

अत्रोत्तरम्—

## १२२. ज्योतिषैकेषामसत्यन्ने ॥ १-४-१३ ॥

एकेषाम्—काण्वानां पाठे, असति अन्ने ज्योतिषा, पञ्चजनाः इन्द्रियाणि इति ज्ञायन्ते। तेषां वाक्यशेषः प्रदर्शनार्थः।

एतदुक्तं भवति—यस्मिन् 'पञ्च पञ्चजनाः' इत्यस्मात् पूर्वस्मिन् मन्त्रे,

'तं देवा ज्योतिषां [2]ज्योतिः आयुर्होपासतेऽमृतम्[2]' (बृ.उ. 6-4-16)

इति, ज्योतिषां ज्योतिष्ट्वेन [3]ब्रह्मण्यभिधीयमाने, ब्रह्माधीन[3]स्वकार्याणि कानिचित् ज्योतींषि प्रतिपन्नानि। तानि च विषयाणां प्रकाशकानि इन्द्रियाणि इति, 'यस्मिन् पञ्च पञ्चजनाः' इति अनिर्धारितविशेषनिर्देशेन अवगम्यन्ते—इति।

---

**न शक्यं वक्तुमिति**। काण्वानाम् अन्नपाठवैकल्येन, प्राणादिषु पञ्चसङ्ख्यानिवेशानुपपत्तेः, पञ्चजनत्वमयुक्तमिति भावः॥

**ज्योतिषा**— षष्ठ्यन्तज्योतिश्शब्देन, इत्यर्थः। सूत्रेऽपि ज्योतिश्शब्दः शब्दस्वरूपार्थः। श्रुतिवाक्यस्वारस्यसिद्ध्यौपयिकत्वात् सूत्रस्थ'ज्योतिः'शब्दास्वारस्यं सोढव्यमित्यर्थः।

**ब्रह्मा ...कार्याणि** इत्यनेन, 'प्राणस्य प्राणः' इत्यादेरर्थ उक्तः। 'पवित्राणां पवित्रम्' इतिवत् इति भावः। **ज्योतींषि** इत्यनेन, प्रकाशकत्वमभिप्रेतम्। ततश्च कर्मेन्द्रियादिव्यावृत्तिसिद्धिः; तेषां प्रकाशकत्वाभावात्। **कानिचिदिति**। **[तानि]** आदित्यादिज्योतींषि? न वा? इति संशये विशेषनिर्धारणाकाङ्क्षा तिष्ठतीति भावः। **अनिर्धारितेति** सङ्ख्येयविशेषोपस्थापकवाक्यान्तरसाकाङ्क्षत्वं द्योतितम्। ततश्च तत्र श्रुतपञ्चसङ्ख्याविशेषितत्वात्, पञ्चसङ्ख्याकज्योतिरन्तरप्रसिद्ध्यभावाच्च, परिशेषेण इन्द्रियत्वावगमः।

---

[सूत्रार्थः। **एकेषाम्**—काण्वानां शाखिनां वाक्यशेषे 'तं देवा ज्योतिषां ज्योतिः' इत्यस्मिन्, **अन्ने असति**—'अन्न'शब्दे अविद्यमाने, श्रूयमाणेन, **ज्योतिषा**—'ज्योतिः'शब्देन, पञ्चजनशब्दार्थः पञ्चेन्द्रियाणि इति निश्चीयते।]

**केषांचिदन्नस्येत्यादेरसद्भावेऽपि शाखिनाम्।**
**ज्योतिषामिति शब्देन बोध्यन्ते हीन्द्रियाणि तु॥ (ब्र.प.मा. १२२)**

---

[1] शक्यते—वा. [2] ज्योतिः—द. [3] ब्रह्माधीन—ङ.

[उक्तार्थस्य विशदीकरणम्]

'प्राणस्य' इति प्राणशब्देन स्पर्शनेन्द्रियं गृह्यते ; वायुसम्बन्धित्वात् [1]स्पर्शने[1]न्द्रियस्य। मुख्यप्राणस्य 'ज्योतिः'शब्देन प्रदर्शनायोगात्। 'चक्षुषः' इति, चक्षुरिन्द्रियम्। 'श्रोत्रस्य' इति श्रोत्रेन्द्रियम्। 'अन्नस्य' इति घ्राण-रसनयोः तन्त्रेणोपादानम्। 'अन्न'शब्दोदितपृथिवीसम्बन्धित्वात्, घ्राणेन्द्रिय[2]मनेन[2] गृह्यते। 'अद्यते अनेनेत्यन्नम्' इति, रसनेन्द्रियमपि गृह्यते। 'मनसः' इति मनः। घ्राण-रसनयोः [3]तन्त्रेणो[3]पादानमिति, पञ्चत्वमपि अविरुद्धम्। प्रकाशकानि मनःपर्यन्तानि इन्द्रियाणि, 'पञ्चजन'शब्दनिर्दिष्टानि। तदविरोधाय घ्राण-रसनयोः तन्त्रेणोपादानम्। तदेवम्,

'यस्मिन् पञ्च पञ्चजनाः आकाशश्च प्रतिष्ठितः' (बृ.उ. 6-4-17)

इति 'पञ्चजन'शब्दनिर्दिष्टानि इन्द्रियाणि, 'आकाश'शब्दप्रदर्शितानि महाभूतानि च ब्रह्मणि प्रतिष्ठितानीति, सर्वतत्त्वानां ब्रह्माश्रयत्वप्रतिपादनात्, न तन्त्रसिद्धपञ्चविंशतितत्त्वप्रसङ्गः।

---

**वायुसम्बन्धित्वात्**—वाय्वाप्यायितत्वात्। **ज्योतिःशब्देन**—'ज्योतिषां ज्योतिः' इत्यत्र षष्ठ्यन्तज्योतिःशब्देन इत्यर्थः। अनेन मुख्यान्नस्य च 'ज्योतिः'शब्देन प्रदर्शनायोगो विवक्षितः। **पृथिवीसम्बन्धित्वात्**। लक्षणया पृथिव्याप्यायितत्वात्, इत्यर्थः। **गृह्यते**—लक्ष्यते। अनेन घ्राणस्य आप्याय्यतया सम्बन्धः; तद्विनियोगकरणतया रसनायाः। अतः अन्नसम्बन्धि वस्तु लक्षयता 'अन्न'शब्देन, घ्राण-रसनयोः एकव्यापारेण लक्षणा सम्भवतीति भावः। **पञ्चत्वमप्यविरुद्धमिति**। पञ्चत्वं न निर्देश्यापेक्षया ; किन्तु निर्देशापेक्षया इत्यर्थः। **प्रकाशकानीति**। प्रकाशकत्वम्, पञ्चसङ्ख्याविशिष्टत्वम्, मनःपर्यन्तम् इन्द्रियाणामुक्तत्वेन पारिशेष्यञ्च घ्राण-रसनयोः तन्त्रेणोपादानकल्पकम्। घ्राण-रसनसमुदायगतम् एकत्वं पञ्चजनविशेषणभूतायाः पञ्चसङ्ख्यायाः अवान्तरसङ्ख्यात्वेन विवक्षितमित्यर्थः। **निर्दिष्टानि**—प्रदर्शितानि इत्यर्थः। अत एव हि 'इन्द्रियाणि' इत्युक्तम्; न तु ज्ञानेन्द्रियाणीति। **महाभूत**शब्देन, भूततन्मात्राण्यपि विवक्षितानि ; **'सर्वतत्त्वानाम्'** इत्याद्युक्तेः।

---

[1] स्पर्शे—वा. [2] मन्नेन—थ. [3] तन्त्रो—न.

अतः सर्वत्र वेदान्ते सङ्ख्योपसङ्ग्रहे तदभावे वा, न कापिलतन्त्रसिद्धतत्त्व-प्रतीति[4]रिति[4] [5]सिद्धम्[5] ॥ १३ ॥

॥ इति सङ्ख्योपसंग्रहाधिकरणम् ॥ ३ ॥

## ३१ कारणत्वाधिकरणम् । १-४-४ ॥ (सू - 14,15)

[अधिकरणार्थः—सद्रूपस्य ब्रह्मण एव जगत्कारणता ; न कापिलस्य प्रधानस्य]

[अव्याकृतब्रह्मविद्या (बृ.उ. 3-4-7)]

## १२३. कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १-४-१४ ॥

पुनः प्रधानकारणवादी प्रत्यवतिष्ठते—न वेदान्तेषु एकस्मात् सृष्टिराम्नायते इति, जगतः ब्रह्मैककारणत्वं न [3]युज्यते वक्तुम्[3] । [4]तथा हि[4]—

एवं सङ्ख्याभ्युपगमात्, तदनभ्युपगमाच्च द्विधा परिहृतम् । **सङ्ख्योपसङ्ग्रहे**—सङ्ख्या-सम्भवे । **तदभावे**—सङ्ख्याया असम्भवे ॥ १३ ॥

[सूत्राणि । १. न सङ्ख्योप २. प्राणादयो ३. ज्योतिषैकेषाम् ]

॥ इति सङ्ख्योपसङ्ग्रहाधिकरणम् ॥ ३ ॥

**काणरत्वेनेति** । 'यस्मिन्' इति सर्वतत्त्वानां ब्रह्माश्रयत्वप्रतीत्या, स्वातन्त्र्येण प्रधानस्य कारणत्वं निरस्तम् । अथ— स्वातन्त्र्येण कारणत्वं प्रतीयते ; ब्रह्माश्रयत्वाप्रतीतेः इति—शङ्कया सङ्गतिः ।

**पुनरित्यादि** । अवर्जनीयाचिद्बोधव्याकुलार्थशब्दोपलक्षितकारणवाक्यसमुदायो विषयः । व्याकुलत्वादेव संशयः—किं जगत्कारणविषयवेदान्तवाक्यप्रतिपाद्यम्, अव्यक्तम् ? उत ब्रह्म ? इति। किम् 'असद्वा इदमग्र आसीत्' 'तद्धेदं तर्ह्यव्याकृतमासीत्' इत्यत्र 'असदव्याकृत'शब्दौ,

[सूत्रार्थः । **आकाशादिषु**—'आत्मन आकाशः' इत्यादिषु आकाशादिपदचिह्नितेषु श्रुतिवाक्येषु, **कारणत्वेन च**—आकाशादीन् प्रति हेतुतयैव, **यथाव्यपदिष्टस्य**—सार्वात्म्यादि-युक्ततया अस्माभिर्व्यपदिष्टस्य परब्रह्मण एव, **उक्तेः**—कथनात्, (अब्रह्मात्मकं प्रधानं न कारणम् ।)]

आकाशादौ कारणत्वं सर्वज्ञस्यैव कथ्यते ।
आत्मन आकाश इति तस्माद्ब्रह्मैव कारणम् ॥ (ब्र.प.मा. १२३)

[1] रस्तीति—इ, ध, वा. [2] स्थितम्—अ, इ, ध, च, वा, [3] युज्यते—पा.
[4] कथं ? तथा हि—पा.

'सदेव सोम्येदमग्र आसीत्' (छां.उ. 6-2-1)
इति, सत्पूर्विका सृष्टिराम्नायते ।

'असद्वा इदमग्र आसीत्' (तै.उ. आन. 7-1)
इति, असत्पूर्विका च। अन्यत्र,

'असदेवेदमग्र आसीत्। तत् सदासीत्। तत् समभवत्' (छां.उ. 3-19-1)
इति च। अतः वेदान्तेषु स्रष्टुः अव्यवस्थितेः, जगतः ब्रह्मैककारणत्वं न निश्चेतुं शक्यम्; प्रत्युत प्रधानकारणत्वमेव निश्चेतुं शक्यते ।

'तद्धेदं तर्ह्यव्याकृतमासीत्' (बृ.उ. 3-4-7)
इति, अव्याकृते प्रधाने जगतः प्रलयमभिधाय,

'तन्नामरूपाभ्यामेव व्याक्रियत' (बृ.उ. 3-4-7)
इति, अव्याकृतादेव जगतः सृष्टिश्च, अभिधीयते। अव्याकृतं हि! अव्यक्तम्; नामरूपाभ्यां न व्याक्रियते—न व्यज्यते इत्यर्थः। अव्यक्तं—प्रधानमेव। अस्य च स्वरूपनित्यत्वेन परिणामाश्रयत्वेन च, जगत्कारण[1]वादिवाक्यगतौ[1] सदसच्छब्दौ, ब्रह्मणीव अस्मिन् न विरोत्स्येते ॥

---

अव्याकृतनामरूपावस्थब्रह्मपरौ ? उत अव्यक्तपरौ ? इति। तदर्थं—किं 'तदप्येष श्लोको भवति' इति साक्षित्वेन निर्देशः असच्छब्दस्य प्रकृतब्रह्मपरतामवगमयति? न ? इति। 'स एष इह प्रविष्टः' इति प्रशासितुः अनुकर्षश्च, 'अव्याकृत'शब्दस्य ब्रह्मपरतामवगमयति ? न ? इति संशयः अर्थसिद्धः ।

[पूर्वपक्षे]—यदा, 'स एषः' इत्यनुकर्षः, न अव्याकृतशरीरब्रह्मपरताम् अवगमयति, यदा च 'तदप्येषः' इति निर्देशः, प्रकृतब्रह्मपरताम् असच्छब्दस्य नावगमयति ; तदानीम् असद्-व्याकृतशब्दयोः, अव्याकृतनामरूपावस्थब्रह्मपरत्वाभावात् कारणवाक्यप्रतिपाद्यम् अव्यक्तमिति प्राप्नोति ।

[राद्धान्ते] यदा 'तदप्येषः' इति निर्देशः, असच्छब्दस्य ब्रह्मपरतामवगमयति, यदा च 'स एषः' इत्यनुकर्षः, 'अव्याकृत'शब्दस्य अव्याकृतशरीरकब्रह्मपरतामवगमयति ; तदानीम्, 'असदव्याकृत'शब्दयोः, अव्याकृतनाम-रूपावस्थब्रह्मपरत्वात्, जगत्कारणवाक्यप्रतिपाद्यं ब्रह्म—इति सिद्ध्यति ।

**एकस्मात्**—एकरूपात् कारणात्। **स्रष्टुरिति**। ब्रह्मकारणवादे सृष्टिकारणस्य अव्यवस्थितेरित्यर्थः। **ब्रह्मणीव** इति, वैधर्म्यदृष्टान्तः ।

---

[1] वाक्यगतौ—न.

[सृष्टिवाक्यश्रुतेक्षणादीनां गौणतामाश्रित्य पूर्वपक्षः]

एवम्, अव्याकृतकारणत्वे निश्चिते सति, ईक्षणादयः कारणगताः, [1]सृष्टयौन्मुख्या[1]भिप्रायेण योजयितव्याः। 'ब्रह्मात्म'शब्दावपि बृहत्त्व-व्यापित्वाभ्यां, प्रधाने एव वर्तेते। अतः स्मृतिन्याय[2]प्रसिद्धं[2] प्रधानमेव जगत्कारणं वेदान्तवाक्यैः प्रतिपाद्यते ;

[सिद्धान्तः ; परस्माद्ब्रह्मण एव जगत्सृष्टिः इति वेदान्ततात्पर्यदार्ढ्यम् ]

इति प्राप्ते, प्रचक्ष्महे—कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः। 'च'शब्दः तुशब्दार्थे। '[3]सर्वज्ञात् सर्वेश्वरात्[3] सत्यसङ्कल्पात् निरस्तनिखिलदोषगन्धात् [4]परस्मात् ब्रह्मण[4] एव जगदुत्पद्यते' इति निश्चेतुं शक्यते।

कुतः ?

आकाशादिषु कारणत्वेन यथाव्यपदि[5]ष्टस्योक्तेः[5]—सर्वज्ञत्वादिविशिष्टत्वेन,

'जन्माद्यस्य यतः' (ब्र.सू. 1-1-2)

इत्येवमादिषु प्रतिपादितं ब्रह्म, 'यथाव्यपदिष्टम्' इत्युच्यते। तस्य [6]एकस्यैव आकाशादिषु[6] कारण[7]त्वेनोक्तेः[7]।

'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' (तै.उ.आन. 1-2)

'तत् तेजोऽसृजत' (छां.उ. 6-2-3)

---

एवंशब्देन कारणवाक्यस्थसदसदादिशब्दानां परमात्मनि असामञ्जस्यं प्रधाने सामञ्जस्यं च पूर्वोक्तत्वात् परामृश्यते। **ईक्षणादयः** इति, 'आदि'शब्देन, 'स तपोऽतप्यत' 'इदं सर्वमसृजत' इत्यादिवाक्यप्रतिपन्नपूर्वाकारपर्यालोचना-प्रयत्नौ विवक्षितौ। **कारणगता** इति। 'अव्याकृत'शब्देन प्रथमत एव अचेतनस्य प्रतिपन्नतया, पश्चादवगतं 'पश्यन् चक्षुः' इत्यादिवाक्योक्तं चेतयितृत्वं चक्षुराद्युत्पादनौन्मुख्याभिप्रायम्। एवं प्रकरणान्तरेष्वपि ईक्षणोक्तेः धर्मिवाचिपदनिर्देशपूर्वकत्वात्, धर्मिवाचिपदानां च सर्वशाखाप्रत्ययन्यायेन (पू.मी. 2-4-9) 'अव्याकृत'शब्द-तुल्यार्थत्वात्, तद्गताः ईक्षणादयः सृष्ट्यौन्मुख्याभिप्रायाः इत्यर्थः।

**ब्रह्मण एव** इति, एवकारेण 'न' इति पदानुषङ्गफलितप्रधानप्रतिक्षेपः सूचितः।

**आकाशादिषु कारणत्वेन**—आकाशादीनां कारणत्वेन, इत्यर्थः। **तस्माद्वेति**। स्वतश्चेतनैकान्तात्मशब्दोपेतप्रकरणस्मारणार्थम् 'आकाशादिषु' इत्युक्तमिति भावः। **इत्यादिषु**

---

[1] सृष्ट्युन्मुखा—था. [2] सिद्धं—थ. [3] सर्वेश्वरात्—थ. [4] ब्रह्मणः—थ. [5] ष्टोक्तेः—थ. [6] एकस्यैव—इ. [7] त्वेन यथा व्यपदिष्टस्योक्तेः—थ.

इत्यादिषु सर्वज्ञं ब्रह्मैव कारणत्वेनोच्यते। तथा हि—

'सत्यं ज्ञानमनन्तं ब्रह्म ........

सोऽश्नुते सर्वान् कामान्, सह ब्रह्मणा विपश्चिता' (तै.उ.आन. 1-1, 2)

इति प्रकृतं विपश्चिदेव ब्रह्म, 'तस्माद्वा एतस्मात्' इति परामृश्यते। तथा,

'तदैक्षत बहु [1]स्याम्[1]' (छां.उ. 6-2-3)

इति निर्दिष्टं सर्वज्ञं ब्रह्मैव, 'तत् तेजोऽसृजत' इति परामृश्यते। एवं सर्वत्र सृष्टिवाक्येषु द्रष्टव्यम्। अतः—ब्रह्मैककारणं जगत्—इति निश्चीयते॥ १४॥

[असत्पदघटितकारणवाक्यस्य दार्ढ्यविघटकत्वशङ्का-समाधाने]

ननु—

'असद्वा इदमग्र आसीत्' (तै.उ.आन. 7-1)

इति, असदेव कारणत्वेन व्यपदिश्यते; तत् कथमिव सर्वज्ञस्य सत्यसङ्कल्पस्य ब्रह्मण एव कारणत्वं निश्चीयते?—इति। अत आह—

## १२४ समाकर्षात्॥ १-४-१५॥

---

इति, 'आदि'शब्देन, मुण्डकोपनिषदादि विवक्षितम्। **सत्यं ज्ञानमिति**। कारणत्वप्रतिपादनात् प्रागेव, कारणत्वधर्मिणः प्रथमत एव चेतनत्वप्रतिपादनं दर्शितम्। **प्रकृतं विपश्चिदेवेति**। 'सम्भूतः' इति सृष्टिप्रतिपादनात्पूर्वमेव प्रयुक्तः स्वतश्चेतनैकान्तः 'आत्म'शब्दः प्रबलतरः; ततः पूर्वमेव तस्य कारणस्य विपश्चित्त्वप्रतिपादनात् 'आत्मशब्दस्य क्लिष्टनिर्वाहशङ्का दूरोत्सारिता' इत्यभिप्रायः। **तथेति**। 'तत्तेजोऽसृजत' इति कारणत्वप्रतिपादनात् पूर्वमेव, 'तदैक्षत' इति ईक्षितृत्वप्रतिपादनात्, ईक्षणानुगुणं कारणत्वं नेयम्; न तु कारणत्वानुगुणमीक्षितृत्वं नेयम् इत्यर्थः। **द्रष्टव्यमिति**। 'एक एवाऽग्र आसीत्। स ईक्षत' इत्यादिषु सृष्ट्युक्तेः पूर्वमेव परमचेतन-तदसाधारणेक्षणादिकमवगन्तव्यमित्यर्थः। उपक्रमस्थबहुश्रुतिविरोधात् अव्याकृतश्रुतिमात्रदौर्बल्यमर्थसिद्धम्॥ १४॥

---

[सूत्रार्थः। **समाकर्षात्**—('सोऽकामयत....इदं सर्वमसृजत' इति निर्दिष्टस्य जगत्स्रष्टुः ब्रह्मण एव, 'असद्वा' इत्यत्रापि) अनुवर्त्य विशेष्यतया ग्रहणात्, (नाम-रूपासंसृष्टकारणावस्थं ब्रह्मैव, 'असत्'शब्देनोच्यते; न असत्कारणतावादः।)]

**असद्वा इदमित्यत्र सर्वज्ञं सर्वकारणम्।**
**समाकृष्य ब्रवीतीति ब्रह्मैवाऽत्र हि कारणम्॥ (ब्र.प.मा. १२४)**

---

[1] स्यां प्रजायेय—थ.

'असद्वा इदमग्र आसीत्' (तै.उ.आन. 7–1)

इत्यत्रापि, विपश्चित् आनन्दमयं सत्यसङ्कल्पं ब्रह्मैव समाकृष्यते ।

कथम् ?

'तस्माद्वा एतस्माद्विज्ञानमयात्, अन्योऽन्तर आत्माऽऽनन्दमयः' (तै.उ.आन. 5–2)

'सोऽकामयत । बहु स्यां प्रजायेयेति' (तै.उ.आन. 6–2)

'इदं सर्वमसृजत । यदिदं किं च । तत् सृष्ट्वा । तदेवानुप्राविशत् । तदनु प्रविश्य । सच्च त्यच्चाऽभवत्' (तै.उ.आन. 6–2, 3)

इत्यादिना ब्राह्मणेन, आनन्दमयं ब्रह्म सत्यसङ्कल्पं सर्वस्य स्रष्टृ, सर्वानुप्रवेशेन सर्वात्मभूतम् अभिधाय,

'तदप्येष श्लोको भवति' (तै.उ.आन. 6–3)

इति उक्तस्यार्थस्य सर्वस्य साक्षित्वेन हि ! उदाहृतः अयं श्लोकः—

'असद्वा इदमग्र आसीत्' (तै.उ.आन. 7–1)

इति । तथा, उत्तरत्र—

'भीषास्माद्वातः पवते' (तै.उ.आन. 8–1)

इत्यादिना, तदेव ब्रह्म समाकृष्य, सर्वस्य प्रशासितृत्व-निरतिशयानन्दत्वादयः अभिधीयन्ते । अतः अयं मन्त्रः, तद्विषय एव । तदानीं नाम-रूपविभागाभावेन, तत्सम्बन्धितया अस्तित्वाभावात्, ब्रह्मैव असच्छब्देनोच्यते ।

'असदेवेदमग्र आसीत्' (छां.उ. 3-19–1)

इत्यत्राऽपि अयमेव निर्वाहः ।

---

**समाकृष्यते** इति। 'असद्वा इदम्' इत्यादिना समाकर्षः प्रतिज्ञातः । 'ब्रह्मणा विपश्चिता' 'अन्योऽन्तर आत्माऽऽनन्दमयः' 'सोऽकामयत' इति वाक्यान्यभिप्रेत्य विपश्चित्त्वादिकमुक्तम् ।

**तथा उत्तरत्रेति** । 'भीषाऽस्मात्' इत्यत्र अस्मादित्ययं शब्दः ब्रह्मण आकर्षकः ; प्रकृतपरामर्शित्वात् ।

**असदेवेति** । तत्रापि 'असद्वा इदम्' इति वाक्यस्थकारणविषयासच्छब्दैकार्थ्यात् सत्यसङ्कल्पत्वादिकं सिद्धम्, इत्यभिप्रायः । तत्र असच्छब्दोक्तस्य 'तत् सदासीत्' इति अनुकर्षप्रदर्शनं सच्छब्दस्य चिदचित्साधारण्यनिबन्धनम् । सच्छब्दो हि तुच्छव्यावर्तकः ; न तु अचिद्व्यावर्तकः । कारणावस्थायामप्यसद्व्यावृत्तिर्हि आरम्भणाधिकरणावसेया ।

[अव्याकृतपदस्य तच्छरीरकब्रह्मपरतामाश्रित्य प्रधानकारणतानिरासः]

यदुक्तम्—

'तद्धेदं तर्ह्यव्याकृतमासीत्' (बृ.उ. 3-4-7)

[1]इति[1], प्रधानमेव जगत्कारणत्वेनाभिधीयते— इति,

[2]नेत्युच्यते[2]। तत्रापि 'अव्याकृत'शब्देन अव्याकृतशरीरं ब्रह्मैव, अभिधीयते।

'स एष इह प्रविष्ट आनखाग्रेभ्यः, ........ ।

पश्यंश्चक्षुः श्रृण्वन् श्रोत्रं मन्वानो मनः' (बृ.उ. 3-4-7)

'आत्मेत्येवोपासीत' (बृ.उ. 3-4-7)

इत्यत्र, 'स एष' इति तच्छब्देन, 'अव्याकृत'शब्दनिर्दिष्टस्य अन्तः प्रविश्य प्रशासितृत्वेन अनुकर्षात्,

'तत् सृष्ट्वा । तदेवाऽनुप्राविशत्' (तै.उ.आन. 6-2)

'अनेन जीवेनात्मनाऽनुप्रविश्य नाम-रूपे व्याकरवाणि' (छां.उ. 6-3-2)

इति, स्रष्टुः सर्वज्ञस्य [3]परस्य ब्रह्मणः[3], [4]कार्यानुप्रवेश[4]नामरूपव्याकरणप्रसिद्धेश्च।

'अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा' (तै.आर. 3-11-3)

इति नियमनार्थत्वात् अनुप्रवेशस्य, प्रधानस्याचेतनस्य एवंरूपोऽनुप्रवेशो न सम्भवति। अतः, अव्याकृतम्—अव्याकृतशरीरं ब्रह्म ।

'तन्नामरूपाभ्यां व्याक्रियत' (बृ.उ. 3-4-7)

---

**यदुक्तमिति,** 'तद्धेदम्' इत्यादिश्रुतावप्यनुकर्षं दर्शयति ।

**तत्सृष्ट्वेति,** 'तद्धेदम्' इति श्रुत्युक्तानुप्रवेश-नामरूपव्याकरणयोः परमात्मधर्मत्वेन प्रसिद्धिमाह ।

**अन्तःप्रविष्ट** इत्यादि। 'पश्यन् चक्षुः' 'श्रृण्वन् श्रोत्रम्' इति वाक्यात्, 'व्याकरवाणि' इति, सङ्कल्पश्रवणाच्च प्रधानव्यावृत्तिसिद्धावपि, अधिकहेतुज्ञापनार्थं परिहारान्तरमुक्तम्। वेदान्तवाक्यविशेषविवक्षितः अनुप्रवेशविशेषः [प्रधानस्य] न सम्भवति इत्यर्थः। अनुप्रविश्य नियमनस्य पुरुषव्यावर्तनक्षमत्वेऽपि, अत्राऽपेक्षितं प्रधानव्यावर्तनमात्रमिति, प्रधानमात्रस्य तदसम्भवोक्तिः। **तदेवेति**। असच्छब्दोक्तकारणविषयेण, 'तदात्मानं स्वयमकुरुत' इत्यनेनैकार्थ्यात् इति भावः।

---

[1] इत्यत्र—वा. [2] तन्नेत्युच्यते—थ. [3] ब्रह्मणः—इ. [4] कार्यानुप्रवेशेन—द.

इति, 'तदेव अविभक्तनामरूपं [1]ब्रह्म सर्वज्ञं[1] सत्यसङ्कल्पं स्वेनैव विभक्तनामरूपं स्वयमेव व्याक्रियत' इत्युच्यते ।

[2]एवं च[2] सति, ईक्षणादयः मुख्या एव भवन्ति । 'ब्रह्मात्म'शब्दावपि, निरतिशयबृहत्त्वनियमनार्थव्यापित्वाभावेन, प्रधाने न कथंचिदुपपद्येते । अतः ब्रह्मैककारणं जगत् इति स्थितम् ॥ १५ ॥

॥ इति कारणत्वाधिकरणम् ॥ ४ ॥

---

एवं चेति । असदव्याकृतादिशब्दाः ईक्षणादयश्च, ब्रह्मणि उपपन्नाः ; प्रधाने तु ईक्षणादयः अनुपपन्नाः इति वैषम्यं दर्शितं भवति ॥ १५ ॥

[सूत्राणि — १. कारणत्वेन,  २. समाकर्षात्]

॥ इति कारणत्वाधिकरणम् ॥ ४ ॥

---

[1] सर्वज्ञं ब्रह्म—थ.  [2] एवं—द.

## ३२. जगद्वाचित्वाधिकरणम् ॥ १-४-५ ॥ (सू. 16–18)

[अधिकरणार्थः—जगत् परब्रह्मकारणकमेव ; न पुरुषपदवाच्यजीवकारणकम् ।]

[बालाकिविद्या (कौषी.उ. 4)]

# १२५. जगद्वाचित्वात् ॥ १-४-१६ ॥

[सङ्गतिप्रदर्शनम्]

[वेदान्तवाक्येषु चेतनकारणत्वबोधेऽपि जीवपरत्वेन निर्वाह्यत्वशङ्का]

**पुनरपि साङ्ख्यः[1] प्रत्यव तिष्ठते[2]—यद्यपि वेदान्तवाक्यानि, चेतनं जगत्कारणत्वेन प्रतिपादयन्ति ; तथापि तन्त्रसिद्धप्रधान-पुरुषातिरिक्तं वस्तु जगत्कारणं वेद्यतया न तेभ्यः प्रतीयते। तथा हि ! भोक्तारमेव पुरुषं कारणं वेद्यतया अधीयते कौषीतकिनः बालाक्यजातशत्रुसंवादे—**

**'ब्रह्म ते ब्रवाणि'** (कौषी.उ. 4–4)

**इत्युपक्रम्य,**

'स वै वेदितव्यः' इत्यन्तं विषयवाक्यं दर्शितम् । कारणवाक्यप्रतिपाद्यं, किं प्रकृत्यधिष्ठाता पुरुषः ? उत परमात्मा ? इति संशयस्वरूपम् अर्थसिद्धम् । तदर्थं बालाक्यजातशत्रुसंवादे वेदितव्यतया उपदिष्टं ब्रह्म, किं जीवः ? उत परमात्मा ? इति । किम् 'एतेषां पुरुषाणां कर्ता' इति निर्दिष्टः कर्ता किं जीवः ? उत परः ? इति । 'यस्य वैतत् कर्म' इति 'कर्म'शब्दः किं पुण्यापुण्यवाची ? उत जगद्वाची ? इति । किम् एतच्छब्दसामानाधिकरण्येन 'कर्म'शब्दस्य जगद्वाचित्वं युक्तम् ? उत 'एतेषां पुरुषाणां कर्ता' इति पृथङ्निर्देशावैयर्थ्याय पुण्यापुण्यवाचित्वं युक्तम् ? इति 'तौ ह सुप्तं पुरुषम्' इत्याद्यवगते जीवमुख्यप्राणलिङ्गे, पुण्यापुण्यवाचिताम् उपोद्बलयतः ? उत न ? इति । किम् एते लिङ्गे जीवबोधनार्थे ? उत 'क्व वा' इत्यादि प्रश्न प्रतिवचनाभ्यां जीवातिरिक्तब्रह्मबोधनपरे ? [इति] ।

[सूत्रार्थः । (कौषीतक्यां 'स वै वेदितव्यः' इति ज्ञेयतया उपदिष्टः परमपुरुष एव ; न जीवाख्यः पुरुषः) **जगाद्वचित्वात्**—(तद्वाक्यपठितस्य 'यस्य वैतत्कर्म' 'इति 'कर्म'शब्दस्य) सृज्यमानसमस्तप्रपञ्चवाचकत्वात् ।]

यस्य वैतत्कर्म चेति श्रुतं कर्म जगद्भवेत् ।
पुण्यादिवशगो जीवः कथ्यते नात्र हि श्रुतौ ॥ (ब्र.प.मा. १२५)

[1] साङ्ख्याः—इ. [2] तिष्ठन्ते—इ.

'यो वै बालाके एतेषां पुरुषाणां कर्ता, यस्य वैतत् कर्म,
स वै वेदितव्यः' (कौषी.उ. 4-26)

इति ॥

[पूर्वपक्षः]

[तत्र क्षेत्रज्ञस्यैव वेदितव्यतोक्तिः]

उपक्रमे वक्तव्यतया बालाकिना उपक्षिप्तं ब्रह्म [1]अजानते[1] तस्मा एव, अजातशत्रुणा 'स वै वेदितव्यः' इति, ब्रह्म उपदिश्यते। 'यस्य [2]वैतत्[2] कर्म' इति कर्मसम्बन्धात्, 'प्रकृत्यध्यक्षः भोक्ता पुरुषः, वेद्यतयोपदिष्टं ब्रह्म' इति निश्चीयते, न [3]अर्थान्त[3]रम् ; तस्य कर्मसम्बन्धानभ्युपगमात्। कर्म च [4]पुण्यापुण्य[4]लक्षणं क्षेत्रज्ञस्यैव सम्भवति ॥

[क्षेत्रज्ञेतरस्य वेदितव्यत्वोक्तिशङ्का]

न च वाच्यम्—'क्रियत इति कर्म' इति व्युत्पत्त्या, प्रत्यक्षादिप्रमाणोपस्थापितं जगत्, 'एतत्कर्म' इति निर्दिश्यते। 'यस्य एतत् कृत्स्नं जगत् कर्म, [5]स[5] वेदितव्यः' इति, क्षेत्रज्ञात् अर्थान्तरमेव प्रतीयते—इति ;

---

यदा जीवबोधनार्थे ; तदा, तयोः पुण्यापुण्यवाचित्वोत्तम्भकत्वेन, पृथङ्निर्देशवैयर्थ्याय 'कर्म'शब्दस्य पुण्यापुण्यवाचितोपपत्तेः, तत्सम्बन्धी कर्ता पुरुष इति, बालाक्यजातशत्रुसंवादस्य जीवपरत्वात्, 'सर्ववेदान्तवेद्यः भोक्ता पुरुषः' इति फलितं स्यात्।

यदा ब्रह्मप्रतिबोधनपरे ; तदा, तयोर्लिङ्गयोः पुण्यापुण्यवाचित्वोत्तम्भकत्वाभावात् एतच्छब्दसामानाधिकरण्येन इह 'कर्म'शब्दस्य जगद्वाचित्वात्, तत्कर्ता जीवविलक्षण इति बालाक्यजातशत्रुसंवादस्य परमात्मविषयतया, सर्ववेदान्तवेद्यः परमात्मा—इति सिध्यति ॥

**उपक्रम** इति। प्रतिवचनस्य उपक्रमस्थब्रह्मविषयत्वेन, ब्रह्मणोऽन्यस्य जीवस्य कर्मसम्बन्धपरत्वशङ्का निरस्ता। **न अर्थान्तरम्**—प्रकृतिवत् न ईश्वरोऽपीत्यर्थः। **कर्म चेति**। 'कर्म'शब्दः असङ्कुचितवृत्तिः पापमपि वक्तीति, कर्माराध्यपरत्वमयुक्तम् इति भावः। अत्र आनन्दमयाधिकरणाक्षेपः फलितः। पादसङ्गतिः पूर्ववत् ; भोक्तृपुरुषप्रतिपादनच्छायानुकारिवाक्यविषयत्वात्। कर्तृत्वस्य जीवे सम्भवरूपपूर्वपक्षहेतुवशात् अयोगव्यवच्छेदाक्षेपः फलितः।

---

[1] जानते—द. [2] चैतत्—इ. [3] तत्त्वा—थ. [4] पुण्य—न. [5] स वै—वा.

[उक्तशङ्कापरिहारः]

'यो वै बालाके एतेषां पुरुषाणां कर्ता, यस्य वैतत् कर्म' (कौषी.उ. 4-26)

इति, पृथङ्निर्देशवैयर्थ्यात्। 'कर्म'शब्दस्य च, लोकवेदयोः पुण्यपापरूपे एव कर्मणि प्रसिद्धेः॥

[जीवे सर्वकर्तृत्वोपपत्तिः]

तत्तद्भोक्तृकर्मनिमित्तत्वात् जगदुत्पत्तेः,

'एतेषां पुरुषाणां कर्ता' (कौषी.उ.4-26)

इति च भोक्तुरेव उपपद्यते।

तदयमर्थः—एतेषाम् आदित्यमण्डलाद्यधिकरणानां क्षेत्रज्ञभोग्य-भोगोपकरण-भूतानां पुरुषाणां यः कारणभूतः, एतत्कारणभावहेतु[1]भूतं पुण्या[1]पुण्यलक्षणं च कर्म यस्य, स वै वेदितव्यः; तत्स्वरूपं प्रकृते[2]र्विविक्तं[2] वेदितव्यम्—इति॥

[जीवत्वस्य प्रकारान्तरेणोपपत्तिः]

तथा, उत्तरत्र—

'तौ ह सुप्तं पुरुषमीयतुः' (कौषी.उ. 4-30)

'[3]तं यष्ट्या[3] चिक्षेप' (कौषी.उ. 4-33)

इति सुप्तपुरुषागमन-यष्टिघातोत्थापना[4]दीनि च[4], [5]भोक्तृ[5]प्रतिपादने एव [6]लिङ्गानि[6]।

तथा, उपरिष्टादपि भोक्तैव प्रतिपाद्यते—

'तद्यथा [7]श्रेष्ठी[7] स्वैर्भुङ्क्ते, [8]यथा वा[8] स्वाः श्रेष्ठिनं भुञ्जन्ति, एवमेवैष प्रज्ञात्मा एतैरात्मभिर्भुङ्क्ते,....एवमे[9]वैत आत्मानः[9] एनं भुञ्जन्ति' (कौषी.उ. 4-44)

[10]इति। तथा[10],

---

**कर्मणि प्रसिद्धेरिति**। रूढिर्हि! योगाद्बलीयसी, इत्यर्थः।

**तदयमर्थ** इति। कर्तृत्वे हेतुः कः? इत्यपेक्षायां 'यस्य वैतत् कर्म' इति कर्मित्वोपपादनम्। शुद्धस्वरूपं च अविदितम्; कर्मसम्बन्धस्तु उपलक्षणम्, इत्यर्थः।

---

1 भूतपुण्या—न. 2 विभक्तं—द. 3 तत उ हैनं यष्ट्या—पा. 4 दीनि—न. 5 भोक्तृत्व—न, वा. 6 लिङ्गानि च—वा. 7 श्रेष्ठ्यैः—इ. 8 यथा—थ. 9 वैत आत्मानम्—अ, इ. वैतमात्मानम्—वा. आत्मानम्—द. 10 तथा—अ.

'क्वैष एतद्बालाके पुरुषोऽशयिष्ट ? क्व वा एतदभूत् ? कुत एतदागात् ?'
(कौषी.उ. 4-35)

इति पृष्टमर्थमजानते तस्मै, स्वयमेव अजातशत्रुरुवाच—

'हिता नाम हृदयस्य नाड्यः.........तासु तदा भवति'। (कौषी.उ. 4-38)

'यदा सुप्तः स्वप्नं न कथंचन पश्यति, अथाऽस्मिन् प्राण एवैकधा भवति ।
तदैनं वाक् सर्वैर्नामभिः सहा[1]प्येति ।.........मनः सर्वैर्ध्यानैः सहाप्येति[1]'
(कौषी.उ. 4-39)

'स यदा प्रतिबुध्यते, यथाऽग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्,
एवमेवैतस्मादात्मनः प्राणा [2]यथायतनं[2] [3]विप्रतिष्ठन्ते[3], प्राणेभ्यो देवाः,
देवेभ्यो लोकाः' (कौषी.उ. 4-40)

इति, सुषुप्त्याधारतया स्वप्नसुषुप्तिजागरितावस्थासु वर्तमानं, वागादिकरणाप्ययोद्गम-[4]स्थानमेव[4] जीवात्मानम्,

'अथाऽस्मिन् प्राण एवैकधा भवति' (कौषी.उ 4-39)

इत्युक्तवान् ।

'अस्मिन् जीवात्मनि, प्राणभृत्त्वनिबन्धनः अयं 'प्राण'शब्दः ;

'स यदा प्रतिबुध्यते' (कौषी उ. 4-40)

इति, 'प्राण'शब्दनिर्दिष्टस्य प्रबोधश्रवणात् । मुख्यप्राणस्य ईश्वरस्य च, सुषुप्ति-प्रबोधयोः असम्भवात् ॥

---

हिता नामेत्यादिवाक्यम्, सुषुप्तिस्थानं नाड्यः ; न परमात्मा इत्यभिप्रायेणोदाहृतम् । तदानीं 'तदा'शब्दः सुषुप्तिवेलापरः स्यात् । सर्वैर्नामभिः..........सहाप्येति इति । तत्तत्करणम् उपरतस्वस्वव्यापारम्, इत्यर्थः । एत........प्राणा इति 'प्राण'शब्दः पञ्चवृत्तिप्राणपरः इति पूर्वपक्षी मन्यते । देवाः—इन्द्रियाणि । लोकाः—ज्ञानं, विषयो वा । सुषुप्त्याधारता—सुषुप्तिमत्त्वम् । सुषुप्त्याधारतया उक्तवान् इत्यन्वयः । [अप्ययः—लयः स्वस्वव्यापारोपरति-रूपः । उद्गमः—स्वस्वव्यापारप्रवृत्तिः ।]

अस्मिन्नित्यादि, 'प्राण'शब्दस्य प्रथमान्तत्वशङ्कां, मुख्यप्राण-परमात्मपरत्वशङ्कां च निराकर्तुम् ॥

---

[1] प्येति—द. [2] यथायथं—ई. [3] प्रतिष्ठन्ते—थ. [4] स्थानमेनं—इ, क. स्थानमेनमेव-वा. स्थायतनमेनमेव—न.

अथवा, 'अस्मिन् प्राणे' इति, व्यधि[1]करणे सप्तम्यौ[1] ; अस्मिन् आत्मनि वर्तमाने [2]प्राणे एव[2], एकधा भवति वागादिकरणग्रामः, इति। 'प्राण'शब्दस्य मुख्यप्राण-परत्वेऽपि, जीव एव अस्मिन् प्रकरणे प्रतिपाद्यते ; स्वतः प्राणस्य जीवोपकरणत्वात् ॥

[पूर्वपक्षोपसंहारः]

अतः, वक्तव्यतया उपक्रान्तं ब्रह्म, पुरुष एवेति, तद्व्यतिरिक्तेश्वरा[3]सिद्धिः[3] । कारणगताश्च ईक्षणादयः चेतनधर्माः, अस्मिन्नेव उपपद्यन्त इति, एतदधिष्ठितं प्रधानमेव जगत्कारणम् ॥

[सिद्धान्तारम्भः]

[एतत्संवादप्रतिपाद्यता पुरुषोत्तमस्यैव ; न जीवस्य]

[4]इति[4] प्राप्ते, प्रचक्ष्महे—जगद्वाचित्वात्। अत्र पुण्यापुण्यपरवशः क्षुद्रः क्षेत्रज्ञः, स्वस्मिन् प्रकृतिधर्माध्यासेन तत्परिणामहेतुभूतः पुरुषः, नाऽभिधीयते। अपि तु निरस्त-समस्ताविद्यादिदोषगन्धः, अनवधिकातिशयासङ्ख्येयकल्याणगुणनिधिः, निखिलजगदेक-कारणभूतः, पुरुषोत्तमः अभिधीयते ॥

[सौत्रहेतुवाचकशब्दार्थविवरणम् ]

कुतः ?

'यस्य [5]वैतत्[5] कर्म' (कौषी.उ. 4-18)

इत्यत्र, एतच्छब्दान्वितस्य 'कर्म'शब्दस्य, परमपुरुषकार्यभूतजगद्वाचित्वात्। एतच्छब्दो हि ! अर्थ-प्रकरणादिभिः असङ्कुचितवृत्तिः, अविशेषेण प्रत्यक्षादिप्रमाणोपस्थापित-निखिलचिदचिन्मिश्रजगद्विषयः ॥

---

**प्रकृतिधर्माध्यासेन**—स्वस्मिन् प्रकृतिगतकर्तृत्वाध्यासेन, इत्यर्थः। **नाऽभिधीयते** इत्यन्तेन 'न' इति पदानुषङ्गसिद्धार्थ उक्तः । **अपि तु** इति, सौत्रहेतुबलसिद्धं प्रतिज्ञांशमाह ।

**अर्थप्रकरणादिभिरिति** 'अर्थ'शब्देन, स्ववाक्यस्थपदान्तरान्वययोग्यत्वं विवक्षितम् । **प्रकरणम्**—प्राचीनवाक्यनिचयः । **आदि**शब्देन उपरितनवाक्यानि विवक्षितानि । यद्वा पूर्वापरवाक्यजातं—**प्रकरणम्** । **आदि**शब्देन तात्पर्यलिङ्गानि विवक्षितानि । **असङ्कुचितेति** । सङ्कोचकाभावादिति भावः । **निखिलेति** एतच्छब्दः संनिहितपरामर्शी । संनिधिश्च बुद्धिस्थितिः । सा च प्रकरणतो वा, प्रकृतार्थान्तरसम्बन्धित्वेन वा, प्रसिद्धितो वा भवति । तत्र प्रकरणादिना सङ्कोचानुपपत्तेः, परिशेषात् प्रसिद्धार्थपरामर्शित्वे सति, तत्रापि संकोचका भावात् इति भावः ।

---

[1] करणसप्तम्यौ-द. [2] प्राणे-बा. [3] सिद्धेः-ठ, थ, द. [4] एवं—थ. [5] चैतत्-आ, इ.

[पुण्यापुण्ययोः क्रियासामान्यस्य वा 'कर्म'पदावाच्यत्वम्]

न च पुण्यापुण्यलक्षणं कर्म, अत्र 'कर्म'शब्दाभिधेयम्;

'ब्रह्म ते ब्रवाणि' (कौषी.उ. 4-4)

इत्युपक्रम्य, ब्रह्मत्वेन बालाकिना निर्दिष्टानाम् आदित्यमण्डलाद्यधिकरणानां पुरुषाणाम् अब्रह्मत्वेन,

'मृषा वै [1]खलु[1] मा संवादयिष्ठाः' (कौषी.उ. 4-25)

इति, तम् [2]अब्रह्म[2]वादिनम् अपोह्य, तेनाविदितब्रह्म[3]ज्ञापनाय[3], अजातशत्रुणा इदं वाक्यमवातारितम्—

'यो वै बालाके' (कौषी.उ. 4-26)

इत्यादि। पुण्या[4]पुण्यलक्षण[4]कर्म[5]सम्बन्धिनः[5] [6]आदित्याद्यधि[6]करणाः तत्सजातीयाश्च पुरुषाः, [7]तेनैव[7] विदिताः इति, तदविदितपुरुषविशेषज्ञापनपरः अयं 'कर्म'शब्दः, न पुण्यापुण्यमात्रवाची, [8]क्रियामात्र[8]वाची वा; अपि तु कृत्स्नस्य जगतः कार्यत्ववाची। एवमेव खलु! [9]अविदितोऽर्थः[9] उपदिष्टो भवति ॥

[पुरुषस्य चेतनाख्यस्य वेदितव्यत्वोपदेशानौचित्यम्]

पुरुषस्य [10]कर्मसम्बन्धो[10]पलक्षितस्वाभाविकस्वरूपस्य अज्ञातस्य, [11]वेदितव्यत्वो[11]-पदेशे च, लक्षणा; [12]कर्मसम्बन्ध[12]मात्रस्यैव वेदितव्यस्वरूपलक्षणत्वात्; 'यस्य कर्म, स वेदितव्यः' इत्येतावतैव तत्सिद्धेः,

'यस्य [13]वैतत्[13] कर्म' (कौषी.उ. 4-26)

इति, एतच्छब्दवैयर्थ्यं च ॥

---

चिदाचिन्मिश्रेति जगदेकदेशभूतस्य आदित्यादेः प्रकृतत्वात्, एकदेशि च जगत् तद्द्वारा बुद्धिस्थम्। अतश्च जगत्परामर्शो युक्त इति भावः ॥

**क्रियामात्रवाची वा** इति, दृष्टान्ततयोक्तम्। यथा वेदितव्यतया प्रकृतस्य, प्राणनामभिः आमन्त्रणाश्रवणादिना प्राणवैलक्षण्यस्य स्फुटत्वात्, प्रकरणस्य बालाक्यविदितपुरुषविशेषज्ञापन-प्रवृत्तत्वाच्च, मुख्यप्राणस्य लोकविदितत्वाच्च, 'कर्म'शब्दः न मुख्यप्राणव्यापारभूतक्रियामात्रवाची; एवमेव पुण्यापुण्यमात्रवाची न भवति इत्यर्थः। **जगतः कार्यत्ववाचीति**, कार्यभूतजगद्वाची-त्यर्थः। **[कर्मशब्दस्य]** क्रियते इति अवयवार्थस्य प्रवृत्तिनिमित्तत्वज्ञापनाय इदमुक्तम् ॥

**पुरुषस्येति**। कर्मसम्बन्धिवाचिपदस्य कर्मरहितोपस्थापकत्वम् अमुख्यम्। न च

---

1 किल—पा. 2 ब्रह्म—द. 3 ज्ञानाय—च, ञ, ठ. 4 पुण्य—द. 5 सम्बन्धिनि—थ. सम्बन्धित्वं—द. 6 आदित्याधि—थ. 7 तेन—थ. 8 क्रिया—थ. 9 अविदितार्थः—थ. 10 कर्मसम्बन्धित्वो—इ. 11 वेदितव्यतयो—थ. 12 कर्मसम्बन्धित्व—थ. 13 चैतत्—वा

[मिथः कर्तृत्व-कर्मत्वयोः पृथङ्निर्देशाशयः]

'य एतेषां कर्ता, यस्य वैतत् कर्म' इति पृथङ्निर्देशस्य च, अयमभिप्रायः— ये त्वया ब्रह्मत्वेन निर्दिष्टाः पुरुषाः, तेषां यः कर्ता—ते यत्कार्यभूताः, किं विशिष्याभिधीयते ? कृत्स्नं जगत् यस्य कार्यम्—उत्कृष्टाः, [1]अपकृष्टाः, चेतना अचेतनाश्च[1] सर्वे पदार्थाः यत्कार्यत्वे तुल्याः, सः परमकारणभूतः पुरुषोत्तमो वेदितव्यः—इति ॥

[जीवीयकर्मणां जगत्सृष्टौ हेतुत्वेऽपि न वेदितव्यता जीवस्य]

जगदुत्पत्तेः जीवकर्मनिबन्धनत्वेऽपि, न जीवः स्वभोग्य-भोगोपकरणादेः स्वयमुत्पादकः ; अपि तु स्वकर्मानुगुण्येन ईश्वरसृष्टं सर्वं भुङ्क्ते । अतः न तस्य पुरुषान् प्रति कर्तृत्वमुपपद्यते । अतः सर्ववेदान्तेषु परमकारणतया प्रसिद्धं परं ब्रह्मैव, अत्र वेदितव्यतया उपदिश्यते ॥ १६ ॥

## १२६. जीव-मुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥ १-४-१७ ॥

अवस्थाद्वयसाधारणात्मशब्दोऽपि प्रयुक्तः । 'यस्य कर्म स वेदितव्यः' इति हि निर्देशः । अतो लक्षणा इत्यर्थः ॥

'य एतेषां पुरुषाणां कर्ता' इति निर्देशः, बालाकिनोक्तानां कार्यत्वेन अब्रह्मत्वज्ञापनार्थम् । यस्य वैतत् कर्मेति, तेषां कर्तेति प्रतिपादनमात्रेण तदुक्तादित्यादिभ्योऽप्यधिकहिरण्यगर्भादिदेवताविशेषसमन्वितकृत्स्नजगत्कारणत्वं न सिद्ध्यतीत्यत उक्तम् ।

स्वकर्मा.........भुङ्क्ते इति । न हि घटादिकर्तृत्वं विनियोगाद्दृष्टवतः पुरुषस्य ; अपि तु कुलालस्य, इति भावः । [तस्य—जीवस्य] । अतः.........प्रसिद्धमिति ॥ 'एतेषां यः कर्ता, यस्य वैतत् कर्म' इति यच्छब्देन अनुवादरूपत्वप्रतिपत्तेः 'यतो वा इमानि' इत्यादिष्विव, सर्ववेदान्तप्रसिद्धः परमपुरुष एवात्र कारणम् अनूद्यते इति भावः ॥ १६ ॥

---

[सूत्रार्थः । जीवलिङ्गात्—'प्रज्ञात्मा एतैरात्मभिर्भुङ्क्ते' इति जीवासाधारणात् भोक्तृत्वरूपात् लिङ्गात्, (तथा) मुख्यप्राणलिङ्गात्—'प्राण एवैकधा भवति' इत्येवंरूपात् मुख्यप्राणासाधारणात् लिङ्गात्, न— स वै वेदितव्यः' इति निर्दिष्टः, न परमात्मा ; किन्तु जीव एव, इति चेत्—एवमाक्षेपे प्राप्ते, तत्—तदाक्षेपणम्, व्याख्यातम्—प्रतर्दनविद्यायां विशेषतः परिहृत्य विवृतम् ।

जीवलिङ्गात् प्राणलिङ्गात् कारणं ब्रह्म नो भवेत् ।
इति चेत्त्रिविधोपास्तिसिद्ध्यर्थमिति वर्णितम् ॥ (ब्र.प.मा. १२६)

---

[1] चेतनाः—थ.

[उपरितनवाक्यगतहेतोः जीवादिसाधकत्वशङ्का-परिहारौ]

अथ यदुक्तम्—जीवलिङ्गात्, मुख्यप्राणसङ्कीर्तनाच्च लिङ्गात्, भोक्तैव अस्मिन् प्रकरणे प्रतिपाद्यते; न परमात्मा—इति,

तत्, व्याख्यातम् - तस्य निर्वाहः प्रतर्दनविद्यायामभिहितः ॥

[प्रतर्दनविद्यास्थपरिहारस्य अतिदेष्टव्यांशस्य च विवरणम्]

एतदुक्तं भवति—यत्र उपक्रमोपसंहारपर्यालोचनया, ब्रह्मपरं वाक्यम् इति निश्चितम्, तत्र अन्यलिङ्गानि तदनुरोधेन वर्णनीयानीति तत्र प्रतिपादितम्। अत्रापि उपक्रमे—

'ब्रह्म ते ब्रवाणि' (कौषी.उ. 4-4)

इति, ब्रह्म उपक्षिप्तम्। मध्ये च,

'यस्य [1]वैतत्[1] कर्म' (कौषी.उ. 4-26)

इति निर्दिष्टं, न पुरुषमात्रम्; अपि तु निखिलजगदेककारणं [2]ब्रह्मैव[2], इत्युक्तम्। उपसंहारे च—

'सर्वान् पाप्मनोऽपहत्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेद' (कौषी.उ. 4-45)

---

जीवलिङ्गादित्यादि। समासान्तर्गता जीव-मुख्यप्राणयोः इति षष्ठी, सम्बन्धसामान्य-विषया। ततश्च जीवस्य लिङ्गित्वेन सम्बन्धः; मुख्यप्राणस्य च वाच्यतया सम्बन्धः—इति अर्थवशात् सिध्यतीति भावः ॥

निर्वाहः—परिहारः।

तदनु......वर्णनीयानीत्यन्तेन, अतिदेष्टव्यांश उक्तः। न तु उपासनार्थत्वमपि अतिदेष्टव्यमिति भावः। ब्रह्म उपक्षिप्तमिति। 'ब्रह्म'शब्दस्य परमिन्न, मुख्यत्वात् तत्परत्वं स्वतः प्राप्तम्, उपक्रमावगतत्वात् प्रबलश्च इति भावः। ब्रह्मैवेत्युक्तमिति, मध्यगतवाक्यस्य परमात्मपरत्वस्य उपपादितत्वात्, मध्येऽपि परमात्मपरत्वं प्रतिपन्नम् इत्यर्थः। सर्वान्....अपहत्य इत्यनेन अपहतपाप्मत्वादिगुणाष्टकमुक्तम्; जरादीनामपि पाप्मान्तर्गतत्वात्। उक्तं च वाक्य-कारैः—'स्युः पाप्मानः काल-जरा-मृत्यु-शोकादयः सङ्ख्यातत्वात्' इति। स्वाराज्यम्—स्वाधीनत्वम्। अतः सत्यकामत्वं सत्यसङ्कल्पत्वं चोक्तं भवति। तत् स्वाराज्यं, संसारिभ्यः

---

[1] चैतत्—इ. [2] ब्रह्म—थ. [3] विनिश्चयेन—थ.

इति, ब्रह्मोपासनैकान्तं सर्वपापापहतिपूर्वकं स्वाराज्यं च फलं श्रुतम् । अतः, अस्य वाक्यस्य ब्रह्मपरत्व[1]निश्चयेन[1], जीवमुख्यप्राणलिङ्गान्यपि तत्परतया वर्णनीयानि—इति ॥ १७ ॥

[सविशेषं प्रातर्दनो निर्वाहप्रकारः]

प्रातर्दने हि! उपासात्रैविध्येन जीव-मुख्यप्राणलिङ्गानां ब्रह्मपरत्वमुक्तम् । अत्रापि,

'अथाऽस्मिन् प्राण एवैकधा भवति' (कौषी.उ.4-39)

इति, सामानाधिकरण्यसम्भवे वैयधिकरण्य[2]समाश्रयणा[2]योगात्, ब्रह्मण्येव 'प्राण'-शब्दप्रयोगनिश्चयेन च, प्राण[3]शरीरक[3]ब्रह्मोपासनार्थं प्राणसङ्कीर्तनं लिङ्गं युज्यते । जीवलिङ्गानां [4]पुनः, कथं ब्रह्मपरत्वम्[4] ? इत्यत्राह—

[जैमिनिमतेन उक्तानुपपत्तिपरिहारः]

## १२७. अन्यार्थं तु जैमिनिः प्रश्न-व्याख्यानाभ्यामपि चैवमेके ॥ १-४-१८ ॥

'तु'शब्दः, जीवसङ्कीर्तनेन वाक्यस्य तत्परत्वसम्भावनाव्यावृत्त्यर्थः । अन्यार्थम्—जीवसङ्कीर्तनं, जीवातिरिक्तब्रह्मस्वरूप[5]प्रतिबोधनार्थम्[5] ; इति जैमिनिराचार्यो मन्यते ।

अस्य श्रैष्ठ्यरूपम् आधिपत्यम् । अधिपतिः—परमात्मा ; 'सर्वस्याधिपतिः' इति श्रुतेः । तत्सम्बन्धि—आधिपत्यम्। गुणाष्टकं हि ब्रह्मसम्बन्धितया ब्राह्ममुच्यते; 'ब्राह्मेण जैमिनिः' इति॥ १७॥

**त्रैविध्येनेति**, हेतौ तृतीया । प्रयोजनतया च हेतुत्वम् । उपासात्रैविध्यसिद्ध्यर्थम् इत्यर्थः । **अत्राऽपीति** । प्रातर्दनोपन्यासन्यायेन प्राणलिङ्गस्य ब्रह्मपरत्वमुक्तम् इत्यर्थः ॥

**तुशब्द** इति । 'तु'शब्दः न पूर्वोक्तनिर्वाहव्यावृत्त्यर्थः ; अपि तु पूर्वपक्षव्यावृत्त्यर्थः ॥

---

[सूत्रार्थः । (भोक्तृत्वादिलिङ्गेन जीवादिसङ्कीर्तनम्) **अन्यार्थं तु**—तदतिरिक्तस्य परमात्मनः सद्भावज्ञापनायैव, **प्रश्नव्याख्यानाभ्याम्**—'क्वैष एतद्बालाके ?' इत्यादिप्रश्नेन (तथा) 'अथाऽस्मिन् प्राण एव' इत्यादिप्रतिवचनेन च इदं ज्ञायते इति, **जैमिनिः**—जैमिनिनामा आचार्यो मन्यते । **अपि च**—किं च, **एके**—वाजसनेयिनः, **एवम्**—एवमेव, ('यत्रैषः........ सुप्तोऽभूत् ,....आकाशः 'तस्मिन् शेते' इत्येव) **अधीयते**—स्वीयायां शाखायां पठन्ति ॥ ]

अस्मिन् जीवपरामर्शो जीवादन्यत्वसिद्धये ।
आख्याति प्रश्नव्याख्याभ्यां जैमिनिस्त्वपि चेतरे ॥ (ब्र.प.मा. १२७)

---

[1] विनिश्चयेन—थ. [2] संश्रयणा—इ, वा. [3] शरीर—वा. [4] ब्रह्मपरत्वं पुनः कथम् ?—वा. [5] प्रबोधनार्थम्—थ.

कुतः ?

[परमात्मज्ञापकप्रश्नोत्तरविधानम्]

'प्रश्न-व्याख्यानाभ्याम्' । प्रश्नस्तावत्—

'तौ ह सुप्तं पुरुष[1]मीयतुः[1]' (कौषी उ. 4-30)

इत्यादिना सुप्तस्य [2]प्रबुद्ध[2]प्राणस्यैव, प्राणनामभिः आमन्त्रणाश्रवण-यष्टिघातोत्थापनाभ्यां, प्राणादिव्यतिरिक्तं जीवं प्रतिबोध्य, पुनः जीवव्यतिरिक्तब्रह्म[3]प्रतिबोधन[3]परो दृश्यते—

'क्वैष एतद्बालाके! पुरुषोऽशयिष्ट ? क्व वा एतदभूत् ? कुत एतदागात्' ?
(कौषी.उ. 4-35)

इति । व्याख्यानमपि,

'यदा सुप्तः स्वप्नं न कथञ्चन पश्यति, अथाऽस्मिन् प्राण एवैकधा भवति'
(कौषी.उ. 4-39)

'एतस्मादात्मनः प्राणाः यथायतनं विप्रतिष्ठन्ते; प्राणेभ्यो देवाः, देवेभ्यो लोकाः' (कौषी.उ. 4-40)

इति, जीवादर्थान्तर[4]भूतपरमात्मपरमेव[4] ॥

प्रबुद्धप्राणस्यैव—अनुपरतव्यापारप्राणवतः, इत्यर्थः । प्राणनामभिरिति । 'प्राणनाम' शब्देन, बृहत्-पाण्डरवासस्-सोम-राजशब्दाः विवक्षिताः । ज्यैष्ठ्यश्रैष्ठ्यगुणबृहत्त्वात् 'बृहन्' इति आमन्त्रणम् । अपां प्राणवासस्त्वोक्तेः, 'यच्छुक्लं तदपाम्' इति शुक्लवर्णत्वाच्च पाण्डरवासस्त्वं प्राणधर्मः । प्राणस्य चन्द्रज्योतीरूपत्वदर्शनात् चन्द्रसम्बन्धेन सोमेत्यामन्त्रणं लक्षणया । 'प्राणो वै सम्राट्' इति श्रवणात् 'राजन्' इत्यामन्त्र्यते [इत्याशयः] । क्वैषः ? इति, स्वप्नस्थानप्रश्नः । क्व वा एतत् इति, सुषुप्तिस्थानप्रश्नः । प्राणादिव्यतिरिक्तस्य जीवस्य यष्टिघातोत्थापनादिना अवगतत्वात्, प्रश्नस्य जीवातिरिक्तविषयत्वमित्यर्थः । अत एव प्रतिवचनस्यापि जीवातिरिक्तविषयत्वसिद्धिः । व्याख्यानम्—प्रतिवचनम् । सप्तम्यन्तः प्राणशब्दः, प्राणशरीरकपरमात्मवाची । प्राणाः—जीवाः । देवाः—इन्द्रियाणि । लोकाः—लोकनानि, ज्ञानानि ॥

---

[1] माजग्मतुः—च. [2] प्रतिबुद्ध—न. [3] प्रबोधन—द. [4] भूतः परमात्मा—थ.

[उक्तस्य परमात्मपरत्वस्योपपादनम् ]

[1]सुषुप्तस्य[1] हि जीवस्य यत्रोपितस्य, जागरितस्वप्नदशासम्बन्धिविचित्रसुख-दुःखानुभवकालुष्यविरहेण [2]सम्प्रसन्नस्य[2] [3]स्वस्थता[3]पत्तिः, पुनरपि अस्य यस्माद्भोगाय निष्क्रमणम्; सोऽयं परमात्मा। तथा हि,

'सता सोम्य! तदा सम्पन्नो भवति' (छां.उ. 6-8-1)

'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद, नाऽन्तरम्' (बृ.उ. 6-3-21) इति सुषुप्त्याधारतया प्रसिद्धः, जीवादर्थान्तरभूतः प्राज्ञः परमात्मा। अतः—प्रश्नप्रति-वचनाभ्यां जीवसङ्कीर्तनम्, जीवादर्थान्तरभूतपरमात्मप्रतिपादनार्थम्—इति निश्चीयते॥

[प्रश्न-व्याख्यानयोः जीवपरतापूर्वपक्ष-तन्निरासौ]

यदुक्तम्—प्रश्नव्याख्याने जीवपरे; सुषुप्तिस्थानं च नाड्य एव। करणग्रामश्च, 'प्राण'शब्दनिर्दिष्टे जीवे एव एकधा भवति—इति।

तदयुक्तम्; नाडीनां स्वप्नस्थानत्वात्। उक्त[4]रीत्या[4] ब्रह्मण एव सुषुप्ति-स्थानत्वात्, 'प्राण'शब्दनिर्दिष्टे ब्रह्मण्येव, जीवस्य तदुपकरणभूतवागादिकरणग्रामस्य च, एकतापत्तिविभाग[5]वचनाच्च[5]॥

---

प्राज्ञेनेति, सुषुप्तिविषयं श्रुत्यन्तरं सद्विद्यावाक्यस्य परमात्मपरत्ववैशद्याय। अत इति। अनेन निर्वाहवैषम्यप्रदर्शनेन अतिदेशसूत्रस्य अधिकाशङ्कापरिहारौ दर्शितौ भवतः। प्रतर्दन-विद्यायाम्, उपक्रमे जीवलिङ्गावगमः; महावाक्यस्वारस्यं तु परमात्मपरत्वे। इह तु—उपक्रमोप-संहारमध्येषु जीवलिङ्गावगमात्, अत एव, परमात्मनः चिद्विशिष्टतापरत्वाभावेन, उपासा-त्रैविध्याप्रतिपत्तेः, प्रातर्दनन्यायानवकाशः इति अधिकाशङ्का। त्रिविधोपासनाभावेऽपि जीवाति-रिक्तब्रह्मबोधनरूपप्रयोजनान्तरसम्भवात् अस्त्यवकाशः इति अधिकः परिहारः, इति हि। अवगम्यते॥

नाडीनामित्यादि। 'तासु तदा भवति' इत्यत्र 'तदा'शब्दः स्वप्नावस्थापरः। 'यदा सुप्तः…… एकधा भवति' इत्यनन्तरवाक्ये 'अथ'शब्देन 'तदा'शब्दनिर्दिष्टावस्थायाः, सुषुप्तेश्च अवस्थान्तरत्वावगमात्; उत्तरवाक्ये स्वप्नप्रतिषेधेन, पूर्ववाक्यस्य स्वप्नप्रसञ्जकतया, तद्विषयत्वा-वगमाच्चेति भावः। उक्तरीत्येति। उदाहृतश्रुत्यन्तरैकार्थ्यलक्षणया इत्यर्थः॥

---

[1] सुप्तस्य—इ. [2] सुप्रसन्नस्य—थ. [3] सुषुप्तस्य प्रसन्नता—न. [4] नीत्या—थ.
[5] वचनात्—ङ, ठ.

[उक्तार्थस्थापकशाखान्तरपाठप्रदर्शनम्]

'अपि चैवमेके'। वाजसनेयिनः, अस्मिन्नेव बालाक्यजातशत्रुसंवादे, सुषुप्तात् विज्ञानमयात् भेदेन, तदाश्रयभूतं परमात्मानमामनन्ति—

'य एष विज्ञानमयः पुरुषः, क्वैष तदाऽभूत्? कुत एतदागात्? (बृ.उ. 4-1-16)

'[1]यत्रैष एतत्सुप्तोऽभूत्, य एष विज्ञानमयः पुरुषः, तदेतेषां प्राणानां विज्ञानेन विज्ञानमादाय, य एषोऽन्तर्हृदय आकाशः, तस्मिञ्छेते' (बृ.उ. 4-1-17)

इति[1]। 'आकाश'शब्दश्च परमात्मनि प्रसिद्धः;

'दहरोऽस्मिन्नन्तर आकाशः' (छां.उ. 8-1-1)

इति। अतः—अत्र जीवसङ्कीर्तनं, तस्मादर्थान्तरभूतस्य प्राज्ञस्य परस्य ब्रह्मणः प्रतिबोधनार्थम्—इत्यवगम्यते॥

[अधिकरणार्थोपसंहारः]

तस्मात्—अस्मिन् वाक्ये पुरुषादर्थान्तरभूतस्य निखिलजगत्कारणस्य परस्यैव ब्रह्मणः वेदितव्यतया अभिधानात्, न [2]तन्त्रसिद्धस्य पुरुषस्य,[2] तदधिष्ठितस्य वा प्रधानस्य कारणत्वं क्वचिदपि वेदान्ते प्रतीयते—इति [3]सिद्धम्[3] ॥१८॥

॥ इति जगद्वाचित्वाधिकरणम् ॥५॥

---

क्वैष तदाभूत्?—क्व सुप्तः? इत्यर्थः। प्राणानां.......मादाय—'प्राण'शब्दवाच्येन्द्रियजन्यं ज्ञानं मनसा सहादाय, इत्यर्थः। उपरतव्यापारं मनः [कृत्वा इति यावत्]। अनेन इन्द्रियाणामपि व्यापारोपरतिः फलिता; तेषां मनस्सापेक्षत्वात्। अत इति। परमात्मगुणान्वयस्य, 'परमात्म'शब्दसामानाधिकरण्यस्य वा श्रवणे सति, तत्तद्विशिष्टोपासनार्थत्वनिर्णयः। अतोऽत्र परमात्मधर्मान्वयश्रवणाभावात्, वैयधिकरण्यनिर्देशाच्च अन्यथासिद्धत्वात् न उपासनार्थत्वं जीवलिङ्गस्य; अपि तु, भेदज्ञापनार्थत्वमित्यर्थः। प्रधानस्येति। इह प्रधानोपादानं, जीवस्य तेन विना कारणत्वानुपपत्त्यभिप्रायकृतम्। यद्वा अनेनाधिकरणद्वयेन ईक्षत्यानन्दमयाधिकरणाक्षेपद्वयस्य परिहृतत्वज्ञापनार्थम्॥

[सूत्राणि—१. जगद्वा २. जीवमुख्य ३. अन्यार्थं तु]

॥ इति जगद्वाचित्वाधिकरणम् ॥५॥

---

[1] इति—इ. [2] तन्त्रसिद्धस्य—थ. [3] स्थितम्—आ, इ, ङ, ञ, ठ.

३३. वाक्यान्वयाधिकरणम् ॥ १-४-६ ॥ (सू. 19-22)

[अधिकरणार्थः—वाक्यविशेषैः उपास्यतया विहितं ब्रह्मैव ; न पुरुषः]

[ मैत्रेयीविद्या (बृ.उ. 6-5) ]

## १२८. वाक्यान्वयात् ॥ १-४-१९ ॥

[ सङ्गतिप्रतिपादनम् ]

[1]अत्रापि—कापिल[1]तन्त्रसिद्धपुरुष[2]तत्त्वावेदन[2]परं वाक्यं कचित् दृश्यत इति, तदतिरिक्तः ईश्वरो नाम न कश्चित् सम्भवति—इत्याशङ्क्य निराकरोति ॥

[ विषयप्रदर्शनम् ]

बृहदारण्यके मैत्रेयीब्राह्मणे श्रूयते—

'न वा अरे पत्युः कामाय पतिः प्रियो भवति' (बृ.उ. 6-5-6)

---

वाक्यान्वयादिति। 'कर्म'शब्दस्य 'क्रियते' इति व्युत्पत्त्या, प्रकरणस्य ब्रह्मपरत्वमुक्तम्। कर्मफलभूतभोक्तृत्वश्रवणात् अस्य तथाव्युत्पत्तिविशेषप्रदर्शनासम्भवात्, तन्त्रसिद्धपुरुषपरत्वम्—इति शङ्कया सङ्गतिः। उत्तराधिकरणे हि! सेश्वरसाङ्ख्यप्रत्यवस्थानम्। तस्मात् इदमपि निरीश्वरसाङ्ख्यनिराकरणपरम् इत्यभिप्रायेण अत्रापीत्युक्तम्।

बृहदित्यादि। कर्मफलभोक्तृत्वकण्ठोक्तिमुमुक्षूपास्यत्वादिब्रह्मलिङ्गवत् वाक्यं विषयः। पति-जायादिप्रियसम्बन्धप्रतिपादकोपक्रममैत्रेयीब्राह्मणं चतुर्थे षष्ठे च अध्याये श्रूयते। तदुभयमपि मैत्रेयीब्राह्मणशब्देन विषयवाक्यतया विवक्षितम्। यथा 'अन्तस्तद्धर्मोपदेशात्' (ब्र.सू. 1-1-21) इत्यत्र, 'य एषोऽन्तरादित्ये' 'य एषोऽन्तरक्षिणि' इति वाक्यद्वयम्॥

---

[सूत्रार्थः। वाक्यस्य—'येनेदं सर्वं विजानाति तं केन विजानीयात्' इत्यादेः कृत्स्नस्य वाक्यस्य, अन्वयात्—स्वार्थद्वारा परमात्मन्येव अन्वयसम्भवात्, ('आत्मा वा अरे' इति द्रष्टव्यतया निर्दिष्टः आत्मा, परमात्मैव।)]

मैत्रेयीब्राह्मणस्थानां वाक्यानामन्वयात्तदा।
परमात्मेति युक्तत्वात् द्रष्टव्यस्तान्निको न च॥ (ब्र.प.मा. १२८)

---

[1] कापिल—थ. [2] तत्त्ववेदन—थ.

इत्यारभ्य,

'न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति, आत्मनस्तु कामाय सर्वं प्रिय भवति, आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः, मैत्रेयि! आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते, इदं सर्वं विदितम्' (बृ.उ. 6-5-6)

इति ॥

[संशयप्रदर्शनम् ]

तत्र संशयः—किम् अस्मिन् वाक्ये, द्रष्टव्यतया उपदिश्यमानः, तन्त्र[1]सिद्धः पुरुष[1] एव? अथवा सर्वज्ञः सत्यसङ्कल्पः सर्वेश्वरः?—इति ॥

[सयुक्तिकः पूर्वः पक्षः]

किं युक्तम्?

पुरुषः—इति।

कुतः?

आदिमध्यावसानेषु पुरुषस्यैव प्रतीतेः। उपक्रमे तावत्, पति-जाया-पुत्र-वित्त-पश्वादिप्रियत्वयोगात्, जीवात्मैव प्रतीयते। मध्येऽपि,

'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति; न प्रेत्य संज्ञाऽस्ति' (बृ.उ. 4-4-12)

---

सर्वज्ञः सत्यसङ्कल्पः इति, सिद्धान्तानुगुणविशेषणम्। जीवकर्मविशेषाभिज्ञः तत्फलदानशक्तः इति भावः। किं जगत्कारणवादिवेदान्तवेद्यं पुरुषाधिष्ठितं प्रधानम्? उत ब्रह्म? इति विचारः। तदर्थं—बृहदारण्यके मैत्रेयीब्राह्मणे द्रष्टव्यतयोक्तः आत्मा, किं पञ्चविंशकः? उत परमात्मा? इति। किम् उपक्रमे पतिजायापुत्रादिप्रियसम्बन्धः 'आत्म'-शब्दस्य पञ्चविंशपुरुषपरतामवगमयति? उत न? इति। किं वाक्यावयवानां सर्वेषां परमात्मनि अन्वयासामञ्जस्यम्? उत पञ्चविंशः? इति।

[पूर्वपक्षे—]यदा परमात्मनि अन्वयासामञ्जस्यम्; तदा पतिजायादिप्रियसम्बन्धेन 'आत्म'शब्दस्य पुरुषपरत्वावगमात् द्रष्टव्यतयोक्तः पञ्चविंशक इति, तदधिष्ठितं प्रधानं वेदान्त-वेद्यमिति स्यात्।

---

[1] सिद्धपुरुष—वा.

इति, उत्पत्ति-विनाश[1]योगात्[1], स एव अवगम्यते। तथा अन्ते च,

'विज्ञातारमरे केन विजानीयात्?' (बृ.उ. 6-5-15)

इति, स एव ज्ञाता क्षेत्रज्ञ एव प्रतीयते; न ईश्वरः। अतः—तन्त्रसिद्धपुरुषप्रतिपादनपरम्, [2]इदं वाक्यम्—इति[2] निश्चीयते॥

[पुरुषप्रतिपादनपरत्वाक्षेप-परिहारौ]

ननु—

'[3]अमृतत्वस्य[3] तु नाऽऽशाऽस्ति वित्तेन' (बृ.उ. 6-5-3)

इत्युपक्रमात्, अमृतत्वप्राप्त्युपायोपदेशपरम् इदं वाक्यम्—इत्यवगम्यते। तत् कथं पुरुषप्रतिपादनपरत्वम् अस्य वाक्यस्य?

[4]तदुच्यते[4]—अत एव हि! अत्र पुरुषप्रतिपादनम्। तन्त्रे हि! अचिद्धर्माध्यासवियुक्तपुरुष[5]स्वरूप[5]याथात्म्यविज्ञानमेव, अमृतत्वहेतुत्वेनोच्यते। अतः जीवात्मनः प्रकृतिवियुक्तं स्वरूपम्, इह अमृतत्वाय,

'आत्मा वा अरे द्रष्टव्यः' (बृ.उ. 6-5-5)

इत्युपदिश्यते॥

[जीवात्मविज्ञानेन सर्वविज्ञानसिद्ध्युपपादनम्]

सर्वेषामात्मनां प्रकृतिवियुक्तं स्वरूपम् एकरूपमिति, प्रकृतिवियुक्तस्वात्मयाथात्म्य[6]विज्ञानेन[6], सर्व एवात्मानो विदिता भवन्तीति, आत्मविज्ञानेन सर्वविज्ञानम् उपपन्नम्॥

---

[सिद्धान्ते—] यदा पञ्चविंशे वाक्यावयवानां समन्वयासामञ्जस्यम्; तदा पति-जायादिप्रियसम्बन्धात् 'आत्म'शब्दस्य पञ्चविंशपरत्वानवगमात् मैत्रेयीब्राह्मणे द्रष्टव्यतयोक्तः पञ्चविंशातिरिक्त इति, कारणवाक्यानां परमात्मपरत्वं स्यात्—इति॥

**तथान्ते चेति**। आदिमध्यगतजीवहेत्वनुगृहीतः 'विज्ञातृ'शब्दः तत्परः इति भावः॥

**नन्विति**। पति-जायादिप्रियसम्बन्धप्रतिपादकवाक्यात् पूर्वमेव, अमृतत्वप्राप्त्युपायपरत्वम् अवगम्यते इत्यर्थः।

**अत एव**—अमृतत्वप्राप्त्युपायोपदेशपरत्वादेव, इत्यर्थः॥

**सर्वेषामिति**। 'ऐक्योपदेशफलभूतम् एकविज्ञानेन सर्वविज्ञानं, जीवप्रतिपादनपरत्वे

---

[1] संयोगात्—न. [2] इति—ङ. [3] अमृतस्य—श. [4] तदुच्येत—थ.
[5] स्वरूपरूप—इ, ठ. [6] ज्ञानेन—इ, विज्ञानेनैव—थ.

[ऐक्योपदेशाशयः]

देवादिस्थावरान्तेषु सर्वेषु भूतेषु, आत्मस्वरूपस्य [1]ज्ञानैकप्रकारत्वात्[1],

'इदं सर्वं यदयमात्मा' (बृ.उ. 6-5-7)

इति [2]ऐकात्म्यो[2]पदेशः ; देवाद्याकाराणाम् अनात्मा[3]कारत्वात्[3],

'सर्वं तं परादात्' (बृ.उ. 6-5-7)

इत्यादिना अन्यत्वनिषेधश्च ।

'यत्र हि द्वैतमिव भवति' (बृ.उ. 6-5-1)

[4]इति च[4] नानात्वनिषेधेन, 'एकस्व[5]रूपे ह्यात्मनि[5] देवादिप्रकृतिपरिणामभेदेन नानात्वं, मिथ्या'— इत्युच्यते ॥

[प्रकृतवाक्यानां जीवपरत्वेऽपि वेदाविर्भाववाक्योपपत्तिः]

'तस्य ह वा एतस्य (अस्य ?) महतो भूतस्य निश्वसितमेतत् यदृग्वेदः'

(बृ.उ. 6-5-11)

इत्याद्यपि, प्रकृतेरधिष्ठातृत्वेन पुरुषनिमित्तत्वात् [6]जगदुत्पत्तेः[6], उपपद्यते ॥

[पूर्वपक्षनिगमनम्]

एवम्, अस्मिन् वाक्ये पुरुषपरे निश्चिते सति, तदैकार्थ्यात्, सर्वे वेदान्ताः तन्त्रसिद्धं पुरुषमेव अभिदधतीति, तदधिष्ठिता प्रकृतिरेव जगदुपादानम् ; न ईश्वरः— इति ॥

---

कथं घटते ? बहवो हि जीवाः ; न च मिथः कार्यकारणभूताश्च' इत्याशङ्क्य, प्रकारैक्यात् उपपद्यते (इत्युत्तरात्मकमिदम्) ॥

**देवादिस्थावरान्तेषु........अन्यत्वनिषेधश्चेति** । देवाद्याकारस्य अनात्माकारत्वात्, तस्य तदनन्यत्वमुक्तम् । तस्मात् आत्मनः अन्यत्वदर्शनं नाम, निष्कृष्टस्वरूपव्यतिरिक्त-देवाद्याकारदर्शनमिति, तस्य अनर्थहेतुत्वमुच्यते इत्यर्थः । **यत्र हीति** । अनात्माकाराणां देवत्वादीनां बहुत्वात्, एकाकारे आत्मनि, देवत्वादीनि न सन्तीति निषिध्यते इत्यर्थः ॥

**पुरुषनिमित्तत्वादिति** । जीवाधिष्ठितप्रधानात् आकाशगुणशब्दोत्पत्तिरिति, ऋग्वेदादि-कारणत्वमुपपद्यते इत्यर्थः ॥

---

[1] विज्ञानैकप्रकारत्वात्—न. ज्ञानैकाकारत्वात्—थ. [2] आत्मैक्यो—थ.
[3] कारत्वाच्च—वा. [4] इति—द. [5] रूपेऽप्यात्मनि—थ. [6] जगदुत्पत्तिः—थ.

[सिद्धान्तारम्भः]

एवं प्राप्ते, प्रचक्ष्महे—वाक्यान्वयात्—इति। सर्वेश्वर एव अस्मिन् वाक्ये प्रतीयते।

[1]कुतः[1] ?

एवमेव हि! वाक्यावयवानाम् अन्योन्यान्वयः समञ्जसो भवति ॥

[सामञ्जस्योपपादनम्]

'[2]अमृतत्वस्य[2] तु नाऽऽशाऽस्ति वित्तेन' (बृ.उ. 6-5-3)

इति याज्ञवल्क्येनाभिहिते,

'येनाऽहं नाऽमृता स्यां किमहं तेन कुर्याम्; यदेव भगवान् [3]वेद[3] तदेव मे ब्रूहि' (बृ.उ. 6-5-4)

इति, अमृतत्वानुपायतया वित्ताद्यनादरेण, अमृतत्वप्राप्त्युपायमेव प्रार्थयमानायै मैत्रेय्यै, तदुपायतया द्रष्टव्य[4]त्वेनो[4]पदिष्टः अयमात्मा परमात्मैव;

'[5]तमेव[5] विदित्वाऽतिमृत्युमेति' (श्वे.उ. 3-8)

'तमेवं विद्वानमृत इह भवति, नाऽन्यः पन्थाः' (तै.आर.पु. 3-12-17)

इत्यादिभिः, अमृतत्वस्य परमपुरुषवेदनैकोपायतया प्रति[6]पादनात्[6] ॥

[प्राप्तृस्वरूपावगमोपयोगः, परमात्मन एव ज्ञातव्यता च]

परमपुरुषविभूतिभूतस्य प्राप्तुरात्मनः स्वरूप[7]याथात्म्यम्[7], अपवर्ग[8]साधन[8]-परमपुरुषवेदनोपयोगितया अवगन्तव्यम्; न स्वत एव उपायत्वेन। अतः, अत्र परमात्मैव, अमृतत्वोपायतया 'द्रष्टव्यः' इत्यादिना उपदिश्यते। तथा,

'तस्य ह वा एतस्य (अस्य?) महतो भूतस्य निःश्वसितमेतत् यदृग्वेदः' (बृ.उ. 6-5-11)

इत्यादिना कृत्स्नस्य जगतः कारणत्वमुच्यमानं, परमपुरुषादन्यस्य कर्मपरवशस्य मुक्तस्य निर्व्यापारस्य च पुरुषमात्रस्य न सम्भवति। तथा,

---

**समञ्जसो भवति**—स्वारसिको भवति, इत्यर्थः। अस्वरसान्वयो हि! परैरुच्यते। श्रुतेः स्वारस्यं नाम सजातीयश्रुत्यैकार्थ्यम् इत्यभिप्रायः ॥

**परमपुरुषेति**। प्रधानभूतोपायपरवाक्यैकार्थ्यं स्वारसिकमित्यर्थः। **परमपुरुषादन्यस्य ................ न सम्भवति** इति। बद्धस्य सर्वज्ञत्वाद्ययोगात्, मुक्तस्य जगद्व्यापारशून्यत्वाच्च कृत्स्नजगत्कारणत्वं न सम्भवतीत्यर्थः। **पुरुषमात्रस्य**—जीवमात्रस्य। **मात्रचा** अल्पशक्तित्व-

---

1 कुतः? वाक्यान्वयात्—बा. 2 अमृतस्य—थ. 3 वेत्थ—च. 4 तयो—इ, व, वा. 5 तमेवं—न. 6 पाद्यतया—द. 7 याथात्म्यविज्ञानम्—अ, इ, घ. 8 साधनभूत—वा.

'आत्मनो वा अरे दर्शनेन' (बृ.उ. 4-4-5)

इत्यादिना, एकविज्ञानेन सर्वविज्ञानम् अभिधीयमानं, सर्वात्म[1]भूते परमात्म[1]न्येव अवकल्पते ॥

[परोक्तस्य सर्वविज्ञानप्रतिज्ञानिर्वाहप्रकारस्य अनौचित्यम् ]

[2]यत्त्वेतत्[2]—एकरूपत्वात् आत्मनाम्, एकात्मविज्ञानेन सर्वात्मविज्ञानमुच्यते— इति,

तदयुक्तम्; अचेतनप्रपञ्चज्ञानाभावेन, सर्वविज्ञानाभावात्। प्रतिज्ञोपपादनाय च,

'इदं ब्रह्म इदं क्षत्रम्' (बृ.उ. 6-5-7)

इत्युपक्रम्य,

'इदं सर्वं यदयमात्मा' (बृ.उ. 6-5-7)

इति, प्रत्यक्षादिसिद्धं चिदचिन्मिश्रं प्रपञ्चम्, 'इदम्' इति निर्दिश्य, 'एतत् अयमात्मा' इति, ऐकात्म्योपदेशश्च परमात्मन एवोपपद्यते। न हि! 'इदं'शब्दवाच्यं चिदचिन्मिश्रं जगत्, पुरुषेणाऽचित्संसृष्टेन, तद्वियुक्तेन [3]स्वरूपेण वा[3] अवस्थितेन च, ऐक्यमुपगच्छति ॥

[आत्मेतरत्वज्ञाननिषेधतात्पर्यम् ]

अत एव,

'सर्वं तं परादात् योऽन्यत्रात्मनः सर्वं वेद' (बृ.उ. 6-5-7)

इति, व्यतिरिक्तत्वेन सर्ववेदननिन्दा च ।

---

मभिप्रेतम् । **एकविज्ञानेनेति** । कारणत्वफलभूतम् एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानमपि राद्धान्तोपपादकमित्यर्थः ॥

**प्रतिज्ञोपपादनायेति,** ऐकात्म्योपदेशानुपपत्तिमाह । **एतत् अयमिति** । श्रुतिस्थेदंशब्दस्य स्थाने 'एतत्'शब्दः भाष्ये, स्ववाक्यत्वज्ञापनाय प्रयुक्तः । **इदम् अयमात्मा** इति, कार्यस्य कारणतादात्म्योपदेशः । **नहीत्यादि** । कार्यस्य, कारणेन हि! स्वरूपैक्यसम्भवः । सूक्ष्म-स्थूलचिदचिच्छरीरकः परमात्मेति, तस्यैव हि ! कार्येण जगता ऐक्यं सम्भवति ; न तु अकारणभूतस्य बद्धस्य वा मुक्तस्य वा जीवस्य, इत्यर्थः ।

**अत एव**—सर्वस्य परमात्मात्मकत्वादेव । **व्यति........निन्दा** इति, अतदात्मकत्वानुसन्धाननिषेधः । न तु देवादिदृष्टिनिषेधः ; भेदनिषेधस्य प्रागुक्तहेतुनिबन्धनत्वात् इत्यर्थः ।

---

[1] भूतपरमात्म—थ. [2] यत्तु—इ. [3] वा स्वरूपेण—वा.

तथा प्रथमे च मैत्रेयीब्राह्मणे,

'महद्भूतमनन्तमपारम्' (बृ उ 4-4-12)

इति श्रुताः महत्त्वादयो गुणाः, परमात्मन एव सम्भवन्ति। अतः स एव अत्र प्रतिपाद्यते ॥

[परोक्तार्थस्य अनूद्य दूषणम्]

यत्तूक्तम्—[1]पति-जाया-पुत्र-वित्त-पश्वादि[1] प्रियान्वयिनः जीवात्मनः, उपक्रमे तु अन्वेष्टव्यतया प्रतिपादनात्, तद्विषयमेव इदं वाक्यम्—इति,

तदयुक्तम्; 'आत्मनस्तु कामाय' इति, 'आत्म'शब्देन [2]जीवात्म[2]संशब्दने, तस्य 'आत्मा वा अरे द्रष्टव्यः' इत्यनेन अनन्वयप्रसङ्गात्,

'आत्मा वा अरे द्रष्टव्यः' (बृ.उ. 6-5-6)

इति आत्मनो द्रष्टव्यत्वोपयोगितया,

'आत्मनस्तु कामाय' (बृ.उ. 6-5-6)

इत्युपदिष्टमिति प्रतीयते। आत्मनस्तु कामाय—आत्मनः कामसम्पत्तये। [3]काम्यते इति कामः[3]। आत्मनः [4]इष्टसम्पत्तये[4], इति यावत् ॥

[जीवात्मस्वरूपस्य अन्वेष्टव्यतापरत्वानुपपत्तिः]

न च—'जीवात्मनः इष्टसम्पत्तये पत्यादयः प्रिया भवन्ति' इत्युक्ते सति, [5]तस्य जीवस्य[5] [6]स्वरूपम्[6] अन्वेष्टव्यं भवति। प्रियमेव हि! अन्वेष्टव्यम्; न तु प्रियं प्रति शेषिणः, प्रियवियुक्तं स्वरूपम्।

---

मैत्रेयीब्राह्मणानेकत्वात् **प्रथमे** इति विशेषितम् ॥

**तदयुक्तम्.......प्रसङ्गादिति**। 'आत्मनस्तु.......आत्मा वा अरे द्रष्टव्यः' इत्युक्ते, 'आत्मनस्तु कामाय' इत्युक्तस्य वाक्यस्य, आत्मनो द्रष्टव्यतोपयोगित्वं हि! स्वरसतः प्रतीयते इत्यर्थः। अतः 'मा भूदन्वयः' इति न वाच्यम् इति दर्शितम्। **इष्टसम्पत्तये**—सुखादि-सम्पत्तये ॥

**न च** इत्यस्य, **अन्वेष्टव्यं भवति** इति उत्तरत्रान्वयः। **प्रियमेव हीति**। पत्यादीनाम् आत्मनः प्रियत्वे, तेषामन्वेष्टव्यत्वं स्यात्; प्रियस्यैव पुरुषार्थत्वात् इत्यर्थः। **न तु** इति एवकाराभिप्रेतमाह। **प्रियवियुक्तम्**—पुत्रपत्यादिवियुक्तम्।

---

[1] पश्वादि—इ. [2] जीवात्मनः—थ. [3] काम्यन्त इति कामाः—च. [4] इष्टसम्पत्तयः—च.
[5] तस्य—द, न. [6] स्वस्वरूपम्—थ.

यस्मात्, आत्मन इष्टसम्पत्तये पत्यादयः प्रिया भवन्ति, तस्मात् पत्यादिप्रियं परित्यज्य, तद्वियुक्तम् आत्मस्वरूपम् अन्वेष्टव्यम्—इति, असङ्गतं भवति। प्रत्युत, 'न पत्यादि[1]शेषतया[1] पत्यादीनां प्रियत्वम्; अपि तु, आत्मनः [1]शेषतया[1] पत्यादीनां प्रियत्वम्' इत्युक्ते, स्वशेषतया त एव उपादेयाः स्युः॥

[परोक्तानुरोधस्य वाक्यभेदापादकत्वम्]

'आत्मनस्तु कामाय सर्वं प्रियं भवति' (बृ.उ. 6-5-6) इत्यस्य परेण अनन्वये, वाक्यभेदः [2]प्रसज्यते[2]। अभ्युपगम्यमानेऽपि वाक्यभेदे, [3]पूर्व[3]वाक्यस्य न किञ्चित् प्रयोजनं दृश्यते॥

[स्वाभिमतोऽर्थः]

अतः, पत्यादिसर्वं प्रियं परित्यज्य आत्मन एव अन्वेष्टव्यत्वं यथा प्रतीयते; तथा वाक्यार्थो वर्णनीयः। सोऽयमुच्यते—

'अमृतत्वस्य तु नाऽऽशाऽस्ति वित्तेन' (बृ.उ. 6-5-3) इति वित्तादीनां नित्यनिर्दोषनिरतिशयानन्दरूपामृतत्वप्राप्त्यनुपा[4]यता[4]मुक्त्वा, 'वित्त-[5]पुत्र-पति-[5]जायादीनां सातिशयदुःखमिश्रकादाचित्कप्रियत्वम् अनुभूयमानम्, न पत्यादि-स्वरूपप्रयुक्तम्; अपि तु, निरतिशयानन्दस्वभावपरमात्मप्रयुक्तम्; अतः, य [6]एव[6] स्वयं निरतिशया[7]नन्दः[7] सन्, अन्येषामपि प्रियत्वलेशा[8]स्पदत्व[8]मा पादयति, स परमात्मैव द्रष्टव्यः' इत्युपदिश्यते॥

---

**प्रत्युतेति**। न केवलं स्वाभिमतार्थासङ्गतिः, अनभिमतार्थसङ्गतिश्चेत्यर्थः। **उपादेयाः स्युरिति**। सकलेतरत्यागपूर्वकम् आत्मनो द्रष्टव्यत्वस्य विरोध एव स्यात्, इत्यर्थः॥

**परेण**—'आत्मा वा' इति परेण वाक्येन। **वाक्यभेदः**—महावाक्यभेदः। 'सम्भवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते' इति न्यायात्, एकवाक्यत्वेन निर्वाहे सुशकेऽपि वाक्यभेदः अनुपपन्नः इत्यर्थः॥

**अत इति**। एवं परपक्षानुपपत्तेः, परिशेषात् अर्थान्तरपरत्वं सिद्धमित्यर्थः।

**स्वयं........मापादयतीति**। अन्येषामानन्दो यदधीनः; तस्याऽऽनन्दः, अनवधिकातिशयः, इति अर्थसिद्धम्। यथा अन्येषां विद्यां धनं वा ददतः पुरुषस्य, ज्ञानाधिकत्वं धनाधिकत्वं च अर्थसिद्धम्। 'स एको ब्रह्मण आनन्दः' 'यतो वाचः' 'रसं ह्येवाऽयं' इत्यादि-श्रुत्यन्तरेषु तत् स्पष्टमभिहितं च इत्यभिप्रायः। **उपदिश्यते** इत्यन्तेन श्रुतेस्तात्पर्यार्थ उक्तः॥

---

1 शेषितया—द. 2 प्रसज्येत—ठ. 3 पूर्वस्य—द. 4 यत्व—वा. 5 पुत्र—थ. 6 एवं—थ. 7 नन्दस्वरूपः—द. 8 स्पदत्व—द.

[उक्तस्यार्थस्य शब्दतो लाभः]

तदयमर्थः—

'न वा अरे पत्युः कामाय पतिः प्रियो भवति' (बृ.उ. 6-5-6)

न हि! [1]पति-जाया[1]-पुत्र-वित्तादयः, 'मत्प्रयोजनाय अहमस्य प्रियः स्याम्' इति स्वसङ्कल्पात् प्रिया भवन्ति; अपि तु, आत्मनः कामाय—परमात्मनः स्वाराधक-प्रियप्रतिलम्भनरूपेष्टनिर्वृत्तये, इत्यर्थः। परमात्मा हि! कर्मभिराराधितः, तत्त-त्कर्मानुगुणं प्रतिनियतदेशकालस्वरूप[2]परिमाणम्[2], आराधकानां [3]तत्तद्वस्तुगतं प्रिय[3]त्व-मापादयति;

'एष ह्येवानन्दयाति' (तै.उ.आन. 7-1)

इति श्रुतेः। [4]न तु[4] तत्तद्वस्तु स्वरूपेण प्रियमप्रियं वा। यथोक्तम्—

'तदेव [5]प्रीतये[5] भूत्वा पुनर्दुःखाय जायते।
तदेव कोपाय यतः प्रसादाय च जायते॥
तस्माद्दुःखात्मकं नास्ति न च किंचित् सुखात्मकम्॥' (वि.पु. 2-6-48)

इति॥

[द्वितीयवाक्यस्यात्मशब्दस्य परमात्मपरतायामेव स्वारस्यम्]

'आत्मनस्तु कामाय' इत्यस्य जीवात्मपरत्वेऽपि, 'आत्मा वा अरे द्रष्टव्यः' इति तु, परमात्मविषयमेव। [6]तत्र[6] अयमर्थः—

'यस्मात् पत्यादीनाम् इष्टसम्पत्तये, तत्परवशेन पत्यादयः प्रियत्वेन नोपा-दीयन्ते; अपि तु, आत्मेष्टसम्पत्तये [7]स्वतन्त्रेण[7] स्वप्रियत्वेन उपादीयन्ते, तस्मात्

---

**प्रतिनियतेति**। स्वरूपनियमो नाम स्रक्-चन्दनादिषु अस्य इदमेव भोग्यं, नान्यत् इति नियमः। परिमाणनियमो (नाम) भोग्यत्वपरिमाणनियमः। न हि! मनुष्यभोग्यस्य स्रगादेः, देवभोग्यस्रगादितुल्यभोग्यत्वमस्ति। **एष ह्येवेति**, आश्रितप्रियप्रतिलम्भकत्वे श्रुतिः। **तदेव प्रीतय** इति। कस्यचिद्वस्तुनः प्रियत्वं तत्स्वरूपप्रयुक्तं चेत्, सर्वदा सर्वेषां प्रियत्वं स्यात्। न च तदस्ति। कञ्चित्प्रति कस्यचित्प्रियत्वम् अप्रियत्वं च परसङ्कल्पाधीनमित्यर्थः॥

**आत्मन........त्यस्येति**। येन स्वातन्त्र्येण स्वात्मदर्शने प्रवर्तते, तेनैव अनवधि-कातिशयानन्दरूपपरब्रह्मप्राप्तौ प्रवर्तते; तस्यैव स्वाभाविकनिरतिशयानन्दयोगात् इत्यर्थः।

---

1 जाया—थ. 2 परिणामम्—द. 3 तद्वस्तुगतं प्रिय—थ. तत्तद्वस्तुगतप्रिय—द.
4 न हि—वा. 5 अप्रीतये—द. 6 तत्राऽपि—इ, ग, वा. 7 स्वातन्त्र्येण—वा.

य एव आत्मनो निरुपाधिकनिर्दोषनिरवधिकप्रियः परमात्मा, स एव हि द्रष्टव्यः; न दुःखमिश्राल्प[1]सुखदुःखो[1]दर्काः परायत्त[2]तत्तत्स्वभावाः[2] पति-जाया-पुत्र-वित्तादयो विषयाः'—इति ॥

[आत्मशब्दयोर्द्वयोरपि एकविषयतौचित्यम्]

अस्मिंस्तु प्रकरणे, [3]जीवात्मवाचि[3]शब्देनाऽपि परमात्मन एव अभिधानात्, 'आत्मनस्तु कामाय' 'आत्मा वा अरे द्रष्टव्यः' इति पूर्वोक्तप्रक्रियया, उभयत्र 'आत्म' शब्दौ एकविषयौ ॥ १९ ॥

[उत्तरसूत्रावतरणम्]

मतान्तरेणाऽपि जीवशब्देन परमात्माभिधानोपपादनाय, आह—

## १२९. प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ १-४-२० ॥

[यादवप्रकाशमतनिदानसूत्रार्थविवरणम्]

एकविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धेः इदं लिङ्गम्; 'यत् जीवात्मवाचि[4]शब्दैः[4]

---

प्रकृष्टानन्दस्यैव प्रेप्सितव्यतारूपार्थौचित्यातिशयात् 'आत्म'शब्दवैरूप्यं सोढव्यम्; मुण्डकोपनिषदि, 'तपसा चीयते ब्रह्म' 'तस्मादेतद्ब्रह्म' इति वाक्यद्वयस्थब्रह्मशब्दवैरूप्यवत् इति भावः ॥

**एकविषयाविति** । 'आत्म'शब्दवैपरीत्याभावात् इत्यभिप्रायः । **जीवात्म........वाभिधानादिति,** वक्ष्यमाणसूत्रोक्तप्रकारेण जीववाचिशब्दानां परमात्मपर्यन्ताभिधायित्वमभिप्रेत्योक्तम् ॥ १९ ॥

**मतान्तरेण**—सूत्रकारानभिमतेन मतान्तरेण, इत्यर्थः । अनेन यादवप्रकाशोक्तयोजनाव्यावृत्तिः । **जीवशब्देन**—उपरितनवाक्यगतेनेत्यर्थः । **पर........पादनायेति** । अनेन सर्वव्याख्यात्रभिमतनिर्वाहव्यावृत्तिः । [उत्तरसूत्रत्रयस्य अवतारणमिदम् ॥]

**एक....लिङ्गमिति** । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादककार्यकारणभावकृतैक्यस्य लिङ्गं जीवात्मवाचिशब्देन परमात्माभिधानमित्यर्थः । **जीवात्मवाचीति,** साध्यप्रतिज्ञांशः

---

[सूत्रार्थः । **प्रतिज्ञायाः**—'यस्मिन्नु....विज्ञातं भवति' इति एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः, **सिद्धेः**—निष्पत्तिं प्रति, **लिङ्गम्**—(जीववाचिशब्दैः परमात्मनोऽभिधानमित्येतत्) ज्ञापकम् इति, **आश्मरथ्यः**—एतन्नामा आचार्यः अभिप्रैति ।]

प्रतिज्ञायास्तु सिद्ध्यर्थं जीवबोधकशब्दतः ।
ब्रह्माभिधानं लिङ्गमित्याश्मरथ्यमुनेर्मतम् ॥ (ब्र.प.मा. १२९)

---

[1] सुखो—द. [2] तस्स्वभावाः—वा' [3] जीवात्म—इ, वा. [4] शब्दैः—थ, शब्देन—इ.

परमात्मनः अभिधानम्' इति आश्मरथ्य आचार्यो मन्यते स्म । यदि अयं जीवः, परमात्मकार्यतया परमात्मैव न भवेत्; तदा तद्व्यतिरिक्ततया, [1]परमात्मविज्ञानादेतद्विज्ञानं[1] न सेत्स्यति ।

'आत्मा वा इदमेक एवाऽग्र आसीत्' (ऐत.उ. 1-1)

इति, प्राक् सृष्टेः एकत्वावधारणात्,

[परमात्मनो जीवोत्पत्त्यादेः औपनिषदत्वात् जीवब्रह्मैक्यम्]

'यथा सुदीप्तात् पावकाद्विष्फुलिङ्गाः सहस्रशः [2]प्रभवन्ते[2] सरूपाः ।
तथाऽक्षराद्विविधाः सोम्य! भावाः प्रजायन्ते तत्र चैवाऽपियन्ति' ॥

(मुण्ड.उ. 2-1-1)

इत्यादिभिः, ब्रह्मणो [3]जीवाना[3]मुत्पत्तिश्रवणात्, तस्मिन्नेव [4]लय[4]श्रवणाच्च, [5]जीवानां[5] ब्रह्मकार्यत्वेन, ब्रह्मणा ऐक्यमवगम्यते । अतः [6]जीव[6]शब्देन [7]परमात्मा[7]भिधानमिति ॥ २० ॥

## १३०. उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः ॥ १-४-२१ ॥

हेतुवशात् अध्याहृतः । अयं यादवप्रकाशपक्षः अस्मिन् सूत्रे उपन्यस्तः । तत्र हि कार्यात्मना कारणात्मना च जीवब्रह्मणोः भेदाभेदौ स्वाभाविकौ मतौ । [**एकत्वावधारणम्**—सृष्टिकालीनानेकत्वप्रतिद्वन्द्विनः एकत्वस्य निर्णयः । **ब्रह्मणः** इति पञ्चमी । **ब्रह्मणा ऐक्यमिति** । अत्र सहार्थस्य भानेन, विनाऽपि सहादिशब्दयोगं तृतीया । ब्रह्मणा सहाभेदः इत्यर्थः । **अवगम्यत** इति । ऐक्यस्य हि! कार्यत्वनियतत्वम्; यथा घटस्य मृत्पिण्डकार्यत्वम्, मृत्पिण्डेन सह ऐक्यव्याप्यम् इति ॥] ॥ २० ॥

---

[सूत्रार्थः । **उत्क्रमिष्यतः**—शरीरादूर्ध्वं क्रमिष्यतः निष्पन्नसाधनस्य जीवस्य, **एवम्भावात्**—परमात्मभावप्राप्तेः, (श्रुतिषु जीववाचिना शब्देन परमात्मनोऽभिधानम्), **इति**—एवंरूपं हेतुम्, **औडुलोमिः**—एतन्नामा आचार्यः अभिप्रैति ॥]

**जीवशब्दात्परस्योक्तिरुत्क्रमिष्यत एव हि ।**
**ब्रह्मसाम्यापत्तितः स्यादौडुलोमिमुनेर्मतम् ॥ (ब्र.प.मा. १३०)**

---

[1] परमात्मविज्ञानं—इ. [2] प्रभवन्ति—न. [3] जीवात्मना—द. [4] अप्यय—बा. [5] जीवादीनां—द. [6] जीववाचि—द. [7] परमात्मैवा—इ, ग.

[आश्मरथ्यमतानुवादपूर्वकं दूषणम्]

यदुक्तम्—जीवस्य ब्रह्मकार्यतया ब्रह्मणा ऐक्येन, एकविज्ञानेन सर्वविज्ञान-प्रतिज्ञोपपादनार्थं, ब्रह्मणः जीवशब्देन प्रतिपादनम्—इति,

तदयुक्तम् ;

'न जायते म्रियते वा विपश्चित्' (कठ.उ. 2-18)

इत्यादिना अजत्वश्रुतेः, [1]जीवात्मनां[1] प्राचीनकर्मफलभोगाय जगत्सृष्टयभ्युपगमाच्च। अन्यथा विषमसृष्टयनुपपत्तेश्च, ब्रह्मकार्यस्य जीवस्य, ब्रह्मतापत्तिलक्षणो मोक्षः, आकाशादिवत् अवर्जनीय इति ; तदुपायविधानानुष्ठानानर्थक्याच्च, घटादिवत् कारणप्राप्तेः विनाशरूपत्वेन, मोक्षस्य अपुरुषा[2]र्थत्वाच्च[2] ।

जीवात्मनः उत्पत्तिप्रलयवादोपपत्तिः, उत्तरत्र प्रपञ्चयिष्यते ॥

[सूत्रार्थविवरणम्]

अतः,

'एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' (छां.उ. 8-3-4)

'यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नाम-रूपे विहाय।
तथा विद्वान् नाम-रूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' (मुण्ड.उ. 3-2-8)

इति, उत्क्रमिष्यतः परमात्मभावात्, जीवशब्देन परमात्मनोऽभिधानमिति, औडुलोमिराचार्यो मन्यते स्म ॥ २१ ॥

---

तदयुक्तमिति। अजत्वश्रुतिविरोधः, अकृताभ्यागमकृतविप्रणाशादिप्रसङ्गः, फलभोगार्थ-सृष्टिविरोधः, उपायानुष्ठानवैयर्थ्यम्, अपुरुषार्थता च दूषणम्।

जीवात्मन इति। 'तोयेन जीवान् व्यससर्ज भूम्याम्' इत्यादयः जीवोत्पत्तिप्रलयवादाः कथम्? इत्यत्र [उत्तरम्] ॥ २१ ॥

---

[1] जीवानां—इ, द. [2] र्थता च—द.

# १३१. अवस्थितेरिति काशकृत्स्नः ॥ १-४-२२ ॥

[औडुलोमिमतानुवादपूर्वकं दूषणम्]

यदुक्तम्—उत्क्रमिष्यतो जीवस्य ब्रह्मभावात्, ब्रह्मणः तच्छब्देनाभिधानम्—इति; [1]तदप्ययुक्तम्[1]; विकल्पासहत्वात्—अस्य जीवात्मनः, उत्क्रान्तेः पूर्वम् अनेवम्भावः, किं स्वाभाविकः? उत औपाधिकः? तत्राऽपि, पारमार्थिकः? अपारमार्थिको वा?—इति।

स्वाभाविकत्वे, ब्रह्मभावो नोपपद्यते; भेदस्य स्वरूपप्रयुक्तत्वेन, स्वरूपे विद्यमाने तदनपायात्।

अथ—भेदेन सह स्वरूपमपि अपैति—इति;

तथा सति, विनष्टत्वादेव तस्य, न ब्रह्मभावः; अपुरुषार्थत्वादिदोषप्रसङ्गश्च।

पारमार्थिकौपाधि[2]कत्वे[2], प्रागपि ब्रह्मैवेति, 'उत्क्रमिष्यत एवम्भावात्' इति विशेषः, न युज्यते वक्तुम्। अस्मिन् पक्षे हि! उपाधि-[3]ब्रह्मव्यतिरेकेण[3] वस्त्वन्तराभावात्, निरवयवस्य ब्रह्मणः उपाधिना [4]छेदा[4]द्यसम्भवाच्च, उपाधिगत एव भेद इति, उत्क्रान्तेः प्रागपि ब्रह्मैव।

औपाधिकस्य भेदस्य अपारमार्थिकत्वे, 'कस्याऽयम् उत्क्रान्तौ ब्रह्मभावः?'

---

सम्भावितयोः पक्षयोः पराभिमतं परिशेषयितुं, **स्वाभाविकत्वौपाधिकत्वविकल्पः** कृतः। **पारमार्थिकत्वापारमार्थिकत्वविकल्पः**, शङ्कर-भास्करोक्तपक्षद्वयस्याऽपि 'उत्क्रमिष्यतः' (ब्र.सू. १-४-२१) इति सूत्रेणैकेन सूचितस्य एतेन निराचिकीर्षितत्वज्ञापनाय कृतः।

[**स्वरूपप्रयुक्तत्वेन**—आत्मस्वरूपव्यापकत्वेन, आत्मस्वरूपसत्तानिबन्धनत्वेनेति वा। **तदनपायात्**—भेदानपगमात्।]

[**अपैति**—अपायं प्राप्नोति, नश्यति।]

**उपाधि-ब्रह्मव्यतिरेकेण**—उपाधिभूतमर्थं, तेनोपहितं ब्रह्म च वर्जयित्वा।

---

[सूत्रार्थः। **अवस्थितेः**—(अन्तर्यामिब्राह्मणोक्त) जीवात्मन्यन्तरात्मतया परमात्मनः अवस्थानं हेतूकृत्य, (श्रुतिषु जीववाचिशब्दैः परमात्माभिधानम्), **इति**—एवंरूपं समाधानम्, **काशकृत्स्नः**—तन्नामा आचार्यः मन्यते।]

अवस्थितेरात्मनि च ब्रह्मणो जीववाचकात्।
अभिधानं युक्तमिति काशकृत्स्नमुनेर्मतम्॥ (ब्र.प.मा. १३१)

---

[1] तदयुक्तम्—थ. [2] कत्वेऽपि—वा. [3] ब्रह्मातिरेकेण—इ. [4] भेदा—न.

इति वक्तव्यम् ।

ब्रह्मण एव अविद्योपाधितिरोहित[1]स्वस्वरूपस्य[1]—इति चेत्,

न; नित्यमुक्तस्वप्रकाशज्ञान[2]स्वरूपस्य[2], [3]अविद्योपाधि[3]तिरोधानासम्भवात् । तिरोधानं नाम, वस्तुस्वरूपे विद्यमाने तत्प्रकाशनिवृत्तिः ।

'प्रकाश एव वस्तुस्वरूपम्' इत्यङ्गीकारे, तिरोधा[4]नाभावः[4], स्वरूपनाशो वा स्यात् । अतः नित्याविर्भूत[5]स्वस्वरूप[5]त्वात्, तस्य उत्क्रान्तौ ब्रह्मभावे, न कश्चिद्विशेष इति, 'उत्क्रमिष्यतः' इति विशेषणं व्यर्थमेव ॥

[स्वरूपाभिनिष्पत्तिश्रुत्यर्थनिर्णयः]

'अस्मात् शरीरात् [6]समुत्थाय[6]' (छां.उ. 8-3-4)

इति, पूर्वम् अनेवंरूपस्य [7]न तदानीं[7] ब्रह्मताऽऽपत्तिमाह; अपि तु, [8]पूर्वसिद्ध[8]स्वरूपस्य आविर्भावम् । तथा हि वक्ष्यते—

'सम्पद्याऽऽविर्भावः स्वेन शब्दात्' (ब्र.सू. 4-4-1)

इत्यादिभिः ॥

[सूत्रव्याख्यानम्]

अतः,

'अनेन जीवेनात्मनाऽनु[9]प्रविश्य[9]' (छां.उ. 6-3-2)

'य आत्मनि तिष्ठन्, आत्मनोऽन्तरो यमात्मा न वेद,
यस्याऽऽत्मा शरीरं, य आत्मानमन्तरो यमयति,
सत आत्माऽन्तर्याम्यमृतः' (बृ.उ.मा.पा. 5-7-26)

'योऽक्षरमन्तरे सञ्चरन्, यस्याक्षरं शरीरं, यमक्षरं न वेद ........
एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' (सुबा.उ. 7)

---

[अविद्योपाधिः—अविद्याख्यः उपाधिः ।

व्यर्थमेवेति । उत्क्रमिष्यतो जीवस्य ब्रह्मभावः, अतादृशस्य न तथा इति, वैलक्षण्याभावेन व्यावर्त्याभावात् इति ॥

आविर्भावः—मणेः मालिन्यापनोदनेन पूर्वं सत एव प्रकाशस्य तिरोहितस्य व्यक्तीकरणमिव, आत्मस्वरूपगतस्यैव गुणाष्टकस्य पुरोधानम् ॥]

---

[1] स्वरूपस्य—न. [2] रूपस्य—द. [3] अविद्या—द. [4] नासम्भवः—अ.
[5] स्वरूप—द. [6] समुत्थाय परं ज्योतिरुपसम्पद्य—इ, वा. [7] तदानीं—द. [8] सिद्धस्य—थ.
[9] प्रविश्य नामरूपे व्याकरवाणि इति—वा.

'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' (तै.आर. 3-11-3)

इति स्वशरीर[1]भूते जीवात्मनि[1] आत्मतया अवस्थितेः, जीवशब्देन ब्रह्मप्रतिपादनम् इति, काशकृत्स्न आचार्यो मन्यते स्म । 'जीवशब्दश्च, जीवस्य परमात्मपर्यन्तस्यैव वाचकः ; न जीवमात्रस्य' इति पूर्वमेवोक्तम्,

'नाम-रूपे व्याकरवाणि' (छां उ 6-3-2)

इत्यत्र ॥

[उक्तार्थस्यैव सूत्रकारसंमतत्वमिति प्रतिपादनम्]

एवम् आत्मशरीरभावेन तादात्म्योपपादने-परस्य ब्रह्मणः अपहतपाप्मत्व-सर्वज्ञत्वादिगोचराः, जीवस्य [2]अविदुषः[2] शोचतः ब्रह्मोपासनान्मोक्षवादिन्यः, जगत्सृष्टि-प्रलयाभिधायिन्यः, जगतः ब्रह्मतादात्म्योपदेशपराश्च सर्वाः श्रुतयः सम्यगुपपादिता भवन्ति-इति, काशकृत्स्नीयमेव मतं सूत्रकारः स्वीकृतवान् ॥

[काशकृत्स्नानुरोधेन श्रुतिवाक्यार्थः]

अयमत्र वाक्यार्थः-अमृतत्वोपाये मैत्रेय्या पृष्टे, याज्ञवल्क्यः,

'आत्मा वा अरे द्रष्टव्यः' (बृ.उ. 6 5-6)

इत्यादिना, परमात्मोपासनम् अमृतत्वोपायमुक्त्वा,

'आत्मनि खल्वरे दृष्टे' (बृ उ. 6-5-6)

---

अतः—मतान्तरेण निर्वाहानुपपत्तेः ।

अवस्थितेरिति । तत्तद्वेद्यत्वेन नियन्तृत्वेन निर्दोषत्वेन च तेष्ववस्थानमित्यर्थः । जीवशब्दश्चेति । शरीरवाचिशब्देषु आकृतिनयावतारः समर्थितः इत्यर्थः । [आकृतिर्वा क्रियार्थत्वात् (पू.मी.सू. 1-3-33)] । इत्यत्रेति, सूत्रार्थो व्याख्यातः । अस्य सूत्रस्य आश्मरथ्यौडुलोमिमतोक्तेः पूर्वम् अनिवेशितत्वात्, अतःपरं मतान्तरानुपन्यासाच्च, काशकृत्स्नमतेन निर्वाहस्य सूत्रकाराभिमतत्वमवगम्यते ॥

अपहतपाप्मत्व-सर्वज्ञत्वशब्दौ उभयलिङ्गत्वप्रदर्शनार्थौ । आदिशब्दः, विजरत्व-सर्वशक्तित्वादिपरः । मोक्षवादिन्यः इत्यन्तेन भेदश्रुतयो विवक्षिताः । जगत्सृष्टि-प्रलयेति, अभेदश्रुत्यभिप्रायेणाह । सम्यक्—प्रत्यक्षादिविरोधः परस्परविरोधश्च यथा न भवति, तथा । सकलश्रुत्यविरोध-मुख्यार्थत्वानुगुण्यम् एतन्निर्वाहस्वीकारहेतुः, इत्यर्थः । 'अन्यश्च राजन् स परः

---

[1] भूतजीवात्मनि—थ. [2] विदुषः—थ.

इत्यादिना उपास्यलक्षणम्, दुन्दुभ्यादिदृष्टान्तैश्च उपासनोपकरणभूतमनःप्रभृति[1]करण[1]-नियमनं च सामान्येनाऽभिधाय,

'स यथाऽऽर्द्रैधाग्नेः' (बृ.उ. 6-5-11)

इत्यादिना,

'स यथा सर्वासामपां समुद्र [2]एकायनम्[2]' (बृ.उ. 6-5-12)

इत्यादिना च, उपास्यभूतस्य परस्य ब्रह्मणः निखिलजगदेककारणत्वम्, सकलविषय-[3]प्रवृत्ति[3]मूलकरणग्रामनियमनं च, विस्तीर्णम् उपदिश्य,

'स यथा सैन्धवघनः' (बृ.उ. 6-5-13)

---

तथाऽन्यः पञ्चविंशकः। तत्स्थत्वादनुपश्यन्ति ह्येक एवेति साधवः॥' इति, सूत्रकारेणैव भगवता व्यासेन, मोक्षधर्मे च याज्ञवल्क्य-जनकसंवादे, अभेदनिर्देशस्य अवस्थितिनिबन्धनत्वं स्पष्टतरमभिहितम्॥ वैष्णवे पुराणे च 'सर्वात्मकोऽसि सर्वेश सर्वभूतस्थितो यतः' इत्यत्राऽपि अवस्थितिनिबन्धनं सर्वात्मकत्वं स्पष्टमुक्तम्॥

**दुन्दुभ्यादीति।** 'स यथा दुन्दुभेर्हन्यमानस्य न बाह्यान् शब्दान् शक्नुयात् ग्रहणाय, दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः' इति [तत्र दृष्टान्तवाक्यम्]। 'दुन्दुभेः' इति अनादरे षष्ठी। 'ग्रहण'शब्द इह निरोधपरः। यथा 'गृहीतानि पुष्पाणि' इत्यादौ उपादानस्य, 'गृहीतश्चोरः' इत्यादौ निरोधस्य च वाचकत्वात्। यथा दुन्दुभौ हन्यमाने, ततो बहिर्निःसरतः शब्दान् न निरोद्धुं शक्नुयात्। परेणोपादीयमानदुन्दुभिनिरोधेन, तदाहन्तृपुरुषनिरोधेन वा शब्दो निरुध्यते; एवम् इन्द्रियेषु व्याप्रियमाणेषु बाह्यार्थज्ञानं दुर्निरोधम्; तस्मात् इन्द्रियनिरोधेन, तत्प्रवृत्तिमूलस्य मनसो निरोधेन च परमात्मसाक्षात्कारविरोधिबाह्यार्थज्ञानं निरुध्यते—इति। **मनःप्रभृतीति।** दुन्दुभिनिरोधस्थानीयं चक्षुरादिनियमनम्। तदाहन्तृपुरुषनिरोधस्थानीयं मनोनियमनमिति भावः। **सामान्येनेति** निमित्तोपादानरूपविभागानभिधानात्, कार्यविशेषानुपादानाच्च उपास्यलक्षणभूतं कारणत्वं सामान्येनोक्तम्। चक्षुरादिकरणविशेषाणां नियमनप्रकारविशेषानभिधानात् करणनियमनं च सामान्येन उक्तम् इत्यर्थः। **एककारणम्** इति, 'एक'शब्दः निमित्तोपादानैकत्वपरः। **विस्तीर्णमिति।** निमित्तोपादानविभागकथनात्, कार्यबाहुल्यप्रदर्शनाच्च कारणत्वं विस्तृतम्; करणविशेषाणां निरोद्धव्यवृत्ति-

---

[1] करणग्राम—अ, न. [2] एकायतनम्—ई. [3] वृत्ति—द.

इत्यादिना, अमृतत्वोपायप्रवृत्तिप्रोत्साहनाय, जीवात्मस्वरूपेणाऽवस्थितस्य परमात्मनः अपरिच्छिन्नज्ञानैकाकारतामुपपाद्य, तस्यैव अपरिच्छिन्नज्ञानैकाकारस्य, संसारदशायां भूतपरिणामानुवृत्तिम्,

*'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवाऽनुविनश्यति' (बृ.उ. 6-5-13)

इत्यभिधाय,

'न प्रेत्य संज्ञाऽस्ति' (बृ.उ. 6-5-13)

इति, मोक्षदशायां स्वाभाविकापरिच्छिन्नज्ञानसङ्कोचाभावेन, भूतसङ्घातेनैकीकृत्य आत्मनि देवादिरूपज्ञानाभावमुक्त्वा, पुनरपि,

'यत्र हि द्वैतमिव भवति' (बृ.उ. 6-5-15)

इत्यादिना, अब्रह्मात्मकत्वेन नानाभूत[1]वस्तु[1]दर्शनम् अज्ञानकृतमिति, निरस्तनिखिलाज्ञानस्य ब्रह्मात्मकं कृत्स्नं जगत् अनुभवतः, ब्रह्मव्यतिरिक्तवस्त्वन्तराभावेन भेददर्शनं निरस्य,

---

विशेषप्रदर्शनेन, करणनियमनं विस्तृतमित्यर्थः। **प्रोत्साहनायेति**। स्वस्वरूपस्यैव प्राप्यत्वे अवगते हि! प्रवृत्त्यादिकं जायत इत्यर्थः। **उपपाद्य**—दृष्टान्तमुक्त्वा। **भूतपरिणामानुवृत्तिमिति**। भूतेषु नश्यत्सु एष नश्यतीत्यर्थः। **विनश्यतीति**। विनाशो नाम अत्यन्तज्ञानसङ्कोचः; 'अविनाशी वा अरेऽयमात्मा' इति अनन्तरवाक्याविरोधात्। प्रेत्यशब्दः चरमदेहावसानपरः; 'नोपजनं स्मरन्' इति श्रुत्यन्तरार्थप्रत्यभिज्ञानात्। अत्रापि 'एतावदेव खल्वरे अमृतत्वम्' इति अमृतत्वस्य उक्तत्ववचनाच्च मोक्षविषयत्वं युक्तम् इत्यभिप्रायः। **स्वाभाविकेति**। स्वरूपस्य ज्ञानात्मकत्वं, 'स यथा सैन्धवघनः' इत्यादिनोक्तम्। अतः स्वाभाविकत्वं फलितम्। **अनन्तरशब्देन**, बहिरपि ज्ञानात्मकत्वस्योक्तत्वात्, धर्मभूतज्ञानवत्त्वं सिद्धम्। तस्य च अपरिच्छिन्नत्वं, 'सर्वं ह पश्यः पश्यति' इति श्रुत्यन्तरे सिद्धमित्यभिप्रायः। **पुनरपीति**। भ्रान्तिः द्विविधा—अनात्मनि देहबुद्धिः, अब्रह्मात्मकतया स्वातन्त्र्यबुद्धिश्चेति। तत्र 'न प्रेत्य संज्ञाऽस्ति' इत्यनेन बन्धनदशानुवृत्तदेहात्मभ्रमनिवृत्तिरुक्ता; अथ स्वनिष्ठतानिवृत्तिरुच्यते इत्यर्थः। **यत्र**—यस्यामवस्थायाम्। **द्वैतमिव भवति**—परमात्मनः पृथक्त्वम्, स्वनिष्ठतया पृथक्त्वं भवति। इवशब्दः, स्वातन्त्र्यस्य अप्रामाणिकत्वद्योतकः। **अब्रह्मात्मकत्वेनेति**। नानात्वनिषेधस्य विहितनानात्वव्यतिरिक्तविषयत्वात्, स्वनिष्ठनानात्वं निषेध्यमित्यभिप्रायः। **ब्रह्म........राभावेनेति**। अप्रामाणिकज्ञानं हि! दोषादुत्पद्यते; दोषाभावे तु वस्तुसद्भावं

---

* 'प्रज्ञानघनः' षष्ठे उपनिषत्पाठः। [1] वस्तुगत—द.

'येनेदं सर्वं विजानाति, तं केन विजानीयात् ?' (बृ.उ. 6–5–15)

[1]इति च,[1] 'जीवात्मा स्वात्मतया अवस्थितेन येन परमात्मना आहितज्ञानः सन्, इदं [2]सर्वं[2] विजानाति, अयम्, तं केन विजानीयात् ? न केनाऽपि' इति परमात्मनः दुरवगमत्वमुपपाद्य,

'स एष नेति नेति' (बृ.उ 6–5–15)

इत्यादिना, अयं सर्वेश्वरः स्वेतरसमस्तचिदचिद्वस्तुविलक्षण[3]स्वरूप[3] एव, [4]सर्वशरीरः[4] सर्वस्यात्मतयाऽवस्थित इति, [5]स्वशरीर[5]भूत[6]चिदचिद्वस्तु[6]गतैः दोषैः न [7]संस्पृश्यते[7], इत्यभिधाय,

'विज्ञातारमरे केन विजानीयात् ? इत्युक्तानुशासनाऽसि मैत्रेयि !
एतावदरे खल्वमृतत्वम्' (बृ.उ. 6–5–15)

इति समस्तवस्तुविस[8]जातीयं[8] निखिलजगदेककारणभूतं, सर्वस्य विज्ञातारं पुरुषोत्तमम्, उक्तप्रकारादुपासनादृते, केन विजानीयात् ? इति, 'इदमेव उपासनम् अमृतत्वोपायः, ब्रह्मप्राप्तिरेव च अमृतत्वमभिधीयते' इत्युक्तवान् ॥

[अधिकरणार्थोपसंहारः]

अतः, परं ब्रह्मैव अस्मिन् वाक्ये प्रतिपाद्यते इति, 'परमेव ब्रह्म, जगत्कारणम् ; न पुरुषः, तदधिष्ठिता च प्रकृतिः' इति [9]स्थितम्[9] ॥ २२ ॥

इति वाक्यान्वयाधिकरणम् ॥ ६ ॥

---

विना दर्शनं नोपपद्यते, इत्यर्थः । **स्वेतर.........विलक्षणेति** । विहितप्रकारस्य निषेधायोगात्, चिदचिद्गतप्रकाराणां प्रमाणान्तरसिद्धत्वात् **इति**शब्दद्वयेन तत्प्रकारमनूद्य, निषेधद्वयेन, चिद्गतः अचिद्गतश्च प्रकारो व्युदस्यते (स एष नेति नेतीत्यत्र) । **विज्ञातारमिति** । प्रकरणोपक्रमोदित-कारणत्वव्याप्तसर्वज्ञत्वादिगुणप्रदर्शकः **विज्ञातृ**शब्दः इति भावः । 'विज्ञातारम्' इति वाक्यम् उपायान्तरव्युदसनमुखेन उक्तोपायनिगमनपरम् । 'एतावत्' इत्यादिवाक्यम् उपेयनिगमनपरम् इत्यर्थः ॥

[सूत्राणि—१. वाक्यान्वयात् २. प्रतिज्ञासिद्धेः ३. उत्क्रमिष्यतः
४. अवस्थितेः । ]

॥ इति वाक्यान्वयाधिकरणम् ॥ ६ ॥

---

[1] इति—थ. [2] सर्वं येन—वा. [3] रूप—इ, घ, वा. [4] सर्वशरीरतया—द. सर्वशरीरः सन्—वा. [5] शरीर—थ. [6] चिद्वस्तु—थ. [7] स्पृश्यते—च. [8] जातीयं निरस्तनिखिल-दोषम्—वा' जातीय निरस्तदोषम्—घ, न. [9] सिद्धम्—ई.

## ३४. प्रकृत्यधिकरणम् ॥ १-४-७ ॥ (सू. 23-28)

[अधिकरणार्थः—ब्रह्मण एव जगन्निमित्तता जगदुपादानता च]

[सद्विद्या (छां.उ. 6)]

# १३२. प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ १-४-२३ ॥

[पेटिकासङ्गतिः]

**एवं निरीश्वरसाङ्ख्ये निरस्ते सति, सेश्वरसाङ्ख्यः प्रत्यवतिष्ठते ।**

---

**एवमिति ।** 'एवं'शब्देनातीताधिकरणत्रयात्मकपेटिकाद्वयकृतनिरसनप्रकारो विवक्षितः । एवं साक्षात्सङ्गतेन विकल्पेन, प्रसङ्गप्राप्तेन नियमेन च कारणत्वे प्रतिक्षिप्ते, समुच्चयेन कारणत्वं प्रतिक्षिप्यत इति न असङ्गतिः इत्यर्थः । स्वनिष्ठवस्तुद्वयस्य निमित्तभावेन उपादानभावेन च अन्योन्यसापेक्षतया एकस्मिन् कार्ये अन्वयो हि व्युदस्यते । सिद्धान्ते तु ज्ञानादिवत् उपादानभूतस्य ब्रह्मणः प्रकृतिर्विशेषणम् ; तस्य सर्वशक्तित्वात्, इति न समुच्चयनिरासविरोधः । अत एव अवान्तरसङ्गतिरप्यस्ति । मैत्रेयीब्राह्मणे हि ! परब्रह्मण एव एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानादिभिः सर्वविधकारणत्वमुक्तम् । तदयुक्तम् ; परब्रह्मणः निमित्तमात्रत्वात् । उपादानं तु प्रधानम्, इति शङ्कया उत्थानप्रतीतेः ।

[विचाराः—] किं ब्रह्म निमित्तमात्रम् ? उपादानमपि ? इति । किं कारणवाक्यं, ब्रह्मणो निमित्तत्वमात्रं प्रतिपादयति ? उत उपादानतामपि ? इति । प्रतिज्ञादृष्टान्तौ किं स्वारस्येन नेयौ ? उत क्लिष्टतया नेयौ ? किम् अन्यत्र निमित्तोपादानभेदनियमः, निर्दोषत्वश्रुतिः, निमित्तोपादानभेदश्रुतिश्च प्रतिज्ञा-दृष्टान्तोपरोधका भवन्ति ? न ? इति ।

यदा उपरोधका भवन्ति ; तदा प्रतिज्ञादृष्टान्तयोः क्लिष्टतया निर्वाह्यत्वात्, निमित्तत्वमात्रं वेदान्ताः प्रतिपादयन्तीति, ब्रह्म निमित्तमात्रम्,—इति पूर्वपक्षः स्यात् ।

---

[सूत्रार्थः । (परं ब्रह्म) **प्रकृतिश्च**—जगतः निमित्तकारणमिव उपादानकारणमपि, **प्रतिज्ञा—दृष्टान्तयोः**—(तथा सत्येव) 'यस्मिन्नु खलु....विज्ञातं भवति' इत्युक्तायाः अभिमतार्थसाधन परायाः वाचः (तथा) 'यथा सोम्यैकेन....विज्ञातं स्यात्' इति निदर्शनोक्तेश्च; **अनुपरोधात्**—अविरोधस्य सिद्धेः (अनुपादानत्वे विरोधात् इत्यर्थः) ॥]

**उपादानं च तद्ब्रह्म प्रतिज्ञासिद्धये भवेत् ।**
**सुवर्णकटकादीनां दृष्टान्तानामबाधतः ॥** (ब्र.प.मा. १३२)

यद्यपि—ईक्षणादिगुणयोगात्, सर्वज्ञम् ईश्वरं, जगत्कारणत्वेन वेदान्ताः प्रतिपादयन्ति ; तथाऽपि, 'वेदान्तैरेव, जगदुपादानतया प्रधानमेव प्रतिपाद्यते' इति प्रतीयते । न हि! वेदान्ताः, सर्वज्ञस्य अपरिणामिनः अधिष्ठातुः ईश्वरस्य, अधिष्ठेयेन अचेतनेन परिणामिना प्रधानेन विना, [1]जगतः कारणत्वम्[1] अवगमयन्ति ॥

[उक्तार्थे श्रुति-स्मृतिप्रदर्शनपूर्वकं पूर्वः पक्षः]

तथा हि ; अपरिणा[2]मिनम्[2] एनम्, प्रकृतिं च एतदधिष्ठितां परिणामिनीम् अधीयते—

'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' (श्वे.उ 6-19)

'स वा एष महानज आत्माऽजरोऽमरः' (बृ.उ. 6-4-25)

'विकारजननीमज्ञामष्टरूपामजां ध्रुवाम्' (मन्त्रि.उ. 1-3)

'ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः ।

सूयते [3]पुरुषार्थं च[3] तेनैवाऽधिष्ठिता जगत् ॥' (मन्त्रि उ. 1-4)

'गौरनाद्यन्तवती सा जनित्री भूतभाविनी ' (मन्त्रि.उ. 1-5)

इति । तथा 'प्रकृतिम् उपादानभूताम् अधिष्ठायैव, ईश्वरः विश्वं जगत् सृजति, इति श्रूयते—

---

यदा नोपरोधका भवन्ति ; तदा प्रतिज्ञादृष्टान्तयोः स्वरसतया नेयत्वात्, उपादानत्वमपि वेदान्ताः प्रतिपादयन्तीति, उपादानमपि ब्रह्मैव—इति राद्धान्ते फल-फलिभावः ॥

**ईक्षणादि** इति 'आदि'शब्दः आनन्दादिपरः । **वेदान्तैरेव**—ब्रह्मैककारणत्वपरतया त्वदभिमतैरेव, इति भावः । **न हीति** । ईश्वरस्य चेतनत्वात् अपरिणामित्वेन अधिष्ठातृत्वेन च' प्रधानस्य अचेतनतया परिणामित्वेन अधिष्ठेयत्वेन च वेदान्तप्रतिपादितत्वं प्रतिज्ञातार्थे हेतुः, इत्यर्थः । **निष्कलम्** इत्यादिवाक्यम्, ईश्वरस्य अपरिणामित्वविषयम् । **विकारजननीम्** इति, प्रकृतेः विकारित्वाधिष्ठेयत्वविषयम् । **जनित्री**—समष्टिसृष्टिकरी । **भूतभाविनी**—व्यष्टिसृष्टिकरी । **तथेति** । [पूर्वं] प्रधानप्रतिपादके वाक्ये तद्विशेषणतया ईश्वरस्य अधिष्ठातृत्वं दर्शितम् । [अनेन] ईश्वरप्रतिपादके वाक्ये तस्य प्रधानाधिष्ठातृतया उपादानभूतात्तस्माद्भेदं दर्शयति । 'महेश्वर'शब्देन, 'मायि'शब्दनिर्दिष्टस्य निमित्तकारणस्य, मायां प्रति प्रेरकत्वं विवक्षितमिति भावः ।

---

[1] जगत्कारणत्वम्—थ.  [2] मिनमेव—इ, घ, न.  [3] पुरुषार्थांश्च—वा.

'अस्मान्मायी सृजते विश्वमेतत्........ (श्वे. उ. 4-9)
मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्' (श्वे.उ. 4-10)

इति । स्मृतिरपि —

'मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्' (भ.गी. 9-10)

इति ।

एवम् अश्रुतेऽपि प्रधानोपादानत्वे, ब्रह्मणो जगत्कारणत्व[1]श्रुत्यन्यथाऽनु[1]पपत्त्यैव, प्रधानस्वरूपं, तस्य ईश्वराधिष्ठितस्य जगदुपा[2]दानत्वं[2] च सिध्यति ।

[तत्र वेदान्त्यभिमतनिमित्तोपादानैक्यदूषणम्]

एवमेव हि ! लोके निमित्तोपादानयोः अत्यन्तभेदो दृश्यते । मृत्-सुवर्णादेः अचेतनस्य घट-कटकाद्युपादानत्वम्, चेतनस्य कुलाल-सुवर्णकारादेः [3]निमित्तत्वं च[3] नियतम् उपलभ्यते । कार्यनिष्पत्तिश्च, नियमेन अनेककारकसव्यपेक्षा दृष्टा । एवं निमित्तोपादानयोः भेदनियमं, कार्यनिष्पत्तेः अनेककारकसव्यपेक्षत्वनियमं च अतिक्रम्य, एकमेव ब्रह्म उपादानं निमित्तं च प्रतिपादयितुं, न प्रभवन्ति वेदान्तवाक्यानि ।

अतः—ब्रह्म निमित्तकारणमेव ; न उपादानम् । उपादानं तु, तदधिष्ठितं प्रधानमेव—इति,

---

**ब्रह्मण** इति । सत्य-ज्ञानादिलक्षणत्वात् अपरिणामिनः इति भावः । **सिध्यतीति** । समस्त-प्रपञ्चनिर्माणानुगुणम् अचेतनस्वरूपम्, तस्य च अचेतनत्वादेव तदधिष्ठितत्वं च सिद्ध्यतीत्यर्थः ।

**अत्यन्तभेदः** — शरीरतया आत्मनिष्ठत्वमप्यसहमानो भेदः । **एवम्**—पूर्वोक्तश्रुति-श्रुत्यर्थापत्त्यानुगुण्येन । तर्कसहचरितश्रुति-श्रुत्यर्थापत्तीनां प्रबलत्वात्, केवलश्रुतिमात्रं प्रतीयमानमपि, स्वार्थं यूपादित्यैक्यमिव न प्रतिपादयितुं शक्नोतीत्यर्थः । **एकमेवेति** । परिणामित्वा-परिणामित्वयोः चेतनत्वाचेतनत्वयोः प्रेर्यत्व-प्रेरकत्वयोश्च एकस्मिन् व्याहतत्वाच्च, अयोग्यं निमित्तोपादानैक्यं न वेदान्ताः प्रतिपादयितुं शक्नुवन्तीत्यभिप्रायः ।

**न उपादानम्**—न उपादानमपीत्यर्थः । नहि, निमित्तं वा ? उपादानं वा ? इति विशये, उपादानत्वं निषिध्यते ; किन्तु उभयात्मकत्वं हि प्रतिषेध्यम् ।

---

[1] श्रुत्यर्थानु—इ. [2] दानकारणत्वं—इ, वा. [3] निमित्तत्वं—द.

[सिद्धान्तप्रदर्शनम्]

एवं प्राप्ते, अभिधीयते—प्रकृतिश्च प्रतिज्ञा-दृष्टान्तानुपरोधात्—इति। प्रकृतिश्च—उपादानं च। न निमित्तकारणमात्रं ब्रह्म; उपादानकारणं च ब्रह्मैव, इत्यर्थः॥

कुतः?

प्रतिज्ञा-दृष्टान्तानुपरोधात्। एवमेव हि! प्रतिज्ञा-दृष्टान्तौ न उपरुध्येते।

प्रतिज्ञा तावत्—

'स्तब्धोऽस्युत तमादेशमप्राक्ष्यः? येनाऽश्रुतं श्रुतं भवति अमतं मतम् अविज्ञातं विज्ञातम्' (छां उ. 6–1–3)

इति, एकविज्ञानेन सर्वविज्ञानविषया। दृष्टान्तश्च—

'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्' (छां.उ. 6–1–4)

'यथा सोम्यैकेन लोहमणिना' (छां.उ. 6–1–5)

'यथा सोम्यैकेन नखनिकृन्तनेन' (छां.उ. 6–1–6)

इति कारणविज्ञानात् कार्यविज्ञानविषयः॥

[ब्रह्मणो निमित्तमात्रत्वे एकविज्ञानेन सर्वविज्ञानानुपपत्तिः]

यदि निमित्तकारणमेव जगतः ब्रह्म; तदा तद्विज्ञानात् न समस्तं जगत् विज्ञातं स्यात्। न हि! कुलालादि[1]विज्ञानेन[1] घटादिः विज्ञायते। अतः प्रतिज्ञा-दृष्टान्तयोः बाध एव।

ब्रह्मण एव उपादानत्वे—उपादानभूतमृत्पिण्ड-लोहमणि-नखनिकृन्तन[2]विज्ञानेन[2], घट-मणिक-कटक-मकुट-वासी-परश्वथादितत्कार्यविज्ञानवत्, निखिलजग[3]दुपादान[3]-भूते ब्रह्मणि विज्ञाते, तत्कार्यं [4]निखिलं जगत्[4] विज्ञातं स्यात्। 'कारणमेव अवस्थान्त-

---

दृष्टान्तश्चेति। बहुदृष्टान्तोपादानं तात्पर्यज्ञापनार्थम्।

न हीति, एवं विपर्यये अनुपपत्तिरुक्ता।

ब्रह्मण एवेति, उक्तार्थे उपपत्तिमाह। एवं सौत्रं हेतुवाचिपदं व्याख्यातम्। कारणमेवेति। एवं 'वाचारम्भण'मित्यादिवाक्यार्थ उक्तः; तत्र हि! कार्य-कारणैक्यं प्रतिपाद्यते।

---

[1] ज्ञानेन—द. विज्ञाने—न. [2] ज्ञानेन—द. [3] देककारण—द. [4] जगत्—न.

[1]रापन्नं[1] कार्यम् ; न द्रव्यान्तरम्' इति, कार्य-कारणरूपेणावस्थितमृत्-तद्विकारादि-निदर्शनेन प्रतिज्ञासमर्थनात्, ब्रह्मैव जगदुपादानं च—इति निश्चीयते ॥

[निमित्तोपादानयोर्भेदस्य श्रौतत्वनिरासः]

यत्तु—निमित्तोपादानयोः भेदः श्रुत्यैव [2]प्रतीयते—इति,[2]

[3]तदसत् ; निमित्तोपादानयोः ऐक्यप्रतीतेः[3] ;

'उत तमादेशमप्राक्ष्यः ? येनाऽश्रुतं श्रुतं भवति' (छां.उ. 6–1–3)

इति । आदिश्यते—[4]प्रशिष्यते[4] अनेन, इति आदेशः ;

'एतस्य वा अक्षरस्य प्रशासने [5]गार्गि[5] !' (बृ.उ. 5–8–8)

इत्यादिश्रुतेः । साधकतमत्वेन, कर्ता विवक्षितः । 'तम् आदेष्टारम् अप्राक्ष्यः ? येन, अश्रुतं श्रुतं भवति – येन आदेष्ट्रा अधिष्ठात्रा श्रुतेन, अश्रुतमपि श्रुतं भवति' इति, निमित्तोपादानयोः ऐक्यं प्रतीयते ;

---

**ब्रह्मैवेति** । ननु —'अव्यक्त'-शब्दवाच्यावस्थायामेव ब्रह्मण उपादानत्वे, सर्वोपादानत्वाभावात् प्रतिज्ञोपरोधः । घटाद्यवस्थास्वपि ब्रह्मण उपादानत्वे, मृदः उपादानत्वाभावात् दृष्टान्तविरोधः— इति । तत्र न प्रथमं शिरः ; अनभ्युपगमहतत्वात् । द्वितीये मृदाद्यवस्थद्रव्यशरीरकस्यैव ब्रह्मणः उपादानत्वादिविरोधः । विशेषणभूतमृद्द्रव्यमात्रस्य कार्यकारणभावः लोकप्रसिद्धत्वात् दृष्टान्तीकृतः । तत्तदवस्थद्रव्यशरीरकस्यैव ब्रह्मणः कार्य-कारणभावस्तु लोकप्रसिद्धत्वाभावात् दार्ष्टान्तिक इति प्रतिज्ञा-दृष्टान्तानुपरोधः ।

**यत्त्विति,** श्रुत्यैव निमित्तोपादानभेदसिद्धिमनुवदति ।

**तदसत्**—निमित्तोपादानभेदप्रतिपादनम् असत्, इत्यर्थः । **उत तमादेशमिति,** निमित्तोपादानयोरैक्ये श्रुतिमाह । **आदिश्यत** इति । [अत्र 'आदेश'शब्दे] प्रकृत्यर्थः उपदेशः ; प्रत्ययार्थः कर्म । उपदेश्यम् इत्यर्थः इति, 'आदेश'शब्दः पौरैर्व्याख्यातः । तद्व्यावृत्त्यर्थम् [इदमुक्तम्] । **प्रशिष्यते** इति. प्रकृत्यर्थव्याख्यानम् । **अनेन** इति, प्रत्ययार्थ-व्याख्यानम् । 'अकर्तरि च कारके संज्ञायाम्' (पा.सू. 3–3–19) इति घञः कर्तृव्यतिरिक्तार्थ-विषयत्वात्, 'आदिशतीत्यादेशः' इत्यनुक्तिः । **साधकतमत्वेनेति** । अव्यवहितसाधनत्वं साधकतमत्वम् । तथात्वेन कर्ता विवक्षितः; 'विवक्षातः कारकाणि भवन्ति' इति न्यायादिति भावः ।

---

[1] रमापन्नं—द. [2] प्रतीयते—द. [3] तदसत्—द. [4] प्रशास्यते—थ. [5] गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः—वा.

'सदेव सोम्येदमग्र आसीदेकमेव' (छां.उ. 6-2-1)
इति प्राक् सृष्टेः एकत्वावधारणात्, 'अद्वितीय'पदेन अधिष्ठात्रन्तरनि[1]वारणाच्च[1] ॥

[उक्तेऽर्थे मन्त्रिकोपनिषद्विरोधशङ्का-परिहारौ]

ननु—एवं सति, 'विकारजननीम्' 'गौरनाद्यन्तवती' इत्यादिभिः, प्रकृतेः [2]आद्यन्त[2]विरहेण नित्यत्वं, जगदुपादानत्वं च श्रूयमाणं—कथमुपपद्यते?

तदुच्यते—तत्राऽपि अविभक्तनाम-रूपं कारणावस्थं ब्रह्मैव, 'प्रकृति'शब्देन अभिधीयते; ब्रह्मव्यतिरिक्तवस्त्वन्तराभावात्। तथा हि! श्रुतयः—

'सर्वं तं परादात्, योऽन्यत्राऽऽत्मनः सर्वं वेद' (बृ.उ. 6-5-7)

'यत्र त्वस्य सर्वमात्मैवाऽभूत्, तत् केन कं पश्येत्? (बृ.उ. 6-5-15)

इत्याद्याः।

'सर्वं खल्विदं ब्रह्म' (छां.उ. 3-14-1)

'ऐतदात्म्यमिदं सर्वम्' (छां.उ. 6-8-7)

इति, कार्यावस्थं कारणावस्थं च सर्वं जगत्, ब्रह्मात्मकम्—इति श्रवणाच्च।

[उक्तार्थस्यैव सर्वश्रुतिसिद्धत्वदृढीकरणम्]

एतदुक्तं भवति—

'यः पृथिवीमन्तरे सञ्चरन्, यस्य पृथिवी शरीरं, यं पृथिवी न वेद' (सुबा.उ. 7)

---

**एवं सति**—ब्रह्मण एव जगदुपादानत्वे सतीत्यर्थः। **आद्यन्तेति**। प्रकृतेः ब्रह्मोपादानकत्वमयुक्तम्; तस्यास्तु नित्यत्वश्रवणात्। अतः सैवोपादानमिति ब्रह्म निमित्तमेवेत्याशयः।

**प्रकृतिशब्देन**—प्रकृतिवाचकशब्देन, इत्यर्थः। **ब्रह्म........राभावात्**—युतसिद्धवस्त्वन्तराभावात, इत्यर्थः। **केन कं पश्येदिति। केन**—अब्रह्मात्मकस्वनिष्ठदर्शनसाधनेन। **कम्**—स्वनिष्ठमर्थम्। **कः**—चेतनः। **पश्येत्**—स्वनिष्ठार्थदर्शनसाधनं, स्वनिष्ठं दृश्यं, तद्द्रष्टा च नास्तीत्यर्थः। इह, न द्रष्टृ-दृश्य-दर्शननिषेधः प्रतिपाद्यः; 'यत्र त्वस्य सर्वमात्मैवाभूत्' इति स्ववाक्यैकदेशेन, 'सर्वं ह पश्यः पश्यती'त्यादिवाक्यान्तरेण च ब्रह्मात्मकत्वेन सर्वानुभवस्य विहितत्वात्। [इयं] स्वनिष्ठवस्त्वन्तराभावे श्रुतिरुक्ता। **सर्वं खल्विति**। सर्वस्य तदात्मकत्वे श्रुतिमाह।

---

[1] षेधाच्च—वा. [2] आद्यन्तवद्—द.

इत्यारभ्य,

'योऽव्यक्तमन्तरे सञ्चरन् , यस्याऽव्यक्तं शरीरं, यमव्यक्तं न वेद,

योऽक्षरमन्तरे सञ्चरन् , यस्याऽक्षरं शरीरं, यमक्षरं न वेद' (सुबा.उ. 7)

'यः पृथिव्यां तिष्ठन् , पृथिव्या अन्तरः, यं पृथिवी न वेद,

यस्य पृथिवी शरीरं, यः पृथिवीमन्तरो यमयति' (बृ.उ. 5–7–7)

इत्यारभ्य,

'य आत्मनि तिष्ठन् , आत्मनोऽन्तरः, यमात्मा न वेद, यस्याऽऽत्मा शरीरं,

य आत्मानमन्तरो यमयति, स त आत्माऽन्तर्याम्यमृतः' (बृ.उ.मा.पा. 5–7–26)

[1]इति च,[1] सर्वचिदचिद्वस्तुशरीरतया सर्वदा सर्वात्मभूतं परं ब्रह्म, कदाचित् विभक्तनाम-रूपम् , कदाचिच्च अविभक्तनाम-रूपम् । यदा विभक्तनाम-रूपं ; [2]तदा तदेव[2] बहुत्वेन कार्यत्वेन चोच्यते । [3]यदा च[3] अविभक्तनाम-रूपं ; तदा एकम् अद्वितीयं कारणमिति च ॥

[मन्त्रिकोपनिषद्वाक्यतात्पर्यम् ]

एवं सर्वदा चिदचिद्वस्तुशरीरस्य [4]परस्य ब्रह्मणः[4], अविभक्तनाम-रूपा या कारणावस्था ; सा,

'गौरनाद्यन्तवती' (मन्त्रि.उ. 1–4)

'विकारजननीमज्ञाम्' (मन्त्रि.उ. 1–3)

'अजामेकाम्' (श्वे.उ. 4–5)

इत्यादिभिः [5]अभिधीयते—इति[5] ।

[उक्ततात्पर्यस्य सुबालश्रुत्यादिविरोधपरिहारः]

ननु च—

'महानव्यक्ते लीयते, अव्यक्तमक्षरे लीयते' (सुबा.उ. 7)

---

**कदाचित्**—सिसृक्षोत्तरकालम् । **कदाचित्**—सञ्जिहीर्षोत्तरकालम् । **एकम् , अद्वितीयम्** इति निर्देशः, निमित्तोपादानयोः ऐक्यविषयश्रुतिस्मारणार्थः ।

**एवं....अभिधीयते** इति । 'या कारणावस्था, सा अभिधीयते' इति, न अवस्थानित्यत्वविवक्षयोच्यते ; किन्तु कारणावस्थोपलक्षितद्रव्यनित्यत्वमभिधीयते, इत्यर्थः ।

**ननु चेति** । अविभक्तनाम-रूपप्रधानविशिष्टब्रह्मणः कारणत्वमनुपपन्नम् ; अविभक्तनाम-रूपस्य सूक्ष्मावस्थस्य 'अव्यक्त'शब्दवाच्यस्यापि उत्पत्तिप्रलयश्रवणात् इत्यर्थः ।

---

1 इति—ग 2 तदेव—न. 3 यदा – वा. 4 ब्रह्मणः—थ. 5 अभिधीयते—न.

इति प्रलयश्रुतेः, अव्यक्तस्य उत्पत्ति-प्रलयौ प्रतीयेते । तथा च महाभारते—

'तस्माद्व्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम' (म.भा.शा. 8-13)

'अव्यक्तं पुरुषे ब्रह्मन्! निष्क्रिये सम्प्रलीयते' ॥ (म.भा.शा. 8-14)

इति,

नैष दोषः; अचिद्वस्तुशरीरस्य ब्रह्मणः, अव्यक्तशब्दवाच्यायाः त्रिगुणावस्थायाः कार्यत्वात् ।

'यदा तमस्तन्न दिवा न रात्रिः' (श्वे.उ. 4-18)

इति, कृत्स्नप्रलयदशायामपि ब्रह्मात्मकस्य [1]अतिसूक्ष्मस्याऽचिद्वस्तुनः[1] स्थित्यभिधानात्, जगत्कारणस्य परस्य ब्रह्मणः प्रकारभूतम् अतिसूक्ष्मं च अचिद्वस्तु नित्यमेवेति, तत्प्रकारं ब्रह्मैव, 'गौरनाद्यन्तवती' [2]इत्यादिष्वभि[2]धीयते ॥

[उक्तपरिहारस्य श्रुतिवाक्यान्तराद्यनुगुणत्वप्रदर्शनम्]

अत एव च,

'अक्षरं तमसि लीयते, तमः परे देव एकी भवति' (सुबा.उ. 2)

इति तमसः एकीभावमात्रमेव श्रूयते; न तु लयः। 'एकीभावः' इति, तमोऽभिधानाति-[3]सूक्ष्माचित्प्रकारस्य[3] ब्रह्मणः, अविभक्तनामरूपतया अवस्थानामभिधीयते ।

---

**नैष दोष** इति । अचिद्वस्तुनः अव्यक्तावस्थाया अपि सूक्ष्मावस्थासम्भवात्, तदवस्थाचिद्विशिष्टं ब्रह्म, अव्यक्तकारणमित्यर्थः । तत्र प्रमाणं **यदा तम** इति ।

**अत एव**—तदानीमपि 'तमः'शब्दवाच्यस्य ब्रह्मप्रकारस्य अचित्तत्त्वस्य सद्भावादेव इत्यर्थः । शब्दवैजात्यम् अर्थवैजात्यनिबन्धनम्; अर्थवैजात्यं च सकलश्रुत्यनुसारेण भवतीति भावः । **एकीभाव** इति । एकीभावश्च तमस्त्वे स्थिते एव, ततोऽपि अतिसूक्ष्मताऽऽपत्तिः । न हि! पूर्वं खण्डितं तमः, पश्चात् एकीभवति; किन्तु अवस्थावैषम्यमेव । अवस्थावैषम्यं हि विभागः । अतः अनतिप्रकृष्टसूक्ष्मत्वं विभागः । अविभागश्च निरतिशयसूक्ष्मताऽऽपत्तिः । वस्तुस्वरूपैक्याभावेऽपि तदन्तर्भावमात्रेण एकशब्दप्रयोगो दृष्टः; यथा मथनात्पूर्वम् अनुद्भूताग्नौ दारुणि एकशब्दः । 'लय'शब्दार्थः अवस्थान्तरापत्तिरेव; न तु द्रव्यविनाशः—इतीममर्थं

---

[1] अतिसूक्ष्मस्य—वा.　[2] इत्यादिभिरभि—न.　[3] सूक्ष्माचिद्वस्तुप्रकारस्य—वा, सूक्ष्मचिदचित्प्रका—थ.

'तम आसीत्तमसा गूढमग्रे प्रकेतम्, ....तमसस्तन्महिनाऽजायतैकम्'

(तै.ब्रा. 2-8-9-10)

इत्याद्यपि, एतदेव भवति। तथा च मानवं [1]वचः[1]—

'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः॥' (म.स्मृ. 1-5)

इति।

'अस्मान्मायी सृजते विश्वमेतत्' (श्वे.उ. 4-9)

इत्यादि, अनन्तरमेव उपपादयिष्यते; ब्रह्मणः अपरिणामित्वश्रुतयश्च॥

[उक्तार्थस्य तर्कानुगृहीतत्वशङ्का-निरासौ]

यत्तु—एकस्य निमित्तत्वम् उपादानत्वं च न सम्भवति, [2]एककारक[2]निष्पाद्यत्वं च कार्यस्य; लोके तथा नियम[3]दर्शनात्[3]। अतः 'अग्निना सिञ्चेत्' इतिवत्, वेदान्तवाक्यानि एकस्मादेवोत्पत्तिं प्रतिपादयितुं न प्रभवन्ति—इति,

अत्रोच्यते—सकलेतरविलक्षणस्य परस्य ब्रह्मणः सर्वशक्तेः सर्वज्ञस्य एकस्यैव सर्वमुपपद्यते। मृदादेः अचेतनस्य, ज्ञानाभावेन अधिष्ठातृत्वायोगात्, अधिष्ठातुः कुलालादेः, विचित्र[4]परिणामशक्ति[4]विरहात्, असत्यसङ्कल्पतया च तथा दर्शननियमः। अतः ब्रह्मैव जगतो निमित्तम् उपादानं च॥ २३॥

---

विशदयति, **आसीदिदमिति**। **तमोभूतम्**—तमोऽवस्थम्। **अप्रज्ञातमिति**। प्रकृष्टं ज्ञानम्—स्पष्टम् अपरोक्षं ज्ञानम्। न तद्विषयः इत्यर्थः। **अलक्षणम्**, रूपादिरहितत्वात् इत्यर्थः। **अप्रतर्क्यम्**—अतर्कगोचरम्। एवम् विभक्तावस्थं तम उक्तम्। अविभक्तं तम आह, **अविज्ञेयमिति**। विविच्य—विभज्य ज्ञातुमशक्यम् इत्यर्थः। **प्रसुप्तमिवेति**। यथा सुषुप्तौ परमात्मनि लीनस्य चेतनस्य लयः, न परमात्मत्वापत्तिः; अपि तु नाम-रूपप्रहाणेन सत्तामात्रमेव; तथा महाप्रलयेऽपि चिदचितोः पृथङ्नाम-रूपप्रहाणमेव, न सत्ताहानिः इत्यर्थः। **सर्वत** इति। सुषुप्तौ एकदेशलयः; अत्र तु सर्वलयः इत्यर्थः।

**अत्रोच्यते** इत्यादि। उपादानस्य मृदादेः अनिमित्तत्वम्, अज्ञत्वात्। निमित्तस्य कुलालादेः अनुपादानत्वं, स्वशरीरेण तथा परिणामशक्तिरहितत्वात्। अनेककारकसापेक्षत्वं च असत्यसङ्कल्पत्वात्, इति परोक्ततर्काः सोपाधिकाः। अतः मृत्पिण्ड-कुलालादिविपरीतस्वभावस्य ब्रह्मणः सर्वमुपपन्नम्, इत्यभिप्रायः॥ २३॥

---

[1] वचनम्—वा. [2] कारक—द. [3] दर्शनाच्च—न. [4] शक्तिपरिणाम—द.

## १३३. अभिध्योपदेशाच्च ॥ १-४-२४ ॥

[बहुभवनसङ्कल्पश्रुत्या निमित्तोपादानैक्यम् ]

इतश्च उभयं ब्रह्मैव ;

'सोऽकामयत, बहु स्यां प्रजायेयेति' (तै.उ.आन. 6-2)

'तदैक्षत, बहु स्यां प्रजायेय' (छां.उ. 6-2-3)

इति, स्रष्टुः ब्रह्मणः स्वस्यैव बहुभवनसङ्कल्पोपदेशात् । 'विचित्रचिदचिद्रूपेण अहमेव बहु स्याम्', [1]तथा 'प्रजायेय'[1] इति सङ्कल्प[2]पूर्विका हि[2] सृष्टिरुपदिश्यते ॥ २४ ॥

## १३४. साक्षाच्चोभयाम्नानात् ॥ १-४-२५ ॥

[श्रुतिकण्ठोक्त्या निमित्तोपादानैक्यम् ]

न केवलं प्रतिज्ञादृष्टान्ताभिध्योपदेशादिभिः, अयमर्थो निश्चीयते ; ब्रह्मण एव निमित्तत्वम् उपादानत्वं च साक्षादाम्नायते—

---

**इतश्चेति** । पूर्वसूत्रस्थप्रतिज्ञावाक्येन अस्य हेतोरन्वयः इत्यर्थः । **सङ्कल्पोपदेशात्** इत्यन्तेन सूत्राक्षरार्थ उक्तः । बहुभवनं रामकृष्णादिवच्च सम्भवतीति तद्व्यावृत्त्यर्थं **विचित्रेति** । 'तत्तेजोऽसृजत' इति तेजःप्रभृतिसृष्टेः अनन्तरोक्तत्वात्, चिदचिद्रूपेण बहुत्वस्य विवक्षितत्व-मित्यर्थः । स्वस्यैव च बहुभवनात् उपादानत्वं, बहुभवनस्य सङ्कल्पसामानाधिकरण्यात् निमित्तत्वमिति भावः ॥ २४ ॥

**अभिध्योपदेशादिभिः** इति, 'आदि'शब्देन वक्ष्यमाणाः आत्मकृतिप्रभृतयो

---

[सूत्रार्थः । **अभिध्यायाः**—(परमात्मकर्तृकस्य) 'बहु स्याम्' इति बहुभवनसङ्कल्पस्य, **उपदेशाच्च**—(परमात्मकृततया) 'तदैक्षत' इति श्रुतावेव ज्ञापितत्वादपि हेतोः, (ब्रह्म जगतो निमित्तमिव उपादानमपि) ॥]

बहु स्यामिति सङ्कल्पश्रुत्या ब्रह्मैव कारणम् ।
उपादानं निमित्तं च जगतोऽस्येति निश्चितम् ॥ (ब्र.प.मा. १३३)

[सूत्रार्थः । **साक्षाच्च**—स्पष्टतया श्रुतावेव, **उभयस्य**—'ब्रह्म वनं ब्रह्म स वृक्षः' इति, 'ब्रह्माध्यतिष्ठत्' इति च उपादानत्व-निमित्तत्वद्वयस्याऽपि परिपठनात्, ब्रह्मैव जगत् प्रति उपादानं निमित्तं च । ]

उपादानं निमित्तं च भवेद्ब्रह्म जगत्प्रति ।
ब्रह्म वनं ब्रह्म वृक्ष इति साक्षादुदीरणात् ॥ (ब्र.प.मा. १३४)

---

[1] प्रजायेयेति—वा.  [2] पूर्विका—द.

'किं स्विद्वनं क उ स वृक्ष आसीत्, यतो द्यावापृथिवी निष्टतक्षुः ।
मनीषिणो मनसा पृच्छतेदु तत्, यदध्यतिष्ठद् भुवनानि धारयन् ॥
ब्रह्म वनं ब्रह्म स वृक्ष आसीत्, यतो द्यावापृथिवी निष्टतक्षुः ।
मनीषिणो मनसा विब्रवीमि वः, ब्रह्माऽध्यतिष्ठद् भुवनानि धारयन् ॥'
(तै.ब्रा. 2-8-9-15)

इति । अत्र हि! [1]स्रष्टुः[1] ब्रह्मणः, किम् उपादानम्? कानि च उपकरणानि? इति लोकदृष्ट्या पृष्टे, सकलेतरविलक्षणस्य ब्रह्मणः सर्वशक्तियोगो न [2]विरुद्धः[2] इति, ब्रह्मैव उपादानम्, उपकरणानि च; इति [3]परिहृतम् । अतश्च उभयं ब्रह्म[3] ॥ २५ ॥

## १३५. आत्मकृतेः ॥ १-४-२६ ॥

[स्वस्यैव स्वयं सृष्टिकरणश्रुत्या तदैक्यम्]

**'सोऽकामयत । बहु स्यां प्रजायेय'** (तै.उ.आन. 6-2)

---

विवक्षिताः । **किं स्विद्वनम्?**—पूर्वं कुत्र स्थितः? इति भावः । **क उ स वृक्ष आसीत्?**—किमुपादानम्? इत्यर्थः । **यदध्यतिष्ठद्भुवनानि धारयन्**—भुवनानि धारयता ईश्वरेण अधिष्ठेयम् उपकरणादिकं किम्? इत्यर्थः । प्रतिवचनेऽपि, **ब्रह्म वनम्**—अधिकरणम् । **ब्रह्म स वृक्षः**—उपादानम् । **निष्टतक्षुः** इति, बहुत्वमविवक्षितम् । 'यथा पूर्वमकल्पयत्' इति द्यावापृथिव्यादीनाम् एककर्तृकत्वश्रवणेन कर्तृबहुत्वासम्भवात् ।

ननु—उभयाम्नानमिति विरुध्यते; अधिकरणस्य उपादानकारणस्य कर्तुश्च एकत्व-प्रतीतेरिति,

नैवम्; अधिष्ठेयम्, अधिष्ठाता, इति कोटिद्वयान्तर्गतत्वात् कारकाणाम् । उपादानाधिकरणोपकरणानि हि! अधिष्ठेयकोटिनिविष्टानि । 'यदध्यतिष्ठत्' 'ब्रह्माऽध्यतिष्ठद्भुवनानि धारयन्' इति हि श्रूयते । अतः उभयाम्नानमिति युक्तम् ॥ २५ ॥

---

[सूत्रार्थः । **आत्मनः**—परस्य ब्रह्मणः स्वस्यैव, **कृतेः**—जगद्रूपेण करणस्य, **उपदेशात्**—'तदात्मानं स्वयमकुरुत' इति श्रुत्यैव ज्ञापनात्, ब्रह्म उपादानं निमित्तं चेत्युभयमपि ॥]

बहुत्वकरणात् स्वस्य कर्तृत्वं कर्मता च हि ।
अतो ब्रह्म निमित्तं चोपादानं चेति कथ्यते ॥ (ब्र.प.मा. १३५)

---

[1] सिसृक्षोः—थ. [2] विरुध्यते—आ, इ, द. [3] परिहृतम्—द.

इति सिसृक्षुत्वेन प्रकृतस्य ब्रह्मणः,

'तदात्मानं स्वयमकुरुत' (तै.उ.आन. 7-1)

इति, सृष्टेः कर्मत्वं कर्तृत्वं च प्रतीयत इति, आत्मन एव बहुत्वकरणात्, [1]तस्यैव[1] निमित्तत्वम् उपादानत्वं च प्रतीयते। अविभक्तनाम[2]रूपः[2] आत्मा कर्ता; स एव विभक्तनामरूपः कार्यमिति, कर्तृत्व-कर्मत्वयोः न विरोधः। स्वयमेव आत्मानं तथा अकुरुतेति, निमित्तम् उपादानं च ॥ २६ ॥

[उत्तरसूत्रावतारिका शङ्का]

[निमित्तोपादानैक्यस्य ब्रह्मणि अपुरुषार्थावहत्वशङ्का]

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.आन. 1-1)

'आनन्दो [3]ब्रह्म[3]' (तै.उ.भृ. 6-1)

'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः' (छां.उ. 8-1-5)

'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' (श्वे.उ. 6-19)

'स वा एष महानज आत्माऽजरोऽमरः' (बृ.उ. 6-4-25)

इति स्वभावतो निरस्तसमस्तचेतनाचेतनवर्तिदोषगन्धस्य, निरतिशयज्ञानानन्दैकतानस्य, [4]परस्य ब्रह्मणः[4], [5]विचित्रानन्तापुरुषार्थास्पद[5]चिदचिन्मिश्रप्रपञ्चरूपेण आत्मनः बहुभवनसङ्कल्पपूर्वकं [6]बहुत्वकरणं[6] कथमुपपद्यते? इत्याशङ्क्याह—

---

**आत्मन एवेति**। आत्मानं प्रति स्वस्यैव कर्तृत्वमनुपपन्नम्; कार्यं हि! साध्यम्। कर्ता हि! सिद्धः, इति एकस्य सिद्ध्यसिद्धिविरोधात् [इति तु न शङ्कनीयम् इति भावः]। **अविभक्तेति**। आकारभेदात् सिद्ध्यसिद्ध्योरविरोधः इत्यर्थः। **स्वयमेवेति**। आकार्यैक्यात् निमित्तोपादानैक्यम् [इत्याशयः] ॥ २६ ॥

**सत्यमिति**। पूर्वसूत्रविषयवाक्यस्य आनन्दवल्लीस्थत्वात्, तत्प्रकरणस्थपूर्वापरवाक्येषु निर्दोषत्व-कल्याणगुणाकरत्वविरोधस्य झटिति प्रतिपन्नत्वात्, प्रथमं 'सत्यं ज्ञान'मित्यादिवाक्यद्वयमुपात्तम्। 'सत्य'शब्दो हि विकारराहित्यपरः।

'अपहतपाप्मे' त्यादिवाक्यान्तराणि निर्दोषत्वादिस्फुटीकरणाय [उपात्तानि]।

---

[1] स्वस्यैव—थ.   [2] रूप एव—इ, वा.   [3] ब्रह्मेति—न.   [4] ब्रह्मणः—इ.
[5] पुरुषार्थविचित्रास्पद—इ, पुरुषार्थास्पदविचित्र—वा.   [6] बहुभवनम्—वा.

# १३६. परिणामात् ॥ १-४-२७ ॥

[अपुरुषार्थतानावहपरिणामस्वभावोक्त्या शङ्कानिरासः]

**परिणामस्वाभाव्यात्** । न अत्रोपदिश्यमानस्य परिणामस्य परस्मिन् ब्रह्मणि दोषाव[1]हत्वं स्वभावः[1] ; प्रत्युत ! निरङ्कुशैश्वर्यावहत्वमेव, इत्यभिप्रायः । एवमेव हि ! परिणाम उपदिश्यते ।

**अशेषहेयप्रत्यनीककल्याणैकतानं, स्वेतरसमस्तवस्तुविलक्षणं, सर्वज्ञं, सत्यसङ्कल्पम्, अवाप्तसमस्तकामम्, अनवधिकातिशयानन्दं, स्वलीलोपकरणभूतसमस्तचिदचिद्वस्तुजातशरीरतया तदात्मभूतं, परं ब्रह्म ; स्वशरीरभूते प्रपञ्चे तन्मात्राहङ्कारादिकारणपरम्परया तमश्शब्दवाच्यातिसूक्ष्माचिद्वस्त्वेकशेषे सति, तमसि च स्वशरीर-**

---

**परिणामादिति** । पूर्वपक्षे हि ! निमित्तोपादानभेदश्रुतिः निर्दोषश्रुत्यन्यथानुपपत्तिश्च हेतुतया उपन्यस्ते । राद्धान्ते तु, 'प्रतिज्ञादृष्टान्तानुपरोधात्' 'अभिध्योपदेशाच्च' इति सिद्धान्तसाधकतया श्रुत्यर्थापत्तिद्वयं दर्शितम् । 'साक्षाच्चोभयाम्नानात्' इत्यादिसूत्रद्वयेन, 'योनिश्च हि गीयते' इत्यनेन च, सिद्धान्तसाधकश्रुतयो दर्शिताः । 'परिणामात्' इति सूत्रन्तु पूर्वपक्ष्युपन्यस्तश्रुति-श्रुत्यर्थापत्तिपरिहारपरम्, इत्यर्थः । **परिणामेति** । 'परिणामात्' इत्युक्ते विरोधहेतुत्वमेवास्य प्रतीयते ; न तु विरोधपरिहारहेतुत्वम् इत्याशङ्क्य [इदमुक्तम्] । **न……इत्यभिप्राय** इति । 'परिणाम'शब्दः परिणामविशेषपरः । 'गामानय' इत्यादिषु सामान्यशब्दप्रयोगः विवक्षितविशेषाभिप्रायेण [लोके] दृष्टः । 'शब्दादेव प्रमितः' 'धर्मोक्तेः' इत्यादिषु विशेषाभिप्रायेण सामान्यनिर्देशः सौत्र एव दृश्यते । ['शब्दात्' इत्यस्य] इह प्रतिपन्नात् शब्दात्, इतिवत्, [परिणामात् इत्यस्य] इह प्रतिपन्नात् परिणामात्, इत्यर्थः ।

---

[सूत्रार्थः । ('अव्याकृतमासीत्' इत्युक्तस्य, अविभक्तनाम-रूपसूक्ष्मचिदचिद्वस्तुशरीरकस्य ब्रह्मणः) **परिणामात्**—विभक्तनाम-रूपस्थूलचिदचिद्वस्तुशरीरतया परिणामस्य (अवस्थान्तरसम्बन्धस्य) 'तन्नाम-रूपाभ्यां व्याक्रियत' इति श्रुतौ उपदिश्यमानत्वात्, (विशेषणगतानां अपुरुषार्थभूतानां विकाराणां, विशेष्ये ब्रह्मणि नैव प्रसक्तिरिति) ॥ ]

ब्रह्मणो बहुधा ह्यत्र परिणामान्न च क्षतिः ।
सूक्ष्माचेतनचिद्वस्तुशरीरस्य शरीरतः ॥ (ब्र.प मा. १३६)

---

[1] ह्रस्वस्वभावः—वा.

[1]तयाऽपि पृथङ्[1]निर्देशानर्हातिसूक्ष्मदशापत्त्या स्वस्मिन् एकता[2]मापन्ने सति[2], तथाभूत-तमःशरीरं ब्रह्म; 'पूर्ववत् [3]विभक्त-नामरूप[3]चिदचिन्मिश्रप्रपञ्चशरीरं स्याम्' इति सङ्कल्प्य, अप्ययक्रमेण जगच्छरीरतया आत्मानं [4]परिणम[4]यतीति, सर्वेषु वेदान्तेषु परिणामोपदेशः ॥

[बृहदारण्यकसौबालादिवाक्यार्थविशदीकरणेन उक्तार्थदृढीकारः]

तथैव बृहदारण्यके, कृत्स्नस्य जगतः ब्रह्मशरीरत्वं, ब्रह्मणः [5]तदात्मत्वं[5] च [6]आम्नायते[6]—

'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः, यं पृथिवी न वेद, यस्य पृथिवी शरीरं, यः पृथिवीमन्तरो यमयति, एष त आत्माऽन्तर्याम्यमृतः' (बृ.उ. 5–7–7)

इत्यारभ्य,

'यस्याऽऽपः शरीरम्' (बृ.उ. 5–7–8)
'यस्याऽग्निः शरीरम्' (बृ.उ. 5–7–9)
'यस्याऽन्तरिक्षं शरीरम्' (बृ.उ. 5–7–10)
'यस्य वायुः शरीरम्' (बृ.उ. 5–7–11)
'यस्य द्यौः शरीरम्' (बृ.उ. 5–7–12)
'यस्याऽऽदित्यः शरीरम्' (बृ.उ. 5–7–13)
'यस्य दिशः शरीरम्' (बृ.उ. 5–7–14)
'यस्य [7]चन्द्रतारकं[7] शरीरम्' (बृ.उ. 5–7–15)
'यस्याऽऽकाशः शरीरम्' (बृ.उ. 5–7–16)

---

**पृथङ्निर्देशानर्हेति।** नात्र सर्वथा निर्देशानर्हत्वं विवक्षितम्; [यथा] दारुण्यन्तर्भूतस्य पृथक् अग्निरित्यनिर्दिश्यमानस्य अग्नेः, 'अग्नि'शब्देन व्यवह्रियमाणात् बाह्याग्नेः [सकाशात्] यादृशं सौक्ष्म्यविशेषरूपं वैषम्यं विद्यते, [तथा] अग्नित्वाप्रहाणमपि विद्यते, एवं तमस्त्वा-प्रहाणेऽपि, विभक्तात्तमसः अविभक्ततमसः सूक्ष्मत्वातिशयरूपं वैषम्यमस्तीत्यभिप्रायः इति ।

**'यस्याऽऽपः शरीरम्'** इत्यादिसकलवाक्यजातोपादानम्, अवान्तरतत्त्वानाम् उत्तरोत्तरं प्रति कारणत्वे श्रुतेऽपि, तत्तच्छरीरकपरमात्मन एव कारणत्वमिति दर्शयितुं, प्रकृति-पुरुष-

---

[1] तया—आ, इ.   [2] मापन्ने—वा.   [3] विभक्त—द.   [4] परिणाम—आ.
[5] तदात्मकत्वं वा.   [6] श्रूयते—न.   [7] तारकं—थ.

'यस्य तमः शरीरम्' (बृ.उ. 5–7–17)

'यस्य तेजः शरीरम्' (बृ.उ. 5–7–18)

'यस्य सर्वाणि भूतानि शरीरम्' (बृ.उ. 5–7–19)

'यस्य प्राणः शरीरम्' (बृ.उ. 5–7–20)

'यस्य वाक् शरीरम्' (बृ.उ. 5–7–21)

'यस्य चक्षुः शरीरम्' (बृ.उ. 5–7–22)

'यस्य श्रोत्रं शरीरम्' (बृ.उ. 5–7–23)

'यस्य मनः शरीरम्' (बृ.उ. 5–7–24)

'यस्य त्वक् शरीरम्' (बृ.उ. 5–7–25)

'यस्य विज्ञानं शरीरम्' (बृ.उ. 5–7–26)

'यस्य रेतः शरीरम्' (बृ.उ. 5–7–27)

इत्येवमन्तेन [1]काण्व[1]पाठे ।

माध्यन्दिने तु पाठे, विज्ञानस्थाने,

'यस्याऽऽत्मा शरीरम्' (बृ.उ.मा.पा. 5–7–26)

इति विशेषः । लोक-[2]वेद-यज्ञानां[2] परमात्मशरीरत्वमधिकम् ।

सुबालोपनिषदि च, पृथिव्यादीनां तत्त्वानां परमात्मशरीरत्व[3]मभिधाय,* वाजसनेयके, अनुक्तानामपि तत्त्वानां शरीरत्वं, ब्रह्मणः आत्मत्वं च श्रूयते ।

---

कालविशिष्टत्वमपि, अत्र अन्यत्र च क्वचिदनुक्ततत्त्वक्रमसृष्टिवत्, अन्यतो ग्राह्यमिति च ज्ञापयितुम् ।

**माध्यन्दिने त्विति ।** काण्वपाठे अनुक्तानामपि ब्रह्मशरीरत्वज्ञापनार्थं, 'विज्ञान-शब्दस्य 'आत्म'शब्देन विवरणार्थं चाऽऽह ।

**सुबालेत्यादि,** 'अपहतपाप्म'शब्देन 'अमृत'शब्दविवरणार्थं, कारणावस्थायामपि ब्रह्मशरीरत्वज्ञापनार्थं, देवताविशेषस्य कारणत्वज्ञापनार्थं चाह । अत्र **'मृत्यु'शब्देनेति,**

---

[1] काण्वादि—द. [2] देवानां—द. [3] त्वाभिधाय—न.

'यस्य बुद्धिः शरीरम्' (सुबा.उ 7)
यस्याऽहङ्कारः शरीरम्' ( ,, )
'यस्य चित्तं शरीरम्' ( ,, )
'यस्याऽव्यक्तं शरीरम्' ( ,, )
'यस्याऽक्षरं शरीरम्' ( ,, )
'यो मृत्युमन्तरे सञ्चरन्, यस्य मृत्युः शरीरं, यं मृत्युर्नवेद, एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' (सुबा.उ. 7)

इति। अत्र 'मृत्यु'शब्देन, [1]परम[1]सूक्ष्मम् अचिद्वस्तु 'तमः'शब्दवाच्यम् अभिधीयते;

'अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते' (सुबा.उ. 7)

इति, तस्यामेवोपनिषदि क्रमप्रत्यभिज्ञानात्। सर्वेषामात्मनां ज्ञानावरणानर्थमूलत्वेन, तदेव हि! तमः, मृत्युशब्दव्यपदेश्यम्।

सुबालोप[2]निषद्येव[2], ब्रह्मशरीरतया तदात्मकानां तत्त्वानां, ब्रह्मण्येव प्रलयः आम्नायते —

'पृथिव्यप्सु प्रलीयते, आपस्तेजसि लीयन्ते, तेजो वायौ लीयते, वायुराकाशे लीयते, आकाशमिन्द्रियेषु, इन्द्रियाणि तन्मात्रेषु, तन्मात्राणि भूतादौ लीयन्ते। भूतादिर्महति लीयते, महानव्यक्ते लीयते, अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते, तमः परे देव एकी भवति' (सुबा.उ. 2)

इति। अविभागापत्तिदशायामपि, चिदचिद्वस्तु अतिसूक्ष्मं सकर्मसंस्कारं तिष्ठतीति, उत्तरत्र वक्ष्यते—

---

'मृत्यु'शब्दस्य देवताविशेषे संसारे च प्रयुक्तत्वात्, तयोश्च अत्र अन्वयानर्हत्वादाह। **सर्वेषामिति**। [अचिद्वस्तु] ज्ञानावरणरूपत्वात् 'तमः'शब्दवाच्यम्। तदेव ज्ञानावरणरूपानर्थमूलत्वात् 'मृत्यु'शब्दवाच्यमित्यर्थः।

**'आकाशमिन्द्रियेषु, इन्द्रियाणि तन्मात्रेषु'** इत्यत्र 'लय'शब्दाप्रयोगः, लयस्थानत्वाभावात्। तत्र साहित्यमात्रं विवक्षितम्। 'तन्मात्रेषु' इति बहुवचने न तात्पर्यम्; 'अदितिः पाशान्' इतिवत्। [तन्मात्रेषु इत्यस्य] शब्दतन्मात्रे इत्यर्थः। **अविभागापत्तीति**। विषमसृष्ट्यनुपपत्त्या चेतनबहुत्वस्थितिवत्, तत्कर्मानुगुणदेहसृष्ट्यनुगुणाचिद्वस्तुस्थितिरपि, स्वरूपपरिणामानुपपत्तिबलसिद्धा, इत्यर्थः।

---

[1] पर—क्ष. [2] निषद्येवं—वा.

'न कर्माऽविभागादिति चेन्नाऽनादित्वादुपपद्यते चाऽप्युपलभ्यते च' (ब्र.सू. 2-1-35) इति ॥

[उक्तस्य ईदृशार्थस्यैव तैत्तिरीयश्रुतितात्पर्यविषयता]

एवं स्वस्माद्विभागव्यपदेशानर्हतया परमात्मना एकीभूतात्यन्तसूक्ष्मचिदचिद्वस्तुशरीरात् एकस्मादेव अद्वितीयात्, निरतिशयानन्दात् [1]सर्वज्ञात्[1] सत्यसङ्कल्पात्, ब्रह्मणः, नाम-रूपविभागार्हस्थूलचिदचिद्वस्तुशरीरतया बहुभवनसङ्कल्पपूर्वकः, जगदाकारेण परिणामः श्रूयते —

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ.आन. 1-1)

'तस्माद्वा एतस्माद्विज्ञानमयात्, अन्योऽन्तर आत्माऽऽनन्दमयः' (तै.उ.आन 5-2)

'एष ह्येवाऽऽनन्दयाति' (तै.उ.आन. 7-1)

'सोऽकामयत । बहु स्यां प्रजायेयेति । स तपोऽतप्यत ।
स तपस्तप्त्वा । इदं सर्वमसृजत । यदिदं किंच । तत् सृष्ट्वा ।
तदेवाऽनुप्राविशत् । तदनुप्रविश्य' (तै.उ.आन. 6-2)

'सच्च त्यच्चाऽभवत् । निरुक्तं चाऽनिरुक्तं च । निलयनं चाऽनिलयनं च ।
विज्ञानं चाऽविज्ञानं च । सत्यं चाऽनृतं च सत्यमभवत्' (तै.उ.आन. 6-3)
इति ॥

[परब्रह्मणस्तपसः आलोचनरूपतावर्णनम्]

अत्र 'तपः'शब्देन, प्राचीनजगदाकारपर्यालोचनरूपं ज्ञानमभिधीयते ;

'यस्य ज्ञानमयं तपः' (मुण्ड.उ. 1-1-10)

[2]इत्यादि[2]श्रुतेः । प्राक् सृष्टं जगत्संस्थानम् आलोच्य, इदानीमपि तत्संस्थानं जगत् असृजत् इत्यर्थः । तथैव हि ! ब्रह्म, सर्वेषु कल्पेषु एकरूपमेव जगत् सृजति ।

**विभागव्यपदेशानर्हेति ।** आनन्दवल्ल्याम् अनुक्तमपि अविभक्तनामरूपत्वं, श्रुत्यन्तरस्थेन एकत्वावधारणादिना यथा अवगम्यते ; एवं चिदचिच्छरीरकत्वमपि कारणावस्थायामिह विवक्षितमित्यभ्युपगन्तव्यमिति भावः । **आलोच्येति ।** औचित्यात् जगदालोचनमर्थः इत्यर्थः । 'तप आलोचने' इत्यस्माद्धातोः 'तपः' शब्दनिष्पत्तिरिति भावः [यद्यपि गणे न पठितः ; तथाऽपि धातूनामनेकार्थत्वात् आलोचनमप्यर्थः (भा.प्र.)] । **तत्संस्थानमिति ।** यथापूर्वं सृष्ट्यर्थमित्यभिप्रायः । **तथैव हीति ।** यथापूर्वसृष्टिप्रतिपादनं हि तदालोचने लिङ्गं भवति ।

---

[1] सर्वज्ञात् सर्वशक्तेः—वा. [2] इति—द.

'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।
दिवं च पृथिवीं चाऽन्तरिक्षमथो सुवः ॥' (तै.ना.उ. 1-44)
'यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥' (वि.पु. 1-5-65)

इति श्रुति-[1]स्मृतिभ्यः[1] ॥

[परब्रह्मणो जगद्रूपताप्राप्तिविशदीकरणम्]

तदयमर्थः—स्वयम् अपरिच्छिन्न[2]ज्ञानानन्द[2]स्वभावः, अत्यन्तसूक्ष्मतया [3]असत्कल्प[3]स्वलीलोपकरणचिदचिद्वस्तुशरीरतया तन्मयः परमात्मा, विचित्रानन्तक्रीडनकोपादित्सया स्वशरीरभूतप्रकृतिपुरुषसमष्टिपरम्परया महाभूतपर्यन्तम् आत्मानं [4]तत्तच्छरीरकं[4] परिणमय्य, तन्मयः पुनः सत्-त्यच्छब्दवाच्य[5]विचित्रचिद्[5]चिन्मिश्रदेवादिस्थावरान्तजगद्रूपो[6]ऽभवत्[6]—इति ।

'तदेवाऽनुप्राविशत्। तदनु प्रविश्य' इति, 'कारणावस्थायाम् आत्मतयाऽवस्थितः परमात्मैव, कार्यरूपेण [7]विक्रिय[7]माणद्रव्यस्याऽपि आत्मतया अवस्थाय, [8]तत्तदभवत्[8], इत्युच्यते ।

---

**स्वयमपरिच्छिन्नेति,** सत्यं ज्ञानमित्यादेरर्थमाह । **अत्यन्तसूक्ष्मतयेति,** 'सोऽकामयत' इत्यत्र 'सः' इति पदस्य वाक्यान्तरानुगृहीतस्यार्थमाह । **विचित्रेति,** अकामयतेत्यस्यार्थमाह । **प्रकृतिपुरुषसमष्टिपरम्परया तत्तच्छरीरकमात्मानं महाभूतपर्यन्तं परिणमय्य** इत्यन्वयः । **समष्टिपरम्परया**—महदादिक्रमेणेत्यर्थः । **तत्तच्छरीरकम्**—महदादिशरीरकम् । पूर्वपूर्वतत्त्वशरीरकः परमात्मा हि उत्तरोत्तरतत्त्वकारणम् । **तत्तच्छरीरकं परिणमय्य** इत्यन्तेन, समष्टिसृष्टिरुक्ता । **पुनः** इति, व्यष्टिसृष्टिः । 'तत्सृष्ट्वा....त्यच्चाऽभवत्' 'अनुप्रविश्य.... व्याकरवाणि' इति वचोभ्यां सृष्ट्यनुप्रवेशयोः पौर्वापर्यनियमोऽपि न विवक्षितः ; अनुप्रवेशपूर्वकसृष्टिवचनात्, सृष्टिपूर्वकानुप्रवेशवचनाच्च । तस्मात् समकालीनत्वमेव विवक्षितम् । 'वक्त्रं व्यादाय स्वपिति' इतिवत् । तथा 'तस्य त्वष्टा विदधद्रूपमेति' इति हि उच्यते ; इत्यभिप्रायः । **विचित्रेति,** (सत्यं चेत्यादेरर्थमाह) । पूर्वसत्यशब्दः 'अनृत'शब्दसाहचर्यात्,

---

[1] स्मृतिभ्याम्—द. [2] ज्ञानानन्दैक—वा. [3] असत्कल्पः—वा. [4] तच्छरीरकं—थ. [5] चिद्—द. [6] भवति—ग. [7] विस्तीर्य—द. [8] तदभवत्—थ.

[विशिष्टपरिणामे अपुरुषार्थ-तदभावयोराश्रयनिष्कर्षः]

एवं परमात्म-चिदचित्सङ्घातरूपजगदा[1]कार[1]परिणामे, परमात्मशरीरभूतचिदंशगताः सर्वे एव, [2]अपुरुषार्थाः[2] । तथाभूताचिदंशगताश्च सर्वे, विकाराः । परमात्मनि कार्यत्वम्—तत्तदवस्थयोः[3] तयोः[3] नियन्तृत्वेनाऽऽत्मत्वम् । परमात्मा तु तयोः स्वशरीरभूतयोः नियन्तृतया आत्मभूतः, तद्गतापुरुषार्थैः विकारैश्च न स्पृश्यते । अपरिच्छिन्नज्ञानानन्दमयः, सर्वदा एकरूप एव, जगत्परिवर्तनलीलया अवतिष्ठते । तदेतदाह—'सत्यं चाऽनृतं च सत्यमभवत्'—इति । विचित्रचिदचिद्रूपेण विक्रियमाणमपि ब्रह्म, सत्यमेवाऽभवत्—निरस्तनिखिलदोषगन्धम्, अपरिच्छिन्नज्ञाना[4]नन्दम् एकरूप[4]मेवाऽभवत्, इत्यर्थः ॥

[सृष्टेः भगवल्लीलात्वम्]

'सर्वाणि चिदचिद्वस्तूनि, सूक्ष्मदशापन्नानि स्थूलदशापन्नानि च, परस्य ब्रह्मणः लीलोपकरणानि । सृष्ट्यादयश्च लीला' इति भगवद्द्वैपायन-पराशरादिभिरुक्तम्;

'अव्यक्तादि[5]विशेषान्तं परि[5]णामर्धि[6]संयुतम्[6] ।
क्रीडा हरेरिदं सर्वं क्षरमित्युपधार्यताम् ॥' (म.भा.शा. 206-58)
'क्रीडतो बालकस्येव चेष्टां तस्य निशामय' (वि.पु. 1-2-20)
'बालः क्रीडनकै[7]रिव[7]' (वा.पु.उ. 36-96)

इत्यादिभिः । वक्ष्यति च—

'लोकवत्तु लीलाकैवल्यम्' (ब्र सू. 2-1-33)

इति ।

'अस्मान्मायी सृजते विश्वमेतत्, तस्मिंश्चाऽन्यो मायया संनिरुद्धः' (श्वे.उ. 4-9) इति 'ब्रह्मणि जगद्रूपतया विक्रियमाणेऽपि, तत्प्रकारभूताचिदंशगताः सर्वे विकाराः;

---

कार्यचेतनपरः । उत्तरस्तु विशेष्याकाङ्क्षायामधिक्रियमाणत्वात् ब्रह्मणः, तद्विषयवाक्योक्तव्यष्ट्यवस्थचिदचिच्छरीरकत्वानुवादेन सत्यत्वं विधत्ते इत्यर्थः ।

अस्मादिति, निमित्तमात्रपरत्वे परोक्तायाः 'अस्मान्मायी सृजते' इति श्रुतेः अर्थमाह । अस्मात्—स्वशरीरभूतादित्यर्थः । श्रुत्यन्तरैकार्थ्यात् 'अस्मात्, मायी' इति भेदव्यपदेशप्रयोजनं स्वभावासङ्करज्ञापनम् । निमित्तभूतस्यैव ब्रह्मणः, उपादानभाव-तन्निबन्धनजगत्सामानाधि-

---

1 कारेण—च. 2 पुरुषार्थाः—थ. 3 चिदचितोः—थ. 4 नन्दैकरूप—न. नन्दमेकस्वरूप—थ. 5 विशेषान्तपरि—थ. 6 संयुक्तम्—श्री. 7 रेव—द.

तत्प्रकारभूतक्षेत्रज्ञगताश्च, अपुरुषार्थाः' इति विवेक्तुं, प्रकृति-पुरुषयोः ब्रह्म[1]शरीरभूतयोः[1], तदानीं तथा निर्देशानर्हातिसूक्ष्मदशापत्त्या, ब्रह्मणा एकीभूतयोरपि, भेदेन व्यपदेशः;

'तदात्मानं स्वयमकुरुत' (तै.उ.आन. 7-1)

इत्यादिभिरैकार्थ्यात्। तथा च मानवं [2]वचः[2]—

'सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः।
अप एव ससर्जाऽऽदौ तासु वीर्यमपासृजत्॥' (म.स्मृ. 1-8)

इति। अत एव, ब्रह्मणः [3]निर्दोषत्व-निर्विकारत्व[3]श्रुतयश्च, उपपन्नाः। अतः, ब्रह्मैव जगतो निमित्तम्, उपादानं च॥ २७॥

## १३७. योनिश्च हि गीयते॥ १-४-२८॥

[उपादानवाचकयोनिव्यपदेशादुपादानत्वोपसंहारः]

इतश्च, जगतो निमित्तम् उपादानं च ब्रह्म; यस्मात् योनित्वेनाऽपि [4]अभिधीयते[4]—

'कर्तारमीशं पुरुषं ब्रह्मयोनिम्' (मुण्ड.उ. 3-1-3)

इति,

---

करण्यानुबन्धिबह्वनुपपत्तिपरिहारपरानेकाधिकरणार्थजातस्य एतदधिकरणार्थोपपादकत्वेन स्मारणपरमिदं सूत्रम्। इदं सूत्रं ब्रह्माज्ञानपक्षविरुद्धम्। न हि! 'विवर्तात्' इति सूत्रम्॥ २७॥

निमित्तम् उपादानं चेति, अस्य च सूत्रस्य निमित्तोपादानैक्यसाधकत्वमाह। 'कर्तारम्' इति विषयवाक्ये हि! श्रुतम्, 'तपसा चीयते ब्रह्म' 'यः सर्वज्ञः सर्ववित्' इति च। 'ब्रह्मयोनि'शब्दस्य 'शास्त्रयोनित्वात्' इत्यादिष्विव कारणमात्रपरत्वव्यावृत्त्यर्थं तं व्याचष्टे, योनिशब्दश्चेति। इयं सूत्रसङ्गतिः—प्रतिज्ञादृष्टान्ताभ्यां निमित्तोपादानैकत्वमुपपादितम् आद्यसूत्रे।

---

[सूत्रार्थः। हि—यतः, (ब्रह्मरूपं वस्तु), योनिश्च—'भूतयोनिम्' इत्यादिश्रुत्या योनिरिति च, गीयते—कथ्यते, अतः, प्रकृतिश्च—जगतः उपादानमपि॥]

यद्भूतयोनिमित्यादिश्रुत्या सर्वजगत्प्रति।
उपादानमिति ब्रह्म गीयते चेति निश्चितम्॥ (ब्र.प.मा. १३७)

---

[1] शरीरयोः—द. [2] वचनम्—न. [3] निर्विकारत्वनिर्दोषत्व—द. [4] अधीयते—थ.

'यद् भूतयोनिं परिपश्यन्ति धीराः' (मुण्ड.उ. 1-1-6)

[1]इति च[1]। 'योनि'शब्दश्च उपादानवचनः इति,

'यथोर्णनाभिः सृजते गृह्णते च' (मुण्ड.उ. 1-1-8)

इति वाक्यशेषात् अवगम्यते ॥ २८ ॥

॥ इति प्रकृत्यधिकरणम् ॥ ७ ॥

३५. सर्वव्याख्यानाधिकरणम् ॥ १-४-८ ॥

[अधिकरणार्थः—सर्ववेदान्तगतानां सर्वेषां जगत्कारणत्वपरवाक्यानां, ब्रह्मपरत्वमेव]

[सर्वविद्यासम्बन्धिविचाररूपम् ]

## १३८. एतेन सर्वे व्याख्याता व्याख्याताः ॥ १-४-२९ ॥

तत्र उपरितनवाक्यस्थहेतुपरं द्वितीयसूत्रम् । अथ श्रुतिप्रदर्शकं तृतीयम् । 'ब्रह्म वनम्' इत्यादिवाक्यस्य अस्फुट(ार्थ)त्वात् स्फुटार्थवाक्योपस्थापकं चतुर्थम् । आत्मकृतिप्रतिपादक-वाक्यस्य ; स्फुटार्थतया वाक्यान्तरनिरपेक्षार्थनिश्चयत्वात् हेतोर्नैरपेक्ष्याभिप्रायः 'च'शब्दाप्रयोगः। तत्प्रकरणस्थपूर्वापरवाक्यविरोधः पञ्चमेन परिहृतः । अनन्यपर-स्पष्टार्थवाक्ये लब्धे, तदेकार्थतया निश्चितवाक्यद्वयविषयत्वात् , 'योनिश्च हि गीयते' इति सूत्रं चरममभूत्—इति ॥

[सूत्राणि— १. प्रकृतिश्च २. अभिध्योप ३. साक्षाच्चोभ
४. आत्मकृतेः ५. परिणामात् ६. योनिश्च]

॥ इति प्रकृत्यधिकरणम् ॥ ७ ॥

**एतेनेति** । कृत्स्नाधिकरणन्यायातिदेशरूपत्वात् सङ्गतिः । प्रथमसूत्रस्य समन्वयसूत्रस्य च सिद्धपराः सर्वे वेदान्ताः विषयाः । वाक्यविशेषाः इतरेष्वधिकरणेषु विषयाः । एष्वनु-दाहृतवाक्यविशेषाः सर्वेऽपि अस्य पञ्चत्रिंशस्य विषयाः पूर्वाधिकरणेष्विव विचारः अर्थसिद्धः ।

---

[सूत्रार्थः । **एतेन**—जन्माद्यधिकरणमारभ्योक्तेन न्यायकलापेन, **सर्वे**—वेदान्ताः सर्वे, **व्याख्याताः**—सर्वथा परब्रह्मपरा एवेति स्पष्टीकृताः । ]

न्यायेन चैतदन्तेन जगत्कारणवादिनः ।
वेदान्तास्तु परब्रह्मबोधका इति निश्चितम् (ब्र.प.मा. १३८)

---

[1] इति—थ.

[उक्तेनाऽर्थेन सर्ववेदान्ततात्पर्यनिर्णयः]

**एतेन—पादचतुष्टयोक्तन्यायकलापेन, सर्ववेदान्तेषु जगत्कारणप्रति[1]पादनपराः सर्वे वाक्यविशेषाः, चेतनाचेतनविलक्षणसर्वज्ञसर्वशक्तिब्रह्मप्रतिपादनपराः व्याख्याताः । 'व्याख्याताः' इति पदाभ्यासः, अध्यायपरिसमाप्तिद्योतनार्थः ॥ २९ ॥**

**॥ इति सर्वव्याख्यानाधिकरणम् ॥ ८ ॥**

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये

प्रथमस्याऽध्यायस्य चतुर्थः पादः ॥

॥ इति प्रथमोऽध्यायः ॥

॥ श्रीमते रामानुजाय नमः ॥

॥ श्रीरस्तु ॥

---

अनुदाहृताः कारणवादिवाक्यविशेषाः, किम् उक्तलक्षणचिदचिद्विलक्षणब्रह्मपराः ? उत न ? इति विचारः । तदर्थं—ते किम् उक्तन्यायानाम् अविषयाः ? उत विषयाः ? इति । विषयत्वं सम्भवति ? न ? इति । [पूर्वपक्षे-] यदा न सम्भवति ; तदा, तदविषयत्वात् उक्तलक्षणब्रह्मपरत्वाभावः । [सिद्धान्ते-] यदा सम्भवति ; तदा उक्तन्यायविषयत्वात् उक्तलक्षणब्रह्मपराः इति फलफलिभावः ।

**पादचतुष्टयोक्तेति,** एतेनेति पदस्य, प्रकृत्यधिकरणन्यायमात्रपरामर्शित्वव्युदासाय । **वाक्यविशेषा** इति पूर्वमनुदाहृताः अनिश्चितार्थाः इत्यर्थः । **सर्वज्ञत्वसर्वशक्तित्वे हि** निमित्तोपादानतोपयोगिनी । **व्याख्याता** इति । तस्मात् अयोगान्ययोगव्यवच्छेदेन नारायणस्य कारणत्वं पादचतुष्टयेन प्रतिपादितमिति सिद्धम् । **पदाभ्यास** इति । 'व्याख्याताव्याख्याताः' इत्युक्ते, 'व्याख्यात'शब्दस्य 'अव्याख्यात'शब्दस्य च समासेन ऐकपद्ये सति, सर्ववाक्यविशेषाणां व्याख्यातत्वमुक्तं न स्यादिति तद्व्युदासार्थम् असमस्ततया पृथक्पदत्वं ज्ञापयन् अभ्यासस्य प्रयोजनमाह (श्र.प्र.) ॥ २९ ॥

प्राज्ञैः पूर्वैर्ग्रथिता श्लाघ्याव्याख्याः समालोक्य ।
लघ्वीटिप्पन्येषा सुयोजिताऽध्येतृलाभार्थम् ॥

। ॐ नमः परमऋषिभ्यः ।

॥ इति सर्वव्याख्यानाधिकरणम् ॥ ८ ॥

---

[1] पादकाः—द.

ॐ

## उत्तरशान्तिपाठः

ओं वाङ् मे मनसि प्रतिष्ठिता, मनो मे वाचि प्रतिष्ठितम्, आविरावीर्म एधि। वेदस्य म आणी स्थः, श्रुतं मे मा प्रहासीः, अनेनाधीतेनाहोरात्रान् सन्दधामि। ऋतं वदिष्यामि, सत्यं वदिष्यामि, तन्मामवतु, तद्वक्तारमवतु, अवतु माम्, अवतु वक्तारमवतु वक्तारम्। ओं शान्तिः शान्तिः शान्तिः ॥

ओं शं नो मित्रः शं वरुणः। शं नो भवत्वर्यमा। शं न इन्द्रो बृहस्पतिः। शं नो विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्मावादिषम्। ऋतमवादिषम्। सत्यमवादिषम्। तन्मामावीत्। तद्वक्तारमावीत्। आवीन्माम्। आवीद्वक्तारम्। ओं शान्तिः शान्तिः शान्तिः ॥

ओं सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु मा विद्विषावहै। ओं शान्तिः शान्तिः शान्तिः ॥

ओं पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते। ओं शान्तिः शान्तिः शान्तिः ॥

ओं आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मौपनिषदम्, माहं ब्रह्म निराकुर्याम्, मा मा ब्रह्म निराकरोत्। अनिराकरणमस्तु अनिराकरणं मेऽस्तु। तदात्मनिरते य उपनिषत्सु धर्माः ते मयि सन्तु ते मयि सन्तु। ओं शान्तिः शान्तिः शान्तिः ॥

ओं भद्रं कर्णेभिः शृणुयाम देवाः। भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिः। व्यशेम देवहितं यदायुः। स्वस्ति न इन्द्रो वृद्धश्रवाः। स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः। स्वस्ति नो बृहस्पतिर्दधातु। ओं शान्तिः शान्तिः शान्तिः ॥

ओं नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं धारयिता भूयासं कर्णयोः श्रुतं माच्योढ्वं ममामुष्य ओम्। ओं शान्तिः शान्तिः शान्तिः ॥

ॐ

इति श्रीभगवद्रामानुजविरचिते

शारीरकमीमांसाभाष्ये

प्रथमोऽध्यायः समाप्तः

श्रीः

# अनुबन्धः – १

१) शारीरकन्यायकलापसङ्ग्रहः

२) तत्त्वसारः

३) अधिकरणसारावलिः

४) अधिकरणार्थसङ्ग्रहः

५) नयसङ्गतिमालिका

श्रीः

श्रीमते रामानुजाय नमः । श्रियै नमः । श्रीधराय नमः ।

## १) श्री सेनेश्वरार्यविरचितः शारीरकन्यायकलापसङ्ग्रहः

[जगद्धारः सुविन्यस्तः सेनेशे यत्र विष्णुना ।
तस्यावतारमपरं सेनानाथगुरुं भजे ॥ ]

ईक्षत्यधिकरणम् (1–1–5)

***गौणी तु गौणेक्षणसाहचर्यादीक्षा यतस्तज्जगतां निदानम् ।**
**प्रधानमित्येतदपाचकार मुख्यं यतो वीक्षणमात्मशब्दात् ॥ १२ ॥**

**गौणे....चर्यात्**—'तेज ऐक्षत, आप ऐक्षन्त' इत्युक्ताचेतनगतत्वाद्दामुख्येक्षणसहपाठात् ज्ञापकात्, **ईक्षा**—'तदैक्षत' इत्युक्तेक्षणक्रियाऽपि, **यतः**—यस्माद्धेतोः, **गौणी तु**—सृष्ट्याभिमुख्यरूपा अमुख्यैव ग्राह्या, **तत्**—तस्मात्, **जगतां निदानम्**—'सदेव सोम्येदमग्र आसीत्' इति जगत्कारणतया 'सत्'पदेन बोधितं वस्तु, **प्रधानम्**—साङ्ख्योक्तं प्रकृतितत्त्वमेव भवितुमर्हति, **इत्येतत्**—एवंरूपं साङ्ख्यानामाशङ्कनम्, **अपाचकार**—सूत्रकारो दूरीकृतवान्, **यतः**—यस्माद्धेतोः, **वीक्षणम्**—'तदैक्षत' इति प्रतिपन्नमीक्षणम्, **आत्मशब्दात्**—'ऐतदात्म्यम्' इति आत्मरूपचेतनसमभिव्याहारात् ज्ञापकात्, **मुख्यम्**—सङ्कल्पात्मकं चेतनासाधारणम् अनुपचरितमेव ग्राह्यम् ॥ १२ ॥

## २) श्रीवात्स्यवरदगुरुविरचितः तत्त्वसारः ॥ (श्लो. १६, १७)

[वन्देऽहं वरदार्यं तं वत्साभिजनभूषणम् ।
भाष्यामृतप्रदानाद्यः संजीवयति मामपि ॥]

**छान्दोग्ये केचिदाहुर्दिशतिरुततमादेशमप्राक्ष्य इत्य-**
**त्राऽऽङ्पूर्वस्तूपदेशं प्रकटयति सतो न प्रशास्ति घजन्तः ।**
**नो कर्तर्यस्ति कर्मण्यगणि घञिह, सत् कर्तृ शास्तौ न कर्म**
**स्यात्, स्यात् कर्मोपदेशे तदिदमुदितमादेशवाचोपदेश्यम् ॥ १६ ॥**

**केचित्**—अद्वैतिनः, **छान्दोग्ये**—छान्दोग्योपनिषत्सम्बन्धिनि, **उत....मप्राक्ष्य इत्यत्र**—'उत तमादेशमप्राक्ष्यः ?' इत्यस्मिन् वाक्ये, **आङ्पूर्वः**—'आङ्' इत्युपसर्गपूर्वकः, **घजन्तः**—

* शारीरकन्यायकलापसंग्रह-तत्त्वसार-अधिकरणसारावलीनां प्रतिपदार्थविवृतिः, आदितः एतद्-ग्रन्थसम्पादकैः N.S. रामभद्राचार्यैः सङ्ग्रथितेतित्तियम् ।

**'घञ्'प्रत्ययान्तः, दिशतिः**—'दिश्'धातुः, ('आदेश'शब्दः इति यावत्) **सतः**—सच्छब्द-वाच्यब्रह्मविषयकम्, **उपदेशम्**—अज्ञातज्ञापनं, **प्रकटयति**—प्रतिपादयति, **सतः प्रशास्तिम्**—सत्पदार्थकर्तृकं नियमनम्, **न प्रकटयति**—नैव बोधयति, (कुत इति चेत् !)**घञ् कर्तरि नो अस्ति**—घञ्प्रत्ययः कर्तृरूपार्थबोधने न अनुशासनसिद्धः, (किन्तु) **कर्मणि**—कर्मरूपार्थबोधने एव, **अगणि**—अनुशासनसिद्धः 'अकर्तरि च कारके संज्ञायाम्' (पा.सू. 3-3-19) इति, **इह**—अस्मिन् प्रकरणे, **सत्**—सच्छब्दवाच्यं वस्तु, **शास्तौ**—शासनरूपार्थस्वीकारे, **कर्तृ स्यात्**—'शास्'धात्वर्थक्रियां प्रति कर्तृकारकमेव भवेत्, **कर्म न स्यात्**—कर्मकारकं नैव भवेत्, (कर्तृभिन्नं कारकं न भवेत् इति यावत्) **तत्**—तस्माद्धेतोः, **इदम्**—सत्, **उपदेशे**—दिश्धातोः उपदेशार्थकत्वे, **कर्म स्यात्**—कर्मैव भवेत्, (इत्यतः) **आदेशवाचा**—आदेशपदेन, **इदम्**—सत्पदबोध्यम्, **उपदेशम्**—उपदेशकर्मत्वेनैव, **उदितम्**—श्रुत्यभिप्रायविषयः, **इति आहुः**—एवं वर्णयन्ति ॥ १६ ॥

**अत्र ब्रूमः प्रशास्तिं वदति दिशिर साऽऽङ्मुखो नोपदेशं**
**शास्तौ सोऽतिप्रसिद्धो न हि पर इह चाऽपेक्षितार्थप्रसङ्गः ।**
**युक्तोऽसाधारणोक्त्या घञगणि करणेऽप्यत्र वैवक्षिकत्वं**
**शब्दोक्तं कारकाणां ननु करणतया कर्तरि स्याद्विवक्षा ॥ १७ ॥**

**अत्र**—अस्मिन् आक्षेपे प्रवृत्ते सति, **ब्रूमः**—एवं समाधानं वर्णयामः, **असौ आङ्मुखः दिशिः**—अस्मिन् वाक्ये प्रयुक्तः 'आदेश'शब्दः, **प्रशास्तिं वदति**—आज्ञापनरूपमेवाऽर्थम्—नियमनम् शक्त्या बोधयति, **उपदेशम्**—अज्ञातज्ञापनम्, **न**—नैव बोधयति, (कुत इति चेत्) **सः**—आङ्पूर्वः 'दिश्'धातुः, **शास्तौ**—प्रशासने एव, अतिप्रसिद्धः बहुजनप्रयोगविषयः, **परे**—अनन्तरोक्ते उपदेशरूपेऽर्थे, **न हि**—नैव प्रसिद्धः खलु, **इह च**—प्रशासनार्थत्वे च, **अपेक्षितार्थप्रसङ्गः**—निमित्तकारणत्वौपयिकस्य आज्ञारूपार्थस्य प्रस्तावः, **असाधारणोक्त्या**—परमात्मासाधारणधर्मस्य कथनेन, **युक्तः**—योग्यत्वेन सङ्गतो भवति । **अत्र**—'घञ्'प्रत्ययानु-शासनप्रकरणे, 'आदेश'शब्दे वा, **करणेऽपि घञ्**—करणार्थकोऽपि घञ्प्रत्ययः, **अगणि**—उपदिष्टः, (बहुलग्रहणात् 'उपदेश' इत्यत्र करणे घञ् इति भाष्यात्) **कारकाणाम्**—कर्मादीनाम्, **वैवक्षिकत्वम्**—प्रयोक्त्रभिप्रायनिबन्धनत्वम्, **शब्दोक्तं ननु**—वैयाकरणैः 'विवक्षातः कारकाणि भवन्ति' इति अङ्गीकृतमेव खलु, (अतः) **कर्तरि**—प्रशासनस्य कर्तृकारकभूतेऽपि ब्रह्मणि, **करणतया विवक्षा**—करणकारकत्वतात्पर्यविषयत्वम्, **स्यात्**—युज्यत एव ॥ १७ ॥

३) श्रीवेदान्ताचार्यविरचिता अधिकरणसारावलिः (श्लो. ५४--५७)

[श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी । वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥]

**आत्मन्येवं परस्मिन्नकृत इति [1]मिते[1] विश्वहेतुत्वलक्ष्ये**
**शास्त्रैकस्थापनीये निरुपधिपरमप्रेमयोग्ये प्रसक्ते ।**
**ईदृक्त्वं स्याद्यथार्हं प्रकृतिपुरुषयोर्नाऽनुमानाद्ययोग्यौ**
**दुःखास्पृष्टौ च ताविस्यथ परकथनं दोधवीति क्रमेण ॥ ५४ ॥**

**एवम्**—अधिकरणचतुष्टयात्मिकया उपोद्घातपेटिकया, **'अकृतः' इति मिते**—'सिद्धस्वरूपः' इति शास्त्रजन्यप्रमागोचरे, **विश्वहेतुत्वलक्ष्ये**—जगत्कारणत्वरूपेण लक्षणेन प्रतिपत्तव्ये, **शास्त्रैकस्थापनीये**— शास्त्रेतरानिर्णेयस्वयाथात्म्ये, **निरुपधिपरमप्रेमयोग्ये**—अबाधितानवधिकातिशयानन्दवति, **परस्मिन् आत्मनि**—सर्वाधिके सर्वात्मनि परमपुरुषे, **प्रसक्ते**—जिज्ञास्यत्वोपयोगिधर्मवत्तया सिद्धे सति, **अथ**— द्वितीयपेटिकायाम् , **क्रमेण**—यथाक्रमं पञ्चम-षष्ठयोः अधिकरणयोः, **ईदृक्त्वम्**—आद्यपेटिकासिद्धं जगत्कारणत्वादिकम् , **यथार्हम्**—यथायोग्यम् , **प्रकृति-पुरुषयोः स्यात्**—सांख्यसम्मतयोः प्रधान-पुरुषशब्दवाच्ययोः तत्त्वयोरेव अबाधेन युज्यते, **तौ**—प्रधान-पुरुषौ च, **अनुमानाद्ययोग्यौ**—अनुमानादिप्रमाणागोचरौ, **दुःखास्पृष्टौ च**—दुःखसम्बन्धानर्हौ च, **न**—न भवितुमर्हतः, (किन्तु) अनुमानादिगोचरौ, दुःखसंस्पृष्टावेव च भवतः, इति **परकथनम्**—ईदृशं परेषां पूर्वपक्षवचनम् , **दोधवीति**—विशोध्य परिहरति ॥ ५४ ॥

**गौणेक्षासाहचर्यात् सति बहुभवनप्रेक्षणं नैव मुख्यं**
**दृष्टान्ताद्यैरिहाऽऽभात्यनुमितिरचितस्तादृशाज्जन्म युक्तम् ।**
**सच्छब्दस्तेन मूलप्रकृतिमविकृतिं व्याहरेदित्ययुक्तं**
**श्रुत्याऽन्येषां निरोधात् त्वदभिमततिरस्कारिलिङ्गादिमिश्च ॥ ५५ ॥**

**सति**—सच्छब्दबोध्ये वस्तुनि, **बहुभवनप्रेक्षणम्**—बहुभवनविषयकं 'बहु स्याम्' (छां.उ. 6–2–3) इति सङ्कल्परूपं ज्ञानम् , **मुख्यं नैव**—अनुपचरितं नैव भवितुमर्हम् , किन्तु गौणमेव ; **गौणेक्षासाहचर्यात्**— तेजोजलादिगतस्य सृष्ट्युन्मुख्यात्मकस्य गौणेक्षणस्य 'तत्तेज ऐक्षत' इत्येवमादिना सहपाठात् , **इह**—सद्विद्याप्रकरणे, **दृष्टान्ताद्यैः**—'यथा सोम्यैकेन मृत्पिण्डेन' इत्यादिभिः दृष्टान्तयुक्त्यादिभिः, **अनुमितिः आभाति**—अनुमितिः प्रकृतेति भासते, (अतः) **तादृशात् अचितः**—आनुमानिकादेव अचेतनात् प्रधानात् , **जन्म**—स्थूलस्य अचेतनस्य जगतः उत्पत्तिरिति, **युक्तम्**—उपपन्नं भवति । **तेन**—उक्तेन हेतुना, **सच्छब्दः**—'सदेव' इति प्रक्रमोक्तः 'सत्' इत्ययं शब्दः, **अविकृतिम्**—स्वयं विकारानात्मिकाम् ,

[1] मते—अ, आ.

**मूलप्रकृतिम्**—अत एव मूलप्रकृतिशब्दवाच्यामेव, **व्याहरेत्**—प्रतिपादयेत्; न चेतनम्, **इति अयुक्तम्**—एवं चिन्तनं सङ्गतं न भवति; **श्रुत्या**—'ऐतदात्म्यम्' इति आत्मपदघटितया प्रत्यक्षया उपनिषद्वाचा, (तथा) **त्वदभिमततिरस्कारिलिङ्गादिभिश्च**—युष्मदभ्युपगतार्थनिरास-तात्पर्यकैः ईक्षणादिभिर्ज्ञापकैश्च, **अन्येषां निरोधात्**—प्रकृत्यादीनां तज्ज्ञापकलिङ्गादीनां वा उपस्थितेः प्रतिबन्धात् ॥ ५५ ॥

**ज्ञाते ह्येकत्र सर्वं विदितमिति भवत्यैक्यसिद्ध्यै प्रतिज्ञा**
**मृत्तत्कार्यादयश्च त्रय इह कथितास्तस्य दृष्टान्तभेदाः ।**
**तेनाऽव्यक्तानुमानं कथितमिति वृथोत्कण्ठितं हेत्वनुक्तेः**
**सारूप्यादेश्च हेतोरुपरि परिहृतेरत्र सम्भावनोक्तेः ॥ ५६ ॥**

**एकत्र**—एकस्मिन् वस्तुनि, **ज्ञाते हि**—विज्ञाते सति हि, **सर्वं विदितम्**—जगत् सर्वं ज्ञातं भवति, **इति प्रतिज्ञा**—एवंरूपा अनुमानाङ्गतया ज्ञाता सिषाधयिषितार्थनिर्देशरूपा प्रतिज्ञा उपनिषदि श्रुता, (सा च) **ऐक्यसिद्ध्यै भवति**—कार्य-कारणयोः अभेदप्रतिपत्तये, प्रयोजिका भवति, **इह**—प्रतिज्ञातार्थोपपादने कार्ये, **तस्य**—कार्य-कारणयोरभेदस्य (सिषाधयिषितस्य) **मृत् तत्कार्यादयः त्रयः**—मृत्तिका, तज्जन्यो घट-शरावादिः, लोहमणिः, तत्कार्यं लोहमयम्, (तथा) नखनिकृन्तनं, तत्कार्यं कार्ष्णायसम् इति त्रयोऽर्थाः, **दृष्टान्तभेदाः**—भिन्नभिन्नाः दृष्टान्तविशेषतया, **कथिताः**—प्रतिपादिताः, **तेन**—प्रतिज्ञा-दृष्टान्तयोः कथनेन, **अव्यक्तानुमानम्**—साङ्ख्योक्तस्य प्रधानस्य अनुमानमेव, **कथितमिति**—उक्तप्रायम् इत्याशङ्कनम्, **वृथोत्कण्ठितम्**—निष्फलं कौतूहलमात्रम्, (कुतः?) **हेत्वनुक्तेः**—अनुमानप्रधानाङ्गस्य हेतु-वाक्यस्य अभावात्, **सारूप्यादेश्च हेतोः**—प्रपञ्चप्रधानयोः सुख-दुःख-मोहात्मकत्वेन समान-रूपत्वात्मकस्य लिङ्गस्य तु, **उपरि परिहृतेः**—उत्तरत्र साङ्ख्याधिकरणे निराकरणात्, **अत्र**—अस्मिन् अधिकरणे, **सम्भावनोक्तेः**—असम्भावितत्वशङ्कामात्रपरिहारात्, न पौन-रुक्त्यमिति ॥ ५६ ॥

**आदेशात्मस्वशब्दैरनितरशरणैस्त्वन्तदैक्योपदेशात्**
**जीवेन स्वेन साहङ्करणमनहमोऽचिद्गणस्य प्रवेशात् ।**
**एकज्ञानेन सर्वं विदितमिति गिरा सर्वतादात्म्यवाचा**
**शाखाविद्यान्तरादेरपि बहुभविता विश्वविद्विश्वमूर्तिः ॥ ५७ ॥**

**अनितरशरणैः**—प्रतिपाद्यान्तरवत्तया निर्वोढुमशक्यैः, (अनन्यथासिद्धैरिति यावत्) **आदेशात्मस्वशब्दैः**—'तमादेशम्' 'स आत्मा' 'स्वमपीतः' इति वाक्येषु श्रूयमाणैः एतैः

शब्दैः (ज्ञापकीभूतैः), **त्वं-तदैक्योपदेशात्**—त्वंशब्दार्थस्य तच्छब्दार्थस्य च 'तत्त्वमसि' इति अभेदोपदेशात् ज्ञापकात्, **स्वेन**—स्वात्मकेन, **जीवेन**—जीवात्मना सह, **साहङ्करणम्**—अहङ्कारपूर्वकम्—स्वकर्तृत्वधीपूर्वकम्, **अनहमः**—अहमर्थव्यतिरिक्तस्य, **अचिद्गणस्य**—अचेतनजातस्य, **प्रवेशात्**—अन्तरनुप्रवेशात्, **एकज्ञानेन सर्वं विदितमिति गिरा**—'यस्मिन्नु खलु विज्ञाते सर्वमिदं विज्ञातं भवति' इति प्रतिज्ञारूपया वाचा, **सर्वतादात्म्यवाचा**—'ऐतदात्म्यमिदं सर्वम्' इत्येवंरूपया ब्रह्मणः सार्वात्म्यप्रतिपादिकया श्रुतिगिरा, **शाखाविद्यान्तरादेरपि**—तैत्तिरीयाख्यवेदशाखान्तरात्, तथा दहरादिविद्यान्तरात्, एवं स्मृतिपुराणादेरपि ज्ञापकात्, **बहुभविता**—'बहु स्याम्' इति सङ्कल्पपूर्वककर्तृत्ववान्, **विश्ववित्**—सर्वज्ञः, **विश्वमूर्तिः**—सर्वशरीरकः परमात्मैव, 'सत्'पदबोध्यः ; न साङ्ख्याभिमतं प्रधानम् ॥ ५७ ॥

## ४) श्रीमहाचार्यविरचितः अधिकरणार्थसङ्ग्रहः

[वाधूलश्रीनिवासार्यतनयं विनयाधिकम् । प्रज्ञानिधिं प्रपद्येहं श्रीनिवासमहागुरुम् ॥]

**एवं चतुस्सूत्र्या वेदान्तवाक्यानां ब्रह्मणि प्रामाण्यसमर्थनरूपं परीक्षणीयस्थापनं, तत्परिकरस्थापनं च कृतम् ; अथ प्रमाणविशेषपरीक्षा क्रियते ।**

**ईक्षत्यधिकरणे—'सदेव सोम्येदमग्र आसीत्** (छां.उ. 6–2–1) **इत्यत्र सच्छब्दवाच्यस्य, 'इदं'शब्दवाच्यम् अचेतनं प्रति कारणत्वेन, कारणस्य च कार्यसाजात्यावश्यंभावात्, अचेतनं प्रधानमेव सच्छब्दप्रतिपाद्यं कारणम्—इत्याशङ्क्य,**

**ईक्षतिश्रवणात्, चिदचिच्छरीरकस्य परस्य सर्वसालक्षण्यसम्भवाच्च, 'सच्छब्दवाच्यः, परमात्मा'—इत्युक्तम् ॥**

## ५) श्रीमद्भिः लक्ष्मीपुरं श्रीनिवासाचार्यैः विरचिता नयसङ्गतिमालिका (श्लो. ३१, ३२)

**वेदान्तसारसद्विद्या वक्ति प्रकृतिहेतुताम् ।**
**इत्याक्षेपप्रतिक्षेपः स्यादीक्षतिनयेऽधुना ॥ ३१ ॥**

**एवं बह्व्यः सङ्गतयः प्रोक्ता मुखविभेदतः ।**
**तत्र मुख्या सङ्गृहीता शिष्यविक्षेपशान्तये ॥ ३२ ॥**

॥ इति ईक्षत्यधिकरणम् ॥ ५ ॥

## १) शारीरकन्यायकलापसङ्ग्रहः

**विकारवाची मयडित्यमुष्मात् क्षेत्रज्ञमानन्दमयं विशङ्क्य ।**
**असम्भवात्, प्राणमये च हानेः, प्राचुर्यवाचीति निराचकार ॥ १३ ॥**

**मयट्**—आनन्दमयशब्दे 'मयट्'प्रत्ययः, **विकारवाची**—'तस्य विकारः' (पा.सू. 4-3-134) इति विहितविकारार्थकः, **इत्यमुष्मात्**—एवंरूपात् हेतोः, **आनन्दमयम्**—आनन्दवल्लीपठितानन्दशब्दाभिधेयम्, **क्षेत्रज्ञं विशङ्क्य**—जीवात्मैवेत्याक्षिप्य, **असम्भवात्**—जीवात्मनि आनन्दमयत्वबाधात्, **प्राणमये च**—'प्राणमय'शब्दे एव, **हानेः**—मयटो विकारार्थत्वस्य त्यागात्, **प्राचुर्यवाचीति**—'आनन्दमय'शब्दघटकः मयट्, 'तत्प्रकृतवचने मयट्' (पा सू. 5-4-21) इति सूत्रेणानुशिष्टः सन्, प्राचुर्यरूपार्थबोधक एवेति, **निराचकार**—आनन्दमयस्य जीवस्वरूपत्वशङ्कां निरस्तवान् बादरायणः ॥ १३ ॥

## २) तत्त्वसारः (श्लो. १८, १९)

**षष्ठ्याऽन्यत्वमवेदि नैनमवदच्छ्लोको न चाऽज्ञातता**
**ज्ञातस्याऽस्य तथाऽपि नाऽवयविता तस्याऽन्य आत्मा श्रुतः ।**
**शोध्यत्वं च विकारवाचकवचस्तद्ब्रह्म पुच्छं भवे-**
**न्नत्वानन्दमयः स चाऽन्नमयवत् कोशो बहिःकथ्यते ॥ १८ ॥**

**षष्ठ्या**—ब्रह्म पुच्छमिति वाक्यघटक·तस्य प्रियमितिवाक्यादनुवृत्ततस्येतिपदस्थया भेदार्थक-षष्ठ्या, **अन्यत्वम्**—आनन्दमयस्य पुच्छब्रह्मणश्च मिथो भेदः, **अवेदि**—ज्ञातः । (अतः) **श्लोकः**—'असन्नेव स भवति' इत्यादिः श्लोकः, **एनम्**—आनन्दमयम्, **न अवदत्**—न बोधयामास; किन्तु 'ब्रह्म पुच्छम्' इति ब्रह्मैव बोधयामास । **तथा**—प्रिय-मोदादिरूपेण, **ज्ञातस्य**—आनन्दमयतया लोकविदितस्य, **अस्य**—आनन्दमयरूपस्यार्थस्य, **अज्ञातता च न**—तदज्ञानवतः असद्भावप्रयोजकः ज्ञानविषयत्वाभावश्च नाऽस्ति । (एवम्) **तस्य**—ब्रह्मणः, **अवयविताऽपि न**—(निरवयवत्वात्) शिरः-पाण्याद्यवयवकत्वं च नाऽस्ति । **अन्यः**—आनन्दमयादन्य एवार्थः, **आत्मा श्रुतः**— 'तस्यैष एव शारीर आत्मा' इति श्रुतौ आत्मत्वेन पठितः । **शोध्यत्वं च श्रुतम्**—अन्नमयादिवत् आनन्दमयस्याऽपि शोधनीयत्वम् 'अन्नमय.... आनन्दमया मे शुध्यन्ताम्' इति नारायणोपनिषदि पठितम् । **विकारवाचकवचश्च श्रुतम्**—

विकाररूपार्थबोधकमयट्प्रत्ययस्याऽपि श्रवणमस्ति. **तत्**— तदेभ्यो हेतुभ्यः, **पुच्छम्**—'ब्रह्म पुच्छं प्रतिष्ठा' इति पठितं पुच्छमेव, **ब्रह्म भवेत्**—लोकेनाऽविदितं, निरवयवं, निर्विकारं, स्वतःशुद्धं च सत् 'ब्रह्म'पदवाच्यं भवितुमर्हति। **आनन्दमयस्तु न ब्रह्म**—आनन्दमय-शब्दाभिहितस्तु अर्थः ब्रह्म न भवितुमर्हः। **स च**—आनन्दमयस्तु, **अन्नमयवत्**—अन्नमय-शब्दाभिहितः अर्थ इव, **बहिः कोशः**—परस्मिन् ब्रह्मणि अवतरणं प्रति उपायभूतः बाह्यसम्पुट एव, **कथ्यते**—श्रुत्या प्रतिपाद्यते ॥ १८ ॥

**पुल्लिङ्गान्तप्रधानप्रकृतपरवचो रूपणं चाप्यनन्यैः**
**श्लोकाः पुच्छं न चाऽऽहुः स्वरसमपि च नः सूत्रमन्योऽन्तरो न ।**
**षष्ठ्यादिश्चांऽशभावान्निरवधिकतया रूपणादानुरूप्यात्**
**पर्यायत्वादनन्यात्मकवचनतया पुच्छहेतुः परास्तः ॥ १९ ॥**

**पुल्लिङ्गान्तप्रधानप्रकृतपरवचः**—पुल्लिङ्गान्तम्, प्राधान्येन प्रस्तुतार्थपरं च यत् 'सोऽकामयत' इति वाक्यस्थं 'सः' इति पदम्, (तथा) **अनन्यैः अपि**—आनन्दमयात् स्वस्मात् अनतिरिक्तैरपि शिरः-पक्ष-पुच्छादिभिः अवयवैः, **रूपणं च**—आनन्दमयस्यैव निरूपणमपि, (एवम्) **श्लोकाश्च**—अन्नमयादयः एतावदन्ताः श्लोका अपि, **पुच्छं न च आहुः**—पुच्छं नैव वदन्ति खलु! (एतत् अवचनम्), **नः**—आनन्दमयस्यैव ब्रह्मत्वं वदता-मस्माकम्, **स्वरसम्**—अनुपचरितार्थप्रतिपादकम्, (तथा) **सूत्रमपि च**—आनन्दमयाधिकरण-सूत्रमपि, (एवम्) **अन्योऽन्तरः न**—पूर्वपूर्वपर्याये इव आनन्दमयपर्याये 'अन्योऽन्तर आत्मा' इत्यस्याभावः, एतेऽर्थाः आनन्दमयस्यैव परमात्मत्वबोधकाः। **षष्ठ्यादिश्च**—'तस्यैषः' इत्यत्र 'तस्य' इति षष्ठी, श्लोके आनन्दमयानुक्तिः, ज्ञातत्वम्, ब्रह्मणो निरवयवता, शारीरात्मश्रवणम्, आनन्दमयस्य शोधनीयतोक्तिः, विकारार्थको मयट् इत्येवंरूपः, **पुच्छहेतुः**—पुच्छस्यैव ब्रह्मत्व-स्थापकतया पूर्वपक्षिभिः प्रतिपादितः अर्थस्तु, **अंशभावात्**—अंशांशिभावस्य बोधनात्, **निरवधिकतया**—अज्ञातेन निरतिशयानन्दरूपत्वेन मयटा प्राचुर्यबोधनात्, **रूपणात्**—निरवयवेऽपि बुद्धिसौकर्यार्थं शिरःपुच्छाद्यवयवस्य रूपणमात्रत्वस्वीकारात्, **आनुरूप्यात्**—परमात्मनि तदनुरूपस्य प्रसन्नतापादनात्मकस्य शोधनस्य अभ्युपगमात्, **पर्यायत्वात्**—ब्रह्म-आनन्दमयशब्दयोः समानार्थोपस्थापकत्वात्, **अनन्यात्मकवचनतया**—(अत एव) अन्यात्म-कत्वावेदकवचनरूपत्वासम्भवात्, **परास्तः**—आभासताम्(हेत्वाभासताम्) आपादितः ॥ १९ ॥

३) अधिकरणसारावलिः (श्लो. ५८-६१)

मुख्येक्षा यद्यभीष्टा भवतु तदुचिते सा पुनर्जीवतत्त्वे
सद्विद्यायां हि शब्दैस्त्रिभिरुपरि सतस्तस्य जीवैक्यमुक्तम् ।
इत्यूहादुज्जिहानं प्रशमयितुमथ प्रस्तुतो विश्वकर्ता
जीवस्याऽप्यन्तरात्मा [1]निरुपधिक[1]महानन्दथुः स्थाप्यतेऽत्र ॥ ५८ ॥

**ईक्षा**—'तदैक्षत' इत्यत्र प्रतिपादिता स्वस्य बहुभवनोपयोगिनी ईक्षणक्रिया, **मुख्या**—अनुपचरिता, चेतनासाधारणी सङ्कल्पात्मिका, **अभीष्टा यदि**—विवक्षिता भवति चेत्, **सा**—विलक्षणा ईक्षणक्रिया, **तदुचिते**—तादृशेक्षणसम्बन्धार्हे, **जीवतत्त्वे पुनः**—पुरुषपदवाच्ये जीवे विद्यमानैव, **भवतु**—अङ्गीक्रियतां नाम । **हि**—यतः, **सद्विद्यायाम्**—सद्विद्यान्तःपातिभिः, **त्रिभिः शब्दैः**—'तत्, त्वम्, असि' इत्येतैः त्रिभिः पदैः, **उपरि**—उपर्युपरि नवकृत्वः, **तस्य सतः**—'सदेव सोम्ये'ति प्रस्तुतस्य 'सत्'पदाभिधेयस्य, **जीवैक्यम्**—जीवभूत'त्वं'पदार्थाभिन्नत्वम्, **उक्तम्**—अभ्यासेन प्रतिपादितम्, **इति**—अनया रीत्या, **ऊहात्**—औचित्यचिन्तनरूपां युक्तिमाश्रित्य, **उज्जिहानम्**—चिदचिदुत्तीर्णस्य ब्रह्मणः जगत्कारणत्वनिषेधे उद्युक्तम् पूर्वपक्षिणम्, **प्रशमयितुम्**—अक्षुब्धतया अभ्युपगतेश्वरं कर्तुम्, **अथ**—पश्चात्तने, **अत्र**—आनन्दमयाधिकरणे, **प्रस्तुतः**—पूर्वं जगत्कारणत्वेन लक्षितः, **निरुपधिकमहानन्दथुः**—स्वाभाविकपरमानन्दमहोदधिः, **विश्वकर्ता**—जगत्स्रष्टा, **जीवस्याऽपि**—केवलं सङ्कल्पसम्बन्धार्हस्य चेतनस्यापि, **अन्तरात्मा**—अन्तःस्थः सन् धारकः नियन्ता शेषी च पुरुषोत्तमः, **स्थाप्यते**—न्यायव्युत्पादनपूर्वकं निर्णीयते ॥ ५८ ॥

दृष्टः पूर्वं विकारे मयडिति चरमेऽप्येवमस्त्वित्ययुक्तं
मध्ये तद्भङ्गदृष्टेः प्रचुरमिह वदेत् प्रत्ययोऽन्यस्य बाधात् ।
आनन्दप्राचुरी च प्रकृतपरसुखाल्पत्वलब्धावधित्वात्
दुःखाल्पत्वानपेक्षा परदुरितभिदः शासितुस्तद्विरोधात् ॥ ५९ ॥

**पूर्वम्**—प्राथमिके 'अन्नरसमय'शब्दे, **विकारे मयट्**—विकारार्थबोधकत्वेन अनुशिष्टः मयट्प्रत्यय एव, **दृष्ट इति**—ज्ञात इति हेतुना ज्ञापकभूतेन, **चरमेऽपि**—अन्ते श्रूयमाणे 'आनन्दमय'शब्देऽपि, **एवमस्तु इति**—विकारार्थक एव भवत्विति आशङ्कनम्, **अयुक्तम्**—अबाधितं न भवति । **मध्ये**—'प्राणमयादि'शब्दे, **तद्भङ्गदृष्टेः**—मयटि विकारार्थकताविच्छेद-

---

[1] निरवधिक—मा.

दर्शनात्, (तस्मात्) इह—आनन्दमयशब्दे, **प्रत्ययः**—मयट्प्रत्ययः, **अन्यस्य बाधात्**—प्राचुर्येतरस्याऽर्थस्य आनन्दमये अयोगात्, **प्रचुरम्**—स्वप्रकृत्यर्थप्राचुर्यवन्तमेवार्थम्, **वदेत्**—बोधयेत्। **आनन्दप्राचुरी च**—प्रचुरानन्दवत्त्वं च, **दुःखाल्पत्वानपेक्षा**—स्वात्मानं प्रति अवधितया स्वसमानाधिकरणदुःखन्यूनतावलम्बि न भवति; **प्रकृतपरसुखाल्पत्वलब्धावधित्वात्**—प्रस्तुताः ये मनुष्याद्याः प्रजापतिपर्यन्ताः परब्रह्मणोऽन्ये, तद्गतेन सुखन्यूनत्वेन स्वस्य अवधिलाभात्, **परदुरितभिदः**—अन्यदीयानां दुःखमूलानां पापानां निर्मूलयितुः, **शासितुः**—सर्वनियन्तुः पुरुषोत्तमस्य, **तद्विरोधात्**—अल्पदुःखवत्तायाः बाधात् ॥ ५९ ॥

**आत्मा तस्यैष एवेत्युदितमनितरात्मत्वमस्यैव वक्तुं**
**शारीरोक्तिश्च तस्मिन्नखिलतनुतया स्यादसङ्कोचवृत्तिः ।**
**शोध्यत्वं तत्तदर्थानुगुणमिति विभोस्तत्प्रसाद्यत्वमात्रं**
**प्राप्येऽस्मिन् प्राप्तिरूपा परविद उपसङ्क्रान्तिरानन्दसिन्धौ ॥ ६० ॥**

**अस्य**—परमात्मनः, **अनितरात्मत्वम्**—नियन्त्रन्तरराहित्यम्, **वक्तुमेव**—प्रतिपादयितुमेव, (न तु चिदचितोरिव आत्मान्तरं कथयितुम्), **तस्यैष एव आत्मा इति**—(आनन्दमयप्रकरणेऽपि) 'तस्यैष एव शारीर आत्मा' इति, **उदितम्**—श्रुतौ आम्नातम्। **तस्मिन्**—(अशरीरत्वेनाऽपि श्रुतिगम्ये) परमात्मनि, **शारीरोक्तिश्च**—'शारीर आत्मा' इति शरीरसम्बन्धितावर्णनमपि, **अखिलतनुतया**—तस्य 'सर्वात्मा' इति श्रुतिप्रतिपन्नेन सर्वशरीरकत्वेन, **असङ्कोचवृत्तिः**—अनुपचारेण मुख्यमेव, **शोध्यत्वम्**—शोधनार्हत्वम्। **तत्तदर्थानुगुणमिति**—तत्तद्वस्तुस्वरूपानुबन्धि; न तु सर्वत्र एकविधमेवेति हेतोः, **विभोः तत्**—सर्वनियन्तुः सर्वपावनस्य आनन्दमयस्य परब्रह्मणः सम्बन्धि शोधनार्हत्वम्, **प्रसाद्यत्वमात्रम्**—तद्गतनिग्रहसङ्कल्पदूरीकरणेन केवलं प्रसन्नतापादनरूपमेव; न तु चिदचितोरिव मालिन्यदूरीकरणात्मकम्। **प्राप्ये**—मुक्तप्राप्यतया श्रुतिप्रतिपन्ने, **आनन्दसिन्धौ**—निरतिशयमहानन्दजलधौ, **अस्मिन्**—परमात्मनि, **परविदः**—परमात्मोपासकस्य, **उपसङ्क्रान्तिः**—'आनन्दमयमात्मानमुपसङ्क्रामति' इति श्रुत्युक्तमुपसङ्क्रमणं तु, **प्राप्तिरूपा**—पूर्वमननुभूतपरमात्मकर्मकानुभवात्मकमेवेति, (सर्वं सुस्थमेवेति)॥६०॥

**निर्देहेऽस्मिन्निरंशे न हि भवति शिरः-पक्ष-पुच्छादि[1]क्लृप्तिः[1]**
**तस्मात् 'पुच्छं प्रतिष्ठे'त्युदितमिह परब्रह्म [2]भातीति[2] चेन्न ।**
**सोढा पुच्छत्व[3]क्लृप्तिर्यदि[3] कथमितरन्नानुमन्येत कल्प्यं**
**ब्रह्मण्यात्मप्रतिष्ठावचनमनितराधारताख्यापनाय ॥ ६१ ॥**

---

[1] किञ्चित्—अ, आ.   [2] भावीति—अ, आ.   [3] क्लृप्तिं यदि—अ, आ.

**निर्देहे**—'अशरीरम्' इत्यादिश्रुत्या शरीररहितत्वेन श्रुतिसिद्धे, **निरंशे**—'निष्कलम्' इत्यादिश्रुत्या (निरंशत्वेन) अवयवराहित्येन श्रुतिगम्ये च, **अस्मिन्**—परस्मिन् ब्रह्मणि, **शिरः-पक्ष-पुच्छादिक्लृप्तिः**—मूर्ध-पार्श्व-वालाद्यवयवानां कल्पना, **हि**—यतः, **न भवति**—नैव सङ्गता भवति। **तस्मात्**—तेनैव हेतुना, **इह**—आनन्दमयप्रकरणे, **पुच्छं प्रतिष्ठेत्युदितम्**—'ब्रह्म पुच्छं प्रतिष्ठा' इति श्रुत्युपात्तं वस्त्वेव, **परब्रह्म**—परब्रह्मशब्दवाच्यमिति, **भाति**—श्रुत्यर्थचिन्तकानां स्फुरति, **इति चेत्**—एवमाशङ्कनम्, **न**—न यौक्तिकम्, **पुच्छत्वक्लृप्तिः**—निरवयवेऽपि वस्तुनि पुच्छरूपत्वकल्पनम्, **यदि सोढा**—युक्तिहीनमपि मर्षितं यदि, **इतरत्**—पुच्छातिरिक्तं शिरः-पक्षादिकम्, **कथम्**—कं वा हेतुमवलम्ब्य, **कल्प्यम्**—कल्पनीयत्वेन, **न अनुमन्येत**—अङ्गीकृतं न भवेत्, (अङ्गीकृतमेव स्यात्; अविशेषात्)। **ब्रह्मणि**—आनन्दमयशब्दोक्ते परमात्मनि, **आत्मप्रतिष्ठावचनम्**—स्वं प्रति प्रतिष्ठात्वकथनम्, **अनितराधारताख्यापनाय**—स्वे महिम्नि प्रतिष्ठितत्वदृढीकरणायैव ॥ ६१ ॥

### ४) अधिकरणार्थसङ्ग्रहः

**आनन्दमयाधिकरणे**—'तस्माद्वा एतस्माद्विज्ञानमयात् अन्योन्तर आत्माऽऽनन्दमयः' (तै.उ.आन. 5-2) इत्यत्र, आनन्दमयः प्रत्यगात्मा; 'शारीरः' इति जीवासाधारणशरीरसम्बन्धश्रवणात्—इत्याशङ्क्य,

निरतिशयदशाशिरस्काभ्यस्यमानानन्दयोगात्, परमात्मनि चिदचिद्वस्तुशरीरतया शरीरत्वसम्भवाच्च, 'आनन्दमयः परमात्मा'—इति सिद्धान्तितम् ॥

### ५) नयसङ्गतिमालिका

**अथाऽऽनन्दाधिकरणे जीवो मुख्येक्षणादिमान् ।**
**जगतः कारणं स्यादित्यपवादोऽत्र वार्यते ॥ ३३ ॥**

॥ इति आनन्दमयाधिकरणम् ॥

—o—

अन्तरधिकरणम् ॥ १–१–७ ॥

### १) शारीरकन्यायकलापसङ्ग्रहः

**देहित्वत[1]श्चेतन[1] एव कश्चित् पुण्योत्तरो मण्डलमध्यवर्ती ।**
**इत्येवमुत्सारयते स्म शङ्कां लोकेशताद्यैः परमात्मधर्मैः ॥ १४ ॥**

---

[1] श्चेतर—ख.

**देहित्वतः**—'हिरण्यश्मश्रुः, हिरण्यकेशः, आप्रणखात्' इत्याद्युक्तनखश्मश्रु-केशाद्यवयवोन्नीतात् सशरीरत्वात् ज्ञापकात्, **मण्डलमध्यवर्ती**—'य एषोऽन्तरादित्ये' इति आदित्यमण्डलान्तर्वर्तितया श्रुतिप्रतिपन्नः पुरुषः, **पुण्योत्तरः**—अतिशयितसुकृतविशेषशाली, **कश्चित् चेतन एव**—प्रत्यगात्मैव (जीवः) कश्चन ; न तु परमात्मा, **इत्येवं शङ्काम्**—एतादृशीम् आक्षेपबुद्धिम्, **लोकेशताद्यैः**—लोककामेशत्वापहतपाप्मत्वादिरूपैः, **परमात्मधर्मैः**—परमात्मेतरावृत्तिभिः प्रकरणपठितैः धर्मैः, **उत्सारयते स्म**—भगवान् बादरायणो दूरीचकार ॥ १४ ॥

## २) तत्त्वसारः (श्लो. २०–२६)

**कपिस्त्वादित्यः कं पिबति किरणैरित्यपि कपि-**
**र्बभस्तीत्याम्नातः स कपिरमुनाऽस्तं यदिह तत् ।**
**प्रतीमः कप्यासं दिवसकरतेजो[1]विकसितः[1]**
**[2]स पद्मः[2] श्रीमत्त्वादगणि भगवच्चक्षुरुपमा ॥ २० ॥**

**कपिः**—'कप्यासं पुण्डरीकमेवमक्षिणी' इति श्रुतिस्थकपिशब्दवाच्योऽर्थः, **आदित्यस्तु**—सूर्य एव ; न तु इभ-वानरौ ['कपयोऽर्केभवानराः'] (ना.र.मा) **किरणैः**—मयूखैः, **कम्**—जलम्, **पिबति**—पानं करोति, **इति**—अनया व्युत्पत्त्या, **स कपिः**—किरणैः जलपाता सूर्यः, **'कपिर्बभस्ति' इत्याम्नातोऽपि**—'कपिर्बभस्ति तेजनम्' इति श्रुत्या कपित्वेन अधीतोऽपि वर्तते । **अमुना**—दूरवर्तिना सूर्येण, **यत्**—यादृशं वस्तु, **अस्तम्**—विकसितं भवति, [असु-क्षेपणे पा.धा.पा. 1210] **तत्**—विकासकर्मीभूतं वस्तु, **इह**—उक्तायां श्रुतौ, **कप्यासम्**—'कप्यास'पदवाच्यमिति, **प्रतीमः**—वयं निश्चिनुमः, विश्वसिमो वा, **दिवसकरतेजोविकसितः**—सूर्यकिरणैः विकासं प्राप्तः, **स पद्मः**—पुण्डरीकपदोक्तः अम्भोजरूपोऽर्थः, **श्रीमत्त्वात्**—(विकास्यमानत्वावस्थायामेव) विशिष्टकान्तिमत्त्वाद्धेतोः, **भगवच्चक्षुरुपमा**—परमात्मनो लोचनयोः उपमानत्वेन, **अगणि**—ज्ञापितः ॥ २० ॥

**[3]नालं[3] कपिर्भवति कं पिबतीति तस्मिन्**
**[4]यस्यास[4] आसनमुशन्ति मनीषिणस्तत् ।**
**कप्यासमुज्ज्वलमुदारमिदं सरोजं**
**चक्षुर्निदर्शनमुदीरितमीश्वरस्य ॥ २१ ॥**

---

1 विकसितं—क.  2 सुपद्मं—क.  3 नालः—ख.  4 कप्यास—क.

**कं पिबतीति**—जलं पिबतीति व्युत्पत्त्या, **नालम्**—कमलनालम्, **कपिर्भवति**—'कपि'शब्दवाच्यं भवितुमर्हति। **तस्मिन्**—कपिशब्दबोध्ये कमलनाले, **यस्य**—यस्य वस्तुनः, **आसः आसनम्**—'आस'पदबोध्यः स्थितिविशेषः स्वाभाविकः, **तत्**—नालस्थं वस्तु, **मनीषिणः**—ब्रह्मनन्द्यादयः श्रुत्यर्थज्ञाः, **कप्यासम्**—'कप्यास'पदवाच्यम्, **उशन्ति**—अभिप्रयन्ति। **इदम्**—उक्तया रीत्या 'कप्यास'शब्दप्रतिपादितम्, **उज्ज्वलम्**—शोभातिशयोपेतम्, **उदारम्**—अतिशयेन स्फीतम्, **सरोजम्**—पुण्डरीकम्, **ईश्वरस्य**—भगवतो नारायणस्य, **चक्षुर्निदर्शनम्**—नयनयोः उपमानतया, **उदीरितम्**—'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इति श्रुत्या बोधितम् ॥ २१ ॥

**कमुदकमिह प्यासो यस्यासनं यदि वोद्भवः**
**कविभिरुदितं कप्यासं तद्गभीरजलोदयात्।**
**शिशिरमधुरं श्रीमद्दामोदराक्षिनिदर्शनं**
**भवति नलिनं लुप्ताकारस्त्वपिः पिहितादिवत् ॥ २२ ॥**

**कम्**—'कप्यास'शब्दघटक'क'शब्दवाच्योऽर्थः, **उदकम्**—जलमेव। **इह**—जले, **प्यासः**—'कप्यास'शब्दघटक'प्यास'शब्दार्थभूतम्, **आसनम्**—स्थितिः, **यस्य**—यादृशस्य अर्थस्य सम्भवति, **यदि वा**—अथवा, **इह**—जले, **प्यासः**—'कप्यास'शब्दघटक'प्यास'-शब्दार्थभूतः, **उद्भवः**—उत्पत्तिरूपः अर्थो वा, **यस्य**—यादृशार्थस्य सम्भवति, **तत्**—जले अवस्थितं, जले उत्पन्नं वा अम्भोजरूपं वस्तु, **कविभिः**—क्रान्तदर्शिभिः ऋषिभिः, **कप्यासम्**—'कप्यासं पुण्डरीकमेवमक्षिणी' इति श्रुतिस्थ'कप्यास'शब्दबोध्यमिति, **उदितम्**—उक्तम्। **गभीरजलोदयात्**—अगाधे अम्भसि उत्पत्त्या स्थित्या च, **शिशिरमधुरम्**—निखिलतापनिवारणक्षमात्यन्तशीतलत्व-सकलेन्द्रियाकर्षणक्षमातिशयितरमणीयत्वाभ्यां पूर्णम्, **श्रीमत्**—अतिशयितकान्तिसम्पन्नम्, **नलिनम्**—(कोमलसुकुमारतरम्) अम्भोजम्, **दामोदराक्षिनिदर्शनं भवति**—श्रीयशोदाकृतवात्सल्यबन्धवशीकृतस्य, भगवतः पुरुषोत्तमस्य अक्ष्णोः उपमानं भवितुमर्हति। **अपिः**—'प्यास'शब्दघटकः 'अपि'इत्ययम् उपसर्गः, **लुप्ताकारस्तु**—अकाराश्रवणवानेव। **पिहितादिवत्**—यथा अपिहितादिशब्दे, 'वष्टि भागुरिरल्लोपम्' इत्यकारलोपेन पिहितादिरूपसिद्धिः; तद्वत् ॥ २२ ॥

**कप्यासं भानुबिम्बं हरिभजनपदं हृत्सरोजं च यद्वत्**
**तद्वच्चोपासकाक्षिद्वयमिति तु न सत्तत्र यत्पुण्डरीकम्।**
**गौणं तस्याऽक्षिणी इत्युभयपदनिराकाङ्क्षतानादरेणा-**
**प्यध्याहारः समानाधिकृतपदगतित्यक्तिरूर्ध्वं तदुक्तिः ॥ २३ ॥**

**कप्यासम्**—'कपि'शब्दवाच्यस्य सूर्यस्य अधिष्ठानभूतम्, **भानुबिम्बम्**—सूर्यमण्डलम्, (तथा) **हृत्सरोजं च**—देहिनः हृदयकमलमपि, **यद्वत्**—यथा, **हरिभजनपदम्**—भगवदुपासनस्थानमिति शास्त्रसिद्धम्, **तद्वत्**—तथैव, **उपासकाक्षिद्वयं च**—उपासकचेतनसम्बन्धिनेत्रद्वयमपि, **हरिभजनपदम्**—परमात्मोपासनस्थानम्, (इति 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इति श्रुत्यर्थः) **इति तु न सत्**—एवमर्थवर्णनं तु अत्यन्तमसमीचीनम्; **यत्**—यस्मात् कारणात्, **तत्र**—हृदयकोशे, **पुण्डरीकम्**—पुण्डरीकपदम्, **गौणम्**—पुण्डरीकसाम्यनिबन्धनमिति हेतोः अमुख्यम्, गुणसाम्यादागतम्, **'तस्याऽक्षिणी' इत्युभयपद(योः)**—श्रुतिस्थयोः 'तस्य' 'अक्षिणी' इत्यनयोः द्वयोः पदयोः अवयवावयविभावेन मिथोऽन्विताथकयोः विद्यमानायाः, **निराकाङ्क्षतायाः**—इतरपदनैरपेक्ष्येण अर्थबोधकतायाः, **अनादरेण**—अनादररूपदोषेण सह, (पदयोरन्यत्राऽऽकाङ्क्षाकल्पनात्) **अध्याहारोऽपि**—'उपासनस्थानम्' इत्यस्य, (तथा) 'उपासकस्य' इत्यस्य च अश्रुतस्य अध्याहरणरूपोऽपि दोषः समस्ति, (तथा) **समानाधिकृतपदगतित्यक्तिः**—विशेष्यत्वविशेषणत्वाहार्थवाचिनोः समानविभक्त्यन्तयोः 'कप्यास-पुण्डरीक'-पदयोः या गतिः—स्वारसिकी प्रवृत्तिः (भिन्नप्रवृत्तिनिमित्तकत्वैकविशेष्यान्वयित्वरूपा) तस्याः परित्यागोऽपि दोषः, (तथा) **ऊर्ध्वम्**—कप्यासवाक्यादनन्तरम्, **तदुक्तिः**—उत्तरत्र अक्षिविद्यायां सत्यामेव, ततः पूर्वमेव अन्तरादित्यविद्यायां भगवदुपासनस्थानतया उपासकस्याक्ष्णोः 'एवमक्षिणी' इत्यनेनोक्तिः दोषः; पौनरुक्त्यात् इति दोषाः ॥ २३ ॥

**कश्चिज्जल्पति मर्कटस्य जघनं कप्यासमक्ष्णोरयं**
**दृष्टान्तः कथमिष्यते भगवतः सत्येव गत्यन्तरे ।**
**सामानाधिकरण्यमत्र पदयोः प्राप्तं कुतस्त्यज्यते ?**
**पद्मं चेद्विशिनष्टि तत्सदृशि तच्छब्दस्तु गौण[1]स्तव[1] ॥ २४ ॥**

**मर्कटस्य**—वानरस्य, **जघनम्**—पृष्ठभागम्, **कप्यासम्**—श्रुतिस्थ'कप्यास'शब्दबोध्यत्वेन, **कश्चित् जल्पति**—गूढस्य शास्त्रकाव्यादिदृष्टस्य अहीनस्य औपम्यस्य अनालोचकः व्याख्याति, (यत्किञ्चिदेव वदति; न तु सर्वात्मना योग्यमेवाऽर्थम्)। **गत्यन्तरे**—प्रकारान्तरे उपायान्तरे वा, **सत्येव**—विद्यमाने एव, **भगवतः**—सर्वातिशायिश्रीपूर्णस्य नारायणस्य, **अक्ष्णोः**—नयनयोः, **अयम्**—अधस्तनप्रदेशसम्बन्धी जघनरूपोऽर्थः हेयतया प्रसिद्धः, **दृष्टान्तः**—उपमानतामापन्न इति, **कथमिष्यते?**—हीनोपमानत्वात् अभ्युपगन्तुं कथं शक्यते?

[1] सदा—ख.

**अत्र**—अस्मिन् वाक्ये, **पदयोः**—कप्यास-पुण्डरीकपदयोः, **प्राप्तम्**—समानविभक्तिकतया स्वभाव-सिद्धम् अबाधितं च, **सामानाधिकरण्यम्**—अनेकविशेषणविशिष्टैकार्थबोधकत्वम्, **कुतः त्यज्यते ?**—केन हेतुना उपेक्ष्यते ? **तच्छब्दः**—स शब्दः कप्यासशब्दः, **पद्मम्**—पुण्डरीक-रूपमर्थम्, **विशिनष्टि चेत्**—कपिपृष्ठनिरूपितसादृश्यविशिष्टतया बोधयति चेत्! तदा, **तव**—तव पक्षे, **तत्सदृशि**—तदौपम्यवत्यर्थे, **तच्छब्दः**—तद्वाचकः कप्यासशब्दः, **गौणः**—अमुख्यवृत्त एव प्रसज्यते ॥ २४ ॥

**दरविकसितं कश्चित् कप्यासमाह गतिस्त्वियं**
**भवतु भगवच्चक्षुर्दृष्टान्तपङ्कजसङ्गता ।**
**तदपि च न सत्तस्मिन्नर्थे यतो न तु कुत्रचित्**
**तदवयवशः संहत्या वा पदं [1]व्युदपद्यत[1] ॥ २५ ॥**

**कश्चित्**—अन्यः कश्चन कप्यासश्रुत्यर्थवर्णनप्रवृत्तः. **दरविकसितम्**—ईषद्विकासं सम्पन्नम्, **कप्यासमाह**—'कप्यास'शब्दार्थ इति वर्णयति, **इयं तु गतिः**—पूर्वापेक्षया विलक्षणा इयमर्थवर्णनरीतिः परम्, **भगवच्चक्षुर्दृष्टान्तपङ्कजसङ्गता भवतु**—यद्यपि भगवन्नयनोपमान(त्वेन परिगृहीते)भूते पद्मे अन्वययोग्यतैवाऽस्ति, (पद्मस्य ईषद्विकासित्वात्) **तदपि**—तथाऽपि, **तच्च**—तथा अर्थवर्णनमपि, **न सत्**—नैव समीचीनं भवति, **यतः**—यस्मात् कारणात्, **तत् पदम्**—कप्यासपदम्, **कुत्रचित्**—लौकिक-वैदिकादिनिघण्टुषु पद-तदर्थव्युत्पादनपरतया शिष्टपरि-गृहीतेषु, **तस्मिन् अर्थे**—ईषद्विकसितरूपे अर्थे, **अवयवशो वा**—यौगिकव्युत्पत्त्या वा, **संहत्या वा**—समुदायव्युत्पत्त्या वा, (रूढ्या वा) **न तु व्युदपद्यत**—नैव व्युत्पत्तिमलभत ॥ २५ ॥

**षट्स्वर्थेषु समीरितेषु चतुराः कप्यासवाचस्त्रयः**
**गम्भीराम्भ इति प्रकृत्य भगवद्रामानुजाङ्गीकृताः ।**
**तत्स्वीकारबहिष्कृतास्तदितरे हेयास्त्रयस्तद्विदा**
**श्लोकैः षड्भिरमीभिरित्थमुदितः सोऽयं विभागो मया ॥ २६ ॥**

**समीरितेषु**—स्पष्टमुक्तेषु, **षट्सु कप्यासवाचः अर्थेषु**—षट्प्रकारेषु कप्यासशब्दार्थेषु मध्ये, **त्रयः**—'कपिस्त्वादित्यः' 'नालं कपिः' 'कमुदकम्' इति श्लोकत्रयोक्ताः त्रिप्रकाराः अर्थाः, **'गम्भीराम्भ' इति प्रकृत्य**—(श्रीमति वेदार्थसङ्ग्रहे) 'गम्भीराम्भस्समुद्भूते'त्यादिना प्रक्रम्य, **भगवद्रामानुजाङ्गीकृताः**—श्रीमद्भिः रामानुजार्यैः अभ्युपगताः सन्तः, **चतुराः**—अभिहितस्यौपम्यस्य योग्याः पुष्टिदाः सन्ति । **तदितरे**—उक्तातिरिक्ताः 'कप्यासं भानु' 'कश्चिज्जल्पति' 'दरविकसितम्' इति श्लोकत्रयप्रतिपादिताः, **त्रयः**—त्रिप्रकाराः अर्थाः,

---

[1] व्युदपाद्यत—क.

**तत्स्वीकारबहिष्कृताः**—भाष्यकाराणाम् अभ्युपगमात् दूरीकृताः, 'तैः अस्वीकृताः'। **हेयाः**—(अत एव) वर्ज्याः, **तद्विदा मया**—भगवद्रामानुजाभिप्रायवेदिना (वात्स्यवरदार्येण) मया, **अयं सः विभागः**—तत्स्वीकृतास्वीकृतार्थानां विविच्य कृतोऽयं प्रदर्शनव्यापारः, **अमीभिः षड्भिः श्लोकैः**—पूर्वोक्तैः षट्संख्याकैः श्लोकैः, **इत्थमुदितः**—अनेन प्रकारेण प्रकटितः ॥ २६ ॥

३) **अधिकरणसारावलिः** (श्लो. ६२–६५)

**भूयिष्ठानन्तपुण्योपचयबलसमुद्बुद्धपूर्वोक्तभूम्नां**
**शक्रादिन्यायतः स्यात् त्रिगुणतनुभृतामीश्वराणां प्रवाहः ।**
**तन्नाऽकर्मोत्थदिव्याकृतिजनिमहिमा शासिता सर्वपुंसां**
**नित्यश्रीर्ब्रध्नबिम्बे श्रुत इति स य इत्युक्त एवैष एकः ॥ ६२ ॥**

**भूयिष्ठानाम्**—अत्यन्तमतिशयितानाम्, **अनन्तानाम्**—गणयितुमशक्यानाम्, **पुण्यानाम्**—सुकृतविशेषाणाम्, **उपचयबलेन**—आधिक्यगतेन शक्तिविशेषेण, **समुद्बुद्धपूर्वोक्तभूम्नाम्**—फलजननयोग्यस्रष्टृत्वादिमाहात्म्यवताम्, **त्रिगुणतनुभृताम्**—सत्त्वरजस्तमोमयविशिष्टदेहधारिणाम्, **ईश्वराणाम्**—निखिलजगदीशितृत्वयोग्यानां पुरुषविशेषाणामेव, **प्रवाहः**—निरन्तरानुवर्तमानैकजातीयपरम्परा, **शक्रादिन्यायतः**—प्रतिमन्वन्तरं समानैश्वर्यवत्पुरुषविशेषस्य भिन्नभिन्नस्याऽपि त्रिलोकाधिपतित्वेन अनुवृत्तिरूपः पुराणादिसिद्धो यो न्यायः तदनुसारेण, **स्यात्**—सिद्ध्येदेव ; (सार्वकालिकः एक एवेश्वरो भवेदिति तु न निर्बन्धः ;)

**तत् न**—उक्तमाशङ्कनं न युक्तिमत्, **अकर्मोत्थदिव्याकृतिजनिमहिमा**—कर्मानधीनाप्राकृततेजोमयमङ्गलविग्रहाविर्भावैश्वर्यविशेषवान्, **सर्वपुंसां शासिता**—निखिलानां चेतनानां स्वाभाविकनियन्तृत्ववान्, **नित्यश्रीः**—त्रिकालानपायिलक्ष्म्याश्रयः, (परमः पुरुषः) **ब्रध्नबिम्बे**—आदित्यमण्डले विद्यमानतया, **श्रुत इति**—'य एषोऽन्तरादित्ये' इति श्रुत्या अधिगत इति हेतोः, **स य इत्युक्तः**—तैत्तिरीयेऽपि 'स य एषोऽन्तरादित्ये' इति प्रतिपादितः। (अतः) **एषः**—एषोऽन्तरिति श्रुतः निखिलनियन्ता परमपुरुषः, **एक एव**—सर्वदेशसर्वकालसर्वावस्थासु अभिन्न एव ; (न तु ईश्वरपरम्परा इति) ॥६२॥

**सर्वेभ्यः कल्मषेभ्यो ह्युदित इति वदत्यन्तरादित्यविद्या**
**तस्माच्छेषाभ्यनुज्ञानयत इह [1]विभोः[1] पुण्ययोगोऽ[2]स्तु[2], मैवम् ।**
**आम्नातोऽनन्यशास्यः स्ववशपरफलः साधुना नैष भूयान्**
**स्यात् पुण्ये लक्ष्मयोगादपि न सुकृतमित्यादिना पाप्मशब्दः ॥६३॥**

[1] विभौ—अ, आ. [2] ऽस्ति—अ, आ.

**अन्तरादित्यविद्या**—'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इति श्रुत्यादिरूपा उपनिषत्, **सर्वेभ्यः कल्मषेभ्यो ह्युदित इति**—(परमात्मानम्) अस्पृष्टसमस्तपापः इति खलु, **वदति**—'स एष सर्वेभ्यः पाप्मभ्य उदितः' इति वाक्येन प्रतिपादयति। **तस्मात्**—केवलं पापसम्बन्धस्यैव निषिद्धत्वात्, **शेषाभ्यनुज्ञानयतः**—'विशेषनिषेधे शेषाभ्यनुज्ञानम्' इति तान्त्रिकाभ्युपगतात् न्यायात्, **इह**—अस्यां विद्यायाम्, **विभोः**—परमात्मनः, **पुण्ययोगः**—पुण्यसम्बन्धः, **अस्तु**—अभ्युपगतः स्यान्नाम, (ततश्च पुण्यसम्बन्धवान् जीव एव अन्तरादित्यविद्याप्रतिपाद्यः इति)। **मैवम्**—अयं पक्षः नोचितः, (यतः) **अनन्यशास्यः**—(अयं सर्वेश्वरः) अन्यदीयशासनाविषयः, **स्ववशपरफलः**—स्वाधीनान्यदीयेष्टानिष्टफलश्च इति, **आम्नातः**—श्रुतिस्मृत्यादिषु प्रतिपादितः। (तथा) **साधुना**—पुण्येन कर्मणा, **एषः**—परमात्मा, **न भूयान् स्यात्**—वृद्धिं न प्राप्नुयात् इति च, **आम्नातः**—'न कर्मणा वर्धते' इत्यादिश्रुत्युक्तश्च, **पुण्येऽपि**—सुकृतशब्दाभिधेये कर्मण्यपि, **लक्ष्मयोगात्**—अनिष्टफलकत्वरूपस्य पापलक्षणस्य सङ्गमात्, **पाप्मशब्दः**—पापबोधकः शब्दः, **पुण्येऽपि**—पुण्यात्मकेऽप्यर्थे बोधकतया वर्तत एव। (अयं चार्थः) **न सुकृतमित्यादिना**—'न सुकृतं, न दुष्कृतम्, सर्वे पाप्मानोऽतो निवर्तन्ते' इति सुकृत-दुष्कृते उभे अप्युद्दिश्य 'पाप्म'शब्दम् प्रयोगवता श्रुतिवाक्येन सिध्यति ॥६३॥

**प्रख्यातं शुद्धसत्त्वं किमपि तदनघं द्रव्यमव्यक्ततोऽन्यत्**
**तद्रूपं रूपमैशं दिवि कनति तथा शेष-शेषाश[1]नादेः[1]।**
**नित्यं तत् सूरिसेव्यं परतरमजहत्स्वस्वभावः स देवः**
**पुंसां संसारशान्त्यै विपरिणमयति व्यूहपूर्वैर्विभागैः ॥६४॥**

**प्रख्यातम्**—श्रुतिस्मृतीतिहासपुराणादिसिद्धम्, **शुद्धसत्त्वम्**—रजस्तमोऽसम्पृक्तकेवलसत्त्ववत्, **अनघम्**—संसरणनिदानत्वात्मकपापासंस्पृष्टम्, **अव्यक्ततोऽन्यत्**—मूलप्रकृतेर्भिन्नम्, **किमपि**—अनिर्वचनीयस्वरूपम्, **तत् द्रव्यम्**—भगवल्लोक-भगवद्विग्रहाद्युपयोगि द्रव्यं वर्तते। **तद्रूपम्**—तादृशशुद्धसत्त्वद्रव्यात्मकम्, **ऐशं रूपम्**—भगवत्सम्बन्धिविग्रहात्मकं रूपम्, **दिवि**—द्युपदवाच्ये शुद्धसत्त्वद्रव्यात्मके परमपदे, **कनति**—निरन्तरं प्रकाशते। **तथा**—भगवत इवैव, **शेषशेषाशनादेः**—भगवच्छय्याभूतस्य अनन्तस्य, भगवत्सेनान्यः विष्वक्सेनस्य, तथा गरुडादेरपि, **रूपं**—विग्रहादि, **तद्रूपम्**—शुद्धसत्त्वद्रव्यकृतरूपवत्, **कनति**—दीप्यमानमस्ति। **स देवः**—परमव्योमनिलयः भगवान् नारायणः, **अजहत्स्वस्वभावः**—ज्ञानशक्त्यादि स्वकीयं

---

[1] नाद्यैः—क्ष.

स्वभावमजहदेव सन्, **सूरिसेव्यम्**—नित्यसूरिभिर्निरन्तरानुभाव्यम्, **परतरम्**—सर्वस्मात् परस्मात् परम्, **नित्यम्**—सनातनं सदातनं च, **तत्**—स्वकीयं शुद्धसत्त्वमयं रूपम्, **पुंसाम्**—अनादितः संसरतां चेतनानाम्, **संसारशान्त्यै**—संसारविमोचनाय, **व्यूहपूर्वैः विभागैः**—व्यूह-विभव-अर्चा-हार्दात्मकैः, स्वकीयस्थितिविशेषैः, **विपरिणमयति**—वैविध्येन परिणतं करोति॥६४॥

**देहत्वात् सप्तधातु त्रिमलमघभवं दुःखकृन्नाशयुक्तं**
**सांशत्वा[1]देश्च[1] हेतोरिति यदि, तदसद्धर्मि[2]मानेन बाधात्[2]।**
**बाधः शास्त्रैकवेद्ये क्वचिदपि न भवेदन्यथाऽतिप्रसङ्गात्**
**यत्तु स्वेच्छावतारेष्वभिनयति तदप्यासुरोपप्लवार्थम् ॥६५॥**

(भगवतो दिव्यं रूपम्) **सप्तधातु**—'रक्तासृङ्मांसमेदोऽस्थिमज्जाशुक्लानि धातवः' इत्युक्तधातुसप्तकपरिणतम्, **त्रिमलम्**—त्रिविधमलसम्बद्धम्, **अघभवम्**—पुण्यपापात्मककर्मायत्त-स्वरूपसिद्धिमत्। **दुःखकृत्**—(देहिनां) दुःखजनकम्, **देहत्वात् हेतोः**—एतादृशसाध्याविना-भूतात् देहत्वात् ज्ञापकधर्मात्, (तथा) **नाशयुक्तं च**—ध्वंसान्वयि च, **सांशत्वादेः हेतोः**—सावयवत्व-दृश्यत्वादिरूपात् नाशाविनाभाविनो धर्माज्ज्ञापकात्, **इति यदि**—एवमुच्यते चेत्, **तदसत्**—देहत्व सांशत्वादिना सप्तधातुपरिणतत्व-विनाशित्वादेः साधनमित्येतत् हेत्वाभासदूषितम्। **धर्मिमानेन**—भगवद्विग्रहसाधकेन आगमेतिहासादिना प्रमाणेन, **बाधात्**—विरोधात्, साध्यत्वाभिमतधर्माभाववत्तायाः पक्षे निश्चयात् इति वा। **शास्त्रैकवेद्ये**—शास्त्रमात्रेण निर्णेये, **क्वचिदपि**—कस्मिन्नप्यर्थे, **बाधः**—शास्त्रेतरेण प्रमाणाभासेन अभावप्रमा, **न भवेत्**—नैव सिद्धा भवति। **अन्यथा**—प्रमाणाभासेनाऽपि प्रमाणमूर्धन्यशास्त्र-सिद्धार्थबाधाभ्युपगमे, **अतिप्रसङ्गात्**—वेदप्रतिपाद्यात्मास्तित्वादेरपि प्रत्यक्षादिना बाधापत्तेः। **स्वेच्छावतारेषु**—स्वसङ्कल्पमात्राधीनेषु विभवावतारेषु रामादिरूपेषु, **यत्तु**—प्रियजनवियोगादि-जनितं दुःखादिकं तु, **अभिनयति**—स्वकीयक्रियासु, स्ववाक्यादिषु वा लोकाय प्रदर्शयति. **तदपि**—तादृशं प्रदर्शनमपि, **आसुरोपप्लवार्थम्**—असुरप्रकृतिमतां कंसादीनां विनाशनार्थम्। (ते हि! भगवद्रूपेषु मानुषबुद्ध्या प्रवृत्ताश्चेत् तन्नाशनं सुलभमिति ॥६५॥

### ४) अधिकरणार्थसङ्ग्रहः

**अन्तरधिकरणे**—यद्यपि शरीरमात्रेण सम्बन्धमात्रं परमात्मनि सम्भवति; तथापि, करणादियुक्तशरीरविशेषेण उपकरणोपकरणिभावलक्षणसम्बन्धस्य जीवासाधारणत्वात्, अन्त-रादित्यविद्यायां 'हिरण्यश्मश्रुः' (छां उ. 1-6-6) इत्यादिना शरीरविशेषसम्बन्धश्रवणाच्च, आदित्यमण्डलान्तर्वर्तिनः जीवत्वावगमात्, 'स यश्चायं पुरुषे। यश्चासावादित्ये

[1] देव—आ. [2] मानोपरोधात्—अ, आ.

स एकः' (तै.उ.आन. 8–5) इति आनन्दमयस्य आदित्यमण्डलान्तर्वर्तिनश्च एकत्वावगमात्, आनन्दमयः जीव एव—इत्याशङ्क्य,

अन्तरादित्यविद्यायामेव, अपहतपाप्मत्वादीनां जीवेष्वसम्भावितधर्माणां श्रवणात्, परमात्मनोऽपि करचरणादियुक्ताप्राकृतनित्यविग्रहसद्भावाच्च, आदित्यमण्डलान्तर्वर्ती परमात्मेति, आनन्दमयोऽपि तदभिन्नः परमात्मा—इति सिद्धान्तितम् ॥

५) नयसङ्गतिमालिका

**स यश्चायमिति श्रुत्या पूर्वाधिकृतिशेषतः ।**
**अन्तर्णये पुण्यजीवकारणत्वमपोद्यते ॥३४॥**

॥ इति अन्तरधिकरणम् ॥७॥

आकाशाधिकरणम् ॥ १-१-८ ॥

प्राणाधिकरणं (च) (९)

१) शारीरकन्यायकलापसङ्ग्रहः

**आकाश इत्येव विशेषनाम्ना स एव तु स्याज्जगतां निदानम् ।**
**प्राणोऽथवेत्येतदपाचकार भूताभिसंवेशमुखैश्च लिङ्गैः ॥१५॥**

**आकाश इति**—'सर्वाणि ह वा....आकाशादेव' इति श्रुतिगतेन, **विशेषनाम्ना**—आकाशत्वरूपासाधारणधर्मप्रवृत्तिनिमित्तकेन शब्दविशेषेण ज्ञापकीभूतेन, **जगतां निदानम्**—सकलजगदादिकारणं वस्तु, **स एव तु स्यात्**—असन्देहेन आकाश एव भवितुमर्हति; नान्यत्, **अथवा**—यद्वा, **प्राणः**—'प्राणमेवाऽभिसंविशन्ति' इति श्रुत्युक्तः प्राण एव वा, **जगतां निदानम्**—सकलजगत्कारणं स्यात्, **इत्येतत्**—एवंरूपमाशङ्कनम्, **भूताभिसंवेशमुखैश्च**—'अभिसंविशन्ति' इति तत्रैवोक्तैः सर्वभूतलयाधारतादिभिः, **लिङ्गैः**—ज्ञापकीभूतैः अर्थैः **अपाचकार**—सूत्रकारो बादरायणः दूरीकृतवान् ॥१५॥

२) अधिकरणसारावलिः (श्लो. ६६-६९)

**इत्थं विद्यात्रयेण स्थिरचरचिदचिद्देहिनः सर्वहेतोः**
**अव्यक्ताज्जीववर्गादपि समधिकता यद्यपि स्यात् तथापि ।**
**उत्थानद्वारभेदात् क्रमत इह मृदूप[1]क्रम क्रूरनिष्ठान्**
**अध्यायेऽस्मिन्निरुन्धन्नधिकरणगणैस्तद्गुणानुद्गृणाति ॥६६॥**

---

[1] क्रमान्—आ.

**इत्थम्**—उक्तप्रकारेण, **विद्यात्रयेण**—सद्विद्या-आनन्दमयविद्या-अन्तरादित्यविद्यारूप-विद्यात्रितयेन त्रिभिरधिकरणैर्विचारितेन, **स्थिरचरचिदचिद्देहिनः**—स्थावरजङ्गमात्मकतचेनाचेतनवर्गशरीरकस्य, **सर्वहेतोः**—सर्वं प्रति निमित्तोपादानत्वात्मकसर्वविधकारणत्ववतः भगवतः परस्य ब्रह्मणः, **अव्यक्तात्**—अव्यक्तशब्दवाच्यप्रधानापेक्षया, **जीववर्गादपि**—बद्धमुक्तनित्यात्मकत्रिविधचेतनवर्गापेक्षया च, **समधिकता**—औन्नत्यरूपं वैलक्षण्यम्, **यद्यपि स्यात्**—वस्तुतः सिद्ध्यत्येव । **तथापि**—तल्लाभसत्त्वेऽपि, **इह**—शारीरकशास्त्रे, एवंसिद्धे ब्रह्मणि वा, **उत्थानद्वारभेदात्**—पूर्वपक्षिणां प्रत्यवस्थान(शङ्का)निदानभूतस्यार्थस्य वैलक्षण्यात्, **क्रमतः**—अस्पष्टस्पष्ट-छायानुसार्यादिश्रुतिवाक्यचिन्तनक्रमेण प्रत्यवस्थितान्, **मृदूपक्रमक्रूरनिष्ठान्**—वादार्हत्वद्योतनाय आदौ प्रमाण-प्रमेयव्यवस्थाभ्युपगन्तार इव मार्दवेन उपक्रम्य, अन्ते तत्त्वापलापरूपे क्रौर्ये पर्यवसानकारिणः प्रतिवादिनः, **अस्मिन् अध्याये**—अवशिष्टे प्रथमेऽध्याये, **निरुन्धन्**—निवारयितुकामः, **अधिकरणगणैः**—शिष्टैः समुदितैरधिकरणैः, **तद्गुणान्**—परमात्मसम्बन्धिनो गुणान्, **उद्गृणाति**—विशेषतः स्पष्टीकरोति भगवान् बादरायणः ॥ ६६ ॥

**शब्दैः सद्ब्रह्ममुख्यैः श्रुतिशिरसि मितं कारणं किञ्चिदेकं**
**सङ्कल्पा[1]भ्यास[1]रूपैरतदननुगुणैश्चिन्तित[2]स्तद्विशेषः[2] ।**
**भूताकाशादिशङ्काजननसमुचितैर्नामभिः कारणस्थैः**
**क्षिप्त्वा तत्पादशेषे श्रुतिसमुदयनासम्भवोक्त्या भुनक्ति ॥६७॥**

**सद्ब्रह्ममुख्यैः शब्दैः**—'सत्-ब्रह्म' प्रभृतिभिः जगत्कारणवाचिभिः शब्दैः, **श्रुतिशिरसि**—'सदेव सोम्येदमग्र आसीत्' 'ब्रह्म वा इदमेकमेवाग्र आसीत्' इत्याद्युपनिषदि, **किञ्चित्**—विशेषरूपेणानिर्धारितम्, **एकम्**—एकमेव, **कारणम्**—निखिलजगन्निमित्तोपादानभूतं वस्तु, **मितम्**—प्रमितिगोचरतामापादितम् ; **अतदननुगुणैः**—परमात्मेतरचेतनाचेतनव्यावृत्तैः, **सङ्कल्पाभ्यासरूपैः**—जगन्निर्माणसङ्कल्पनिरतिशयदशाशिरस्कतयाऽभ्यस्यमानानन्दाप्राकृतदिव्यमङ्गलविग्रहविशेषैः, **तद्विशेषः**—प्रधान-जीवसामान्य विशिष्टपुण्यवज्जीवविलक्षणः परमात्माख्यः चेतनविशेषः, **चिन्तितः**—पूर्वतनेष्वधिकरणेषु विचार्य निर्णीतः । **पादशेषे**—आकाशाधिकरणमारभ्य अवशिष्टे पादे, **भूताकाशादिशङ्काजननसमुचितैः**—भौतिकप्रसिद्धाकाशत्वभौतिकप्राणवायुत्व-आदित्यादिज्योतिष्ट्व-त्रिलोकाधिपेन्द्रत्वप्रकारकसंशयोत्पादनार्हैः, **कारणस्थैः**—जगत्कारणप्रतिपादकवाक्ये श्रूयमाणैः, **नामभिः**—आकाश-प्राण-ज्योतिरिन्द्रादिभिः रूढनामधेयैः, **तत्**—पूर्वाधिकरणत्रयचिन्तितं परमात्मासाधारणं लिङ्गम्, **क्षिप्त्वा**—पूर्वपक्षतो निरस्य,

---

[1] भ्यानन्द—आ.    [2] श्चिद्विशेषः—आ.

**तत्**—परमात्मासाधारणं लिङ्गमेव, **श्रुतिसमुदयनासम्भवोक्त्या**—योगासहकृतकेवलरूढ्यात्मक-श्रुतेः कार्यकरत्वासम्भवप्रतिपादनेन, **भुनक्ति**—परिरक्षति ॥६७॥

**आकाश-प्राणशब्दावनितरगतिकौ रूढिभङ्गेन नेयौ**
**ज्योतिश्शब्द'स्तु[1] रूढ्या प्रथयति पुरुषं दिव्यतेजोविशिष्टम् ।**
**प्रख्यातेन्द्रादिशब्दस्तदनु नियमितस्तद्विशिष्टप्रवृत्त्ये-**
**त्येवं स्यात् पेटिकैषा द्विकयुगलवती शब्दवृत्तिक्रमेण ॥६८॥**

**अनितरगतिकौ**—परिपठितपरमात्मासाधारणलिङ्गकवाक्यस्थतया गत्यन्तररहितौ, **आकाश-प्राणशब्दौ**—'आकाशादेव समुत्पद्यन्ते' 'प्राणमेवाभिसंविशन्ति' इति वाक्ये श्रुतौ 'आकाश-प्राण'शब्दौ, **रूढिभङ्गेन**—लोकसिद्धसमुदायशक्तिपरित्यागेन ('आ—समन्तात् काशते' इत्यवयव-शक्तिमात्रतः) **नेयौ**—परमात्मवाचकतया चिन्तनीयौ । **ज्योतिःशब्दस्तु**—'अथ यदतः परो दिवो ज्योतिः' इति वाक्यस्थः 'ज्योतिः'शब्दः परम्, **दिव्यतेजोविशिष्टम्** अप्राकृततेजो-मयविग्रहविशिष्टम्, **पुरुषम्**—परमपुरुषम्, **रूढ्या**—समुदायशक्त्यैव, **प्रथयति**—स्फुटं प्रति-पादयति । **तदनु**—तदनन्तराधिकरणीयविषयवाक्यगतः, **प्रख्यातेन्द्रादिशब्दः**—प्रसिद्धेन्द्रादि-बोधनयोग्यतावान् शब्दः, **तद्विशिष्टप्रवृत्त्या**—इन्द्रादिरूपजीवविशेषप्रकारिभूते एव परमात्मनि बोधकत्वेन प्रवृत्त्या, **नियमितः**—प्राप्तनियमः, **इति**—उक्तया रीत्या, **शब्दवृत्तिक्रमेण**—शब्दगतां, केवलयौगिकीं (तथा) केवलविशेषणाविश्रान्तरूढ्यात्मिकां च अर्थबोधनप्रवृत्तिमनुरुध्य, **इयं पेटिका**—आकाशाधिकरणाद्यधिकरणचतुष्टयात्मिका इयं पेटिका, **द्विकयुगलवती**—आकाश-प्राणाधिकरणे एवं ज्योतिरिन्द्रप्राणाधिकरणे इति अधिकरणद्विकात्मकावान्तरपेटिकाद्वयवती, **स्यात्**—भवेत् ॥ ६८ ॥

**अत्राकाशस्त्वशेष[2]प्रभव[2]-विलयभूः साम्नि दृष्टः स्वनाम्ना**
**निर्दिष्टस्तैत्तिरीयेऽप्यनितरजनितः स्वात्मनः सम्भवोक्त्या ।**
**मैवं, सिद्धानुवादो ह्ययमथ च परप्राप्यतादिर्न तस्मिन्**
**तत्कर्तात्मा विपश्चिच्छ्रुत [3]इति[3] विहता स्वात्मनस्तत्प्रसूतिः ॥ ६९ ॥**

**अत्र**—छान्दोग्ये आद्ये प्रपाठके, **साम्नि**—सामप्रस्तावे, **आकाशस्तु**—आकाश एव, **स्वनाम्ना**—रूढ्या स्वबोधकेन 'आकाशः' इत्येवंरूपेण शब्देन, **निर्दिष्टः**—श्रुतौ परिपठितः सन्, **अशेषप्रभवविलयभूः**—समस्तभूतजातस्य सृष्टिसंहारयोः आधारस्थानतया, **दृष्टः**—'सर्वाणि....समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति' इत्येवमानुपूर्व्या ज्ञातः, **तैत्तिरीयेऽपि**—

[1] श्च—अा. [2] प्रसव—अ, आ. [3] इह—आ.

तैत्तिरीयोपनिषद्गते वाक्येऽपि, **आकाशः**—उक्तः आकाशरूपोऽर्थः, **स्वात्मनः सम्भवोक्त्या**—स्वस्वरूपादेव स्वस्य आविर्भावस्य 'आत्मन आकाशः सम्भूतः' इति श्रुतिरूपया वाचा उक्तत्वेन, **अनितरजनितः**—अनन्योत्पाद्यत्वेन. **निर्दिष्टः**—श्रुतिपाठप्रतिपन्नः, इति (लौकिकाकाश एव जगतः उत्पत्तिप्रलयकारणम् इति प्राप्ते) **मैवम्**—एवमाशङ्कनं नैव युक्तं भवति, **हि**—यतः, **अयम्**—छान्दोग्यगतः 'सर्वाणि ह वा' इति श्रुतिपाठः, **सिद्धानुवादः**—पूर्वं प्रमितस्यैव अर्थस्य पुनर्वचनात्मकः, (कारणतया पूर्वं प्रमितश्च 'सदेव सोम्येदमग्रे' इत्यादिवाक्यगम्यः सच्छब्दार्थ एव ; तस्मिंश्च 'आकाश'शब्दस्य केवला रूढिर्नास्ति इति) **अथ च**—प्रत्युत, अनन्तरोक्तः इति वा । **परप्राप्यतादिः**—परायणत्व-सर्वेभ्यो ज्यायस्त्वादिको धर्मः, **तस्मिन्**—केवलया रूढ्या प्रतिपाद्ये लौकिकाकाशे, **न**—नैव सम्भवी, (किं च) **आत्मा**—आत्मरूपोऽर्थः, **विपश्चित्**—विविधं पश्यच्चेतनत्ववानेव, **तत्कर्ता**—आकाशस्याऽपि स्रष्टृतया, **श्रुत इति**—'आत्मन आकाशः सम्भूतः' इति श्रुत्या प्रतिपन्न इति हेतोः, **स्वात्मनः**—स्वस्वरूपादेव, **तत्प्रसूतिः**—आकाशोत्पत्तिः, **विहता**—बाधिता, असम्भाविता ॥ ६९ ॥

### ३) अधिकरणार्थसङ्ग्रहः

**आकाशाधिकरणे**—'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' (छां.उ. 1–9–1) इति 'आकाश'शब्देनाभिधानात्, आकाश एव कारणम्—इत्याशङ्क्य,

'सर्वाणि भूतानि' इति सर्वशब्दवाच्य चेतनाचेतनात्मकप्रपञ्चं प्रति आकाशस्य कारणत्वासम्भवात्, 'आ-समन्तात्, काशते' इति व्युत्पत्त्या, 'आकाश'शब्दस्य परमात्मपरत्वोपपत्तेः 'आकाश'शब्दवाच्यः परमात्मा—इति सिद्धान्तितम् ॥

### ४) नयसङ्गतिमालिका

**विशेषलिङ्गं प्रबलं सामान्यश्रुतितो मतम् ।**
**विपरीतमिहाकाशनयेऽतः प्रत्युदाहृतिः ॥३५॥**

॥ इति आकाशाधिकरणम् ॥ ८ ॥

प्राणाधिकरणम् ॥ १-१-९ ॥

### १) अधिकरणसारावलिः

**प्राणायत्तं हि देहादिकमिह विदितं तेन तत्कारणत्वं**
**श्रुत्युक्तं रूढिशक्त्या सुदृढमिति न तद्व्योमवद्बाधनीयम् ।**
**तन्न प्राणस्य काष्ठादिषु महिमहतेः पूर्ववच्चानुवादात्**
**आकाशोक्ते रिवोक्तेर्भगवति[1] निखिलप्राणनस्याऽपि दृष्टेः ॥७०॥**

---

[1] रिवोक्ते भगवति—आ.

**हि**—यतः, इह **देहादिकम्**—अस्मिँल्लोके परिदृश्यमानं देहेन्द्रियादिकम्, **प्राणायत्तम्**—प्राणाधीनप्रवृत्तिमदिति, **विदितम्**—सर्वजनप्रसिद्धम्, **तेन**—उक्तेन हेतुना, **श्रुत्युक्तम्**—'सर्वाणि ह वा इमानि भूतानि प्राणमेवाऽभिसंविशन्ति प्राणमभ्युज्जिहते' इति छान्दोग्यश्रुतिप्रतिपादितम्, **तत्कारणत्वम्**—प्राणस्यैव सर्वजगदुदयादिहेतुत्वम्, **रूढिशक्त्या**—'प्राण'-शब्दगतया मुख्यप्राणबोधानुकूलया समुदायशक्त्या, **सुदृढमिति**—असन्दिग्धतया निश्चयमिति हेतोः **व्योमवत्**—आकाशे इव, **तत्**—सर्वकारणत्वम्, **बाधनीयं न**—निरसनीयं न भवतीति (पूर्वपक्षे), **तत्**—पूर्वोक्तमाशङ्कनम्, **न**—न योग्यं भवति। **काष्ठादिषु**—काष्ठादिषु जगदन्तर्गतेषु जायमानेषु वस्तुषु, **प्राणस्य महिमहतेः**—मुख्यप्राणसम्बन्धिनो महिम्नः स्वायत्तप्रवृत्तिकत्वरूपस्य भग्नत्वात्, **पूर्ववच्च**—पूर्वप्रसक्ताकाशवदेव च, **अनुवादात्**—'ह वा' इत्येतद्दर्शनेन अनुवादतासिद्धेः, **भगवति आकाशोक्तेरिव**—'यदेष आकाशः' इति भगवति आकाशशब्दप्रयोगस्येव, **भगवति प्राणस्य उक्तेः**—'प्राण'शब्दस्याऽपि भगवति 'प्राणस्य प्राणः' इत्यादिषु प्रयोगात्, **निखिलप्राणनस्याऽपि**—समस्तप्राणिप्राणयितृत्वरूपस्य 'प्राण'शब्दप्रवृत्तिनिमित्तस्याऽपि **दृष्टेरपि**—'को ह्येवान्यात् कः प्राण्यात्' इत्यादिना भगवति विद्यमानतादर्शनाच्च, 'प्राण'शब्दार्थः भगवानेव छान्दोग्यश्रुत्युक्तः; न प्रसिद्धो मुख्यः प्राणः ॥७०॥

## २) अधिकरणार्थसङ्ग्रहः

**प्राणाधिकरणे**—कृत्स्नस्य भूतजातस्य प्राणायत्तस्थितिकत्वेन, प्रसिद्धः प्राणः जगत्कारणम्—इत्याशङ्क्य,

शिलाकाष्ठादिषु चेतनस्वरूपे च तदसम्भवात्, 'प्राणयति' इति व्युत्पत्त्या, ब्रह्मणः प्राणं प्रत्यपि प्राणत्वेन, तदसाधारणनिखिलजगत्प्रवेश-निष्क्रमणलिङ्गाच्च 'प्राणशब्दवाच्यः, परमात्मा—इति सिद्धान्तितम्।

## ३) नयसङ्गतिमालिका

अत्र कृत्वाऽधिकाशङ्कां पूर्वन्यायातिदेशतः।
अपाकरोत् प्राणनये सङ्गतिस्त्वातिदेशिकी ॥३६॥

॥ इति प्राणाधिकरणम् ॥९॥

ज्योतिरधिकरणम् ॥ १-१-१० ॥

## १) शारीरकन्यायकलापसङ्ग्रहः

न हि स्ववाक्ये परलिङ्ग[1]धर्माः[1] ज्योतिस्तु तद् भूततृतीयमेव।
एतन्न [2]शङ्क्यं[2] न हि तस्य पादो भूतानि किन्त्वस्य परस्य पुंसः ॥१६॥

---

[1] धर्मः—ख. [2] शक्यं—ख.

**हि**—यतः, **स्ववाक्ये**—'इदं वाव तत् यदिदमस्मिन् अन्तःपुरुषे ज्योतिः' इति ज्योतिःप्रतिपादके वाक्ये, **परलिङ्गधर्माः**—असाधारण्येन परमात्मत्वज्ञापकाः धर्माः, **न**—नैव श्रुताः, इति हेतोः, **ज्योतिस्तु**—वाक्यप्रतिपन्नं ज्योतिस्तु, **तत्**—लोकप्रसिद्धम्, **भूततृतीय-मेव**—'पृथिव्यप्तेजः' इति पठितेषु भूतेषु तृतीयं भौतिकं तेज एव (इति पूर्वपक्षे प्राप्ते) ; **एतत्**—वाक्यप्रतिपन्ने ज्योतिषि भूततृतीयत्वम , **न शङ्क्यम्**—शङ्कार्हं न भवितुमर्हति, **हि**—यस्माद्धेतोः, **भूतानि**—सर्वाणि भूतानि चेतनवर्गात्मकानि, **तस्य**—लोकप्रसिद्धाग्नेः, **न पादः**—न पादतां प्रतिपत्तुमर्हन्ति, **किन्तु**—प्रत्युत, **परस्य पुंसः**—परमपुरुषस्यैव, **पादः**—पादो भवितुमर्हन्ति, इति सिद्धान्तः ॥१६॥

## २) तत्त्वसारः

**गायत्रीनाम सामश्रुतिशिरसि परंज्योतिरध्यायि सिध्य-**
**च्चातुष्पद्यं तु भूत-क्षिति-तनु-हृदयैः षड्विधं तद्विधाभिः ।**
**गान-त्राणादिकाभिः श्रुतिगतवचनव्यक्तिभेदात्त सिद्धा**
**वाक्प्राणोक्तिः परार्था ; स्वरसनिगमनश्रुत्यधीनं तदेतत् ॥२७॥**

**सामश्रुतिशिरसि**—सामवेदीयताण्डिशाखान्तर्गते छान्दोग्योपनिषदि (छां.उ. 3–12,13) **भूत-क्षिति-तनु-हृदयैः**—भोक्तृचेतनवर्ग-पृथिवी-शरीर-हृदयाख्यैः चतुर्भिः अर्थैः, **सिध्यच्चातु-ष्पद्यम्**—पादचतुष्टयवत्तासम्पत्तिमत् , **तद्विधाभिः**—चतुष्पात्त्वसम्बन्धिप्रकारविशेषात्मकैः, **गान-त्राणादिकाभिः**–भूतगानकर्तृत्व-भूतत्राणकर्तृत्व-भूतप्रतिष्ठात्व-भूतानतिवर्तन-प्राणप्रतिष्ठात्व-प्राणा-नतिवर्तनरूपैः प्रकारैः, **षड्विधम्**—प्रकारषट्कवत् , **परंज्योतिः**—सर्वज्योतिरवभासकप्रकाशवत् 'परो दिवो ज्योतिः' इति श्रुत्युक्तं परं ब्रह्म, **गायत्रीनाम**–गायत्रीसादृश्यकृतगायत्रीपदवाच्यत्ववत्तया, **अध्यायि**—अधीतमस्ति, **वाक्-प्राणोक्तिः**—'वाग्वै गायत्री' इति वाचः कीर्तनम् , (तथा) 'अस्मिन् हीमे प्राणाः प्रतिष्ठिताः' इति प्राणकीर्तनं च, **परार्था**—गान-त्राणकर्तृत्वस्य, (तथा) प्राणप्रतिष्ठात्वादेश्च लाभात्मकस्य प्रयोजनान्तरस्य साधकम् इति, **श्रुतिगतवचनव्यक्तिभेदात्तु**—भूतादिचतुष्टयवचनभङ्ग्याः, (तथा) वाक्-प्राणयोः वचनभङ्ग्याश्च वैलक्षण्यादेव ज्ञायते ; **तदेतत्**—भूतादिचतुष्टयवत्ताधीनेन चतुष्पात्त्वेन, गानादिकर्तृत्वाद्यधीनेन षड्विधत्वेन च गायत्री-सादृश्यकृतं ब्रह्मणि गायत्रीत्वानुसन्धानमित्येतत् , **स्वरसनिगमनश्रुत्यधीनम्**—अनुपचरितार्थ-प्रत्यायकत्वरूपस्वारस्यवती या 'सैषा चतुष्पदा षड्विधा गायत्री' इत्येवंरूपा चतुष्पात्त्व-षाड्विध्ययोः उपसङ्ग्रहीत्री श्रुतिः, तन्निबन्धनम् ॥ २७ ॥

३) अधिकरणसारावलिः (श्लो. ७१-७३)

**नोक्तिं व्याहन्ति लिङ्गं किमपि भवति तु ख्याततत्त्वानुकूलं**
**शब्दश्चानन्यनिष्ठः श्रुत इति न परो ज्योतिराद्युक्तिवेद्यः ।**
**विश्वोत्पत्त्युक्त्यभावेऽप्यवगतमिह तल्लिङ्गमित्याक्षिपन्तं**
**रुन्धेऽथाधिक्रियाभ्यां तदुचितचिदचिद्वर्गवैशिष्ट्ययुक्त्या ॥ ७१ ॥**

**उक्तिम्**—लोकसिद्धस्याग्न्यादेः रूढ्या प्रतिपादकं श्रुत्यात्मकं 'ज्योति'रादिशब्दम्, **किमपि लिङ्गम्**—तद्भिन्नार्थविशेषगतासाधारणधर्मात्मकं समभिव्याहृतशब्दबोध्यसामर्थ्यरूपं यत्किञ्चित्, **न व्याहन्ति**—न बाधते, (**तु**—प्रत्युत) **ख्याततत्त्वानुकूलम्**—लोकप्रसिद्धस्य अग्न्यादेस्तत्त्वस्य अन्वययोग्यम्, **लिङ्गं तु**—कौक्षेयज्योतिरैक्यादिरूपं ज्ञापकं तु, **भवति**—वर्तत एव, **अनन्यनिष्ठः**—असाधारण्येन परमात्ममात्रवाचकताशून्यः, **शब्दश्च**—ज्योतिराद्यात्मकः शब्द एव च, **श्रुतः**—स्पष्टतया श्रुतिपठितो वर्तते । (अतः) **ज्योतिराद्युक्तिवेद्यः**—'ज्योतिः' प्रभृतिभिः शब्दैः अभिधेयः अर्थः, **न परः**—परमात्मा न भवितुमर्हति । **इह विश्वोत्पत्त्युक्त्यभावेऽपि**—ज्योतिरादिपदघटिते अस्मिन् वाक्ये, अस्मात् जगत्सृष्ट्यादेः प्रतिपादकस्य शब्दस्य अविद्यमानत्वेऽपि, **तल्लिङ्गम्**—अव्यभिचरिततया जगत्कारणत्वसहचरितं निरतिशयदीप्तिरूपं ज्ञापकम्, **अवगतम्**—'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इति श्रुतिखण्डेन ज्ञातम्, **इति आक्षिपन्तम्**—एवंरूपया युक्त्या अस्याः श्रुतेः लौकिकाग्निप्रतिपादनपरतया परमात्मपरता-निरसने प्रवृत्तं पूर्वपक्षिणम्, **अथ अधिक्रियाभ्याम्**—अव्यवधानेन उत्तरत्र प्रतिपाद्याभ्याम् अधिकरणाभ्याम्, **तदुचितचिदचिद्वर्गवैशिष्ट्ययुक्त्या**—परमात्मन्येव असाधारण्येन अन्वयार्हं यत्, इन्द्राद्यात्मकचेतन-प्रसिद्धाग्न्याद्यात्मकाचेतनापेक्षया वैशिष्ट्यं—विशेषः, अतिशयः, वैलक्षण्यं वा, तद्योगात्मिकया श्रुतिस्थया युक्त्या, **रुन्धे**—निराकरोति ॥ ७१ ॥

**कौक्षेयज्योतिषैक्यं कथितमिह परज्योतिषस्तस्य विश्वो-**
**पादानत्वं च विद्यान्तरविदितमतः कारणं वह्निरस्तु ।**
**मैवं; पुंसूक्तवाक्योदितपरपुरुषप्रत्यभिज्ञस्यबाधाद्**
**गायत्र्युक्तिस्तु साम्यादपि च निगदितास्तस्य भूतादिपादाः ॥ ७२ ॥**

**इह**—छान्दोग्यीये श्रुतिवाक्ये, **परज्योतिषः**—'परो दिवो ज्योतिः' इत्युक्तस्य परज्योतिः शब्दाभिधेयस्य, **कौक्षेयज्योतिषा**—कुक्षिस्थेन जठराग्निना साकम्, **ऐक्यम्**—अनन्यत्वम्, **कथितम्**—'इदं वाव तत् यदिदमस्मिन् अन्तःपुरुषे ज्योतिः' इति प्रतिपादितम् । **तस्य**—कौक्षेयज्योतिरभिन्नस्य परस्य ज्योतिषः, **विश्वोपादानत्वम्**—जगत्कारणत्वं तावत्, **विद्यान्तर-**

**विदितं च**—वैश्वानरादिविद्याप्रतिपादके उपनिषद्वाक्यविशेषे परिचितमेव । **अतः**—उक्ताभ्यां श्रुति-लिङ्गाभ्याम् प्रसिद्धेश्च, **वह्निः**—लोकविदितोऽग्निरेव, **कारणमस्तु**—जगदुपादानमित्यङ्गी-क्रियतां नाम ; को दोषः ? (इति पूर्वपक्षे प्राप्ते), **मैवम्**—उक्तप्रकारमङ्गीकरणं न विचारसहम्, **पुंसूक्तवाक्योदितपरपुरुषस्य**—'पादोऽस्य विश्वा भूतानि । त्रिपादस्याऽमृतं दिवि' इति पुरुषसूक्तगतवाक्यप्रतिपन्नस्यैव परमपुरुषस्य. या **प्रत्यभिज्ञप्तिः**—'पादोऽस्य सर्वा भूतानि, त्रिपादस्याऽमृतं दिवि' इति छान्दोग्यीयैतत्प्रकरणस्थेन वाक्येन जातम् 'स एवाऽयम्' इति यत् प्रत्यभिज्ञानम् ; तस्य, **अबाधात्**—बाधितुमशक्यत्वात्, (प्रत्यभिज्ञायाश्च परमपुरुषतासाधकत्वात्, अत्र प्रतिपाद्यः परमात्मैव ; न लौकिको वह्निरिति) **गायत्र्युक्तिस्तु**—प्रकरणप्रतिपाद्ये परे ज्योतिषि प्रयुज्यमानः 'गायत्री'शब्दस्तु, **साम्यात्**—गायत्रीगतभूत-पृथिवी-शरीर-हृदयाख्य-पादचतुष्टयवत्त्वेन गानकर्मत्व-त्राणकर्मत्व-सर्वभूतप्रतिष्ठात्व-तदनतिवर्तनरूपविधाषट्कवत्त्वेन च गायत्रीविशेषात्मकऋङ्मन्त्रसादृश्यात्, **तस्य**—गायत्रीसादृश्यनिबन्धन'गायत्री'शब्दवाच्यत्ववतो ब्रह्मणः, **भूतादिपादा अपि**—'सर्वभूतशब्दवाच्यः जीवात्मरूपः भोक्तृवर्गः, तदीयपुण्य-पापात्मककर्मायत्तप्राप्तिमत् पृथिवीरूपं तद्भोगस्थानम्, तादृशकर्माधीननिर्माणवत् भोगायतनरूपं शरीरम्, तादृशशरीरान्तर्वर्ति आत्मावस्थितेराधारभूतं हृदयम्' इत्येवंरूपाः, विशिष्टस्य ब्रह्मणः विशेषणतया अंशभूताः चत्वारः पादाः अपि, **निगदिताश्च**—प्रकरणे स्पष्टं प्रतिपादिता एव ॥७२॥

> **उत्थानं ज्योतिरादावधिकरणयुगे कारणव्याप्त[1]लिङ्गा-[1]**
> **दित्याभाष्याऽन्यलिङ्गं स्ववचसि [2]विहितं[2] नेति भाष्यं कथं स्यात् ।**
> **इत्थं ; विश्वादिलिङ्गं सदिह न तु पराभीष्टलिङ्गं समस्ती-**
> **त्युत्पश्यन् पूर्वपक्षी व्यवहरति तथा व्याहतिस्तन्न शङ्क्या ॥ ७३ ॥**

**ज्योतिरादौ अधिकरणयुगे**—ज्योतिरिन्द्रप्राणाख्याधिकरणद्वये, **उत्थानम्**—विचाराङ्गपूर्वपक्षोत्थितिः, **कारणव्याप्तलिङ्गात्**—जगत्कारणतानियतात् ज्ञापकधर्मात्, **इति आभाष्य**—एवं भाष्ये स्पष्टमुक्त्वा, (अनन्तरम्) **स्ववचसि**—स्ववाक्ये, **विहितम्**—ज्ञापितम्, **लिङ्गम्**—अव्यभिचरितधर्मात्मकं ज्ञापकम्, **न**—श्रुतौ न पठितम्, **इति भाष्यम्**—एतदर्थावेदकं भाष्यम्, **कथं स्यात्**—अव्याहतार्थकं कथं वा योज्यम्? (इति प्रश्ने) ; **इत्थम्**—वक्ष्यमाणेन प्रकारेण योज्यम् । (तथा हि) **विश्वादिलिङ्गम्**—'विश्वतः पृष्ठेषु' इत्यादिवाक्यावगतसर्वाव-भासकत्वरूपविश्वकारणत्वाक्षेपकं लिङ्गम्, **इह सत्**—स्ववाक्ये एव यद्यपि वर्तते ; तथाऽपि, **पराभीष्टलिङ्गम्**—परमपुरुषमात्रगततया संमतम् उभयलिङ्गत्ववत्परमपुरुषत्वप्रतिष्ठापकं लिङ्गम्,

[1] धर्मात्—आ. [2] विहतं—आ.

**न तु समस्ति**—नैव स्ववाक्ये सम्भवति, **इति उत्पश्यन्**—एवमुत्प्रेक्षमाणः, सम्भाव्य चिन्तयन्, **पूर्वपक्षी**—विचाराङ्गपूर्वपक्षोत्थापकः, **तथा व्यवहरति**—कारणव्याप्तलिङ्गात् पूर्वपक्षोत्थानम्, स्ववाक्ये तदसाधारणलिङ्गाभावं च प्रकटयति । **तत्**—तस्मात्, **व्याहतिः**—भाष्यवचसोरेव मिथो विरुद्धार्थकता, **न शङ्क्या**—नैव सम्भावनीया ॥ ७३ ॥

## ४) अधिकरणार्थसङ्ग्रहः

ज्योतिरधिकरणे—'अथ यदतः परो दिवो ज्योतिर्दीप्यते' (छां उ. 3–13–7) इति वाक्ये 'ज्योतिः'शब्दश्रवणात्, स्ववाक्ये विरोधिलिङ्गाभावाच्च, प्रसिद्धज्योतिरेव कारणम्—इत्याशङ्क्य,

स्ववाक्ये विरोधिलिङ्गाभावेऽपि, उपक्रमवाक्ये सर्वभूतपादवत्स्वरूपविरोधिलिङ्गश्रवणात्, 'ज्योतिः'शब्दवाच्यः परमात्मा—इति सिद्धान्तितम् ॥

## ५) नयसङ्गतिमालिका

**स्ववाक्योक्तब्रह्मलिङ्गविशेषादर्शनादिह ।**
**ज्योतिर्विचार्यते तस्मात् प्रत्युदाहृतिसङ्गतिः ॥ ३७ ॥**

॥ इति ज्योतिरधिकरणम् ॥ १० ॥

इन्द्रप्राणाधिकरणम् ॥ १–१–११ ॥

## १) शारीरकन्यायकलापसङ्ग्रहः (श्लो. १७, १८)

**इन्द्रे तु निर्धारितजीवभावे स्वोपास्तिशब्दात् स हि कारणं स्यात् ।**
**[1]एतन्न[1] सत् तस्य हि शास्त्रदृष्ट्या तथोपदेशोऽमृतता च [2]धर्मः[2] ॥ १७ ॥**

**निर्धारितजीवभावे**—श्रुतिस्मृतीतिहासपुराणागमैः प्रमाणतया प्रतिपन्नैः निर्णीतजीवत्वके, **इन्द्रे तु**—प्रसिद्धेन्द्रे एव, **स्वोपास्तिशब्दात्**—स्वकर्मोपासनविधायकस्य शब्दस्य उपनिषदि श्रुतत्वात्, **सः**—प्रसिद्धेन्द्र एव, **कारणं स्याद्धि**—सर्वकारणतया वेदान्तवेद्यं तत्त्वं भवितुमर्हति खलु, **एतत्**—एवंविधमाशङ्कनम्, **न सत्**—नैव साधु, **हि**—यतः, **तस्य**—इन्द्रस्य, **तथोपदेशः**—उपास्यत्वेनोपदेशः, **शास्त्रदृष्ट्या**—अथर्वशिखादौ शास्त्रे वामदेवादिषु दृष्टां रीतिम् 'अहं मनुरभवं सूर्यश्च' इत्यादिकामनुरुध्यैव, **धर्मश्च**—अनेन उपासनेन सम्पाद्यो धर्मस्तु, **अमृतता**—मोक्ष एव ॥ १७ ॥

---

[1] एवंन—क. [2] धर्मम्—ग.

**सर्वज्ञमानन्दमयं सरूपं तेजस्विनं प्राणनकारणं च ।**
**सुस्थानमात्मानमुदाजहार पादेन पूर्वेण जगन्निदानम् ॥ १८ ॥**

**सर्वज्ञम्**—जगत्सृष्टि-स्थिति-संहारोपयोगिसर्वविषयकासङ्कुचितज्ञानाश्रयम्, **आनन्दमयम्**—निरतिशयदशाशिरस्कतयाऽभ्यस्यमानानन्दप्रचुरम्, **सरूपम्**—कर्मानधीनदिव्यविग्रहम्, **तेजस्विनम्**—सर्वप्रकाशनहेतुभूतान्यानधीनस्वप्रकाशम्, **प्राणनकारणं च**—सर्वजगज्जीवनकारणम्, **सुस्थानम्**—अप्राकृतदिव्यस्थानदेदीप्यमानज्योतिर्मयस्वरूपम्, **आत्मानम्**—अग्नीन्द्रादिदेवतान्तरात्मभूतं च, **जगन्निदानम्**—निरस्तजगत्कारणत्वायोगं परमात्मानम्, **पूर्वेण पादेन**—शारीरकाद्यपादेन, **उदाजहार**—उपनिषद्वेद्यतया स्पष्टीचकार, बादरायणः ॥ १८ ॥

२) **अधिकरणसारावलिः** (श्लो. ७४-७७)

**विद्या प्रातर्दनी सा वदति हिततमोपास्तिकर्मेन्द्रमेव**
**ख्यातप्राणेन्द्रचिह्नान्वितमपि तदसौ विश्वकर्तेति चेन्न ।**
**ब्रह्म त्रेधा ह्युपास्यं बहुविधचिदचित्कञ्चुकं स्वात्मना च**
**प्राणेन्द्रप्रक्रमोऽपि प्रबलतरमहावाक्यवैघट्यभग्नः ॥ ७४ ॥**

**सा**—कौषीतकीब्राह्मणोपनिषदि प्रसिद्धा, **प्रातर्दनी विद्या**—प्रतर्दननाम्नः क्षत्रियस्य हितोपदेशाय प्रवृत्ता उपासनविशेषोपदेष्ट्री श्रुतिवाक्यततिः, 'प्रतर्दनो ह वै' इत्यादिनोपक्रान्ता, **इन्द्रमेव**—देवराज-शचीपत्यादिभिः शब्दैः पुराणेषु प्रसिद्धं देवताविशेषमेव, **ख्यातप्राणेन्द्रचिह्नान्वितमपि**—लोकप्रसिद्धौ यौ, देहधारकः प्राणः, देवराजः इन्द्रश्च ; तयोः चिह्नैः—आयुर्नियामकत्व-त्रिशीर्षत्वाष्ट्रहननादिरूपैः लाञ्छनैः सहिततया श्रुतिप्रतिपन्नमपि सन्तम्, **हिततमोपास्तिकर्म**—पुरुषार्थसम्पादकतया 'हित'शब्दवाच्यानां कर्मादीनां मध्ये, परमपुरुषार्थरूपनिश्श्रेयसप्रदतया अतिशयेन हितं यदुपासनं तदाराध्यमिति, **वदति**—'मामुपास्व' इति इन्द्रोक्तपरिपाट्या बोधयति । **तत्**—तस्मात्, **असौ**—प्रसिद्धः इन्द्र एव, **विश्वकर्ता**—जगत्कारणत्वेन श्रुतिसम्मतः, **इति चेत्**—एवमाशङ्कनम्, **न**—युक्तिमन्न भवति । **हि**—यतः, **ब्रह्म**—निश्श्रेयसार्थमाराध्यं परं ब्रह्म, **बहुविधचिदचित्कञ्चुकम्**—नानारूपचेतनाचेतनशरीरकम्, (तथा) **स्वात्मना च**—अद्वारकतया स्वस्वरूपेण चेति, **त्रेधा**—त्रिप्रकारेण, **उपास्यम्**—उपासनेन प्रीणनीयम्, **प्राणेन्द्रप्रक्रमोऽपि**—लोकविदितप्राणासाधारणधर्मविशिष्टवेषेण प्राणस्य, (तथा) तादृशेन्द्रासाधारणधर्मवत्तया इन्द्रस्याऽपि च उपक्रमोऽपि, **प्रबलतरमहावाक्यवैघट्यभग्नः**—उपक्रमापेक्षया अत्यन्तं प्रबलं यत् महावाक्यम्—आमूलाग्रप्रकरणात्मकम्, तेन साकं विरोधे सति, प्रतिहतशक्तिक एव खलु ॥ ७४ ॥

**यल्लिङ्गं कारणैकस्थितमिति कथितं ज्योतिषीन्द्रे च तत्तु**
**प्रख्यातान्यैकनिष्ठं प्रथममितमतस्तन्मुखोत्थित्ययोगः ।**
**अप्राप्ते तद्विमर्शे प्रकृतशिथिलता नेति चेत् ! सत्यमेतद्**
**विष्णू[1]त्पत्त्युक्तिनीतिक्रमत[1] इह पुरोवादमुत्प्रेक्ष्य शङ्का ।। ७५ ।।**

**ज्योतिषि**—ज्योतिरधिकरणीयविषयवाक्यप्रतिपाद्ये ज्योतिषि, **इन्द्रे च**—इन्द्रप्राणाधिकरणीयविषयवाक्यवेद्ये इन्द्रे च, **कारणैकस्थितमिति**—जगत्कारणत्वव्याप्तत्वेनाभिमतम्, **यत् लिङ्गम्**—ज्ञापकत्वेनेष्टं यादृशमसाधारणधर्मस्वरूपम्, **कथितम्**—पूर्वपक्षिणा वर्णितम्। **तत्तु**—तल्लिङ्गमेव, **प्रख्यातान्यैकनिष्ठम्**—कारणतया श्रुत्यन्तरसिद्धपरमपुरुषमात्रवृत्तीति, **प्रथममितम्**—प्रागेवाकाशाधिकरणे निर्णीतम् । **अतः**—प्राक्तनाधिकरणे एव विचार्य निर्णीतत्वात्, **तन्मुखोत्थित्ययोगः**—कारणत्वव्याप्तेन लिङ्गेन प्रख्यातेन्द्रादौ जगत्कारणतापूर्वपक्षोत्थानासम्भवः, **तद्विमर्शे**—जगत्कारणतायाः लिङ्गविशेषस्य च व्याप्यव्यापकभावविचारे तन्निर्णये च, **अप्राप्ते**—पूर्वमसम्पन्ने सति, **प्रकृतशिथिलता न**—शारीरकशास्त्रे निर्णेयत्वाभिमतसकलजगदेककारणभूतपरब्रह्मसिद्धिभङ्गशङ्का अनवकाशग्रस्ता, **इति चेत्**—एवं क्षोभेण अधिकरणयुगस्याप्रवृत्तिरेवेत्याशङ्कने प्राप्ते, **एतत् सत्यम्**—अधिकरणाप्रवृत्तिशङ्कनं किञ्चिदंशे वास्तवमेव ; अथाऽपि न सर्वांशे, (सकलोंऽशः कः ? इति चेत्) **विष्णूत्पत्त्युक्तिनीतिक्रमतः**—परमपुरुषस्य भगवतो विष्णोः याः पुराणेषूपलभ्यमानाः जन्मप्रतिपादिकाः गिरः, तासां यः नयनक्रमः 'उत्पत्तिर्भगवतः उपेन्द्राद्यवतारात्मिका ; न मर्त्यसाधारणी कर्मायत्ता' इत्येवंरूपः, तमनुसृत्य, **इह**—उपास्यत्वेनोक्तेष्विन्द्रादिष्वपि विषयेषु परिपठितम्, **पुरोवादम्**—प्रथमतः प्रवृत्तमाख्यायिकादिरूपं वचनम्, **उत्प्रेक्ष्य**—उपेन्द्रादिपरतया नयनं कृत्वा, श्रुत्यर्थश्चिन्तनीय इति, **शङ्का**—पूर्वपक्षोत्थानमिति, उपेन्द्रादेः उपास्यता, अन्यत्र निर्णीतत्वेन नाऽत्र निर्णेया ; किन्तु इन्द्रादिशरीरकः परमात्मैव उपास्यः इति निर्णेयमिति च कृत्वा अधिकरणसाफल्यमिति ।। ७५ ।।

**ज्योतिःप्राणेन्द्रशब्दाः परतरविषयाः कारणव्याप्तधर्मा-**
**दित्येतत् साध्वमीषां बहुविहतिमती ख्यातमात्रे तु वृत्तिः ।**
**तत् कौक्षेयानलात्मा कथित इह तथाध्यानतस्तत्फलाप्त्यै**
**मुख्यप्राणादिलिङ्गं तदपि हितपरोपासनान्मोक्षणाय ।। ७६ ।।**

---

[1] त्पत्त्युक्तिरीतिभ्रमत—अ, त्पत्त्यादिरीतिभ्रमत—आ.

**ज्योतिःप्राणेन्द्रशब्दाः**—छान्दोग्यश्रुतः ज्योतिश्शब्दः कौषीतक्यां श्रुतौ इन्द्र-प्राणशब्दौ च, **कारणव्याप्तधर्मात्**—कारणैकान्तनिरतिशयदीप्ति-हिततमोपास्तित्वमेत्वादेः धर्मस्य श्रुतौ पठनात् ज्ञापकात्, **परतरविषयाः**—परमात्ममात्रप्रतिपादकाः, **इत्येतत्**—एवं निर्वहणम्, **साधु**—उभयवादिसम्मतत्वात् समीचीनमेव । **अमीषाम्**—उक्तानां ज्योतिरादि-शब्दानाम्, **ख्यातमात्रे**—प्रसिद्धज्योतिषि, प्रसिद्धेन्द्रे, प्रसिद्धे प्राणे च, **वृत्तिरस्तु**—प्रतिपादकतया वर्तनं तु, **बहुविहतिमती**—नानाविधविरोधजुष्टम्, **तस्मात्**—उक्ताद्धेतोः, **कौक्षेयानलात्मा**—जाठराग्निशरीरकः परमात्मैव, **तथा ध्यानतः**—शरीरतया जाठरानल-विशिष्टत्वेनोपासनात्, **तत्फलाप्त्यै**—उपसंहारावगताभिरूप्य-कीर्त्याप्तिरूपफलसम्पत्तये, **इह कथितः**—अत्र 'इदं वाव तत् यदिदमस्मिन्नन्तः पुरुषे ज्योतिः' इति उक्तः, **मुख्यप्राणादि-लिङ्गम्**—प्रसिद्धप्राणगतम् आयुर्धारकत्वरूपं प्रसिद्धेन्द्रगतं त्रिशीर्षत्वाष्ट्रहननादिरूपं च असाधारण-स्वरूपं परम्, **तदुपहितपरोपासनात्**—मुख्यप्राणशरीरकत्वविशिष्टस्य, (तथा) प्रसिद्धेन्द्रशरीर-कत्वविशिष्टस्य च परमात्मनः उपासनात् साधनभूतात्, **मोक्षणाय**—मोक्षप्राप्तिः सम्भवतीति ज्ञापनायैव ।। ७६ ।।

**कार्यं यत् कर्मवश्यं यदपि दृढमितं तन्निरूढैस्तु शब्दै-**
**र्निर्दिष्टे ब्रह्मणि स्यात् क्वचिदगतिहता रूढिरैन्द्रीनयेन ।**
**तल्लिङ्गानन्यथासिद्ध्यधिगमनबलात् तद्विशिष्टे विवक्षा**
**स्यादीशे ज्योतिरिन्द्राद्यभिलपन[1]परेऽहन्त्व[1]मादीरिते च ।। ७७ ।।**

**यत्**—आकाशाग्न्यादिरूपं वस्तु, **कार्यम्**—जन्यमिति, **दृढमितम्**—असन्दिग्धतया निर्णीतम् । **यदपि**—इन्द्र-प्रजापत्यादिदेवतात्मकं वस्तु, **कर्मवश्यम्**—कर्मानुगुणस्वरूपस्थिति-प्रवृत्तिमदिति, **दृढमितम्**—अविप्रतिपत्त्या निश्चितम् । **तन्निरूढैः**—लोकरूढ्या तादृशार्थ-बोधकैः, **शब्दैः**—आकाशाग्नीन्द्रादिभिः शब्दैः, **क्वचित्**—श्रुतिविशेषे 'आकाशादेव समुत्पद्यन्ते' 'मामुपास्व' इत्यादौ, **ब्रह्मणि**—परमात्मनि, **निर्दिष्टे**—विवक्षिततां प्राप्ते सति, **रूढिः**—शब्दगता प्रसिद्धार्थविशेषबोधौपयिकी समुदायशक्तिः, **ऐन्द्रीनयेन**—इन्द्रपदघटितायाः ऋचः, गार्हपत्याग्निबोधकतानिर्णायकेन न्यायेन (पू मी. 3-3-7), **अगतिहता**—गत्यन्तराभावेन नष्ट-स्वरूपा भवति (योगेन—अवयवशक्त्यैव, तत्राऽर्थो वर्णनीयः) । **ईशे**—परमात्मनि, **ज्योति-रिन्द्राद्यभिलपनपरे**—'ज्योतिः' 'इन्द्रः' इत्यादीनां वाचकशब्दानां वाच्यतया तात्पर्यविषये सति, (तथा) **अहंत्वमादीरिते च**—'अहं ब्रह्माऽस्मि' इत्यादौ 'अहं'शब्देन, 'तत् त्वमसि'

---

[1] पदेऽहन्त्व—अ.

इत्य दौ त्वमादिशब्दैश्च बोधिते च सति, **तल्लिङ्गानन्यथासिद्ध्यधिगमनबलात्**—कार्यकर्मवश्या-द्यर्थात्मकासाधारणलिङ्गस्य अन्यथानुपपत्तिनिश्चयरूपं बलमाश्रित्य, **तद्विशिष्टे**—तत्तत्पदरूढ्यर्थभूत-ज्योतिरिन्द्राद्यर्थविशिष्टे परमात्मनि, **विवक्षा**—श्रुत्यादितात्पर्यविषयता, **स्यात्**—भवेदेव ॥ ७७ ॥

**स्वेच्छातः सर्वहेतुः शुभगुणविभवानन्तनिस्सीमहर्षः**
**शुद्धाकर्मोत्थ[1]दिव्या[1]कृतिरनुपधिकाकाशनादिस्वभावः ।**
**सप्राणाप्राणभेदव्यतिभिदुरजगत्प्राणनो दिव्यदीप्तिः**
**प्राणेन्द्राद्यन्तरात्मा प्रभुरधिकरणैः सप्तभिः प्रत्यपादि ॥ ७८ ॥**

**सप्तभिः अधिकरणैः**—ईक्षति-आनन्दमय-अन्तः-आकाश-प्राण-ज्योतिः-इन्द्रप्राणाख्यैः सप्तसंख्याकैः शारीरकशास्त्रीयैः प्रथमपादगतैः अधिकरणैः, (क्रमशः) **स्वेच्छातः सर्वहेतुः**—स्वसङ्कल्पमात्राधीनजगज्जन्मस्थितिलयहेतुः, **शुभ....हर्षः**—स्वकीयसर्वजगन्मङ्गलगुणविभूत्यात्मक-निरवधिकातिशयापरिच्छिन्नानन्दमहोदधिः, **शुद्धाकर्मो....कृतिः**—सत्त्वैकमयकर्मानधीनदिव्य-मङ्गलविग्रहः, **अनु....स्वभावः**—असङ्कुचितस्वाभाविकप्रकाशमयः, **सप्राणा....प्राणनः**—निखिलचेतनाचेतनसत्ताहेतुः, **दिव्यदीप्तिः**—अप्राकृतज्योतिर्मयः, **प्राणे....रात्मा**—प्राणेन्द्रादेः प्राणात्मकेन्द्रादेर्वा अन्तःप्रविश्य नियन्ता च, **प्रभुः**—सर्वेश्वरः परमपुरुषः, **प्रत्यपादि**—प्रतिपादितः ॥ ७८ ॥

## ३) अधिकरणार्थसङ्ग्रहः

इन्द्रप्राणाधिकरणे—'प्रतर्दनो ह वै दैवोदासिः' इति वाक्ये, 'माम्....उपास्व' इति हिततमोपासनकर्मतया उक्तस्य, 'इन्द्र'शब्देन व्यपदेशात्, उपक्रमे एव त्वाष्ट्रहननरूपलिङ्ग-दर्शनाच्च हिततमोपासनकर्मतयोक्तः, प्रसिद्धेन्द्र एव—इत्याशङ्क्य,

बहुषु वाक्येषु परमात्मलिङ्गदर्शनात्, महावाक्यापेक्षया उपक्रमस्य दुर्बलत्वाच्च, हिततमोपासनकर्मतयोक्तः 'इन्द्र'शब्दनिर्दिष्टः इन्द्रशरीरकः परमात्मैव—इति सिद्धान्तितम् ॥

## ४) **नयसङ्गतिमालिका** (श्लो. ३८, ३९)

**पूर्वोक्तात् पूर्वपक्षः स्यादुपक्रमपराक्रमात् ।**
**इन्द्रप्राणाधिकरणे सङ्गतिस्त्वापवादिकी ॥ ३८ ॥**
**एवं समगमन्नाद्यपादे प्रथमलक्षणे ।**
**पेटिकात्रितयं चैकादशाधिकरणान्यपि ॥ ३९ ॥**

॥ इन्द्रप्राणाधिकरणम् ॥ ११ ॥

॥ प्रथमाध्याये प्रथमः पादः समाप्तः ॥

---

[1] नित्या—आ.

१) शारीरकन्यायकलापसङ्ग्रहः (श्लो. १९-२१)

**शास्त्रे त्वमुष्मिन् जगतां निदानं ब्रह्मैव साक्षाच्चिदचिच्छरीरम् ।**
**इत्येवमर्थं विशदीकरिष्यन् पादानथ त्रीन् प्रचकार शेषान् ॥ १९ ॥**

**अमुष्मिन् शास्त्रे**—शारीरकाख्ये अस्मिन् शास्त्रे, **चिदचिच्छरीरम्**—चेतनाचेतनशरीरकम्, **ब्रह्मैव**—परं ब्रह्मैव, **साक्षात्**—अद्वारकमेव सत्, **जगतां निदानम्**—सर्वजगत्कारणम्; **इत्येवमर्थम्**—एतादृशमिममर्थम्, **विशदीकरिष्यन्**—स्फुटीकर्तुकामः, **अथ त्रीन् शेषान् पादान्**—पश्चात्तनान् अवशिष्टान् द्वितीय-तृतीय-चतुर्थपादान् त्रीन्, **प्रचकार**—विरमिमीत (बादरायणः) ॥ १९ ॥

**तत्र द्वितीयेन शरीरमासीत् तत्प्रत्यशेषः चिदचित्प्रपञ्चः ।**
**तृतीयतस्तस्य तदात्मभावः चतुर्थतस्तद्विपरीतभङ्गः ॥ २० ॥**

**तत्र**—द्वितीयादिपादत्रयमध्ये, **द्वितीयेन**—आदितो द्वितीयेन पादेन, **अशेषः**—निखिलः, **चिदचित्प्रपञ्चः**—विस्तृतः चेतनाचेतनवर्गः, **तत्प्रति शरीरमासीत्**—परब्रह्मनिरूपितशेषत्व-धार्यत्व-नियाम्यत्ववदिति विचार्य निर्णीतमास्ते, **तृतीयतः**—तृतीयेन पादेन, **तदात्मभावः**—चेतनाचेतनाख्यसर्वजगन्नियन्तृताविचारः, **चतुर्थतः**—तुरीयेन पादेन, **तद्विपरीतभङ्गः**—चेतनाचेतनशरीरकपरमात्मकारणताविरोधिनिरासश्च कृतः ॥ २० ॥

१२ सर्वत्रप्रसिद्ध्यधिकरणम् ॥ १-२-१ ॥

**स्वकर्मतःकारणताऽभियोगात् अल्पत्वतोऽल्पायतनत्वतश्च ।**
**सर्वं समाशङ्क्य निरास जीवं प्रसिद्धितस्तद्गुणतस्स्मृतेश्च ॥ २१ ॥**

**स्वकर्मतः कारणताऽभियोगात्**—स्वीयशुभाशुभकर्मनिबन्धनजगत्सृष्टिप्रयोजकत्वात्मकजगत्कारणत्वाक्षेपात्, **अल्पत्वतः**—'अणीयान् व्रीहेः' इत्युक्ताल्पपरिमाणान्वयार्हत्वात्, **अल्पायतनत्वतश्च**—'आत्मान्तर्हृदये' इत्युक्ताल्पस्थानवासयोग्यत्वाच्च ज्ञापकात्, **जीवम्**—कर्मवश्यं चेतनमेव, **सर्वं समाशङ्क्य**—'सर्वं खल्विदम्' इति श्रुतिस्थसर्वपदवाच्यत्वेन पूर्वपक्षयित्वा, **प्रसिद्धितः**—'सर्वं खलु' इति 'खलु'शब्दबोध्यप्रसिद्धिविषयीभूतकारणत्वानन्वयात्, **तद्गुणतः**—परमात्मासाधारणमनोमयत्वादिगुणश्रवणात् ज्ञापकात्, **स्मृतेश्च**—'सर्वस्य चाऽहं हृदि' इति हृदयाख्याल्पायतनत्वस्य परस्मिन्नपि सम्भवाच्च, **जीवं सर्वं निरास**—जीवे श्रुतिस्थसर्वशब्दवाच्यतां निराकृतवान् [सूत्रकारः] ॥ २१ ॥

२) अधिकरणसारावलिः (श्लो १–७)

अत्रायोगान्ययोगव्यपनयननयैर्ब्रह्म पादत्रिपादी-
[1]भागा[1]रूढैर्मृदूपक्रमकठिनपरैः प्राय आद्ये प्रसाध्यम् ।
कृत्स्नाक्षेपोपशान्त्यै प्रथम इह ततः पाद उक्तास्त्रिपादी-
क्वाचित्काक्षेपपूर्वाखिलकलहसमुन्मूलनाय प्रणीता ।। १ ।।

**अत्र आद्ये**—शारीरकीयप्रथमाध्याये, **पाद-त्रिपादीभागारूढैः**—एकपादात्मकेन भागेन, पादत्रयात्मकेन च भागेन लब्धस्वरूपैः, **मृदूपक्रमकठिनपरैः**—उपक्रमे अल्पेन, उत्तरोत्तरं चाधिकेन प्रयासेन साध्यैः, **प्रायः अयोगान्ययोगव्यपनयननयैः**—(क्रमशः) ब्रह्मणि जगत्कारणत्वायोगव्यावर्तनप्रचुरैः, तथा जगत्कारणत्वस्य, ब्रह्मान्ययोगव्यावर्तनप्रचुरैश्च अधिकरणैः, **ब्रह्म प्रसाध्यम्**—चेतनाचेतनविलक्षणं परं ब्रह्म वेदान्तवेद्यतया समर्थनीयम् । **ततः**—उक्ताद्धेतोः, **इह प्रथमः पादः**—शारीरकाद्याध्यायीयः आद्यश्चरणः, **कृत्स्नाक्षेपोपशान्त्यै**—सर्वेषां वेदान्तवाक्यानां विषये प्राप्तस्य निखिलचेतनाचेतनविलक्षणब्रह्माप्रतिपादकत्वाक्षेपस्य शमनाय, **उक्तः**—निबद्धः, **इह त्रिपादी**—आद्याध्यायीयावशिष्टपादत्रयं तु, **क्वाचित्का**.... **समुन्मूलनाय**—कतिपयवेदान्तवाक्यविशेषविषयकब्रह्माप्रतिपादकत्वाक्षेपपूर्वकक्रमशः प्रवृत्तसर्व-वेदान्तवाक्याक्षेपनिरासाय, **प्रणीता**—रचिता वर्तते ।। १ ।।

अस्पष्ट स्पष्टरूप-स्फुटतरचिदचिल्लिङ्गवद्वाक्यचिन्ता
भाष्ये दीपावतारेऽप्यगणि नयगणैः सम्प्रवृत्ता त्रिपाद्याम् ।
अत्यन्तास्पष्टलिङ्गान्वितविषयमुपन्यस्याद्यपादं तु केचित्
तत्रेदं तारतम्यं नियतनिजबलैः प्राच्यतार्तीयमानैः ।। २ ।।

**त्रिपाद्याम्**—प्रथमाध्यायगतद्वितीयादिपादत्रये, **नयगणैः**—अधिकरणसमूहैः, **अस्पष्ट.... चिन्ता**—(क्रमशः) झटिति चेतनाचेतनासाधारणधर्मप्रतिपत्त्यजनकानां, तादृशधर्मप्रत्यायकानां, झटिति तादृशधर्मप्रत्यायकानां च वेदान्तवाक्यानां विचारपूर्विका निर्णीतिः, **सम्प्रवृत्ता**—सम्पन्नेति, **भाष्ये**—श्रीभाष्यग्रन्थे, **दीपावतारेऽपि**—(तथैव) वेदान्तदीपस्यावतरणिकाग्रन्थेऽपि, **अगणि**—स्फुटं दर्शितम् । **केचित्तु**—अपरे भाष्यव्याख्यातारस्तु, **आद्यपादम्**—प्रथमं चरणम्, **अत्यन्तास्पष्टलिङ्गान्वितविषयम्**—अस्फुटतरचिदचिल्लिङ्गकवाक्यविचारात्मकमिति, **उशन्ति**—प्रतिपादयन्ति । **इदं तारतम्यम्**—ईदृशं वैलक्षण्यम्, **तत्र**—तेषु तेषु वेदान्तवाक्येषु,

[1] व्यूहा—अ.

**नियतनिजबलैः**—सुव्यवस्थितस्वीयबलतारतम्यवद्भिः, **कर्मतार्तीयमानैः**—कर्मकाण्डीयतृतीयाध्यायसिद्धैः विनियोगग्राहकैः श्रुत्यादिप्रमाणैः सिद्धं भवति (इति ज्ञेयम्) ॥ २ ॥

**पूर्वत्रासिद्धरूपैः स्वमतिविरचितोन्नीतिभिः पूर्वपक्षः**
**सिद्धैः साधारणैरप्युपधिनियमितैः प्रत्यवस्था द्वितीये ।**
**स्पष्टासाधारणत्वैरुपरि परमतानूक्तिकल्पैरथेति**
**न्यायैकत्रिंशदत्र प्रतिचरणविभक्त्यन्विताऽन्वेषणीया ॥ ३ ॥**

**पूर्वत्र**—आद्ये पादे, **स्वमतिविरचितोन्नीतिभिः**—तैस्तैर्वादिभिः स्वीयबुद्धिपरिकल्पिताकारवद्भिः, **असिद्धरूपैः**—पक्षावृत्तित्वात्मकस्वरूपासिद्धिमद्भिर्हेतुभिः, **पूर्वपक्षः**—न्यायसमाधेयांशोत्थानम्; **द्वितीये**—अनन्तरपादे, **सिद्धैः साधारणैरपि**—पक्षवृत्तित्व-पक्षेतरवृत्तित्वात्मकरूपद्वयवद्भिः हेतुभिः, **उपधिनियमितैः**—उपाध्यधीनसाध्यसाहचर्यवद्भिः, धर्मविशेषविशिष्टवेषेण साध्याव्यभिचरिततया दर्शितैरिति वा, **प्रत्यवस्था**—पूर्वपक्षोत्थानप्रकारः, **उपरि**—तृतीयपादे, **स्पष्टासाधारणत्वैः**—स्फुटतरप्रतिपन्नजीवासाधारणतावद्भिः हेतुभिः, **प्रत्यवस्था**—पूर्वपक्षोत्थितिः । **अथ**—चतुर्थे पादे, **परमतानूक्तिकल्पैः**—पराभिमतार्थानुवादसदृशैः हेतुभिश्च प्रत्यवस्थानमिति, **इति**—उक्ताभिः रीतिभिः, **अत्र**—आदिमेऽध्याये, **प्रतिचरणविभक्त्यन्विता**—पादविभागानुरोध्यर्थविभागसहिता, तत्तत्पादप्रतिनियतविभाजकधर्मसहिता वा, **न्यायैकत्रिंशत्**—अधिकरणानामेकत्रिंशत्सङ्ख्या, **अन्वेषणीया**—निपुणमालोचनीया भवति ॥ ३ ॥

**विश्वं पादे द्वितीये वपुरिति कथयंश्चिन्त्यते वाक्यवर्गः**
**विश्वाधारः स आत्मेत्यभिलपनपरस्तर्कणीयस्तृतीये ।**
**तुर्ये साङ्ख्यादिपक्षोदितपरिपठनभ्रान्तिरुन्मीलनीये-**
**त्येवं केचित् त्रिपादीं जगदुरयमपि श्रोतृबुद्धेः समाधिः ॥ ४ ॥**

**केचित्**—अन्ये केचन भाष्यकाराशयचिन्तकाः, **द्वितीये पादे**—त्रिपाद्यन्तर्गते आद्याध्यायद्वितीयपादे, **'विश्वम्**—समस्तं जगत्, **वपुः'**—'परब्रह्मणः शरीरम्', इति **कथयन् वाक्यवर्गः**—एवं प्रतिपादयन् वेदान्तवाक्यगणः, **चिन्त्यते**—विचार्य निर्णीयते । **तृतीये**—तृतीये पादे, **स आत्मा**—'विश्वशरीरकः परमात्मा', **विश्वाधारः**—'विश्वशरीरकत्वोपपादकविश्वाधारत्ववांश्च', **इत्यभिलपनपरः वाक्यवर्गः**—ईदृशार्थप्रतिपादनैदंपरः वेदान्तवाक्यगणः, **तर्कणीयः**—विचार्य निर्णेयः । **तुर्ये**—चतुर्थे पादे, **'साङ्ख्यादि....भ्रान्तिः**—साङ्ख्यपातञ्जलादिपक्षसिद्धस्यैवार्थस्य अनुवदनं वेदान्तेष्वस्ति इतीयं भ्रान्तिः, **उन्मूलनीया'**—अपुनःप्ररोहं निरसनीया वर्तते', **इत्येवम्**—अनया रीत्या, **त्रिपादीम्**—प्रतिपादविभक्तार्थवत्

पादत्रयम्, **जगदुः**—कथितवन्तः। **अयमपि**—उक्तः प्रकारोऽपि, **श्रोतृबुद्धेः**—अर्थविभाग-श्रवणकुतुकिनां बुद्धेः, **समाधिः**—आकाङ्क्षाशामकः प्रकारो भवति ॥ ४ ॥

**यस्य प्राणश्शरीरं स खलु हिततमोपास्तिकर्म प्रसक्तः**
**तस्मिन् जीवत्वशङ्कां जगदुपजनके सौति शाण्डिल्यविद्या ।**
**पूर्वन्यायाच्च युक्तं दमनमिह महावाक्यतः प्रक्रमस्ये-**
**त्युत्थाने प्रक्रमोक्तानुगुणमिति महावाक्यमेकीकरोति ॥ ५ ॥**

**यस्य**—विश्वशरीरकस्य यस्य परमात्मनः, **प्राणः शरीरम्**—जगत्प्राणनहेतुभूतः प्राणाख्योऽर्थः आधेयत्व-विधेयत्व-शेषत्ववान्, **हिततमोपास्तिकर्म सः**—अत्यन्तहितात्मकेन उपासनेन प्रेप्सितः स परमात्मा, **प्रसक्तः खलु**—पूर्वपेटिकायाम् इन्द्रप्राणाधिकरणे प्रस्तुतः खलु, **तस्मिन् जगदुपजनके**—जगत्कारणतया श्रुतिप्रतिपन्ने तस्मिन् वस्तुनि विषये, **जीवत्व-शङ्काम्**—'एतादृशगुणविशिष्टोऽर्थः जीव एव भवितुमर्हति' इतीमं भ्रमम्, **शाण्डिल्यविद्या**—छान्दोग्यतृतीयप्रपाठकोक्ता 'सर्वं खल्विदं ब्रह्म' इत्यादिवाक्यरूपा श्रुतिततिः, **सौति**—जनयतीवास्ति । **महावाक्यतः**—आमूलाग्रप्रकरणस्थयत्किञ्चिदेकार्थतात्पर्यकबहुवाक्यस्तोमानुगुण्येन, **प्रक्रमस्य दमनम्**—उपक्रमस्थवाक्यतात्पर्यान्यथाकरणम्, **युक्तमिति**—न्यायसम्मतमित्येवमाकारात्, **पूर्वन्यायात्**—इन्द्रप्राणाधिकरणोक्तन्यायात्, **इह उत्थाने**—अस्मिन्नधिकरणे पूर्वपक्ष-प्रवृत्तौ सत्याम्, **महावाक्यम्**—एकतात्पर्यकबहुवाक्यगर्भम् अमूलाग्रं प्रकरणम्, **प्रक्रमोक्तानु-गुणमिति**—उपक्रमस्थवाक्यतात्पर्याविरुद्धतात्पर्यकमिति, **एकीकरोति**—ऐककण्ठ्यमेव न्यायं व्युत्पादयति (अत्र सूत्रकारः) ॥ ५ ॥

**अन्वारुह्यात्र भेदं प्रथममधिकृतिर्भाषिता किं निमित्तं ?**
**विध्यैकत्वेऽनुवादः पर इह गुण[1]विध्यर्थमेवेति[1] युक्तम् ।**
**सत्यं ब्रह्मानुमत्य क्वचिदुपनिषदि क्वाऽपि कल्प्ये विवादे**
**चिन्तैषोदाहृतिः स्यात् परमतरचितेत्यर्थसिद्धिस्तु बोद्धव्या ॥ ६ ॥**

[प्रथमं वर्णकम्] **अत्र**—शाण्डिल्यविद्यागतश्रुतिवाक्येषु, **भेदम्**—वाक्यभेदम्, ब्रह्म-मनोमयशब्दयोः ब्रह्म-जीव-रूपार्थभेदं वा, **अन्वारुह्य**—अनभ्युपगतमपि अभ्युपगतमिव कृत्वा, **प्रथमम्**—प्रथमयोजनायाम्, **अधिकृतिः**—अधिकरणरचना, **किमर्थं भाषिता**—कस्मै प्रयोजनाय श्रीभाष्ये प्रदर्शिता ? **विध्यैकत्वे**—'स क्रतुं कुर्वीत' 'शान्त उपासीत' इत्युक्तयोः क्रतूपासनयोः एकविद्यान्तर्गतत्वपक्षे, **परः**—'स क्रतुं कुर्वीत' इत्ययं विधिभागः,

[1] **विध्यर्थ एवेति—अ, आ.**

**इह गुणविध्यर्थ एव**—अस्यां विद्यायां शमरूपगुणस्य उपासकगतस्य उपासनाङ्गताज्ञापनार्थ एव, **इति युक्तम्**—एतदेवोचितम् (इत्याशङ्कने प्रवृत्ते), **सत्यम्**—उक्तेऽर्थे किञ्चिदंशः अङ्गीकार्य एव। **क्वचिदुपनिषदि**—उपनिषदः कस्मिंश्चन भागे, **ब्रह्म अनुमत्य**—ब्रह्माऽस्तित्वमभ्युपगम्य, **क्वाऽपि**—उपनिषदः भागान्तरे, **विवादे कल्प्ये**—तद्विरुद्धे वादे शङ्कनीये, **परमतरचिता एषा चिन्ता**—मतान्तरे प्रदर्शितेयं विचारप्रक्रिया, **उदाहृतिर्भवेत् इति**—दृष्टान्तरूपा भवितुमर्हतीत्येवंरूपा, **अर्थसिद्धिः**—अधिकरणप्रयोजनसम्पत्तिः **बोध्या**—ज्ञेया ॥ ६ ॥

**सर्वत्वं कर्मभिः स्वैर्जनिमति घटते ब्रह्मशब्दोऽ[1]परे चे-[1]**
**त्यल्पस्थानोऽल्पमानः सुखतदितरभुग्जीव एवेति चेन्न ।**
**तज्जत्वादेरनूक्तेर्विविधगुणभिदादर्शनात् सर्वतादेः**
**स्वारस्यादप्यणुत्वं ह्युपधिकृतमिहोपास्तये ज्यायसि स्यात् ॥ ७ ॥**

[द्वितीयं वर्णकम्] **स्वैः कर्मभिः जनिमति**—स्वकीयपुण्यापुण्यात्मककर्माधीनोत्पत्तिमति जीवे, **सर्वत्वं घटते**—'सर्वं खल्विदम्' इति श्रुत्युक्तं सर्वात्मकत्वं युज्यते। (तथा) **'ब्रह्म'शब्दश्च**—'इदं ब्रह्म' इत्युक्तः 'ब्रह्म'शब्दोऽपि, **अपरे**—परस्माद्ब्रह्मणो भिन्ने जीवेऽपि, **घटते**—निर्बाधं युज्यत एव। **अल्पस्थानः**—हृदयाख्याल्पप्रमाणस्थानवर्ती, **अल्पमानः**—अणुपरिमाणश्चार्थः, **सुख-तदितरभुक्**—सुखदुःखानुभवार्हः, **जीव एव**—जीवात्मैव, न परमात्मा, **इति चेत्**—एवमाशङ्कनम्, **न**—नोचितम्, **तज्जत्वादेः**—'यतो वा इमानि' इति श्रुतिप्रसिद्धस्य ब्रह्मजत्व-ब्रह्मणि लीयमानत्व-ब्रह्माधीनस्थितिमत्त्वादेः धर्मस्य, **अनूक्तेः**—'तज्जलान्' इत्यनेन अनुवादात्, **विविधगुणभिदादर्शनात्**—मिथो विलक्षणानां ब्रह्मासाधारणानां मनोमयत्वादि-गुणविशेषाणां श्रुतिप्रतिपन्नत्वात्, **सर्वतादेः**—सर्वात्मकत्वादेः, **स्वारस्यादपि**—बहुचेतनगत-त्वापेक्षया एकचेतनगतत्वे औचित्यादपि, **इहाऽणुत्वम्**—'अणीयान् व्रीहेः' इत्युक्तं सूक्ष्मपरि-माणत्वम्, **ज्यायसि**—निरतिशयबृहति परमात्मनि विषये, **उपास्तये**—उपासनसौकर्याय, **उपधिकृतं स्यात्**—हृदयात्मकावच्छेदस्थाननिबन्धनमेव भवेत्; व स्वभावकृतमिति ॥ ७ ॥

## ३) अधिकरणार्थसङ्ग्रहः

एवं प्रथमे पादे चिदचिद्विलक्षणकारणास्तित्वरूपायोगव्यवच्छेदः कृतः। अथ त्रिपाद्याम् अन्ययोगव्यवच्छेदः क्रियते।

तत्र अस्पष्टजीवादिलिङ्गकपादे द्वितीये सर्वत्रप्रसिद्ध्यधिकरणे—

---

[1] पि चैवे—आ. न चैवे—आ.

'सर्वं खल्विदं ब्रह्म' इति वाक्ये, 'सर्वमिदं ब्रह्म' इति, चतुर्मुखादिस्थावरान्तसर्वतादात्म्योपदेशात्, चतुर्मुखादितादात्म्यस्य जीवेष्वपि सम्भवात्, 'ब्रह्म'शब्दनिर्दिष्टः जीव एव इत्याशङ्क्य,

'तज्जलान्' इति, हेतुतया जन्मादीनां प्रसिद्धवदुपदेशात्, तेषां च परमात्मसम्बन्धितया प्रसिद्धेः, सर्वशरीरकस्य परस्य सर्वतादात्म्योपपत्तेश्च, 'ब्रह्म'शब्दनिर्दिष्टः परमात्मा—इति सिद्धान्तितम् ॥

४) **नयसङ्गतिमालिका** (श्लो. ४०, ४१)

**अथ द्वितीयपादेऽस्मिन् त्रिकद्विकविभागतः ।**
**अल्पस्थान-महास्थानस्थितेशोपास्तिपेटिके ॥ ४० ॥**
**महावाक्यगतं ब्रह्मलिङ्गं प्रबलमीरितम् ।**
**तादृक्षलिङ्गतः सर्वनये शङ्का व्यपोह्यते ॥ ४१ ॥**

॥ इति सर्वत्रप्रसिद्ध्यधिकरणम् ॥१॥

(१३) अत्त्रधिकरणम् ॥ १-२-२ ॥

१) **शारीरकन्यायकलापसङ्ग्रहः**

**अत्ता तु जीवो न परः स्वतन्त्रः स एव यत्कर्मफलोपभोगी ।**
**इत्यप्यसत्; तद्धि चराचरस्य मृत्यूपसेकाददनं त्वपीतिः ॥ २२ ॥**

**अत्ता**—'यस्य ब्रह्म चे'ति अत्तृतया श्रुतिप्रतिपन्नः अर्थः, **जीवस्तु**—जीव एव, **परो न**—परमात्मा न भवितुमर्हति, **स्वन्तत्रः**—तस्य स्वतन्त्रत्वात्, **यत्**—यस्माद्धेतोः, **स एव**—जीवात्मैव, **कर्मफलोपभोगी**—स्वार्जितानां पुण्यापुण्यात्मकानां कर्मणां फलभोक्ता भवितुमर्हति, **इत्यपि**—एवमाशङ्कनमपि, **असत्**—असाधु! **हि**—यतः, **तत्**—श्रुत्युक्तम्, **चराचरस्य मृत्यूपसेकात् अदनम्**—जङ्गम-स्थावरात्मकजगत्कर्मकं मृत्यूपसेचनपूर्वकं भक्षणम्, **अपीतिस्तु**—परमात्मकर्तृकः सर्वजगत उपसंहार एव ॥ २२ ॥

२) **अधिकरणसारावलिः** (श्लो. ८, ९)

**अत्ता खल्वोदनादेर्भव[1]भृदिति[1] कठश्रुत्यधीतोऽप्यसौ स्यात्**
**न स्यान्मृत्यूपसिक्तस्थिरचरनिखिलग्रास[2]तस्तल्लयोक्तेः[2] ।**
**जीवव्यावर्तनं च प्रकरणविदितं भोक्तृतोक्तिर्द्वयोस्तु**
**प्रेर्यत्व-प्रेरकत्वप्रतिनियतरसाच्छत्रिनीत्याऽथवा स्यात् ॥ ८ ॥**

---

[1] भुगिति—श्रा.   [2] तत्तल्लयोक्तेः—श्रा.

**ओदनादेः**—अन्नप्रभृतिभोज्यद्रव्यस्य, **अत्ता**—भक्षकः, **भवभृत् खलु**—प्रकृतिचक्रे कर्मवशात् भ्रम्यमाणो जीव एव खलु, **इति**—अनेन हेतुना, **कठश्रुत्यधीतोऽपि**—'यस्य ब्रह्म च क्षत्रं च' इति कठश्रुतौ परिपठितोऽप्यत्ता, **असौ स्यात्**—जीव एव भवितुमर्हति, (इति पूर्वपक्षे) **न स्यात्**—श्रुतिपठितोऽत्ता न जीवो भवितुमर्हति (इति उत्तरम्) **मृत्यू....ग्रासतः**—मृत्य्वात्मकोपसेचनसहिततया स्थावरजङ्गमात्मकसमस्तप्रपञ्चभक्षणोक्तिरूपेण ज्ञापकेन, **तल्लयोक्तेः**—जगल्लयात्मकस्य भक्षणस्यैव श्रुतौ पठनात्, तस्य च भवभृति असम्भवात् । **जीवव्यावर्तनं च**—परमात्मासाधारणधर्मकथनेन जीवाबोधनमपि, **प्रकरणविदितम्**—'महान्तं विभुम्' 'नायमात्मा' इत्यादिरूपेण परमात्मप्रकरणेन सुस्पष्टं ज्ञापितम् । **द्वयोः**—जीवपरयोरुभयोरपि, **भोक्तृतोक्तिस्तु**—'ऋतं पिबन्तौ' इति श्लोकेन पानोपलक्षितभोगकर्तृत्ववर्णना तु, **प्रेर्यत्व-प्रेरकत्वप्रतिनियतरसा**—प्रयोज्यकर्तृत्व-प्रयोजककर्तृत्वाभ्यां जीवात्मपरमात्मरूपतत्तदर्थानुगुणभोक्तृत्वमात्रविवक्षायत्ता, **अथवा**—यद्वा, **छत्रिनीत्या स्यात्**—छत्रिघटितसमुदायप्रविष्टत्वमात्रतः छत्रिपदप्रयोगवत्, कर्मफलपातृघटितसमुदायप्रविष्टे परमात्मन्यपि तदुक्तिः भवेत् ॥

**सत्त्वं स्वाद्वत्त्यनश्नन् ज्ञ इति विभजनात् पैङ्ग्यधीतं तु सत्त्वं**
**बुद्धिः प्राणोऽथवेति त्वृतमिह [1]पिबतोर्जीव[1] एकस्तयो[2]श्च[2] ।**
**मैवं जन्तौ [3]च[3] सत्त्वश्रुतिरियमुचिता कर्मभुङ्नाऽप्यनश्नन्**
**तत्प्रश्नप्रक्रमोऽन्याशय इदमपि चाऽभाषि पूर्वापराद्यैः ॥९॥**

'**सत्त्वम्**—सत्त्वाख्यं वस्तु, **स्वादु अत्ति**—आस्वादनपूर्वकं भुङ्क्ते, **ज्ञः**—ज्ञानाश्रयीभूतोऽर्थः, **अनश्नन्**'—भोक्तृत्वाभाववान्', **इति विभजनात्**—एवंरीत्या पैङ्गिश्रुतौ विविच्य कथनात्, **पैङ्ग्यधीतं सत्त्वं तु**—पैङ्गिश्रुतिपरिपठितं सत्त्वपदाभिधेयं तु, **बुद्धिः अथवा प्राणः इति तु**—बुद्धिरूपोऽर्थः, प्राणाख्योऽर्थो वा, भवितुमर्हति इति हेतोरेव, **इह**—कठवल्लीगते अस्मिन् प्रकरणे, **ऋतं पिबतोः**—'ऋतं पिबन्तौ' इति श्रुत्युक्तयोः, **तयोः एकः**—सत्त्वज्ञशब्दार्थयोरन्यतरः, **जीवः**—जीवात्मा; (इति पूर्वपक्षे) **मैवम्**—उक्ता रीतिः नोचिता । (यतः) **इयं सत्त्वश्रुतिः**—उपदर्शिता सत्त्वपदात्मिका श्रुतिः, **जन्तौ च उचिता**—प्राणिरूपार्थबोधिका च दृष्टाऽस्ति । **कर्मभुक्**—कर्मफलभोक्तृत्वेन श्रुत्यादिसिद्धो जीवः, **अनश्नन्नपि न**—अभोक्तृत्ववांश्च न भवितुमर्हति । **तत्**—तस्माद्धेतोः, **प्रश्नक्रमः**—नचिकेतःकर्तृकप्रश्नप्रकारः, **अन्याशयः**—विलक्षणतात्पर्यवान् । **इदमपि च**—विलक्षणं प्रश्नतात्पर्यमपि, **पूर्वापराद्यैः**—तात्पर्यनिर्णायकैः उपक्रमोपसंहारादिभिः **अभाषि**—श्रीभाष्ये सम्यक् प्रत्यपादि ॥९॥

---

[1] पिबतो जीव—आ.    [2] श्चेत्—आ,    [3] तु—आ.

### ३) अधिकरणार्थसङ्ग्रहः

अत्त्रधिकरणे—'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः' इत्यादिवाक्ये कर्मनिमित्तक-भोक्तृत्वश्रवणात्, 'अत्ता जीव एव'—इत्याशङ्क्य,

मृत्यूपसेचनत्वसामर्थ्यसिद्धचराचरादनस्य जगदुपसंहाररूपत्वात्, तस्य च परमात्मा-साधारणत्वात्, अत्ता परमात्मा—इत्युक्तम् ॥

### ४) नयसङ्गतिमालिका

**भोक्तृत्वं नास्ति चेदन्तर्यामिणो जीव एव सः ।**
**अत्ता स्यादिति शङ्कातः सङ्गतिः प्रत्युदाहृतिः ॥४२॥**

॥ इति अत्त्रधिकरणम् ॥२॥

## १४. अन्तराधिकरणम् ॥ १-२-३ ॥

### १) शारीरकन्यायकलापसङ्ग्रहः

**अक्ष्यन्तरस्त्वेष इति प्रसिद्ध्या जीवोऽथवा बिम्बमथाऽपि दैवम् ।**
**इत्यप्यसत् स्यादमृतत्वशब्दात् सुखश्रुतेश्चाप्यनवस्थितेश्च ॥२३॥**

**अक्ष्यन्तरस्तु**—छान्दोग्यश्रुतौ 'य एषोऽक्षिणि' इत्यस्याम् अक्षिमण्डलान्तर्वर्तितया प्रतिपन्नोऽर्थः, **एष इति प्रसिद्ध्या**—'य एषः' इति प्रसिद्धिद्योतकशब्दसमभिव्याहाररूपेण ज्ञापकेन, **जीवः**—शरीराधिष्ठाता कर्मवश्यो जीवो भवेत् । **अथवा बिम्बम्**—यद्वा, चक्षुरन्तः-परिदृश्यमानं प्रतिबिम्बं वा भवेत् । **अथाऽपि**—यद्वा, **दैवम्**—देवताविशेषो वा भवेत्, **इत्यपि**—अक्ष्यन्तरतयोक्ते जीवात्मत्व-प्रतिबिम्बत्व-देवताविशेषत्वान्यतमाशङ्कनम्, **असत् स्यात्**—न साधु भवेत् । **अमृतत्वशब्दात्**—'अमृतमभयम्' इति अक्षिपुरुषस्य अमृतत्वोक्तेः ज्ञापकात्, **सुखश्रुतेः**—'कं खम्' इति अनवच्छिन्नानन्दरूपत्वोक्तेः, **अनवस्थितेश्च**—प्रतिबिम्बानां नैरन्तर्येण चक्षुर्गोलके अवस्थानाभावाच्च ॥२३॥

### २) अधिकरणसारावलिः

**यद्वृत्तादेर्य एषोऽक्षिणि पुरुष इति श्रूय[1]माणस्तु[1] जीवो**
**यद्वाऽ[2]क्ष्णोर्दे[2]वताऽर्कः प्रतिकृतिरथवा तत्र दृश्येति चेन्न ।**
**एतद्ब्रह्मैतदेवामृतमभयमिदं कं खमित्याद्यधीतेः**
**संयद्वामत्वमुख्यैः स्थितिनियतिबलादर्चिराद्युक्तितश्च॥ १०॥**

---

[1] माणोऽस्तु--आ. [2] क्ष्णो देव—आ.

**य एषो ....श्रूयमाणः**—'य एषोऽक्षिणि पुरुषो दृश्यते' इति छान्दोग्यश्रुतिप्रतिपन्नोऽर्थः, **यद्वृत्तादेः**—यच्छब्दप्रयोगादिरूपात् प्रसिद्धिद्योतकसमभिव्याहारात् ज्ञापकात्, **जीवः**—देहाधिष्ठाता जीवात्मा वा, **यद्वा**—अथवा, **अक्ष्णोर्देवता अर्कः**—नेत्राधिदेवताभूतः आदित्यः, **अथवा**—पक्षान्तरे, **तत्र दृश्या**—चक्षुर्गोलके दृश्यमाना, **प्रतिकृतिः**—द्रष्टृपुरुषान्तरप्रतिबिम्बो वा, **इति चेत्**—एवमाशङ्कनम्, **न**—न साधु। **'एतद्ब्रह्म, एतदेवाऽमृतम्, इदमभयम्, कं खम्' इत्याद्यधीतेः**—उक्तैर्वाक्यैः अक्षिपुरुषे ब्रह्मत्व-अमृतत्व-अभयत्वानां, (तथा) सुखरूपत्व-आकाशरूपत्वयोरपि च श्रुतौ परिपठनात्, **संयद्वामत्वमुख्यैः**—संयद्वामत्वप्रभृतिभिः गुणैः परमपुरुषासाधारणलिङ्गैः, **स्थितिनियतिबलात्**—चक्षुषि नियतावस्थानरूपात् दृढालिङ्गात्, **अर्चिराद्युक्तितश्च**—अक्ष्यन्तरपुरुषवेदनेन ब्रह्मनिष्ठमात्रगमनयोग्यस्य अर्चिरादिवर्त्मनः उपदेशाच्च मुक्तप्राप्यः परमपुरुष एव अक्ष्यन्तर्वर्तितयोपास्यः पुरुषः, न जीवार्कप्रतिकृतयः ॥१०॥

**स्वातन्त्र्योत्तंसितासु श्रुतिषु न फलदस्यैव वेद्यत्ववादः**
**कल्याणालोकनादेरिव विधिबलतो वेदनस्याऽर्थवत्त्वात्।**
**तस्मादक्ष्यन्तरस्थः प्रतिकृतिपुरुषो युज्यते पूर्वपक्षे**
**सेयं पूर्वापरास्वप्यधिकृतिषु यथासम्भवं नीतिरूह्या ॥११॥**

**स्वातन्त्र्योत्तंसितासु**—तर्क-व्यवहाराद्यनधीनतया प्रवृत्ति-निवृत्तिजनकत्वरूपस्वातन्त्र्यालङ्कृतासु, **श्रुतिषु**—वेदरूपासु वाक्षु, **कल्याणालोकनादेरिव**—मङ्गळावहस्य दर्पणदर्शनादेः कर्मण इव, **विधिबलतो वेदनस्य**—विधिमात्राधीनस्य उपासनस्य, **अर्थवत्त्वात्**—फलवत्त्वात्, **फलदस्यैव वेद्यत्ववादः**—फलप्रदानसमर्थस्यैव, वस्तुनः उपास्यत्वमिति नियमो नास्त्येव। **तस्मात्**—उक्ताद्धेतोः, **अक्ष्यन्तरस्थः**—अक्ष्यन्तर्वर्तितया उपास्यत्वेन विहितः, **पूर्वपक्षे**—पूर्वपक्षरीत्या, **प्रतिकृतिपुरुषो युज्यते**—प्रतिबिम्बात्मकः पुरुष एवेत्येतत् युक्तं भवति। **सेयं नीतिः**—उक्तेयं पूर्वपक्षोत्थापिका नीतिः (श्रुत्याऽऽवेदितेऽर्थे युक्तायुक्तत्वचिन्तादूरीकरणेन प्रवृत्तिरूपा), **पूर्वापरासु अधिकृतिष्वपि**—प्राक्तन-पश्चात्तनाधिकरणेष्वपि, **यथासम्भवम्**—तत्तत्स्थलीयविषयादिकमनुरुध्य, **ऊह्या**—स्पष्टमनुक्ताऽपि पूर्वपक्षोत्थापकत्वेन चिन्तनीया ॥११॥

**पूर्वन्यायेऽग्निविद्या पुरत उपनता मध्यतस्त्वत्र तस्मात्**
**तद्वन्न ब्रह्मविद्याऽनुगतिरिति भवेदक्षिविद्या ततोऽन्या।**
**मैवं, विच्छित्तिरङ्गैर्न हि भवति मिता चाऽङ्गताऽनेकधाऽस्याः**
**प्रोक्तं च ब्रह्मविद्याऽनुगुणमिह फलं [1]प्राक्च[1] न ब्रह्मदृष्टिः ॥१२॥**

---

[1] प्राक्तु—श्रा.

**पूर्वन्याये**—अन्तराधिकरणीयविषयवाक्ये कठवल्लीये, **अग्निविद्या**—'सत्त्वमग्निं स्वर्ग्यम्' इति प्रश्नमारभ्य, 'एतमग्निं तवैव प्रवक्ष्यन्ति जनासः' इत्यन्तेनोक्ता अग्निविद्या **पुरत उपनता**-ब्रह्मविद्यातः पूर्वमेव स्थिता । **अत्र तु**—अन्तराधिकरणीयविषयवाक्ये तु छान्दोग्यीये, **मध्यत उपनता**—ब्रह्मविद्याया मध्ये स्थिता । **तस्मात्**—उक्ताद्धेतोः, **तद्वत्**—कठवल्लीयविषय-वाक्ययोरिव, **अत्र**—अन्तराधिकरणीयविषयवाक्येषु, **ब्रह्मविद्याऽनुगतिः**-ब्रह्मविद्यायाः अविच्छेदेनानुवृत्तिः, **नेति**—नैव वर्तत इति, **अक्षिविद्या**—'य एषोऽक्षिणि पुरुषो दृश्यते' इत्युक्ता अक्षिविद्या, **ततोऽन्या**—प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इत्युक्तब्रह्मविद्याऽपेक्षया भिन्ना, (इत्येवं पूर्वपक्षे), **मैवम्**—एवं वर्णनं न समीचीनम् । **अङ्गैः**—अङ्गत्वेन श्रुतिविहितैः पदार्थैः, **विच्छित्तिः**—अङ्गिस्वरूपाननुवृत्तिः, **न हि भवति**—न सञ्जायते इत्येतत् पूर्वतन्त्रप्रसिद्धमेव । **अस्याश्च**—अग्निविद्यायाश्च छान्दोग्यीयायाः, **अङ्गता**—ब्रह्मविद्योपकारकता, **बहुधा मिता**—अनेकप्रकारेण प्रमाणसिद्धा, **इह प्रोक्तं फलं च**—अग्निविद्योपदेशान्ते श्रुतम् आयुःकीर्त्यादि-रूपं फलं च, **ब्रह्मविद्याऽनुगुणम्**—ब्रह्मविद्यानिष्पादकमेव, न तद्विरोधि । **प्राक् च**—आचार्योपदेशात् पूर्वम् अग्निकर्तृकोपदेशश्च, **न ब्रह्मदृष्टिः**—अब्रह्मणि प्राणादौ ब्रह्मदृष्टिविधिरूपो न भवति, तथा अदृष्टत्वात् इति ॥१२॥

## ३) अधिकरणार्थसङ्ग्रहः

अन्तराधिकरणे 'य एषोऽक्षिणि पुरुषो दृश्यते' इत्यादिवाक्ये चक्षुष्यवस्थितस्य प्रसिद्धवत् निर्देशात्, तत्प्रसिद्धेश्च प्रत्यक्षयुक्त्यागमैः प्रतिबिम्बजीवादित्यादिषूपपत्तेः, 'अक्षिपुरुषः तेष्वन्य-तमः'—इत्याशङ्क्य,

संयद्वामत्वादीनां परमात्मन्येवोपपत्तेः, तस्य चक्षुष्यवस्थानस्य 'यश्चक्षुषि तिष्ठन्' इत्यादिषु प्रसिद्धत्वात्, 'अक्षिपुरुषः परमात्मा'—इत्युक्तम् ॥

## ४) नयसङ्गतिमालिका

अचुर्दुर्दर्शतायां स्यादक्षिदृश्यः सुदर्शनः ।
प्रत्युदाहृतिसङ्गत्याऽथान्तराधिक्रियोदयः ॥४३॥

॥ इति अन्तराधिकरणम् ॥३॥

## १५) अन्तर्याम्यधिकरणम् ॥१-२-४॥

## १) शारीरकन्यायकलापसङ्ग्रहः

द्रष्टेति शब्दादिह वाक्यशेषे द्रष्ट्रन्तरस्य प्रतिषेधतश्च ।
क्षेत्रज्ञमन्तर्यमयन्तमाहेत्येतन्न जागर्त्यमृतत्वशब्दात् ॥२४॥

**इह**—अन्तर्यामिब्राह्मणसम्बन्धिनि, **वाक्यशेषे**—'अदृष्टो द्रष्टा' इत्यादिरूपे प्रधानवाक्याङ्गभूते वाक्ये, **द्रष्टेति शब्दात्**—चक्षुरधीनदर्शनकर्तृत्वबोधकात् 'द्रष्टा' इति शब्दात् जीवत्वज्ञापकात्, (तथा) **द्रष्ट्रन्तरस्य**—अन्यस्य दर्शनकर्तुः, **प्रतिषेधतश्च**—तत्रैव विद्यमानेन 'नाऽन्योऽतोऽस्ति द्रष्टा' इति वाक्यखण्डेन निषेधाच्च ज्ञापकात्, **अन्तर्यमयन्तम्**—सर्वत्रान्तःप्रविश्य नियमनस्वभावमर्थम्, **क्षेत्रज्ञमाह**—जीवरूपमेवाह, (अन्तर्यामिब्राह्मणरूपा श्रुतिः), **इत्येतत्**—एवमाशङ्कनम्, **न जागर्ति**—न प्रतिष्ठितं भवति, **अमृतत्वशब्दात्**—अन्तःप्रविश्य नियमनशीले वस्तुनि परमात्मासाधारणामृतत्वबोधकात् 'अन्तर्याम्यमृतः' इत्येवंरूपात् श्रुतिगतात् शब्दात् ॥२४॥

## २) तत्त्वसारः

**तमो नाम द्रव्यं [1]बहल[1]विरलं मेचकचलं**
**[2]प्रतीमः[2] केनाऽपि क्वचिदपि न बाधश्च ददृशे ।**
**अतः कल्प्यो हेतुः प्रमितिरपि शाब्दी विजयते**
**निरालोकं चक्षुः प्रथयति [3]हि[3] तद्दर्शनवशात् ॥२८॥**

[अन्तर्याम्यधिकरणस्य अन्तर्यामिब्राह्मणं विषयः । तत्र 'यस्य तमः शरीरम्' इति वाक्यमस्ति । द्रव्यं च 'शरीर'पदव्यपदेश्यमिति सिद्धान्तः । एवं सति तमः द्रव्यं वा? न वा? इति विप्रतिपत्तौ—प्रवृत्तोऽयं श्लोकः ।]

**बहल-विरलम्**—सान्द्रत्व-सान्तरालत्वोभयवत्, **मेचक-चलम्**—नीलरूपवत्त्व-चलनाश्रयत्वोभयवत्, **तमो नाम द्रव्यं प्रतीमः**—'तमः' इति सर्वजनप्रसिद्धं वस्तु, द्रव्यत्वेन प्रत्यक्षयामः । **केनाऽपि**—येन केनाऽपि पुरुषेण, **क्वचिदपि**—यस्मिन् कस्मिन्नपि देशे, यदा कदाऽपि वा काले, **बाधश्च**—'तमो नीलत्वाभाववत्, तमो निश्चलम्' इत्येवं, रूपक्रियानिषेधबुद्धिश्च, **न ददृशे**—नैवानुभवसिद्धा । (तथा) पूर्वज्ञाने भ्रमत्वानुमापकः कारणदोषोऽपि नाऽनुभूयते । **अतः**—बाधकप्रत्ययस्य कारणदोषस्य च अभावात्, गुण-कर्मवत्तया (द्रव्यत्वे सिद्धे सति) **हेतुः**—तमसः उत्पत्तौ, तमःप्रत्यक्षोत्पत्तौ च कारणभूतोऽर्थः **कल्प्यः**—अनुमेयः । **प्रमितिरपि शाब्दी**—प्रमाऽऽत्मकं ज्ञानमपि शास्त्रजन्यम्, **विजयते**—प्रतिपक्षनिरासकं भवति । **हि**—यतः, **निरालोकम्**—आलोकासहकृतम्, **चक्षुः**—चक्षुर्नामकमिन्द्रियमेव, **तत् प्रथयति**—तमोरूपं वस्तु प्रकाशयति, (इदं च) **दर्शनवशात्**—आलोकं विनैव रूपाभावस्य तेजोऽभावस्य च प्रत्यक्षीकरणात्, (तदानुगुण्येन सिद्ध्यति) ॥२८॥

---

[1] बहुल—ख.   [2] प्रतीमं—क.   [3] च—ग.

### ३) अधिकरणसारावलिः (श्लो. १३, १४)

अन्तर्यामी स जीवो बहुविधकरणायत्तधीवृत्त्यनूक्तेः
नाऽन्यो द्रष्टेति चोक्तेरिति यदि न नियन्त्रन्तरस्य व्युदासात् ।
द्रष्टृत्वाद्यं [1]तु[1] तत्तद्विषयघटितधीरूपमीशे हि मुख्यं
तद्धर्माः काण्वमाध्यन्दिनपरि[2]पठिता[2]स्तस्य चाऽऽत्मा शरीरम् ॥१३॥

**सः अन्तर्यामी**—'यश्चक्षुषि तिष्ठन्' इत्यादिना चक्षुरादाववस्थितिपूर्वकं तत्तन्नियन्तृत्वेन अन्तर्यामिब्राह्मणप्रतिपाद्यः, **जीवः**—जीवात्मैव, **बहुविधकरणायत्तधीवृत्त्यनूक्तेः**—'द्रष्टा श्रोता' इत्यादिना चक्षुरादिनानाविधेन्द्रियाधीनज्ञानात्मकवृत्तिमत्तायाः अनुवादात् (तथा) **नाऽन्यो द्रष्टा इति उक्तेश्च**—वाक्यशेषे 'नाऽन्योऽतोऽस्ति द्रष्टा' इत्यस्मिन्, कारणायत्तदर्शनवतः जीवातिरिक्तस्य निषेधोक्तेश्च ज्ञापकात्, **इति यदि**—एवं शङ्कनम्, **न**—नैव साधु; **नियन्त्रन्तरस्य व्युदासात्**—'नान्योऽतोऽस्ति' इति श्रुत्या, 'पृथिव्यादिषु सर्वत्र नियन्तृतयाऽवस्थितस्य परमपुरुषस्य अन्यो नियन्ता नास्ति' इति ज्ञापनात्, **तत्तद्विषयघटितधीरूपम्**—रूप-तदाश्रयविषयक-ज्ञानवत्त्व-शब्द-तदाश्रयविषयकज्ञानवत्त्वाद्यात्मकम्, **द्रष्टृत्वाद्यं तु**—द्रष्टा श्रोता' इत्याद्युक्तं द्रष्टृत्व श्रोतृत्वादिकं परम्, **ईशे हि!**—सर्वनियन्तरि परमात्मन्येव खलु, **मुख्यम्**—अनुपचरितम्। **तद्धर्माः**—सर्वविश्वनियमनादिरूपाः परमात्मगताः असाधारणाः धर्माः, **काण्व-माध्यन्दिनपरि-पठिताः**—काण्वशाखीयैः 'यो विज्ञाने तिष्ठन्' इत्यादिघटितया प्रणाल्या, माध्यन्दिनशाखीयैश्च 'य आत्मनि तिष्ठन्' इत्यादिघटितया प्रणाल्या च स्पष्टार्थतया अधीताः सन्ति। **तस्य च**—तथा अन्तर्यामितयोक्तस्य परमात्मनश्च, **आत्मा**—चेतनवर्गः, **शरीरम्**—आधेयत्व-विधेयत्व-शेषत्ववत् ॥१३॥

स्थानैक्यादत्र शाखाद्वयपरिपठितावात्म-विज्ञानशब्दौ
एकार्थावित्यकम्प्यं तदपि कथयतो बुद्धिमेवेत्यपार्थम् ।
लोकाम्नायप्रसिद्ध्योरनुगमत इमौ चेतने ह्येकतानौ
बाधः केनाऽपि नाऽस्मिन् भवति च स त इत्यादिभिस्सामरस्यम् ॥१४॥

**अत्र**—बृहदारण्यकगते अन्तर्यामिब्राह्मणे, **शाखाद्वयपरिपठितौ**—काण्वमाध्यन्दिनशाखा-धीतौ, **आत्म-विज्ञानशब्दौ**—'य आत्मनि तिष्ठन्' इति 'आत्म'शब्दः, 'यो विज्ञाने तिष्ठन्' इति 'विज्ञान'शब्दश्चेत्युभौ, **स्थानैक्यात्**—त्वचः अनन्तरं, रेतसः पूर्वं च विद्यमानतारूपस्य

---

[1] च—अ.  [2] पठितिगता—अ.

स्थानस्य एकत्वात्, **एकार्थौ**—अभिन्नार्थाभिधायकौ, **इत्यकम्प्यम्**—इत्येतत् अविप्रतिपत्त्या अभ्युपगमनीयम्। **तदपि—**तथा सत्यपि, **बुद्धिमेव कथयत इति**—अन्तःकरणमेव बोधयत इति, **अपार्थम्—**अप्रसिद्धार्थकवर्णनमेवैतत्, **हि**—यतः, **इमौ**—आत्म-विज्ञानशब्दावुभौ, **लोकाम्नाय-प्रसिद्धयोः**—लोकप्रसिद्धेः वेदप्रसिद्धेश्च, **अनुगमतः**—एकरूपेणानुवृत्त्या, **चेतने**—जीवात्मनि, **एकतानौ—**मुख्यवृत्त्या प्रतिपादकौ, **अस्मिन्**—'आत्म-विज्ञानशब्दयोरभिन्नबोधकत्वे, **केनापि**—प्रबलेन केनाऽपि च प्रमाणेन श्रुति-स्मृत्याद्यात्मकेन, **बाधो न भवति**—प्रतिबन्धो नाऽस्ति। **स त इत्यादिभिः**—'स त आत्मा अन्तर्याम्यमृतः' 'एष त आत्मा अन्तर्याम्यमृतः' इत्यत्र, 'ते आत्मा' इति व्यतिरेकनिर्देशपरैः वाक्यैस्सह, **सामरस्यं च भवति**—एकतात्पर्यकता च सिद्ध्यति ॥१४॥

## ४) अधिकरणार्थसङ्ग्रहः

अन्तर्याम्यधिकरणे—'यः पृथिव्यां तिष्ठन्' इत्यादिवाक्योक्तः अन्तर्यामी, 'द्रष्टा श्रोता' इति वाक्ये करणायत्तज्ञानत्वावगमात्, योगविशेषयुक्तो जीव एव—इत्याशङ्क्य,

एतेनैव वाक्येन सर्वनियमनस्य परमात्मधर्मस्य व्यपदेशात्, द्रष्ट्रादिशब्दानां रूपादि-साक्षात्कारिपरतया तेषां परमात्मन्युपपत्तेश्च, 'अन्तर्यामी परमात्मा'—इत्युक्तम् ॥

## ५) नयसङ्गतिमालिका

**अक्षिस्थपुरुषस्यैव ब्रह्मत्वस्योपपादिका।**
**अथाऽन्तर्याम्यधिकृतिः तेनोपोद्घातसङ्गतिः ॥४४॥**

॥ इति अन्तर्याम्यधिकरणम् ॥४॥

## (१६) अदृश्यत्वादिगुणकाधिकरणम् ॥१-२-५॥

## १) शारीरकन्यायकलापसङ्ग्रहः

**स्थूलत्व-दृश्यत्वनिषेधनेन सूक्ष्मं त्वदृश्यत्वगुणं प्रधानम्।**
**क्षेत्रज्ञ एवाक्षरमित्यसत् स्यात् प्रतिज्ञया तत्परतः परत्वात् ॥२५॥**

**स्थूलत्व....नेन**—'सुसूक्ष्मम्' इति स्थूलत्वस्य, 'अद्रेश्यम्' इति दृश्यत्वस्य च व्यावृत्त्या, **सूक्ष्मं तु**—'सुसूक्ष्मम्' इति श्रुतौ सूक्ष्मपदाभिधेयं वस्तु तु, **अदृश्यत्वगुणं प्रधानम्**—अतीन्द्रियं मूलप्रकृतिसंज्ञं वस्त्वेव, **अक्षरम्**—तद्वाक्यस्थाक्षरपदवाच्यं तु, **क्षेत्रज्ञ एव**—जीव एव, **इति**—एवमङ्गीकरणम्, **असत् स्यात्**—असाध्वेव भवेत्, **प्रतिज्ञया**—'अथ परा यया तदक्षरमधिगम्यते' इति प्रतिज्ञावाक्येन बोध्यस्याऽक्षरस्य, (यद्वा) एकविज्ञानेन सर्वविज्ञानस्य

प्रतिज्ञारूपेण ज्ञापकेन, **तत्परतः परत्वात्**—अव्याकृतापेक्षया उत्कृष्टात् क्षेत्रज्ञसमष्टिपुरुषादपि उत्कृष्टत्वात्, भूतयोनेरक्षरस्य। अतः भूतयोन्यक्षरं परं ब्रह्मैव ॥२५॥

## २) अधिकरणसारावलिः

**दृश्यत्वादेर्निषेधो विकृतिमति भवत्यक्षरे संनिकर्षात्**
**पञ्चम्युक्ताक्षरं तत् तदवधिकपरः पञ्चविंशोऽस्तु मा भूत्।**
**सर्वज्ञत्वादिदृष्टेः प्रथमसमुदितं त्वक्षरं ब्रह्म शुद्धं**
**पश्चादुक्तं तु जीवादिकमवधितया भेदतस्तत्परोक्तेः ॥१५॥**

**दृश्यत्वादेर्निषेधः**—मुण्डकान्तर्गतेन 'अद्रेश्यमग्राह्यम्' इत्यादिना दृश्यत्व-ग्राह्यत्वादेः अभावज्ञापनम्, **सन्निकर्षात्**- निषेध्यदृश्यत्वाश्रयपृथिव्यादिस्मृतिरूपात् सम्बन्धात्, **विकृतिमति अक्षरे**—विकारशब्दवाच्यावस्थायोग्ये प्रधाने एव, **भवति**—उक्तं भवति। (अतः) **पञ्चम्युक्ताक्षरम्**—'अक्षरात्परतः' इत्यत्र 'अक्षरात्' इति पञ्चम्यन्तेनाक्षरपदेन प्रतिपादितम्, **तत्**—प्रधानमेव भवितुमर्हति। **तदवधिकपरः**—तादृशाक्षरावधिकपरत्वाश्रयः अर्थस्तु, **पञ्चविंशः अस्तु**—तत्त्वेषु पञ्चविंशको जीव एव भवतु (साङ्ख्योक्तः) न तु परं ब्रह्म (इत्येवमाशङ्कनम्), **मा भूत्**—न सम्भवति। **सर्वज्ञत्वादिदृष्टेः**—'यः सर्वज्ञः सर्ववित्' इत्यादिकया श्रुत्या, भूतयोन्यक्षरे सर्वज्ञत्वादेः परमात्मैकगतस्य गुणस्य प्रतिपादनात्, **प्रथमसमुदितम् अक्षरं तु**—'तदक्षरम्' इति आदौ प्रतिपन्नम् अक्षरपदवाच्यं तु, **शुद्धं ब्रह्म**—स्वरूपतः स्वभावतश्च विकार-रहितं परं ब्रह्मैव। **पश्चदुक्तं तु**—द्वितीयवारम् 'अक्षरात् परतः' इत्युक्ताक्षरपदाभिधेयं तु, **जीवादिकम्**—जीवो वा भवतु प्रधानं वा भवतु। **अवधितया भेदतः**—परत्वरूपोत्कर्षावधित्वनिबन्धनं भेदं निमित्तीकृत्य, **तत्परोक्तेः**—तदवधिकोत्कर्षात्मकपरत्वाश्रयस्य परस्य ब्रह्मणः 'परतः परः' इत्यनेन उक्तत्वात् ॥१५॥

## ३) अधिकरणार्थसङ्ग्रहः

अदृश्यत्वादिगुणकाधिकरणे—'अथ परा यया तदक्षरमधिगम्यते' इति वाक्ये, 'अद्रेश्यम्' इत्यादिना निषिध्यमानस्य द्यावापृथिव्याद्यचेतनगतदृश्यत्वादेः पृथिव्यादिसजातीयसूक्ष्माचिदुपस्थापकत्वात्; अक्षरम् प्रधानम्; अक्षरात् परतः परश्च, जीवः—इत्याशङ्क्य,

सर्वज्ञत्वादीनां परमात्मधर्माणां प्रतिपादनात् अक्षरः, परमात्मा। अक्षरात् अव्यक्तात् परः यः प्रत्यगात्मा जीवः, तस्मादपि परश्च स परमात्मा। अत एव 'अक्षरात्परतः परः'—इति सिद्धान्तितम् ॥

४) नयसङ्गतिमालिका

अदृश्यत्वाधिकरणे द्रष्टृत्वादेरनुक्तितः ।
प्रकृतिर्वा पुमान्वेति शङ्कातः प्रत्युदाहृतिः ॥४५॥

॥ इति अदृश्यत्वादिगुणकाधिकरणम् ॥५॥

१७) वैश्वानराधिकरणम् ॥१-२-६॥

१) शारीरकन्यायकलापसङ्ग्रहः

कौक्षेयवह्निस्त्वथ देवता वा भूतं तृतीयं त्वथवा[1]ऽग्नि[1]शब्दात् ।
वैश्वानरः स्यादिति नैव यस्मात् त्रैलोक्य[2]देहः[2] [3]पुरुषाभिधा[3] च ॥२६॥

**वैश्वानरः**—'आत्मानमेवेमं वैश्वानरम्' इत्यादौ 'वैश्वानर'पदाभिधेयः, **कौक्षेयवह्निः**—जाठराग्निर्वा भवेत्, **अथ**—अथवा, **देवता वा**—अग्न्याख्यः देवताविशेषो वा, **अथवा**—यद्वा, **अग्निशब्दात्**—वैश्वनरशब्दस्य अग्नौ प्रयोगात्, **भूतं तृतीयं वा**—भूतपञ्चके तृतीयं तेजो वा, **स्यादिति**—प्रतिपाद्यं भवेदिति शङ्कनम्, **नैव**—नोचितमेव, **यस्मात्**—यतो हेतोः (अयम्), **त्रैलोक्यदेहः**—'अग्निर्मूर्धा' इत्यादिना लोकत्रयशरीरकः प्रतिपादितः । (तथा) **पुरुषाभिधा च**—अस्मिन् वैश्वानरे 'वैश्वानरं पुरुषविधं' इति श्रुतौ पुरुषसंज्ञा च वर्तते ; (अतः त्रैलोक्यवपुष्ट्वं पुरुषसंज्ञा च परमात्मन्येव युज्यते, नाऽन्यत्र) ॥२६॥

[पादोपसंहारः]

स्थूलस्य सूक्ष्मस्य तथेन्द्रियाणामेकैकशश्चावयवत्वतश्च ।
तद्देहतां [4]सम्प्रतिपाद्य[4] पश्चात् [5]तदन्यदेहत्व[5]मपाचकार ॥२७॥

**स्थूलस्य**—कार्यावस्थापन्नस्य, **सूक्ष्मस्य**—कारणावस्थापन्नस्य च जगतः, **तथा इन्द्रियाणाम्**—चक्षुरादीनां कर्मज्ञानेन्द्रियाणामपि च, **एकैकशश्च**—प्रत्येकं स्वकीयेन रूपेण, **अवयवत्वतश्च**—मूर्धादिरूपेण च, **तद्देहताम्**—परमात्मशरीरताम्, **सम्प्रतिपाद्य**—सम्यग्विचारपूर्वकं निर्णीय, **पश्चात्**—तदनन्तरम्, **तदन्यदेहत्वम्**—परमात्मेतरशरीरताम्, **अपाचकार**—बादरायणो निरसितवान् ॥२७॥

---

[1] त्व—क. [2] देहे—ख. [3] पुरुषोऽभिधा—क [4] सम्प्रतिपद्य—क
[5] अन्यत्वदेहत्व—क.

पादेनेत्थमनेनाऽर्थाज्जगतस्तच्छरीरता ।
सामानाधिकरण्येन तदन्येन च साधिता ॥२८॥

**अनेन पादेन**—द्वितीयेन चरणेन, **इत्थम् अर्थात्**—उक्तप्रकारादर्थात्, **जगतः**—विश्वस्य, **तच्छरीरता**—परमात्मानं प्रति वपुष्ट्वम्, **सामानाधिकरण्येन**—'सर्वं ब्रह्म' इति एकविभक्तिकनिर्देशेन, **तदन्येन**—'स आत्मा' इत्यादिव्यधिकरणनिर्देशेन, **च साधिता**—निर्व्यूढं वर्तते ॥२८॥

२) **अधिकरणसारावलिः** (श्लो. १९-२०)

स्वर्लोकादित्यवाताम्बरसलिलमहीरूपमूर्धादिक्लृप्त्या
ध्येयो वैश्वानरात्मा [1]स्थिरबहुविशयः[1] शब्दलिङ्गादिसाम्यात् ।
मैवं ; ब्रह्मेत्यधीतेर्भुवनतनुतया योगतस्त्वग्निशब्दो
वैशिष्ट्याद्वा क्रियाङ्गं स्ववपुषि परधीर्गार्हपत्यादिधीश्च ॥१९॥

**स्वर्लोका.... क्लृप्त्या**—सुवर्लोक-सूर्य-अनिल-व्योम-अप्-पृथिव्यात्मकानां मूर्ध-नेत्र-प्राण-मध्यकाय-मूत्रस्थान-चरणानां स्थानविशेषाणां कल्पनपूर्वकम्, **ध्येयः**—'यस्त्वेतमेवं प्रादेशमात्रं.... वैश्वानरमुपास्ते', .....इत्येवम् उपासनीयतया उपदिष्टः, **वैश्वानरात्मा**—वैश्वानराख्यः आत्मा, छान्दोग्ये यः अस्ति, सः, **स्थिरबहुविशयः**—दुर्निवारबहुकोटिकसंशयास्पदः । **शब्दलिङ्गादि-साम्यात्**—जाठराग्न्यादिषु चतुर्ष्वर्थेषु वैश्वानरशब्दस्य साम्यात्, (तथा) जाठराग्नौ प्राणाहुत्या-धारतारूपस्य, तेजोरूपे भौतिकाग्नौ देवतायां च अपरिच्छिन्नतारूपस्य, परमात्मनि पापप्रदाह-कतारूपस्य च तत्तल्लिङ्गस्य सद्भावात् इत्येवमाशङ्कने प्राप्ते, **मैवम्**—एतादृशी आशङ्का नोचिता, **'ब्रह्म' इत्यधीतेः**—'को न आत्मा ? किं ब्रह्म ? इति ब्रह्मशब्दस्यैवोक्तेः, 'ब्रह्म'शब्दस्य असति बाधके परमात्ममात्रपरत्वात्, (तथा) **भुवनतनुतया**—'मूर्धैव सुतेजाः' इत्यादिनोक्तजगच्छरीर-कत्वेन च । **अग्निशब्दस्तु**—'स एषोऽग्निर्वैश्वानरः' इति वैश्वानरे अग्निशब्दप्रयोगस्तु, **योगतः**—अग्रं नयतीति अवयवव्युत्पत्तिमवलम्ब्यैव वा, **वैशिष्ट्याद्वा**—शरीर-शरीरिभाव-रूपात् अग्निवैशिष्ट्याद्वा, **स्ववपुषि**—उपासकस्य स्वशरीरे, **परधीः**—परमात्मावयवकल्पनात्मिका धीः, 'मूर्धैव सुतेजाः' इत्यादिनोक्ता, (तथा) **स्ववपुषि गार्हपत्यादिधीश्च**—'उर एव वेदिः.... हृदयं गार्हपत्यः' इत्यादिनोपदिष्टा हृदयादौ गार्हपत्यादिकल्पनात्मिका मतिश्च, **क्रियाङ्गम्**—ब्रह्मविद्याङ्गभूतप्राणाहुत्यादिक्रियोपकारकम् ॥१९॥

---

[1] अस्थिरबहुविषयः—प. पा.

**अन्यस्मिन्नन्यदृष्ट्या न भवति विदुषां काऽपि निश्श्रेयसाप्ति-**
**स्तस्माद्वैश्वानरोऽसौ न पर [1]इति[1] फलं [2]चान्न[2]सिद्ध्यादि मैवम् ।**
**ब्रह्मैव ह्यन्यदृष्ट्यन्वितघटितमिह ब्रह्मशब्दाद्यबाधात्**
**सर्वाघध्वंस उक्तः फलमपि परमं ब्रह्म च व्याप्तमन्नम् ॥ १७ ॥**

**अन्यस्मिन् अन्यदृष्ट्या**—वस्त्वन्तरे वस्त्वन्तरत्वोपासनरूपया बुद्ध्या, **काऽपि**—दृष्ट्युपासने कुत्राऽपि, **निश्श्रेयसाप्तिः**—मोक्षसिद्धिः, **विदुषाम्**—दृष्ट्युपासनोपदेशपराणां ज्ञानिनाम्, **न भवति**—नैव सम्मता भवितुमर्हति । **तस्मात्**—दृष्ट्युपासनस्य निश्श्रेयसासाधकत्वात्, **असौ वैश्वानरः**—वैश्वानरविद्यायामुपास्यत्वेनोपदिष्टः, वैश्वानरात्मा, **न परः**—परमपुरुषो न भवितुमर्हति, **इति**—अतो हेतोः, **फलं च**—वैश्वानरात्मोपासनलभ्यं प्रयोजनमपि, **अन्नसिद्ध्यादि**—फलश्रुतौ ज्ञातम् अन्नलाभादिकमेव ; न मुक्तिः, इत्याशङ्कने प्राप्ते, **मैवम्**—एवमाशङ्कनं न साधु, **हि**—यतः, **इह**—अस्मिन् प्रकरणे, **ब्रह्मैव**—परं ब्रह्मैव, **अन्यदृष्ट्यन्वितघटितम्**—द्युमूर्धत्वादिदृष्टिविषयस्वस्वरूपघटितम्, ध्येयत्वेनोपदिष्टम् ; न अन्यत्, **ब्रह्मशब्दाद्यबाधात्**—'किं ब्रह्म ?' 'को न आत्मा ?' इति च प्रक्रान्तयोः ब्रह्मात्मशब्दयोः अबाधतोऽन्वयेन तत्त्यागायोगात्, **सर्वाघध्वंसः**—सर्वेषां पाप्मनां समूलनाशः, **उक्तः**—'सर्वे पाप्मानः प्रदूयन्ते' इति उपासनफलतयोक्तः । **अपि**—किं च, **फलम् अन्नम्**—उपासनप्रयोजनत्वेनोक्तमन्नपदाभिधेयमपि, **व्याप्तम्**—सर्वत्र सम्बद्धम्, विभु, **परमं ब्रह्म च**—'अहमन्नमहमन्नम्' इति तैत्तिरीयोक्तं परं ब्रह्मैव [इति न कोऽपि विरोध इति] ॥ १७ ॥

**त्रिष्वत्रोपासितॄणां मितहृदयगुहाक्ष्यन्तरश्चिन्त्य उक्तो**
**विश्वान्तर्यामितादेर्विपुलपरिमितिश्चिन्तनीयस्त्रयेऽथ ।**
**षट्सु ब्रह्मात्मशब्दौ पुरुषपदमपि क्षेत्र-तज्ज्ञप्रपञ्च-**
**व्यावृत्ते विश्वहेतौ प्रकरणनियमान्नामवृत्त्या [3]नमन्ति[3] ॥ १८ ॥**

**अत्र त्रिषु**—आद्येषु त्रिष्वधिकरणेषु, **उपासितॄणाम्**—मोक्षार्थोपासकानाम्, **मितहृदयगुहाक्ष्यन्तरः**—(परमात्मा) अल्पपरिमाणहृदय-गुहा-अक्ष्यन्तस्स्थत्वेन, **चिन्त्य उक्तः**—'अन्तर्हृदये' 'गुहाहितम्' 'एषोऽन्तरक्षिणि' इति वाक्यैः उपास्यत्वेन उपदिष्टः, **अथ त्रये**—तत्पश्चात्तनेऽधिकरणत्रये तु, **विश्वान्तर्यामितादेः**—निखिलजगदन्तर्यामित्वादिकं हेतूकृत्य,

---

[1] इह—आ. [2] स्वन्न—आ. [3] ऽऽमनन्ति—आ.

**विपुलपरिमितिः**—तद्विरुद्धमहापरिमाणवत्तया, **चिन्तनीयः**—उपास्यतयोक्तः । **षट्सु**—एतत्पादीयेषु षडधिकरणेषु, **ब्रह्मात्मशब्दौ पुरुषपदमपि**—'ब्रह्म, आत्मा, पुरुषः' इतीमानि पदानि, **क्षेत्र-तज्ज्ञप्रपञ्चव्यावृत्ते**—क्षेत्र-क्षेत्रज्ञात्मकजगद्विलक्षणे, **विश्वहेतौ**—अत एव तन्निमित्तोपादानभूते परमात्मनि, **प्रकरणनियमात्**—परमात्मप्रकरणायत्तात् नियन्त्रणात्, **नामवृत्त्या**—रूढ्यात्मिकया वृत्त्या, **नमन्ति**—संज्ञारूपा भवन्ति, (णम-प्रह्वत्वे शब्दे च पा.धा. 981) [इति निर्णीयते] ॥ १८ ॥

**तज्जत्वादेर्हि सर्वं जगदभिगदितं ब्रह्मभावेन पूर्वं**
**सर्वान्तर्यामिता च प्रभवितुरुदिता सर्वतद्देहता च ।**
**तस्माद्विश्वैक्यबाधप्रभृतिबहुविधापार्थबम्भ्रम्यमाण-**
**क्षुद्रक्षीबोक्तिजालं निखिलमिह नयैः सूत्रकारो निरास ॥ १९ ॥**

**तज्जत्वादेः**—तस्माज्जातत्व-तस्मिँल्लीयमानत्व-तदधीनप्राणनत्वानि हेतूकृत्य, **पूर्वम्**—सर्वत्रप्रसिद्ध्यधिकरणे, **सर्वं जगत्**—अखिलं विश्वम्, **ब्रह्मभावेन गदितम्**—ब्रह्मतादात्म्यवत्तया निर्णीतम्, **प्रभवितुः**—सर्वजगत्कारणस्य परमात्मनः, **सर्वान्तर्यामिता**—सर्वनियन्तृत्वरूपा सर्वात्मता, **सर्वतद्देहता च**—अखिलतच्छरीरकता च, **उदिता**—अन्तर्यामिब्राह्मणादितः, समर्थिता, **तस्मात्**—ततो हेतोः, **निखिलम्**—समस्तमपि, **विश्वैक्य....जालम्**—'विश्वं ब्रह्म च एकमेव' 'ब्रह्मैव सत्यम्' 'विश्वं बाधितम्' इत्येवमादिनानाप्रकारश्रुतिविरुद्धार्थचिन्तनकृतभ्रान्तिपरम्पराप्रविष्टानां क्षुद्रं मत्तप्रलापवद्धासमानं च वचनजातम्, **इह नयैः**—एतत्पादीयैरधिकरणैः, **सूत्रकारः**—बादरायणः, **निरास**—निराचकार ॥ १९ ॥

**स्वाधीनाशेषसत्ता-स्थिति-यतनतया सर्वभावेन तिष्ठन्**
**ग्रस्ताशेषोऽक्षिनित्यस्थितिरखिलतनुः कल्पिताग्न्यादिगात्रः ।**
**स्वर्लोकाद्यङ्गवैश्वानरमतिविषयो लक्षणस्यादिमस्य**
**प्रोक्तः पादे द्वितीये श्रुतिनिकरशिरःशेखरः श्रीनिवासः ॥ २० ॥**

**आदिमस्य लक्षणस्य**—प्रथमस्याध्यायस्य, **द्वितीये पादे**—द्वितीये चरणे, **स्वाधीना....यतनतया**—(भगवतः) स्वायत्तसर्वजगत्सम्बन्धिस्वरूपलाभ-कालान्तरानुवृत्ति-प्रवृत्तिकत्वेन, **सर्वभावेन तिष्ठन्**—सर्वजगत्तादात्म्येन वर्तमानः, **ग्रस्ताशेषः**—कबलीकृतनिखिलचराचरः, **अक्षिनित्यस्थितिः**—देहिनाम् अक्षिमण्डले स्थिरावस्थानवान्, **अखिलतनुः**—सर्वशरीरकः, **कल्पिताग्न्यादिगात्रः**—'अग्निर्मूर्धे'ति उपासनार्थकल्पिताग्निपदवाच्यद्युमूर्धत्वादिगुणविशिष्टः, **स्वर्लोका....विषयः**—'मूर्धैव सुतेजाः' इत्याद्युक्तस्वर्लोकादित्याद्यङ्गकवैश्वानरत्वोपासनविषयी-

भूतश्च, **श्रुतिनिकरशिरःशेखरः**–सर्वश्रुत्यन्तभूषणभूतः, **श्रीनिवासः**–तन्नामा भगवान् नारायणः, **प्रोक्तः**–विचार्य सम्यङ्निर्धारितः (बादरायणेन) ॥ २० ॥

### ३) अधिकरणार्थसङ्ग्रहः

**वैश्वानराधिकरणे**—'आत्मानमेवेमं वैश्वानरम्' इत्यादिवाक्ये, 'वैश्वानर'शब्दस्य, जाठरभूततृतीय-देवता-परमात्मसु अविशेषेण प्रयोगदर्शनात्, 'परमात्मा' इति अनिर्णयः—इत्याशङ्क्य,

साधारणस्य 'वैश्वानर'शब्दस्य, मुमुक्षुभिः पृच्छ्यमानत्वादिभिः परमात्मलिङ्गैः विशेष्यमाणत्वात्, 'परमात्मा' इति शक्यनिर्णयः—इति सिद्धान्तितम् ॥

### ४) नयसङ्गतिमालिका (श्लो. ४६, ४७)

**प्राग्विश्वरूपोपन्यासः द्युमूर्धत्वादिना कृतः ।**
**तत्क्लृप्त्या चिन्त्यते वैश्वानरविद्याऽपवादतः ॥ ४६ ॥**
**इत्थं ह्यधिक्रियाषट्कं पेटिकाद्वयलक्षणम् ।**
**अध्याये प्रथमे द्वैतीयीकपादे सुसङ्गतम् ॥ ४७ ॥**

॥ इति वैश्वानराधिकरणम् ॥ ६ ॥

॥ इति प्रथमेऽध्याये द्वितीयः पादः ॥

—o—

॥ प्रथमाध्यायस्य तृतीयः पादः ॥

द्युभ्वाद्यधिकरणम् ॥ १–३–१ ॥

### १) शारीरकन्यायकलापसङ्ग्रहः

**मनःप्रभृत्यक्षसमाश्रयत्वात् द्युभ्वाश्रयश्चेतन एव नाऽन्यः ।**
**एवं न [1]शङ्क्यं[1]; स्फुटमात्मशब्दात् मुक्तोपसृप्यव्यपदेशतश्च ॥ २९ ॥**

**मनः....समाश्रयत्वात्**—'मनःसह प्राणैश्च सर्वैः' इत्युक्तमनआदीन्द्रियाश्रयत्वात्, **द्युभ्वाश्रयः**—'यस्मिन् द्यौः पृथिवी च' इत्युक्तद्युपृथिव्याश्रयभूतोऽर्थः, **चेतन एव**—जीवात्मैव, **अन्यो न**—इतरः परमात्मा न भवितुमर्हति, इति पूर्वपक्षे प्राप्ते, **नैवं शङ्क्यम्**—एवं शङ्का न

---

[1] शक्या—क, शक्यं—ख.

युक्ता, **स्फुटम् आत्मशब्दात्**—स्पष्टं श्रुतात् 'तमेवैकं जानथात्मानम्' इति निरुपाधिकात्मत्व-बोधकात् 'आत्म'शब्दात्, **मुक्तोपसृप्यव्यपदेशतश्च**—(तथा) 'तदा विद्वान् पुण्य-पापे.... साम्यमुपैति' इति मुक्तानां परमगतित्वस्य मुख्यतया प्रतिपादितत्वादपि ॥ (अतः परमात्मैव द्यु-पृथिव्यायतनम्; न जीवः) ॥ २९ ॥

२) अधिकरणसारावलिः (श्लो. १–५)

**स्पष्टैर्जीवादिलिङ्गैर्युतमिह हि! वचः साध्यते ब्रह्मनिष्ठं**
**मध्येऽत्राऽधिक्रियोक्तिस्त्रिषु किमिति न तत्तत्प्रसङ्गात्तदुक्तेः ।**
**किञ्चास्यामर्धलोकायतिकनिरसनं प्रस्तुतार्थोपयुक्तं**
**ब्रह्मोत्कर्षश्च सिध्येद् गलति दिविषदां कारणैक्यभ्रमश्च ॥ १ ॥**

**इह**—प्रथमाध्यायस्य तृतीये पादे, **स्पष्टैः**—संशयानास्पदैः, **जीवादिलिङ्गैः युतम्**—चेतनाचेतनान्वयिधर्मप्रतिपादकम्, **वचो हि!**—औपनिषदं वाक्यजातमेव खलु! **ब्रह्मनिष्ठं साध्यते**—ब्रह्मतात्पर्यकमिति निर्णीयते । **अत्र मध्ये**—तृतीयपादमध्ये एव, **त्रिषु**—देवता-मधु-अपशूद्राधिकरणेषु, **अधिक्रियोक्तिः**—देवादीनां विद्याधिकारविचारः, **किमिति**—कथं वा सङ्गच्छते ? इत्याक्षेपः, **न**—नोचितः, **तत्प्रसङ्गात्**—प्रधानप्रतिपाद्यान्तर्भूतेन प्रमिताधिकरणार्थेन सह अधिकारस्य प्रसक्तत्वात्, ('मनुष्याधिकारत्वात्' इति) **तदुक्तेः**—अधिकारनिरूपणस्याऽपि सङ्गतत्वात्, **किं च**—अपि च, **अस्याम्**—शारीरकमीमांसायाम्, **अर्धलोकायतिकनिरसनम्**—वेदोक्तं कर्माभ्युपगम्य, वेदोक्ताया एव देवतायाः अनभ्युपगमं कुर्वतां निरीश्वरमीमांस-कानां निराकरणम्, **प्रस्तुतार्थोपयुक्तम्**—परमपुरुषगतजगत्कारणत्वस्य समर्थनौपयिकम् । **ब्रह्मोत्कर्षश्च**—परस्य ब्रह्मणः सर्वोपास्यत्वकृतः अतिशयोऽपि, **सिध्येत्**—सम्पन्नो भवेत् । **दिविषदाम्**—ब्रह्मरुद्रेन्द्रादीनाम्, **कारणैक्यभ्रमश्च**—कारणभूतेन परब्रह्मणा सह अभेदभ्रमोऽपि, **गलति**—दूरीभवति ॥ १ ॥

**न्यायाः सप्तैव साक्षात् परविषयतया सङ्घटन्तेऽत्र पादे**
**सर्वाधारः स आत्मा स्वमहिमनिलयस्तत्र तात्पर्यभूमिः ।**
**तत्सिद्ध्यै शासनाद्यं कथितमिह मिथः स्यूतमालोचनीयं**
**सर्वेशत्वं च षष्ठप्रमितनयमितं पश्चिमन्यायरक्ष्यम् ॥ २ ॥**

**अत्र पादे**—प्रथमाध्यायीयतृतीयचरणे, **सप्त न्याया एव**—सप्ताधिकरणान्येव, **साक्षात्पर-विषयतया**—अव्यवधानतः परमात्मपरताप्रतिपादनमुखेन, **सङ्घटन्ते**—संगता भवन्ति । **तत्र**--

परविषयकेषु सप्तस्वधिकरणेष्वपि, **तात्पर्यभूमिः**—पर्यवसितप्रतिपाद्यकाष्ठा, **सर्वाधारः**—स्वेतर-समस्तजगत्स्थितिकारणम्, **स्वमहिमनिलयः**—स्वमहिमप्रतिष्ठितः, **स आत्मा**—पर आत्मा, **तत्सिद्धयै**—अनन्याधारत्वसहितसर्वाधारतासम्पत्त्यर्थम्, **इह**—एतत्पादीयाक्षराधिकरणादौ, **कथितम्**—प्रतिपादितम्। **शासनाद्यम्**—सर्वप्रशासितृत्वादिकम्, **मिथःस्यूतम्**—अन्योन्यम् अपेक्षितार्थोपपादकतया संश्लिष्टमिति, **आलोचनीयम्**—चिन्तनीयम्। **षष्ठप्रमितनयमितम्**—एतत्पादीये षष्ठे प्रमिताधिकरणे निर्णीतम्, **सर्वेशत्वं च**—भूतभव्येशितृत्वं तु, **पश्चिमन्यायरक्ष्यम्**—अन्तिमाधिकरणेन अर्थान्तरत्वादिनयेन परिपोषणीयमिति ॥ २ ॥

**सिद्धं प्रागेव मुण्डोपनिषदि परमं ब्रह्म तद्धर्मभेदै-**
**र्भेदोक्तेश्चेत्यकाण्डे किमिति पुनरिमां पिष्टपेषं पिनष्टि ।**
**सत्यं क्षेत्रज्ञधर्मैः पटुभिरुपनता प्रक्रियाभेदशङ्का**
**प्रख्याप्य प्रत्यभिज्ञामपुनरुदयमुन्मूल्यते शब्दपूर्वैः ॥ ३ ॥**

**प्रागेव**—पूर्वपादीये अदृश्यत्वाधिकरणे एव, **परमं ब्रह्म**—जिज्ञास्यं परं तत्त्वम्, **तद्धर्मभेदैः**—स्वासाधारणैः सर्वज्ञत्वादिधर्मविशेषैः, (तथा) **भेदोक्तेश्च**—जीवभेदघटितपरत्ववचनाच्च, **मुण्डोपनिषदि**—मुण्डकश्रुतौ प्रतिपाद्यतया, **सिद्धमिति**—विचार्य निर्णीतमिति स्थिते, **अकाण्डे**—अवसराप्राप्तावपि, **इमाम्**—बुद्धिस्थां मुण्डकोपनिषदमेव, **किमिति**—कस्माद्धेतोः, **पिष्टपेषं पिनष्टि**—मृदितस्यैव पुनर्मर्दनमिव पुनर्विचारयत्यनेन पादेन, इति शङ्कायाम्; **सत्याम्**—विचारितत्वांशः अङ्गीक्रियते, परं पिष्टपेषणत्वं नाऽस्ति, **पटुभिः**—स्पष्टप्रतिपन्नैः, **क्षेत्रज्ञधर्मैः**—जीवासाधारणैर्नाड्याधारत्वादिभिर्धर्मैः, **उपनता**-सम्भाविता, **प्रक्रियाभेदशङ्का**—प्रकरणान्तरत्वसंशयोत्पत्तिः, **प्रत्यभिज्ञां प्रख्याप्य**—'अमृतसेतुत्वादिभिः परमात्मासाधारणैः धर्मैः पूर्वप्रक्रान्तः परमात्मैवायम्, नाऽन्य इति' बुद्धिं स्थिरीकृत्य, **अपुनरुदयम्**—यथा पुनर्नोत्पद्येत तथा, **शब्दपूर्वैः**—श्रुतिप्रभृतिभिः प्रमाणैः, **उन्मूल्यते**—उत्पाट्यते ॥ ३ ॥

**यस्मिन्नोतं मनोऽन्यैः सह करणगणैर्जायते यश्च नाना**
**नाड्याधारश्च योऽन्तश्चरति स करणी कर्मभोक्तेति चेन्न ।**
**विश्वाधारात्मभावादमृतवितरणान्मुक्तसृप्यत्ववादात्**
**प्रागुक्तप्रक्रियैक्यादनशनसहितात् काशनाच्चाऽन्यसिद्धेः ॥ ४ ॥**

**अन्यैः करणगणैः सह**—इतरैः प्राणादिभिः कर्म-ज्ञानेन्द्रियबृन्दैश्च साकम्, **मनः**—चेतः, **यस्मिन् ओतम्**—यस्मिन् वस्तुनि समवेतम्, **यश्च नाना जायते**—यश्चार्थः देवादिबह्वाकारेण जन्माश्रयो भवति, **यश्च नाड्याधारः**—योऽर्थः नाडीसङ्घाताधारभूतः, **यः**

**अन्तश्चरति**—य एव चाऽर्थः देहमध्यसञ्चरणवान्, **सः**—तादृशोऽर्थः, **करणी कर्मभोक्ता**—करणग्रामवान् पुण्यापुण्यफलभोक्तैव (जीव एव) **इति चेत्**—एवमाशङ्कनम्, **न**—साधु न भवति; **विश्वाधारात्मभावात्**—द्यावापृथिव्युपलक्षितसकलजगदाधारस्वरूपत्वात्, **अमृतवितरणात्**—अमृतशब्दवाच्यमोक्षप्रदातृत्वात्, **मुक्तसृप्यत्ववादात्**—मुक्तात्मभिः परमसाम्यापत्तितः प्राप्यत्वश्रुतेः, **प्रागुक्तप्रक्रियैक्यात्**—पूर्वश्लोकोक्तात् प्रकरणाभेदात्, **अनशनसहितात् काशनाच्च**—कर्मफलभोगाभावसहकृतात् अम्लानदीप्तियोगादपि, **अन्यसिद्धेः**—जीवादन्यस्य पुरुषविशेषस्यैव प्रतीतेः, 'यस्मिन् द्यौः' इत्युक्तः परमात्मैव ॥ ४ ॥

**व्याप्ते[1]ऽस्मिन्न[1]क्षमोतं यदि किमिह ततो जन्म चास्येच्छयोक्तं**
**नाडीचक्रस्य नाभिर्भवति च स परो हार्दरूपेण तिष्ठन् ।**
**निष्कम्पव्यापिनोऽन्तश्चरणमपि शुभैर्विग्रहैरस्ति लोके**
**सौबालाम्नातवद्वा चरणमिदमपि स्यादधिष्ठानमात्रम् ॥ ५ ॥**

**व्याप्ते**—'अन्तर्बहिश्च तत्सर्वं व्याप्य' इत्युक्तरीत्या सर्वव्यापके, **अस्मिन्**—परमात्मनि, **अक्षम्**—सर्वान्तर्गतम् इन्द्रियादिकमपि, **ओतं यदि**—नित्यसम्बद्धं यदि, **ततः**—इन्द्रियसम्बन्धमात्रेण, **इह किम्**—अत्र किं छिन्नम्? **अस्य च**—परमात्मनोऽपि, **इच्छया जन्म**—स्वसङ्कल्पायत्तं शरीरग्रहणम्, **उक्तम्**—'बहुधा जायमानः' इति प्रतिपादितम् । **हार्दरूपेण**—हार्दसंज्ञकेन अन्तर्यामिरूपेण, **तिष्ठन्**—हृदयाख्ये देहान्तःप्रदेशे अवस्थितः, **स परः**—वेदान्तप्रतिपाद्यः परमात्माऽपि, **नाडीचक्रस्य**—नाडीबृन्दस्य, **नाभिर्भवति**—आधारो भवितुमर्हत्येव, **निष्कम्पव्यापिनोऽपि**—चलनं विनैव सर्वैः सह सम्बन्धवतोऽपि परमात्मनः, **लोके**—जगति, **अन्तःसञ्चरणमपि**—उपासकानुग्रहोपयोगि हृदयान्तःसञ्चाराख्यं, कर्माऽपि, (तथा) **शुभैर्विग्रहैः**—शुभाश्रयपदवाच्यैः अप्राकृतैर्दिव्यैश्शरीरैः सञ्चरणमपि च, **अस्ति**—विभवादिरूपेण शास्त्रसम्मतं सम्भवत्येव, **वा**—अथवा **सौबालाम्नातवत्**—'यः पृथिवीमन्तरे सञ्चरन्' इति सुबालोपनिषदुक्तेन क्रमेण, **इदमपि चरणम्**—'स एषोऽन्तश्चरते' इत्युक्तमन्तःसञ्चरणमपि, **अधिष्ठानमात्रं स्यात्**—अन्तर्यामित्ववेषेण अवस्थानमात्रमेव भवेत् ॥ ५ ॥

## ३) अधिकरणार्थसङ्ग्रहः

एवम् अस्पष्टलिङ्गकानि वाक्यानि निरूपितानि । तृतीये स्पष्टजीवादिलिङ्गकपादे द्युभ्वाद्यधिकरणे—'यस्मिन् द्यौः' इत्यादिवाक्ये, 'संहता यत्र नाड्यः' इति नाडीसम्बन्धश्रवणात्, द्युभ्वाद्यायतनं जीवः—इत्याशङ्क्य,

---

[1] तत्रा—आ.

'अमृतस्यैष सेतुः' इति अमृतोपायत्वस्य परमात्मासाधारणस्य श्रवणात्, हृदयद्वारा नाडीसम्बन्धस्य परमात्मन्युपपत्तेश्च, द्युभ्वाद्यायतनं परमात्मा—इति सिद्धान्तितम् ॥

४) **नयसङ्गतिमालिका** (श्लो. ४८, ४९)

**अथ द्वाभ्यां चतुर्भिश्च त्रिभिरेकेन च क्रमात् ।**
**न्यायैस्तृतीयचरणे पेटिकानां चतुष्टयम् ॥ ४८ ॥**

**द्युपृथिव्यादिसम्बन्धः प्राक् पादान्ते निरूपितः ।**
**जीवेऽस्तीत्यपवादेन द्युभ्वादिनयनिर्णयः ॥ ४९ ॥**

इति द्युभ्वाद्यधिकरणम् ॥ १ ॥

—o—

भूमाधिकरणम् ॥ १-३-२ ॥

१) **शारीरकन्यायकलापसङ्ग्रहः**

**नामाद्युपक्रम्य कृतोपदेशः समापितः प्राणननाम्नि जीवे ।**
**ततः स भूमेति न शङ्कनीयं सत्योपदेशादधिकं त्वमुष्मात् ॥ ३० ॥**

**नामादि**—नाम-वाक्प्रभृतिकम्, **उपक्रम्य**—'नामोपास्व' इत्यादिनाऽऽरभ्य, **कृतोपदेशः**—छान्दोग्यसप्तमप्रपाठके सनत्कुमारेण नारदाय कृतः उपदेशः, **प्राणननाम्नि**—प्राणशब्दाभिधेये, **जीवे**—जीवात्मनि, **समापितः**—'प्राणो ह्येवैतानि सर्वाणि भवति' इत्यनेनोपसंहृतः, **ततः**—तस्माद्धेतोः, **सः**—उपदेशान्ते उपसंहृतः प्राणाख्यो जीव एव, **भूमा**—'भूमा त्वेव विजिज्ञासितव्यम्' इति जिज्ञासितव्यत्वेनोक्तः 'भूम'शब्दार्थः, **इति न शङ्कनीयम्**—एवं शङ्का नैव कार्या ; **अमुष्मात् अधिकम्**—प्राणादप्युत्कृष्टतया, **सत्योपदेशात्**—सत्यपदार्थस्यैव उपास्यतया उपदिष्टत्वात् ॥ ३० ॥

२) **तत्त्वसारः**

**भूमाख्यः पुरुषोत्तमो यदधिकं ब्रह्मेह सत्याह्वयं**
**प्राणाख्यादवरात्मनस्तुबलतस्तज्ज्ञाधिकः सत्यवित् ।**
**यः सत्यं वदतीति वाग्गमयितुं न ह्यग्निहोत्र्यन्तरं**
**शक्नोति प्रकृताग्निहोत्र्यवगमात् भङ्गस्तु शब्दश्रियः ॥ २९ ॥**

**भूमाख्यः**—छान्दोग्यसप्तमे विजिज्ञासितव्यतयोक्तः भूमपदार्थः, **पुरुषोत्तमः**—पुरुषाणां मध्ये श्रेष्ठो नारायण एव ; **यत्**—यस्माद्धेतोः, **इह**—अस्मिन् प्रकरणे, **सत्याह्वयं ब्रह्म**—

'सत्य'पदाभिधेयं परं ब्रह्मैव, **प्राणाख्यात्**—'प्राण'शब्दवाच्यात्, **अवरात्मनः अधिकम्**—जीवादुत्कृष्टं 'सत्यं त्वेव विजिज्ञासितव्यम्' (छां.उ. 7–16–1) इति जिज्ञास्यतया उपदिष्टमास्ते, **तुबलतः**—'एष तु वा अतिवदति यः सत्येनातिवदति' (छां.उ. 7–16–1) इति वाक्यगत'तु' शब्दबलात्, **सत्यवित्**—सत्याख्यार्थविषयकातिवादित्ववान् पुरुषः, **तज्ज्ञाधिकः**—प्राणवेदिनः पुरुषात् श्रेष्ठः तदपेक्षयाऽतिरिक्तः, इति च उपदिश्यते। **हि**—यतः, **यःसत्यं वदतीति वाक्**—अग्निहोत्रप्रकरणस्थम् अग्निहोत्रप्रशंसनपरं यत् 'एष तु वा अग्निहोत्री यस्सत्यं वदति' इति वाक्यमस्ति तत्, **प्रकृताग्निहोत्र्यवगमात्**—प्रकरणपठितवाक्यावगतात् अग्निहोत्रिणोऽपेक्षया, **अग्निहोत्र्यन्तरम्**—अन्यमग्निहोत्रिणम्, **गमयितुम्**—बोधयितुम्, **न शक्नोति**—न समर्थं भवति ; तत्सामर्थ्याभावात् इति, (तत्र) **'तु'शब्दश्रियः**—'तु'शब्दस्वरसतायाः, **भङ्गः**—त्यागः, (अगत्या सह्यते) प्रकृते तु तुशब्दस्वारस्यत्यागो दोषावह एवेति, सत्यातिवादी, प्राणातिवादिनोऽन्यः उत्कृष्ट एवेति ॥ २९ ॥

### ३) अधिकरणसारावलिः (श्लो. ६–९)

**आत्मज्ञानाभिलाषादनुपरतशुचे नारदाय प्रयुक्तं**
**प्राणे सानत्कुमारं विरमति वचनं हिंसनार्हः स जीवः ।**
**अल्पप्रत्यर्थिभूमा निरवधिकसुखोऽप्येष एवेति चेन्न**
**प्राणाख्यात् 'सत्य'शब्दोदितमधिकतयोपास्यमत्र ह्युपात्तम् ॥ ६ ॥**

**आत्मज्ञानाभिलाषात्**-आत्मवेदनेच्छातः, **अनुपरतशुचे**-अनिवृत्तशोकाय, **नारदाय**-नारदनाम्ने मुनये, **प्रयुक्तम्**—प्रवृत्तम्, **सानत्कुमारं वचनम्**—सनत्कुमारकृतोपदेशात्मकं भूमविद्यागतं वाक्यजातम्, **प्राणे विरमति**—प्राणरूपे अर्थे उपदिष्टे समाप्तं भवति । **सः**—प्राणपदार्थः, **हिंसनार्हः**—हिंसितुमर्हः, **जीवः**—सप्राणश्चेतन एव, **अल्पप्रत्यर्थिभूमा**—समभिव्याहृताल्पशब्दार्थप्रतिद्वन्द्विभूतः' भूम'शब्दार्थोऽपि, **निरवधिकसुखः**—अपरिच्छिन्नानन्दरूपः, **एष एव**—जीवरूपः प्राण एव, **इति चेत्**—एवं शङ्कनम्, **न**—युक्तं न भवति, **हि**—यतः, **अत्र**—प्रकरणेऽस्मिन्, **सत्यशब्दोदितम्**—'सत्यं त्वेव विजिज्ञासितव्यम्' (छां.उ. 7-16-1) इति सत्यशब्दोल्लिखितम्, **उपास्यम्**—उपासनीयं वस्तु, **प्राणाख्यात्**—'प्राण'पदवाच्यजीवापेक्षया, **अधिकतया**—अतिरिक्ततया उत्कृष्टतया च, **उपात्तम्**—उपदिष्टं वर्तते ॥ ६ ॥

नामाद्याशान्तवेद्ये प्रतिवचनवशात् प्रश्नतश्चाधिकोक्तेः
प्राणे विश्रान्तिदृष्ट्या भवतु तदवधिः प्रस्तुतात्मोपदेशः ।
मैवं, जातो हि नामादिवदिह परमादात्मनः प्राण उक्तः
स्वस्मादित्यत्र तत्स्यादिति न विघटनात् स्वारसिक्या विभक्तेः ॥ ७ ॥

**नामाद्याशान्तवेद्ये**—'नामोपास्व' (छां. उ. 7-1-4) इत्यारभ्य 'आशामुपास्व' (छां.उ. 7-14-1) इत्यन्तं वेद्यतया विहिते नामप्रभृत्याशापर्यन्ते अर्थचतुर्दशके, **प्रश्नतः**—'अस्ति भगवो नाम्नो भूयः' (छां.उ. 7-1-5) इत्यादिरूपात् प्रश्नात्, **प्रतिवचनवशात् च**—'वाग्वाव नाम्नो भूयसी' (छां.उ. 7-2-1) इत्यादिरूपात् उत्तराच्च सिद्धायाः, **अधिकोक्तेः**—अतिशयितान्यान्यवस्तुकथनस्य, **प्राणे विश्रान्तिदृष्ट्या**—प्राणपर्यन्ततायाः श्रुतौ दर्शनात्, **प्रस्तुतात्मोपदेशः**—प्रक्रान्तः आत्मसम्बन्धी उपदेशः, **तदवधिः भवतु**—तत्पर्यन्त एव स्यात्, (इति आशङ्कने प्राप्ते;) **मैवम्**—ईदृशमाशङ्कनं न युज्यते, **हि**—यतः, **इह**—वेद्यार्थोपदेशप्रकरणे, **नामादिवत्**—नामप्रभृतिपदार्थसदृशतया, **प्राणः**—प्राणरूपः अर्थोऽपि, **परमात् आत्मनः**—परस्मादात्मनः सकाशात्, **जात उक्तः**—'आत्मतः प्राणः' (छां.उ. 7-26-1) इति उत्पत्तिमानेव प्रतिपादितः । **अत्र**—श्रुतिवाक्यगतम्, **तत्**—आत्मत उत्पत्तिवचनम्, **स्वस्मात् इति स्यात्**—स्वहेतुकाविर्भावरूपं भवेत्नाम्. **इति न**—एवं चिन्तनमयुक्तमेव ; **स्वारसिक्याः**—भेदघटितजन्य-जनकभावप्रतिपादनस्वभावायाः, **विभक्तेः**—पञ्चम्याः, **विघटनात्**—स्वार्थप्रतिपादकत्वाभावप्रसङ्गात् ॥ ७ ॥

प्राणद्रष्टातिवादी तदनुवदनतश्चोदितः सत्यवादः
तस्मात् सर्वाहमर्थः सकलजनयिता प्राण एवेति चेन्न ।
एष त्वित्यन्यतोक्तेरतिवदनकृतः प्राक्तनादस्य तद्वत्
न त्वन्योऽस्त्यग्निहोत्री स्वमहिमनिलये ह्यत्र धर्मोपपत्तिः ॥ ८ ॥

**प्राणद्रष्टा**—नामाद्युपास्यपरम्परान्तिमप्राणरूपार्थसाक्षात्करणशीलः पुरुषः, **अतिवादी**—स्वोपास्यस्य प्राणस्य सर्वोत्कृष्टत्वकथनकृतातिवादित्ववानित्युक्तः, **तदनुवदनतः**—प्राणातिवादिनः अनुवादपूर्वकम्, **सत्यवादः**—सत्यार्थवादरूपः अर्थः, **चोदितः**—'एष तु वा अतिवदति, यः सत्येनाति वदति' (छां.उ. 7-16-1) इति वाक्येन अङ्गतया विहितः । **तस्मात्**—'एष तु वा अतिवदति' इत्यस्य प्राणोपासनाङ्गतया सत्यवादविधायकत्वनिश्चयात्, **सर्वाहमर्थः**—सर्वैः प्रयुज्यमानस्य 'अहं'शब्दस्याभिधेयः, 'अहमेवेदं सर्वम्' (छां.उ. 7-25-1) इति उत्तरत्रोक्तो वा, **सकलजनयिता**—सर्वस्य जगतः स्वीयादृष्टद्वारकस्रष्टृत्ववान्, **प्राण एव**—'प्राण'पदवाच्यो

जीवात्मैव, **इति चेत्**—एवमाशङ्कनम्, **न**—नैव युक्तम्; **एष त्विति**—'तु'शब्दघटितेन 'एष तु वा अतिवदति' इति वाक्येन, **अस्य अतिवदनकृतः**—सत्यातिवादकर्तुः पुरुषस्य, **प्राक्तनात्**—प्राणातिवाद्यपेक्षया, **अन्यतोक्तेः**—भेदस्य कण्ठोक्तेः, **तद्वत्**—प्राणातिवाद्यतिरिक्तः सत्यातिवादीव, **अन्यः अग्निहोत्री**—पूर्वाग्निहोत्रिणो भिन्नः कश्चन अग्निहोत्री, **न अस्ति**—नैव प्रकरणपठितो वर्तते इति, पूर्वाग्निहोत्र्यनुवादेन सत्यवदनस्याङ्गतोक्तिर्युक्ता। **स्वमहिमनिलये**—स्वे महिम्नि प्रतिष्ठिते, **अत्र हि**—परमात्मन्येव खलु, **धर्मोपपत्तिः**—प्रकरणोपात्तानां स्वाभाविकामृतत्वादीनां सर्वेषां धर्माणामबाधेनाऽन्वयः सम्भवति ॥ ८ ॥

**नामाऽऽदौ वाक् च तस्योपरि तदनु मनश्चाथ सङ्कल्पनामा**
**चित्तं ध्यानं च तस्मा[1]त्परमपि[1] च [2]बलं स्याच्च विज्ञानपूर्वम्[2] ।**
**अन्नं तोयं च तेजो गगनमपि [3]ततो मन्मथः[3] स्यात्तथाऽऽशा**
**[3]प्राणः सत्यः परात्मा[3] सकल[4]नियमिता[4] गम्यते भूमवाक्ये ॥ ९ ॥**

**भूमवाक्ये**—भूमविद्यासम्बन्धिनि वाक्यसन्दर्भे, **आदौ नाम**—प्रथमतः वेद्यतयोक्तं नामात्मकं वस्तु, **तस्योपरि च**—नाम्नोऽनन्तरं च, **वाक्**—वाग्रूपोऽर्थः, **तदनु च मनः**—वाचः पश्चात् मनोरूपं वेद्यम्, **अथ च सङ्कल्पनामा**—मनसोऽनन्तरं सङ्कल्पाख्योऽर्थः, **चित्तं ध्यानं च**—सङ्कल्पादुपरि चित्ताख्यं वस्तु, तथैव ध्यानमपि, **तस्मात् परमपि च**—ध्यानानन्तरमपि, **विज्ञानपूर्वं बलं च स्यात्**—विज्ञानं बलं च वेद्यं भवेत्, **अन्नं तोयं च**—तदनन्तरम् अन्नरूपः जलरूपश्चार्थः, (तथैव) **तेजः गगनमपि**—तेज-आकाशौ, **ततः**—तदनन्तरम्, **मन्मथः स्यात्**—मन्मथपर्यायसदृशः स्मरणार्थकः स्मरः उपदिष्टोऽस्ति । **तथा आशा**-तथैव दिगात्मकः अर्थोऽपि वेद्यत्वेनोपदिष्टः, **प्राणः**—पश्चात् प्राणसंज्ञको जीवः उपदिष्टः, (ततश्च) **सकलनियम(यम)यिता**—सर्वेषामन्तः प्रविश्य नियन्ता, **परात्मा**—परमात्मपदव्यपदेश्यः, **सत्यः**—सत्यरूपोऽर्थः, **गम्यते**—वेद्यत्वेन ज्ञाप्यते ॥ ९ ॥

## ४) अधिकरणार्थसङ्ग्रहः

**भूमाधिकरणे**—'तरति शोकमात्मवित्' इति प्रक्रान्तस्य आत्मोपदेशस्य प्राणपर्यवसायित्वात्, प्राणादूर्ध्वं च 'अस्ति भगवः प्राणाद्भूयः?' इत्यादिप्रश्नप्रतिवचनभावेन प्रकरणस्याऽविच्छिन्नत्वात्, 'प्राण'शब्दनिर्दिष्टः प्रत्यगात्मैव 'यत्र नान्यत् पश्यति' इति वाक्ये 'भूम'शब्दनिर्दिष्टः—इत्याशङ्क्य,

---

[1] द्वलमपि—आ. [2] ततः स्याच्च विज्ञानपूर्वकम्—आ. भवेत् ज्ञानमेवं बलञ्च -णा.
[3] स्यात् स्मरः—आ. [3] प्राणोऽथो सत्य आत्मा—आ. [4] यमयिता—आ.

'एष तु वा अतिवदति, यः सत्येनातिवदति' इति 'प्राण'शब्दनिर्दिष्टात् प्रत्यगात्मनोऽपि 'सत्य'शब्दवाच्यस्य भूम्नः अधिकनया निर्देशात्, भूमा परमात्मा—इति सिद्धान्तितम् ॥

(५) नयसङ्गतिमालिका

उक्तात् प्रकरणस्यैक्यादेव सिद्धान्तयुक्तितः ।
अपवादो भूमनये जीवेनाऽत्र निराकृतः ॥ ५० ॥

॥ इति भूमाधिकरणम् ॥ २ ॥

(२०) अक्षराधिकरणम् ॥ १-३-३ ॥

(१) शारीरकन्यायकलापसङ्ग्रहः

अव्या[1]कृतं[1] चेतन एव [2]वाऽपि[2] स्यादक्षरं चाऽऽस्पदमम्बरस्य ।
[3]कार्यास्पद[3]त्वादचिदाश्रयत्वादित्यप्यसत् तस्य धृतेः प्रशास्तेः ॥ ३१ ॥

**अम्बरस्य आस्पदम्**—आकाशं प्रति आधारतया उच्यमानम्, **अक्षरम्**—अक्षरपदवाच्यं वस्तु, **अव्याकृतम्**—भूतसूक्ष्मं प्रधानम्, **अपि वा**—अथवा, **चेतन एव स्यात्**—जीवात्मैव भवितुमर्हति, **कार्यास्पदत्वात्**—प्रधानस्य विकाराधारत्वात्, **अचिदाश्रयत्वात्**—जीवस्य अचेतनवस्त्वाधारत्वात्, **इत्यपि असत्**—एवं शङ्कनमपि न साधु, **तस्य धृतेः प्रशास्तेः**—प्रधानस्याऽपि धारणस्य तत्प्रशासनस्य च परमात्मासाधारणस्य अस्मिन् अक्षरे श्रवणात् अस्याक्षरस्य प्रधानत्वजीवत्वयोः अयोगात् ॥ ३१ ॥

(२) अधिकरणसारावलिः

प्रख्याताकाशपूर्वस्वविकृतिवहनादक्षराख्यं प्रधानं
तस्याऽप्याकाशतोक्तौ धृतनिखिलजगत् क्षेत्रितत्त्वं तु तत् स्यात् ।
मैवं द्रष्टृत्वपूर्वैरनितरनियतैः शासनायत्तधृत्या
किञ्च द्रष्ट्रन्तरस्य व्युदसनमिह तत्तुल्यतद्द्रष्टृपोहः ॥ १० ॥

**प्रख्याता....वहनात्**—लोकप्रसिद्धाकाशप्रभृतिस्वीयविकारान् प्रति आधारत्वात्, **अक्षराख्यम्**—'एतद्वै तदक्षरं गार्गि' (छां.उ. 5-8-7) इत्यत्राक्षरपदाभिधेयम्, **प्रधानम्**—मूलप्रकृतिरेव भवितुमर्हति, **तस्याऽपि**—प्रधानस्याऽपि, **आकाशतोक्तौ**—'आकाश'पदेनाभिधानं यदि सम्मतं; तर्हि, **धृतनिखिलजगत्**—सकलाचेतनवर्गधारकम्, **क्षेत्रितत्त्वं तु**—समष्टि-

---

[1] कृतः—ग.   [2] वापः—ख.   [3] कार्याश्रय—क.

जीवतत्त्वमेव, **तत् स्यात्**—अत्रत्याक्षरपदाभिधेयं भवितुमर्हति (इति पूर्वपक्षे), **मैवम्**—अक्षरपदेन प्रधानस्य वा जीवस्य वा बोधनं न युक्तम्; किन्तु परमात्मन एवेति, **अनितरनियतैः**—अदृष्टत्वादिसाहचर्येण परमात्मेतरस्मिन् असम्भावितैः, **द्रष्टृत्वपूर्वैः**—द्रष्टृत्व-श्रोतृत्व-मन्तृत्वादिभिर्धर्मैः, **शासनायत्तधृत्या**—अप्रतिहतसङ्कल्पधार्यत्वश्रवणेन निश्चीयते। **किञ्च**—अपि च, **इह**—'नाऽन्यदतोऽस्ति द्रष्टृ' (बृ.उ. 5-8-10) इति वाक्ये, **द्रष्ट्रन्तरस्य**—अन्यस्य दर्शनकर्तुः, **व्युदसनम्**—अभावज्ञापनम्, **तत्तुल्यतद्द्रष्टृपोहः**—विश्वाधारत्वनियन्तृत्वादिना परमात्मसदृशस्य तद्द्रष्टुरन्यस्य अभावबोधनमेव ; न तु द्रष्टृसामान्याभावस्य बोधनमिति ॥ १० ॥

## (३) अधिकरणार्थसङ्ग्रहः

अक्षराधिकरणे—'एतद्वै तदक्षरं गार्गि' (छां.उ. 5-8-7) इत्यादिवाक्ये, 'अक्षर'शब्दस्य प्रधाने जीवे च प्रयोगदर्शनात्, 'अक्षर'शब्दवाच्यः तयोरन्यतरः—इत्याशङ्क्य,

कालत्रयवर्तिविकाराश्रयस्य 'आकाश'शब्दवाच्यस्य प्रधानस्याऽप्याधारतया निर्दिष्टः अक्षरः परमात्मा—इति सिद्धान्तितम् ॥

## (४) नयसङ्गतिमालिका

**प्रकृतौ पुरुषे वैषा स्वे महिम्नि प्रतिष्ठितिः ।**
**प्रोक्ताऽस्तीत्यपवादेन स्यादक्षरनयोदयः ॥ ५१ ॥**

॥ इति अक्षराधिकरणम् ॥ ३ ॥

## (२१) ईक्षतिकर्माधिकरणम् ॥ १-३-५ ॥

## (१) शारीरकन्यायकलापसङ्ग्रहः

**भुवोऽन्तरिक्षादधिकोपदिष्टो यो ब्रह्मलोकः स विधातृलोकः ।**
**[1]तत्र[1] त्रिमात्रप्रणवानुचिन्त्यो धातेत्यसत् स्यादमृ[2]ताभिधाद्यैः[2] ॥ ३२ ॥**

**भुवः**—मनुष्यलोकापेक्षया, **अन्तरिक्षात्**—अन्तरिक्षलोकापेक्षया च, **अधिकोपदिष्टः**—ऊर्ध्वं विद्यमानतया त्रिमात्रं प्रणवमुपासीनस्य प्राप्यतया च श्रुत्युक्तः, **ब्रह्मलोको यः सः**—श्रुतिस्थब्रह्मलोकपदार्थः योऽस्ति सः, **विधातृलोकः**—जीवसमष्टिरूपस्य चतुर्मुखस्य लोक एव। **तत्र धाता**—सत्यलोकस्थः हिरण्यगर्भ एव, **त्रिमात्रप्रणवानुचिन्त्यः**—मात्रत्रयवता ओङ्कारेण उपास्यः, **इति**—एवं शङ्कनम्, **असत् स्यात्**—असाधु भवेत्, **अमृताभिधाद्यैः**—अमृताभयादिनामधेयप्रभृतिभिः ज्ञापकैः ॥ ३२ ॥

---

[1] ततः—ग. [2] तोऽभिधाद्यैः—ख.

लक्ष्मीभूतोऽयमेकः खलु पुरुष इह ध्यायतेरीक्षतेश्च
क्षेत्रज्ञः सोऽयमण्डाधिप इतरपरात् स्वान्यजीवात् परोऽसौ ।
नो चेद् भौमादिभोगप्रकरणविहतिर्बोभवीतीत्ययुक्तं
तस्मिन् शान्तामृतत्वप्रभृतिपरगुणख्यात्यनूक्त्योरयोगात् ।। ११ ।।

**इह**—प्रश्नोपनिषद्गते 'परं पुरुषमभिध्यायीत' (प्रश्न.उ. 5-5) 'परात्परं पुरिशयं पुरुषमीक्षते' (प्रश्न.उ. 5-5) इत्यादिरूपे वाक्ये, **ध्यायतेः ईक्षतेश्च**—'ध्यै'धातुबोध्यस्य ध्यानस्य, 'ईक्ष'धातुबोध्यस्य दर्शनस्य च, **लक्ष्मीभूतः**—विषयभूतो ध्येयो द्रष्टव्यश्च, **अयं पुरुषः**—श्रुतिस्थपुरुषशब्दवाच्यः अर्थः, **एकः खलु**—अभिन्न एवेति प्रसिद्धम् ; (ध्यातव्यस्यैव द्रष्टव्यत्वात्) । **सोऽयम्**—ध्यानेक्षणकर्मभूतोऽर्थः, **अण्डाधिपः**—ब्रह्माण्डस्येशः, **क्षेत्रज्ञः**—चतुर्मुखसंज्ञको जीव एव, **असौ**—ब्रह्माण्डाधिपतिः, **इतरपरात्**—अन्येभ्योऽचेतनेभ्यः उत्कृष्टात्, **स्वान्यजीवात्**—स्वेतरस्मात् चेतनवर्गात्, **परः**—उत्कृष्ट एवेति परात्पर एव, **नो चेत्**—यद्येवं नाङ्गीक्रियेत तर्हि, **भौमादिभोगप्रकरणविहतिः**—पृथिवी-अन्तरिक्ष-ब्रह्मलोकात्मकभोगलोक-प्रक्रमस्य विरोधः, **बोभवीति**—अपरिहार्यः समापतति, **इति**—एवंरीत्या चिन्तनम्, **अयुक्तम्**—असङ्गतम्, **तस्मिन्**—अण्डाधिपे चतुर्मुखे, **शान्ता....त्यनूक्त्योः**—शान्तत्वामृतत्वादीनां परमात्मसम्बन्धिनां गुणानां प्रसिद्धेः (तथा) तदनुवादस्य च बाधात् ॥ ११ ॥

नन्वत्रोङ्कारमात्रात्रयफलगणनारूढभूम्यन्तरिक्ष-
प्रत्यासत्त्या निवासः सरसिजवसतेर्ब्रह्मलोकोऽस्तु मैवम् ।
पापोन्मुक्तेन लभ्यो ह्यय[1]मिति[1] कथितः सूर्यसम्पत्तिपूर्वं
सोढव्यो मध्यलोकैश्वर्यवधिरिति समस्तत्समाधानमार्गः ।। १२ ।।

**अत्र**—प्रश्नोपनिषत्सम्बन्धित्रिमात्रप्रणवोपासनप्रकरणे, **ओङ्कार....प्रत्यासत्त्या**—'ओ३म्' इत्याकारकप्रणवसम्बन्धि उपास्यमानं मात्रात्रितयं यदस्ति, तत्फलपर्वप्रविष्टौ यौ पृथिव्यन्त-रिक्षाख्यौ लोकौ तत्समभिव्याहारेण ज्ञापकभूतेन, **ब्रह्मलोकः**—'स सामभिरुन्नीयते ब्रह्मलोकम्' (प्रश्न.उ. 5-5) इति श्रुतिगतब्रह्मलोकपदाभिधेयोऽर्थः, **सरसिजवसतेः**—कमलासनत्वेन पौराणिकप्रसिद्धस्य चतुर्मुखस्य, **निवासः अस्तु**—निलयभूतो लोक एव भवतु ; न परमात्मनः स्थानम्, इत्येवंशङ्कने कृते, **मैवम्**—अनेन प्रकारेण शङ्कनं नोचितम्, **हि**—यतः, **अयम्**—

[1] मिह—भा.

उक्तो ब्रह्मलोकः, **पापोन्मुक्तेन**— 'एवं ह वै स पाप्मना विनिर्मुक्तः' (प्रश्न.उ. 5–5) इत्युक्तरीत्या सर्वपापसम्बन्धप्रहाणवता पुरुषेण, **सूर्यसम्पत्तिपूर्वम्**—'स तेजसि सूर्ये सम्पन्नः' (प्रश्न उ 5–5) इत्युक्तरीत्या सूर्यप्राप्तिपूर्वकम्, **लभ्य इति**—प्राप्तव्य इति, **कथितः**—तत्रैव श्रुतौ प्रतिपादितः, **मध्यलोकैः**—अन्तरिक्षादुपरितनैः, ब्रह्मलोकादधस्तनैश्च लोकैः, **व्यवधिः**—व्यवधानम्, **सोढव्य इति**—मर्षणीयम् इत्येवंरूपः, **तत्समाधानमार्गः**—अन्तरिक्षसमभिव्याहारः परमात्मस्थानस्य न सम्भवति इत्यतः, तस्य कथं ज्ञापकत्वम्? इत्याक्षेपस्य समाधानप्रकारः, **समः**—परमात्मस्थानस्य प्राप्यत्ववादिनः चतुर्मुखलोकस्य प्राप्यतावादिनश्चेत्युभयोः समान एव; (चतुर्मुखलोकस्याऽपि अन्तरिक्षाद्व्यवधानस्य अविलक्षणत्वादिति) ॥१२॥

## (३) अधिकरणार्थसङ्ग्रहः

ईक्षतिकर्माधिकरणे—'यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत' (प्रश्न.उ. 5–5) इत्यादिवाक्ये, 'परात्परं पुरिशयं पुरुषमीक्षते' (प्रश्न.उ. 5–5) इति, ईक्षतिकर्मतया निर्दिष्टः पुरुषः, चतुर्मुखः; द्विमात्रमुपासीनस्य अन्तरिक्षलोकप्राप्तिमभिधाय, त्रिमात्रमुपासीनस्य प्राप्यतया उक्तस्य ब्रह्मलोकस्य, अन्तरिक्षलोकात् परत्वेन चतुर्मुखलोकत्वात्—इत्याशङ्क्य,

'यत्तच्छान्तमजरममृतम्' (प्रश्न.उ. 5–7) इत्यादिना, ईक्षतिकर्मणः परमात्मत्वेन व्यपदेशात्, परमव्योम्नोऽपि अन्तरिक्षात्परत्वसम्भवाच्च, परमात्मा—इत्युक्तम् ॥

## (४) नयसङ्गतिमालिका

**उक्तादृष्टद्रष्टृताऽत्र न संश्लिष्यत इत्यतः ।**
**भवेदीक्षतिकर्माधिकरणे प्रत्युदाहृतिः ॥ ५२ ॥**

**॥ इति ईक्षतिकर्माधिकरणम् ॥ ४ ॥**

## (२२) दहराधिकरणम् ॥ १-३-५ ॥

## (१) शारीरकन्यायकलापसङ्ग्रहः

**दहस्तु खं स्यादथ चेतनो वा प्रसिद्धियोगाद्गुणयोगतश्च ।**
**न [1]साध्विदं[1] खे नहि सत्यभावः कामाश्च जीवे न निसर्गसिद्धाः ॥ २३ ॥**

**दहस्तु**—'दहरोऽस्मिन्नन्तर आकाशः' (छां.उ. 8–1–2) इति श्रुतौ 'दहर'शब्दवाच्योऽर्थस्तु, **खं स्यात्**—भूताकाशो भवेत्, **प्रसिद्धियोगात्**—तत्रैव 'आकाश'शब्दप्रसिद्धेः

[1] सास्पदं—ग. साम्प्रतं—पा.

अन्वयात्, **अथवा चेतनः**—जीवो वा भवेत्, **गुणयोगतश्च**—अन्वेष्टव्यापहतपाप्मत्वादिगुणसम्बन्धस्य सत्वात्। **इदं न साधु**—इदं युक्तं न भवति, **हि**—यतः, **खे**—प्रसिद्धे आकाशे, **सत्यभावः**—'एतत् सत्यं ब्रह्मपुरम्' (छां.उ. 8-1-5) इत्युक्तं सत्यत्वम्, **न**—नैवाऽस्ति। **जीवे**—चेतने, **कामाश्च**—काम्यमानाः अपहतपाप्मत्वादयो गुणा अपि, **निसर्गसिद्धाः**—निरुपाधिकाः, **न**—नैव सन्ति ॥ ३३ ॥

## (२) तत्त्वसारः

**अस्वारस्यचतुष्टयं परमते यच्छब्दलिङ्गव्यथा**
**तस्मिन्नित्यन[1]पेक्षया[1] व्यवहिते हृत्पुण्डरीकेऽन्वयः।**
**अप्याकाङ्क्षितकामवेदनविधिक्षेपः स्वपक्षे द्वयम्**
**यच्छब्दस्य यदैकशेष्यमपि या तत्रैकवद्भाविता ॥ ३० ॥**

**परमते**—अद्वैतिनां मते, **अस्वारस्यचतुष्टयम्**—दहरविद्यागतस्य 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः, तस्मिन् यदन्तस्तदन्वेष्टव्यम्, तद्वाव विजिज्ञासितव्यम्' (छां.उ. 8-1-1) इत्यस्यार्थवर्णने शब्दस्य अस्वाभाविकार्थवर्णनकृतं दोषचतुष्टयं वर्तते। (किं तत्? इति चेत्) (१) **यच्छब्दलिङ्गव्यथा**—पूर्वम् 'अन्तराकाशः' इति पुल्लिङ्गेन निर्दिष्टस्यार्थस्य 'तस्मिन् यदन्तः' इति वाक्यखण्डस्थेन नपुंसकयच्छब्देन ग्रहणकृतः लिङ्गविपर्यासरूपो दोषः, (२) **तस्मिन् इत्यनपेक्षया**—तद्रीत्या अर्थवर्णने, उक्तवाक्यखण्डगतसप्तम्यन्ततच्छब्दोपपादनवैयर्थ्येन साकम्, (३) **व्यवहिते**—आकाशपदार्थेन मध्ये विद्यमानेन प्राप्तव्यवधाने, **हृत्पुण्डरीके**—'दहरं पुण्डरीकम्' इति पूर्वनिर्दिष्टे हृदयाख्यस्थानरूपे पद्माकारे वस्तुनि, **अन्वयः**—'तस्मिन्' इत्यस्य परामृश्यमानतया सम्बन्धः, **अपि**—तथैव, **आकाङ्क्षितकामवेदनविधिक्षेपः**—'काम'शब्दवाच्यानां परमात्मसम्बन्धिनाम् अपहतपाप्मत्वादीनां गुणानाम् उपास्यत्वविधेः आवश्यकस्याऽपि त्यागः, (इति)। **स्वपक्षे**—विशिष्टाद्वैतिनां पक्षे तु, **द्वयम्**—अस्वारस्यद्वितयमस्ति। (किं तद्द्वितयम्? इति चेत्) **यच्छब्दस्य**—'यदन्तः' इति वाक्खण्डगतस्य 'यत्'शब्दस्य, **यत् ऐकशेष्यम्**—'यश्च, यच्च, यत्' इति पुं-नपुंसकयोः द्वयोः यच्छब्दयोः एकशेषवृत्तिस्वीकारः इति योंऽशो वर्तते, सः, **अपि**—तथा, **तत्र**—उक्ते एकशेषात्मके यच्छब्दे, **या एकवद्भाविता**—'यश्च, यच्च, ये' इति द्विवचनान्ततां परित्यज्य 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' (पा.सू. 1-2-69) इत्यनुशासनेन 'यत्' इति एकवचनान्तताभ्युपगमः इति योंऽशः; सः इति ॥ ३० ॥

---

[1] **पेक्षता—ख.**

## (३) अधिकरणसारावलिः (श्लो. १३-१७)

दह्रं हृत्पुण्डरीके गगनमभिहितं तैत्तिरीयश्रुतौ यत्
छन्दोगैस्तत्र गीतं यदपि च दहराकाश इत्येतदेकम् ।
भूताद्यं तत्प्रसिद्धेर्महिमत इति न प्रत्यनीकैरनेकैः
श्रौती च स्यात् प्रसिद्धिर्भगवति बलिनी लिङ्गवर्गैः सनाथा ॥ १३ ॥

**तैत्तिरीयश्रुतौ**—तैत्तिरीयनारायणोपनिषदि, **हृत्पुण्डरीके**—पुण्डरीकसदृशे हृदयाख्ये देहान्तर्वर्तिनि स्थानविशेषे, **दह्रम्**—सूक्ष्मम्, **यत् गगनम्**—गगनपदवाच्यं यद्वस्तु, **अभिहितम्**—'दह्रं विपाप्मं....तत्रापि दह्रं गगनम्' (तै.ना. 12 ) इति वाक्येनोक्तम्, **दहराकाश इति**—'दहरः, आकाशः' इति पदाभ्याम्, **तत्र**—हृदयपुण्डरीकवर्तितया, **यदपि च**—यादृशं च वस्तु, **छन्दोगैः**—सामशाखाध्यायिभिः, **गीतम्**—'अथ यदिदमस्मिन्—दहरोऽस्मिन्नन्तराकाशः' (छां.उ 8-1-1) इति पठितम्, **एतत्**—एतदुभयमपि, **एकम्**—अभिन्नमेव । **तत्**—गगनाकाशपदाभ्यां बोधितं वस्तु, **प्रसिद्धेर्महिमतः**—प्रसिद्ध्याधिक्यात्, **भूताद्यम्**—पञ्चभूतेष्वादिमं भूतमेव लौकिकाकाश एव, **इति न**—एवं शङ्का अनुचिता, **प्रत्यनीकैः**—एतत्पक्षप्रतिभटैः, **अनेकैः लिङ्गवर्गैः**—बहुभिः असाधारणैः हेतुगणैः, निरुपाधिकात्मत्वापहतपाप्मत्वादिभिः परमात्मासाधारणैः 'एष आत्मापहतपाप्मा' इत्यादिवाक्योक्तैः, **सनाथा**—सहकृता, **श्रौती च**—श्रुतितः प्राप्ता तु, **भगवति प्रसिद्धिः**—परमात्मनि आकाशपदप्रयोगप्रचुरता, **बलिनी स्यात्**—आकाशपदस्य भौतिकाकाशप्रतिपादकत्वज्ञानप्रतिबन्धिका भवति ॥ १३ ॥

बाह्याकाशश्च यावानयमपि हि तथेत्येतदक्लिष्टमीशे
सत्यात्मब्रह्मशब्दा नभसि न कथमप्यन्वयं प्राप्नुवन्ति ।
कामाधारश्च योऽसौ समगणि दहराकाशवाचाऽत्र नित्यः
तस्यैव ह्येष आत्मेत्यनुवदनमतस्तद्गुणाश्चिन्त्यकामाः ॥ १४ ॥

**बाह्याकाशश्च**—भौतिकः लोकप्रसिद्धाकाशश्च, **यावान्**—यादृशवैपुल्यादिगुणयुक्तः, **अयमपि**—दहराकाशोऽपि, **तथा**—तादृशवैपुल्यादिमान्, **इत्येतत्**—ईदृशम्, उपमानोपमेयभावकथनम्, **ईशे**—बाह्याकाशाद्भिन्ने परमात्मनि, **अक्लिष्टम्**—स्वरसतोऽन्वयि । (किं च), **नभसि**—केवले आकाशे, **सत्यात्मब्रह्मशब्दाः**—'एतत् सत्यं ब्रह्मपुरम् एष आत्मा' (छां.उ. 8-1-5) इत्युक्ताः 'सत्यम्, आत्मा, ब्रह्म' इत्येते शब्दाः, **कथमपि**—मुख्यया

अमुख्यया वा वृत्त्या, **अन्वयम्**–योग्यं सम्बन्धम्, **न प्राप्नुवन्ति**—नैव लभन्ते, **यश्च**—य एवार्थः, **कामाधारः**—काम्यानां कल्याणगुणानामाश्रयतया, **समगणि**—'अस्मिन् कामाः समाहिताः' (छां.उ. 8–1–5) इति श्रुतावुक्तः, **असौ नित्यः**—सः स्वरूपतः स्वभावतश्च विकाररहितः, अत्र **दहराकाशवाचा**—एतद्वाक्यस्थेन दहराकाशपदेन, **समगणि**—कथितः, **तस्यैव हि**—काम्यमानगुणाश्रयस्य दहराकाशस्यैव खलु, **एष आत्मेति**—'एष आत्माऽपहतपाप्मा विजरो विमृत्युः' (छां.उ. 8–1–5) इत्यादिना उपरितनेन वाक्येन, **अनुवदनम्**—परामर्शः, **अतः**–दहराकाशस्य परमात्मत्वात्, **तद्गुणाः**–तदविनाभूताः अपहतपाप्मत्वादिसत्यसङ्कल्पत्वान्ताः गुणाः, **चिन्त्यकामाः**—परमात्मवदेव उपास्याः स्पृहणीयाश्च स्वस्मिन्नपि आविर्भवनीयतया काम्यमानाश्च वा भवन्ति ॥ १४ ॥

**सर्वेशाधारतोक्त्या भवतु च हृदयव्योम तद्वाज्यधीतं**
**छान्दोग्यस्थो निषादस्थपतिनयपदं ब्रह्मलोकादिशब्दः ।**
**आपस्तम्बश्च वैभाजनपुरमवदद्ब्रह्म सर्वात्मभूतं**
**पूस्तस्य प्राणिनः स्युस्तदपि तदपि हि स्यात्पुरं सर्ववासात् ॥ १५ ॥**

**वाज्यधीतं तत्**—वाजसनेयशाखान्तर्गतबृहदारण्यकपरिपठितम् 'आकाश'शब्दाभिधेयं वस्तु, **सर्वेशाधारतोक्त्या**—'य एषोऽन्तर्हृदय आकाशः....तस्मिन् शेते....सर्वस्येशानः' (बृ.उ. 6–4–22) इति सर्वेश्वरस्य गूढनिवासस्थानत्ववर्णनेन, **हृदयव्योम भवतु**—हृदयाख्य-सूक्ष्मावकाशरूपप्रसिद्धाकाशो भवतु, तत्सम्मन्यते ; **छान्दोग्यस्थः ब्रह्मलोकादिशब्दः**—छान्दोग्योपनिषत्पठितः ब्रह्मलोक-ब्रह्मपुराद्यात्मकः शब्दस्तु, **निषादस्थपतिनयपदम्**—निषाद-स्थपतिन्यायस्य (पू.मी. 6–1–13) कर्मधारयसमाश्रयणौचित्यपरस्य आस्पदः, ('ब्रह्मैव लोकः, ब्रह्मैव पुरम्' इति) **आपस्तम्बश्च**—तन्नामको मुनिरपि, **सर्वात्मभूतं ब्रह्म**—चिदचिदात्मकसकल-जगच्छरीरकं ब्रह्म, **वैभाजनं पुरम्**—जीवानां स्वस्वकर्मानुगुण्येन पृथक्पृथगवस्थातुं योग्यत्वात्, 'वैभाजन'पदवाच्यनगरमिति, **अवदत्**—'स वै वैभाजनं पुरम्' (आप.ध.सू. 1–8–22–7) इत्य-सूत्रयत् । **तस्य**—परमात्मनः, **पूः**—पूर्णतयाऽवस्थातुमर्हत्वेन 'पूः'पदवाच्याः, **प्राणिनः स्युः**—सर्वे जन्तवो भवेयुः । **तदपि**—ब्रह्म प्रति सर्वेषां पुरत्वेऽपि, **तदपि**—परं ब्रह्मापि, **सर्ववासात्**—सर्वान् प्रति आधारत्वात्, **पुरं स्यात् हि**—सुव्यवस्थितपरिष्कृतवासयोग्यं भवत्येव खलु ! ॥ १५ ॥

**जीवस्तर्ह्येष आत्मा गुणगणघटनात् तत्परामर्शदृष्टेः**
**अल्पत्वाद्युक्तितश्चेत्यसदनुपधिकात् सत्यसङ्कल्पतादेः ।**
**विश्वैकाधारतादेरपि स खलु [1]परे[1] दह्रतौपाधिकी स्यात्**
**प्राजापत्ये तु वाक्ये परसमदशया तद्गुणोक्तिर्विमुक्ते ॥ १६ ॥**

**तर्हि**—भौतिकस्याकाशस्य दहराकाशत्वे अनुपपन्ने सति, **गुणगणघटनात्**—अपहत-पाप्मत्वादीनां गुणानाम् अबाधितत्वात्, **तत्परामर्शदृष्टेः**—'एष आत्मेति होवाच' इति जीवात्मनो ग्रहणस्य श्रुतौ दृष्टत्वात्, **एष आत्मा**—'एष आत्माऽपहतपाप्मा' इत्यादिनोक्तः आत्मा, **जीवः**—जीवरूप आत्मा भवतु । **अल्पत्वाद्युक्तितश्च**—जीवेऽन्वेतुमर्हस्य अल्पत्वादे-र्धर्मस्य 'दहर'शब्देन कथनादपि ज्ञापकात्, **इत्यसत्**—एवं शङ्कनमसाधु, **अनुपधिकात्**—सार्वकालिकात्, **सत्यसङ्कल्पतादेः**—अप्रतिहतसङ्कल्पप्रभृतिकात् गुणजातात्, (तथा) **विश्वैका-धारतादेरपि**—सकलजगत् प्रति मुख्याधारत्वादपि 'अस्मिन् द्यावा-पृथिवी अन्तरेव समाहिते' (छां.उ 8-1-1) इति श्रुत्युक्तात्, **स खलु**—परमात्मैव एष आत्माऽपहतपाप्मेत्याद्युक्तः, **परे**—सर्वत्र व्याप्ते परमात्मनि तु, **दह्रता**—अल्पपरिमाणता, **औपाधिकी स्यात्**—हृदयावच्छेद-निबन्धनैव भवेत्; न स्वाभाविकी। **प्राजापत्ये वाक्ये तु**—इन्द्रं प्रति प्रजापतिकृतात्मस्वरूपोप-देशप्रदर्शके 'य आत्माऽपहतपाप्मा ....इति ह प्रजापतिरुवाच' (छां.उ. 8-8-1) इति श्रुत्यात्मके वाक्ये तु, **विमुक्ते**—परं ज्योतिरुपसम्पन्ने जीवे, **परसमदशया**—परमात्मना साकं परम-साम्यावस्थया, **तद्गुणोक्तिः**—अपहतपाप्मत्वादीनां गुणानां कथनम् ॥ १६ ॥

**दह्राकाशोऽपवर्गप्रद इति गदितुं सम्प्रसादोक्तिरत्र**
**प्राजापत्ये तु वाक्ये परपरिपठनं प्राप्यनिष्कर्षणार्थम् ।**
**आकाङ्क्षाद्यैस्तदेवं पर-तदितरयोरन्विते वाक्य[2]युग्मे[2]**
**युक्तं नान्योऽन्यबाधप्रभृति[3]कमिह[3] तत् सामरस्यं हि सौत्रम् ॥ १७ ॥**

**दह्राकाशः**—उपनिषदि 'दहराकाश'पदेन व्यपदिष्टः परमात्मा, **अपवर्गप्रदः**—उपासकानां निश्श्रेयसप्रदाता, **इति गदितुम्**—इममर्थं प्रतिपादयितुम्, **अत्र**—दहरविद्यावाक्ये, **सम्प्रसादोक्तिः**—'एष सम्प्रसादोऽस्माच्छरीरात्' (छां.उ. 8-12-2) इति वाक्ये सम्प्रसाद-शब्दस्य प्रयोगः, **प्राजापत्ये वाक्ये**—इन्द्रं प्रति ब्रह्मणा उक्ते वाक्ये 'स उत्तमः पुरुषः' (छां.उ. 8-12-3) इत्येवमादौ, **परपरिपठनं तु**—परमात्मनः प्रतिपादनं तु, **प्राप्यनिष्कर्ष-णार्थम्**—उपेयस्य तत्त्वस्य निष्कर्षेण—विविक्ततया बोधनाय, **तत्**—उक्ताद्धेतोः, **आकाङ्क्षाद्यैः**—

[1] परो—अ. [2] वर्गे—अ. [3] कमिति—अ. किमपि—अ.

अन्योन्यं विद्यमानैः आकाङ्क्षा-योग्यता-आसत्तिभिः, **पर-तदितरयोः**—परात्म-जीवात्मनोः सम्बन्धिनि, **वाक्ययुग्मे**—दहरवाक्ये प्रजापतिवाक्ये च, **एवम्**—उक्तया रीत्या, **अन्विते**—अबाधेन सङ्गते सति, **इह**—उक्तयोः वाक्ययोः, **अन्योन्यबाधप्रभृतिकम्**—दहरविद्यावाक्येन प्रजापतिवाक्यबोध्यार्थस्य बाधकल्पनं वा, प्रजापतिवाक्येन दहरविद्यावाक्यबोध्यार्थबाधकल्पनमपि वा, **न युक्तम्**—सङ्गतं न भवति । **हि**—यतः, **तत्सामरस्यम्**—तयोर्वाक्ययोः अबाधितानुपचरितार्थबोधकत्वप्रतिपादनम्, **सौत्रम्**—शारीरकसूत्रैः सम्यक् प्रतिपन्नम् ।। १७ ।।

## (४) अधिकरणार्थसङ्ग्रहः

दहराधिकरणे—'दहरोऽस्मिन्नन्तराकाशः' (छां.उ. 8-1-1) इति वाक्ये, 'आकाश'-शब्दस्य भूताकाशे प्रसिद्धिप्राचुर्यात्, अन्वेष्टव्यान्तराभावाच्च, दहराकाशो भूताकाश एव—इत्याशङ्क्य,

उत्तरवाक्ये दहराकाशसम्बन्धितया अपहतपाप्मत्वादिप्रतिपादनात्, तेषामेव अन्वेष्टव्यत्वाच्च, दहराकाशः परमात्मा—इति सिद्धान्तितम् ॥

## (५) नयसङ्गतिमालिका

**निर्णीतः प्राक् पुरिशयः पुरुषश्रुतिवैभवात् ।**
**प्रत्युदाहृतिसङ्गत्या दहराधिक्रियोत्थितिः ॥ ५३ ॥**

**॥ इति दहराधिकरणम् ॥ ५ ॥**

## (२३) प्रमिताधिकरणम् ॥ १-४-६ ॥

## (१) शारीरकन्यायकलापसङ्ग्रहः

**प्राणाधिपः सञ्चरतीति वाक्ये प्रसिद्धितोऽङ्गुष्ठमितो हि! जीवः ।**
**इत्यप्यसाध्वेव भवेदमुष्मिन्नीशानशब्दश्रवणाद्धि वाक्ये ॥ ३४ ॥**

**प्राणाधिपः....वाक्ये**—'प्राणाधिपः सञ्चरति स्वकर्मभिः, अङ्गुष्ठमात्रो रवितुल्यरूपः' (श्वे.उ. 5-7, 8)इत्यस्मिन् वाक्ये, **प्रसिद्धितः**—जीवात्मन एव अङ्गुष्ठपरिमिततया प्रसिद्धिमत्वात्, **अङ्गुष्ठमितः**—'अङ्गुष्ठमात्रः पुरुषः' इति 'अङ्गुष्ठमात्र'शब्देन कठवल्ल्यां प्रतिपन्नः अर्थः, **जीवो हि**—जीवात्मैव भवितुमर्हति, **इत्यपि असाध्वेव भवेत्**—एवमाशङ्कनमपि निर्युक्तिकमेव भवति ; **अमुष्मिन् हि वाक्ये**—कठवल्लीगते अङ्गुष्ठमात्रपदघटिते वाक्ये एव, **'ईशान' शब्दश्रवणात्**—'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य' (कठ.उ. 4-12) इत्येवं जगदीश्वरत्वबोधकस्य 'ईशान'शब्दस्य श्रुतत्वात् ॥ ३४ ॥

(२) अधिकरणसारावलिः (श्लो. १८, १९)

प्राणेशोऽङ्गुष्ठमात्रः क्वचिदनुकथितः सञ्चरन् कर्मभिः स्वै-
रन्यत्राऽङ्गुष्ठमात्रं पुरुषमपि यमो निश्चकर्षेति दृष्टम् ।
तस्मादेतत् प्रमाणप्रमितमुपनिषज्जीवमाहेत्ययुक्तं
वाक्यस्येशानतादेर्नरहृदयपरिच्छित्तितस्तद्धि मानम् ॥ १८ ॥

**क्वचित्**—श्रुतिविशेषे, **स्वैः कर्मभिः**—स्वकीयैः सुकृत-दुष्कृतैः साधनभूतैः, **सञ्चरन्**—विविधदेहधारणेन सर्वत्र गमनशीलः, **प्राणेशः**—प्राणाधिपपदवाच्यो जीवः, **अङ्गुष्ठमात्रः**—अङ्गुष्ठप्रमाणप्रमिततया, **अनुकथितः**—अनूदितः, **अन्यत्र क्वचित्**—इतिहासादिरूपे ग्रन्थविशेषे, **अङ्गुष्ठमात्रम्**—अङ्गुष्ठप्रमाणपरिमितम्, **पुरुषम्**—पुरुषपदवाच्यमर्थम्, **यमः**—वैवस्वतः पुरुषः, **निश्चकर्ष**—शरीरात् पृथक् आकृष्टवान्, **इत्यपि दृष्टम्**—एवं स्मृतिवाक्यात्मना दृष्टमस्ति, **तस्मात्**—उक्तादेतस्मात् कारणात्, **उपनिषत्**—'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति' (कठ.उ. 4–12) इत्येवंरूपा कठोपनिषत्, **एतत्प्रमाणप्रमितम्**—अङ्गुष्ठप्रमाणप्रमितमर्थम्, **जीवमाह**—जीवात्मानमेव वदति, **इति अयुक्तम्**—एतत् युक्तिहीनम्, **हि**—यतः, **तत् मानम्**—अङ्गुष्ठप्रमाणम्, **वाक्यस्थेशानतादेः**—तद्वाक्यत एव बोध्यात् जगदीश्वरत्वादिलिङ्गात्, **नर-हृदयपरिच्छित्तितः**—मनुष्यदेहीयहृदयात्मदेशकृतपरिच्छेदत एव; न स्वभावकृतम् इति निश्चीयते ॥ १८ ॥

न ह्यङ्गुष्ठप्रमाणं हृदयमखिलजन्त्वाश्रयं तत् परस्मिन्
व्याप्ते तन्मात्रतोक्तिः[1] क्वचिदिति मनुजाधिक्रियोक्तिप्रसङ्गे ।
सूत्रद्वन्द्वद्वयान्तस्त्रिभिरधिकरणैश्चिन्त्यते तद्विशेषः
तार्तीयैः[2] स्थापनीया त्ववजिगमिषिता[3] नेतिकर्तव्यताऽत्र ॥ १९ ॥

**अङ्गुष्ठप्रमाणम्**—अङ्गुष्ठाकारपरिच्छिन्नम्, **हृदयम्**—हृदयाख्यं स्थानम्, **न हि अखिलजन्त्वाश्रयम्**—सकलप्राणिसम्बन्धि नैव भवति, **तत्**—तस्माद्धेतोः, **व्याप्ते**—विभौ, **परस्मिन्**—परे ब्रह्मणि, **तन्मात्रतोक्तिः**—श्रुतौ अङ्गुष्ठप्रमितताकथनम्, **क्वचित्**—उपासनाधिकृतनरहृदये एव; न सर्वत्र, **इति**—एवमुक्त्या, **मनुजाधिक्रियोक्तिप्रसङ्गे**—'मनुष्याणमेवोपासनाधिकारः' इति कथनस्य प्रसङ्गे सम्पन्ने सति, **सूत्रद्वन्द्वद्वयान्तः**—'शब्दादेव' (ब्र.सू. 1-3-23) 'हृद्यपेक्षया तु मनुष्याधिकारत्वात्' (ब्र.सू. 1-3-24) इति सूत्रद्विकस्य (तथा) 'कम्पनात्'

[1] तन्मानतोक्तिः—आ. [2] तार्तीये—आ. [3] त्वधिजिग—आ.

(ब्र.सू. 1-3-40) 'ज्योतिर्दर्शनात्' (ब्र.सू. 1-3-41) इति सूत्रद्विकस्य च गर्भभूतैः, **त्रिभिः अधिकरणैः**—देवताधिकरण-मध्वधिकरण-अपशूद्राधिकरणरूपैः, त्रिसङ्ख्याकैः न्यायैः, **तद्विशेषः**—अधिकारविशेषः, **चिन्त्यते**—विचार्य निर्णीयते । **तार्तीयैः**—तृतीयाध्याय-सम्बन्धिभिः अधिकरणैः, **स्थापनीया**—विचारतो निर्णेया, **इति कर्तव्यता**—उपासनं प्रति अङ्गकलापभूता, **अधिक्रिया तु**—अधिकारपदाभिधेया तु, **अत्र**—उपासनाधिकारविशेष-निर्णयार्थं प्रवृत्तेऽस्मिन्नधिकरणत्रये, **न अवजिगमिषिता**—न बुबोधयिषिता (अन्तर्भावितण्यर्थः) ॥

## (३) अधिकरणार्थसङ्ग्रहः

प्रमिताधिकरणे—'अङ्गुष्ठमात्रः पुरुषः' इत्यादिवाक्ये अङ्गुष्ठमात्रत्वश्रवणात्, 'अङ्गुष्ठमात्रो रवितुल्यरूपः' इत्यादिषु जीवस्य अङ्गुष्ठमात्रत्वश्रवणात्, अङ्गुष्ठप्रमितः जीवः—इत्याशङ्क्य,

'ईशानो भूतभव्यस्य' इति भूतभव्येशानत्वश्रवणात्, अङ्गुष्ठप्रमितत्वस्य हृदयोपाधिकस्य परमात्मन्युपपत्तेः, अङ्गुष्ठमात्रः परमात्मा—इत्युक्तम् ॥

## (४) नयसङ्गतिमालिका

ब्रह्मणोऽस्त्वल्पमानत्वं प्रमिताधिकृतौ पुनः ।
तद्विशेषश्रुतेर्जीवः स्यादिति प्रत्युदीर्यते ॥५४॥

॥ इति प्रमिताधिकरणम् ॥६॥

## (२४) देवताधिकरणम् ॥ २-३-७ ॥

## (१) शारीरकन्यायकलापसङ्ग्रहः

अविग्रहा विग्रहवत्प्रसाध्ये संराधने नाऽधिकृतास्तु देवाः ।
इत्यप्यसत् कल्पितनामरूपाः तस्मान्मनुष्या इव तेऽपि शक्ताः ॥३५॥

**विग्रहवत्प्रसाध्ये**—सशरीरैरेव कर्तुमर्हे, **संराधने**—यागोपासनादौ देवप्रसादनसाधनी-भूते कर्मणि, **अविग्रहाः**—अशरीराः, **देवाः**—लब्धदेवादिभावाः चेतनाः, **न तु अधिकृताः**—अधिकारिणो नैव भवेयुः, **इत्यपि**—एवमाशङ्कनमपि, **असत्**—न साधु । **तेऽपि**—प्राप्तदेवभावा अपि चेतनाः, **मनुष्या इव**—लब्धमर्त्यभावाश्चेतना इव, **कल्पितनाम-रूपाः**—ईशसङ्कल्प-प्रभवदेवादिनामरूपभाज एव, **तस्मात्**—तत एव हेतोः, **तेऽपि**—देवा अपि, **शक्ताः**—अर्थित्वसामर्थ्यात्मकाधिकारवन्त एव ॥३५॥

## (२) तत्त्वसारः (श्लो. ३१–४५)

पटुतरविग्रहादिमतां भवतापवतां
भगवदुपासनं दिविषदामपि सम्भवति ।
ननु शतमर्थवादवचसामपि मन्त्रगिरां
विधिवदिह प्रमाणमपदोषमपुंप्रभवम् ॥३१॥

**पटुतरविग्रहादिमताम्**—मनुष्यापेक्षया सौष्ठवातिशयसम्पन्नदेहेन्द्रियादियुक्तानाम्, **दिविषदामपि**—देवलोकवासिनामपि चेतनानाम्, **भवतापवताम्**—परमात्माननुभवरूपं भवं तापत्वेन चिन्तयताम्, **भगवदुपासनम्**—भगवच्चिन्तनरूपं ध्यानम्, **सम्भवति**—युज्यत एव। **अर्थवादवचसाम्**—कर्माद्यनुष्ठानविध्यपेक्षितार्थसमर्पणपरतया विध्यादिशेषभूतानां वेदवाक्यानाम्, (तथा) **मन्त्रगिराम्**—द्रव्य-देवताद्यात्मकप्रयोगसमवेतार्थस्मारकाणां वेदवाक्यानामपि, **शतम्**—असङ्ख्यातं स्वरूपम्, **इह**—अस्मिन् विषये, **विधिवत्**—'यजेत स्वर्गकामः' इत्यादिविधिवाक्यानीव, **अपुंप्रभवम्**—अपौरुषेयम्, अत एव, **अपदोषम्**—भ्रम-विप्रलम्भादिदोषसम्भावनाविदूरम्, **प्रमाणम्**—यथार्थज्ञानसाधनमस्ति ॥३१॥

स्तुतिपरमाद्यमत्र निजसाध्यविधेयरुचि-
प्रजननसिद्धये स्ववचनीयगुणादरवत् ।
तदितरथा न सिध्यति विधिष्विव तत्त्वविदां
कथमसता गुणेन कथितेन नुतिर्भवति ॥३२॥

**अत्र**—विधिशेषत्वेन अभिमतेष्वर्थवादादिषु, **आद्यम्**—प्राथमिकम्, **स्तुतिपरम्**—विध्युक्तार्थप्रशंसापरं अर्थवादात्मकं वेदवाक्यम्, **निज... सिद्धये**—स्वोत्पाद्यो यः विधिविषयीभूतयागाद्यर्थविषयकानुष्ठेयत्वप्रकारकेच्छाविशेषः तन्निष्पत्त्यर्थम्, **स्ववचनीयगुणादरवत्**—स्व(अर्थवाद)प्रतिपाद्येषु गुणेषु मुख्यतात्पर्यवदेव वर्तते। **इतरथा**—अर्थवादवचसां स्वबोध्येषु गुणेषु मुख्यतात्पर्याभावे, **विधिष्विव**—गुणकथनायां प्रवृत्तेषु विधिवाक्येष्विव अर्थवादेष्वपि, **तत्**—गुणकथनपरत्वम्, **न सिध्यति**—नैव निवृत्तं भवति। **असता**—वस्तुतः अविद्यमानेन, **कथितेन**—वाङ्मात्रतो वर्णितेन, **गुणेन**—स्तुत्येन धर्मेण, **तत्त्वविदाम्**—वस्तुस्वरूपपरिज्ञानवतां प्रेक्षावतां वा, **नुतिः**—यजनीयोपासनीयादौ वास्तविकं प्रशस्तत्वाज्ञानम्, **कथं भवति**—केन वा प्रकारेण जायते? ॥३२॥

---

[1] दिकवतां—क. दिभजतां—ग. दिबहतां—घ.

अथ मनवो विधेयपरिबोधनकार्यमुखा-
द्विधिमुपकुर्वते हि दिविषद्वपुरादिधियम् ।
उपजनयन्त एनमुपकर्तुमलं खलु ते
कथमिव देवता धियमुपैति वपुर्विधुरा ॥३३॥

**अथ**—अर्थवादानन्तरम् , **मनवः**—मन्त्राः, **विधेयपरिबोधनकार्यमुखात्**—अनुष्ठेय-यागादिसम्बन्धिद्रव्य-देवतात्मकार्थस्मारणद्वारा, **विधिम्**—विधायकं शास्त्रम्, **उपकुर्वते**—अपेक्षितातिशययुक्तात् कुर्वन्ति, **हि**—यतः, **ते**—मन्त्राः, **दिविषद्वपुरादिधियं जनयन्तः**—(अस्मासु) देवानामपि शरीरादिमत्त्वज्ञानं उत्पादयन्तः, **एनम्**—विधिम् , **उपकर्तुम्**—विवक्षितेन अतिशयेन योजयितुम् , **अलं खलु**—समर्था भवन्ति हि ! **देवता**—यागोद्देश्यभूता अग्नीन्द्रादि-व्यक्तिः, **वपुर्विधुरा**—विग्रहशून्या चेत् , **कथमिव**—केन वा प्रकारेण, **धियमुपैति**—बुद्ध्या-रूढा भवति ? ॥ ३३ ॥

अथ सुर-नर-तिर्यक्-स्थवरात्मप्रपञ्च-
प्रजननगणनासु च्छन्दसामन्तभागे ।
प्रकटतरमधीता विग्रहा देवतानामव-
[1]कलय[1] गतिं चोपासनप्रक्रियासु ॥३४॥

**अथ**—वेदसंहितानां पश्चात्तने, **छन्दसामन्तभागे**—उपनिषद्भागे, **सुर-नर....गणनासु**-देवादिचतुर्विधजगत्सृष्टिप्रतिपादिकासु श्रुतिषु, **देवतानां विग्रहाः**—अग्नीन्द्रादीनां शरीरादयः, **प्रकटतरम्**—असन्दिग्धं यथा भवति ; तथा, **अधीताः**—परिपठिताः **उपासनप्रक्रियासु च**—भगवदुपासनप्रतिपादकप्रकरणेष्वपि, **गतिम्**—देवतानामधिकारप्रतिपादनप्रकारम् , **अवकलय**—विचारपूर्वकं निश्चिनु ॥३४॥

निगमशतनिदानैर्देवताविग्रहादि
स्फुटतरमितिहासैर्धर्मशास्त्रैः पुराणैः ।
अपि गदितमनन्तोपासने[2]ऽस्याधिकार[2]-
स्तदयममरवर्गस्तत्फलार्थी समर्थः ॥३५॥

**निगमशतनिदानैः**—नानावेदवाङ्मूलैः, **इतिहासैः**—पुरावृत्तप्रतिपादकैः भारतादिभिः ग्रन्थसन्दर्भैः, **धर्मशास्त्रैः**—मन्वादिप्रवक्तृकैः स्मृतिग्रन्थैः, **पुराणैः**—सृष्टि-प्रलयादिप्रतिपादकैः

---

[1] कल्य—ग. [2] साधिकार—क, ख.

पुराणनामकैः ग्रन्थैः, **देवताविग्रहादि**—यागोद्देश्यभूतानामिन्द्राग्न्यादीनां तन्वादिकम्, **स्फुटतरम्**—वाच्यवृत्त्यैव, **गदितमपि**—उक्तमेव। **तत्**—विग्रहादिमत्त्वात्, **अयम्**—श्रुति-स्मृतीतिहास-प्रसिद्धदेहेन्द्रियादियुक्तः, **अमरवर्गः**—अग्नीन्द्रदेवतास्तोमः, **तत्फलार्थी**—प्रस्तुतब्रह्मोपासनफल-भूतमोक्षाकाङ्क्षी, **समर्थः**—उपासनोपयोगिशमादियुक्तश्च भवतीति, **अनन्तोपासने**—देशकाला-द्युपाधिविधुरस्य परमात्मनः उपासनानुष्ठाने, **अस्य**—अर्थित्व-सामर्थ्याभ्यां युक्तस्य देवगणस्य, **अधिकारः**—शास्त्रतः प्रकृतितश्च सिद्धा योग्यता दुरपह्नवा ॥३५॥

अत्रैवाधिकरणे—

**संस्थानं कलयाकृतिं त्वनुगतं तावत् प्रतीमो हि तत्**
**ब्रूमश्चापरमप्यदर्शि न तथा पक्षान्तरे जातिषु।**
**गोत्वाश्वत्वपुरःसरीषु धिषणा बह्वीषु साधारणी**
**जातिर्जातिरितीदृशी फणितिरप्येवं मदीये पथि ॥३६॥**

**अत्रैवाधिकरणे**—देवताधिकरणे एव, **आकृतिम्**—'आकृति'पदवाच्यां जातिम्, **संस्थानं कलय**—तत्तदवयवसन्निवेशाख्यसंस्थानाभिन्नं निश्चिनु। **हि**—यतः, **तत्तु**—तत् संस्थान-पदवाच्यं वस्त्वेव, **अनुगतं तावत्**—अनुगतत्वेनैव, **प्रतीमः**—जानीमः, विश्वसिमो वा, **ब्रूमः**—तथैव व्याहरामश्च, **अपरमपि**—संस्थानातिरिक्तं यत्किञ्चिदपि, **तथा**—अनुगतत्वेन, **न अदर्शि**—कैरपि न दृष्टम्, **पक्षान्तरे**—संस्थानातिरिक्तजातिवादेऽपि, **गोत्वाश्वत्वपुरस्सरीषु**-गोत्वाश्वत्वप्रमुखासु, **बह्वीषु जातिषु**—बहुसङ्ख्याकासु जातिषु, **जातिर्जातिरिति साधारणी धिषणा**—'जातिः जातिः' इत्येवमाकारा अनुगता प्रतीतिः, **फणितिरपि**—व्यवहृतिरपि, **एवम्**—एवमेव, **मदीये पथि**—संस्थानस्यैव जातित्वपक्षेऽपि युज्यत एव; (तत्तदसाधारणा-कारस्यैव संस्थानत्वात्, तस्यैव जातित्वाच्चेति) ॥३६॥

**एका व्यक्तिषु भूयसीष्वनुगता पूर्णा प्रतिव्यक्ति या**
**संस्थानादपरा निरादिनिधना सा जातिरास्थीयताम्।**
**गौर्गौरित्यनुवृत्तबुद्धि-वचसी नो चेद्घटेते कथम्?**
**व्युत्पत्तिश्च कथं गवादिवचसां व्यक्तिष्वसंख्यासु नः ॥ ३७ ॥**

**भूयसीषु व्यक्तिषु अनुगता**—बहुसङ्ख्याकेषु धर्मिषु अनुवृत्ता, **प्रतिव्यक्ति पूर्णा**—एकैकस्यामपि व्यक्तौ अन्यून(अखण्डित)स्वरूपा, **एका**—व्यक्तिभेदाधीनस्वभेदाभाववती, **निरादिनिधना**—उत्पत्तिविनाशरहिता, **संस्थानादपरा**—अवयवसन्निवेशविशेषापेक्षया विलक्षणा

च, **या**—या नाम भवेत् सामान्यपदवाच्या, **सा जातिरास्थीयताम्**—सैव जातिपदाभिधेये-त्यभ्युपगम्यताम्, **नो चेत्**—तथा यदि नाभ्युपगम्यते तर्हि, **गौगौरित्यनुवृत्तबुद्धिवचसी**—'अयं गौः' इति सर्वगोव्यक्त्यनुगतगौप्रतीतिव्यवहारौ, **कथं घटेते**—कथं वा युज्येते ? **नः**—अस्माकम्, **असङ्ख्यासु व्यक्तिषु**—गणयितुमशक्यासु व्यक्तिषु, **गवादिवचसाम्**—'गौः' इत्यादीनां शब्दानाम्, **व्युत्पत्तिश्च**—पद-पदार्थसङ्गतिग्रहोऽपि वा, **कथम्**—केन प्रकारेण सिध्यति ? ॥ ३७ ॥

**अत्र ब्रूमः प्रतीमः किमपि किमपरं वस्तु सास्नादिमत्त्वात्**
**गोत्वं नामानुवृत्ति-व्यवहृतिविषयं तद्धि तादृक्षमैक्षि ।**
**गोत्वाजत्वाश्वतादिष्वनुगतमपरं वस्तु जातिष्वनेका-**
**स्वेकं जात्यादिशब्दव्यवहृतिघटकं जातिवादे किमूचे ॥ ३८ ॥**

**अत्र**—पूर्वपक्षेऽस्मिन् प्राप्ते, **ब्रूमः**—वयमेवं प्रत्युत्तरं वदामः, **सास्नादिमत्त्वादपरम्**—गवादिगतगलकम्बलशृङ्गादेर्भिन्नम्, **अनुवृत्तिव्यवहृतिविषयम्**—अनेकेष्वेकाकारबुद्धि-तादृशशब्दप्रयोगयोर्गोचरम्, **गोत्वं नाम**—गोत्वपदाभिधेयम्, **किमपि वस्तु**—प्रमाणसम्बन्धार्हं यत्किञ्चित्, **किं प्रतीमः**—प्रयत्नतो गवेषणेऽपि किं जानीमः ? नैव, **तद्धि**—सास्नादिमत्त्वमेव खलु, **तादृक्षम्**—अनुवृत्तप्रत्ययव्यवहाराधायकम्, **ऐक्षि**—दृष्टमस्ति । **जातिवादे**—अतिरिक्त-सामान्याङ्गीकारकल्पेऽपि, **गोत्वाजत्वाश्वतादिषु**—गोत्व-अजत्व-अश्वत्वप्रभृतिषु, **अनेकासु जातिषु**—असङ्ख्यासु जातिपदाभिधेयासु, **जात्यादिशब्दव्यवहृतिघटकम्**—जात्यादिपद-व्यवहारोपपादकं, **अपरम् एकं वस्तु**—संस्थानापेक्षया भिन्नं यत्किञ्चिदेकं वस्तु, **किमूचे**—प्रतिपादितमस्ति वा ? नैवास्तीत्यर्थः ॥ ३८ ॥

**अन्यस्यादर्शनेन व्यवहृतिघटनस्याऽन्यथैवोपपत्त्या**
**कल्प्यत्वासम्भवेनाऽप्युभयसमयसङ्गीतसंस्थावलम्बी ।**
**युक्तो जात्यादिशब्दः सुसदृगिह मिथः साह्यनुस्यूतधीवा-**
**ग्व्युत्पत्त्यर्हैव यादृक् परसमयमतामाकृतिं सा व्यनक्ति ॥ ३९ ॥**

**अन्यस्य**—संस्थानातिरिक्तस्य जातिपदाभिधेयतायोग्यस्याऽर्थस्य, **अदर्शनेन**—गवादि-व्यक्तिषु अनुपलम्भेन, (तथा) **व्यवहृतिघटनस्य**—सर्वव्यवहारसामरस्यस्य, **अन्यथैव उपपत्त्या**—प्रकारान्तरतः सिद्ध्या, **कल्प्यत्वासम्भवेनाऽपि**—अनुपलब्धस्याऽपि अन्यथानुप-पत्त्यधीनकल्पनाविषयत्वस्याप्यभावेन, **उभयसमयसङ्गीतसंस्थावलम्बी**—पक्षद्वयनिर्विवादाभ्युप-गतसंस्थानविषयकत्वेनैव, **जात्यादिशब्दः**—जाति-गुण-क्रिया-यदृच्छाभेदेन चतुर्धा विभक्तः

सर्वोऽपि शब्दः, **इह** —तैस्तैः शब्दैर्बोध्येषु सजातीयेषु तेषु तेष्वर्थेषु, **युक्तः**—स्वबोध्येन सङ्गतः, **हि**—यतः, **सा**—संस्था, संस्थानम्, **मिथः सुसदृक्**—अन्योन्यमत्यन्तसौसादृश्यवत्येव वर्तते । (अत एव), **अनुस्यूतधी-वाग्व्युत्पत्त्यैहैव**—अनुगतप्रतीति-तादृशव्यवहार-तादृशशक्तिग्रहाणां नियामकत्वाहैव, **यादृक् सा**—यादृश्यैव संस्था अवयवसंनिवेशविशेषात्मिका सैव, **परसमयमताम्**—अतिरिक्तजातिवादिभिरङ्गीकृताम्, **आकृतिम्**—मीमांसकैः आकृतिपदाभिधेयां सामान्यात्मिकां जातिम्, **व्यनक्ति**—'आकृतिग्रहणा जातिः—अनुगतसंस्थानव्यङ्ग्या जातिः' इत्युक्तरीत्या व्यञ्जयति ॥ ३९ ॥

**अभावस्याभावो भवति खलु भावः परमते**
**घटादेरप्येवं कथय किमभावो न भवति ।**
**घटस्य प्रध्वंसो भवति हि कपालत्वमपर-**
**स्त्वभावः पिण्डत्वं किमिह ददृशे किञ्चिदपरम् ॥४०॥**

**परमते**—नैयायिकादीनां मते, **भावः**—अस्तीति व्यवहारास्पदः घटादिरूपोऽर्थः, **अभावस्याभावो भवति खलु**—घटप्रतियोगिकाभावस्य अभावरूपः सन् 'घटाभावो नास्ति' इति प्रतीत्या विषयीक्रियते खलु ; (द्वितीयाभावस्य प्रथमाभावप्रतियोगिस्वरूपत्वात्), **एवम्**—उक्तया रीत्या, **घटादेः अभावोऽपि**—'घटो न' इत्युल्लिख्यमानः घटभेदात्मकः अभावोऽपि, **किम् अभावो न भवति**—अभावपदवाच्यो भवितुं नार्हति वा ? भवत्येव, **कथय**—आलोच्य वद । **घटस्य प्रध्वंसः**—'इह पूर्वं घट आसीत्, अद्य नास्ति' इत्युल्लिख्यमानः घटप्रतियोगिकः ध्वंसपदवाच्यः अभावोऽपि, **कपालत्वं हि भवति**—घटावयवकपालवृत्तिधर्मात्मक एव सिद्ध्यति । **घटस्य अपरः अभावस्तु**—'इह घटो भविष्यति, अद्य नास्ति' इत्युल्लिख्यमानः घटप्रतियोगिकः प्रागभावपदवाच्यः अभावस्तु, **पिण्डत्वम्**—घटोपादानभूतमृद्गता पिण्डत्वाख्याभावो भावरूप एव । **इह**—अभावबुद्धिव्यवहारगोचरे, **अपरं किञ्चित् किमस्ति**—सर्वथाभावत्वानारूढं किञ्चित् नञाद्युल्लेख्यं वर्तते वा ? सर्वथा नैवेत्यर्थः ॥४०॥

**संसर्गाभावमेवं विदुरिह सुधियो भावमेव त्वभावं**
**मन्वानाः कुम्भवद्भूतलत इतरभूभागभेदस्त्वभावः ।**
**यस्तत्तत्कालभेदव्यतिकरितगृहप्राङ्गणादिप्रदेशः**
**कुम्भाभावाश्रयोऽन्यैरगणि स इह नः काऽधिकस्योपलम्भः ? ॥४२॥**

**अभावम्**—नञुल्लिख्यं सर्वमपि, **भावमेव मन्वानाः**—भावरूप एवेति विचारपूर्वकं निर्णयन्तः, **सुधियः**—सूक्ष्ममतयो विद्वांसः, **इह संसर्गाभावम्**—अभावेष्वन्यतमं 'नास्ति

घटो गेहे' इत्यादौ घट-गेहादिषु गेह-घटादिसंसर्गप्रतिषेधात्मकमभावम्, **एवं विदुः**—वक्ष्यमाणरीत्या निश्चिनुयुः ; **अभावः**—तत्र अभावपदवाच्योऽर्थः, **कुम्भवद्भूतलतः**—घटाधिकरणीभूतभूतलापेक्षया, **इतरभूभागभेदस्तु**—अन्यो भूप्रदेशविशेष एव, **अन्यैः**—अभावपदार्थस्य पृथक्त्ववादिभिः, **यः**—यादृशः, **तत्तत्काल ···· प्रदेशः**—पूर्वापरक्षणाद्यात्मककालविशेषसम्बद्धगेहीयचत्वरादिरूपः प्रदेशविशेषः, **कुम्भाभावाश्रयः**—तन्निर्णीतघटाभावपदार्थं प्रति आधारत्वेन, **अगणि**—निर्णीतः । **सः**—तादृशः प्रदेशविशेषः, **नः**—भावात्मकाभाववादिनामस्माकम्, **इह**—अभावपदव्यवहार्यस्य स्थाने भवति । **अधिकस्य**—एतदपेक्षया विलक्षणस्य अभावपदव्यवहारार्हस्य यस्य कस्यचनार्थस्य, **उपलम्भः**—दर्शनम्, **क्व**—कुत्र विद्यते ? ॥ ४१ ॥

**सच्च त्यच्चेति सृष्ट्वा विशसि चिदचितौ तेन चोक्तोऽसि विश्वं**
**त्वज्जत्वा[1]त्वल्लचन[1]त्वमिति च निखिलं त्वच्छरीरं किलेति ।**
**तैस्तैः शास्त्रैरभेदव्यव[2]हृति[2]हृदयं विस्तृणानैर्निरस्ताः**
**भेदाभेदावभेदं भ्रममपि भगवन् कारणं कल्पयन्तः ॥ ४२ ॥**

**भगवन्**—हे ज्ञानादिषड्गुणैश्वर्यसम्पन्न ! स्वामिन् ! त्वम्, **सच्च त्यच्चेति**—'सत्'-पदवाच्यं स्वरूपतोऽविकारि, (तथा) स्वरूप-स्वभावाभ्यां विकारि 'त्यत्'पदवाच्यं च, **चिदचितौ**—चेतनाचेतनजातम्, **सृष्ट्वा**—उत्पाद्य **विशसि**—तेषु अनुप्रवेशं कृतवानसि । **तेन च**—एवं चेतनेष्वचेतनेषु च कृतानुप्रवेशत्वादेव **विश्वम् उक्तोऽसि**—' विश्वमेवेदं पुरुषः' इत्यादिषु विश्वत्वेन प्रतिपादितोऽसि । **निखिलम्**—चेतनाचेतनात्मकं सर्वमपि जगत्, **त्वज्जत्वात्**—ब्रह्मपदवाच्यत्वदभिन्ननिमित्तोपादानकत्वात्, **त्वल्लचनत्वात्**—ब्रह्मपदवाच्ये त्वयि लीयमानत्वात्, ब्रह्मपदवाच्यत्वदायत्तप्राणनत्वाच्च हेतोः, **त्वच्छरीरं किलेति**—त्वां प्रति शरीरत्वेनैव श्रुतिस्मृत्यादिषु प्रसिद्धमिति, **त्वम् इति च उक्तोऽसि**—'सर्वं खल्विदं ब्रह्म' इति च प्रतिपादितोऽसि । (अतः) **अभेदव्यवहृतिहृदयम्**—जगद्ब्रह्मणोः अभेदव्यवहारस्य निदानभूतं श्रुत्याशयम्, **विस्तृणानैः**—विस्तारेण वर्णयद्भिः, **तैस्तैः शास्त्रैः**—जगति परमात्मानुप्रवेशस्य; परमात्मनः सकाशादुत्पत्तिस्थितिलयानाम्, परमात्मशरीरतायाश्च प्रतिपादनपरैः श्रुतिस्मृतीतिहासपुराणाद्यात्मकैः शास्त्रैः (ज्ञापकत्वेनाश्रितैः), **भेदाभेदौ कारणं कल्पयन्तः**—'ब्रह्मणि जगति च मिथो विद्यमानौ यौ भेदाभेदौ तावेव जगद्ब्रह्मणोरभेदव्यवहारहेतुभूतौ' इति, श्रुत्यादिकमननुरुद्ध्य स्वबुद्ध्या चिन्तयन्तः, **अभेदं भ्रमं च कारणं कल्प-**

---

[1] त्वल्लयन—ग. त्वल्लय—घ. [2] हृति—ग.

**यन्तः**—जीवे ब्रह्माभेदं, जगद्विषये ब्रह्मणो भ्रमं च अभेदव्यवहारहेतुं कल्पयन्तः भास्कर-यादवीय-शाङ्कराः, **निरस्ताः**—निराकृताः ॥ ४१ ॥

**अथ प्रासङ्गिकम् अरुणाधिकरणम्**—देवताधिकरणविचारप्रसक्तानुप्रसक्तानाम् एतेषामर्थविशेषाणां निरूपणानन्तरम्, तथैव प्रसङ्गाख्यसङ्गतिमत् अरुणाधिकरणमपि पूर्वमीमांसोक्तं विचारणीयं प्राप्तमस्तीत्यर्थः ॥

**उन्नीतं गुरुणाऽरुणाधिकरणे न ह्येकहायन्यगात्**
**आरुण्यान्वयमाभिधानिकमपि त्वाक्षेपतः प्रापितम् ।**
**यद्ब्रूतेऽरुणयेति केवलगुणं वाग्द्रव्यनिर्देशव-**
**द्वाक्यस्था न गिरस्तु कारकविभक्त्यन्ता मिथः सङ्गताः ॥ ४३ ॥**

**गुरुणा**—प्राभाकरमीमांसकेन, **अरुणाधिकरणे**—एतन्नामके पूर्वमीमांसान्याये, **उन्नीतम्**—विचार्य एवं निर्णीतमस्ति ; **एकहायनी**—'अरुणया पिङ्गाक्ष्या एकहायन्या गवा सोमं क्रीणाति' इति सोमक्रयणसाधनोपदेशपरे वाक्ये श्रुता एकहायनी [प्राप्तैकवत्सरा], **आभिधानिकम्**—शब्दतः प्राप्तम्, **आरुण्यान्वयम्**—रक्ततारूपगुणसम्बन्धम्, **न हि अगात्**—नैव प्राप्तवती, **अपि तु**—किं तु, **आक्षेपतः प्रापितम्**—अन्यथानुपपत्तिसिद्धमेव, **यत्**—यस्माद्धेतोः, **द्रव्यनिर्देशवद्वाक्यस्था**—द्रव्यवाचकगोपदवद्वाक्यगता, **अरुणया इति वाक्**—श्रुतिस्था तृतीयाविभक्त्यन्ता अरुणपदात्मिका गीः, **केवलगुणम्**—द्रव्यं विनैव विशेषणमात्रात्मकम् आरुण्यम्, **ब्रूते**—अभिधत्ते, **कारकविभक्त्यन्ताः**—कर्मत्वकरणत्वादिकारकप्रतिपादकद्वितीयादिविभक्त्यन्ततया दृश्यमानाः, **गिरः**—'अरुणया एकहायन्या' इत्याद्याः वाचः, **मिथः**—परस्परम्, **न तु सङ्गताः**—नैव अन्वितार्थकाः भवितुमर्हन्ति ॥ ४३ ॥

**अरुणाधिकरणसरणिः समगणि रामानुजार्यमुनिभिर्या ।**
**उचितेयमनुचितान्या परिषदि विदुषां स्फुटीभवति ॥ ४४ ॥**

**रामानुजार्यमुनिभिः**—रामानुजाचार्याख्यैः यतिवरैः, **या**—यादृशरीतिमती, **अरुणाधिकरणसरणिः**—अरुणाधिकरणसम्बन्धिनी पूर्वपक्षसिद्धान्तयोः प्रक्रिया, **समगणि**—निष्कृष्य प्रदर्शिता, **इयमुचिता**—इयमेव अदुष्टा, सप्रयोजनार्थनिर्णयोपयोगिनी च, **अन्या**—एतद्भिन्ना प्राभाकरादिभिः प्रदर्शिता सरणिस्तु, **अनुचिता**—सदोषा, सप्रयोजनार्थनिर्णयाय नाऽलम् इति, **विदुषां परिषदि**—तत्त्वार्थसंशीलनैकपटूनां सभायाम्, **स्फुटीभवति**—व्यक्तीभवति । (न गृहीतग्राहिणां मन्दानाम् अयमर्थः सुनिर्णयः इत्यर्थः) ॥ ४४ ॥

उपात्तेऽपि द्रव्ये विसदृशविभक्तिव्यपगमात्
प्रकृत्या वैशिष्ट्यं परिणमति खल्वाकृतिनयात् ।
विभक्तिस्त्वर्थैक्यं [1]कथयति[1] समानैव पदयोः
त्रिरूपा सा सङ्ख्यान्वयमिव दिशेत् कारकधियम् ॥ ४५ ॥

**द्रव्ये उपात्तेऽपि**—'अरुणया एकहायन्या गवा सोमं क्रीणाति' इत्यादौ एकहायनीत्व-विशिष्टगोरूपे द्रव्ये कण्ठतः उक्ते सत्यपि, **विसदृशविभक्तिव्यपगमात्**—'पटस्य शुक्लः' इत्यादाविव असमानायाः विभक्तेर्निर्देशाभावात्, **आकृतिनयात्**—आकृत्यधिकरणन्यायतः (पू.मी. 1-3-10) **प्रकृत्या**—तृतीयाविभक्तेः प्रकृतिभूतया अरुणेत्यनया, **वैशिष्ट्यम्**—आरुण्यगुणवत्त्वम्, **परिणमति खलु**—पर्यवस्यति खलु! **पदयोः**—'अरुणया' 'एकहायन्या' इति पदयोः श्रूयमाणा, **समाना विभक्तिस्तु**—तृतीयात्मिका एका विभक्तिस्तु, **अर्थैक्यम्**—आरुण्यैकहायनत्वयोर्धर्म्यभेदम्, **कथयत्येव**—प्रतिपादयत्येव । **त्रिरूपा**—कारकविभक्तित्व-समानविभक्तित्वैकवचनत्वात्मकरूपत्रयवती, **सा**—तृतीयात्मिका विभक्तिः, **सङ्ख्यान्वयमिव**—एकवचनत्वेन रूपेण एकत्वसङ्ख्यासंसर्गमिव, **कारकधियम्**—'करणाधिकरणयोश्च' (पा.सू. 3-3-117) इति करणार्थविहितविभक्तित्वेन रूपेण, क्रयसाधनत्वविषयकं बोधमपि, **दिशेत्**—जनयितुं शक्नुयादेव ॥ ४५ ॥

श्रीवात्स्यवरदार्याणां तत्त्वसारेऽयमादितः ।
अध्यायो रामभद्रेण टिप्पण्याऽऽयोजितः शुभः ॥

—o—

## (३) अधिकरणसारावलिः (श्लो. २०-२५)

शब्दात्मा लौकिकार्थाकृतिरियमथवा देवताऽतो न तस्याः
ब्रह्मोपासेत्यनार्षं श्रुतपरिहरणं कल्पनं चाश्रुतस्य ।
विश्वस्रष्टा च मा भूदनुमितिविषयस्तत्परैस्त्वेष शास्त्रैः
निर्बाधैः स्थापितः प्राक् स्वयमपि विभुना नैव शक्यापलापः ॥२०॥

**देवता**—त्यागोद्देश्यभूतोऽर्थः, **शब्दात्मा**—'अग्नये' इत्येवमादिचतुर्थीविभक्त्यन्तशब्द-स्वरूपः, **अथवा**—यद्वा, **इयम्**—देवता, **लौकिकार्थाकृतिः**—परिदृश्यमानवस्तुरूपा भवेत्; न तु अलौकिकस्वरूपा । (यद्वा) **लौकिकार्थाकृतिः शब्दात्मा**—(लौकिकार्थस्वरूपम् आकृतिः

[1] प्रथयति—क.

यस्याः सा) लोकपरिदृश्यमानाकारविशिष्टशब्दाख्यस्वरूपा भवेत्; न तु विलक्षणा अवेद्या। **अतः**—शब्दस्वरूपत्वात्, लौकिकाग्न्यादिरूपत्वाद्वा, **तस्याः**—देवतायाः, **ब्रह्मोपासा**—वेदान्तैः मोक्षार्थं विहितं ब्रह्मध्यानात्मकमुपासनम्, **न**—नैव सम्भवति, **इति**—ईदृशं वर्णनम्, **अनार्षम्**—श्रुतितात्पर्यविदूरम्। (यतः) **श्रुतपरिहरणम्**—श्रुतिसिद्धायाः ('एनं प्रीणाति' इति) देवताप्रीतेः, ('क्षेपिष्ठा देवता' इत्याद्युक्तायाः) क्षेपिष्ठत्वादिकायाश्च देवतागतायाः अनभ्युपगमः, **अश्रुतस्य कल्पनं च**—श्रुतौ अनुक्तं यत् 'देवतायाः शब्दात्मकत्वम्, लौकिकाकृतिमत्त्वम्, कर्मजन्यापूर्वस्यैव फलप्रदत्वं; न देवतायाः' इत्यादि, तस्य असतोऽर्थस्य स्वबुद्ध्या चिन्तनं चेति, (द्वौ दोषौ आपतेताम्), **विश्वस्रष्टा च**—सर्वजगन्निर्माता परमपुरुषस्तु, **अनुमितिविषयो मा भूत्**—शास्त्रेतरानुमानगम्यो न भवतीत्ययं निर्णयश्च अचलित एवास्तु। (यतः) **एषः**—जगत्कारणभूतः परमात्मा, **तत्परैः**—ईश्वरप्रतिपादनैदम्पर्यवद्भिः **निर्बाधैः**—बाधकप्रमाणान्तररहितैः, **शास्त्रैस्तु**—'सदेव सोम्येदमग्र आसीत्' (छां.उ. 6-2-1) 'आत्मा वा इदमेक एवाग्र आसीत्' (ऐत.उ. 1-1) 'ब्रह्म वा इदमेकमेवाग्र आसीत्' (बृ.उ. 3-4-11) इत्यादिशास्त्रैः, **प्राक्**—शास्त्रयोनित्वाधिकरणे एव, **स्थापितः**—प्रयतप्रतिष्ठः। (अद्य) **स्वयमपि विभुना**—सर्वशक्तेन साक्षात्परमात्मनैवाऽपि, **नैव शक्यापलापः**—सर्वथा अनपलपनीयस्वरूपा विजृम्भते ॥२०॥

**सामर्थ्यं देवतानामुचिततनुभृतामर्थिता तापभाजां**
**सम्पद्येतेति तासामपि भवति परोपास्तिवर्गाधिकारः।**
**ख्यातं मन्त्रार्थवादप्रभृतिषु निखिलं बाधदोषाद्यभावे**
**मिथ्येत्युद्घोषयन्तः स्वत इह कथितां मानतां [1]प्रस्मरन्ति[1] ॥२१॥**

**उचिततनुभृताम्**—उपासनानुष्ठानयोग्यशरीरसम्पत्तिमताम्, **देवतानाम्**—देवभावजुषां चेतनानाम्, **सामर्थ्यम्**—जन्मना, कर्मणा, बुद्ध्या च साधनारम्भे आरब्धस्य साधनस्य परिपूर्त्यापादने ततः फलप्राप्तौ च योग्यता, **तापभाजाम्**—तापत्रयभागित्वादेव तेषाम्, **अर्थिता**—(तापविमोचके साधने) इच्छा च, **सम्पद्येतेति**—सम्पन्ना भवेदेवेति, **तासामपि**—देवतानामपि, **परोपास्तिवर्गाधिकारः**—सर्वासु परविद्यासु मोक्षसाधनीभूतासु अनुष्ठातृत्वम्, **भवति**—वर्तत एव। **मन्त्रार्थवादप्रभृतिषु**—कर्माङ्गतया विनियुक्तेषु मन्त्रेषु, कर्मप्राशस्त्येदम्परेषु अर्थवादेषु कर्मविधायकेषु ब्राह्मणभागेषु तथैवोपनिषत्सु च, **ख्यातम्**—स्पष्टप्रतिपन्नमेव,

---

[1] **विस्मरन्ति—क.**

**निखिलम्**—तत्तद्देवताविग्रहगुणविभूत्यादिकं सर्वम्, **बाध-दोषाद्यभावे**—प्रमाणान्तरसिद्धबाधकप्रत्ययस्य, एतत्प्रमाजनके दोषस्य चाभावेऽपि, **मिथ्येति**—असदिति, अपरमार्थमिति वा, **उद्घोषयन्तः**—निःशङ्कमाडम्बरेण प्रलपन्तः निरीश्वरमीमांसकाः, **इह**—समग्रवेदराशिविषये, **स्वतः कथिताम्**—स्वैरेव कथिताम्, **स्वतो मानताम्**—प्रमाणान्तरानधीनं प्रामाण्यम्, **प्रस्मरन्ति**—अस्मृत्वैव यत्किञ्चिद्वदन्ति ; न तु स्वोक्तपूर्वापराविरुद्धं, विषयाविरुद्धं वा ॥ २१ ॥

द्वेधा वृत्तिः स्तुतौ स्यात् स्व-परगुणमुखी प्राक्तनी तावदर्थ्या
निर्धार्यः पश्चिमायामपि निपुणधिया मुख्यधर्मैकदेशः ।
रुच्यर्थायां च तस्यामनृतकथनतो रोचना न ह्यमुग्धे
भूतार्थे का स्तुतिः स्यादिति मुनिगदितं गौणतादेर्निवृत्त्यै ॥ २२ ॥

**स्तुतौ**—प्रस्तुतार्थप्रशंसापरे अर्थवादादिरूपे वाक्ये, **वृत्तिः**—स्वोद्देश्यभूतप्रशंसाप्रतिपादकता, **स्व-परगुणमुखी**—स्तोतव्यार्थगतपारमार्थिकगुणकथनद्वारिका, (तथा) उत्कृष्टवस्त्वन्तरगतगुणस्य प्रस्तुते धर्मिण्यारोपद्वारिका चेति, **द्वेधा**—द्विप्रकारा वर्तते । **प्राक्तनी तावत्**—तयोः प्राथमिकी स्वगुणमुखी स्तुतिप्रवृत्तिस्तु, **अर्थ्या**—यथावस्थितार्थवत्त्वात् अर्थनीया भवति । **पश्चिमायामपि**—अनन्तरोक्तायां परगुणमुख्यायां स्तुतिप्रवृत्तावपि, **मुख्यधर्मैकदेशः**—शब्दवृत्त्या बोध्यस्य प्रशंसानिदानभूतस्य धर्मस्य किञ्चिदंशः विद्यमानः, **निपुणधिया**—समग्रदर्शिना चतुरेण पुरुषेण, **निर्धार्यः**—स्तुतिप्रवृत्तौ निमित्ततया अवधार्यः । **तस्याम्**—स्तुतिप्रवृत्तौ, **रुच्यर्थायाम्**—केवलं प्ररोचनप्रयोजनिकायां सत्याम्, **अनृतकथनतः**—अयथार्थभूतविषयवर्णनेन, **अमुग्धे**—मुग्धत्वरहिते प्रौढे जने, **रोचना न हि**—अविचारपूर्वकप्रवृत्तिजनिका प्राशस्त्यबुद्धिः नैव जायते । **भूतार्थे**—यथावस्थितार्थे एव वर्णिते सति, **का स्तुतिः स्यात्**—तद्वर्णनं कथं स्तुतिरूपं भवेत् ? **इति मुनिगदितम्**—इत्येवमादिकम् आर्षं वाक्यं तु, **गौणतादेः**—केवलौपचारिकत्वादेः, **निवृत्त्यै**—यथार्थस्तुतौ अभावज्ञापनायैव ; न तु स्तुतित्वाभावबोधनायेति ॥ २२ ॥

नानादेहाप्तिशक्ताः कथमिह युगपत्कर्मसंनिध्यनर्हाः
तत्तद्वृत्तान्तसत्त्वे श्रुतिषु भवति नानित्ययोगः प्रवाहात् ।
काण्डादौ कर्तृवादः प्रवचननियतो वेदनित्यत्वसिद्धेः
ईशः प्राचीनकल्पक्रमत उपदिशेद्वर्णसर्गेऽपि वेदान् ॥ २३ ॥

**नानादेहाप्तिशक्ताः**—युगपदेव अनेकशरीरग्रहणसामर्थ्यवन्तो देवाः, **श्रुतिषु**—वेदेषु, **तत्तद्वृत्तान्तसत्त्वे**—तत्तथाविधदेवगतमाहात्म्यप्रतिपादकवृत्तान्तानां विद्यमानत्वे, **कथमिव युगपत् कर्मसंनिध्यनर्हाः ?**—कथं वा एकदानुष्ठीयमानेषु बहुषु कर्मसु स्वयं संनिधातुमनर्हा भवेयुः, **प्रवाहात्**—देवानां प्रवाहतोऽनादित्वात्, **अनित्ययोगो न भवति**—अनित्यविग्रहादिमद्देवतावर्णनेऽपि वेदानाम् अनित्यार्थसम्बन्धरूपो दोषः नाऽपतति। **वेदनित्यत्वसिद्धेः**—वेदेषु कदाप्यविपर्यस्तानुपूर्वीकत्वरूपनित्यत्वस्य प्रमाणसिद्धत्वात्, **काण्डादौ**—काठक-वैश्वामित्र-सूक्तादिवेदभागविशेषे, **कर्तृवादः**—कठादिसंज्ञानां मुनीनां निर्मातृत्वप्रवादः, **प्रवचननियतः**—तैस्तैरेव कल्पादौ तत्तद्भागप्रवक्तृत्वायत्तः ; न तु स्वाधीनप्रयोक्तत्वकृतः, **वर्णसर्गेऽपि**—वर्णानामेकैकशः सृज्यमानत्वेऽपि, **ईशः**—सर्वेश्वरो भगवान् नारायणः, **वेदान्**—वेदसंज्ञान् विशिष्टानुपूर्वीकान् शब्दराशीन्, **प्राचीनकल्पक्रमतः**—पूर्वकल्पसिद्धानुपूर्वीमविहायैव, **उपदिशेत्**—पश्चात्तने कल्पेऽपि ब्रह्मणे उपदेशं करोतीति, (वेदनित्यत्वस्य न विरोधः) ॥ २३ ॥

**वेदानामीशबुद्ध्या क्रमनियमहतिः कल्पभेदे यदीष्टा**
**मन्त्रांशानां तथा स्यान्न खलु तदुचितं व्रीहिसोमादिसाम्यात्।**
**इत्थं विध्यर्थवादक्रम इति [1]नियते[1] पाक्षिके वा तथात्वे**
**पक्षोऽसावाक्षपादः परमतपरिषत्कोटिमाटीकतां नः ॥ २४ ॥**

**कल्पभेदे**—कल्पान्तरे प्रवृत्ते सति, **वेदानाम्**—श्रुतीनाम्, **क्रमनियमहतिः**—आनुपूर्वीनियमभङ्गः, **ईशबुद्ध्या**—ईश्वरस्य सङ्कल्पेन भवितुमर्हतीति, **इष्टा यदि**—सम्मन्यते यदि ; तदा, **मन्त्रांशानाम्**—मन्त्रपदाभिधेयानां वेदघटकभागानामपि, **तथा स्यात्**—आनुपूर्वीनियमभङ्गः सम्मतः स्यात्। **तत्**—नियतानुपूर्वीकताया भङ्गस्य मन्त्रेष्वनभ्युपगमनम्, **नोचितं खलु**—नैव सङ्गतं खलु। (कुतः ?) **व्रीहिसोमादिसाम्यात्**—यागीयहविःप्रकृतिभूतानां व्रीह्याख्यधान्य-सोमाख्यलतादिरूपाणां द्रव्याणां यागसम्पादकत्वमिव, प्रयोगसमवेतद्रव्यदेवतादिसमर्पकाणां मन्त्राणामपि, यागं प्रति अन्वयव्यतिरेकयोः नियमग्राहकतायाः समानत्वात् ; **इत्थम्**—मन्त्रेषु नियतानुपूर्वीकत्वमिव, **विध्यर्थवादक्रमः**—यागस्वरूपज्ञापकेषु विधिवाक्येषु (तथा) याग-प्रशंसासमर्पकेषु अर्थवादवाक्येष्वपि च अवर्जनीयः आनुपूर्व्यविपर्यासः, **इति नियते**—उक्त-हेतुना अविशेषतो वेदत्वावच्छेदेन आनुपूर्व्यवैपरीत्येऽभ्युपगते, **पाक्षिके वा तथात्वे**—वेदैक-देशात्मकमन्त्रभागगतानुपूर्वीनियमे वा स्वीकृते सति, **असौ**—वेदान्तिसम्मतिविदूरः, **आक्षपादः पक्षः**—गौतमीयत्वेन प्राप्तप्रचारः पक्षः, **नः**—वेदान्तिनामाशयानुरोधेन, **परमतपरिषत्कोटिम्**—अवैदिकसिद्धान्तप्रवेशम्, **आटीकताम्**—प्राप्नोतु नाम ; का हानिः ॥ २४ ॥

[1] नियमे—अ, आ.

सौक्ष्म्यात्तुल्याभिघारात् सहकृदपगमाच्छादकादान्यपर्यात्
अत्यासत्त्यातिदूराद्बलवदभिभवानुद्भवाक्षोपघातैः ।
नेक्ष्यन्ते वर्तमानान्यपि हि सुर[1]गणास्त[1]द्वदन्तर्धिशक्तेः
प्रख्याताः सिद्धिभेदा अपि जनन-तपो-योग-मन्त्रौषधिभ्यः ॥ २५ ॥

**वर्तमानान्यपि**—अदूरसन्निकृष्टानि वस्तून्यपि, **सौक्ष्म्यात्**—(परमाण्वादय इव) सूक्ष्मपरिमाणत्वात्, **तुल्याभिघारात्**—(तैलनिषिक्ततैलमिव) अत्यन्तसुसदृशवस्तुसंसर्गात्, **सहकृदपगमात्**—(अन्धकारस्थपदार्थ इव) आलोकादिसहकारिकारणविरहात्, **छादकात्**—(पटाद्यन्तरितवस्तुनीव) तिरोधायकात्, **आन्यपर्यात्**—द्रष्टुः पुरुषस्य विषयान्तरव्यासक्तमनस्कत्वात्, **अत्यासत्त्या**—(नयनगोलस्थधूल्यादेरिव) अत्यन्तनैकट्यात्, **अतिदूरात्**—(नभोमण्डलगतनक्षत्रादिस्थसंनिवेश इव) अत्यन्तदूरत्वात्, **बलवदभिभवात्**—(मध्याह्नगतप्रदीपादिरिव) बलवता वस्त्वन्तरेण गृहीतेन एतद्ग्रहणनिरोधात्, **अनुद्भवात्**—(चक्षुःकिरणा इव) प्रत्यक्षतौपयिकोद्भूतत्वाभावात्, **अक्षोपघातात्**—(नेत्ररोगादिनेव) इन्द्रियवैकल्याच्चेत्येतेभ्यो हेतुभ्यः, **न ईक्ष्यन्ते हि**—नैव चक्षुषा गृह्यन्ते खलु, **तद्वत्**—तत्र तत्र तेषु तेषु इन्द्रियग्राह्या अपि यथा न गृह्यन्ते; तथा, **अन्तर्धिशक्तेः**—स्वस्वरूपतिरोधानौपयिकशक्तिमत्त्वात्, **सुरगणाः**—सर्वत्र स्थातुमर्हाः देवसमूहा अपि, **न ईक्ष्यन्ते**—चक्षुषा न दृश्यन्ते । **जनन.... षधिभ्यः**—जन्मत एव वा, तपोबलेन वा, योगबलेन वा, जाप्यमानमन्त्रबलेन वा, ओषधिशक्तितो वा, **सिद्धिभेदा अपि**—अन्तर्धानाद्यनुकूलाः सिद्धिविशेषा अपि, **प्रख्याताः**—लोकशास्त्रादिषु प्रसिद्धा एव । (अतः विद्यमानानामपि देवतानामनुपलम्भो युज्यत एवेति) ॥ २५ ॥

## (४) अधिकरणार्थसङ्ग्रहः

देवताधिकरणे—देवादीनां निर्दुःखानाम् अशरीरत्वेन, अर्थित्व-सामर्थ्ययोरभावेन, ब्रह्मविद्यायामधिकारो नास्ति—इत्याशङ्क्य,

सृष्टिप्रकरणेषु उपासनप्रकरणेषु च अर्थवादे शरीरप्रतिपादनात्, तापत्रयाभिभूतत्वाच्च अर्थित्व-सामर्थ्ययोः सम्भवात्, तेषामप्यधिकारोऽस्ति—इति सिद्धान्तितम् ॥

---

[1] गणस्त—श्रा.

(५) नयसङ्गतिमालिका

उपासनं मनुष्याधिकारं चेत् प्रमितोक्तितः ।
देवाधिकारापवादो देवतानयवारितः ॥ ५५ ॥

॥ इति देवताधिकरणम् ॥ ७ ॥

—o—

(२५) मध्वधिकरणम् ॥ १-३-८ ॥

(१) शारीरकन्यायकलापसङ्ग्रहः

मध्वादिविद्यास्वधिकारभाजो वस्वादयो नैव वसुत्वयोगात् ।
उपास्यभावादिति नैव यस्माद् भूयोऽपि [1]'वाऽञ्छास्ति'[1] परो ह्युपास्यः ॥ ३६ ॥

**वस्वादयः**—आदित्य-वसुप्रभृतयो देवाः, **मध्वादिविद्यासु**—मधुविद्यादिरूपासु उपास्तिषु, **नैव अधिकारभाजः**—कर्तृत्वार्हतावन्तो नैव भवन्ति । (कुतः ?) **वसुत्वयोगात्**—प्रेप्सितस्य वसुत्वादेः प्राप्तत्वादेव । (न हि प्राप्तमेव प्रेप्सितं भवति) **उपास्यभावात्**—तासु च विद्यासु वस्वादित्यादीनामेव उपास्यत्वात्, (एकस्मिन्नेव उपास्यत्वोपासकत्वयोः विप्रतिषिद्धत्वात्) **इति नैव**—एवमाशङ्कनं न युज्यत एव, **यस्मात्**—यतः, **भूयोऽपि**—पुनरपि (प्राप्तवस्वादिपद-निवृत्त्यनन्तरकालेऽपि), **वाञ्छा**—वस्वादिपदप्रेप्सा, **अस्ति**—विद्यत एव खलु । (अतः प्राप्तत्व-प्रेप्सितत्वयोः न विरोधः) **उपास्यः**—मधुविद्यादिषु उपास्यत्वेन शास्त्रसिद्धः, **परो हि**—आदित्यवस्वादिशरीरकः परमात्मैव खलु ! (अतः उपास्यत्वोपासकत्वविप्रतिषेधाभावः) ॥ ३६ ॥

(२) अधिकरणसारावलिः

स्यादेवं देवमात्रे मनुज इव परोपास्तिमात्रं तथाऽपि
स्वस्यैवाराध्यभावः स्वपदमपि फलं यत्र नाऽत्राधिकारः ।
मैवं सर्वान्तरात्मा स्वतनुभृदिति चोपासते मुक्तिकामाः
कामादावर्तते तु स्वपदमपि फलं कल्प-मन्वन्तरादौ ॥ २६ ॥

**एवम्**—देवताधिकरणसिद्धया रीत्या, **देवमात्रे**—देवतासामान्ये, **मनुजे इव**—मनुष्ये इव, **परोपास्तिमात्रम्**—परमपुरुषोपासनसामान्यम्, **स्यात्**—सिद्धं भवेत्, **तथाऽपि**—सामान्यतः एवमङ्गीकारेऽपि, **यत्र**—मधुविद्याद्यात्मके यस्मिन् उपासनविशेषे, **स्वस्यैव**—

[1] वाञ्छन्ति—क.

उपासकस्यैव चेतनस्य, **आराध्यभावः**—उपासनेन प्रसादनीयता, (तथा) **स्वपदमपि**—स्वेनानुभूयमानं स्थानमेव, **फलम्**—उपासनेन लभ्यं प्रयोजनम्। **अत्र**—ईदृशे उपासनविशेषे **न अधिकारः**—कर्तृत्वार्हता नैवाऽस्तीति चिन्तने प्राप्ते, **मैवम्**—अनया रीत्या निर्णयो नोचितः। **मुक्तिकामाः**—मुमुक्षवः, **सर्वान्तरात्मा**—सर्वेषां चेतनाचेतनानामन्तःप्रविश्य नियन्ता, **स्वतनुभृत्**—स्वात्मशरीरकः, **इति च**—इति प्रकारद्वयेन, **उपासते**—उपासनं कुर्वन्ति। (अतः) **कल्प-मन्वन्तरादौ**—कल्पान्तर-मन्वन्तरप्रभृतिके कालविशेषे, **स्वपदमपि**—वसुत्ववतः वसुत्वप्राप्त्यात्मकं फलमेव च, **फलम्**—वस्वादिकृतोपासनस्य फलभूतं सत्, **कामात्**—'अनन्तरकल्पेऽप्यहमेव वसुर्भवेयम्' इत्यादिरूपादिच्छाविशेषात्, **आवर्तते तु**—पुनरपि लभ्यत एव ॥ २६ ॥

## (३) अधिकरणार्थसङ्ग्रहः

मध्वधिकरणे—वस्वादीन् प्रति वस्वादीनामुपास्यत्वायोगात्, मध्वादिविद्यासु वस्वादीनामनधिकारः—इत्याशङ्क्य,

वस्वादिशरीरकब्रह्मण एव उपास्यत्वात्, कल्पान्तरे वस्वादित्वस्य प्राप्यत्वसम्भवाच्च, मध्वादिविद्यासु वस्वादीनामधिकारोऽस्ति—इति सिद्धान्तितम् ॥

## (४) नयसङ्गतिमालिका

**यद्यप्युपास्तिसामान्ये स्यात् सामर्थ्यादिसम्भवः ।**
**प्रत्युदाहरणत्वेन मध्वादिनयसम्भवः ॥ ५६ ॥**

**॥ इति मध्वधिकरणम् ॥ ८ ॥**

—o—

## (२६) अपशूद्राधिकरणम् ॥ १–३–९ ॥

## (१) शारीरकन्यायकलापसङ्ग्रहः

**स्वाध्यायहीना अपि [1]भारतादीन्[1] श्रुत्वाऽथ [2]विज्ञाय परं[2] पुमांसम् ।**
**उपास(ते?)तां शूद्रगणा इतीदं न सत्; निषेधात् श्रवणादिकस्य ॥ ३७ ॥**

**स्वाध्यायहीना शूद्रगणा अपि**—श्रुतिप्राप्तवेदाध्ययनाधिकाररहिताः अत्रैवर्णिका अपि, **भारतादीन्**—महाभारतप्रभृतीन्, **श्रुत्वा**—वर्णज्येष्ठेभ्यः श्रवणेन गृहीत्वा, **अथ**—तदनन्तरम्,

---

[1] भारत दि—ग. [2] विज्ञानपरं—ख.

**परं पुमांसम्**—परमपुरुषम् , **विज्ञाय**—मननेन दृढीकृत्य, **उपासताम्**—भक्तियोगतः आराधयन्तु नाम ; **इतीदम्**—एवं कल्पनम् , **न सत्**—नैव साधु, **श्रवणादिकस्य**—श्रवणमारभ्य निदिध्यासनान्तस्य सर्वस्यापि, **निषेधात्**—अत्रैवर्णिकानां प्रतिषिद्धत्वात् ॥ ३७ ॥

(२) **अधिकरणसारावलिः** (श्लो. २७-२९)

**जैमिन्युक्तापशूद्राधिकरणसरणेर्नास्ति विद्याग्निलब्धिः**
**शूद्रादीनां तथापि स्मृतपरभजनाधिक्रिया जाघटीति ।**
**श्रोतृत्वाद्भारतादेः स्वजनिसमुचितैः कर्मभिश्चेत्ययुक्तं**
**प्राप्ते ब्रह्मोपदेशे ह्युपनयनपरामर्शनादि प्रसिद्धम् ॥ २७ ॥**

**जैमिन्यु....सरणेः**—जैमिन्याख्येनाचार्येण अपशूद्राधिकरणे (पू.मी. 6-1-7) 'अपि वा वेदनिर्देशादपशूद्रं प्रतीयेत' (पू.मी.सू. 6-1-34) इत्यत्र निर्णीतां रीतिमनुरुध्य (चिन्तने क्रियमाणे) **विद्याग्निलब्धिः**—अध्ययनविधिसिद्धवेद-तदर्थलाभः, (तथा) आधानविधिसिद्धाग्निलाभश्च, **शूद्रादीनाम्**—चतुर्थवर्णीयादीनां जनानाम् , **नाऽस्ति**—नैव शास्त्रसिद्धः, **तथाऽपि**—तथा सत्यपि, **भारतादेः श्रोतृत्वात्**—वेदोपबृंहणभूतानामितिहासपुराणादिग्रन्थानां श्रवणेऽधिकृतत्वात् तेषामपि, **स्वजनिसमुचितैः कर्मभिश्च**—स्वजन्मानुगुणत्रैवर्णिकशुश्रूषाधिभिः विद्योपकारकैः, **स्मृतपरभजनाधिक्रिया**—गीतादिस्मृतिसिद्धः परब्रह्मोपासनाधिकारः, **जाघटीति**—निर्विशङ्कं युक्त एव भवति, **इत्ययुक्तम्**—ईदृशं चिन्तनमसाधु, **ब्रह्मोपदेशे**—श्रुत्यादौ ब्रह्मविद्याया उपदेशे प्रस्तुते सति हि, **उपनयनपरामर्शनादि**—उपनयनसंस्कारोपस्थापकशब्दप्रयोगादिकम् 'उप त्वा नेष्ये' इत्यादिरूपम्, **प्रसिद्धं हि**—श्रुतितदुपबृंहणचिन्तकानां ज्ञातमेव खलु ! ॥ २७ ॥

**शूद्राणां भारतादेः श्रवणमनुमतं पापशान्त्यादिसिद्ध्यै**
**वेदार्थापातबुद्धिर्यदनधिकरणा नोपबृंह्येत तैः सः ।**
**विद्यास्थानानि शूद्रैर्मुरभिदकथयत्पाण्डवाय द्विसप्ता-**
**प्यस्प्रष्टव्यानि तस्मान्नहि ! विकलधियां स्यादुपासाधिकारः ॥ २८ ॥**

**शूद्राणाम्**—अत्रैवर्णिकानाम्, **भारतादेः श्रवणम्**—इतिहासपुराणादेः पूर्ववर्णीयेन श्रवणतो ग्रहणम्, **पापशान्त्यादिसिद्ध्यै**—तेषामपि दुरितविनाशसम्पत्त्यर्थम्, **अनुमतम्**—ऋषिभिरनुज्ञातम् । **वेदार्थापातबुद्धिः**—वेदार्थविषयिणी विचारपूर्वकालिकी सामान्यतो ग्रहणात्मिका धीः, **यदनधिकरणा**—यस्मिन् अत्रैवर्णिके असम्भाविता, **सः**—त्रैवर्णिकेतरः,

**तैः**—श्रुतैर्भारतादिभिः, **न उपबृंहयेत**—विशदीकृतार्थज्ञानवान् न भवितुमर्हति । **मुरभित्**—भगवान् श्रीकृष्ण एव, **द्विसप्त विद्यास्थानान्यपि**—चतुर्दशविद्यास्थानान्यपि, **शूद्रैः**—त्रैवर्णिकेतरैः, **न स्प्रष्टव्यानीति**—अध्ययनादिना सम्बद्धुं नैव योग्यानीति, **पाण्डवाय**—युधिष्ठिरमुद्दिश्य, **अकथयत्**—'तस्मान्नैतानि शूद्राद्यैः स्प्रष्टव्यानि युधिष्ठिर !' इति श्लोकेन कथितवान् । **तस्मात्**—असम्पादितवेद-तदर्थापातज्ञानत्वात् हेतोः, **विकलधियाम्**—श्रुत्यादि-चोदिते ज्ञाने वैकल्यवताम्, **उपासाधिकारः**—मोक्षार्थोपासनप्रवृत्त्यर्हता, **न हि स्यात्**—नैव सिद्धा भवति ॥ २८ ॥

**गीतं शूद्रादिकानामपि परभजनं केवलं स्वार्हधर्मैः**
**धर्मव्याधस्तुला[1]धृग्विदुर[1] इति च [2]ते[2] प्राग्भवाभ्याससिद्धाः ।**
**वक्ता शूद्रेति जानश्रुतिमभिमुखयन् शोकमस्य व्यनक्ति**
**क्षत्तृप्रैषादिलिङ्गैः स्फुटतरविदितं क्षत्रियत्वं हि ! तस्य ॥ २९ ॥**

**शूद्रादिकानामपि**—चतुर्थादिवर्णीयानामपि, **परभजनम्**—परमात्मसेवनम्, **स्वार्हधर्मैः केवलम्**—भगवन्नामस्मरणतद्वन्दनपुष्पाद्याहरणसमर्पणादिरूपैः स्वयोग्यैः कर्मभिरेव ; न तु उपासनापरपर्यायेण ज्ञानेन कार्यम् ; इत्यभिप्रायेण, **गीतम्**—श्रीकृष्णेन भगवद्गीतायामुक्तं 'मां हि पार्थ व्यपाश्रित्य' इत्यादौ । **धर्मव्याधः तुलाधृक् विदुरः इति च ते**—'धर्मव्याधः, तुलाधारः विदुरः' इत्येते महाभारतादिप्रसिद्धाः वेदतत्त्वार्थज्ञास्तु, **प्राग्भवाभ्यास-सिद्धाः**—वेदाधिकृतपूर्वजन्मानुष्ठितध्यानाभ्यासलब्धज्ञानवन्त एव ; न तु तज्जन्मीयेन । **वक्ता**—परतत्त्वोपदेशप्रवृत्तो रैक्वस्तु, **जानश्रुतिम्**—एतन्नामानम् क्षत्रियम्, **शूद्रेति अभिमुखयन्**—'शूद्र'शब्देन सम्बोधयन्, **अस्य**—जानश्रुतेः उपदेश्यस्य, **शोकम्**—ब्रह्मविद्याया अलाभायत्तं दुःखम्, **व्यनक्ति**—स्पष्टीकरोति । **हि**—यतः, **तस्य**—जानश्रुतेः, **क्षत्रियत्वम्**—क्षत्रियवर्ण-जातत्वम्, **क्षत्तृप्रैषादिलिङ्गैः**—समभिव्याहृतैः रैक्वान्वेषणार्थं सूतप्रेषणादिरूपैः ज्ञापकैः, **स्फुट-तरविदितम्**—सुस्पष्टं ज्ञातमेव भवति खलु ! ॥ २९ ॥

## (३) अधिकरणार्थसङ्ग्रहः

अपशूद्राधिकरणे—रैक्वेण, जानश्रुतिं 'शूद्र !' इत्यामन्त्र्य, तस्यैव ब्रह्मविद्याया उपदिष्टत्वात्, शूद्रादीनामपि ब्रह्मविद्यायामधिकारोऽस्ति—इत्याशङ्क्य,

'शूद्र'शब्दस्य शोचितृवाचकत्वात्, शूद्रादीनाम् अध्ययननिषेधेन सामर्थ्याभावाच्च, न शूद्रादीनामधिकारः—इत्युक्तम् ॥

---

[1] धृद्विदुर—आ. [2] तु—आ.

### (४) नयसङ्गतिमालिका

शूद्रो विद्याधिकारी स्यात् सामर्थ्यार्थित्वयोगतः ।
इत्याशङ्कापवादार्थमपशूद्रनयोदयः ।। ५७ ।।

॥ इति अपशूद्राधिकरणम् ॥ ९ ।।

—o—

## (२७) अर्थान्तरत्वादिव्यपदेशाधिकरणम् ।। १–३–१० ।।

### (१) शारीरकन्यायकलापसङ्ग्रहः

धूत्वेति वाक्ये प्रकृतस्तु पूर्वमाकाशतामृच्छतु मुक्त एव ।
एतन्नहि प्राणिति नामरूप[1]निर्वाहकौ[1] नैव हि बद्ध[2]मुक्तौ[2] ।। ३८ ।।

**पूर्वं धूत्वेति वाक्ये**—छान्दोग्यगतत्रयोदशखण्डान्तिमे 'धूत्वा शरीरमकृतं कृतात्मा' इत्यस्मिन् वाक्ये, **प्रकृतः**—प्रस्तुतः, **मुक्त एव तु**—मुक्त आत्मैव, **आकाशताम्**—'आकाशो ह वै नाम-रूपयोर्निर्वहिता' इति वाक्यस्थाकाशपदवाच्यताम्, **ऋच्छतु**—प्राप्नोतु नाम, **एतत्**—ईदृशं चिन्तनम्, **न हि प्राणिति**—नैव लब्धात्मकं भवितुमर्हति । **हि**—यतः, **बद्धमुक्तौ**—संसारी चेतनः, मुक्तचेतनश्चेत्युभावपि, **नैव नामरूपनिर्वाहकौ**—तत्तत्कर्माद्यनुगुण-नामरूपसम्पादनाधिकृतौ सर्वथा न भवितुमर्हतः ॥ ३८ ॥

### (२) अधिकरणसारावलिः

धूत्वेति प्राच्यवाक्यप्रकृत इह भवेन्मुक्त आकाशनामा
[3]बद्धो[3]ऽसौ नाम-रूपे वहति तदनु च ब्रह्मभावे जहाति ।
इत्यन्याय्यं पुरोक्तः पुनरयमभिसम्भाव्य एव ह्युपात्तो
ब्रह्मत्वं न ह्यवस्था श्रुतिषु च युगपज्ज्ञाज्ञतादिर्विभक्तः ।। ३० ।।

**धूत्वेति प्राच्यवाक्यप्रकृतः**—'धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानि' इति पूर्वखण्डान्तिमवाक्यप्रस्तुतः, **मुक्तः**—निवृत्तसंसारश्चेतन एव, **इह**—'आकाशो ह वै नाम-रूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' इत्यस्मिन्वाक्ये, **आकाशनामा**—आकाशपदाभिधेयो भवितुमर्हति । **असौ बद्धः**—चेतन एवाऽयं बद्धावस्थावस्थितः सन्, **नाम-रूपे वहति**—

[1] निर्वाहकाः—ग. [2] मुक्ताः—ग. [3] बन्धो—आ.

देव-मनुष्यादिसंज्ञां तत्तदनुगुणामाकृतिं च बिभर्ति । **तदनु ब्रह्मभावे**—मुक्त्यनन्तरकालिके ब्रह्मत्वे लब्धे सति, **जहाति**—संज्ञामाकृतिं च परित्यजति । (अतः जीव एवाऽत्र 'आकाश' पदार्थः) **इति अन्याय्यम्**—ईदृशं शङ्कनमयुक्तम् , **पुरोक्तः**—'ब्रह्मलोकम्' इति पूर्ववाक्योक्तः, **अयम् अभिसम्भाव्य एव हि !**—अभिसम्भवानीत्युक्ताभिसम्भवनक्रिया(प्राप्ति)कर्मभूतः ब्रह्मतपोऽर्थ एव खलु, **पुनरुपात्तः**—भूयः 'आकाशो ह वै' इति वाक्येन गृहीतः, **ब्रह्मत्वम्**—परमात्मगतः स्वाभाविको ब्रह्मत्वरूपो धर्मः ('ब्रह्मलोक'शब्दोक्तः), **न ह्यवस्था**—आगन्तुक-धर्मात्मको न खलु विवक्षितः ; किन्तु स्वाभाविक एव । (यतः) **श्रुतिषु च**—श्रुतिवाक्येष्वपि, **युगपत्**—समानकालिकः, **ज्ञाज्ञतादिः**—'सर्वज्ञत्वं सर्वेश्वरत्वं च ब्रह्मणि, अज्ञत्वम् अनीश्वरत्वं च जीवे' इत्येवं जीव-ब्रह्मणोर्धर्मः, **विभक्तश्च**—असाधारण्येन पृथक्पृथग्वर्णितोऽपि वर्तते । (अतः परमात्मपरमेवेदं वाक्यम् ) ॥ ३० ॥

## (३) अधिकरणार्थसङ्ग्रहः

अर्थान्तरत्वादिव्यपदेशाधिकरणे—'आकाशो ह वै नाम-रूपयोर्निर्वहिता' इत्यादिवाक्ये, 'आकाश'शब्दनिर्दिष्टो मुक्तात्मा ; 'अश्व इव रोमाणि' इति वाक्ये मुक्तस्य प्रकृतत्वात्—इत्याशङ्क्य,

'नाम-रूपयोर्निर्वहिता' इति, नाम-रूपनिर्वोढृत्वस्य परमात्मासाधारणत्वश्रवणात् , 'ब्रह्मलोकमभिसम्भवानि' इति परमात्मनोऽप्यनन्तरप्रकृतत्वाच्च, आकाशः परमात्मा—इति सिद्धान्तितम् ॥

## (४) नयसङ्गतिमालिका

**प्रसक्तानुप्रसक्त्येत्थमधिकारचतुष्टयम् ।**
**दहनीत्युत्थापवादमर्थान्तरनयोऽच्छिनत् ॥ ५८ ॥**

इति अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ १० ॥

—o—

[पादोपसंहारः]

## (१) शारीरकन्यायकलापसङ्ग्रहः (श्लो. ३९–४४)

**अक्लिष्टभावः सुखरूपता च प्रशासितृत्वं श्रवणीयता च ।**
**गुणोत्तरत्वं त्वजुगुप्सता च निर्वोढृता च प्रतिपादिताऽस्मिन् ॥ ३९ ॥**

**अक्लिष्टभावः** -- शरीर-तद्गतनाडीसम्बन्धादिकृतक्लेशानाश्रयत्वम्, **सुखरूपता च**— निरुपधिमहानन्दरूपत्वम्, **प्रशासितृत्वम्** — निखिलजगन्नियन्तृत्वम्, **श्रयणीयता च**— त्रिमात्रप्रणवोपास्यत्वम्, **गुणोत्तरत्वम्**—(स्वीयगुणानामपि स्ववदेव उपास्यत्वोक्तेः) उपास्य-कल्याणगुणाश्रयत्वम्, **अजुगुप्सता च**—मुमुक्ष्वनुग्रहसङ्कल्पायत्ताङ्गुष्ठप्रमाणवत्तया अनुपास्यत्वे-नाऽऽशङ्कनीयता च, **निर्वोढृता च**—स्वेन सृष्टानां चेतनानामचेतनानां च अनुगुणनामरूप-निर्वाहकत्वम्, इत्येवंरूपा परमात्मगता विभूतिः, **अस्मिन् प्रतिपादिता**—तृतीये पादे सम्यग्बोधिता ॥

**प्रधानजीवयोर्व्यष्ट्योः समष्ट्योश्चात्मता [1]क्रमात्[1] ।**
**उक्ता तृतीये तु पुनस्तस्याः शासनताऽपि च ॥**

**प्रधान-जीवयोः व्यष्ट्योः समष्ट्योश्च**—अचिद्व्यष्टेः अचित्समष्टेः (तथा) चिद्व्यष्टेः चित्समष्टेश्च, **आत्मता**—परमात्मनः एतेषु व्यापनपूर्वकं नियन्तृता, **क्रमात्** — प्रथम-द्वितीय-योरधिकरणयोरुक्ता । **तृतीये तु पुनः** — तृतीयाधिकरणे तावत्, **तस्याः**—उक्ताया आत्मतायाः **शासनताऽपि च**—शासितृत्वरूपताऽपि, **उक्ता**—प्रतिपादिता वर्तते ॥४०॥

**चतुर्थपञ्चमाभ्यां तु स्वरूपेण गुणैरपि ।**
**उपास्यतार्थमात्मत्वमित्यात्मत्वप्रयोजनम् ॥४२॥**

**चतुर्थ-पञ्चमाभ्यां तु**—चतुर्थ-पञ्चमाभ्यामधिकरणाभ्यां तावत्, **स्वरूपेण गुणैरपि**— शुद्धब्रह्मस्वरूपेण, तथा तदीयकल्याणगुणद्वाराऽपि च, **उपास्यतार्थम्**—ध्येयत्वसिद्ध्यर्थम्, **आत्मत्वम्**—परमात्मनः सर्वत्रान्तर्व्याप्य वर्तमानत्वम्, **इति आत्मत्वप्रयोजनम्**—एवं परमात्म-गतस्याऽऽत्मत्वस्य फलम्, निरूपितं भवति ॥४१॥

**हेयेऽपि तत्तत्सम्बन्धे नैवेशत्वाज्जुगुप्सते ।**
**इति न्यायेन षष्ठेन प्रोक्तमात्मत्वसिद्धये ॥४२॥**

**तत्तत्सम्बन्धे**—परमात्मनः देवादिविविधरूपापन्नचेतनाचेतनात्मकजगत्सम्बन्धे, **हेयेऽपि**— जुगुप्सिते सत्यपि, **ईशत्वात्**—परमात्मनः सर्वेश्वरत्वात्, **नैव जुगुप्सते**—जुगुप्सां नैव प्राप्नोति परमात्मा, **इति**—एवंरूपं प्रतिपाद्यम्, **आत्मत्वसिद्धये**—परमात्मनि उक्तस्यात्मत्वस्य उपपत्ति-लाभाय, **षष्ठेन न्यायेन**—षष्ठाधिकरणेन, **प्रोक्तम्**—स्फुटीकृतम् ॥४२॥

---

[1] श्रयात्—क.

मध्ये प्रसङ्गात् षष्ठस्य देव-देव[1]विशेषयो[1]ः ।
विद्याधिकारः शूद्राणां तदभावश्च साधितः ।
सप्तमादीशितृत्वं तु निर्वोढृत्वात् स्थिरीकृतम् ॥ ४३ ॥

**षष्ठस्य प्रसङ्गात्**—षष्ठाधिकरणकृतात् प्रसङ्गरूपात् सम्बन्धात्, **देव-देवविशेषयोः**—देवतानां सामान्यतः, देवावान्तरभेदस्य च, **विद्याधिकारः साधितः**—अर्थित्वसामर्थ्यादिनिबन्धनः विद्याप्रवृत्तियोग्यतारूपोऽधिकारः उचिततया ज्ञापितः । **शूद्राणाम्**—त्रैवर्णिकेतरेषाम्, **तदभावश्च**—अधिकाराभावोऽपि साधितः । **सप्तमात्**—सप्तमादधिकरणात्, **निर्वोढृत्वात्**—नामरूपनिर्वाहकत्वं हेतूकृत्य, **ईशितृत्वम्**—परमात्मनः सर्वनियन्तृत्वम्, **स्थिरीकृतम्** असन्दिग्धतामापादितम् ॥ ४३ ॥

एवमेतैः त्रिभिः पादैः कारणं ब्रह्म साधितम् ।
चतुर्थात् तच्च हेतुत्वं तस्यैवेति प्रसाध्यते ॥ ४४ ॥

**एवम्**—उक्तया रीत्या, **त्रिभिः पादैः**—प्रथमद्वितीयतृतीयैः पादैः, **ब्रह्मकारणं साधितम्**—ब्रह्म जगत्कारणमिति समर्थितम् । **चतुर्थात्**—तुरीयात् पादात्, **तच्च हेतुत्वम्**—उक्तं जगत्कारणत्वम्, **तस्यैवेति**—ब्रह्मण एव; नान्यस्येति, **प्रसाध्यते**—सम्यक् न्यायतः स्थिरीक्रियते ॥ ४४ ॥

## (२) अधिकरणसारावलिः

विश्वात्माऽनन्तभूमा नियमनधृतिकृन्मुक्तभोग्यस्वभावः
दह्रस्वाधारसर्वो हृदयपरिमितावस्थया सर्वयन्ता ।
देवादीनामुपास्यो वसुमुखविबुधैः स्वात्मभावेन सेव्यः
शूद्राद्योपास्त्यनर्हः प्रभुरिहबुबुधे नामरूपैककर्ता ॥ ३२ ॥

**विश्वात्मा**—पृथिव्यन्तरिक्षद्युलोकात्मकस्य जगतः आत्मत्वेनाधारभूतः, **अनन्तभूमा**—निरवधिकविपुलैश्वर्यसुखात्मकः, **नियमन-धृतिकृत्**—नियमनद्वारा सर्वकार्याधारभूतः, **मुक्त-भोग्यस्वभावः**—संसारबन्धाद्विमुक्तानां 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इत्युक्तरीत्या भोग्यतैकस्वभावः, **दह्रस्वाधारसर्वः**—दहरशब्दवाच्योपासनार्थाल्पपरिमाण-स्वाधारकसर्वप्रपञ्चः, **हृदयपरिमितावस्थया सर्वयन्ता**—हृदयाख्याल्पस्थानपरिमिताङ्गुष्ठमात्रान्तर्यामित्वावस्थामाश्रित्य निखिलजगन्नियमनकर्ता, **देवादीनामुपास्यः**—देवासुररक्षोगन्धर्वकिन्न-

[1] विचारयोः—क.

रादीनां देवयोनिसम्भवानामपि उपासनयोग्यः, **वसुमुखविबुधैः स्वात्मभावेन सेव्यः**— प्राप्तवस्वादिपदैर्देवविशेषैरपि स्वशरीरितया उपास्यतावान्, **शूद्राद्योपास्त्यनर्हः**—त्रैवर्णिकेतरैः स्वाध्यायानधिकृतैर्जनैः श्रुत्युक्तया रीत्या उपासितुमशक्यः, **नामरूपैककर्ता**—सृष्टस्य चिदचिदात्मकस्य जगतः प्रधानो नामरूपप्रदः, **प्रभुः**—सर्वेश्वरः उत्तमः पुरुषः, **इह**—तृतीयेऽस्मिन् पादे, **बुबुधे**—यथायोग्यं बोधविषयीकृतः ॥ ३२ ॥

## (३) नयसङ्गतिमालिका

**एम्चतुष्पेटिकोऽयं दशाधिकरणात्मकः ।**
**अध्याये प्रथमे पादस्तार्तीयीकः सुसङ्गतः ॥ ५९ ॥**

॥ इति प्रथमेऽध्याये तृतीयः पादः ॥

॥ प्रथमाध्यायस्य चतुर्थः पादः ॥

(२८) आनुमानिकाधिकरणम् ॥ १-४-१ ॥

## (१) शारीरकन्यायकलापसङ्ग्रहः

**अव्यक्तं महतः [1]परं तु[1] पुरुषस्तस्मात्पर[2]स्तत्परं[2]**
**नैवास्तीति [3]कुतन्त्रसिद्ध[3]गणना तत्प्रक्रियानुस्मृतेः ।**
**[4]एतन्नैव[4] यथार्थमत्र रथता[5]द्युक्तेषु[5] वागादिके-**
**ष्वव्यक्तं तु शरीरमेव पुरुषः सोऽयं परः पूरुषः ॥ ४५ ॥**

**अव्यक्तं....नैवाऽस्तीति**—कठवल्यां 'महतः परम्, अव्यक्तम्; तस्मादव्यक्तात् परः पुरुषः; तस्मात् पुरुषात् परं च किमपि नास्त्येव' इत्येदर्थिका या श्रुतिरस्ति; सा, **कुतन्त्रसिद्धगणना**—वेदान्तार्थस्य विरोधदर्शनेन अपूर्णं यत् साङ्ख्यानां दर्शनं, तदभ्युपगतस्यैव पञ्चविंशतितत्त्वसङ्ख्यानस्य प्रतिपादनात्मिका, **तत्प्रक्रियानुस्मृतेः**—साङ्ख्यप्रक्रियाया एव प्रत्यभिज्ञायमानत्वात्, (इति शङ्कने), **एतत्**—ईदृशमर्थवर्णनम्, **नैव यथार्थम्**—सर्वथा न वास्तविकम्। **अत्र**—अस्मिन् प्रकरणे, **रथताद्युक्तेषु**—'शरीरं रथमेव तु' इति रथत्वादिना रूपितेषु, (तथा) **वागादिकेषु**—'यच्छेद्वाङ्मनसी' इत्यादिना नियन्तव्येनोक्तेषु वागादीन्द्रियेषु च मध्ये प्रविष्टम्,

---

[1] परत्र—क. [3] स्तत्परो—ग. [3] तु तन्त्रसिद्धि—ख. [4] एतेनेव—क.
[5] प्युक्तेषु—ख. ग.

**शरीरमेव तु**—शरीराख्यं नियन्तव्यं वस्त्वेव, **अव्यक्तम्**—एतच्छ्रुतिपठिताव्यक्तपदवाच्यम्। **पुरुषः**—सर्वस्मात्परत्वेन श्रुत्या प्रतिपादितः पुरुषपदार्थः, **सोऽयं परः पूरुषः**—सर्वेषु वेदान्तेषु परात्परतत्त्वत्वेन गीयमानः परमात्मैव ; न तु साङ्ख्योक्तः पञ्चविंशको जीवः ॥ ४५ ॥

## (२) अधिकरणसारावलिः

**निर्णीतं वाक्यजातं परविषयतया स्पष्टजीवादिलिङ्गं**
**तत्तच्छायानुसारि प्रथयति तु वचस्तत्परं तुर्यपादे ।**
**षड्भिर्द्वाभ्यां च तत्र प्रशमयति नयैः साङ्ख्ययोगोत्थशङ्कां**
**घट्टौ जाघट्ट इत्थं कथितनिगमनं त्वष्टमं केचिदूचुः ॥ १ ॥**

**स्पष्टजीवादिलिङ्गम्**—स्फुटतया ज्ञायमानजीवाद्यसाधारणधर्मप्रतिपादकम्, **वाक्यजातम्**—श्रुतिवाक्यवृन्दम्, **परविषयतया निर्णीतम्**—परमात्मतात्पर्यकमिति विचारपूर्वकं तृतीये पादे निश्चितम्। **तुर्य पादे तु**—चतुर्थे तु पादे, **तत्तच्छायानुसारि**—साङ्ख्यादितन्त्रगतवाक्यसदृशार्थकत्वेन भासमानम्, **वचः**—वेदान्तवाक्यम्, **तत्परम्**—परमपुरुषप्रतिपादनाभिप्रायकमिति, **प्रथयति**—न्यायपूर्वकं प्रकटयति सूत्रकारः। **तत्र**—चतुर्थपादगताधिकरणस्तोममध्ये, **षड्भिः**—प्राथमिकैः आनुमानिक-चमस-सङ्ख्योपसङ्ग्रह-कारणत्व-जगद्वाचित्व-वाक्यान्वयनामकैः षडधिकरणैः, **साङ्ख्योत्थशङ्काम्**—सांख्यदर्शनाध्ययनाहितां भ्रान्तिम्, **द्वाभ्यां च**—तत उपरितनाभ्यां प्रकृति-सर्वव्याख्याननामकाभ्यामधिकरणाभ्याम्, **योगोत्थशङ्काम्**—योगदर्शनाभ्यासाहितां भ्रमात्मिकां मतिं च, **प्रशमयति**—दूरीकृत्य, वेदान्तमधीयमानायां मतौ पुरुषं स्थापयति। **इत्थम्**—अनया रीत्या, **घट्टौ**—द्वे पेटिके, **जाघट्टः**—सम्यक् सङ्गतौ भवतः। **केचित्**—अन्ये केचन आचार्यास्तु, **अष्टमम्**—अन्तिमं सर्वव्याख्यानाधिकरणम्, **कथितनिगमनम्**—प्रतिपादितानां समन्वयाध्यायीयानां सर्वेषां न्यायानाम् उपसंहारपर्यवसितमिति, **ऊचुः**—प्रतिपादयामासुः ॥ १ ॥

**द्वाभ्यां क्षेप्यं प्रधानं कपिलमतमथ त्वेकतोऽन्योक्तसङ्ख्या**
**तुर्येणाऽव्याकृतोक्तेरपि विभुरवधिः स्थाप्यते द्वारवृत्त्या ।**
**शुद्धाशुद्धौ च जीवावधिकरणयुगेऽनन्तरं वारणीयौ**
**शेषं तन्त्रान्तरोक्तेश्वरनिरसनकृत्तुर्यपादाष्टकेऽस्मिन् ॥ २ ॥**

**अस्मिन्**—विवरीतुं प्रक्रान्ते, **तुर्यपादाष्टके**—चतुर्थपादीये अष्टाधिकरणसमूहे, **द्वाभ्याम्**—आदिमाभ्यामानुमानिक-चमसनामभ्याम् अधिकरणाभ्याम्, **कपिलमतम्**—कपिल-

नाम्नो महर्षेरभिमतम्, **प्रधानम्**—मूलप्रकृत्यपरपर्यायम् अब्रह्मात्मकं प्रधानम्, **क्षेप्यम्**—श्रुतिगताव्यक्तपदाभिधेयत्वाभाववत्तया (तथा) 'अजा'पदावाच्यतया च न्यायतो निर्णेयम्। **अथ एकतस्तु**—तत्पश्चात्तनात् सङ्ख्योपसङ्ग्रहनाम्न एकस्मादधिकरणात्तु, **अन्योक्तसङ्ख्या क्षेप्या**—कापिलाभिमता पञ्चविंशतिमात्रविश्रान्ता तत्त्वानां गणना, युक्त्या दूरीकरणीया, **तुर्येण**—चतुर्थेन कारणत्वाधिकरणेन, **अव्याकृतोक्तेरपि**—'अव्याकृत'शब्दस्यापि श्रुतिगतस्य, **द्वारवृत्त्या**—प्रकृत्यात्मकब्रह्मविशेषणाभिधानमुखेन, **विभुः**—निखिलव्याप्तिमान् परः पुरुषः, **अवधिः**—शब्दशक्तिपर्यवसानभूमित्वेन, **स्थाप्यते**—युक्त्या दृढीक्रियते। **तदनन्तरमधिकरणयुगे**—तत्पश्चात्तनाधिकरणद्वये जगद्वाचित्व-वाक्यान्वयनामके, **शुद्धाशुद्धौ च जीवौ**—कर्मबन्धविनिर्मुक्तः कर्मबन्धवांश्चेति द्विविधावपि चेतनौ, **वारणीयौ**—(यथायोग्यं) परतत्त्वताशङ्कातः दूरीकरणीयौ। **शेषम्**—अवशिष्टं सर्वव्याख्यानाधिकरणम्, **तन्त्रान्तरोक्तेश्वरनिरसनकृत्**—पातञ्जलयोगदर्शनसिद्धस्य ईश्वरस्वरूपस्य श्रुत्यनभिमतत्वनिर्णायकम् ॥ २ ॥

[आनुमानिकाधिकरणार्थः]

अक्षाद्यव्यक्तनिष्ठं जडमथ पुरुषं तत्त्वकाष्ठां विविच्य
ब्रूते वल्ली कठानां परमतपठितां प्रक्रियामित्ययुक्तम्।
[1]तत्रत्यानेक[1]वाक्योदितविविधवशीकार्यमुख्यक्रमोक्तेः
शान्तात्मा विष्णुरुक्तः पुरुष इह परः प्रत्यभिज्ञाप्यते च ॥ ३ ॥

**कठानां वल्ली**—कठनाम्नां याजुषाणामध्येया वल्लीपदवाच्यो भागविशेषः, **अक्षादि**—अक्षापरपर्यायाणि इन्द्रियाण्युपक्रम्य, **अव्यक्तनिष्ठम्**—अव्यक्तापरपर्यायप्रधानपर्यन्तम्, **जडम्**—चेतनेतरत् तत्त्ववर्गम्, **अथ**—तदनन्तरम्, **तत्त्वकाष्ठाम्**—तत्त्वानां परमसीमाभूतम्, **पुरुषम्**—पुरुषपदाभिधेयं तत्त्वम्, **विविच्य**—विभज्य दर्शयित्वा, **परमतपठिताम्**—साङ्ख्यमताभ्यस्ताम्, **प्रक्रियाम्**—तत्त्वसङ्ख्यानपद्धतिम्, **ब्रूते इति**—वर्णयतीत्येवमाशङ्कनम्, **अयुक्तम्**—सङ्गतं न भवति। **तत्रत्यानेक ...क्रमोक्तेः**—कठवल्लीगतपूर्वोत्तरविविधवाक्याभिहितनानाविधस्वायत्तीकरणीयप्रधानभूतार्थगतपूर्वापरीभावस्यैव प्रतिपादितत्वात्, **इह**—कठवल्लीगते वाक्ये, **उक्तः परः पुरुषः**—'परःपुरुषः'इत्यनेनाभिहितोऽर्थः, **शान्तात्मा विष्णुः**—स्वयं शान्तत्वेन, आत्मनां शान्तिसाधनत्वेन च उक्तः विष्णुनामा भगवानेव; न केवलश्चेतनः, **प्रत्यभिज्ञाप्यते च**—श्रुत्या च 'स एवाऽयम्' इति प्रत्यभिज्ञाविषयीक्रियते ॥ ३ ॥

---

[1] तत्रस्थानेक – आ.

**न ह्यर्था इन्द्रियाणां प्रकृतिरथ मनो हेतुरेषां न चेष्टं**
**बुद्धिश्चैतन्न सूते न च महति महाञ्जायते बुद्धिसंज्ञः ।**
**भोक्तुर्युक्तं महत्त्वं महति [1]च[1] न भवेदात्मता पारिशेष्यात्**
**अव्यक्तोक्तिः शरीरे तदिह न कपिलप्रक्रिया प्रत्यभिज्ञा ।। ४ ।।**

**अर्थाः**—इन्द्रियगोचराः शब्दादयः, **इन्द्रियाणाम्**—शब्दादिग्राहकाणां श्रोत्रादीनाम्, **न हि प्रकृतिः**—(साङ्ख्यमते) कारणभूता इति न खल्वभ्युपगतम् । **मनः**—अन्तःकरणम्, **एषाम्**—इन्द्रियाणाम्, अर्थानां च, **हेतुः न च इष्टम्**—कारणत्वेन नैवाभिमतम् । **बुद्धिश्च**—बुद्धिशब्देनाऽभिहितोऽर्थस्तु, **एतत्**—मनोरूपं वस्तु, **न सूते**—नैव जनयति, **महति**—महच्छब्दबोध्येऽर्थे, **बुद्धिसंज्ञः महान्**—बुद्ध्यपरपर्यायः महद्रूपोऽर्थः, **न च जायते**—नैवोत्पद्यते खलु ! **भोक्तुः महत्त्वं युक्तम्**—अचेतनानि तत्त्वानि स्वभोगार्थं स्वीकुर्वतो जीवस्य तदपेक्षया महत्त्वमित्येतत् लोकदृष्टं सङ्गतं भवति । **महति च न भवेदात्मता**—जडे महत्तत्त्वेऽपि आत्मपदबोध्यता नैव सङ्गच्छते । **पारिशेष्यात्**—'आत्मानं रथिन'मिति मन्त्रोपात्तेषु मध्ये इतराणि सर्वाणि 'इन्द्रियेभ्यः परा ह्यर्थाः' इति मन्त्रे निर्दिश्य अवशिष्टत्वात्, **अव्यक्तोक्तिः**—'महतः परमव्यक्तम्' इति 'अव्यक्त'शब्दः, **शरीरे**—'शरीरं रथमेव तु' इति रथत्वेन रूपिते साधकमनुष्यीये साधनार्थमत्यन्तं वशीकार्ये देहे एव बोधकतया वर्तते । **तत्**—उक्तादस्माद्धेतोः, **इह**—'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यस्मिन् मन्त्रे, **न कपिलः....प्रत्यभिज्ञा**—'कपिलतन्त्रोपात्तार्था एवेमे' इति चिन्तनेन तदुक्तसृष्ट्यादिप्रक्रियाप्रतिसन्धानं, नैव सङ्गतं भवति ॥ ४ ॥

## (३) अधिकरणार्थसङ्ग्रहः

एवं स्पष्टजीवादिलिङ्गकानि वाक्यानि निरूपितानि । चतुर्थे स्पष्टतरजीवादिलिङ्गकपादे, आनुमानिकाधिकरणे—'इन्द्रियेभ्यः परा ह्यर्थाः अर्थेभ्यश्च परं मनः' इत्यादिवाक्ये, 'महतः परमव्यक्तमव्यक्तात् पुरुषः परः' इति तन्त्रसिद्धप्रक्रियाप्रत्यभिज्ञानात्, तन्त्रसिद्धम् अब्रह्मात्मकम्, 'अव्यक्त'शब्दवाच्यं प्रधानम्—इत्याशङ्क्य,

'आत्मानं रथिनं विद्धि' इत्यादिना रथि-रथादिभावेन रूपितात्मशरीरादिषु रथत्वेन रूपितस्य शरीरस्य, इह 'अव्यक्त'शब्देन ग्रहणात्, न अब्रह्मात्मकं प्रधानमभिधीयते—इति सिद्धान्तितम् ।

---

[1] हि—भा.

(४) नयसङ्गतिमालिका

आद्याध्याये तुर्यपादे नीत्यष्टकमसूत्रयत् ।
तत्र षड्भिर्नयैः साङ्ख्यान् द्वाभ्यां यौगानशीशमत् ॥ ६० ॥
मुक्तवैलक्षण्यमुक्तं प्राक् पादान्ते न युज्यते ।
परस्यैव प्रतिक्षेपादाक्षेपो ह्यानुमानिके ॥ ६१ ॥

॥ इति आनुमानिकाधिकरणम् ॥ १ ॥

—o—

(२९) चमसाधिकरणम् ॥ १-४-२ ॥

(१) शारीरकन्यायकलापसङ्ग्रहः

अजामित्येतस्मिन् वचसि गदितं तन्त्रगदितं
प्रधानं स्वातन्त्र्यात् सकलजगतीसर्गकरणात् ।
इदं नैवैतस्मिन् खलु सृजतिमात्रं त्वभिहितं
[1]विशेषस्याभावाद्[1] वदति च विशेषं श्रुतिरतः ॥ ४६ ॥

**'अजाम्' इत्येतस्मिन् वचसि**—'अजामेकाम्' इति तैत्तिरीय-श्वेताश्वतरोभयगते किञ्चिद्व्यत्यस्तसमानानुपूर्वीके वाक्ये, **गदितम्**—'अजा'शब्देन प्रतिपादितं वस्तु, **तन्त्रगदितं प्रधानम्**—साङ्ख्यतन्त्रोक्तं प्रधानापरपर्यायं मूलप्रकृतिरूपं वस्तु, **स्वातन्त्र्यात्**—स्वाधीनतामाश्रित्य, **सकलजगतीसर्गकरणात्**—निखिलविश्वोत्पादनस्य 'बह्वीं प्रजां जनयन्तीम्' 'बह्वीः प्रजाः सृजमानाम्' इत्येवंविधया बोधनात, [इति पूर्वपक्षे प्रसक्ते] **इदं नैव**—उक्तं शङ्काविधानं सर्वथा न सङ्गतम्। **एतस्मिन् खलु**—उक्तवाक्ये हि, **अभिहितम्**—प्रतिपाद्यमानम्, **सृजतिमात्रं तु**—केवलसर्गकरणमेव ; न तु स्वायत्तत्वम्, **विशेषस्याभावात्**—स्वातन्त्र्यादिबोधकांशस्य श्रुतौ श्रवणाभावात्, **अतः श्रुतिः**—एतन्मन्त्रानन्तरमन्त्रे 'हंसः शुचिषत्' 'द्वा सुपर्णा' इत्येवमुपनिषद्वाणी, **विशेषम्**—सर्वस्य चेतनाचेतनस्य परमात्मायत्तत्वं परमात्मविभूतित्वमित्यादि, **वदति च**—स्पष्टीकरोत्येव ॥ ४६ ॥

(२) अधिकरणसारावलिः

स्वातन्त्र्येण ह्यजाया निखिलजनकता सूच्यते क्वाऽपि वाक्ये
बद्धोऽजस्तत्र शेते त्यजति पुनरिमां भुक्तभोगामजोऽन्यः ।
इत्युक्तेस्तान्त्रिकी सा त्वियमिति यदि नाजात्वमात्राभिधानात्
अस्वातन्त्र्यप्रसिद्धेः सृजतिरपि परप्रेर्यतां नोपरुन्ध्यात् ॥ ५ ॥

---

[1] विशेष्याभावात्—ग.

**क्वाऽपि**—औपनिषदस्थलविशेषगते, **वाक्ये**—'अजामेकां लोहितशुक्लकृष्णाम्' इति वाक्ये, **अजायाः**—'अजा'पदाभिधेयायाः, **निखिलजनकता**—सर्वस्रष्टृता, **हि**—यतः, **स्वातन्त्र्येण**—अन्यानधीनकर्तृत्वात्मिकेति, **सूच्यते**—'बह्वीं प्रजां जनयन्तीम्' (तथा) 'बह्वीः प्रजाः सृजमानाम्' इति इतराधीनत्वबोधकशब्दासहकृताभ्यां शतृशानज्भ्यां प्रत्ययाभ्यां बोध्यते । **बद्धः अजः**—कर्मवश्यो नित्यः जीवः, **तत्र शेते**—अजापदबोध्येऽर्थे, (मातुरङ्के वत्स इव प्रीत्या निर्भरं) सुप्तो भवति । **अन्यः अजः**—तद्विलक्षणो नित्यः कश्चन जीवस्तु, **भुक्तभोगाम्**—स्वेनास्वादितभोग्यांशवतीम्, **इमां पुनः**—अजापदाभिधेयां स्वेन प्रीत्या आश्रितां प्रकृतिमेव, **त्यजति**—जहाति, दूरीकरोति, **इत्युक्तेः**—एवं वर्णनात्, **इयम्**—अजापदवाच्या, **तान्त्रिकी सा तु**—साङ्ख्यतन्त्रप्रतिपादिता मूलप्रकृतिरेव ; नाऽत्र सन्देहः, **इति यदि**—एवमाशङ्कनं चेत् ; **न**—नोचितम्, **अजात्वमात्राभिधानात्**—परायत्तत्वमबाधित्वा उत्पत्ति-राहित्यस्य केवलं प्रतिपादनात्, **अस्वातन्त्र्यप्रसिद्धेः**—अचेतनभूतेषु वस्तुषु इतरानधीन-स्वप्रवृत्त्यभावस्य लोकपरिदृष्टत्वेन तत्पृथगुक्तेरनपेक्षणात, **सृजतिरपि**—सृजधातोः प्रयोगोऽपि, **परप्रेर्यताम्**—कर्त्रन्तराधीनकर्तृतारूपं प्रयोज्यकर्तृत्वं करणत्वं वा प्रमाणान्तरप्रतिपन्नम्, **न उपरुन्ध्यात्**—नैव बाधितुं शक्नुयात् । (अतः ब्रह्मात्मिका प्रकृतिरेव ब्रह्मसङ्कल्पाधीन-क्रियावती सृष्टेर्हेतुः) ।। ५ ।।

## (३) अधिकरणार्थसङ्ग्रहः

चमसाधिकरणे—'अजामेकाम्' इत्यादिवाक्ये, 'प्रजाः सृजमानाम्' इति, स्वातन्त्र्येण स्रष्टृत्वादिप्रतीतेः, 'अजा'शब्देन अब्रह्मात्मिका प्रकृतिरभिधीयते—इत्याशङ्क्य,

अब्रह्मात्मकाजाग्रहणे विशेषहेत्वभावात्, 'अणोरणीयान्' इत्यादिशाखान्तरवाक्येन अजायाः ब्रह्मात्मकत्वावगमात्, ब्रह्मात्मिका प्रकृतिरेव 'अजा'शब्देनोच्यते—इत्युक्तम् ।।

## (४) नयसङ्गतिमालिका

**पारिशेष्यस्थानमाने नाऽजावाक्ये स्त इत्यतः ।**
**प्रत्युदाहरणत्वेन चमसाख्यनयोदयः ।। ६२ ।।**

**।। इति चमसाधिकरणम् ।। २ ।।**

—o—

(३०) सङ्ख्योपसङ्ग्राधिकरणम् ॥ १-४-३ ॥

## (१) शारीरकन्यायकलापसङ्ग्रहः

**यस्मिन् पञ्चजनाश्च पञ्च गगनं चाऽपीति वाक्ये स्फुटं**
**सङ्ख्यासङ्ग्रहणात्तु तन्त्रगणनेत्येतन्न हि प्राणिति ।**
**ब्रह्माधारतया स्थितेरतिशयस्फूर्तेश्च संज्ञात्वतः**
**प्राणादीन्द्रियपञ्चकस्य च यथा सप्तेति सप्तर्षयः ॥४७॥**

**यस्मिन्....वाक्ये**—'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः' इत्यस्मिन् बृहदारण्यकगते वाक्ये, **स्फुटं सङ्ख्यासङ्ग्रहणात्**—'पञ्च पञ्चे'ति शब्देन असन्दिग्धतया, पञ्चगुणितपञ्चसङ्ख्यात्मिकायाः पञ्चविंशतिसंख्यायाः बोधनात्, **तन्त्रगणना तु**—बृहदारण्यकश्रुतिः कापिलाभिमततत्त्वसंख्यानसरणिरेव ; नान्या, **इत्येतत्**—ईदृशं शङ्कनम्, **न हि प्राणिति**—नैव लब्धात्मकं भवति ; **प्राणादीन्द्रियपञ्चकस्य**—प्राणत्वोपलक्षितवाय्वाप्यायितत्वगिन्द्रियप्रभृतीन्द्रियपञ्चकस्य, **ब्रह्माधारतया स्थितेः**—'यस्मिन्....प्रतिष्ठितः' इति यच्छब्दबोध्यं ब्रह्म आधारतया आश्रित्य सुप्रतिष्ठितत्ववर्णनात्, **अतिशयस्फूर्तेश्च**—'ज्योतिषां ज्योतिः' इति पूर्वमन्त्रसिद्धस्फूर्ति(प्रकाश)मज्ज्योतिरन्तरातिशयावधिभूतज्योतिरूपत्वाच्च, **संज्ञात्वतः**—'पञ्चजन'पदस्य पञ्चेन्द्रियेषु रूढ्या, योगरूढ्या वा बोधकतया वृत्तेरपि हेतोः । [अतः उक्तमन्त्रप्रतिपादिताः पञ्चजनाः पञ्चेन्द्रियाण्येव ; न तु साङ्ख्यपरिपठितानि पञ्चविंशति तत्त्वानि] 'पञ्चजनाः' इति वक्तव्ये, पञ्च पञ्चेति कथम्? इति तु न शङ्क्यम् ;] **यथा सप्तर्षयः सप्तेति**—'सप्तर्षयः' इति पदे सप्तपदस्य सत्त्वेऽपि पुनः सप्तपदं, सप्तर्षिसंज्ञितेष्वर्थेषु सप्तत्वसङ्ख्याबोधनार्थम्, तद्वत् पञ्चजनसंज्ञितेष्विन्द्रियेषु पञ्चसङ्ख्यात्वबोधनार्थं पञ्चपदमिति ॥४७॥

## (२) अधिकरणसारावलिः

**यस्मिन् पञ्चेति [1]'मन्त्रे'[1] परपरिगणिता विंशतिःपञ्चयुक्ता**
**प्रोक्ता सप्तम्यधीतस्त्विह पुरुषगणोऽनन्यनिष्ठोऽस्तु मैवम् ।**
**आकाशस्य स्वनाम्ना पृथगनुकथनात् सप्त[2]मीशत्त्य[2]बाधात्**
**षड्विंशो ह्यत्र सर्वाश्रय इति विदितोऽनूद्यते ब्रह्मताद्यैः ॥६॥**

---

[1] वाक्ये—अ.   [2] विंशत्य—अ, आ.

**यस्मिन् पञ्चेति मन्त्रे**—'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः' इत्यस्मिन् मन्त्रे, **परपरिगणिता**–साङ्ख्याभ्युपगता, **पञ्चयुक्ता विंशतिः**—आधिक्येन पञ्चसंख्यासहिता विंशत्यात्मिका संख्या प्रकृत्यादिपञ्चविंशतितत्त्वगता, **प्रोक्ता**—असन्दिग्धमुक्ता, **इह**—अस्मिन् वाक्ये, **सप्तम्यधीतस्तु**—'यस्मिन्' इति सप्तमीविभक्त्यन्तेन यच्छब्देन श्रुतिबोध्योऽर्थस्तु, **अनन्यनिष्ठः**—औपनिषदैरिव परमात्माधीनतया अनभ्युपगतः, **पुरुषगणः अस्तु**—सांख्यैः पुरुषसंज्ञासंज्ञितजीवसमूह एव भवतु, (इति शङ्किते) **मैवम्**—एवं शङ्कनं निषेध्यमेव, **आकाशस्य**—आकाशाख्यस्य सांख्यसंमतपञ्चविंशत्यन्तर्भूतस्यैव तत्त्वस्य, **स्वनाम्ना**—'आकाश'-शब्देन, **पृथगनुकथनात्**—पञ्चविंशतिसङ्ख्याव्यतिरेकेण कथितत्वात्, (तथा) **सप्तमी-शक्त्यबाधात्**—'यस्मिन्' इति पदगतायाः सर्वाधारत्वबोधकतारूपायाः सप्तमीविभक्तिशक्तेः अबाधमनुरुध्याऽपि, **अत्र**—प्रस्तुते वाक्ये, **सर्वाश्रय इति विदितः**—सर्वाश्रयत्वेन श्रुत्यन्तरे प्रसिद्धः, **ब्रह्मताद्यैः**—निरुपाधिकब्रह्मत्वादिभिः धर्मैर्विशिष्टः, **षड्विंशो हि**—पञ्चविंशकातिरिक्तः परमपुरुष एव, **अनूद्यते**—पूर्वं ज्ञात एव अनुवादलक्षणेन यच्छब्देन धारकतया श्रुत्या ज्ञाप्यते ॥ ६ ॥

**संज्ञोपाधिः समासोऽयमिह निगमे सप्त सप्तर्षिनीत्या**
**प्राणाद्यं तन्मनोऽन्तं प्रकरणनियतं पञ्चकं धीन्द्रियाख्यम् ।**
**ज्योतिःशब्देन शाखान्तरविदितमिदं न्यूनवादस्तु पूर्यो**
**घ्राणं वक्त्यन्नशब्दो रसनमपि सह प्राणशब्दस्त्वगर्थः ॥ ७ ॥**

**इह निगमे**—उपात्तेऽस्मिन् 'यस्मिन् पञ्च पञ्चजनाः' इति श्रुतिवाक्ये श्रूयमाणः, **अयं समासः**—'पञ्चजन'शब्दात्मकः समासः, **सप्त सप्तर्षिनीत्या**—'सप्तर्षयः सप्त' इति प्रयोगसादृश्येन, **संज्ञोपाधिः**—संज्ञाविशेषप्रवृत्तिनिमित्तकः, समुदायशक्त्या अर्थविशेषबोधकः, 'दिक्सङ्ख्ये संज्ञायाम्' (पा.सू. 2-10-50) इति ; न तु 'पञ्चानां जनानां समाहारः' इति समाहारद्वन्द्वः । **तत्**—'पञ्चजनाः पञ्च' इत्यनेन बोध्यम्, **प्रकरणनियतम्**—अस्मिन् प्रकरणे अन्यूनानतिरिक्तया स्फुटप्रतिपन्नम्, **प्राणाद्यं मनोऽन्तम्**—प्राण-चक्षुः-श्रोत्र-अन्न-मनोरूपम्, **धीन्द्रियाख्यम्**—ज्ञानेन्द्रियरूपं, **पञ्चकम्**—पञ्चसङ्ख्याविशिष्टं वस्तुजातम् । **इदम्**—उक्तं ज्ञानेन्द्रियपञ्चकम्, **'ज्योतिः'शब्देन**—'तं देवा ज्योतिषां ज्योतिः' इति परज्योतिर्गतातिशयावधिभूतज्योतिर्वाचकेन 'ज्योतिषाम्' इति शब्देन, **शाखान्तरविदितम्**—काण्वशाखायां ज्ञातम्, **न्यूनवादस्तु**—'अन्न'शब्दरहितः 'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः' (बृ.उ. 6-4-18) इति पाठस्तु, **पूर्यः**—'अनुक्तमन्यतो ग्राह्यम्' इति

न्यायात्, आवश्यकाधिकांशयोजनेन अनुसन्धेयः, **अन्नशब्दः**—'अन्नस्यान्नम्' इति वाक्यस्थोऽन्नशब्दः, **घ्राणं रसनमपि**—घ्राण-रसनाख्येन्द्रियद्वयमपि, **सह वक्ति**—एकयैव वृत्त्या बोधयति, **प्राणशब्दः त्वगर्थः**—'प्राणस्य प्राणम्' इत्युक्तः प्राणशब्दः, प्राणत्वोपलक्षितवाय्वाप्यायितत्वेन हेतुना त्वगिन्द्रियबोधकः ॥ ७ ॥

## (३) अधिकरणार्थसङ्ग्रहः

संख्योपसङ्ग्रहाधिकरणे—'यस्मिन् पञ्च पञ्चजनाः' इति वाक्ये, 'पञ्च'शब्दविशेषितात् 'पञ्चजन'शब्दात् पञ्चविंशतितत्त्वप्रतीतेः, इदं वाक्यं तन्त्रसिद्धतत्त्वप्रतिपादकम्—इत्याशङ्क्य,

'यस्मिन्....प्रतिष्ठितः' इति यच्छब्दनिर्दिष्टब्रह्माश्रयतया अवगतानां पञ्चजनानां, तन्त्रसिद्धेभ्यः तत्त्वेभ्यः पृथग्भावात्, न इदं तन्त्रसिद्धतत्त्वप्रतिपादकम्—इत्युक्तम् ॥

## (४) नयसङ्गतिमालिका

**वाक्यान्तरस्य चाऽभावात् तत्त्वसङ्ख्याविरोधतः ।**
**सङ्ख्योपसङ्ग्रहनये शङ्कातः प्रत्युदाहृतिः ॥ ६३ ॥**

॥ इति सङ्ख्योपसङ्ग्रहाधिकरणम् ॥ ३ ॥

—o—

## (३१) कारणत्वाधिकरणम् ॥ १–४–४ ॥

## (१) शारीरकन्यायकलापसङ्ग्रहः

**क्वचित् सत् [1]क्वाप्यात्मा[1] क्वचिदसदपि क्वापि पुरुषः**
**क्वचिद्ब्रह्मेत्येवं विविधवचनाद्वेतुवचसाम् ।**
**न [2]निर्णीतिः[2] [3]क्वापि त्विति[3] न खलु सर्वत्र हि परः**
**समाकृष्टो लिङ्गप्रकरणगुणाद्यैरिति यतः ॥ ४८ ॥**

**क्वचित् सदिति**—केषुचन श्रुतिवाक्येषु 'सदेव सोम्येदमग्र आसीत्' इत्यादिषु 'सत्' इति, **क्वापि आत्मा इति**—अपरेषु केषुचित् 'आत्मा वा इदमेक एवाग्र आसीत्' इत्येवमादिषु 'आत्मा' इति, **क्वचिदपि असदिति**—अन्येषु केषुचित् 'असदेवेदमग्र आसीत्' इत्यादिषु 'असत्' इति, **क्वापि पुरुष इति**—इतरेषु केषुचित् 'अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति' इत्यादिषु 'पुरुषः' इति, **क्वचित् ब्रह्म इति**—'ब्रह्म वा इदमग्र आसीत्' इति

---

[1] क्वात्मात्मा—ग. [2] निर्णीतः—क. [3] क्वापीति—ग.

च केषुचित् 'ब्रह्म' इति, **एवम्**—उक्तया रीत्या, **हेतुवचसाम्**—कारणवाक्यानाम्, **विविध-वचनात्**—कारणबोधकविविधानुपूर्वीकशब्दघटितत्वात्, **क्वापि**—कस्मिन्नप्यर्थे, **न निर्णीतिः**—'इदमेव कारणं नान्यत्' इत्येवं निर्णयो नैव शक्यः, **इति**—एवमाशङ्कनम्, **न खलु**—नैव सङ्गतं भवितुमर्हति ; **यतः**—यस्माद्धेतोः, **सर्वत्र**—सदसदादिविविधशब्दघटितेषु कारण-वाक्येष्वपि, **लिङ्ग-प्रकरण-गुणाद्यैः**—परत्वव्याप्तैः धर्मैः, परमात्मसम्बन्धिना प्रकरणेन, (तथा) परमात्ममात्रवृत्तितया श्रुत्यन्तरावगतैः गुणैश्च ज्ञापकीभूतैः, **परः समाकृष्ट इति**--परमात्मैव अनुवर्त्य विशेष्यतया अन्वित इति निश्चीयते ॥ ४८ ॥

## (२) अधिकरणसारावलिः (श्लो. ८–९)

**विश्वोपादानवक्त्री श्रुतिषु सदसदव्याकृतोक्तिः परोक्ते**
**ह्यव्यक्तेऽन्वेति तस्मात्तदितरदखिलं नेयमत्रेति चेन्न ।**
**यत्राऽसत्त्वादि दृष्टं प्रकरणविदितं तत्र सर्वज्ञताद्यं**
**लिङ्गं [1]स्वामि[1]त्यधीतं स्थिरमपि तदिहाबाध्य आत्मादिशब्दः ॥ ८ ॥**

**श्रुतिषु**—विविधासु श्रुतिषु वर्तमाना, **विश्वोपादानवक्त्री**—जगदुपादानकारणभूतार्थ-बोधिका, **सदसदव्याकृतोक्तिः**—'सदेव सोम्ये'त्यत्र सदुक्तिः, 'असद्वा इदम्' इत्यादौ असदुक्तिः, 'तद्धेदं तर्ह्यव्याकृतमासीत्' इत्यादौ अव्याकृतोक्तिश्च, **परोक्ते**—साङ्ख्यैः प्रतिपादिते, **अव्यक्ते हि अन्वेति**—प्रधाने खलु सङ्गच्छते, **तस्मात्**—एवं निश्चितत्वात्, **तदितरदखिलम्**—उक्तेभ्यो भिन्नम् आत्मादिवचः सर्वम्, **अत्र**—प्रधाने एव, **नेयम्**—गौणीं वृत्तिमाश्रित्य योजनीयम्, **इति चेत्**—एवं शङ्कनम्, **न**—न साधु भवति, **यत्र**—यादृशे श्रुतिवाक्ये, **असत्त्वादि दृष्टम्**—जगत्कारणे असत्त्वम्, सत्त्वम्, अव्याकृतत्वं वा अवगतम्, **तत्र**—तादृशे स्थले, **प्रकरणविदितम्**—विषयप्रक्रमादवगतम्, **सर्वज्ञताद्यम्**—अचेतनत्वासमानाधि-करणं 'विपश्चित्'पदावगतं सर्वज्ञत्वादिकम्, **स्वामित्यधीतम्**—'बहु स्याम्' इति श्रुतिपठितं चेतनासाधारणं सङ्कल्पात्मकम्, **लिङ्गमपि**—असदादिशब्दाभिधेयस्य परमात्मज्ञापकमपि, **स्थिरम्**—अन्यथा योजयितुमशक्यत्वात् अनन्यथासिद्धम्, **तत्**—उक्तेभ्यो हेतुभ्यः, **इह**—जगत्कारणभूतार्थबोधके वाक्ये, **आत्मादिशब्दः**—आत्म-पुरुष-नारायणाद्यात्मकः शब्दः, **अबाध्यः**—मुख्यवृत्त्यैव योजनीयः ॥ ८ ॥

---

[1] स्यादि– अ. आ.

**आसीदग्रे त्वसद्वा इदमिति विलयावस्थतामात्रमुक्तं**
**नैवासीत् [1]किञ्चिदि[1]त्याद्यपि विलयपरं शून्यतादेर्निषेधात् ।**
**सर्वस्याऽव्याकृतत्वं विभजनविरहात् तादृशावस्थतत्तद्-**
**द्रव्यस्तोमान्तरात्मा तदिह सदसदव्याकृताद्युक्तिवाच्यः ॥ ९ ॥**

**आसीदग्रे....इदमिति**—'असद्वा इदमग्र आसीत्' इति श्रुतिवाक्येन, **विलयावस्थता-मात्रम्**—प्रलयाख्यावस्थाविशेषापन्नत्वमेव केवलम्, **उक्तम्**—(असत्पदबोध्यताप्रयोजकं) वर्णितम्. **नैवासीत्....द्यपि**—'नैवेह किञ्चनाग्र आसीत्. अमूलमनाधारम्' इत्यादिरूपं सौबालं वाक्यमपि, **विलयपरम्**—जगतः प्रलयावस्थावस्थिततात्पर्यकमेव, **शून्यतादेः**—बौद्धाभ्युपगतस्य सर्वशून्यत्वस्य, वैशेषिकाद्यभ्युपगतस्य निरन्वयविनाशस्य वा, **निषेधात्**—लयश्रुतिभिः अयुक्तत्वख्यापनात्, **सर्वस्य अव्याकृतत्वम्**—अव्याकृतपदाभिधेयत्वमपि, **विभजनविरहात्**—नामरूपविभागस्य सृष्टेः प्राक्काले अभावायत्तात्, **तत्**—उक्तात् कारणात्, **इह**—श्रुतिगतेषु विविधेषु कारणवाक्येषु, **सदसदव्याकृताद्युक्तिवाच्यः**—'सत्, असत्, अव्याकृतम्' इत्यादिवाग्भिः प्रतिपाद्यः अर्थः, **तादृशावस्थ....रात्मा**—सूक्ष्म-स्थूल-अविभक्त-नामरूपत्वाद्यवस्थावस्थितचेतनाचेतनात्मकद्रव्यविशेषनियन्तृत्ववान् परमात्मैव ॥ ९ ॥

## (३) अधिकरणार्थसङ्ग्रहः

कारणत्वाधिकरणे----'सदेव सोम्येदमग्र आसीत्' 'असद्वा इदमग्र आसीत्' इत्यादिषु, एकस्मात्सृष्टेः अनाम्नानात्, ब्रह्मैककारणत्वं निश्चेतुमशक्यम्—इत्याशङ्क्य,

'तस्माद्वा एतस्मात्' इत्यादिषु, सार्वज्ञ्यादिगुणयुक्तस्यैव कारणत्वेनोक्तत्वात्, सदादि-शब्दानामपि तत्परत्वोपपत्तेः, ब्रह्मैककारणत्वं निश्चेतुं शक्यम्—इति स्थितम् ॥

## (४) नयसङ्गतिमालिका

**यस्मिन्निति पुरा प्रोक्तमाश्रयत्वं न विद्यते ।**
**इत्याशङ्का कारणत्वनयेऽतः प्रत्युदाहृतिः ॥ ६४ ॥**

**॥ इति कारणत्वाधिकरणम् ॥ ४ ॥**

—o—

[1] किञ्चने—आ.

(३२) जगद्वाचित्वाधिकरणम् ॥ १–४–५ ॥

(१) शारीरकन्यायकलापसङ्ग्रहः

**यः कर्ता यस्य कर्मेत्यभिहितपुरुषो जीव एवात्र वृत्तः**
**कर्तृत्वात् कर्मवत्त्वात् सहजनिजगुणैर्भोक्तृभावप्रतीतेः ।**
**इत्येवं नैव शङ्क्यं जगदिह वचने कर्मशब्दाभिधेयं**
**दृष्ट्यर्थं प्राण[1]जीव[1]ग्रहणमिह सुषुप्त्याश्रयो ब्रह्म यस्मात् ॥ ४९ ॥**

**यः कर्ता....पुरुषः**—'यो वै बालाक एतेषां पुरुषाणां कर्ता, यस्य वा एतत् कर्म स वै वेदितव्यः' इति कौषीतक्यां वेद्यतयोक्तः पुरुषः, **अत्र वृत्तो जीव एव**—साङ्ख्यतन्त्रोपात्तः पञ्चविंशकः पुरुष एव; न तु षड्विंशः औपनिषदोक्तः । **कर्तृत्वात्**—प्रकृतिसंसर्गकृतस्य कर्तृत्वस्य जीवे एव सम्भवात्, **कर्मवत्त्वात्**—पुण्य-पापात्मककर्मणामपि जीवमात्रगतत्वात्, **सहजनिजगुणैः**—स्वाभाविकैः स्वनिष्ठैर्गुणैः, **भोक्तृभावप्रतीतेः**—सुखदुःखादिभोक्तृतायाः जीवे एव सर्वानुभवसिद्धतया स्वभोगोपयोगि जगत्स्रष्टृतायाः तस्मिन्नेव सुसङ्गतत्वात् । **इत्येवं नैव शङ्क्यम्**—उक्तप्रकारेण शङ्कनं युक्तं न भवति, **इह वचने**—पूर्वोक्ते कौषीतकीवाक्ये, **कर्मशब्दाभिधेयम्**—'क्रियते इति कर्म' इत्येवम् अवयवव्युत्पन्नेन कर्मपदेन प्रतिपाद्यं वस्तु, **जगत्**—सृज्यमानं विश्वमेव; न तु जीवीयं पुण्यपापात्मकं कर्म, **इह**—अस्मिन् प्रकरणे, **प्राणजीवग्रहणम्**—'अथास्मिन् प्राण एवैकधा भवति' इति प्राणस्य, 'एवमेवैष प्रज्ञात्मा एतैः स्वात्मभिर्भुङ्क्ते' इति जीवस्य च उपादानम्, **दृष्ट्यर्थम्**—प्रकृतोपासनसम्पत्त्यर्थम्, (उपास्योपासकयोः स्वरूपस्य इतरविविक्ततया परिचयार्थम्) **यस्मात्**—यतो हेतोः, **सुषुप्त्याश्रयः**—सुषुप्त्यवस्थाप्राप्तौ जीवस्य आश्रयभूतः अर्थः, **ब्रह्म**—प्राज्ञाख्यः परं ब्रह्मैव ॥ ४९ ॥

(२१) **अधिकरणसारावलिः** (श्लो. १०-११)

**यस्यैतत्कर्म वेद्यः स इति वचनतः कर्मवश्यप्रतीतेः**
**कर्ता पुंसां स एव स्वकृतपरिणतेरित्युपक्रान्तिभग्नम् ।**
**बालाक्यज्ञाततत्त्वान्तरमुपदिशतः स्यादिहाजातशत्रो-**
**स्तज्ज्ञातोक्तिर्निरर्था जगति कृततया 'कर्म'शब्दोऽत्र मुख्यः ॥१०॥**

**यस्यै....वचनतः**—कौषीतक्युपनिषद्गतात् 'यस्य वा एतत् कर्म, स वै वेदितव्यः' इत्येतस्मात् अजातशत्रोर्वाक्यात्, **कर्मवश्यप्रतीतेः**—पुण्यपापात्मककर्मपरतन्त्रस्यैव अर्थस्य

[1] शब्द—ग.

अवगमात्, **स एव**—तादृशो जीवात्मैव, **स्वकृतपरिणतेः**—स्वीयपुण्यापुण्याख्यकर्मपरिणामं द्वारीकृत्य, **पुंसां कर्ता**—सुरादिचातुर्विध्यमापन्नानाम्, उपास्यतयोक्तानामादित्यादीनां वा चेतनानां स्रष्टा स्यात्, **इति**—एवमाशङ्कनम्, **उपक्रान्तिभग्नम्**—प्रकरणोपक्रमेण प्रतिरुद्धम्। तथा हि, **बालाक्यज्ञाततत्त्वान्तरम्**—बालाकिनाम्ना गार्ग्येण ब्राह्मणेन अविदितं, एतेषां निर्मातृ च अन्यत् तत्त्वम्, **उपदिशतः**—नूतनतया ज्ञापयतः, **अजातशत्रोः**—तन्नाम्नः क्षत्रियस्य, **तज्ज्ञातोक्तिः**—तेन बालाकिना अवगतानामेव अर्थानां वेदितव्यत्ववर्णनप्रवृत्तिः, **इह**—एतत्प्रकरणस्था, **निरर्था स्यात्**—विफलैवापद्येत। **अत्र 'कर्म'शब्दः**—'यस्य वा एतत् कर्म' इति वाक्यगतः 'कर्म' इति शब्दः, **कृततया**—(कृतिकर्मत्वं) क्रियमाणत्वेन हेतुना; **जगति**—प्रपञ्चरूपेऽर्थे, **मुख्यः**—पुष्कलप्रवृत्तिनिमित्तवानेव; न तु गौणः ॥१०॥

**एवं जीवातिरिक्ते प्रकरणनियते तत्र यज्जीवमुख्य-**
**प्राणाख्यानं न तेन क्षतिरिह [1]च[1] तथा तद्वि[2]शिष्टे ह्यु[2]पासा।**
**प्राणस्य प्राणभाजोऽप्यधिकरणतया वाजिवाक्योक्त[3]रीत्या[3]**
**ब्रह्मज्ञप्त्यै तदन्यप्रकथनमिति हि! स्थापना सार्वभौमी ॥११॥**

**एवम्**—उक्तां रीतिमनुरुध्य, **जीवातिरिक्ते**—जीवापेक्षया विलक्षणे वस्तुनि, **प्रकरणनियते**—अर्थनिर्णायकेन प्रकरणाख्येन प्रमाणेन असन्दिग्धं निर्णीते सति, **तत्र**—जीवातिरिक्तनिर्णायके प्रकरणे एव, **जीव-मुख्यप्राणाख्यानं यत्**—'बृहन् पाण्डरवासः' इति मुख्यप्राणस्य, 'स तत एव समुत्तस्थौ' इति जीवस्य च यत् कीर्तनमस्ति, **तेन**—प्राण-जीवयोः कीर्तनेन, **इह च न क्षतिः**—प्रकृते च प्राणजीवविलक्षणपरमात्मपरत्वस्य नैव भङ्गप्रसक्तिः। **हि**—यतः, **तथा**—जीव-मुख्यप्राणप्रकारतया, **तद्विशिष्टे**—जीव-मुख्यप्राणाख्यविशेषणसहिते परमात्मनि विषयभूते, **उपासा**—उपासनं प्रवर्तते। **वाजिवाक्योक्तरीत्या**—बृहदारण्यकगतबालाक्यजातशत्रुसंवादगतार्थसादृश्येन, अन्तर्यामिब्राह्मणोक्तन्यायेन वा, **प्राणस्य प्राणभाजोऽपि**—मुख्यप्राणस्य, तथा मुख्यप्राणाश्रयभूतस्य जीवस्याऽपि च, **अधिकरणतया**—धारकत्वविशिष्टवेषेण, **ब्रह्मज्ञप्त्यै**—ब्रह्मोपासनसिद्ध्यर्थम्, **तदन्यप्रकथनम्**—ब्रह्मेतरयोर्जीव-मुख्यप्राणयोः कीर्तनम्, **इति स्थापना हि**—एवं तात्पर्यवर्णनरीतिरेव खलु, **सार्वभौमी**—अबाधिततया उत्कृष्टा भवति ॥११॥

---

[1] न—आ. [2] शिष्टेऽप्यु—आ. [3] नीत्या—आ.

## (३) अधिकरणार्थसङ्ग्रहः

जगद्वाचित्वाधिकरणे—'यो वै बालाक एतेषां पुरुषाणां कर्ता' इत्यादिवाक्ये, 'यस्य वैतत्कर्म' इति सम्बन्धश्रवणात्, वेदितव्यतयोक्तं न ब्रह्म ; किन्तु जीवः—इत्याशङ्क्य,

'क्रियते' इति व्युत्पत्त्या, 'कर्म'शब्दस्य जगद्वाचित्वात्, जगत्कारणभूतः परमात्मैव वेदितव्यतया उपात्तः—इत्युक्तम् ॥

## (४) नयसङ्गतिमालिका

**सिद्धान्तः प्राक् प्रकरणादीक्षितृत्वादियोगतः ।**
**जीवलिङ्गाज्जगद्वाचिनयः स्यादपवादतः ॥ ६५ ॥**

॥ इति जगद्वाचित्वाधिकरणम् ॥ ८ ॥

—o—

## (३३) वाक्यान्वयाधिकरणम् ॥ १-४-६ ॥

## (१) शारीरकन्यायकलापसङ्ग्रहः

**पत्यादीनां प्रियत्वं स्वकृतमिति वचस्यत्र जीवोऽभिधेयो**
**द्रष्टव्यत्वेन यस्माच्छ्रुतमिह पति-पत्न्यादिसम्बन्धभाक्त्वम् ।**
**नैवाऽन्यस्मिन् हि ! वाक्यान्वयनममृतताहेतुभावस्तथोक्तो**
**वाक्यान्ते जीवलिङ्गश्रवणमिदमवस्थानतोऽन्तः परस्य ॥ ५० ॥**

**पत्यादीनां प्रियत्वम्**—पतिजायापुत्रवित्तादीनाम्, **प्रियत्वम्**—स्वीयान् प्रति इष्यमाणत्वम्, **स्वकृतमिति**—आत्मकामाधीनमित्यर्थके, **अत्र वचसि**—'न वा अरे पत्युः.... आत्मनस्तु कामाय' इत्यादिरूपे बृहदारण्यकवाक्ये, **अभिधेयः**—प्रतिपाद्योऽर्थः, **जीवः**—जीवात्मैव ; नान्यः । **यस्मात्**—यतो हेतोः, **इह**—एतत्प्रकरणगते 'आत्मा वा अरे द्रष्टव्यः' इत्यस्मिन् वचने, **पतिपत्न्यादिसम्बन्धभाक्त्वम्**—भर्तृ भार्याप्रभृतिसम्बन्धविशेषभागित्वमेव, **द्रष्टव्यत्वेन श्रुतम्**—साक्षात्करणीयतया श्रुत्यवगतम् इत्येवमाशङ्कनम्, **नैव**—नैव युक्तम् । **हि**—यतः, **वाक्यान्वयनम्**—कृत्स्नस्य वाक्यस्य योजनम्, **अन्यस्मिन्**—जीवाद्विलक्षणे परमात्मन्येव, **तथा**—तदुपष्टम्भकतया, **अमृतताहेतुभावः**—निःश्रेयसकारणत्वरूपोऽर्थः, **उक्तः**—'अमृतत्वस्य तु नाऽऽशाऽस्ति वित्तेन' इत्यादिना प्रतिपादितः । **वाक्यान्ते**—'विज्ञानघन एवैतेभ्यः' इति संवादपरिसमाप्तिसमीपतरे वाक्ये, **जीवलिङ्गश्रवणमिदम्**—उत्पादविनाशादि-

रूपस्य जीवलिङ्गस्य श्रुत्या प्रतिपादनमेतत्, **अन्तः**—उत्पादविनाशाश्रयदेहसम्बन्धिजीवान्तर्यामित्वेन, **परस्य** –परमात्मनः, **अवस्थानतः**—'य आत्मनि तिष्ठन्' इत्युक्तया रीत्या अवस्थितेः सत्वात् ॥ ५० ॥

## (२) अधिकरणसारावलिः (श्लो. १२-१४)

**पत्यादीनां प्रियत्वं श्रुतिरनुवदति ह्यात्मनः कामसिद्ध्यै**
**तेनाऽसौ पुण्य-पापोदितफलभुगिति प्रक्रमादिप्रतीपम् ।**
**तत्तद्भोगप्रदातुः प्रथयति हि विभोः कामतस्तत्प्रियत्वं**
**द्रष्टव्यश्चैष मुक्त्यै श्रुतिनिकरमितः प्रत्यभिज्ञाप्यतेऽत्र ॥१२॥**

**हि**—यतः, **श्रुतिः**—बृहदारण्यकश्रुतिः **आत्मनः**—स्वस्य जीवस्य, **कामसिद्ध्यै**—इष्टार्थपूर्तये, **पत्यादीनां प्रियत्वम्**—भार्यादीन् सम्बन्धिनः प्रति भर्त्रादीनां सम्बन्धिनां प्रीतिभागित्वं, सेवनीयत्वं वा, **अनुवदति**-लोकसिद्धमेव ज्ञापयति। **तेन**—तस्मादेव हेतोः, **असौ**–प्रियं सेवमानः द्रष्टव्यतयोक्तः आत्मा, **पुण्यपापोदितफलभुग्**–पुण्यपापात्मककर्मप्रयुक्तफलास्वादनकर्तृभूतो जीव ; न परमात्मा, **इति**–एवं शङ्कनम् , **प्रक्रमादिप्रतीपम्**–उपक्रमादेर्विरुद्धम्। **हि**–यतः, **तत्तद्भोगप्रदातुः**–तैस्तैः पतिजायापुत्रादिभिः निमित्तभूतैः चेतनानां स्वसङ्कल्पविशेषेण भोगविशेषसम्पादकस्य, **विभोः**—परमपुरुषस्य, **कामतः**—विशिष्टेन सङ्कल्पेनैव, **तत्प्रियत्वम्**—पत्यादीनां तांस्तानात्मनः प्रति इच्छया सेव्यमानत्वम्। **एषः**—स्वीयेन सङ्कल्पविशेषेण तांस्तान् प्रियान् कुर्वाणः परमात्मैव, **मुक्त्यै**—अमृतत्वप्राप्तिमुद्दिश्य, **द्रष्टव्यः श्रुतिनिकरमितः**—साक्षात्करणीयतया समस्तवेदान्तप्रतिपन्नः, **अत्र**—'आत्मा वा अरे द्रष्टव्यः' इत्यस्मिन् वाक्ये, **प्रत्यभिज्ञाप्यते**–'स एवायम्' इति प्रतिसन्धीयते ॥१२॥

**व्युत्पत्त्या ह्यात्मशब्दः प्रथयति परमं ब्रह्म यद्वा [1]समासात्[1]**
**[2]स्वार्थो[2]ऽयं जीवशब्दो वदति च परमं द्वारवृत्त्येति [3]पक्षाः[3] ।**
**व्यक्त्यैक्यादाश्मरथ्यो निरुपधिकदशाद्वैतत[4]श्चौडु[4]लोमिः**
**तत्स्थत्वात् काशकृत्स्नः [5]परविषयतया जीवशब्दं जगाद[5] ॥१३॥**

**आत्मशब्दः**—'आत्मा वा अरे द्रष्टव्यः' इति वाक्यस्थः आत्मेत्ययं शब्दः, **व्युत्पत्त्या हि**—'आप्नोतीति आत्मा' इति अवयवशक्त्यैव, **परमं ब्रह्म**—चेतनाचेतनाभ्यामति-

---

[1] समानात्—अ, आ. ऽत्र रूढ्या—आ. [2] स्वर्थो—अ, आ. [3] पक्षः—अ, आ.
[4] स्वौडु—आ. [5] निरवहदिह साध्वात्मशब्दं परस्मिन्—अ, आ, पा.

शयितं ब्रह्मरूपं वस्तु, **प्रथयति**—प्रकटीकरोति । **यद्वा**—अथवा, **समासात्**—रूढिपदवाच्यां समुदायशक्तिमाश्रित्य, **अयम्**—उक्तः आत्मशब्दः, **सार्थः**—सर्वशरीरिणा परमात्मना अभिधेयवान् । **यद्वा**—अथवा, जीवशब्दः **अयम्**—अचेतनेतरसामान्यबोधनस्वरूपयोग्यतावानपि प्राणधारणनिबन्धनतया बाहुल्येन जीवात्मनि प्रयुज्यमानः आत्मशब्दः, **द्वारवृत्त्या**—शरीरान्तर्गतप्राणाख्यवायुधारणस्वभावं चेतनं द्वारीकृत्य, **परमं च वदति**—(विशेषणतया जीवं, विशेष्यतया) परमात्मानं चेत्युभयमप्यभिधत्ते, **इति पक्षाः**-एवंरीत्या त्रयोऽभिप्रायाः दृश्यन्ते ; **आश्मरथ्यः**—एतन्नामा महर्षिः, **व्यक्त्यैक्यात्**—मृत्पिण्डकार्यस्याऽपि घटस्य मृत्स्वरूपेण अभेदवत् , परमात्मकार्यस्याऽपि जीवस्य आत्मस्वरूपेण अभेदमवलम्ब्य, **जीवशब्दम्**—जीवबोधनस्वाभाव्यवत्तया ज्ञातम् आत्मशब्दम् , **परविषयतया**—परमात्माभिधेयकमिति, **जगाद**—स्वाशयं व्यक्तीकृतवान् । **औडुलोमिश्च**—औडुलोमिनामा आचार्यस्तु, **निरुपधिकदशाद्वैततः**—अविद्योपाधिकशरीरसम्बन्धाद्यपगमावस्थाकृतजीवब्रह्माभेदमाश्रित्य, जीवशब्दं परविषयतया जगाद । **काशकृत्स्नः**—एतन्नामा ब्रह्मतत्त्वचिन्तक आचार्यस्तु, **तत्स्थत्वात्**—'य आत्मनि तिष्ठन्' इत्युक्तरीत्या जीवात्मनियन्तृतया तच्छेषितया तद्धारकतया च परमात्मनः तस्मिन् जीवे अवस्थितत्वमाश्रित्य, जीवशब्दं परविषयतया जगाद ।। अत्रत्या विविधाः पाठाः यथायोग्यं नेयाः ॥१३॥

**भेदोपाधिव्यपाये भवभृदयमियाद् ब्रह्मतामित्ययुक्तं**
**नित्यं तद्भेददृष्टेरतिपतितभवे साम्यसाधर्म्यशब्दात् ।**
**मृत्तत्कार्यक्रमश्च श्रुतिशतविहतस्तेन जीवोक्तिमीशे**
**तत्स्थत्वात् काशकृत्स्नो यदिह निरवहद् व्याससिद्धान्त एषः ॥१४॥**

**भेदोपाधिव्यपाये**—जीवात्मपरमात्मभेदप्रयोजकाविद्यादिदोषापगमे सति, **अयं भवभृत्**—परिदृश्यमानशरीरित्वाश्रयो जीवः, **ब्रह्मताम् इयात्**—ब्रह्मभावं प्राप्नुयात् , **इत्ययुक्तम्**—ईदृशमौडुलोम्याचार्यमतं युक्तिविरुद्धम् , **अतिपतितभवे**—संसारादुत्तीर्णं जीवं विषयीकृत्य, **साम्यसाधर्म्यशब्दात्**—'निरञ्जनः परमं साम्यमुपैति' इति, 'मम साधर्म्यमागताः' इति च साम्य-साधर्म्यशब्दौ प्रयुज्य, **नित्यं तद्भेददृष्टेः**—जीवब्रह्मणोः सार्वकालिकतया भेदस्यैव श्रुतिस्मृतिषु वर्णनदर्शनात् , **मृत्तत्कार्यक्रमश्च**—मृत्पिण्ड-तज्जन्यघट-शरावादिदृष्टान्तसदृशभावश्च, **श्रुतिशतविहतः**—'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' इत्यादिजीवपरमात्मवैलक्षण्यज्ञापकबहुश्रुतिबाधितः । **तेन**—तेन हेतुना, **काशकृत्स्नः**—काशकृत्स्ननामा आचार्यः, **ईशे जीवोक्तिम्**—ईश्वरे जीववाचकशब्दप्रयोगम् , **तत्स्थत्वात् इह**

**निरवहत् यत्**—परमात्मनो जीवात्मन्यवस्थानं निमित्ततया अवलम्ब्य अस्मिन् प्रकरणे समर्थितवानिति यदस्ति, **एषः**—अयमंशः, **व्याससिद्धान्तः**—सूत्रकृतो बादरायणस्य निर्णीतः स्वाभिप्रेतोऽर्थ एव ॥१४॥

## (३) अधिकरणार्थसङ्ग्रहः

वाक्यान्वयाधिकरणे—'न वा अरे पत्युः कामाय पतिः प्रियो भवति ; आत्मनस्तु कामाय पतिः प्रियो भवति' इत्यादिवाक्ये, 'आत्मा वा अरे द्रष्टव्यः' इति द्रष्टव्यतयोक्तः आत्मा, तन्त्रसिद्धः पुरुषः ; तस्यैव आदिमध्यावसानेषु प्रतिपादितत्वात्—इत्याशङ्क्य,

'अमृतत्वस्य तु नाऽऽशाऽस्ति' इत्यादिना, अमृतत्वप्राप्तिहेतुतया उपास्यत्वकारणत्वादिप्रतिपादकवाक्यानां परमात्मपरत्वे एव अन्वयसामञ्जस्यात्, द्रष्टव्यतया उक्तः, परमात्मा—इति सिद्धान्तितम् ॥ ६ ॥

## (४) नयसङ्गतिमालिका

अन्यथा चोपपत्त्याख्यन्यायस्यात्र त्वसम्भवात् ।
शङ्कातो वाक्यनीतौ स्यात् प्रत्युदाहृतिसङ्गतिः ॥ ६६ ॥

॥ इति वाक्यान्वयाधिकरणम् ॥ ६ ॥

—o—

## (३४) प्रकृत्यधिकरणम् ॥ १–४–७ ॥

## (१) शारीरकन्यायकलापसङ्ग्रहः

उपादानादन्यच्चितरदिति नैकत्र घटना
विकारित्वाभावश्रवणमपि जागर्ति भुवने ।
अतो नोपादानं पर इति न शक्यं कथयितुं
प्रतिज्ञानात् साक्षादुभयकथनात् किंस्विदिति च ॥ ५१ ॥

**इतरत्**—निमित्तं कारणम्, **उपादानात् अन्यत्तु**—उपादान(परिणामि)कारणात् भिन्नमेव, **इति**—अनेन हेतुना, **एकत्र**—एकस्मिन्नेव ब्रह्मणि, **न घटना**-उपादानत्व-निमित्तत्वयोः न सामानाधिकरण्यम्, **विकारित्वाभावश्रवणमपि जागर्ति**—'निष्कलं निष्क्रियं शान्तम्' इत्यादिकं श्रुतिवाक्यमपि ब्रह्मणि विकारसम्बन्धराहित्यप्रतिपादकं, परिणामापरपर्यायविकारघटितम् उपादानत्वं विरुणद्धि। **अतः**—अस्मात् कारणात्, **भुवने**—कार्यं जगत् प्रति,

**परः**—परमात्मा, **न उपादानम्**—उपादानकारणं न भवितुमर्हति, **इति कथयितुम्**—एवं वक्तुम्, **न शक्यम्**—न साध्यम्; **प्रतिज्ञानात्**—उपादानत्वाविनाभाविनः कारणविज्ञानेन कार्यविज्ञानस्य 'यस्मिन्नु खलु विज्ञाते सर्वमिदं विज्ञातं भवति' इति श्रुतौ निर्णयरूपेणोक्तत्वात्, **किं स्विदिति च**—'किं स्विद्वनं क उ स वृक्ष आसीत्, यतो द्यावापृथिवी निष्टतक्षुः' इत्यादिभिर्वाक्यैः, **साक्षात्**—परमप्रमाणभूतया श्रुत्यैव (आक्षेपादिकमद्वारीकृत्य), **उभयकथनात्**—परमात्मन एव उपादानत्वस्य निमित्तत्वस्य चेति द्विविधकारणत्वस्याऽपि कण्ठतः प्रतिपादनात् ॥ ५१ ॥

### (२) अधिकरणसारावलिः (श्लो. १५–१९)

**मृत्पिण्डादेः कुलालप्रभृतिरिह पृथक् तद्वदेवादिकर्ता**
**नोपादानं विकारैर्विरहत इति न द्वारमात्रे विकारात्।**
**मृद्दृष्टान्तादिमात्रान्न च विकृतिरसौ स्यात् परस्य स्वरूपे**
**देहद्वारोर्णनाभिप्रकृतिविकृतिवद् व्यापृतेर्दर्शितत्वात् ॥१५॥**

**इह**—लोकपरिदृष्टे घटादिकार्यकारणकलापे, **मृत्पिण्डादेः**—मृत्पिण्डादिरूपादुपादानकारणात्, **कुलालप्रभृतिः**—निमित्तकारणभूतः कुलालादिरर्थः, **पृथक्**—अतिरिक्त एव खलु दृष्टः। **तद्वदेव**—तत्सादृश्येनैव, **आदिकर्ता**—जगदादिकारण(निमित्त)भूतोऽप्यर्थः, **विकारैः विरहतः**—'निष्कलं....निरञ्जनम्' इत्यादिश्रुतिसिद्धात् विकारसामान्यराहित्याद्धेतोः, **न उपादानम्**—परिणामपदवाच्यविकारयुक्तम् उपादानकारणं नैव भवितुमर्हति, **इति न**—एवं शङ्कनं नैव सङ्गतम्। **द्वारमात्रे**—कारणतां प्रति द्वारत्वेन अभ्युपगते प्रकृत्यंशे एव, **विकारात्**—उपादानत्वप्रयोजकस्य परिणामशब्दवाच्यस्य विकारस्य अभ्युपगमात्, (द्वारगतस्य द्वारिणि व्यवहारे मुख्यत्वानपायात् 'बालो युवा जातः' इतिवत्) **मृद्दृष्टान्तादिमात्रात्**—'यथा सोम्यैकेन मृत्पिण्डेन' इत्यादिना विकारिणोऽर्थस्य श्रुतौ दृष्टान्तत्वप्रदर्शनमात्रात्, **असौ**—श्रुतिसिद्धा उपादानता, **परस्य स्वरूपे**—सत्यज्ञानादिपदवाच्ये अविकारिणि परमात्मनः स्वरूपे, **न च विकृतिः स्यात्**—नैव विकाराश्रयत्वापादिका भवेत्। **ऊर्णनाभिप्रभृतिविकृतिवत्**—ऊर्णनाभिपदाभिधेयलूताख्यक्रिम्यादीनां तन्त्वाख्यविकारप्राप्तिवत्, **देहद्वारा व्यापृतेः**—चेतनाचेतनात्मकं स्वशरीरं द्वारीकृत्य परमात्मनः स्वस्मिन् जगदुपादानकारणतानिर्वाहस्य, **दर्शितत्वात्**—'यथोर्णनाभिः सृजते गृह्णते च' इत्यादिश्रुतिषु स्पष्टीकृतत्वात् ॥१५॥

**स्वज्ञानाद्यं स्वजन्यं भवति सृजति च स्वान्यसंयोगमीशः**
**संयोगे मूर्तनिष्ठे प्रकृतिरपि हि तत् स्यान्निमित्तं क्रियातः ।**
**एकस्याऽऽदौ बहु स्यामिति बहुभवनं सौभरिन्यायसिद्धं**
**भेदाभेदश्रुतीनामविहतिरिह च स्याद्विशिष्टैक्ययोगात् ॥१६॥**

**स्वज्ञानाद्यम्**—(वैशेषिकादीनां मतेऽपि) आत्मसमवेततया आत्मसमवायिकारणकं ज्ञान-चिकीर्षा-प्रयत्नादिकम्, **स्वजन्यं भवति**—('जानाति, इच्छति, करोति' इत्यादिना कर्तरि लकारप्रयोगात्) आत्मकर्तृकतया आत्मनिमित्तकमपि भवत्येव । **ईशः**—सर्वेश्वरः, **स्वान्य-संयोगम्**—आत्मनः स्वेतरेण सह संयोगाख्यं सम्बन्धविशेषम्, **सृजति च**—उत्पादयति च, (स्वसमवेतसंयोगं प्रति कर्तृत्वात् संयोगनिमित्तकारणमपि) । **मूर्तनिष्ठे**—परमाण्वादिमूर्तद्रव्य-द्वयसमवेते, **संयोगे**—संयोगाख्ये गुणे जायमाने, **तत्**—मूर्तद्रव्यद्वयम्, **प्रकृतिरपि**—समवायि-कारणापरपर्यायम् उपादानकारणं सदपि, **क्रियातः**—संयोगजनिकां स्वनिष्ठां क्रियां द्वारीकृत्य, **निमित्तं स्याद्धि**—निमित्तकारणं भवेदेव खलु ! **आदौ**—सृष्टेः प्राक्, **एकस्य**—नानानामरूप-विरहिणः, अद्वितीयस्य वा सतो ब्रह्मणः, **'बहु स्याम्' इति बहुभवनम्**—'बहु स्याम्' इति सङ्कल्पपूर्वकं नानानामरूपप्राप्तियोग्यतापादनम्, **सौभरिन्यायसिद्धम्**—सौभरिनाम्नः एकस्यैव ऋषेः स्वसङ्कल्पेन नानाशरीरपरिग्रहरीतितः सुस्थमेव, (पूर्वावस्थाविशिष्टवेषेणोपादानतायाः, उत्तरावस्थाविशिष्टवेषेणोपादेयतायाश्च मिथः अबाधात्) । **इह च**—अस्मिन् ब्रह्मोपादानता-सिद्धान्ते च, **विशिष्टैक्ययोगात्**—अवस्थाद्वयविशिष्टे धर्मिणि विशेष्यभूते अभेदस्याबाधात्, **भेदाभेदश्रुतीनाम्**—'द्वासुपर्णा' 'क्षरात्मानावीशते देव एकः' इत्यादीनां चिदचिदीश्वरभेद-प्रतिपादकानां (तथा) 'नेह नानाऽस्ति किञ्चन' 'तत्त्वमसि' इत्याद्यभेदप्रतिपादकानां च श्रुतीनाम्, **अविहतिः स्यात्**—अन्योन्यविरुद्धार्थप्रतिपादकत्वम् सिद्ध्येदेव । (तत्त्वत्रये स्वरूपकृतस्य मिथो भेदस्य, अपृथक्सिद्धतया चेतनाचेतनवैशिष्ट्यकृतस्याभेदस्य च लोकवेद-संमतत्वात्) ॥ १६ ॥

**कार्यैक्ये हि प्रतिज्ञा तदनुगुण उदाहारि दृष्टान्तवर्गः**
**स्रष्टुः स्यामित्यभिध्यां श्रुतिरिह वनतां वृक्षतादिं च वक्ति ।**
**आत्मानं चैष एव स्वयमकुरुत तद्भूतयोनित्वमुक्तं**
**तस्मात् कर्ताऽपि देवः प्रकृतिरपि भवेत् सर्वतत्त्वान्तरात्मा ॥ १७ ॥**

**प्रतिज्ञा**—'यस्मिन् नु खलु....भवति' इत्याकारिका एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा, **कार्यैक्ये हि**—कारणस्य कार्येण सहाभेदे सिद्धे एव खलु घटते; **तदनुगुणः**—कार्य-कारणयोः

अभेदप्रतिपत्तेः अनुकूल एव, **दृष्टान्तवर्गः**—मृत्-तत्कार्यादिरूपो निदर्शनस्तोमः, **उदाहारि**—लोकसिद्ध एव उद्धृत्य प्रदर्शितः । **इह**—कार्य-कारणयोर्भेदाभेदादिविचारे प्रस्तुते, **स्याम् इति श्रुतिः**—'बहु स्याम् प्रजायेय' इतीयं वेदवाणी, **स्रष्टुः**—जगत्कर्तुरीश्वरस्य, **अभिध्याम्**—कार्योपयोगिसङ्कल्पात्मिकां निमित्तत्वप्रयोजिकां ज्ञानावस्थाम्, **वक्ति**—स्फुटं प्रतिपादयति । (तथा) **वनतां वृक्षतादिं च वक्ति**—'ब्रह्म वनं ब्रह्म स वृक्ष आसीत्, 'यतो द्यावा-पृथिवी निष्टतक्षुः' इति श्रुतिरेव उपादानत्वोपलक्षकं वनत्वं, उपकरणत्वोपलक्षकं वृक्षत्वं च अभिधत्ते । (अतः—निमित्तत्वोपादानत्वोपकरणत्वात्मकत्रिविधकारणत्वमपि ब्रह्मणि अवगतं भवति । सूक्ष्म-चेतनाचेतनविशिष्टवेषेण उपादानत्वम्, कालादृष्टादिविशिष्टवेषेण उपकरणत्वम्, सङ्कल्पविशिष्ट-वेषेण निमित्तत्वम्—इति) । **एष एव**—परमात्मैव, **आत्मानमेव**—स्वस्वरूपमेव, **स्वयमेव**—इतरानपेक्ष एव (स्वसङ्कल्पमात्रात्), **अकुरुत**—नानाविधविचित्रानन्ताश्चर्याकारविशिष्टमापादयामासेति, ('तदात्मानं स्वयमकुरुत' इति श्रुतिर्वक्ति) । **तद्भूतयोनित्वम्**—तस्यैव परस्य ब्रह्मणः सर्वभूतोपादानत्वम्, **उक्तम्**—'यद्भूतयोनिं परिपश्यन्ति धीराः' इति श्रुत्या प्रतिपन्नम्, **तस्मात्**—प्रदर्शितात् ज्ञापकस्तोमात्, **देवः**—स्वयंज्योतिः परमात्मा, **सर्वतत्त्वान्तरात्मा**—यतः सर्वेषां तत्त्वानामन्तर्यामितया नियन्ता । अतः, **कर्ताऽपि**—कार्यानुगुणज्ञानचिकीर्षाकृतिमत्तया निमित्तकारणमपि, (तथा) **प्रकृतिरपि**—परिणामि चेतनाचेतनविशिष्टतया उपादानमपि, **भवेत्**—भवितुमर्हत्येव (नाऽत्र विप्रतिपत्तिहेतुरस्ति) ॥ १७ ॥

**नोपादानं निमित्तं किमपि तदितरत् कारणं तद्धि विद्मो**
**यद्वा सिद्धं निमित्तं न भजति तदुपादानतामित्ययुक्तम् ।**
**इष्टादाकारभेदादुभयघटनतो लोकवेदानुरोधे**
**सिद्धे स्वच्छन्दलक्ष्मप्रणयनकुसृतिः पाकचिन्ताविकापः ॥ १८ ॥**

**उपादानं किमपि**—उपादानकारणत्वयुक्तं यत्किमपि वस्तु, **न निमित्तम्**—निमित्त-कारणत्वाक्रान्तं नैव भवितुमर्हति । **यद्वा**—यदपि वस्तु, **निमित्तं सिद्धम्**—निमित्तकारणमिति निश्चितम्, **तत् उपादानतां न भजति**—तद्वस्तु उपादानकारणतां नैव लभते । **हि**—यतः **तत्**—निमित्तकारणभूतं वस्तु, **तदितरत् विद्मः**—समवाय्यसमवायिकारणभिन्नं कारणमित्येव निश्चिनुमः, **इति अयुक्तम्**—एवमालोचनं युक्तिविदूरम्, **इष्टात्**—प्रामाणिकसंमतात्, **आकार-भेदात्**—निमित्तत्वोपादानत्वप्रयोजकात् मिथो विलक्षणात् धर्मविशेषात्, **उभयघटनतः**—निमित्तत्वोपादानत्वरूपकारणताद्वयस्यापि सामानाधिकरण्यचिन्तनात्, **लोकवेदानुरोधे सिद्धे**—लोकवेदोभयगतकार्यकारणव्यवहारे सुसङ्गते सति, **स्वच्छन्द....कुसृतिः**—प्रमाणाननुरोधि-

स्वेच्छामात्रानुरोधि निमित्तोपादानलक्षणनिर्माणात्मकदुर्मार्गानुसरणम्, **पाकचिन्ताविपाकः**—अपरिणतप्रज्ञानां बालानां विचारपरिणाम एव; न विद्वज्जनचिन्तापरिणामोऽयम् ॥ १८ ॥

**उक्त्वा तत्त्वान्तराणां विलयमथ तमस्येकतामात्रमुक्तं**
**प्रोक्तं चानादितादि प्रकृति-पुरुषयोर्वेद-तद्वेदिवाक्यैः ।**
**लीयेते तौ परस्मिन्निति तु लयवचः स्यादयस्तोयनीत्या**
**तेनाऽसौ भोक्तृ-भोग्यप्रभृतिकवचितादिश्वसृष्टिः समीची ॥ १९ ॥**

**तत्त्वान्तराणाम्**—तमोभिन्नानां पृथिव्यादीनां तत्त्वानाम्, **विलयम्**—कार्यावस्था-प्रहाणपूर्वककारणावस्थाप्राप्तिरूपं लयम्, **उक्त्वा**—(सुबालोपनिषदि) 'पृथिव्यप्सु प्रलीयते' इत्यादिना 'अक्षरं तमसि लीयते' इत्यन्तेन प्रतिपाद्य, **अथ**—पश्चात्, **तमसि**—तमोरूपे तत्त्वे, **एकतामात्रम्**—एकीभावापरपर्यायं परमात्मना सह विभागानर्हसंसर्गविशेषमात्रम्, (न तु पूर्वोक्तो लयः) **उक्तम्**—'तमः परे देव एकीभवति' इति श्रुतिवाक्येनाभिहितम्, **प्रकृति-पुरुषयोः**—प्रधानतत्त्व-जीवतत्त्वयोः, **अनादितादि**—उत्पत्तिविनाशराहित्यम्, **वेद-तद्वेदि-वाक्यैः**—'अजामेकाम्, ज्ञाज्ञौ द्वावजौ' इत्यादिना वेदवाक्येन, (तथा) 'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि' इत्यादिरूपेण वेदवेदिनां व्यासादीनां वाक्येन च, **प्रोक्तं च**—असन्दिग्धं यथा भवति तथा प्रतिपादितमपि, **तौ**—प्रकृति-पुरुषावुभावपि, **परस्मिन्**—परमात्मनि, **लीयेते**—लयं प्राप्नुतः इत्यर्थकम्, **लयवचस्तु**—'प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्त-स्वरूपिणी । पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि' इति पराशरवचनं तु, **अयस्तोयनीत्या स्यात्**—अग्निनिष्टप्ते आयुधादिरूपे अयोविकारभूते द्रव्ये नीरं संसृष्टं चेत् यथा बहिर्न ज्ञायते अयसैव च अविभक्तं तिष्ठति, तथारूपं प्रकृतिपुरुषयोः परमात्मना सह अविभक्तसंसर्गमेव प्रतिपादयेत्; न तु प्रकृतित्व-पुरुषत्वावस्थाप्रहाणपूर्वकपरब्रह्मत्वावस्थाप्राप्तिं प्रतिपादयेत्। **तेन**—उक्तेन हेतुना, **भोक्तृ-भोग्यप्रभृतिकवचितात्**—चेतनाचेतनशरीरकात् कालशरीरकाच्च परस्मात् ब्रह्मणः, **असौ विश्वसृष्टिः**—श्रुति-स्मृतिप्रतिपन्ना जगदुत्पत्तिः, **समीची**—अबाधित-सिद्धिका ॥ १९ ॥

## (३) अधिकरणार्थसङ्ग्रहः

प्रकृत्यधिकरणे—लोके निमित्तोपादानयोर्भेददर्शनात्, सर्वज्ञं ब्रह्म निमित्तमात्रम्; न उपादानम्—इत्याशङ्क्य,

सर्वशक्तेः ब्रह्मणः उभयविधकारणत्वोपपत्तेः, 'ब्रह्म वनम्' इत्यादिषु उभयविधकारणत्व-प्रतिपादनाच्च, ब्रह्म उपादानमपि—इत्युक्तम् ॥

(४) नयसङ्गतिमालिका

उक्तं ह्युभयहेतुत्वं सर्वविज्ञानतः पुरा ।
प्रकृत्यधिकृतौ तस्य सम्यगाक्षिप्य निर्णयः ॥ ६७॥

॥ इति प्रकृत्यधिकरणम् ॥ ७ ॥

—o—

(३५) सर्वव्याख्यानाधिकरणम् ॥१-४-८॥

[अस्मिन्नधिकरणे न्यायकलापसङ्ग्रहो मुद्रिते पुस्तके न दृश्यते]

(१) अधिकरणसारावलिः (श्लो. २०, २१)

अग्रे संवर्तनं भात्यवितथवचसि क्वापि हैरण्यगर्भं
ग्रस्ताशेषस्वकार्ये तमसि च शिव एवेति केचित् पठन्ति ।
एतादृग्वाक्यवर्गस्फुटभवदधिकाशङ्कनस्तम्भनार्थं
प्रागुक्तान् नीतिभेदानतिदिशति परं शिष्यशिक्षैकचित्तः ॥२०॥

**अवितथवचसि**—अबाधितार्थकशब्दस्तोमात्मके वेदे, **क्वाऽपि**—क्वचिद्वाक्यविशेषे 'हिरण्यगर्भः समवर्तताग्रे' इत्यादिके, **अग्रे**—प्रलयपदवाच्ये काले, **हैरण्यगर्भम्**—हिरण्यगर्भपदाभिधेयचतुर्मुखसम्बन्धि, **संवर्तनम्**—सर्वाणि तत्त्वानि स्वस्मिन् एकीकृत्य स्वमात्रावशिष्टतया अवस्थानम्, **भाति**—प्रतिपादितमस्ति । **केचित्**—श्वेताश्वतरीयाः, **तमसि**—मूलप्रकृत्याख्ये तत्त्वे, **ग्रस्ताशेषस्वकार्ये**—स्वलीनस्वीयनिखिलकार्यजाते सति, **शिव एवेति च**—शिवाख्यः मूर्तित्रयान्तर्गतः मूर्तिविशेष एव आसीदित्यपि, **पठन्ति**—'न सन्न चासच्छिव एव केवलः' इत्यनेन क्रमेणाधीयते । **एतादृग्वाक्य....स्तम्भनार्थम्**—उदाहृतवाक्यजातश्रवणसमनन्तरं स्पष्टोत्पद्यमानायाः अतिरिक्तायाः आशङ्कायाः निरोधार्थम्, **शिष्यशिक्षैकचित्तः**-बोधनीयानां शास्त्रार्थग्रहणतत्पराणाम् आवश्यकार्थबोधनपरायणो बादरायणः, **प्रागुक्तान् नीतिभेदान् परम्**—जन्माद्यधिकरणमारभ्य एतत्पर्यन्तं प्रदर्शितान् न्यायविशेषानेव **अतिदिशति**—प्रकृते विषये समन्वितान् करोति ॥२०॥

विश्वेशः श्रीपतिश्चेद्भवतु कथमसौ त्राणमात्राधिकारी
दूरं गत्वाऽपि दुःख्यद्विधिशिवतुलया घट्टकुट्यां प्रभातम् ।
मैवं मत्स्यादि भावेष्विव निजविभवानुक्रियानाट्यमेतत्
ब्रह्मेशस्रष्टरि स्यान्निरवधिकबृहत्पौरुषे पूरुषे नः ॥२१॥

**श्रीपतिः**—श्रियःपतिरिति वैष्णवैः सेव्यमानो नारायणः, **विश्वेशश्चेत्**—सर्वजगन्नियन्ता ईश्वर इत्युच्यते यदि, **असौ**—सर्वेश्वरपदवाच्यो नारायणः, **त्राणमात्राधिकारी कथम्?**—सृष्टि-पालन-संहारेषु मध्ये पालनमात्रे कथं प्रभुर्भवेत्? सर्वस्यापि खलु प्रभुणा भवितव्यं तेन। एवं स्थिते, **दूरं गत्वाऽपि**—भवता नारायणे विधि-शिवापेक्षया वैलक्षण्यसाधनेन बहुदूरगमन-सदृशं प्रयासमनुभूयाऽपि, **दुःख्यद्विधिशिवतुल्यता**—त्रिमूर्त्यन्तर्गतस्य विष्णोरपि, स्वाधिकार-प्राप्ते कर्मणि प्रवर्त्य तदा तदा दुःखविशेषमनुभवतोः ब्रह्मरुद्रयोः समानताया अवर्ज्यतया, **घट्टकुट्यां प्रभातम्**—शुल्कग्रहणस्थानयुक्तं पन्थानमपहाय अन्यत्र यातुं प्रवृत्तस्य, पण्यभारवाहिनो वणिजः प्रभातसमय एव सुविदितं शुल्कग्रहणस्थानमेव, मार्गभ्रंशादिना प्राप्नुवतः समं जातम्; प्रयासस्य विफलत्वात्, **मैवम्**—एवं शङ्कनं नैव क्रियताम्, **निरवधिकबृहत्पौरुषे**—सर्वाति-शायिनि बृहत्त्वबृंहणत्वरूपमहासामर्थ्यवति, **ब्रह्मेशस्रष्टरि**—विरिञ्चिशिवयोरपि जनके, **नः पूरुषे**—पुरुषसूक्तप्रतिपाद्यपरतत्त्वतया अस्मदभिमते श्रीमति नारायणे, **एतत्**—मध्ये विरिञ्चिशिवयोः विहितावतारत्वम्, **मत्स्यादिभावेष्विव**—भगवतः मत्स्यकूर्माद्यवतारेष्विव, **निजविभवानु-क्रियानाट्यम्**—स्वविभूत्यन्तर्गतयोः ब्रह्म-रुद्रयोः अनुकरणरूपं स्वलीलात्मकं जगन्नाटककृत्यमेव; न तु विधि-शिवयोरिव अन्यपारतन्त्र्यायत्तं कृत्यम् ॥२१॥

## (१) अधिकरणार्थसङ्ग्रहः

सर्वव्याख्यानाधिकरणे—पूर्वाधिकरणानुदाहृतवाक्यविशेषेषु येषु येषु जगत्कारणत्वमात्रं श्रुतम्; न तु ईक्षणविशेषादयः परमपुरुषासाधारणधर्माः श्रुताः, तेषु यथाप्रतिपन्नवस्त्वभ्युप-गमेऽपि विरोधाभावात्, न परमात्मत्वपरम्—इत्याशङ्क्य,

परब्रह्मासाधारणधर्मान्तराश्रवणेऽपि जगत्कारणत्वस्य ईक्षणविशेषादिवत् परमपुरुषा-साधारण्यस्य पूर्वैरधिकरणैः निर्णीतत्वात्, जगत्कारणत्वमेव चिदचिद्विलक्षणसर्वविधकारणभूत-परब्रह्मशब्दवाच्यदेवताविशेषपरत्वसाधकमिति, तेष्वपि वाक्येषु स एव प्रतिपाद्यते—इति सिद्धान्तितम्॥

## (३) नयसङ्गतिमालिका

सर्वत्रोक्तप्रकारेण निर्वाहः स्वयमूह्यताम्।
इति चात्राऽतिदिश्यन्ते प्रागुक्ताः सर्वनीतयः ॥६८॥
इत्थमष्टाधिकरणी पेटिकाद्वयसङ्गता।
आद्याध्याये तुर्यपादे सन्दर्भं समुपागमत् ॥६९॥

इति सर्वव्याख्यानाधिकरणम् ॥८॥

—o—

(१) **शारीरकन्यायकलापसङ्ग्रहः** (श्लो. ५२–५८)

**प्रक्रियाप्रत्यभिज्ञानात् स्वभावकथनात् तथा ।**
**सङ्ख्योपसङ्ग्रहाच्चाऽपि व्याकुलत्वात् परस्परम् ॥५२॥**

**कर्मसम्बन्धकथनात् पत्यादिश्रवणात्तथा ।**
**लोके च भेदसन्दृष्टेः उपादान-निमित्तयोः ॥५३॥**

**ब्रह्मैव कारणं नान्यदित्येषा नैव निश्चितिः ।**
**इति यत् तान्त्रिकेषूक्तं तदनेन निराकृतम् ॥५४॥**

**प्रक्रियाप्रत्यभिज्ञानात्**—'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यादिभिः कठवल्लीगतैः वाक्यैर्बोध्ये अर्थे, 'साङ्ख्यप्रक्रियैवेयम्' इति प्रत्यभिज्ञायाः सिद्धत्वात्, **तथा स्वभावकथनात्**—एवमेव 'अजामेकाम्' इति तैत्तिरीय श्वेताश्वतरीयश्रुत्योः साङ्ख्याभिमतप्रकृतिगतस्य स्वभावस्यैव प्रतिपादनात्, **सङ्ख्योपसङ्ग्रहाच्चापि**—'यस्मिन् पञ्च पञ्चजनाः' इति बृहदारण्यकश्रुतौ साङ्ख्यसंमततत्त्वगतपञ्चविंशतिसंख्यायाः 'पञ्च पञ्चे'त्यनेन एकत्र सङ्गृह्य कथनात्, **परस्परं व्याकुलत्वात्**—श्रुतिगतेषु जगत्कारणवाक्येषु परस्परं विरुद्धार्थकताया दर्शनात्, **कर्मसम्बन्धकथनात्**—कौषीतकीवाक्ये 'यो वै बालाके....यस्य वैतत् कर्म' इत्यस्मिन् पुण्य-पापात्मकस्य जीवगतस्य कर्मणः सम्बन्धप्रतिपादनात्, **पत्यादिश्रवणात्तथा**—एवमेव पतिपत्न्यादेः कर्मवश्यजीवासाधारणस्य श्रुतौ प्रतिपादनात्, **उपादान-निमित्तयोः भेदस्य**—उपादानकारणे निमित्तकारणे च एककार्यनिरूपिते अनेकत्वस्यैव, **लोके सन्दृष्टेश्च**—घटोपादानभूते मृद्द्रव्ये, घटनिमित्तभूते कुलाले च स्फुटमवगमात्, **ब्रह्मैव कारणं नान्यत् इत्येषा**—परं ब्रह्मैकमेव जगतः कारणमुभयविधम् इति वेदान्तवादिभिरुच्यमाना, **नैव निश्चितिः**— अबाधितसिद्धिका न भवितुमर्हति, **इति तान्त्रिकेषु उक्तं यत्**—एवं प्रकारं साङ्ख्यतन्त्राभ्युपगन्तृषु परिदृश्यमानं यत् वचनमस्ति, **तदनेन निराकृतम्**—तत् सर्वं तुर्येणानेन पादेन युक्तिविदूरमिति विवेचकानां कृते प्रदर्शितम् ॥५२, ५३, ५४॥

**त्रिभिः प्रधानस्य निराकृतिः स्यात् चतुर्थतोऽन्योन्यविरोधभङ्गः ।**
**मुक्तिं गतो बन्धगतश्च जीवो व्यावर्तितः पञ्चमषष्ठकाभ्याम् ॥ ५५ ॥**

**त्रिभिः**—आनुमानिक-चमस-सङ्ख्योपसङ्ग्रहाख्यैः त्रिभिरधिकरणैः, **प्रधानस्य निराकृतिः स्यात्**—साङ्ख्याभिमतप्रधानस्यैव श्रुतिबोध्यत्वमित्यस्यांशस्य दूरीकरणं भवेत् ।

**चतुर्थतः**—कारणत्वाधिकरणात्तुरीयात् , **अन्योन्यविरोधभङ्गः**—जगत्कारणवाक्यानां मिथो विभिन्नतात्पर्यकताभ्रमविमोचनम् , **पञ्चम-षष्ठकाभ्याम्**—जगद्वाचित्व-वाक्यान्वयाधिकरणाभ्याम् , **मुक्तिं गतः बन्धगतश्च जीवः**—संसारबन्धान्मुक्तिं प्राप्तः, संसारबन्धे निगडितश्च जीवात्मा, **व्यावर्तितः**—श्रुतिगतकारणवादिवाक्यतात्पर्यविषयो न भवतीति स्पष्टीकृतम् ।

**एतावता सूत्रकलापकेन निरीश्वरं सांख्यमपाचकार ।**
**शेषाद्धुनोति स्म च सेश्वरं तदैक्यं निमित्तेश्वरयोः समिच्छन् ।। ५६ ।।**

**एता....लापकेन**—आनुमानिकसूत्रमारभ्य, अवस्थितेरिति सूत्रान्तेन सूत्रजातेन, **निरीश्वरं सांख्यम्**—ईश्वरस्यानभ्युपगन्तृकापिलं सांख्यम् , **अपाचकार**—श्रुत्यनभिमतार्थकतया विशदीचकार । **शेषात्**—प्रकृतिसूत्रमारभ्य, 'एतेन सर्वे व्याख्याताः' इत्यन्तात् सूत्रजातात् , **निमित्तेश्वरयोः ऐक्यं समिच्छन्**—जगन्निमित्ते जगदुपादाने सर्वनियन्तरि ईश्वरे च अभेदं साधयितुकामः सूत्रकारः, **सेश्वरं तत्**—ईश्वराभ्युपगन्तृपातञ्जलं सांख्यम्, **धुनोति स्म**—श्रुत्यनभिमतार्थग्राहि इति बोधयति बादरायणः ।। ५६ ।।

**एवं जगत्कारणवादिवाक्यैरुक्तं समस्तैरपि चैककण्ठैः ।**
**ब्रह्मैव सर्वज्ञमनन्तशक्ति निदानमेषां जगतामितीदम् ।। ५७ ।।**

**एवम्**—पूर्वोक्तया रीत्या, **समस्तैरपि**—अखिलैरपि, **जगत्कारणवादिवाक्यैः**—जगत्कारणभूततत्त्वप्रतिपादकैः सर्ववेदान्तान्तर्गतैर्वाक्यैः, **एककण्ठैः**—अविरुद्धैकतात्पर्यकैः सद्भिः, **सर्वज्ञम्**—निखिलचेतनाचेतनात्मकस्थूल-सूक्ष्मरूपविश्वविषयकज्ञानवत् , **अनन्तशक्ति**—अपरिच्छिन्नसामर्थ्यवत् , **ब्रह्मैव**—परं ब्रह्मैकमेव, **एषां जगतां निदानमितीदम्**—सर्वेषामेषाम-संख्यानानामपि भुवनानाम् आदिकारणमित्येतत् , **उक्तम्**—पर्याप्तैर्हेतुभिः समर्थितम् ।। ५७ ।।

**सूक्ष्मचिदचिच्छरीरं कारणतां याति तत् परं ब्रह्म ।**
**स्थूलचिदचिच्छरीरं पुनश्च तत् कार्यतां याति ।। ५८ ।।**

**तत् परं ब्रह्म**—श्रुत्या निखिलजगत्कारणतावत्तया प्रतिपन्नं परब्रह्म, **सूक्ष्मचिदचिच्छरीरम्**—सूक्ष्मपदवाच्यावस्थाविशेषापन्नचेतनाचेतनकवचितं सत्, **कारणतां याति**—सृज्यमानार्थसृष्टिहेतुतां प्राप्नोति, **पुनश्च तत्**—तदेव ब्रह्म, **स्थूलचिदचिच्छरीरम्**—स्थूलपदवाच्यावस्थाविशेषापन्नचेतनाचेतनकवचितं सत् , **कार्यतां याति**—सृज्यमानार्थस्वरूपतां प्राप्नोति ।। ५८ ।।

सेनेश्वरार्यरचितसन्न्यायकलापसङ्ग्रहस्यास्य ।
श्री रामभद्ररचिता प्रथमाध्यायस्य टिप्पणी पूर्णा ।।



सांख्योक्तप्रक्रियोक्तेस्तदभिमतसृजेस्तत्प्रसंख्यानक्लृप्तेः
तत्प्रोक्ताव्याकृतैक्यात् स्ववृजिनवचनात् तत्फलावद्ययोगात् ।
भेदात् कर्तृ-प्रकृत्योर्द्रुहिणशिवमुखानेकहेतुश्रुतेश्च
क्षिप्तं पादत्रयोक्तं श्रुतिहृदयसमुद्धाटनादन्वरक्षत् ॥२२॥

**सांख्यो....योक्तेः**—सांख्याभिमतप्रधानादितत्त्वाभ्युपगमादिविधाया एव कठश्रुत्यादौ प्रतिपादनात्, **तद....सृजेः**—सांख्याभ्युपगताब्रह्मात्मकप्रधानकारणताकसृष्टिरीतेरेव अजा-श्रुत्यादिना अवगमात्, **तत्प्रसंख्यानक्लृप्तेः**—सांख्यसंमततत्त्वगणनाप्रकारस्यैव 'यस्मिन् पञ्चे'त्यादिश्रुत्या निर्णीयोक्तत्वात्, **तत्प्रोक्ताव्याकृतैक्यात्**—'तद्धेदं तर्ह्यव्याकृतम्' इति श्रुति-संमतस्य अव्याकृतपदार्थस्य सांख्योक्तेन प्रधानेनाभेदात्, **स्ववृजिनवचनात्**—'यस्यैतत् कर्मे'ति श्रुत्या जीवगतपुण्यापुण्यात्मकस्य दुरितपदवाच्यस्य कर्मणः ज्ञातव्येऽर्थे उक्तत्वात्, **तत्फलावद्य-योगात्**—स्वकृतकर्मफलात्मकपति-पुत्राद्यपुरुषार्थसम्बन्धोक्तेः, **कर्तृ-प्रकृत्योः भेदात्**—निमित्तोपादानकारणयोः मिथो भेदनियमात्, **द्रुहिण....श्रुतेश्च**—श्रुतिषु नारायणात् अतिरिक्ता-नाम् अनेकेषां कारणानां जगत्कारणताप्रतिपादनाच्चेत्येतैः एतत्पादीयपूर्वपक्षहेतुभिः, **क्षिप्तम्**—निरस्तम्, **पादत्रयोक्तम्**—आद्याध्यायीयप्रथम-द्वितीय-तृतीयपादैः साधितमर्थम्, **श्रुति....टनात्**—श्रुतिविवक्षितार्थस्फुटीकरणात्, **अन्वरक्षत्**—अनिराकरणीयतयाऽभ्युपगम्य अकथयत् सूत्रकृत् बादरायणः ॥२२॥

जिज्ञास्यत्वेन सिद्धे स्थिरचरचिदचिद्देहिनि ब्रह्मतत्त्वे
श्रुत्याद्यैरेव सूक्ता स्वरसगतिरियं कारणाम्नायवाचाम् ।
बाधं रोधं च बाह्यान्तरमिह बहुधा वर्णयन्तो मुसल्याः
निष्काल्येरन् परस्तान्निषदुपनिषदां निश्चलत्वप्रसिद्ध्यै ॥२३॥

**जिज्ञास्यत्वेन सिद्धे**—तापत्रयातुरैः अमृतत्वप्राप्तये विचार्य निर्णेयतया स्थापिते परिनिष्पन्न-स्वरूपे, **स्थिर-चरचिदचिद्देहिनि**—स्थावरजङ्गमात्मकचेतनाचेतनशरीरके, **ब्रह्मतत्त्वे**—निरतिशय-बृहत्त्वयोगेन ब्रह्मपदवाच्ये परतत्त्वे, **कारणाम्नायवाचाम्**—जगत्कारणभूतार्थप्रतिपादकानां श्रुतिवाक्यानाम्, **इयं स्वरसगतिः**—पूर्वं प्रदर्शिता अक्लिष्टा प्रवृत्तिः, **श्रुत्याद्यैरेव**—श्रुतिस्मृति-पुराणाद्यात्मकैः तात्त्विकार्थप्रतिपादकैः ग्रन्थैरेव, **सूक्ता**—सम्यक् अन्विततया प्रतिपादिता । **इह**—आद्येनाध्यायेन स्थापिते अर्थे, **बाधम्**—प्रमाणान्तरकृतम् असम्भावितत्वज्ञानम्, **रोधं च**—सत्प्रतिपक्षितत्वज्ञानेन उक्तार्थनिर्णयाभावं च, **बाह्यान्तरम्**—परकीयतन्त्राहितं, (तथा) प्रमाणतया

स्वाभ्युपगतश्रुत्यादिवैघट्यरूपं च, **बहुधा**—अनेकैः प्रकारैः, **वर्णयन्तः**—ग्रन्थविस्तारमुखेन प्रदर्शयन्तः, **मुसल्याः**—तत्त्वार्थनिर्णये कुशाग्रवत् सूक्ष्मां मतिमनवलम्बमानाः स्वीयपूर्वग्रहाहित-संस्कारेण श्रुत्याद्यर्थनिर्णयप्रवृत्ताः (मन्द)स्थूलमतयः, **परस्तात्**—पश्चात्तनेऽध्याये, **निषदुप-निषदाम्**—सद्वारकाद्वारकब्रह्मप्रतिपादकानां श्रुतिभागानाम्, **निश्चलत्वप्रसिद्ध्यै**—निर्बाधतया स्वार्थप्रतिपादनदार्ढ्याय, **निष्काल्येरन्**—दोषयुक्तार्थनिर्णयकृतो यूयम् इति ज्ञापयित्वा पश्चात्ताप-युक्ताः क्रियन्ते ॥ २३ ॥

**आदौ जिज्ञास्यताऽऽस्तां बहुविहतिहता सह्यतां लक्षणोक्तिः**
**मृष्यामः शास्त्रयोनिप्रलपित[1]मपि वः स्तात्[1] समन्वित्यपोक्तिः ।**
**सूत्रैरेतैः स्फुटार्थैः सविषयवचनैर्निर्विशेषैक्यपक्षे**
**मुख्येक्षाद्यैः स्वधर्मैः प्रकृतिपुरुषतो भेदवादः कथं स्यात् ॥ २४ ॥**

**आदौ**—प्राथमिके जिज्ञासाधिकरणे, **बहुविहतिहता**—नानाप्रकारविरोधाकुला, **वः जिज्ञास्यता**—अद्वैतवादिभिर्युष्माभिर्वर्णिता ब्रह्मणो विचार्यता, **आस्ताम्**—कथंचित् तूष्णी-भावेन उदास्यतां नाम, **बहुविहतिहता**—अनेकव्याघातपूर्णा, **वः लक्षणोक्तिः**—युष्माकं स्वरूपतटस्थादिब्रह्मलक्षणवर्णरीतिरपि, **सह्यताम्**—क्षम्यताम्, **वः शास्त्रयोनिप्रलपितमपि**—ब्रह्मणः शास्त्रयोनित्ववर्णनाय कृतं बहुदोषाकीर्णं युष्मदीयं वाक्प्रपञ्चमपि, **मृष्यामः**—सहामहे तावत्, **वः समन्वित्यपोक्तिः**—युष्माभिः कृता सर्वेषां वेदान्तानां ब्रह्मणि समन्वयवर्णनरीतिरपि दोषबहुला, **स्तात्**—तिष्ठतु नाम, **निर्विशेषैक्यपक्षे**—'निर्विशेषचिन्मात्रब्रह्मैक्यं मोक्षः ; स एव च सर्वश्रुत्यर्थः' इति मते, **सविषयवचनैः**—तत्तद्विषयवाक्यसहितैः, **एतैः स्फुटार्थैः सूत्रैः**—निःसन्देहतया स्वार्थप्रतिपादकैः एतावदन्तैः आद्याध्यायगतैः सूत्रैः, (तथा) **मुख्येक्षाद्यैः स्वधर्मैः**—सृष्ट्यनुगुणसङ्कल्पात्मकगौणेक्षणादिरूपैः ब्रह्मगतैश्च धर्मैः सूत्रप्रतिपाद्यैः सिद्धैः, **प्रकृति-पुरुषतो भेदवादः**—प्रकृतितः पुरुषाच्च ब्रह्मणि भेदवर्णनम्, **वः कथं स्यात्**—युष्माकं कथमव्याहतं सिध्येत् ? (सर्वथा नैव सिध्यति) ॥ २४ ॥

[इति चतुर्थः पादः । प्रथमोऽध्यायः समाप्तः ।]

अधिकरणसारावल्यां वेदान्ताचार्यरचितायाम् ।
आद्यस्य लक्षणस्य तु समन्वयेत्याख्यया प्रसिद्धस्य ॥
शब्दार्थविवृतिरूपा टिप्पण्येषा तु रामभद्रेण ।
अध्येतृसुकरतायै ग्रथिताऽभीष्टा समापिता हरिणा ॥

—o—

[1] मिह च स्यात्—आ.

# अनुबन्धः—२

[श्रीभाष्ये द्वितीयसम्पुटे उदाहृतानां प्रमाणानां सविवरणः आकरनिर्देशयुतश्च अकाराद्यनुक्रमेण सङ्ग्रहः]

॥ श्रीः ॥

श्रीमते रामानुजाय नमः । श्रियै नमः । श्रीधराय नमः ।

# ॥ प्रमाणार्थकोषः ॥

## (श्रीभाष्यद्वितीयसम्पुटस्य)

[श्रीभाष्यद्वितीयसम्पुटे उदाहृतानां प्रमाणानाम् आकरनिर्देशार्थानुवादाभ्यां सहितः अकाराद्यनुक्रमेण सङ्ग्रहः]

| प्र. सं. | प्रमाणानि सविवरणानि | पृ. सं. |
|---|---|---|
| 1. | **'अक्षरं तमसि लीयते तमः परे देव एकीभवति'** * (सुबा. उ. 2)<br>[स्फुटगुणसाम्यलक्षणम् 'अव्यक्त'शब्दवाच्यं वस्तु अस्फुटगुणसाम्यावस्थे चेतनसमष्टिगर्भे स्वरूपे स्वीयावस्थाप्रहाणपूर्वकं तदवस्थतां प्राप्नोति ।] तदवस्थं च 'अक्षर'शब्दवाच्यम् अक्षरावस्थाप्राप्त्यौन्मुख्यवति 'विभक्त-तमः'शब्दवाच्ये अतिसूक्ष्मावस्थे प्रधाने लीनं भवति । तच्च कार्योपयोगितया विभक्तं तमः कार्यानुपयुक्ते अविभक्ते तमसि एकीभवति— परमात्मशरीरतयाऽपि अचिन्त्यं भवति ॥ | 406 |
| 2. | **'अक्षरात् परतः परः'** (मुण्ड. उ. 2–1–2)<br>('दिव्यो ह्यमूर्तः' इत्यादिना 'शुभ्रः' इत्यन्तेन भागेन अस्मिन् मन्त्रे कीर्तितो यः;) सः अव्याकृतात् भूतसूक्ष्मात् अतिशयितः समष्टिपुरुषो यः, तस्याऽपि कारणतया ततोऽप्यधिकः परमपुरुषः । | 183, 184, 186, 187, 241 |
| 3. | **'अक्षरात् सम्भवतीह विश्वम्'** (मुण्ड. उ. 1–1–8)<br>(ऊर्णनाभि-पृथिवी-देहिचेतनदृष्टान्तमनुसृत्य) स्वेतरनिमित्तानपेक्षात् निर्विकारात् परस्माद्ब्रह्मणः सकाशात् अस्मिन् महति संसारमण्डले मिथो विभिन्नलक्षणतया ज्ञायमानं चेतनाचेतनात्मकं सर्वं जायते ॥ | 186 |
| 4. | **अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्'** (तै. सं. 2–2–2)<br>'पथिकृत्' इति संज्ञकमग्निमुद्दिश्य अष्टभिः कपालैः संस्कृतं पुरोडाशं हविः पृथक्कृत्यार्पयेत् । | 51 |

---

* वि.सू. :—प्रमाणानां पुरतः निर्दिष्टवर्णसंख्यादिविषये स्पष्टीकरणं उत्तरत्र सङ्केताक्षरसूचन्यां कृतम् ।

5. 'अग्निमग्न आवह' (तै. ब्रा. 3–5–9) 285

आवोढृत्वेन भावित ! हे अग्ने ! आवाह्यत्वेन भावितम् अग्निम् आवह — आह्वानं कुरु । (एकस्यैव अग्नेः आवोढव्यत्व-आवोढृत्वरूप-धर्मपार्थक्येन भावितेन पृथग्व्यपदेशः ।)

6. 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशःश्रोत्रे वाग्विवृताश्च वेदाः ।
वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥'
(मुण्ड. उ. 2–1–4) 194, 201

एतस्य परस्य ब्रह्मणः सर्वभूतभरितं विश्वं प्रति अन्तरात्मत्वात् सर्वभूत-शरीरकत्वात्, विराड्रूपस्यास्य अग्निपदवाच्यो द्युलोक एव शिरःस्थानीयः । सूर्याचन्द्रमसौ उभावपि नेत्रस्थानीयौ । प्राच्याद्याः सर्वा दिशः श्रोत्र-स्थानीयाः । सर्वा अपि वैदिक्यो वाचः वाग्व्याहाररूपाः । सदा गतिमान् वायुः देहधारकप्राणस्थानीयः । सर्वञ्च जगत् हृदयाख्यमांसपिण्डस्थानीयम् । पृथिवी सर्वाप्यस्य पादस्थानीयेति (जानीयात्) उपासीत ।

7. 'अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ।
ईशानो भूतभव्यस्य स एवाद्य स उ श्वः ॥ एतद्वै तत् ।'
(कठ. उ. 4–13) 276

उपासकशरीरसम्बन्ध्यङ्गुष्ठप्रमाणप्रदेशपरिमितः परमात्मा, शुष्केन्धनानलवत् प्रकाशमानो वर्तते । सः भूतभविष्यद्वर्तमानात्मके कालत्रयेऽपि अबाधितसत्ताकः सन् कालत्रयवर्तिनां सर्वेषामपि ईश्वरः सर्वशरीरकश्च ।

8. I 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः ।
तं स्वाच्छरीरात् प्रवृहेन्मुञ्जादिवेषीकां धैर्येण ॥
तं विद्याच्छुक्रममृतम्' (कठ. उ. 6–17) 276

II 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा' 315

जनशब्दितानां समेषां चेतनानां हृदयाख्ये शरीरान्तःप्रदेशे अङ्गुष्ठ-प्रमाणेनावस्थितः परमपुरुषः, तेषामन्तःप्रविश्य नियन्ता सन् अविरतं जागर्ति । तं च अन्तरात्मानं पुरुषं, तच्छरीरभूतात्

स्वस्माद्विलक्षणं, शरीरित्वादिधर्मयुतं, उपासनादिजन्यकुशलज्ञानेन साधनभूतेन विविच्य जानीयात्। यथा मुञ्जाख्ये तृणविशेषे दृश्यमाने तन्मध्यवर्तिनीमिषीकां मुञ्जाद्विविच्य जानीयात् तद्वत्। तं स्वेतरानधीनस्वप्रकाशं स्वाधीनसर्वप्रकाशं निरुपाधिकामृतत्ववन्तं च जानीयात्।

9. I **'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति।
ईशानो भूतभव्यस्य न ततो विजुगुप्सते॥ एतद्वै तत्॥'**
(कठ. उ. 4-12) 276

II **'अङ्गुष्ठमात्रः.... तिष्ठति'** 315

भूत-भविष्यद्-वर्तमानात्मककालत्रयवर्तिनां सर्वेषां नियन्ता सर्वेश्वरः, उपासकशरीरसम्बन्धिनि हृदयाख्ये मध्यदेशे तदनुग्रहार्थमेव अङ्गुष्ठपरिमाणमाश्रितोऽवतिष्ठते। यतः स्वसङ्कल्पेनैव तादृशीं स्थितिमाश्रित्यावस्थितः, अत एव चेतनाचेतनगतैः स्वसम्बद्धैरपि अपुरुषार्थभूतैरर्थैः तद्विषयिणीं जुगुप्सात्मिकां बुद्धिं नैव प्राप्नोति॥

10. **'अङ्गुष्ठमात्रो रवि.... समन्वितो यः'** (श्वे. उ. 5-8) 277
[प्र. सं. 340 द्रष्टव्यम्]

11. **'अजरोऽमृतोऽभयो ब्रह्म'** (बृ. उ. 6-4-25) 324

एष परमात्मा जरा-मरणशून्यः असंसारी; अत एव च निर्भयः सन् निरतिशयबृहत्त्वगुणयोगेन 'ब्रह्म'पदवाच्यश्च।

12. I **'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः॥'**
(श्वे. उ. 4-5, तै. ना. उ. 10-5) 346, 349

II **'अजामेकाम्'** 347, 352, 354, 405

तेजो-जल पृथिव्यात्मकविकारगतैः रक्त-शुक्ल-कृष्णाख्यैः रूपैर्युक्तां, स्वसमानरूपविविधभूतभौतिककार्यस्रष्ट्रीम्, उत्पत्तिरहितां काञ्चित् प्रकृतिम्, जन्मरहित एव कश्चिद् विद्वान् चेतनः अहम्बुद्ध्या सेवमानः

सन् अनुसृत्य तिष्ठति । तां भुङ्क्ते वा । विद्वांश्चापरश्चेतनः भुक्तपूर्वामिमां प्रकृतिं सञ्जातवैराग्यः सन् परित्यजति ॥

13. I 'अजायमानो बहुधा विजायते ।
तस्य धीराः परिजानन्ति योनिम् ॥' (तै. आर. 3–13–3) 218

II 'अजायमानो ........ विजायते' 88

परमात्मा जन्मपदवाच्यकर्मायत्तशरीरसम्बन्धरहितोऽपि, बहुविधाविर्भाववान् भवति । तदाविर्भावग्रहणोपायम्, आविर्भावनिदानं वा कुशलधिषणाः योगिवर्या एव ग्रहीतुं ग्राहयितुं वा समर्था भवेयुः ॥

14. 'अजोऽन्यः' (श्वे. उ. 4–5) [प्र. सं. 12 द्रष्टव्यम्] 354

15. 'अजो ह्येकः' (श्वे. उ. 4–5) [प्र. सं. 12 द्रष्टव्यम्] 354

16. 'अणीयान् व्रीहेर्वा यवाद्वा' (छां उ. 3–11–3) 145

व्रीहियवाद्यल्पपरिमाणतोऽप्यल्पतरपरिमाणः सन्, एष परमात्मा मदीयहृदयान्तःप्रदेशे मदुपासनानुकूल्यायावस्थितः ॥

17. I 'अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः'
(तै. ना. उ. 10–5) 349

II अणोरणीयान्' 342

सर्वभूतव्यापनक्षमत्ववतश्चेतनादपि अत्यन्तं सूक्ष्मः, (चेतनाचेतनसर्वान्तःप्रवेशक्षमः) तथा अत्यन्तमहत्तया प्रसिद्धात् आकाशादेरपि अतिशयितमहत्त्ववांश्च वर्तते परमात्मा । सः अस्य जनन-मरणधर्मकस्य चेतनस्य अन्तःप्रविश्य नियन्ता संनिहितो वर्तते ।

18. I 'अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति । स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः'
(छां. उ. 3-14-1) 129

II 'अथ खलु....प्रेत्य भवति' 146

देही सर्वोऽपि चेतनः, स्वोपास्यविषयकोपासनप्रधान इति हेतोः, स्वोपास्यमुपासीतैव ; अनुपासिता सन् कदाऽपि न अवतिष्ठेत । स्वाधिष्ठान-

तया अनुभूयमाने अस्मिन् देहे, विद्यमाने यादृशमुपासनमवलम्ब्याव-तिष्ठते—जीवति, देहान्तरं प्राप्याऽपि, देहादुत्क्रम्याऽपि वा स्वोपासित-तादृग्गुणकार्थप्राप्तिमान् भवति ।

उपास्यं च ब्रह्म, विशुद्धेन चेतसा ग्राह्यम्, जगति सर्वेषां प्राणिनां प्राणधारणहेतुभूतम्, दिव्यतेजोमयविग्रहवत् ।

19. **'अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति'**

(कौषी. उ. 3–26) 122, 133

देहधारको हि मुख्यः प्राणः जीवात्मानं स्वसहायतया स्वीकृत्य, स्वयं जडत्वात् मृतप्रायमिदं शरीरं सर्वप्रकारेण आत्मसात्कृत्य, प्रवृत्ति-निवृत्त्यादौ योजयति ।

20. I **'अथ तत ऊर्ध्व उदेत्य नैवोदेता नाऽस्तमेतैकल एव मध्ये स्थाता'**

(छां. उ. 3–11–1) 352

II **'अथ……..उदेत्य'** 297, 298

यः आदित्यः, कार्यजगदवस्थायां यादृशे स्थाने उदयास्तमयौ—प्राणिनां दर्शनादर्शनगोचरताम् अनुभवन् अविद्यत, सः कारणावस्थाप्राप्तिरूपे कल्पावसाने प्रतिसञ्चरे प्राप्ते, वर्जितोदयास्तमयः, तस्मादुपरितने तमसः परस्तादवस्थिते परमव्योमनि परमात्मना साकमविभागेनावस्थित्यात्मकैक-मात्रस्वभावाश्रितः मध्यमां-प्रवृत्तिनिवृत्तिप्रयोजकत्वातिरिक्तां स्थितिमवलम्ब्य स्थितः ॥

21. I **'अथ परा यया तदक्षरमधिगम्यते ।**
**यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादम् ।**
**नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः'** (मुण्ड.उ. 1–1–5, 6) 183

II **'अथ परा……..गम्यते'** 189

(विवेकादिसाधनसप्तकजन्येन परोक्षज्ञानात्मकापरविद्यानन्तरभाविना परविद्यापदवाच्येन दर्शनसमानाकारतामापन्नेन परब्रह्मज्ञानेन, पूर्ववाक्ये

व्याप्यतया निर्दिष्टम् अक्षरपदाभिधेयं परं ब्रह्म आधिक्येन गम्यते—अपरोक्षीक्रियते । सर्वगतम्—सर्वत्रान्तःप्रविश्यावस्थितम्, सुसूक्ष्मम्—अन्तःप्रवेशौपयिकसूक्ष्मत्ववत्, व्ययरहिततया च अक्षरं तद्ब्रह्म प्रज्ञाशालिनः सर्वभूतोपादानतया साक्षात्कुर्वन्ति । (अन्यत् सर्वं समानम्) ॥

22. I **'अथ य आत्मा, स सेतुर्विधृतिरेषां लोकानामसम्भेदाय'** (छां उ. 8–4–1) 264

II **'अथ य आत्मा'** 264

पूर्वोक्ताजरत्वामृतत्वाभयत्वलक्षणब्रह्माभिन्नः सत्यपदवच्यो य आत्मा, सः पृथिव्यादीनां सर्वेषां लोकानां विशेषेण धारकः सुव्यवस्थापितसर्वधर्ममर्यादाकः अत एव सर्वधर्मासाङ्कर्यरक्षणकृतसेतुसादृश्यनिबन्धनसेतुपदवाच्यतावान् ।

23. **'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति'** (छां. उ. 8–1–6) 255, 260

ये तु इहलोके आत्मानम् अपहतपाप्मत्वादींश्च काम्यमानान् कल्याणगुणान् उपास्य परलोकं व्रजन्ति, तेषां ब्रह्मविभूतिभूतविकारलोकानुभवानन्तरं, यथाकामतृप्तता अकर्मवश्यता च सिध्यति ।

24. **'अथ य एत....हुतं भवति'** (छां. उ. 5–24–2) [प्र. सं. 559 द्रष्टव्यम्] 211

25. I **'अथ य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसंम्पद्य स्वेन रूपेणाभिनिष्पद्यते, एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्म'** (छां. उ. ८–3–4) 266

II **'अथ....सादः'** 271

पूर्वोक्तहृत्स्थानगतः सर्वविश्रान्तिस्थानभूतसुषुप्तिस्थानगामितया समीचीनभगवत्प्रसादभागितया वा सम्प्रसादपदवाच्यः उपासिता जीवः, कर्मनिबन्धनविविधवैषम्यास्पदात् अधिष्ठानतयाऽऽश्रितात् अस्माद्देहात् ब्रह्मनाडीद्वारा ऊर्ध्वमुत्क्रम्य, परमव्योमनिलयं 'परंज्योतिः'शब्दितं परमात्मानं प्राप्य, कर्मप्राप्तसंसार्यवस्थाप्रहाणेन, असङ्कुचितज्ञानत्वादिरूपपरमात्मधर्म-

सदृशस्वीयस्वाभाविकधर्माविर्भाववान् भवति । यं च प्राप्य चेतनः ईदृशो भवति, स एव निरुपाधिकात्मत्वामृतत्वाभयत्वादिमान् ब्रह्मपद-वाच्यश्च ।

26. 'अथ य एषो… तन्नाम' (छां. उ. 1-7-5) [प्र. सं. 36 द्रष्टव्यम्] 80

27. 'अथ यत्रैतदाकाशमनुविषण्णं चक्षुः, स चाक्षुषः पुरुषः; दर्शनाय चक्षुः। अथ यो वेदेदं जिघ्राणीति, स आत्मा; गन्धाय घ्राणम्। अथ यो वेदेदमभिव्याहराणीति, स आत्मा; अभिव्याहाराय वाक्। अथ यो वेदेदं शृणवानीति, स आत्मा; श्रवणाय श्रोत्रम्। अथ यो वेदेदं मन्वानीति, स आत्मा; मनोऽस्य दैवं चक्षुः'
(छां. उ. 8-12-4, 5) 269

अस्मिन् देहे विद्यमानं सत् रूपादिविषयप्रकाशसाधनभूतं चक्षुर्नामकमिमिन्द्रियं यस्मिन् उपकरणोपकरणिभावेन सम्बद्धं भवति, स चक्षुरुपकरणकः पुरुष एव आत्मा। चक्षुस्तु तदीयरूपग्रहणसाधनमात्रम्। एवमेव घ्राणेन्द्रियकरणकसंवेदनाश्रयः, वागिन्द्रियकरणकक्रियाश्रयः श्रोत्रेन्द्रियकरणकज्ञानाश्रयः मन आयत्तज्ञानाश्रयश्च यो वर्तते देहाधिष्ठाता, स एवाऽऽत्मा। घ्राण-वाक्-श्रवण-मनांसि तदीयज्ञानकरणभूतानि। तेषु च मनः सकलेन्द्रियजन्यज्ञानविषयमननसाधनत्वात् उत्कर्षवत्तया दिव्यं चक्षुरित्युच्यते। अतः शरीरेन्द्रियविलक्षणोऽयमात्मा।

28. I 'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु अनुत्तमेषूत्तमेषु लोकेषु, इदं वाव तत् यदिदमस्मिन्नन्तः पुरुषे ज्योतिः' (छां. उ. 3-13-7) 104

II 'अथ……..दीप्यते' 317, 349

III 'अथ……..ज्योतिः' 106

अप्राकृतस्थानविशेषस्य परमव्योम्न उपरिष्टात् समष्टि-व्यष्टिबहिर्भूतेषु सर्वापेक्षयोत्कृष्टेषु श्लाघ्यतमेषु स्थानविशेषेषु सर्वतेजोऽवभासकं 'परं ज्योतिः'-शब्दितं परं ब्रह्म स्वयं प्रकाशमानं वर्तते, तत्तादात्म्यदृष्टिः कौक्षेयके वैश्वानरपद-

वाच्ये ज्योतिषि कर्तव्या। कौक्षेयं ज्योतिः सर्वोत्कृष्टपरंज्योतिः-स्वरूपतया उपास्यम् इत्यर्थः।

29. I **'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं, तद्वाव विजिज्ञासितव्यम्'** (छां. उ. 8–1–1) 253

II **'अथ यदिद.........ष्टव्यम्'** 256

अस्माभिरपि दृश्ये, उपास्यस्य ब्रह्मणः आवासस्थानभूते, अत एव 'ब्रह्मपुर'शब्दवाच्ये अस्मित् देहे, किञ्चित् पुण्डरीकाकारमत्यन्तसूक्ष्मं स्थानं वर्तते। तदेव हृदयनामकम्। तस्मिंश्च सूक्ष्मे स्थाने, ततोऽपि सूक्ष्मः कश्चनाकाशो वर्तते। तस्य च 'दहराकाशः' इति नाम। सः आकाश-रूपोऽर्थः, तदन्तर्वर्ति च यत् (तदीयं कल्याणगुणजातं) तदुभयमपि उपासकेन श्रवण-मननाभ्यामवगन्तव्यं, ध्यातव्यमपि।

30. **'अथ यो वेदेदं... दैवं चक्षुः'** (छां. उ. 8–12–5) [प्र 27 द्रष्टव्यम्] 269

31. **'अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा'** (तै. उ. आन. 3–2) 29

अथर्वाङ्गिरोनामकऋषिदृष्टवेदमन्त्रजन्यज्ञानहेतुभूतो मनोव्यापारः अन्तः-करणस्य प्रतिष्ठाहेतुभूतः पुच्छस्थानीयः।

32. I **'अथ ह शौनकं च कापेयम्, अभिप्रतारिणं च काक्षसेनिं परि-विष्यमाणौ, ब्रह्मचारी बिभिक्षे'** (छां. उ. 4–3–5) 306

II **'अथ ह....काक्षसेनिम्'** 307

कपिगोत्रोद्भवः शुनकनाम्नः पुत्रः शौनकः, तथा कक्षसेननाम्नः पुत्रः अभिप्रतारिनामा चेति द्वौ ब्राह्मणौ भोजनार्थम् उपविष्टावास्ताम्। पाचकश्च परिवेषयन् आसीत्। तदा पाचकेन परिविष्यमाणौ तावु-भावुद्दिश्य, भिक्षार्थमागतः कश्चन ब्रह्मचारी पूर्वोक्तसंवर्गोपासक एव 'भिक्षां देहि' इति प्रार्थितवान्।

33. **अथ हैनं गार्हपत्योऽनुशशास'** (छां. उ. 4–11–1) 164

अनन्तरं गार्हपत्यनामा उपकोसलेन प्राप्तोपचारः गुरोरग्निः, पूर्वमुप-

दिष्टायां ब्रह्मविद्यायां प्राप्ताधिकारम् उपकोसलनामानं विद्यापेक्षिणमुद्दिश्य, पूर्वोक्तब्रह्मविद्याया अङ्गभूतां स्व(गार्हपत्याग्नि)सम्बन्धिनीं विद्याम् उपदिदेश ।

34. **'अथाऽत आत्मादेशः'** (छां. उ. 7-25-2) 239

प्रकृतविषयः—उपदिष्टभूमपदार्थविषयः, आत्मत्वोपदेशः—उपासकेनोपास्यः भूमा, उपासकस्याऽपि आत्मत्वेनैवोपास्यः इत्ययमुपदेशः, अतःपरं क्रियते ।

35. **'अथाऽतोऽहङ्कारादेशः'** (छां. उ. 7-25-1) 238

प्रकृतविषयः—उपदिष्टभूमपदवाच्यपरमात्मरूपार्थविषयकः अहंबुद्ध्या उपासनप्रकारः 'भूमा अहमेव' इत्येवंरूपः अतःपरमुपदिश्यते ।

36. **'अथाध्यात्मम्....**

**अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क्, तत्साम, तदुक्थं, तद्यजुः, तद्ब्रह्म, तस्यैतस्य तदेव रूपम्; यदमुष्य रूपम्, यावमुष्य गेष्णौ; यन्नाम तन्नाम'** (छां. उ. 1-7-1, 5) ४७

अनन्तरं देहावयवेषु ऋक्-सामादिदृष्टिः-उपदिश्यते। अक्ष्यन्तःस्थानावस्थिततया योगिभिः साक्षात्क्रियमाणः यः पुरुषोऽस्ति, स एव यज्ञादिकर्मसु विनियुज्यमान ऋङ्मन्त्रात्मकः, तासु प्रकृतिभूतासु ऋक्षु अध्यूह्य गीयमानं यत् साम, तदात्मकः आराध्यदेवतागतस्तुतिवचनात्मकं गानरहितं यद्वचः, शास्त्रपदवाच्यं तदवान्तरभेदरूपम् उक्थमपि स एव, अनुष्ठेययागाद्यर्थप्रतिपादकं यद्यजुरस्ति तदपि स एव। तदेव निरतिशयबृहत् ब्रह्म च। एतादृशस्य पुरुषस्य रूपमपि आदित्यान्तर्वर्तिनः पुरुषस्य रूपमेव हिरण्यश्मश्रुत्वादिकम्, 'उत्'इत्येवं नाम च तदीयनामवदेव, तस्य परमपुरुषस्य गानात्मके ये ऋक्-सामे, ते एव अक्ष्यन्तरवस्थितपुरुषस्याऽपि गानरूपे ।

37. **'अथाऽस्मिन् प्राण एवैकधा भवति'** (कौषी. उ. 4-39) 372, 377

अयं जीवात्मा स्वाप्नेभ्यो दर्शनेभ्यः उपरतिं प्राप्य, यदा सुषुप्तावस्था-

माप्नोति ; तदा स्वदेहसम्बन्धिहृदयस्थानगतप्राणशरीरके परमात्मनि स्वकीयावस्थान्तरदृष्टरागद्वेषाभिमानादिरूपकालुष्यविरहितः सन् , परमात्मगतानन्दरूपताविरोधिधर्मप्रकटताशून्यो भवति ।

38. I 'अदृष्टो द्रष्टा, अश्रुतश्श्रोता' (बृ. उ. 5-7-27) 180, 263

II 'अदृष्टो द्रष्टा' 184

सर्वपदार्थदर्शनसाधनतया लोकप्रसिद्धैः चक्षुश्श्रोत्रादिभिरिन्द्रियैः स्वशरीरतया स्वनियाम्यैरपि पृथिव्यादिभिर्वा अगोचरीकृतः, रूप-शब्दादि-विषयककरणानधीनसाक्षात्कारवांश्च अन्तर्यामिभूतः परमात्मा ।

39. 'अध्यात्मयोगाधिगमेन' (कठ. उ. 2-12) 340

[प्र. सं. 189 द्रष्टव्यः]

40. 'अनुम एतां भगवो देवतां शाधि यां देवतामुपास्से' (छां. उ. 4-2-2) 304

ज्ञानसम्पन्न भो रैक्व ! मद्दत्तानि गवादीनि परिगृह्य, त्वं 'यादृशदेवता-विषयकम् उपासनं करोषि, भवदुपास्यां तां देवतामेव' मह्यं विविच्य ज्ञापय — उदिश ।

41. I 'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि'

(छां. उ. 6-3-2) 19, 120, 281, 320, 367

II 'अनेन........प्रविश्य' 25, 36, 394

III 'अनेन जीवेनाऽऽत्मना' 37

प्रमाणप्रतिपन्नजीवशरीरकेण मया (तेजो-जल-पृथिवीः) अन्तःप्रविष्टाः कृत्वा, देवादिविचित्रसृष्टिं, तन्नामधेयानि च करवाणि मदात्मकेन जीवेनात्मतया अनुप्रविश्य एतत् विचित्रनाम-रूपभाक् करवाणि इति वा ।

42. 'अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा' (तै. आर. 3-11-3)

20, 57, 120, 178, 367, 395

(परब्रह्मभूतः परमात्मा) सृज्यकोटिनिविष्टानां सर्वेषां भूतानामन्तरनुप्रविष्टः सन् , तेषां सर्वेषामात्मभूतः तन्नियन्ता वर्तते ।

43. 'अन्तश्शरीरे निहितो गुहायामज एको नित्यः यस्य पृथिवी शरीरम्, पृथिवीमन्तरे सञ्चरन्, यं पृथिवी न वेद यस्यापश्शरीरम्' (सुबा. उ. 7) 178

सृज्यकोट्यन्तर्गतसर्वप्रजासम्बन्धिशरीरान्तःस्थहृदयगुहासु विधिवदवस्थितः, स्वावस्थानाश्रयभूतदेहाद्युत्पत्तावपि स्वयमनुत्पन्नः स्वसदृशद्वितीयरहितः, देश-काल-वस्तुपरिच्छेदरहितः परमात्मा । यस्य च परमात्मनः पृथिवी आधेयत्व-विधेयत्व-शेषत्ववती, आपश्च तथैव, यश्च पृथिव्यादिभिरज्ञात एव तासु सञ्चरति ।

44. अन्नं ब्रह्मेति व्यजानात्' (तै. उ. भृ. 2–1) 77

जगज्जन्मस्थितिलयकारणत्वरूपब्रह्मलक्षणलक्षितम् 'अन्नमेव' इति वरुणपुत्रो भृगुः, मननेन ज्ञातवान् ।

45. 'अन्नाद्वै प्रजाः प्रजायन्ते' (तै. उ. आन. 2–1) 30, 35

विविधविचित्ररूपेण सृज्यमानं चेतनाचेतनजातम्, अन्नाधीनोत्पत्तिमदेव खलु ।

46. 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् ।
अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ॥' (कठ. उ. 2–14) 341

पुण्य-पापाद्यात्मकप्रसिद्धसाधनविलक्षणम् उपासनात्मकमुपायम्, कालत्रयापरिच्छिन्नम् उपेयोपेत्रात्मकम् उपास्योपासकस्वरूपं च यत् त्वम् 'इदमित्थम्' इति अवधृतवानसि, तत् मह्यमुपदिश ।

47. 'अन्योऽन्तर आत्माऽऽनन्दमयः' (तै. उ. आन. 5–2) 27, 29

पूर्वोक्तात् विज्ञानमयशब्दितात् (ज्ञानस्वरूपात् ज्ञानधर्मकाच्च) जीवात् विलक्षणः अन्नमयमारभ्य, विज्ञानमयान्तस्य चेतनाचेतनवर्गस्य धारको नियन्ता शेषी च सन्, आत्मशब्दवाच्यो भवति, आनन्दमयः परमात्मा ।

48. 'अन्योऽन्तर आत्मा विज्ञानमयः' (तै. उ. आन. 4–1) 35

'विज्ञानमय'शब्दवाच्यो जीवः पूर्वप्रस्तुतात् मनोमयाद्विलक्षणः एतदन्तस्य सर्वस्य धारको नियन्ता शेषी च सन् आत्मपदवाच्यः ।

जन्तुभिरद्यमानं यदन्नमस्ति उदरे प्रविष्टं, तस्यान्नस्य पचनं क्रियते येनाऽग्निना जठरस्थेन, सः जाठरोऽग्निः 'वैश्वानरः' इत्युच्यते । कर्णयोः हस्ताभ्यां दृढमपिधानपूर्वकं श्रवणे क्रियमाणे, वैश्वानराग्निना क्रियमाणस्य अन्नपचनस्य घोषः—ध्वनिविशेषः, श्रूयतेऽस्माभिः । यदा तु जीवः अस्माद्देहात् शीघ्रमेव उत्क्रमणप्रवृत्तः स्यात्; तदा पचनघोषः न श्रूयते ।

57. **'अयं सो अग्निरिति विश्वामित्रस्य सूक्तं भवति'** (तै. सं. 5–2–3) 289

'अयꣳसो अग्निः' इत्येतत् सूक्तं विश्वामित्रसम्बन्धि वर्तते ।

58. **'अरा इव रथनाभौ संहता यत्र नाड्यः स एषोऽन्तश्चरते बहुधा जायमानः'** (मुण्ड. उ. 2–2–6) 216

यथा रथचक्रसम्बन्धिनः अरसंज्ञकाः दण्डविशेषाः, रथचक्रस्य नाभिसंज्ञके अक्षस्थाने एकत्र सम्बद्धाः सन्तः, स्वधारणाय च समर्था भवन्ति; तथा अस्मिन् देहे विद्यमानाः सर्वा नाड्योऽपि देहमध्यवर्तिनि अक्षस्थानीये हृदयाख्ये यस्मिन् स्थानविशेषे एकधाभावेन सङ्गमं प्राप्ताः सत्यः, स्वधारणाय देहधारणाय च समर्थतां प्राप्नुवन्ति; तस्मिन् हृदयाख्ये स्थाने, विविधविचित्रदेहभाजां चतुर्विधानां चेतनानामपि अन्तर्यामित्वौपयिकं रूपं बिभ्रन् अवस्थितो भवति परमात्मा ।

59. I **'अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति'** (तै. सं. 6–1–6) 48, 51

II **'अरुणयैकहायन्या'** 49

आरुण्यरूपवर्णाश्रिता एकवत्सरात्मककालपरिच्छिन्ना पिङ्गलवर्णवदक्ष्यात्मकावयववती या गौः; तया साधनीभूतया सोमलताकर्मकं क्रयं (द्रव्यविनिमयं) सम्पादयेत् ।

60. **'अरुन्मुखान्····प्रायच्छत्'** (कौषी. उ. 3–10) [प्र. सं. 271 द्रष्टव्यम्] 122

61. **'अर्थेभ्यश्च परं मनः'** (कठ. उ. 3–10) [प्र. 115 द्रष्टव्यम्] 333

62. **'अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः'** (बृ. उ. 4–2–3) 348

शिरोरूपः यज्ञसाधनीभूतः चमसाख्यः पात्रविशेषः, इतरपात्रापेक्षया

विलक्षणः ; यतः सर्वं पात्रम् ऊर्ध्वबिल(द्वार)म् अधो बुध्नमूलभागं यथा घटादि । इदं तु अधो बिलम् , ऊर्ध्वबुध्नं च वर्तते इति ।

63. I **'अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते'** (सुबा. उ. 2) 414

II **'अव्यक्तमक्षरे लीयते'** [प्र. सं. 1 द्रष्टव्यम्] 243

64. I **'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् ।**
**अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते ॥'**
(कठ. उ. 3–15) 338

II **'अशब्दमस्पर्शम्'** 140, 342

विकारात्मकभूतगुणतया प्रसिद्धैः शब्दस्पर्शरूपरसगन्धैः नित्यं विदूरम् , उपचयापचयरहितम् , उत्पादविनाशशून्यं, स्वरूपस्वभावाभ्यां स्थिरम् , देहेन्द्रियादिभ्योऽतिशयितत्वेन महच्छब्दवाच्यात् जीवादप्यतिशयितं परमात्मानं दर्शनसमानाकारेण ध्यानेन प्रत्यक्षीकृत्य, भीषणात् संसारादुत्तीर्णो भवति ।

65. **'अष्टौ प्रकृतयः षोडश विकाराः'** (गर्भोप. 3) 345

प्रकृतिशब्दवाच्याः मूलप्रकृति-महदहङ्कार-शब्दतन्मात्र-स्पर्शतन्मात्र-रूपतन्मात्र-रसतन्मात्र-गन्धतन्मात्राख्याः, आहत्य अष्टसङ्ख्याकाः। विकार-शब्दवाच्याः, मनः-श्रोत्र-त्वक्-चक्षुः-रसना-घ्राणानि, वाक्-पाणि-पाद-पायूपस्थाख्यानि चेति एकादश, पृथिव्यप्तेजोवाय्वाकाशाख्यानि पञ्च-भूतानि चेति आहत्य षोडशसङ्ख्याकाः ।

66. **'अश्व इव रोमाणि विधूय पापं, चन्द्र इव राहोर्मुखात् प्रमुच्य ।**
**धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानि ॥'**
(छां. उ. 8–13–1) 319

अश्वाख्यः प्राणी, यथा स्वीयानि लोमानि स्वशरीरकम्पनेन प्रमुञ्चति, यथा च चन्द्रः राहोर्मुखात् विमुक्तः सन् शुद्धो भवति ; तथा उपासकः अहमपि शरीरसम्बन्धाज्जातानि सर्वाणि पापान्यपि मत्तो दूरीकृत्य, परिपूर्णब्रह्मानुभवतिरोधायकं च शरीरसम्बन्धं विहाय, शुद्धात्मभूतः कृत-

कृत्यतां प्राप्तः सन्, भावविकारैर्जन्मादिभिर्वर्जितं लोक्यमानं ब्रह्मस्वरूपं सम्पन्नो भवामि ।

67. **'अश्वपतिर्वै भगवन्तोऽयं केकयः सम्प्रतीममात्मानं वैश्वानरमध्येति तं हन्ताऽभ्यागच्छामः'** (छां. उ. 5–11–4) [प्र. सं. 258 द्रष्टव्यः] 198

68. I **'असदेवेदमग्र आसीत् तत्सदासीत् तत्समभवत्'** (छां. उ. 3–19–1) 363

II **'असदेवेदमग्र आसीत्'** 366

सृष्ट्यनन्तरकाले विभक्तनामरूपं सत् विविधविचित्ररूपं यत् जगत् परिदृश्यते, तत् सृष्टेः प्राक्काले अनिष्पन्ननामरूपविभागमेव ईषन्मात्रं नामरूपकार्याभिमुखम्, अङ्कुराभिमुखं बीजमिव सत्पदवाच्यमासीत् । अविभक्ततमःशब्दवाच्यमासीत् । अनन्तरं च अल्पतरनामरूपव्याकरणेन अङ्कुरीभूतं बीजमिव क्रमेण महदादिस्थूलरूपमापन्नं जातम् ।

69. **'असद्वा इदमग्र आसीत्'** (तै. उ. आन. 7–1) 363, 365, 366

परिदृश्यमाननानानामरूपविभागास्पदस्थूलचेतनाचेतनशरीरकं ब्रह्म, सृष्टेः पूर्वमनभिव्यक्तनामरूपसूक्ष्मचेतनाचेतनशरीरकं ब्रह्म आसीत् ।

70. I **'असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुः'** (तै. उ. आन. 6–1) 29

II **'असन्नेव'** 30

यः ब्रह्मविषयकज्ञानवान् न भवति, सः अलब्धात्मस्वरूपो भवति । यदि यःकश्चन नरः निष्पन्नोपासनो भवति, लब्धात्मस्वरूपमेनं ब्रह्मविदः 'सत्'पदाभिधेयं जानन्ति ।

71. **'असौ वा आदित्यो देवमधु'** (छां. उ. 3–1–1) 295, 297, 352

परिदृश्यमानः आदित्यः, आदित्यशरीरकः परमात्मा वा वस्वाद्यात्मकानां देवानां मधुवदत्यन्तं भोग्यतमः । देवभोग्यत्वाच्चादित्यस्य, आदित्ये मधुदृष्टिः कार्या ।

72. **'असौ वै लोकोऽग्निः'** (बृ. उ. 8–2–9) 201

अप्सु पुरुषवाङ्निष्पत्तिहेतुभूतानाम् आहुतीनां पञ्चानां मध्ये प्रथमा या श्रद्धासंज्ञकापूकर्मिका आहुतिः, तस्या आधारभूतोऽग्निः द्युलोकात्मकः ।

73. **'अस्ति भगवो नाम्नो भूयः'** (छां. उ. 7-1-5) 226

हे भगवन्! 'यो नाम ब्रह्मेत्युपास्ते' इति, नाम्नि बृहत्त्वगुणयोगः, तेन उपास्यत्वं चोक्तं खलु! किं नामैव सर्वापेक्षया निरतिशयबृहत्? उत नामापेक्षयाऽपि अतिशयेन बृहत्तरं किञ्चिदस्ति? यदि स्यादधिकं तर्हि तदेवोपासितुमुचितम्-इति सनत्कुमारे नारदस्य प्रश्नः।

74. **'अस्ति भगवो वाचो भूयः'** (छां. उ. 7-2-2) 226

हे भगवन्! 'यो वाचं ब्रह्मेत्युपास्ते' इति, वाचः विपुलतरत्वं, तेन ब्रह्मदृष्ट्या उपास्यत्वं चोक्तं खलु! किं वागेव सर्वातिशायितया भूयसी? अथ वागपेक्षयाऽपि विपुलतरं ततश्च ब्रह्मदृष्ट्या उपास्यं किञ्चिदस्ति? इति सनत्कुमारे नारदस्य प्रश्नः।

75. **'अस्थूलमनण्वह्रस्वम्'** (बृ. उ. 5-8-7) 83

हे गार्गि! त्वया पृष्टम् अक्षरं ब्रह्मोद्दिश्य वदन्ति ब्राह्मणाः 'स्थूलभिन्नम् अणुभिन्नं ह्रस्वभिन्नं च ब्रह्म' इति।

76. **'अस्माच्छरीरात्समुत्थाय'** (छां. उ. 8-3-4) [प्र. सं. 25 द्रष्टव्यम्] 395

77. I **'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः'** (श्वे. उ. 4-5) 350, 417

II **'अस्मान्........मेतत्'** 351, 401, 407

मायाशब्दितात् त्रिगुणात्मकप्रकृतिरूपात् अस्मात्साधनात्, मायाप्रेरकः तदधिष्ठाता परमात्मा, इदं चराचरात्मकं जगत् उत्पादयति। तदाश्रितया मायया, मायिनोऽन्यो जीवः मोहमापन्नो भवति। तेन विरुद्धज्ञानः सम्पन्नः सङ्कुचितस्वाभाविकगुणो भवति।

78. **'अस्मिन् कामाः समाहिताः'** (छां. उ 8-1-5) 259

निर्विकारे अत एव सत्यशब्दवाच्ये, ब्रह्मपुरे दहराकाशशब्दवाच्ये, ब्रह्माख्ये पुरे वक्ष्यमाणाः सर्वे कामाः ध्येयतया ईप्सिताः अपहतपाप्मत्वादयः सम्यक् निरुपाधिकतया निरतिशयतया च एकत्र अवस्थिताः।

79. **'अस्मिन् प्राणे'** (कौषी. उ. 4-39) [प्र. सं. 37 द्रष्टव्यम्] 373

80. 'अस्य लोकस्य का गतिरिति। आकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते। आकाशं प्रत्यस्तं यन्ति। आकाशो ह्येवैभ्यो ज्यायान् आकाशः परायणम्' (छां. उ. 1-9-1) 93

पृथिवीलोकस्यास्य उत्पत्तिप्रलययोराधारतया 'गति'शब्दवाच्योऽर्थः कः? इति शिलकप्रश्ने जाते, राजा प्रत्युवाच—आकाश एव पृथिव्याख्यलोकस्य गतिः, यतः सर्वत्र ज्ञानिनां प्रकाशमानतया 'आकाश'शब्दवाच्यात्परमात्मन एव पृथिवीगतानां सर्वेषां भूतानामुत्पत्तिः, पुनश्च तस्मिन्नाकाशे एव लयः। अतः आकाश एव सर्वापेक्षया निरतिशयनिरुपाधिकोत्कर्षवान् परमप्राप्यवस्तु च— इति।

81. 'अहं तु ते तद्वक्ष्यामि—यथा पुष्करपलाश आपो न श्लिष्यन्ते। एवमेवंविदि पापं कर्म न श्लिष्यते' (छां. उ. 4-14-3) 167

अहमेव तव पद्मपत्रजलाश्लेषतुल्यसर्वपापाश्लेषापादकविद्याविषयभूतं ब्रह्म वक्ष्यामि यदि शुश्रूषसे।

82. I 'अहमेवाधस्तादहमुपरिष्टात्........अहमेवेदं सर्वम्' (छां. उ. 7-25-1) 228

II 'अहमेवाधस्तात्' 238

अपरिच्छिन्नतया अधऊर्ध्वादिस्थानेषु अवस्थितं भूमपदवाच्यं परमात्मानम् अहङ्ग्रहेण 'अहमेव अधोभागेऽस्मि, अहमेव च ऊर्ध्वभागेऽस्मि' इत्यादिरूपेण उपासिता।

83. 'अहरहर्गच्छन्त्यः' (छां. उ. 8-3-2) [प्र. सं. 220 द्रष्टव्यम्] 263

84. 'अह हारे त्वा शूद्र! तवैव सह गोभिरस्तु' (छां. उ. 4-2-3) 304

ब्रह्मज्ञानाभावकृतेन शोकेन ज्ञानार्थं मत्समीपमागत! हे राजन्! विषादकरम् आश्चर्यावहं वा एतत्। यत्, अन्तेवासित्वमस्वीकृतवता त्वया ज्ञानपिपासाशमनाय गावः हारसहितः अश्वतरीरथश्चानीतः। आनीतोऽयम् अत्यल्पोऽर्थः तत् स सर्वोऽपि तवैव भोग्यतापादको भवतु। मम एतत्साध्यं किमपि नास्त्येव।

85. I 'आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा' (छां. उ. 8-14-1) 318

II 'अकाशो........निर्वहिता' 97, 320

यः सर्वत्र निरुपाधिकस्वप्रकाशः आकाशपदवाच्यः परमात्मा, सः सृष्टस्य चराचरात्मकस्य सर्वस्य विश्वस्य स्वसङ्कल्पानुगुणनाम-रूपसम्पादकः। परं ब्रह्म च तत् नाम-रूपाभ्यां सृज्यपदार्थगोचराभ्याम् अस्पृष्टं मध्यस्थ इव पक्षविशेषासंस्पृष्टः। यद्वा नामरूपे यद्विना सर्वत्र व्याप्ते; तत् नामरूपविदूरं वस्त्वेव च ब्रह्म।

86. 'आचार्यस्तु ते गतिं वक्ता' (छां. उ. 4-14-1) 164, 166, 167

हे उपकोसल! तवोपदिष्टायाः विद्यायाः फलं वेद्यं ब्रह्मस्वरूपं, तत्प्राप्तिमार्गं च आचार्य एव तव उपदेक्ष्यति।

87. 'आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्' (छां. उ. 4-9-3) 167

अधिगतब्रह्मस्वरूपात्, तथा तस्य अन्यस्मै प्रदानसामर्थ्यवतश्च आचार्यनामकात्, उपसदनादितः सम्पादिता ब्रह्मविद्यैव साधुतमत्वं भगवत्प्राप्त्युपायरूपत्वं प्राप्नोतीति।

88. 'आजहारेमाश्शूद्रानेनैव मुखेनालापयिष्यथाः' (छां. उ 4-2-5) 301, 304

ज्ञानाभावकृतया शुचा मत्संनिधिमागत! हे राजन्! रथ-तुरग-कन्या-दासी-दासादिकं ज्ञानार्थं मह्यमर्पयितुमानीतवानसि। आहृतेन अनेन वस्तुजातेन द्वारभूतेन मां ज्ञानोपदेशकं कर्तुं प्रवृत्तोऽसि।

89. 'आत्मतः प्राणः' (छां. उ. 7-26-1) [प्र. सं. 253 द्रष्टव्यम्] 232, 238

90. I 'आत्मन आकाशः सम्भूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी' (तै. उ. आन. 1-2) 18

II 'अत्मनः........सम्भूतः' [प्र. सं. 243 द्रष्टव्यम्] 96, 99

91. I 'आत्मनस्तु कामाय सर्वं प्रियं भवति' (बृ. उ. 4-4-5, 6-5-6) 388

II 'आत्मनस्तु कामाय' 387, 389, 390

लोके हि सर्वश्चेतनः, पति-पुत्र-जाया-वित्त-ब्रह्म-क्षत्र-लोक-देव-भूतादिषु अन्यतमं स्वस्य प्रियतया आश्रित्यैव जीवति खलु ! तत्र प्रियतया भाव्यमानं सर्वमपि न स्वभावत एव प्रियं भवति ; अपि तु परमात्मनः कामाय–कामं, सङ्कल्पं सफलीकर्तुमेव प्रियं भवति। न स्वसङ्कल्पं सफलीकर्तुम्। तद्विषये विफलतायाः आनुभविकत्वात्।

92. 'आत्मनि खल्वरे दृष्टे' (बृ. उ. 6-5-6) 395

अयि मैत्रेयि ! निरुपाधिकात्मपदवाच्ये परमात्मनि (श्रवण-मननाभ्यां) दर्शनसमानाकारध्यानविषयीकृते सत्येव खलु (तन्निमित्तोपादानकतया तदनन्यतावत् सर्वं जगत्, विदितप्रायं भवति)।

93. 'आत्मनो वा अरे दर्शनेन' (बृ. उ. 4-4-5) 386

अयि मैत्रेयि ! परमात्मभूतस्य परस्य ब्रह्मणः श्रवण-मनन-निदिध्यासनैः दर्शनसमानाकारतां प्राप्तैः, परब्रह्मनिमित्तोपादानकतया परब्रह्मणोऽनन्यत् सर्वं जगत् विदितप्रायं भवति।

94. I 'आत्मानं रथिनं विद्धि शरीरं रथमेव च।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्॥' (कठ. उ. 3-3, 4) 330

II 'आत्मानं....रथमेव च' 155

III 'आत्मानं रथिनं विद्धि' 332, 342, 353

शरीराधिष्ठातारं जीवं रथस्वामित्वेन, अधिष्ठानभूतं च देहं रथत्वेन, बुद्धिपदाभिधेयम् अध्यवसायं तु दैहिकप्रवृत्तिहेतुत्वात् सारथित्वेन, इन्द्रियनियमनहेतुभूतमन्तःकरणं च रशनात्वेन, कर्मज्ञानेन्द्रियाणि च शरीरवाहकत्वात् हयत्वेन, ऐन्द्रियकांश्च विषयान् शब्दादीन् तत्प्राप्यत्वेन च जानीयात्।

95. 'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि'
(छां. उ. 5-11-6) 195, 202

भो राजन् केकय ! त्वम् अद्य अस्माभिर्जिज्ञासितं सर्वचेतननियन्तारम्, अत एव वैश्वानरपदवाच्यं परमात्मानम् उपासीनो वर्तसे। अतः त्वदुपास्यं परमात्मानमेव, तदर्थिनामस्माकमपि उपदिश !

96. 'आत्मा वा अरे द्रष्टव्यः' (बृ. उ. 6–5–6)
[प्र. सं. 295 द्रष्टव्यम्] 383, 387, 390, 395

97. I 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषत्। स ईक्षत लोकान्नु सृजा इति। स इमाँल्लोकानसृजत' (ऐत. उ. 1–1) 18

II 'आत्मा....आसीत्' 87, 92, 95, 99, 391

सृष्टेः पूर्वम्, इदं जगत् परमात्मना सह अविभक्ततमोऽवस्थमेवासीत्। परमात्मनो व्यतिरिक्तं किमपि सव्यापारं नैवाऽभवत्। सर्वं चेतनजातं करणकलेबरादिरहितमभवत्। तादृशः परमात्मा द्युप्रभृतीन् लोकान् सृजेयं समकल्पयत्। ततश्च द्यु-अन्तरिक्ष-पृथिव्यात्मकान् लोकांश्च असृजत्।

98. 'आत्मेत्येवोपासीत' (बृ. उ. 3–4–7) 367

स्वोपास्यं परमात्मानं नामरूपात्मकचिदचिदपृथक्सिद्धत्वेनैव उपासीत।

99. 'आमैवेदं सर्वम्' (छां. उ. 7–25–2) 225, 239

प्राक्-प्रत्यक्-ऊर्ध्व-अधःप्रभृतिसर्वदेशवर्तिनामप्यात्मतया उपदिष्टः भूमरूपः आत्मा तदुपासकस्य चेतनस्याऽपि आत्मभूत एव।

100. 'आनन्दं ब्रह्मणो विद्वान्' (तै. उ. आन. 9–1) 73, 77

आनन्दमयस्य परमात्मनः आनन्दम्, श्रवण-मननाद्यनुगृहीतेन अकलुषेण मनसा विद्वान्—जानन्, (अनादिजन्मसञ्चितेभ्यः पाप्मभ्यः, कदापि न भीतो भवति)।

101. 'आनन्दमयमात्मानमुपसङ्क्रम्य' (तै. उ. भृ. 10–5) 77

निरुपाधिकनिरतिशयानन्दरूपं परमात्मानम् अत्यन्तभोग्यभूतं, स्वयं भोक्तृभूतः सन् अनुभूय (अकर्मवश्यः सर्वलोक-सर्वकाम-सर्वरूपेषु अप्रतिहतस्वामित्ववान् भवति)।

102. 'आनन्दमयमात्मानमुपसङ्क्रामति' (तै. उ. 8-6) 77

(उपासकः निष्पन्नोपासनः सन्, अस्माद्देहात् अर्चिरादिना मार्गेण गत्वा) भोग्यभूतं निरतिशयानन्दं परमात्मानं स्वयं भोक्ता सन् अनुभवति।

103. 'आनन्दोऽजरोऽमृतः' (कौषी. उ. 3-62) [प्र. सं. 218 द्रष्टव्यः] 116, 117

104. I 'आनन्दो ब्रह्मेति व्यजानात्। आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' (तै. उ भृ. 6-1) 136

II 'आनन्दो ब्रह्म' 77, 122, 410

वारुणिर्भृगुः तपसा साधनभूतेन आनन्दपदवाच्यः परमात्मा, उक्त-ब्रह्मलक्षणसम्पन्नः इति ज्ञातवान्। यतः परिदृश्यमानानि चराचरात्मकानि सर्वाणि भूतानि, आनन्दपदवाच्यात् अर्थादेव खलु जायन्ते; अतः आनन्दः परमात्मा इति।

105. 'आविस्सन्निहितम्' (मुण्ड. उ. 2-2-1) 193

(शरीरिणां सर्वचेतनानां) हृदयगुहान्तर्वर्तितया अत्यन्तमासन्नतमं (योगिनां पुरुषाणां करतलामलकवत्) अपरोक्षस्फुटप्रतिपन्नं च (सर्वाधिकं सर्वप्राप्यं परं ब्रह्म)।

106. 'इति यस्य स्यादद्धा न विचिकित्साऽस्ति' (छां. उ. 3-14-4) 147

अस्माद्देहादुत्क्रम्य अर्चिरादिना मार्गेण गत्वा मनोमयत्वादिगुणकमेतं परमात्मानम् असंशयं प्राप्स्याम्येव इति यस्योपासकस्य दृढोऽध्यवसायो वर्तते, तस्य उपास्यब्रह्मप्राप्तिविषये ईषन्मात्रमपि संशयावकाशो नैवाऽस्ति।

107. 'इदं तच्छिरः एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' (बृ. उ. 4-2-3) 348

'अर्वाग्बिलश्चमसः' इति मन्त्रखण्डेन यदुक्तम्, कण्ठादुपरिभागात्मकं शिर एव; उक्तः मुखरूपः भक्षणसाधनतया चमसपदवाच्यः। अधो विद्यमानेन आस्यात्मकेन बिलेन, अर्वाग्बिलः; ऊर्ध्वस्थूलमूलभागरूप-बुध्नाकारत्वात्, ऊर्ध्वबुध्नः। लोके हि प्रसिद्धश्चमसः—ऊर्ध्वबिलः तिर्यग्बुध्नः; अयं तु कण्ठोर्ध्वभागः, उक्तगुणः विलक्षणश्चमसः।

108. 'इदं पुच्छं प्रतिष्ठा' (तै. उ. आन. 1–3) 29
देहरूपस्यान्नमयपुरुषस्य मूर्धाद्यवयववतः, नाभेरधस्तात् परिदृश्यमानमिदं चरणद्वयं पुच्छवत् आधारत्वात् प्रतिष्ठाहेतुभूतत्वात् पुच्छपदवाच्यम्।

109. 'इदं ब्रह्मेदं क्षत्रम्' (बृ. उ. 4–4–6, 6–5–7) 386
'अयमात्मा' इति यत् उक्तं ब्रह्म, तदेव ब्रह्म-क्षत्र-लोक-देवादिसर्वरूपं सर्वशब्दवाच्यम्।

110. 'इदं सर्वं यदयमात्मा' (बृ. उ. 4–1–6, 6–5–7) 384, 386
'अयमात्मा' इति यदुक्तं ब्रह्म, तदेव सर्वशरीरकं सर्वशब्दवाच्यम्।

111. I 'इदं सर्वमसृजत। यदिदं किञ्च। तत्सृष्ट्वा। तदेवानुप्राविशतत्। तदनुप्रविश्य। सच्च त्यच्चाऽभवत्' (तै. उ. आन. 6–2) 56, 366
II 'इदं........किञ्च' [प्र. सं. 601 द्रष्टव्यः] 75

112. 'इन्द्रश्शचीपतिः। बलेन पीडितः। दुश्च्यवनो वृषा। समित्सुसासहिः' (?) 109
शचीनाम्न्याः देव्याः पतिः, देवाधिराज इन्द्रः। बलनाम्ना असुरेण पीडां प्राप्तः, अथाऽपि पदात् च्यावयितुमसाध्यः धीर एवाऽभवत्; यतः सः युद्धभूमिषु अन्यैः धर्षयितुमशक्यः अन्यान् भृशं सहते वा।

113. 'इन्द्र आगच्छ हरिव आगच्छ' (तै. आर. 1–12–8) 285
परमैश्वर्यपूर्ण! प्रशस्तेन उच्चैःश्रवोनाम्ना हरिणा—अश्वेन सहित देवाधिराज! अस्माकं यज्ञे हविर्भागस्वीकरणार्थम् आयाहि।

114. 'इन्द्रियाणि........गोचरान्' (कठ. उ. 3–4) [प्र. सं. 94 द्रष्टव्यम्] 330

115. I 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः॥' (कठ. उ. 3–10, 11) 328
II 'इन्द्रियेभ्यः परा ह्यर्थाः' 332

III 'इन्द्रियेभ्यः पराः' 330

आत्माख्यस्य रथिनो रथभूतं यत् शरीरं, पुरोनयनसाधनीभूतानि इन्द्रियाणि, मुमुक्षोः विषयेभ्यः प्रत्याहरणकार्ये सम्पादनीये यानि वशीकार्यतयोक्तानि, तदपेक्षया तद्गोचराः शब्दादयोऽर्थाः अतिशयेन वशीकार्याः, स्वस्य असन्निहिततया स्थापनीयाः। तदपेक्षयाप्यतिशयेन वशीकार्यं भवति मनः—विषयग्राहि कार्यं भवति। तदपेक्षया च अध्यवसायात्मिका बुद्धिर्वशीकार्यत्वे अतिशयितासदध्यवसायः सम्पादनीयः। तदपेक्षयाप्यतिशायितवशीकार्यत्ववान् भवति चेतनः—सत्सङ्कल्पवान् कार्यः। सङ्कल्पानुसारित्वादध्यवसायस्य। तस्मादात्मनोऽप्यतिशायितवशीकार्यतावान् देहः—नियमेन विहितनिषिद्धगोचरप्रवृत्तिनिवृत्तिमान् कार्यः; अन्यथा उच्छृङ्खलतापातात्। तदपेक्षया चातिशयेन वशीकार्यः निरुपाधिकपुरुषपदवाच्यः परमपुरुषः—स्वीयभगवदुपासननिर्वर्तनसङ्कल्पवान् कार्यः; तत्सङ्कल्पाधीनत्वात् सर्वप्रवृत्तिनिवृत्तीनाम्। परमपुरुषस्य तच्छरणागत्या वशीकरणे कृते सति, अन्यत्किमपि परं वशीकार्यं जगति नैव अवशिष्यते। स एव पुरुषोत्तमः चरमा परमा च गतिः।

116. **'इमास्तिस्रो देवताः'** (छां. उ. 6–3–2) [प्र. सं. 609 द्रष्टव्यम्] 352

117. **'ईशानो भूतभव्यस्य'** (कठ. उ. 4–12) [प्र. सं. 9 द्रष्टव्यम्] 278

118. **'उत तमादेशमप्राक्ष्यः येनाऽश्रुतं श्रुतं भवति'** (छां. उ. 6–1–3) [प्र. सं. 606 द्रष्टव्यम्] 403

119. **'उद्दालको ह वै भगवन्तोऽयमारुणिस्सम्प्रतीममात्मानं वैश्वानरमध्येति तं हन्ताऽभ्यागच्छामः'** (छां. उ. 5–11–2) 198

भोः! ज्ञानार्थं कृतान्वेषणयत्नाः प्राचीनशालादयः! अरुणसुतः उद्दालकनामा अस्माकं ज्ञातपूर्वः, अधुना अस्माभिः सर्वैर्जिज्ञासितमेव वैश्वानराख्यमात्मानम् उपासीनो वर्तते। वयं सर्वेऽपि तमेवाभिमुखीकृत्य जिज्ञासापूरणार्थं गच्छामः। 'उपासिता लब्धः' इत्येतत् हर्षनिदानम्।

120. 'उप त्वा नेष्ये' (छां. उ. 4–4–5) 308

हे जाबाल ! सत्यकाम ! त्वां उपनेष्ये—वेदाध्ययनाद्यौपयिकम् उपनयनसंस्कारेण संस्कृतत्वं भवतः सम्पादयामि ।

121. 'उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते, उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि' (छां. उ. 8–1–3) 258

अस्मिन् दहराकाशपदवाच्ये परमात्मनि—द्यौः, पृथिवी, अग्निः, वायुः, आदित्यः, विद्युतः, नक्षत्राणीतीमानि सर्वाणि अन्तर्भागे एव केषामपि यथा न ज्ञायेत, तथा सम्यक् आहितानि वर्तन्ते ।

122. 'उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यः' (छां. उ. 5–18–2) 212

तस्यैतस्य वैश्वानरसंज्ञकस्यात्मनः प्राणाहुत्याधारस्य उपासकदेहसम्बन्धी उरः प्रदेश एव यज्ञीया वेदिः । उपासकदेहस्थानि सर्वाणि रोमाणि यज्ञीयानि बर्हींशि । हृदयकमलावच्छिन्नजाठराग्निः गार्हपत्याग्निस्थानीयः ।

123. I 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये ।
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥'

(कठ. उ. 3–1) 152

II 'ऋतं पिबन्तौ' 154, 342

'सत्यवत् अवश्यंभावि कर्मफलमनुभवन्तौ, सुकृतसाध्ये मानवदेहात्मके अस्मिन्नेव लोके वर्तमानौ, तत्राऽपि हृदयकुहरं प्रविष्टौ, तत्राऽपि अत्युत्कृष्टे हार्दाकाशे वर्तमानौ जीवात्म-परमात्मानौ' इति पञ्चाग्निशुश्रूषा-परिशुद्धान्तःकरणाः त्रिणाचिकेतसंज्ञकानुवाकत्रयतत्त्वार्थवेदिनश्च सन्तो ब्रह्मविदः कथयन्ति ।

124. 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः' (महोप. 1–1) 87

सृष्टेः पूर्वं नारायणपदवाच्यः परमात्मैक एव अवर्तत। किमप्यन्यत् ब्रह्मेशानादिरूपं चेतनाचेतनजातं नैव अविद्यत ।

125. **'एतत्सत्यं ब्रह्मपुरम्'** (छां. उ. 8–1–5) 259

भोग्य-भोगस्थान-भोगोपकरण-भोक्तृवर्गादिशालितया पुरमिव वर्तमानम् एतत् दहराकाशाख्यं परं ब्रह्म सत्यं निर्विकारम्; चेतनाचेतननियामकत्वात्मकसत्यत्ववद्वा ।

126. I **'एतदमृतमेतदभयमेतद्ब्रह्म'** (छां. उ. 4–15–1) 164, 250

II **'एतदमृतम्'** 238

योगिभिः यः अक्ष्यन्तर्वर्ती पुरुषो दृश्यते, अयमेव सर्वनियन्ता, एतदेव निरतिशयभोग्यत्वरूपामृतत्ववत, दुःखासम्भिन्नं, निरतिशयबृहत्त्ववत् ब्रह्म च ।

127. **'एतद्वै सत्यकाम! परं चापरं ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैवायनेनैकतरमन्वेति'** (प्रश्न. उ. 5–2) 251

हे सत्यकाम! ओङ्कारः–प्रणवः इति यदस्ति; तत् (परस्य अपरस्य च उभयस्य ब्रह्मणः वाचकतया; वाच्य-वाचकयोरभेदोपचारात्) परापरोभयात्मकब्रह्माभिन्नम् । तस्मादेव हेतोः उपासिता ओङ्कारात्मकं मार्गमवलम्ब्यैव परापरान्यतररूपं ब्रह्म उपास्ते ।

128. **'एतमितः प्रेत्याभिसम्भवितास्मि'** (छां. उ. 3–14–4) 142, 147

निष्पन्नोपासनश्चेतनः 'प्रारब्धकर्मकृतादस्माद्देहात् उत्क्रम्य, अप्राकृतदेशविशेषविशिष्टं परमात्मानं प्राप्स्याम्येव' इति (निस्संशय आसीत) ।

129. **'एतस्माज्जीवघनात्परात्परम्'** (प्रश्न. उ. 5–5)

[प्र. सं. 387 द्रष्टव्यम्] 249, 250

130. I **'एतस्मादात्मनः प्राणाः....देवेभ्यो लोकाः'** (कौषी. उ. 4–40) 378

II **'एतस्मा....विप्रतिष्ठन्ते'** [प्र. सं. 610 द्रष्टव्यम्] 17

131. **'एतस्य वा अक्षरस्य प्रशासने गार्गि! ददतो मनुष्याः प्रशंसन्ति यजमानं देवा दर्वीं पितरोऽन्वायत्ताः'** (बृ. उ. 5–8–8) 246

हे गार्गि! सर्वचेतनान्तर्यामिभूतं क्षरणरहितत्वेनाक्षरशब्दवाच्यं यत् परं ब्रह्म, तत्प्रशासनरूपया आज्ञया निमित्तभूतया, ये दानादिरूपं कर्म

कुर्वन्ति, दानपरान् तादृशांश्चेतनान् तदीयकर्मणा आकृष्टान्तःकरणा मनुष्याः, ईदृशं भगवत्प्रीतिकरं कर्मानुष्ठितवानयं जनः इति मुक्तकण्ठं श्लाघन्ते। भगवदाज्ञारूपान् श्रुत्यादीननुरुध्य ये चेतनाः यागादीननुतिष्ठन्ति तान् चेतनान्, तत्कृतेन यागादिना आकृष्टस्वान्ताः देवाः अभिनन्दन्ति। भगवदाज्ञामनुसृत्य स्वधाकारवत् पैतृकं कर्म अनुष्ठितवन्तं जनं, तत्कृतस्वधाकारादिना आकृष्टहृदयाः पितरः ससन्तोषं सत्कीर्तिमन्तं कुर्वन्ति।

132. I **'एतस्य वा अक्षरस्य प्रशासने गार्गि! सूर्याचन्द्रमसौ विधृतौ तिष्ठतः, एतस्य वा अक्षरस्य प्रशासने गार्गि! द्यावापृथिव्यौ विधृते तिष्ठतः, एतस्य वा अक्षरस्य प्रशासने गार्गि! निमेषा मुहूर्ता अहोरात्राण्यर्धमासा मासा ऋतवस्संवत्सरा इति विधृतास्तिष्ठन्ति'** (बृ. उ. 5–8–8) 243

II **'एतस्य....तिष्ठतः'** 264, 316

III **'एतस्य....गार्गि'** 403

हे गार्गि! पूर्वोक्तस्य सर्वान्तर्यामिणः परस्य ब्रह्मणः, क्वचिदप्यप्रतिहतया आज्ञया आदित्य-निशाकरौ, द्यावा-पृथिव्यौ, निमेष-मुहूर्त-अहोरात्र-अर्धमासा-मासा-ऋतु-संवत्सरात्मकाः काला अपि च सर्वे, स्वे स्वे स्थाने, स्वे स्वे कर्मणि च अप्रत्ययं प्राप्ताः धृतस्वरूपा अवस्थिता भवन्ति।

133. **'एतावानस्य महिमा। अतो ज्यायांश्च पूरुषः। पादोऽस्य विश्वा भूतानि। त्रिपादस्यामृतं दिवि'** (तै. आर. पु. 3–12–3) 111

समस्तचेतनाऽचेतनकारणत्व-सर्वान्तर्यामित्व-अखिलाधारकत्व-मोक्षप्रदत्वादिकं यद्यदुक्तं तत्सर्वं भगवद्विभूतेरेकदेशमात्रम्। विभूतिमान् भगवांस्तु उक्तात्सर्वस्मात् विभूतिभूतादर्थात्, अत्यन्तं महान्—प्रशस्यतरः, अपरिच्छिन्नस्वरूपस्वभावः। चराचरात्मकानि सर्वाणि भूतानि, अस्य भगवतो महापुरुषस्य पादः—एकदेशमात्रम्। निरतिशयज्ञानानन्द-

वैराग्यैश्वर्यादिभिरनेकैः कल्याणगुणैरुपेतस्य जरा-मरणातिगं यद्दिव्यं रूपं वर्तते ; तत् परमव्योमनिलयम् ।

134. **'एतेषां पुरुषाणां कर्ता'** (कौषी. उ. 4-26) [प्र. सं. 490 द्रष्टव्यः] 371

135. **'एतेन वै चैत्ररथं कापेया अयाजयन्'** (ताण्ड्य. 20-12-5) 307

उक्तेन यागेन, कापेयाः—कपिगोत्रोद्भवा ब्राह्मणाः पुरोहिततामवलम्ब्य चैत्ररथनामानं क्षत्रियं याजितवन्तः ।

136. **'एवमेव खलु सोम्येमास्सर्वाः प्रजाः सति सम्पद्य न विदुः सति सम्पत्स्यामह इति'** (छां. उ. 6-9-2) 262

यथा मधुमक्षिकाभिः मधुत्वेनैकरस्यं नीताः वकुल-कुटजादीनां वृक्षाणां रसाः (मकरन्दवाच्याः) 'अहम् अस्यास्य वृक्षस्य रसोऽस्मि' इति नैव विविच्य जानन्ति, तथैव सर्वा अपि प्रजाः (चेतनरूपा) सुषुप्तिकाले सत्पदाभिधेये प्राज्ञात्मनि (पुनरुत्थित्यविरोधिनं) सम्पत्तिपदवाच्यं लयं 'अहमस्य पुत्रः, अहमेतन्नामा, सति चाहं सम्पन्नः, सति सम्पत्स्ये' इत्यादिकं विशेषं नैव जानन्ति ।

137. **'एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यते'** (छां. उ. 8-12-2) 268

यथा वाय्वादीनि स्वकारणद्रव्यमुपगम्य कार्यावस्थां हित्वा कारणसदृशेन रूपेण विशिष्टानि भवन्ति ; तथैव जीवोऽपि मार्गविशेषेण (अर्चिरादि-मार्गेण) देशविशेषविशिष्टं परं ब्रह्म प्राप्य, संसार्यवस्थाप्रहाणपूर्वकं परमात्मवृत्तिरूपसदृशस्वस्वरूपाविर्भाववान्—प्राक्तिरोहितापहतपाप्मत्वादि-तिरोधानविगमवान् भवति ।

138. I **'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः'** (छां. उ. 8-1-5) 19, 84, 254

II **'एष आत्माऽपहतपाप्मा'** 256, 259

दहराकाशशब्दवाच्यः परमात्मा, अश्लिष्टसुकृतदुष्कृतः, जरामरण-वर्जितः शोक-तद्धेतुकर्मसम्बन्धरहितः बुभुक्षा-पिपासाविदूरः अक्षरपरम-व्योमविशिष्टः, अप्रतिहतसङ्कल्पश्च ।

139. 'एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्म....
एतं संयद्वाम इत्याचक्षते। एतं हि सर्वाणि वामान्यभिसंयन्ति।
एष उ एव वामनीः। एष हि सर्वाणि वामानि नयति।
एष उ एव भामनीः। एष हि सर्वेषु लोकेषु भाति'
(छां. उ. 4–15–1, 2, 3, 4) 162

सत्यकामो जाबालः उपदेशग्रहणे तीव्रमनस्कम् उपकोसलमुद्दिश्य उपदिदेश—हे उपकोसल ! योगिभिः यः पुरुषः अक्षिरूपाधिष्ठानान्तर्वर्तितया साक्षात्क्रियते, सोऽयमेव नियन्तृभूतः सन् आत्मपदवाच्यः। इदमेव वस्तु निरतिशयभोग्यतारूपामृतत्ववत्, दुःखासंभिन्नत्वरूपाभयत्ववत्, निरतिशयबृहत्त्वरूपब्रह्मत्ववच्च। एनं पुरुषं ज्ञानिनः 'संयद्वामः' इति वदन्ति। यतः प्रार्थनीयानि सर्वाणि यस्मिन्नेकस्मिन्नेव समाविष्टानि अतः, स एक एव सर्वकल्याणगुणाश्रयः। यतः स एव स्वाश्रितेषु शोभनधीप्रापकः, अतः सः 'वामनीः' इति भवति। यतः पूर्वोक्तोऽयं सर्वलोकव्याप्तदीप्तिमद्विग्रहयुक्तः, अत एवाऽयं 'भामनीः' इत्युच्यते।

140. 'एष एव साधु कर्म कारयति तं, यमेभ्यो लोकेभ्य उन्निनीषति ;
एष एवासाधु कर्म कारयति तं ; यमधो निनीषति'
(कौषी उ. 3–64, 65) 118

यं चेतनं केवलकर्मफलानुभवयोग्येभ्यो मर्त्यादिलोकेभ्यस्सकाशात् उन्नतं भगवल्लोकं प्रापयितुं सङ्कल्पयति, तम् एष परमात्मैव तदुपायभूतानि साधुकर्माणि कारयति ; यं तु चेतनं प्राप्तेभ्य एभ्यो मर्त्यादिलोकेभ्योऽपि अधस्तनान् आत्मानन्दतिरोधायकान् लोकान् गमयितुमिच्छति, तम् उपासनप्रतिबन्धकानि कर्माणि कर्तुं प्रेरयति।

141. I 'एष त आत्मान्तर्याम्यमृतः' (बृ. उ. 5–7–7) 175
II 'एष त आत्मा' 180

यः सर्वं चेतनाचेतनजातम् अन्तः प्रविश्य प्रवृत्ति-निवृत्तिलक्षणस्य नियमनस्य कर्ता भवति, स एव अन्तर्यामी तव निरुपाधिकामृतत्वशाली आत्मा (परमात्मा)।

142. 'एष तु वा अग्निहोत्री यस्सत्यंवदति' (?) 231

य: अग्निहोत्रप्रधानाङ्गभूतं सत्यवदनं करोति, स एव खलु साङ्गस्य अग्निहोत्रस्यानुष्ठानात् 'अग्निहोत्री' भवितुमर्हति। यस्तु न तथा, स अग्निहोत्र्यपि नैव भवेत्; अविधिना कृतस्य अकृततुल्यत्वात्।

143. I 'एष तु वा अतिवदति यस्सत्येनातिवदति' (छां. उ. 7–16–1) 230, 231, 233

II 'एष तु वा अतिवदति' 228, 230

सततैकरूपतया निर्विकारेण, अत एव 'सत्य'पदवाच्येन परेण ब्रह्मणा उपास्येन निमित्तेन उपलक्षित: योऽतिवदति—स्वोपास्ये वस्तुनि सर्वोत्कृष्टत्ववादी भवति; स एव वस्तुत: अतिवादी, नाऽन्य:।

144. 'एष ब्रह्मलोकः सम्राडिति होवाच' (बृ. उ. 6–3–33, 6–4–23) 262

हे मण्डलेश्वर! जनक! 'आत्मन्येवाऽऽत्मानं पश्येत्' इति द्रष्टव्यतयोक्त: य आत्मा, स एष ब्रह्मलोक:—ब्रह्मैव लोक: इति जनकं प्रति याज्ञवल्क्य: अवदत्।

145. I 'एष म आत्माऽन्तर्हृदय एतद्ब्रह्म' (छां. उ. 3–14–4) 133, 147

II 'एष....हृदये' 143, 145

मनोमयत्वादिगुणविशिष्टं, व्रीह्याद्यपेक्षया अणुतमम्, पृथिव्याद्यपेक्षया ज्यायस्तमं, सर्वकर्मत्व-सर्वकामत्वादिमत्, अवाप्तसमस्तकामतया सर्वमनादृत्य, मौनमाश्रितं च परं ब्रह्म परमकारुण्येन अस्मदुज्जिजीविषया अस्मद्धृदये संनिहितं मदात्मभूतं वर्तते।

146. 'एष म आत्माऽन्तर्हृदये अणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा' (छां. उ. 3–14–3) 146

परब्रह्मभूत: परमात्मा, व्रीहि-यव-सर्षप-श्यामाक-श्यामाकतण्डुलाख्येभ्य: अल्पपरिमाणेभ्योऽपि धान्यकणेभ्य: अल्पतमं परिमाणविशेषमाश्रित्य यदात्मभूत: सन् मदुपासनानुकूल्यं सम्पादयितुं मम हृदयान्त:प्रदेशे संनिहितोऽस्ति।

147. 'एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्याः, ज्यायानन्तरिक्षात्, ज्यायान् दिवः, ज्यायानेभ्यो लोकेभ्यः ।

सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः, सर्वमिदमभ्यात्तोऽवाक्यनादरः' (छां. उ 3–14–3, 4) 146, 147

परब्रह्मभूतः मद्धृदये संनिहितः एष परमात्मा, अस्मद्दृष्टेभ्यः सर्वेभ्योऽर्थेभ्यो महत्तमायाः पृथिव्याः, ततोऽपि महतोऽन्तरिक्षात्, ततोऽपि महतो द्युलोकात्, ततोऽपि महत्तमेभ्यः एभ्यः सर्वेभ्योऽपि लोकेभ्यः अतिशयितमहत्त्ववान्, सर्वस्य जगतः स्रष्टा, परमपरिशुद्धसर्वविधभोग्यभोगोपकरणादिसम्पन्नः, अप्राकृतस्वासाधारणनित्यनिरवद्यनिरतिशयस्वभोग्यभूतसर्वविधगन्धरसादिसमृद्धः, स्वीकृतसर्वकल्याणगुणः, अवाप्तसमस्तकामतया, प्राप्तेषु सर्वेष्वेतेषु अनादरेण मौनं परमं वहन् आसीनः ।

148. 'एष लोकाधिपतिरेष सर्वेशः' (कौषी. उ. 3–66) 118

पूर्वोक्तैश्वर्यसम्पन्नः एष परमात्मैव सर्वेषां लोकानां स्वामी—सृष्टि-स्थिति-लयात्मकलीलारसास्वादयिता, समस्तचेतनाचेतननियन्ता च ।

149. 'एष वः पन्थाः' (मुण्ड. उ. 1–2–1) 191

वेदान्तविहितया रीत्या अनुष्ठितस्योपासनस्य फलतया उद्दिष्टे मोक्षे सम्पिपादयिषिते, ऋषिभिर्दृष्टानि गार्हपत्याद्यग्निसाध्यानि फलाभिसन्धिरहितानि कर्माण्येव ज्ञानाङ्गतया अनुष्ठितानि अपायरहितः युष्माकं शोभनो मार्गः ।

150. 'एष वः पुण्यः सुकृतो ब्रह्मलोकः' (मुण्ड. उ. 1–2–6) 191

(मोक्षसाधनत्वेन विहितानामुपासनानामङ्गतामापन्नानि यानि यथाविधि यथाकालं चानुष्ठितान्यग्निहोत्रादिकर्माणि, तेष्वर्पिताः आहुतयः, कर्मणामनुष्ठातारं यजमानं प्रति, भो यायजूकाः! आगच्छन्तु भवन्तः) युष्माभिरनुष्ठितैः पुण्यैः कर्मभिरार्जितः अयं चतुर्मुखसम्बन्धी लोकः युष्मदीय एव वर्तते इति आह्वयन्ति ।

151. **'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते'** (छां. उ. 8-3-4, 8-12-2)

[प्र. सं. 137 द्रष्टव्यम्] 229, 392

152, **'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः'**

(सुबा. उ. 7) 20, 84, 120

एष परमात्मा सकलचराचराणां हृदिस्थः सन् नियन्ता, अश्लिष्टसुकृत-दुष्कृतः, दिव्ये धामनि विराजमानः, अद्वितीयः नारायणशब्दवाच्यः परमात्मा ।

153. **'एष सर्वेश्वर एष सर्वभूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय'** (बृ. उ. 6-4-22) 264

(उक्तया रीत्या साध्वसाधुकर्मकृतोत्कर्षशून्यः) एषः—परमात्मा, चेतनाचेतनात्मकसर्वजगन्नियन्तृत्ववान् , एष एव च समस्तानां प्राणिनामपि शेषिभूतः, एष एव सर्वेषां भूतानां निरुपाधिक्या कृपया रक्षकः, एष एव अनुल्लङ्घनीयां मर्यादां संस्थाप्य असाङ्कर्यसंरक्षकः सेतुरिव विभक्तनियत-सर्वलोकव्यवहारपालकः, तेन च समस्तलोकधारकः ।

154. **'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।**
**दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥'**

(कठ. उ. 3-12) 333, 338

सर्वेषु भूतेषु आत्मतया वर्तमानः असौ परमात्मा, गुणत्रयमय्या मायया तिरोहितत्वेन, अजितबाह्याभ्यन्तरकरणानां चेतनानां यथावत् न प्रकाशते । ऐकाग्र्ययुक्त्या बाह्याभ्यन्तरव्यापाररहितया सूक्ष्मार्थ-विवेचनशक्तया बुद्ध्या साधनभूतया सूक्ष्मार्थदर्शनशीलैरुपासकैर्योगिभिश्च दृश्यते ।

155. **'एष ह्येवानन्दयाति'** (तै. उ. आन. 7-1) 389, 415

एष आनन्दमयः परमात्मैव खलु, सांसारिकम् आपवर्गिकं च आनन्दं

प्राणिनां दत्त्वा, तान् यथायोग्यम् आनन्दिनः करोति ; आनन्दयिता-नाऽन्यः कश्चनाऽस्ति ।

156. **'एष सोम्य ! तेऽस्मद्विद्याऽऽत्मविद्या च'** (छां. उ. 4–14–1) 165

हे सोमार्ह ! उपकोसल ! प्राणो ब्रह्म, कं ब्रह्म, खं ब्रह्मेति, पृथिव्यग्निरन्नमादित्य इति, आपो दिशो नक्षत्राणि चन्द्रमा इति, प्राण आकाशो द्यौर्विद्युदिति च या तुभ्यमुपदिष्टा विद्या, एषा परमात्मसम्बन्धिनी विद्या, तथा गार्हपत्यान्वाहार्यपचनाहवनीयात्मकाग्निरूपाणामस्माकं सम्बन्धिनी च विद्या (इति जानीहि) ।

157. I **'ऐतदात्म्यमिदं सर्वं, तत्सत्यं स आत्मा'** (छां. उ. 6–8–7) 10, 19

II **'ऐतदात्म्यमिदं सर्वम्'** 42, 56, 120, 404

इदं सत्यम्—प्रमाणप्रतिपन्नं चेतनाचेतनात्मकं सर्वं जगत्, उपादानभूतेन अन्तर्यामिभूतेन च अनेन ब्रह्मणा व्याप्तम् । स परमात्मा सर्वस्य नियन्ता । (अतः हे श्वेतकेतो ! त्वम् तादृशब्रह्मात्मकोऽसि) ।

158. **'ओतं मनस्सह प्राणैश्च सर्वैः'** (मुण्ड. उ. 2–2–5)

[प्र. सं. 437 द्रष्टव्यम्] 217

159. **'औपमन्यव कं त्वमात्मानमुपास्से'** (छां. उ. 5–12–1) 202

हे उपमन्युपुत्र ! त्वम् उपास्यमानं परमात्मानं कीदृशस्वरूपवत्तया उपासीनो वर्तसे ? तद्वद ।

160. **'कं च तु खञ्च न विजानामि'** छ. उ. 4–10–5)

[प्र. सं. 500 द्रष्टव्यम्] 170

161. I **'कं ब्रह्म खं ब्रह्म'** (छां. उ. 4–10–5) 163, 167, 168, 170

II **'कं ब्रह्म'** [प्र. सं. 341 द्रष्टव्यम्] 164

162. **'क इत्था वेद यत्र सः'** (कठ. उ. 2–25) [प्र. सं. 451 द्रष्टव्यम्] 152, 342

163. **'कतम आत्मा ? योऽयं विज्ञानमयः प्राणेषु'** (बृ. उ. 6–3–7) 323

पूर्वोक्तेन मन्त्रेण 'आत्मैवाऽस्य ज्योतिः' इति निर्दिष्टस्य आत्मनः

स्वरूपं कीदृशम्? इति जनकस्य प्रश्नः। 'विज्ञानधर्मकः प्राणशब्दितेन्द्रियमुख्यप्राणमध्यगः [हृत्कमलमध्यगतः] ज्योतिश्शब्दितप्रकाशस्वरूपः यः पुरुषः (जीवः), स एव आत्मा इति याज्ञवल्क्यस्य उत्तरम्।

164. **'कतमा सा देवतेति?
प्राण इति होवाच, सर्वाणि ह वा इमानि भूतानि प्राणमेवाभि संविशन्ति प्राणमभ्युज्जिहते, सैषा देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रास्तोष्यो मूर्धा ते व्यपतिष्यत्'**

(छां. उ. 1-11-4, 5) 101, 102

प्रस्तावभक्तौ अध्यस्य उपास्यत्वेन त्वया चिन्तिता देवता का? इति उषस्तिं प्रति प्रस्तोतुः प्रश्नः।

उषस्तेरुत्तरमिदम्—'प्रस्तावभक्तौ अध्यस्य उपास्या देवता 'प्राण'रूपा (प्राणयतीति प्राणः) परमात्मा। यतः परिदृश्यमानानि चेतनाचेतनात्मकानि सर्वाण्यपि भूतानि प्राणाख्ये वस्तुन्येव लयं गच्छन्ति, प्राणात्सकाशादेव उद्गच्छन्ति, अतः सर्वभूतलयोत्पत्तिस्थानत्वेन वेदान्तसिद्धा प्राणरूपा देवतैव सा। तां च प्राणरूपां देवतामनभिज्ञाय यदि प्रस्तावमकरिष्यः; तदा तव शिरः व्यपतिष्यदेव, नात्र संशयः' इति॥

165. **'कम्वर एतमेतत्सन्तं सयुग्वानमिव रैक्कमात्थ'** (छां. उ. 4-1-3) 303

अरे! हंस! अयं जानश्रुतिर्नाम राजा, भवता 'महातेजस्वी' इति प्रशस्यते खलु! इमं केन वा महिम्ना युक्तं प्रशंससि त्वम्? शकटस्याधस्तादुपविष्टो ब्रह्मज्ञो रैक्व इव अयं राजा किं महामहिमयुक्तो भवति? नैव। अतो विफलोऽयं प्रशंसा तव।

166. **'कर्तारमीशं पुरुषं ब्रह्मयोनिम्'** (मुण्ड. उ. 3-1-3)

[प्र. सं. 423 द्रष्टव्यः] 418

167. **'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च'** (बृ. उ. 5-8-6) 241, 242

दिवमारभ्य तत उपरितनानामर्थानां, तथा पृथिवीमारभ्य ततोऽधस्तनानामर्थानाम्, एवं द्यावापृथिव्योरन्तर्वर्तिनाम्, द्यावापृथिव्योर्लोकयोः,

भूत-भविष्यद्वर्तमानात्मककालत्रयपरिच्छिन्नानामर्थानां सर्वेषाम् ओत-प्रोत-तया आश्रयीभूतः इत्युक्तः य अव्याकृताकाशः, तस्य ओत-प्रोततया आश्रयीभूतोऽर्थः कः ? इति गार्ग्याः याज्ञवल्क्यं प्रति प्रश्नः ।

168. **'कस्मै मां दास्यसि'** (कठ. उ. 1–4) 156

हे सर्वस्वदानप्रवृत्त ! मम पितः ! एतावदन्तं त्वया दत्तानि दानानि विगुणानि ; जरद्गवीनां प्रदानात् । तासां च उपयोगानर्हत्वात् । अहं तु यस्मै कस्मैचन कर्मणे उपयुक्तो भवेयं कथञ्चित् । बालवयस्कत्वात् ऋत्विजां मया साध्यं किमपि कार्यं भवेत् । अतः मां कस्मै ऋत्विजे दातुं यतिष्यसे तद्ब्रूहि—इति नचिकेताः अवोचत् ।

169. **'कस्य वा ह देवा यज्ञमागच्छन्ति कस्य वा न बहूनां यजमानानां यो वै देवताः पूर्वः परिगृह्णाति स एनाश्श्वो भूते यजते'**
(तै. सं. 1–6–7) 286

दर्शपूर्णमासादियागकर्तॄणां यजमानानां बहुत्वे प्राप्ते, हविर्भागिन्यो देवताः, कीदृशस्य वा यजमानस्य यज्ञं प्रति आगच्छेयुः ? विनिगमका-भावात् सन्दिग्धता आपद्येत । अतः श्वः कर्तव्ययागीयदेवतापरिग्रहार्थं पूर्वस्मिन् दिने एव अन्वाधानाख्यं कर्म कुर्यात् । तत्र च इमा इमा देवताः समिदाज्यचरुपुरोडाशादिष्वन्यतमेनानेन द्रव्येण यक्ष्ये इति सङ्कल्पयेत्, ताश्च देवताः श्वस्तने दिने प्राप्ते यजेत । तथा, च देवतानां पूर्वेद्युरेव परिगृहीतत्वात् तासां सन्देहावकाशो नापद्यते ।

170. **'किं कारणं ब्रह्म'** (श्वे. उ. 1–1) 350

जगज्जन्म-स्थिति-लयहेतुत्वेन ब्रह्मपदवाच्यतया श्रुत्यादिषूद्घुष्यमाणं वस्तु किं स्वरूपम् ?

171. **'किं स्विद्वनं क उ स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद्भुवनानि धारयन्' ॥**
(तै. ब्रा. 2–8–9–15) 409

हे मननशीला: विवेचका: ? लोके हि ! गृहं चिकीर्षु: पुमान् वनं गत्वा, तत्र कञ्चिद्वृक्षं छित्त्वा, तदीयै: काष्ठै: (दारुभि:) गृहम् निर्मिमीते। तद्दृष्टान्तेन 'अत्राऽपि कस्माद्वनजन्यात् वृक्षात् द्युलोकौ (लोकनिर्माता) निर्मितवान्, तादृशवृक्षाधिकरणभूतं वनं किं वा भवेत् ? तादृशवनवृत्ति: दारुप्रकृतिभूतो वृक्षस्तादृश: को वा स्यात्, येन लोक-भवनं निर्मितं भवेत् ? यच्च कर्तृभूतं वस्तु सर्वान् लोकान् स्वात्मनि धारयन् नियमनमकरोत् तादृशमहामहिमयुक्तं वस्तु किम् ? गुरुसकाशं गत्वा, इमं विचार्यमर्थं पृष्ट्वा जानीत !

172. **'कृतिस्त्वेव विजिज्ञासितव्या'** (छां. उ. 7-21-1) 234

उद्योगप्रयत्नापरपर्याया श्रोतव्यान्तरेषु हेयत्वानुसन्धानेन मनसो नियमन-रूपा कृति: 'ब्रह्मैव श्रोतव्यम्' इति व्यवसायलक्षणनिष्ठाहेतुत्वात् सम्पाद्या।

173. **'को न आत्मा किं ब्रह्म'** (छां. उ. 5-11-1) 198, 199

अस्माकमन्तर्यामितया आत्मभूतं निरतिशयबृहत्त्वशालि च वस्तु किं वा अस्ति ? निर्णेयं तत्—इति (प्राचीनशालादय: श्रोत्रिया: समेत्यैकत्र विचारं कृतवन्त:)।

174 I **'को ह्येवान्यात्क: प्राण्यात्। यदेष आकाश आनन्दो न स्यात्। एष ह्येवानन्दयाति'** (तै. उ. आन. 7-1) 68

II **'को ह्येवा....न स्यात्'** 265

अपरिच्छिन्नानन्दरस: अयं परमात्मा यदि न स्यात्; तदा सांसारिकं सुखम्, आपवर्गिकं वा आनन्दरसं को वा चेतन: प्राप्तुं शक्नुयात् ? यत: एष परमात्मैव चतुर्विधानपि देहिन: नित्यमुक्तांश्च यथायोग्यं सुखिन: स्थापयति। तस्मात् सर्वविधानन्दहेतुभूतस्य तस्य परमात्मन एव निरुपाधिकं प्राप्यत्वम् अबाधितम्।

175. **'क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत् कुत एतदागात्'** (कौषी. उ. 4-35) 372, 378

हे बालाके ! एष पुरुष: (अद्योत्थित: खलु दण्डताडनेन) एतावन्तं

कालम् अयं पुरुषः कस्मिन् स्थाने स्वप्नमनुभूतवान्? कुत्र च स्वापं प्राप्तवान्? कस्माच्च स्थानात् निर्गम्योत्थितः? (इति बालाकिं पृष्टवान् अजातशत्रुः)।

176. **'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः। तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः॥'**

(श्वे. उ. 1–10) 345

प्रधानशब्दिता प्रकृतिः क्षरमित्युच्यते। तच्च भोग्यभूतम् आत्मार्थं हरन् जीवः, मरणधर्मशून्यत्वात् अक्षरमित्युच्यते। तौ च क्षराक्षर-शब्दवाच्यौ चेतनाचेतनौ, स्वसमाभ्यधिकरहितः ईश्वरो नियमयति। नियन्तुश्च तस्य ईश्वरस्य आलम्बनभूतस्य पुनः पुनः संशीलनात्—योगात् व्युत्थितेनाऽपि ध्येयवस्तुशीलनरूपात् योजनात्, दर्शनसमानाकारानु-चिन्तनरूपात् तत्त्वाविर्भावाच्च साधनीभूतात्, देहावसाने मायाशब्द-वाच्यस्य समस्तप्रकृतिसम्बन्धस्य अपुनरुदयं यथा, तथा निश्शेष-निवृत्तिर्भवति।

177. **'गायत्री वा इदं सर्वम्'** (छा. उ. 3–12–1) 107

गायत्रीविशेषगतपादचतुष्टयवत्त्वेन हेतुना गायत्रीसदृशत्वात् गायत्री-शब्दवाच्यं परं ब्रह्मैव, परिदृश्यमानचराचरसर्वभूतात्मकम्।

178. I **'गौरनाद्यन्तवती....विभोः'** (मन्त्रि. उ. 1–5) 344

II **'गौरना....भूतभाविनी'** 400

III **'गौरनाद्यन्तवती'** [प्र. सं. 499 द्रष्टव्यम्] 404, 405

179. **'घ्नन्ति त्वेवैनं विच्छादयन्ति'** (छां. उ. 8–10–2) 273

स्वप्नार्थानामनुभवितारमेनं चेतनं, केचन घ्नन्तीव भान्ति। अपरे च केचन द्रावयन्तीव भान्ति॥

180. **'चतुर्विंशतिसङ्ख्यातमव्यक्तं व्यक्तमुच्यते'** (मन्त्रि. उ. 2–5) 344

(षड्विंशकस्य ब्रह्मण एव व्यक्ताव्यक्तशरीरकत्वात्) तदेव आत्मतत्त्वं व्यक्ताव्यक्तरूपतया चतुर्विंशतिसङ्ख्यातमित्यप्युच्यते।

181. **'चत्वारः पञ्चदशरात्राः (द्)....देवत्वं गच्छन्ति'** (ता. ब्रा. 23-6) 58

चत्वारो यागविशेषाः पञ्चदशसङ्ख्याकैर्दिनैः साध्याः वर्तन्ते । तैः यजमानाश्च अधिकारिणः पुरुषाः, देवपदवाच्यस्य देहविशेषस्य आत्मतां– नियन्तृतां भजन्ते ।

182. **'चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः ।**
**स एनान् ब्रह्म गमयति । एष देवपथो ब्रह्मपथः । एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते'** (छां. उ. 4-15-5, 6) 171

(ब्रह्मविदश्चेतनाः) अर्चिरादिपदवर्तिनः चन्द्रमसः सकाशात्, विद्युन्नामानम् आतिवाहिकं पुरुषं प्राप्नुवन्ति । स पुरुषः विद्युन्नामा अमानव इति संज्ञितः । सोऽमानवः निष्पन्नोपायान् इमान् ब्रह्मविदः पुरुषान् ब्रह्म प्रापयति । अयं च अर्चिरादिर्मार्गः देवैरातिवाहिकैर्नीयमानत्वाद्देवपथः । ब्रह्मप्रापकत्वाच्च ब्रह्मपथः । एतेन चार्चिरादिना ब्रह्मप्रापकेण मार्गेण प्रयान्तः, दुस्तरत्वात् क्लेशबहुलत्वाच्च घोरतमं जनन-मरणाद्यावर्तकं मनुष्यादिशरीरप्रापकं संसारं, पुनर्न प्रतिपद्यन्ते ।

183. **'छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति ।**
**अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया संनिरुद्धः'** ।।
(श्वे. उ. 4-9) 345

ऋग्यजुस्सामाथर्वाख्याः सर्वे वेदाः छन्दोमयाः, (तथा) पञ्चमहायज्ञा देवयज्ञादयः, ज्योतिष्टोमाद्याः क्रतवः, कृच्छ्र-चान्द्रायणादीनि व्रतानि, अतीत वर्तमान-भविष्यदात्मकानि च यानि यानि वेदोक्तानि, तानि सर्वाण्यपि मायाख्यप्रकृत्यधिष्ठाता ईश्वरः, मायाशब्दवाच्यादस्मात्साधनादेव प्रादुर्भावयति । ईश्वराश्रितेन मायारूपेणार्थेन मायाधिष्ठातुः परमात्मनः सकाशादन्यो जीवः तिरोहितनैजस्वरूपः संसरति ।

184. **'छायातपौ'** (कठ. उ. 3-1) [प्र. सं. 123 द्रष्टव्यम्] 155

185. **'जहात्येनां भुक्तभोगामजोऽन्यः'** (श्वे. उ. 4-5)
[प्र. सं. 12 द्रष्टव्यम्] 354

186. I 'ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः' (छां. उ. 3–14–3) 145

II 'ज्यायान्.......नन्तरिक्षात्' [प्र. सं. 147 द्रष्टव्यम्] 255

187. 'ज्ञाज्ञौ द्वावजावीशनीशावजा ह्येका भोक्तृ-भोगार्थयुक्ता ।
अनन्तश्चात्मा विश्वरूपो ह्यकर्ता त्रयं यदा विन्दते ब्रह्ममेतत् ॥'
(श्वे. उ 1–9) 345

असङ्कुचितज्ञानवानीश्वरः, सङ्कुचितज्ञानवान् जीवश्चेति उभावपीमौ उत्पत्तिरहितावेव । तथा अपरा चैका प्रकृतिः भोक्तुर्जीवस्य भोगरूपप्रयोजनेन सम्पन्ना, साऽपि उत्पत्तिरहितैव । (त्रयाणामप्यर्थानाम् उत्पत्तिरहितत्वसाम्येऽपि, अतिरोहितं वैलक्षण्यं जागर्त्येव) । यतः सर्वशरीरकः परमात्मा, अपरिच्छिन्नत्वात् अनन्तकल्याणगुणाकरत्वाच्च फलाभिसन्धियुतकर्तृत्वाभाववान्, अत एव च स्वभोगार्थं प्रकृत्या न संश्लिष्टः । एवं परस्परवैलक्षण्येन चिदचिदीश्वरान् यः विविक्ततया ध्यानात्मकेन ज्ञानेन निश्चिनोति; सः ब्राह्मगुणैः असङ्कुचितज्ञानत्वादिभिः सम्पन्नो भवति ।

188. 'ज्ञानमात्मनि महति नियच्छेत्' (कठ. उ. 3–13)
[प्र. सं. 401 द्रष्टव्यम्] 334

189. I 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् ।
अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्ष-शोकौ जहाति ॥'
(कठ. उ. 2–12) 154, 340

II 'तं....प्रविष्टम्' 159

उपासकश्चेतनः, ऐन्द्रियकस्य दर्शनस्याविषयभूतं, कर्माविद्यावृतान्तःकरणानां वाङ्मनसागोचरस्वरूपस्वभावम्, स्वेन सृष्टे सर्वत्र जगति कृतानुप्रवेशं, सर्वभूतहृदयगुहावर्तिनं, ध्यातुमत्यन्तदूरे परमव्योमनि अवस्थितं, सर्वकार्याणामनादिभूतमेकं कारणं, ज्योतिर्मयविग्रहं परमात्मानं, सर्वविषयेभ्यो मनसः प्रत्याहृतस्वात्मनि समाधानपूर्वकनिरन्तरानुध्यनेन

साक्षात्कृत्य, विषयलाभप्रयुक्तं हर्षं, तदलाभप्रयुक्तं शोकं च त्यक्तवान् भवति ।

190. I 'तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्'
(बृ. उ. 6–4–16) 296, 317, 360

II 'तं....ज्योतिः' 298, 349

प्रकाशकत्वेन लोक-शास्त्रविदितानां सूर्य-चन्द्र-विद्युदादीनां सर्वेषामपि वस्तूनां प्रकाशाधायकं, सर्वेषामपि प्राणिनां श्वासोच्छ्वासात्मके प्राण-धारणात्मके वा प्राणने प्रधानं निदानं, मरणोपलक्षितैः जन्म-जरा-मृत्युभिर्व्यपेतत्वात् कालतोऽपरिच्छिन्नं, तत् सर्वात्मभूतं परं ब्रह्म, मनुष्येभ्य उपरिवर्तिनो देवाः उपासते ।

191. 'तं यष्टिना चिक्षेप' (कौषी. उ. 4–33) [प्र. सं. 268 द्रष्टव्यम्] 371

192. 'तं वा एतं देवा आत्मानमुपासते । तस्मात् तेषां सर्वे च लोका आप्तास्सर्वे च कामाः' (छां. उ. 8–12–6) 270

तमेतमेव आत्मानम्—यः प्रजापतिना इन्द्रायोपदिष्टः, य एव च इन्द्रेण देवेभ्यः ब्रह्मणः सकाशाद् गृहीतत्वेनोपदिष्टः, तमेव अपहत-पाप्मत्वादिभिरष्टभिर्गुणैरुपेतं जीवात्मानं शुद्धम् , तत्प्राप्यं च उत्तमं पुरुषं परमात्मानमेव च अवशिष्टाः सर्वे देवाः उपासनं कुर्वन्ति ; न तु प्रथमतो विरोचनेन गृहीतम् । अत एव एतादृशात्मोपासकानां देवानां सर्वलोक-सर्वकामावाप्त्या उपलक्षितः ब्रह्मानुभवो भवति । असुराणां त्वादृशानाम् ईदृशस्य ब्रह्मानुभवस्य नावकाशः ।

193. I 'तं षड्विंशकमित्याहुस्सप्तविंशमथाऽपरे ।
पुरुषं निर्गुणं साङ्ख्यमथर्वशिरसो विदुः ॥' (मन्त्रि. उ. 2–4) 345

II 'तं....मथाऽपरे' 357

यः परमात्मा, अथर्वविहितैर्मन्त्रैः स्मर्यते, तं परमपुरुषं त्रिगुणानधीन-सत्ताकत्वात् निर्गुणपदवाच्यं, सङ्ख्यापदवाच्यया शुद्धया बुद्ध्या वेद्यं, षड्विंशं तत्त्वमाहुः केचित् , अन्ये च कालतत्त्वस्य पृथक् परिगणन-

स्थूल-सूक्ष्मात्मकं ब्रह्मादिस्तम्बपर्यन्तं पावनमपावनं, मङ्गलममङ्गलं च चराचरात्मकं चेतनाचेतनरूपं जगत् सृष्ट्वा, तावन्मात्रेऽपर्यवस्यन् सर्वत्र अनुवृत्ततया प्रतिवस्तु प्रवेशं कृतवान्। अनुप्रवेशं कृत्वा च, निर्विकारतया सततैकरूपचेतनरूपि, तथा पूर्वावस्थापरित्यागरूपविकारास्पदाचेतनरूपि च सत् ब्रह्मैव, चेतनाचेतननामरूपभाक् अभवत्। तदेव च जाति-गुण-क्रियावत्तया जाति-गुणाद्यभिधायिशब्दवाच्यम् अचेतनं, जाति-गुणादिशून्यं चेतनजातम्, अचेतनवर्गाधारभूतं चेतनजातम्, आश्रितमचेतनजातं, तथा अजडस्वरूपं, जडस्वरूपं च आहत्य सत्यानृतशब्दितचेतनाचेतननामरूपभाक् भवदपि ब्रह्म, अजहन्निर्विकारत्वलक्षणस्वस्वभावमेव अभवत्।

202. **'तदन्वेष्टव्यम्'** (छां. उ. 8-1-1) [प्र. सं. 29 द्रष्टव्यम्] 257

203. **'तदप्येष श्लोको भवति'** (तै. उ. आन. 6-3) 360

पूर्वोक्तेन ब्राह्मणभागेन प्रतिपादिते तस्मिन्नेवाऽर्थे अयं मन्त्रात्मकः श्लोकोऽपि उक्तार्थदार्ढ्यापादकः जागर्ति।

204. **'तदात्मानं स्वयमकुरुत'** (तै. उ. आन. 7-1) 410, 418

अविभक्तनामरूपं यदासीद्ब्रह्म; तदेव स्वस्वरूपमेव स्वयमेव उपादानरूपतया स्वीकृत्य, स्वस्याभिव्यक्तनामरूपत्वप्रापणरूपं कार्यमकरोत्।

205. **'तदात्मन्येव हृदयेऽग्नौ वैश्वानरे प्रास्यत्'** (तै. ब्रा. 3-11-8) 197

तत् हविः, हृदयस्थानावस्थिते वैश्वानरपदवाच्ये आत्मरूपे अग्नावेव आहुतिरूपेण प्रक्षेपं कृतवान्।

206. I **'तदेतत्सत्यम्। यथा सुदीप्तात्'** (मुण्ड. उ. 2-1-1) 192

II **'तदेतत्सत्यम्'** 190

पूर्वोक्तं सर्वज्ञत्वादिगुणकं ब्रह्म, सत्यम्—नित्यम् षड्भावविकारशून्यम्, तप्तायःपिण्डादिगतादग्नेः सकाशात् (विस्फुलिङ्गा इव परमात्मनः सकाशात् कार्यरूपाः सर्वे अर्था जायन्ते)।

207. 'तदेतदृचाऽभ्यनूक्तम्' (छां. उ. 3-12-5) 107

उक्तमिदं चतुष्पात्त्व-षाड्विध्याभ्यां सहितं गायत्र्याख्यं ब्रह्मोद्दिश्य, वक्ष्यमाणया 'तावानस्य महिमा' इत्येवंरूपया ऋचा अपरिच्छिन्नमहिमवत्त्वम् अनूद्य वर्णितम् ।

208. 'तदेवानुप्राविशत् । तदनुप्रविश्य' (तै. उ. आन. 6-2)

[प्र. सं. 201 द्रष्टव्यः] 416

209. 'तदेषाभ्युक्ता' (तै. उ. आन. 1-1) 69

'ब्रह्मविदाप्नोति परम्' इति वाक्ये प्रतिपन्नं ब्रह्मस्वरूपं तद्वेदनं तत्फलं चेत्येतत् त्रितयमपि प्रतिपाद्यतया परिगृह्य, 'सत्यं ज्ञानमनन्तम्' इत्यादिरूपा मन्त्रवर्णात्मिका वाक् प्रवृत्ता ।

210. I 'तदैक्षत बहु स्यां प्रजायेयेति। तत्तेजोऽसृजत'

(छां. उ. 6-2-3) 2, 36, 41, 281

II 'तदैक्षत....प्रजायेय' 6, 98, 408

III 'तदैक्षत बहु स्याम्' 39, 365

IV 'तदैक्षत' 11, 25

एतत् सच्छब्दवाच्यं परं ब्रह्म, 'विचित्रानन्तचिदचिन्मिश्रव्यष्टिजगद्रूपेण अहमेव बहु स्याम्, तदर्थं तेजोऽबन्नादिसमष्टिरूपेण प्रकर्षेण जायेय' इति सङ्कल्पं कृतवान् । ततश्च तदेव, तेजः ससर्ज ।

211. 'तद्धेदं तर्ह्यव्याकृतमासीत्' (बृ. उ. 3-4-7) 363, 367

स्त्री-पुंसादिलक्षणमिदं जगत्, सृष्टेः प्राक्, नामरूपविशिष्टतया अनभिव्यक्तशरीरकं ब्रह्म आसीत् ।

212. 'तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे (बृ. उ. 3-4-10) अहं मनुरभवं सूर्यश्चाहं कक्षीवान् ऋषिरस्मि विप्रः'

(ऋ. सं. 3-6-15-1) 120

उपास्यं तत् परं ब्रह्म उपासीनः वामदेवनामा ऋषिः, 'मदात्मैव मन्वादीनां सूर्यादीनां च आत्मा, मदात्मैव 'कक्षीवत्'नाम्नो विप्रऋषेरप्यात्मा' इति मन्वादिना सर्वेण सह स्वस्य ऐकात्म्यं साक्षात्कृतवान् ।

213. **'तद्धोभये देवासुरा अनुबुबुधिरे। ते होचुः....इन्द्रो ह वै देवानामभिप्रवव्राज विरोचनोऽसुराणाम् । तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः ।।'** (छां. उ. 8-7-2) 282

'य आत्माऽपहतपाप्मा........अनुविद्य विजानाति' इत्यन्तेनोक्तं प्रजापतेर्वचनं देवा असुराश्चेत्युभयेऽपि ऐतिह्यरूपेण श्रुत्वा ज्ञातवन्तः । ज्ञातवन्तश्च ते उक्तवन्तः स्वगोष्ठ्याम ;........देवानां गोष्ठ्याः इन्द्रः स्वयमेकाकी प्रजापतिमुपदेष्टारमुद्दिश्य यात्रां कृतवान् । असुराणां प्रमुखश्च विरोचनः तथा कृतवान् । तौ उभावपि अन्योन्यस्मिन् स्वं स्वमाशयमनाविष्कुर्वाणावेव समिद्रूपमुपायनं हस्तेकृत्य प्रजापतिसकाशं गतवन्तौ ।

214. **'तद्ब्रह्म तदमृतम्'** (छां. उ. 8-14-1) [प्र. सं. 85 द्रष्टव्यम्] 319

215. **'तद्यच्छेच्छान्त आत्मनि'** (कठ. उ. 3-12) [प्र. सं. 401 द्रष्टव्यम्] 334

216. **'तद्यच्छेत् ज्ञान आत्मनि'** (कठ. उ. 3-13) [प्र. सं. 401 द्रष्टव्यम्] 334

217. **'तद्यत् प्रथमममृतं तद्वसव उपजीवन्ति'** (छां. उ. 3-6-1) 295

पूर्वमुक्तेषु रोहितादिषु पञ्चस्वमृतेषु आदिमं यत् अमृतं रोहिताख्यं, सूर्यदर्शनकाले रोहिततया लक्ष्यमाणं रूपं तत् अग्निमुखा वसवः वक्ष्यमाणया रीत्या भुञ्जते ।

218. I **'तद्यथा रथस्यारेषु नेमिरर्पिता, नाभावरा अर्पिताः, एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः, प्रज्ञामात्राः प्राणेऽर्पिताः, स एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृतः'** (कौषी. उ. 3-61, 62) 117

II **तद्यथा........प्राणेऽर्पिताः'** 118

यथा वा रथनेमिः (वलयाकारः रथचक्रकाष्ठविशेषः) 'अर'शब्दवाच्येषु रथनाभि(अक्ष)सम्बन्धिषु काष्ठेषु आश्रयाश्रयिभावेन सम्बद्धा,

अराश्च यथा रथनाभिशब्दवाच्ये रथचक्रमध्यवर्तिनि अक्षे आश्रयाश्रयिभावेन सम्बद्धाः, तथैव 'भूतमात्रा'शब्दवाच्यं ग्राह्यग्राहकभावापन्नं सर्वं, 'प्रज्ञामात्रा'शब्दवाच्येषु चेतनेषु समर्पितम्—आश्रयाश्रयिभावेन सम्बद्धम्। ते च चेतनाः 'प्रज्ञामात्र'शब्दवाच्यास्सर्वे, 'प्राण'शब्दवाच्ये परमात्मनि आश्रयाश्रयिभावेन सम्बद्धाः। एतादृशः सर्वस्याश्रयभूतः परमात्मा प्राणपदवाच्यः प्राज्ञ आत्मा निरुपाधिकसार्वज्ञ्यानन्दत्वाजरत्वामृतत्वाश्रयः।

219. **'तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते, यथा वा स्वाश्श्रेष्ठिनं भुञ्जन्त्येवमेवैष प्रज्ञात्मैतैरात्मभिर्भुङ्क्ते एवमेवैत आत्मान एनं भुञ्जन्ति'**

(कौषी. उ. 4-44) 371

[उपनिषद्भाष्यपुस्तके पाठः—'तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा श्रेष्ठिनं स्वाः भुञ्जते, एवमेवैष प्राज्ञ आत्मा एतैरात्मभिर्भुङ्क्ते। यथा श्रेष्ठी स्वैः, एवं वा एतमात्मानोऽन्ववस्यन्ति।]

यथा कश्चित्प्रभुः भोगोपकरणभूतैः स्वैः—ज्ञातिभिः, भोगान् भुङ्क्ते। यथा स्वाश्च बन्धवः तं प्रभुम् ऐश्वर्यादिसमग्रम् अनुभूय, तद्दत्तानि वित्तादीनि च उपजीव्य प्रहृष्यन्ति। एवमेव अयं प्राज्ञः परमात्मा स्वोपकरणभूतैः जीवात्मभिः लीलारसं भुङ्क्ते। ते च आत्मनः चेतनाः परमात्मदत्तभोगोपकरणाः सर्वैश्वर्यादिगुणविशिष्टं तम् अनुभूय, हृष्टा भवन्ति। (पुस्तकगते च पाठे) यथा प्रधानपुरुषः स्वकीयैर्भृत्यादिभिः भोगसाधनान्युपहरद्भिः हेतुभिः भोगान् भुङ्क्ते। यथा च भोगसाधनान्युपहरन्तः प्रधानपुरुषं पालयन्ति, एवम्—इत्यर्थः।

220. **'तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमास्सर्वाः प्रजा अहरहर्गच्छन्त्यः एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः'** (छां. उ. 8-3-2) 261

यथा वा गृहे वसन्तो जनाः, गृहे एव भूम्यन्तर्भागे निक्षिप्तं सुवर्णस्य सर्वैः सर्वाधिकतया उपेक्ष्यमाणप्रकृष्टलोहविशेषस्य निधिं तद्गर्भिताया भूमेरुपर्येव नित्यं सञ्चरन्तोऽपि क्षेत्रस्वभावस्य अज्ञानात् नैव लभन्ते नैव

च जानन्ति; तथैव सर्वा अपि प्रजाः निधिवत् चेतनानामत्यन्तमपेक्षणीयं परमभोग्यं ब्रह्मशब्दवाच्यं दहराकाशरूपं परमात्मानं सुषुप्तिकाले अनुदिनं प्राप्नुवत्योऽपि अविक्तताँ तेन सह गच्छन्त्योऽपि नैव जानन्ति लभन्ते वा; स्वीयस्य तत्स्थानगमनस्य अज्ञानात्, तच्च अनृतपदवाच्येन अविद्याख्येन कर्मणा स्वभावान्तरं प्रापितत्वात्।

221. **'तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते'** (छां. उ. 5-24-3) [प्र. सं. 559 द्रष्टव्यम्] 200, 211

222. **'तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहा'** (छां. उ. 5-19-1) 234

वैश्वानरविद्यानिष्ठस्योपासकस्य पुंसः भोजनार्थमुपविष्टस्य सतः, प्रथमतः प्राप्तं यदन्नमस्ति, तदेव प्राणाग्निहोत्रात्मकहोमसाधनम्। स भोक्ता तेनान्नेन प्रथमाम् आहुतिं जुहुयाद्यदि, तर्हि तामाहुतिं 'प्राणाय स्वाहा' इति मन्त्रेण जुहुयात।

223. **'तद्वा एतदक्षरं गार्गि अदृष्टं द्रष्टृ अश्रुतं श्रोतृ अमतं मन्तृ अविज्ञातं विज्ञातृ नाऽन्यदतोऽस्ति द्रष्टृ, नाऽन्यदतोऽस्ति श्रोतृ, नाऽन्यदतोऽस्ति मन्तृ, नाऽन्यदतोऽस्ति विज्ञातृ, एतस्मिन्नु खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्च'** (बृ. उ. 5-8-10) 244

हे गार्गि! पूर्वप्रस्तुतं यत् अक्षरपदवाच्यं परं ब्रह्मास्ति तदेतत्, योगिभिन्नैश्चेतनैः अपरिदृश्यमानं सत्, रूपादिसाक्षात्कर्तृ। तथा अयोगिनां श्रोत्रायत्तशाब्दज्ञानाविषयभूतं सत्, स्वयं सर्वार्थश्रवणसमर्थम्। अयोगिनां मनआयत्तचिन्तालोचनाद्यविषयभूतं सत्, स्वयं सर्वविषयकचिन्तालोचनादिसमर्थम्। अपरिपक्वमतीनां कुयोगिनां निदिध्यासनस्याविषयभूतं सत्, स्वयं सर्वनिदिध्यासनसमर्थम्। एतत्सदृशं द्रष्ट्रन्तरं श्रोत्रन्तरं मन्त्रन्तरं, विज्ञात्रन्तरं च नैव जगति अस्ति। एतत्पर्यन्तं वर्णिते अक्षराख्ये ब्रह्मणि खलु गार्गि! आकाशः पूर्वोक्तः ओतप्रोततया संलग्नः सर्वथा तदायत्तस्वस्वरूपः।

224. **'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः'** (सुबा. उ. 6) 251

अमृतत्वस्याश्रयभूतम् अप्राकृतं, सर्वव्यापनशीलस्य महाविष्णोः सर्वाधिकं स्थानं सर्वोत्कृष्टं स्वरूपम् वा परमं पदम्। तत् निरस्ततिरोधानतया अप्रतिहतप्रसरणशीलज्ञानवन्तः सूरिपदाभिधेयाश्चेतनाः निरन्तरायतया निरन्तरं साक्षात्कुर्वते।

225. **'तन्मात्राणि भूतादौ लीयन्ते। भूतादिर्महति लीयते। महानव्यक्ते लीयते। अव्यक्तमक्षरे लीयते। अक्षरं तमसि लीयते। तमः परे देव एकीभवति'** (सुबा. उ. 2) [प्र. सं. 329 द्रष्टव्यः] 336

226. **'तन्नामरूपाभ्यां व्याक्रियत'** (बृ. उ. 3-4-7) 363, 367

अव्याकृतशरीरकं ब्रह्मैव, नामरूपवत्तया विविच्य, स्वेनैव समन्तात् कृतमासीत्।

227. **'तपश्श्रद्धे ये ह्युपवसन्ति'** (मुण्ड. उ. 1-2-11) 192

यादृशाः संन्यासिनः 'तपः'शब्दाभिधेयं ब्रह्म, तद्दर्शनादौ आदरातिशयात्मिकां श्रद्धां च निरन्तरं सेवन्ते, (ते अव्ययपुरुषस्य स्थानभूतं परं व्योम प्राप्नुवन्ति)।

228. **'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते।
अन्नात्प्राणो मनस्सत्यं लोकाः कर्मसु चामृतम्॥'** (मुण्ड.उ. 1-1-8) 190

परं ब्रह्म 'बहु स्याम्' इत्येवंरूपेण स्वसङ्कल्पेन स्वयमेव सृष्ट्याभिमुख्यं प्राप्नोति। तादृशाच्च परस्माद्ब्रह्मणः भोग्यभोक्तृरूपचेतनाचेतनसङ्घातलक्षणम् अव्याकृतं जायते। तस्माच्च समष्ट्यात्मकचिदचित्सङ्घातात्मकात् अन्नपदवाच्यात् अव्याकृतात्, मुख्यः प्राणः, अन्तःकरणम्, भोक्तृवर्गः, भोगभूमिभूताः स्वर्गादयो लोकाः, कर्मजालमध्ये मोक्षोपयोगि कर्म चेत्येतानि सर्वाण्यपि जायन्ते।

229, **'तम आसीत्तमसा गूढमग्रे प्रकेतं....तमसस्तन्महिना जायतैकम्'**
(तै. ब्रा. 2-8-9-10) 407

सृष्टेः पूर्वं तमश्शब्दवाच्यं वस्तु अविभक्तनामरूपतया आसीत्। तच्छरीरकं च ब्रह्मैकमेवासीत्। अविभक्तनामरूपतमश्शरीरकतया एक-

त्वेनावस्थितं ब्रह्म, द्वारतया निमित्तभूतात् तमसः विभक्तनामरूपत्वकृत-महत्त्वाश्रितं सत्, विविधविचित्रजगदात्मना प्रादुरभवत् ।

230. **'तमन्तर्यामिणं ब्रूहि'** (बृ. उ. 5–7–6) 117

य इमं च लोकं, परं च लोकं, सर्वाणि च भूतानि यः अन्तरो यमयति ; तम् अन्तर्यामिणं ब्रूहि ।

231. **'तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्'** (श्वे. उ. 6–7) 87

ईशितृत्ववतां ब्रह्मादीनां मध्येऽत्यन्तं श्रेष्ठम् , अत एव महत्त्वविशिष्टम् ईश्वरम् , आराध्यत्ववताम् अग्नीन्द्रादीनां मध्ये श्रेष्ठम् आराध्यम् (परमात्मानं परज्ञानेन साक्षात्कुर्मः) ।

232. **'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन'** (बृ. उ. 6–4–22) 188

ज्ञेयत्व-प्राप्यत्वाद्युपयोगिसर्वेश्वरत्वादिगुणविशिष्टं परमात्मानं, गुरुमुखगृहीतानां वेदशाखाविशेषाणां नियमयुक्तेनाध्ययनेन, देवताराधनरूपेण द्रव्ययज्ञादिना कर्मणा, न्यायार्जितस्य धनस्य सत्पात्रेषु समर्पणरूपेण दानेन, फलाभिसन्धिरहिततया अनुष्ठीयमानेन कृच्छ्रचान्द्रायणादिरूपेण तपसा, अनशनेन च उपासनोपयोगिना प्राप्तुं, त्रैवर्णिकाः तीव्रमभिलषन्ति।

233. I **'तमेवं विद्वानमृत इह भवति । नाऽन्यः पन्था अयनाय विद्यते'** (तै. आर. पु. 3–13–17) 217

II **'तमेवं.... पन्थाः'** 385

पुरुषसूक्तप्रतिपाद्यं तं परमपुरुषं यः उक्तया रीत्या उपास्ते, साक्षात्करोति च ; स इहैव जन्मनि मुक्तभोग्यं परमात्मानमनुभवति। भगवत्प्राप्तये उक्तादन्यः उपायो नैवास्ति ।

234. **'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति'** (मुण्ड. उ. 2–2–10) [प्र. सं. 287 द्रष्टव्यम्] 275

243. I 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी।' (तै. उ. आन. 1-1) 18

II 'तस्माद्वा....सम्भूतः' 61, 70, 92, 364

III 'तस्माद्वा....आकाशः' 74

IV 'तस्माद्वा....दात्मनः' 28, 62

'सत्यं ज्ञानम्' इति मन्त्रवर्णोक्तसत्यज्ञानानन्तस्वरूपत्वात् परब्रह्मरूपात् परमात्मनः, आकाश उत्पन्नः। तस्मादाकाशात् परमात्मशरीरभूतात् वायुरुत्पन्नः। वायोश्च परमात्मात्मकात् अग्निरुत्पन्नः। अग्नेश्च भगवदात्मकात् आपः(जलं) उदपद्यन्त। ताभ्यश्च भगवदात्मकेभ्यः पृथिवी समजायत।

244. 'तस्माद्वा एतस्माद्विज्ञानमयात्। अन्योऽन्तर आत्मानन्दमयः' (तै. उ. आन. 5-2) 23, 32, 74, 366, 415

पूर्वप्रस्तुतात् विज्ञानमयशब्दितात् जीवात् भिन्नः, तस्याप्यन्तरः आनन्दमयशब्दितः परमात्मा।

245. 'तस्मिन् कामाः समाहिताः' (छां. उ. 8-1-5) [प्र. सं. 400 द्रष्टव्यम्] 19

246. I 'तस्मिन्यदन्तस्तदन्वेष्टव्यम्' (छां. उ. 8-1-1) 254

II 'तस्मिन् यदन्तः' [प्र. सं. 29 द्रष्टव्यम्] 257

247. 'तस्मै स होवाच द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च' (मुण्ड. उ. 1-1-4) 188

साक्षात्कृतपरमपुरुषस्वरूपाः ज्ञानिनः, 'उभे अपि विद्ये सम्पादयितव्ये' इति खलु वदन्ति। ते विद्ये के? इत्यपेक्षायाम् एका पराख्या विद्या, या ब्रह्मणः अपरोक्षज्ञानात्मिका; इतरा च अपरा, या ब्रह्मणः परोक्षज्ञानात्मिका इति, महाशालाय शौनकाय स्वमुपसन्नाय अङ्गिरा उवाच।

248. I 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये, अथ सम्पत्स्ये' (छां. उ. 6-14-2) 12, 114

255. **'तस्येदमेव शिरः'** (तै. उ. आन. 1-3) 28

स्थूलरूपेण परिदृश्यमानस्य अन्नरसमयस्य देहाख्यस्य पुरुषस्य प्रत्यक्षदृष्टं शिर एव शिरः ।

256. I **'तस्यैष एव शारीर आत्मा । यः पूर्वस्य'** (तै. उ. आन. 5-1) 61, 62

II **'तस्यैष....आत्मा'** 25, 60

अन्नमयादि विज्ञानमयान्तपदार्थजातस्य यः आत्मभूतः, स एव आनन्दमयस्य आत्मा ; नाऽन्यः । सर्वम् आत्मान्तरवत्, आनन्दमयस्तु अनन्यात्मकः इत्यर्थः ।

257. **'ता आप ऐक्षन्त'** (छां. उ. 6-2-4) 9, 11

अप्शरीरकः परमात्मा (वक्ष्यमाणरीत्या) सङ्कल्पितवान् ।

258. **'तान् होवाच अश्वपतिर्वै भगवन्तोऽयं केकयः सम्प्रतीममात्मानं वैश्वानरमध्येति तं हन्ताऽभ्यागच्छामः'** (छां. उ. 5-11-4) 198

औपमन्यवादीन् वैश्वानरात्मजिज्ञासून् पुरुषानुद्दिश्य उद्दालकः अब्रवीत् —भो महाशयाः ! अयम् अश्वपतिः केकयो राजा इदानीम् अस्माभिरभिलषितं वैश्वानराख्यमात्मानमेव उपास्ते, अस्माकं सुदैवमेतत् । तमेवोद्दिश्य वयं वैश्वानरात्मविज्ञानार्थं गच्छामः—इति ।

259. **'तावानस्य महिमा'** (छां. उ. 3-12-6) 107

भूत पृथिवी शरीर-हृदयाख्यैः चतुर्भिः पादैरुपेतत्वम्, एकैकपादगतगानकर्मत्व-त्राणकर्मत्व-भूतप्रतिष्ठात्व-भूतानतिलङ्घत्व-प्राणप्रतिष्ठात्व-प्राणानतिलङ्घ्यत्वैः षड्भिश्च विधाभिरुपेतत्वम् इति यत् पूर्वोक्तं, तत् सर्वं गायत्र्याख्यस्य ब्रह्मणः माहात्म्यम् ।

260. **'तासां त्रिवृतं त्रिवृतमेकैकां करवाणि'** (छां. उ. 6-3-3) 352

देवतात्मकानां तेजोऽबन्नरूपाणां मध्ये तेजोरूपाम्, अन्नरूपां च देवतां, सृष्ट्युपयोगिसामर्थ्यात्मकान्योन्यसंयोगवतीं करवाणि ।

261. **'तेनेन्द्रो वज्रमुदयच्छत्'** (तै. सं. 2-4-12-4) 282

विष्णुना यत्(तृतीयं)शरीरं(पृथिव्यां)स्थापितमासीत् तेन शरीरेण युक्तः इन्द्रः (विष्णोः पृष्ठतः सन्) तं वज्रमुद्धृत्य स्वीकर्तुं समर्थोऽभवत् ।

262. 'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निरूढाम्'
(श्वे. उ. 1-3) 350

ध्यानयोगपदवाच्येन परब्रह्मसाक्षात्कारहेतुना उपासनेन सम्पन्ना मुनयः, देवपदवाच्यस्य भगवतो नारायणस्य स्वात्मभूतस्य कार्यकरत्वेन शक्तिपदवाच्यां सत्त्वरजस्तमोरूपैः स्वीयैर्गुणैरुपेतां प्रकृतिं प्रत्यक्षीकृतवन्तः ।

263. 'ते यदन्तरा' (छां. उ. 8–14–1) [प्र. सं. 85 द्रष्टव्यम्] 319

264. 'तेऽर्चिषमेवाभिसम्भवन्ति अर्चिषोऽहरह आपूर्यमाणपक्षम्'
(छां. उ. 4–15–5) 171, 175

अक्षिविद्यानिष्ठाः ब्रह्मविदः, सर्वथा अर्चिरभिमानिदेवतामेव प्राप्नुवन्ति, प्राप्य च तत्सकाशात् अहरभिमानिदेवतां प्राप्य, तत्सकाशात् शुक्लपक्षाभिमानिदेवतां प्राप्नुवन्ति ।

265. 'ते वा एते पञ्चान्ये दश सम्पद्यन्ते' (छां. उ. 4–3–8) 109

दैवतसम्बन्धिनः पञ्च अग्नि-आदित्य-चन्द्र-जलाख्याः अपियन्तश्चत्वारः अपीयमानो वायुरिति । आत्मपदवाच्यदेहसम्बन्धिनः, अपियन्तश्चत्वारः वाक्-चक्षुः-श्रोत्र-मनोरूपाः, अपीयमानः प्राण एक इति आहत्य पञ्चेति, अधिदेवताख्यान् अध्यात्माख्यांश्च मेलयित्वा दशसङ्ख्यतां प्राप्नुवन्ति । ततश्च कृताख्यायवत् दशसङ्ख्यत्वमेतेषां भाव्यमिति ।

266. 'तेषां सर्वेषु लोकेष्वकामचारो भवति' (छां. उ. 8–1–6) 260

(इहलोके देहे वा 'दहराकाश'शब्दवाच्यस्य परमात्मनः, तत्सम्बन्धिनां कल्याणगुणानां च उपासनमकृत्वा ये इतो लोकात् गच्छन्ति) तेषां चेतनानां चेतनानुभवयोग्येषु सर्वेषु लोकेषु यथेच्छसञ्चारो नैव भवति । पारतन्त्र्यमेव तस्य ; कर्मवश्यतायाः सत्त्वात् ।

267. 'तौ ह द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुः, तौ ह प्रजापतिरुवाच'
(छां. उ. 8–7–3) 282

देवगोष्ठीतः असुरगोष्ठीतश्च प्रजापतिसमीपं प्रस्थितौ इन्द्रविरोचनौ उभावपि द्व्यधिकानि त्रिंशत्सङ्ख्याकानि वर्षाणि प्रजापतेः सविधे 'ब्रह्मचर्य'पदवाच्यं सनियमं सध्येयं च अन्तेवासं गुरुशुश्रूषातत्परौ चक्रतुः ।

268. I **'तौ ह सुप्तं पुरुषमीयतुः....**
**तं यष्टिना चिक्षेप'** (कौषी. उ. 4–30, 33) 371

II **'तौ .. मीयतुः'** 371, 378

आचार्यस्थानमाश्रितः अजातशत्रुः, जिज्ञासुस्थानमाश्रितः बालाकिश्चेत्युभौ राजभवने कञ्चित् पुरुषम् उपसस्रपतुः—समीपमाजग्मतुः.... आह्वानेऽपि तूष्णीमेव शयितं तं पुरुषं दण्डेन ताडितवान् अजातशत्रुः ।

269. **'त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत्तरति जन्ममृत्यू'**
(कठ. उ. 1–17) 340

'अयं वाव यः पवते' इत्याद्यनुवाकत्रयाध्यायी यजनाध्ययनदानकृत्, पाकयज्ञहविर्यज्ञ-सोमयज्ञकृद्वा साधकः, हेतुतामापन्नैः त्रिसङ्ख्याकैः अग्न्यनुष्ठानैः परमात्मोपासनेन सह सम्बन्धं प्राप्य, जन्म-व्याधि-जरा-विपत्ति-मरणाख्येभ्यः सांसारिकेभ्यो दोषेभ्यः उत्तीर्णो भवति ।

270. **'त्रिपादस्याऽमृतं दिवि'** (छां. उ. 3–12–6) [प्र. सं. 322 द्रष्टव्यम्] 110

271. I **'त्रिशीर्षाणं त्वाष्ट्रमहनम् ।**
**अरुन्मुखान्यतीन् सालावृकेभ्यः प्रायच्छत्'** (कौषी. उ. 3–9, 10) 121, 122

II **'त्रिशीर्षाणं त्वाष्ट्रमहनम्'** 116

(इन्द्र उवाच प्रतर्दनाय) हे प्रतर्दन ! अहं हि त्वष्टुः देवतक्ष्णः पुत्रं, त्रिशिरस्कं विश्वरूपनामानं, नाशितवान् । वेद-वेदान्तज्ञानविदूरान् यतिलिङ्गमात्रधारिणः कांश्चन प्रतारकान् , सालावृकसंज्ञेभ्यः आरण्येभ्यो श्वभ्यः भक्षणार्थं निक्षिप्तवान् ।

272. **'त्वमेव मे वरं वृणीष्व, यं त्वं मनुष्याय हिततमं मन्यसे'**
(कौषी. उ. 3–3) 113, 114, 118

हे इन्द्र ! त्वं मनुष्यजन्मसम्प्राप्तवतश्चेतनस्य परमपुरुषार्थसम्पादकतया परमहितभूतं यद्भवति तत् वरणीयमालक्ष्य, त्वमेव मह्यं प्रयच्छ ।

273. 'दर्भमयी रशना' (तै. ब्रा. 3-8-2) 64

रज्जुविशेषः—रशना ; सा दर्भाख्यतृणविशेषप्रकृतिका कार्या ।

274. I 'दहरोऽस्मिन्नन्तर आकाशः, तस्मिन्यदन्तस्तदन्वेष्टव्यम्' (छां. उ. 8-1-1) 256

II 'दहरो........आकाशः' 266, 380

III 'दहरोऽस्मिन्' [प्र. सं. 29 द्रष्टव्यम्] 272

275. 'दिवमेव भगवो राजन्' (छां. उ. 5-12-1) 202

ज्ञानकृतमहत्त्वसम्पन्न ! हे राजन् केकय ! अहं द्युलोकशरीरकं वैश्वानरात्मानमुपासीनः अस्मि इति, औपमन्यवः केकयस्य सविधे उवाच ।

276. 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः ।
अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥' (मुण्ड. उ. 2-1-2) 193

'द्यु'संज्ञकपरमव्योमाख्यस्थानावस्थितः, विभुत्वेन निरवयवतया मूर्तत्वरहितश्च यः पुरुषो वर्तते सः, बाह्याभ्यन्तरसर्ववस्तूनामात्मभूतः, इन्द्रियराहित्येन तत्प्रेरकप्राण-मनःसम्बन्धशून्यः । उत्पत्तिरहितः निर्मलत्वात् शुभाश्रयत्वात् शुभप्रदत्वाद्वा शुभ्रः, सः अव्याकृताख्यात् अक्षरपदवाच्यात् प्रधानात् यः परः समष्टिपुरुषः (हिरण्यगर्भः) तस्याऽपि कारणत्वेन तस्मात् परः ।

277. 'दुर्गं पथस्तत्कवयो वदन्ति' (कठ. उ. 3-14) 342

परमात्मतत्त्वं हि दुरधिगमम्—दुष्प्रापम् , तस्य मार्गं तत्त्वविद एव जानन्ति, वदन्ति च जिज्ञासून् प्रति ।

278. 'द्रष्टव्यः' (बृ. उ. 6-5-6) [प्र. सं. 295 द्रष्टव्यम्] 385

279. 'द्रष्टा........श्रोता' (बृ. उ. 5-7-27) [प्र. सं. 38 द्रष्टव्यम्] 176

280. 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥'
(मुण्ड. उ. 3-1-1) (श्वे. उ. 4-6) 223

अपहतपाप्मत्वादिभिर्गुणैः परस्परं समानौ, अपृथक्सिद्धया सहचरौ, पक्षसदृशौ द्वौ चेतनौ, वृक्षवत् छेदानर्हम् एकमेव देहं समाश्रित्य वर्तेते। तयोर्मध्ये एकतरः जीवः भोगार्हं कर्मफलमास्वादयन् भुङ्क्ते। अपरः परमात्मा तु कर्मफलानुभवरहितः स्वयमसङ्कुचितप्रकाशो जागर्ति।

281. **'धर्मशास्त्राणि'** (मुण्ड. उ. 1–1–5) 189

अपरा विद्या हि ऋग्वेदादिः, धर्मशास्त्राण्यपि तत्रैवान्तर्गतानि।

282. **'धूत्वा शरीरम्'** (छां. उ. 8–13–1) [प्र. सं. 66 द्रष्टव्यः] 321

283. **'ध्यानक्रिया....यज्वभिः'** (मन्त्रि. उ. 1–7) [प्र. सं. 499 द्रष्टव्यः] 344

284. I **'ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः।**
**सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत्॥**
**गौरनाद्यन्तवती सा जनित्री भूतभाविनी।'** (मन्त्रि. उ. 1–4, 5) 400

II **'ध्यायते....जगत्'** [प्र. सं. 499 द्रष्टव्यः] 344

285. **'न चक्षुषा गृह्यते नाऽपि वाचा'** (मुण्ड. उ. 3–1–8) 133

परमात्मा चाक्षुषज्ञानेन, तथा वाग्जन्यज्ञानेन—शाब्दज्ञानेन च न साक्षात्कर्तुं शक्यते।

286. **'न जायते म्रियते वा विपश्चित्'** (कठ. उ. 2–18) 342, 392

विपश्चित्त्वार्होऽयं जीवः, इदानीमपि (देहवत्ताकालेऽपि) स्वरूपतो जननमरणशून्यः (अजरामरज्ञानैकाकारवान्)।

287. **'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः।**
**तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति॥'**
(कठ. उ. 5–15) 317

चन्द्रादित्यनक्षत्रविद्युदग्निरूपाणां सर्वेषां तेजसां छादकम् (अभिभावकम्) उक्तानां निखिलानां तेजसां कारणभूतमनुग्राहकं च अङ्गुष्ठप्रमितस्य परमात्मनो ज्योतिर्दृश्यते।

288. **'न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम्।**
**स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाऽधिपः॥'**
(श्वे. उ. 6–9) 20

शरीरेन्द्रियादिरहितस्य निःसमाभ्यधिकस्य स्वाभाविकस्य सर्वातिशायि-ज्ञानशक्तिबलैश्वर्यादिगुणवतः परमात्मनः रक्षकः, नियन्ता च न कोऽपि विद्यते ; अयमेव सर्वेषां रक्षकः, सर्वनियन्ता च । एतज्ज्ञापकं चिह्नमपि किञ्चित् कस्यापि नोपलभ्यते, अवाङ्मनसगोचरः एष एव सर्वकारणभूतः, इन्द्रियाधिपस्य जीवस्याऽपि अधिपः, सर्वस्रष्टुरस्य स्रष्ट्रन्तरं सर्वाधिपतेरस्य अधिपत्यन्तरं नैवाऽस्ति ।

289. **'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।**
**परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ।।'**
(श्वे. उ. 6–8) 87

सर्वलोकेश्वरस्यास्य भगवतः (ब्रह्मादिवत्) कर्मवश्यं शरीरेन्द्रियादिकं नैव वर्तते ; अस्य भगवतः परब्रह्मणः सदृशः अधिकश्चान्यो नैव सम्भावितः ; अस्य च सर्वातिशयिता स्वभावायत्ता ज्ञान-बलैश्वर्यादिरूपा अनन्तापरिमिताश्चर्यकरी शक्तिः श्रुत्यादिप्रमाणेषु श्रूयते ।

290. **'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् ।**
**सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः ।।'** (छां. उ. 7–26–2) 237

यथोक्तब्रह्मदर्शी विद्वान् मरणं, ज्वरादिरोगं, भगवद्विभूतिभूते जगति प्रतिकूलतां च नैव पश्यति । सर्वसाक्षात्कर्ता सन् सङ्कल्पमात्रेण सङ्कल्पितान् अर्थान् सर्वस्मिन् काले प्राप्नोति, अपहतपाप्मत्वादिगुणाष्टकाविर्भाववान् भवतीत्यर्थः ।

291. **'न प्रेत्य संज्ञाऽस्ति'** (बृ. उ. 4–4–12) [प्र. सं. 505 द्रष्टव्यम्] 157,397

292. **'नम ऋषिभ्यो मन्त्रकृद्भ्यः'** (तै. आर. 7–1–1) 289

तपोदैवानुग्रहादिना बलेन मन्त्रदर्शनपूर्वकं तत्प्रवक्तृभ्यो ऋषिभ्यः प्रणाम आन्तरङ्गिकः क्रियते ।

293. **'न मे स्तेनः'** (छां. उ. 5–11–5) 199

अश्वपतेः केकयस्य मम जनपदे चोरक्षुद्रादिरूपः परस्वाद्यपहारि नैव कश्चन वर्तते ।

294. **'न वा अरे पत्युः कामाय पतिः प्रियो भवति'**

(बृ. उ. 4-4-5, 6-5-6) 381, 389

लोके दम्पत्योर्मध्ये जायां प्रति पतिः प्रियो भवति खलु ! तच्च पत्यौ दृश्यमानं प्रियत्वं, पत्युः सङ्कल्पवशात् न निष्पन्नं भवति; किन्तु परमात्मनः सङ्कल्पवशादेव ।

295. **'न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति........आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः, मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते, इदं सर्वं विदितम्'** (बृ. उ. 6-5-6) 382

लोके यस्य कस्यापि जनस्य गृहारामक्षेत्रादिकं यद्यत् प्रियं भवति चेत्, तत्किमपि तस्य तस्य पुरुषस्य सङ्कल्पात्मकेन निमित्तेन न प्रियं भवितुमर्हति ; किन्तु परमात्मनः सङ्कल्पेनैव । तस्मात् पतिजायावित्तादीनां प्रियत्वं यत्सङ्कल्पायत्तम्, तस्य परमात्मनः प्रसादाय, स परमात्मैव श्रवण-मनन-निदिध्यासनैः प्रत्यक्षतामापाद्यः ; हे मैत्रेयि ! श्रवण-मननादिना परमात्मनि साक्षात्कृते सति, तत्कार्यभूतं तन्नियाम्यं च सर्वं जगत् ज्ञातं भवति ।

296. **'न वाचं विजिज्ञासीत ; वक्तारं विद्यात्'** (कौषी. उ. 3-58) 121

केवलं नाममात्रज्ञानेन न पुरुषार्थावाप्तिः ; किन्तु मनोऽधिष्ठितवागिन्द्रियजन्याभिलपनक्रियया नामव्याहारं (वक्तृजीवशरीरकं परमात्मानमेव विद्यात् ।

297. **'न ह वा अस्मा उदेति न निम्रोचति सकृद्दिवा हैवास्मै भवति, य एतामेवं ब्रह्मोपनिषदं वेद'** (छां. उ. 3-11-3) 298

य एतां मधुविद्यारूपां ब्रह्मविद्याम् अनुतिष्ठति, तस्मै ब्रह्मविदे आदित्यः न उदेति, न अस्तमेति । आदित्योदयप्रकाशाभ्यां न किञ्चित् तस्य प्रयोजनम् । ब्रह्मविदे तस्मै सकृद्दिवैव भवति ; सकृत् उदितमहरेव भवति, सदैव अहर्भवतीत्यर्थः । सन्ततं सर्वविषयकसाक्षात्कारोऽस्य भवतीत्यर्थः ।

298. 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति ।
अशरीरं वाव सन्तं न प्रियाऽप्रिये स्पृशतः ॥'

(छां. उ. 8–12–1) 26, 82, 268

पुण्य-पापात्मककर्मारब्धशरीरयोगिनः पुरुषस्य, तदनुगुणसुखदुःखयोः पुण्य पापात्मककर्मारब्धशरीरयोगिनः पुरुषस्य, तदनुगुणसुखदुःखयोः वर्जनं नैव सम्भवति । कर्मारब्धशरीरसम्बन्धरहितमेव पुरुषं, तादृशदेह-सम्बन्धप्रयुक्ते सुखदुःखे न सम्बध्नीतः ।

299. 'नाऽन्योऽतोऽस्ति द्रष्टा' (बृ. उ. 5–7–27) 176, 179, 180, 332

निरुपाधिकद्रष्टृत्ववतः अन्तर्यामिणोऽन्यः करणायत्तज्ञानो जीवः स्वयमन्यैरदृष्टः सन् रूपादिज्ञानवान् न भवति ।

300. 'नाऽन्योऽतोऽस्ति द्रष्टृ' (बृ. उ. 5–8–10) 245

परमात्मनः सदृशः, अन्यैः अदृष्टत्वे सति निरुपाधिकद्रष्टृत्वाश्रयभूतं, परमात्मनोऽन्यत् किमपि नास्ति ।

301. 'नाम ब्रह्म' (छां. उ. 7–1–5) 168

नाम्नि—बोधके शब्दे ब्रह्मदृष्ट्या (उपासनं कर्तव्यम्) ।

302. 'नामरूपयोर्निर्वहिता' (छां. उ. 8–14–1) [प्र. सं. 85 द्रष्टव्यम्] 319

303. 'नामरूपे व्याकरवाणि' (छां. उ. 6–3–2) [प्र. सं. 609 द्रष्टव्यम्] 395

304. I 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥'

(कठ. उ. 2–23) 152

II 'नाऽयमात्मा.... श्रुतेन' 342

प्रस्तुतः एष परमात्मा तत्प्रसन्नतायामपर्यवसितैः केवलैः श्रवण-मनन-निदिध्यासनैः अतिशयेन कृतैरपि नैव लब्धुमर्हः । स एव परमात्मा यादृशमुपासकं स्वसायुज्यं प्रापयितुमिच्छुः सन् स्वीकरोति ; तस्यैव सः स्वात्मानं स्वीयस्वरूपगुणविग्रहादिभिः सह अनुभवविषयतां नयति । प्रीतिरूपापन्नेन ध्यानेनैव लभ्यो भवति ।

305. 'नाऽस्याऽब्रह्मवित्कुले भवति' (मुण्ड. उ. 3-2-9) 166

प्रीतिरूपापन्नदर्शनसमानाकारध्यानेन (उपासनेन) आविर्भूतब्राह्मरूपस्य ज्ञानिनश्चेतनस्य कुले, ब्रह्मानुपासको जनः नैव जायते ।

306. 'निरञ्जनम्' (श्वे. उ. 6-19) [प्र. सं. 309 द्रष्टव्यम्] 87

307. 'निरुक्तं च.........सत्यमभवत्' (तै. उ. आन. 6-3) [प्र. सं. 201 द्रष्टव्यम्] 122

308. 'निर्गुणः' (श्वे. उ. 6-11) 87

सकलप्रपञ्चनिर्मातृत्वेऽपि गुणत्रयवश्यत्वाभाववान् परमात्मैक एव ।

309. निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' (श्वे. उ. 6-19) 400, 410

निरवयवं, कृतकृत्यत्वात् निष्क्रियम्, अशनायाद्यूर्मिषट्करहितम्, आश्रितपराङ्मुखत्वाद्यवद्यरहितम्, असङ्गस्वभावं परं ब्रह्म ।

310. 'निष्ठा त्वेव विजिज्ञासितव्या' (छां. उ. 7-20-1) 234

ब्रह्मश्रवणोपायभूतां त्वरात्मिकां श्रद्धां सम्पादयितुं, तस्याप्युपायभूता 'ब्रह्मैव श्रोतव्यं, नाऽन्यत्' इत्येवंव्यवसायरूपा निष्ठाऽपि अवश्यं सम्पाद्या ।

311. 'नैतद्ब्राह्मणो विवक्तुमर्हति समिधं सोम्याहर' (छां. उ. 4-4-5) 308

(सत्यकामं जाबालं प्रति गौतमोक्तं प्रतिवचनमिदम्) सोमार्ह ! माणवक ! त्वदीयजन्मकर्मादिविषये मातुः सकाशात् वास्तवांशं गृहीत्वा, त्वया यत् वास्तवं वच उक्तम्; एतादृशम् आर्जवयुक्तं वचः अत्रैवर्णिकः चतुर्थवर्णीयादिः विशेषेण वक्तुं समर्थो न भवति। विषये वक्तव्ये किञ्चिदपि अनृजु असत्यं मिश्रीकरोत्येव । त्वं तु अतादृशः ऋजुभाषी वर्तसे। सन्तोष्टव्यमेतत् । उपनयनसंस्कारं चिकीर्षामि तत्र। तदुपयोगिनीं समिधमानय ।

312. 'नैवेह किञ्चनाग्र आसीदमूलमनाधारमिमाः प्रजाः प्रजायन्ते, दिव्यो देव एको नारायणः । चक्षुश्च द्रष्टव्यं च नारायणः । श्रोत्रं च श्रोतव्यं च नारायणः' (सुबा. उ. 6) 178

सृष्टेः प्राक् अस्मिंस्तमो(प्रकृति)मण्डले उत्पत्ति-स्थित्योः परसापेक्षकार्यवस्तुविलक्षणम्, स्थितौ परसापेक्षनित्यपदार्थविलक्षणं च यत् आद्यं कारणं तत् किञ्चिद्रूपेण नासीत्; ततः इमाः प्रजाः प्रजायन्ते—चेतनाचेतनात्मकं सर्वं जगत् जायते। परमव्योमनिलयः ज्योतिर्मयस्वरूपः नारायणपदवाच्यः परमात्मैक एव सृज्यमानानां सर्वासां प्रजानां कारणभूतोऽभवत्, रूपग्रहणसाधनं चक्षुराख्यमिन्द्रियं, तद्विषयभूतं रूपम्, तथा शब्दग्रहणसाधनं श्रोत्राख्यमिन्द्रियं, तद्गोचरः शब्दः, इत्यादिकं सर्वं नारायणेनैवाधिष्ठितं सत् स्वसत्तां लभते।

313. **'पञ्चजनाः'** (बृ. उ. 6–4–17) [प्र. सं. 438 द्रष्टव्यः] 356

314. **'पञ्च पञ्चजनाः'** (बृ. उ. 6–4–17) [प्र. सं. 438 द्रष्टव्यः] 356

315. **'पतिं विश्वस्याऽऽत्मेश्वरम्'** (तै. ना. उ. 11–3) 20

चेतनाचेतनात्मकसर्वजगन्नियन्तारं, सर्वेषां मातापितृवत् वात्सल्येन पालकं, स्वशासकव्यक्त्यन्तररहितं—स्वाधीनसर्वैश्वर्यं नारायणाख्यं परं ब्रह्म उपजीव्य सर्वं विश्वम् वर्तते।

316. **'परं....पुरुषम्'** (प्रश्न. उ. 5–5) 248

(पूर्वप्रस्तुतं) उत्तमं पुरुषं परमात्मानं (मात्रात्रयमितेन 'ओम्' इत्यनेन प्रणवेन यस्तु ध्यायति—उपास्ते, स उपासकः तेजोमण्डले सूर्ये सम्पन्नः सन् सर्वपापरहितो भवति)।

317. **'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यते'** (छां. उ. 8–12–2) 317

(सम्प्रसादाख्यः एष जीवः) देशविशेषविशिष्टं परं ब्रह्म अर्चिरादिना मार्गविशेषेण प्राप्य, संसारावस्थाप्रहाणपूर्वकम् अपहतपाप्मत्वादिना परमात्मतुल्यरूपेण आविर्भवति।

318. **'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'**
(श्वे. उ. 6–8) [प्र. सं. 289 द्रष्टव्यः] 7

319. **'परीक्ष्य लोकान्'** (मुण्ड. उ. 1–2–12) 192

(यः अधीतसाङ्गसशिरस्कवेदः त्रैवर्णिकः सः, यागादिभिः कर्मभिः

सम्पाद्यान्) आराध्यदेवतानां क्षयित्वेन क्षयस्वभावान् भोग्यान् वा न्यायपूर्वकं परीक्ष्य ('नित्यः परमपुरुषः अनित्येन साध्येन कर्मणा न लभ्यते' इति वैराग्यं प्राप्नुयात्) ।

320. **'पर्णमयी जुहूः'** (तै. ब्रा. 1-1-24) 64

'जुहू'नामकं यागीयहोमसाधनं पात्रं 'पर्ण'शब्दवाच्यपलाशवृक्ष-प्रकृतिकं कार्यम् ।

321. **'पश्यत्यचक्षुः स शृणोत्यकर्णः'** (श्वे. उ. 3-19) 179

परमात्मा, चक्षुरिन्द्रियमनुपजीव्यैव रूप-तद्वतोः साक्षात्कर्ता ; श्रोत्रेन्द्रिय-मनुपजीव्यैव शब्दग्रहणसमर्थः ।

322. **'पादोऽस्य सर्वा भूतानि। त्रिपादस्याऽमृतं दिवि'** (छां. उ. 3-12-6) 106, 108

प्रस्तुतस्य गायत्रीरूपस्य ब्रह्मणः पादत्रयं, समष्टि-व्यष्टितत्त्वबहिर्भूते अप्राकृते स्थानविशेषे द्युपदवाच्ये विजृम्भते ।

323. **'पितृहा....मातृहा'** (छां. उ. 7-15-2) 227

(पितृ मात्रादिकं सर्वं प्राण एव, प्राणवतां पितृ-मात्रादीनां धिक्कारे कृते, किञ्चिदिव अधिक्षेपे कृतेऽपि, तं जनाः) 'त्वं पितृहन्ता, त्वं मातृहन्ता' (इत्यादि व्यवहरन्ति खलु !) ।

324. **'पिबन्त्येनां....वशानुगाम्'** (मन्त्रि. उ. 1-6) [प्र. सं. 499 द्रष्टव्यः] 344

325. **'पुरुष एवेदं सर्वम्'** (तै. आर. पु. 3-12-2) 206

यदिदं वर्तमानं कार्यजातं, तत्सर्वं पुरुष एव—परमपुरुष एव ; सर्वस्य परमपुरुषोपादानकत्वात् ; न हि उपादानेन विना कार्यमस्ति ।

326. I **'पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः'** (कठ. उ. 3-11) 329, 332

II **'पुरुषान्न परं किञ्चित्'** [प्र. सं. 115 द्रष्टव्यः] 338

327. **'पुरुषो हिरण्मयः'** (अग्निर. 10-10-6) [प्र. सं. 517 द्रष्टव्यः] 143

328. **'पृथिवी पुच्छं प्रतिष्ठा'** (तै. उ. आन. 2-3) 29

अन्नमयसदृशतया शिरः-पक्ष-पुच्छादिमत्त्वेन पञ्चविधो यः प्राणमयः, तदात्मभूतस्य आकाशस्य प्रतिष्ठाहेतुभूता पृथिवी, पुच्छवतां प्राणिनां स्थित्यनुकूलं पुच्छमिव पुच्छमित्युच्यते ।

329. I **'पृथिव्यप्सु प्रलीयते, आपस्तेजसि लीयन्ते, तेजो वायौ लीयते, वायुराकाशे लीयते, आकाशमिन्द्रियेषु, इन्द्रियाणि तन्मात्रेषु, तन्मात्राणि भूतादौ लीयन्ते, भूतादिर्महति लीयते, महानव्यक्ते लीयते, अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते, तमः परे देव एकीभवति'** (सुबा· उ· 2) 414

II **'पृथिव्यप्सु लीयते'** 336

पृथिवी पृथिव्यवस्थां तदुपक्रमभूतां गन्धतन्मात्रावस्थां च हित्वा, अम्ब्ववस्था सती प्रागवस्थितेषु समुद्रादिजलेषु संसृष्टा भवति । निरन्तर-संश्लेषमापन्ना सती एकतामापन्नेत्युच्यते । त्यक्तजलावस्थाः त्यक्तरस-तन्मात्रावस्थाश्च आपः, तेजोवस्थाः सत्यः प्रागवस्थिततेजसा सम्पृक्ताः तदेकतां प्राप्ता भवन्ति । तेजश्च त्यक्ततेजोवस्थं त्यक्तरूपतन्मात्रावस्थं च वाय्ववस्थं सत्, प्रागवस्थिते वायौ लीयते—एकतां प्राप्नोति । वायुश्च त्यक्तवाय्ववस्थः त्यक्तस्पर्शतन्मात्रावस्थश्च सन् आकाशावस्थामापन्नः, प्रागवस्थिते आकाशे एकतां—लयं गच्छति । आकाशं च त्यक्ताकाशा-वस्थं शब्दतन्मात्रावस्थं सत् इन्द्रियैः सह संसृष्टं भवति । पूर्वम् आकाशसंसृष्टानि इन्द्रियाणि पश्चात् शब्दतन्मात्रेषु संसृष्टानि भवन्ति । शब्दतन्मात्रांशाः अहङ्कारे लीनतां गच्छन्ति । अहङ्कारश्च महदाख्ये तत्त्वे, महत्तत्त्वं च गुणसाम्यलक्षणे अव्यक्ते ; तच्च अव्यक्ताख्यं तत्त्वम्, अस्फुटगुणसाम्यलक्षणे चेतनसमष्टिगर्भे अक्षरपदवाच्ये तत्त्वे ; तच्च अक्षरम् अतिसूक्ष्मे प्रधानपदवाच्ये विभक्ते तमसि, अक्षराद्यवस्थाप्राप्त्यौन्मुख्य-विशिष्टे तत्त्वे च यथाक्रमं लीयन्ते । तच्च विभक्तं तमः अविभक्ततम-श्शब्दाभिलप्ये अक्षराद्यवस्थाप्राप्त्यौन्मुख्यरहिते तमसि— तादृशतम-श्शरीरके परमात्मनि एकतामापद्यते—शरीर-शरीरिभावोऽपि यथा वक्तुं न शक्येत तथा संश्लिष्टं भवति ।

330. **'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च'** (कौषी उ. 3–1) 113

दिवोदासनाम्नः क्षत्रियस्य पुत्रः प्रतर्दननामा क्षत्रियः युद्धसाधनभूतेन बलेन स्वाभाविकेन शौर्येण च युक्तः सन् इन्द्रेणाहूतः, इन्द्रस्य देवराजस्य भोगस्थानतया अत्यन्तं प्रियतमं स्वर्गाख्यं स्थानं प्राप्तवान् ।

331. **'प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः'** (श्वे. उ. 6–16) 346

प्रधान-क्षेत्रज्ञपदाभिधेययोः प्रकृति-पुरुषयोः—अचित्तत्त्वस्य चित्तत्त्वस्य स्वामिभूतः, ज्ञानवीर्यबलैश्वर्यवीर्यतेजोरूपाणां षड्गुणानाम् आश्रयः, त्रिगुणातीतो वा परमात्मा, अनात्मभिरात्मानमेकीकृत्यावस्थितिरूपस्य संसारबन्धस्य तदनुवृत्तेः तन्निवृत्तेश्च व्यवस्थापको हेतुः ।

332. **'प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता'** (छां. उ. 1–10–9) 101

हे प्रस्तोतृनामक ऋत्विक्! प्रस्तावाख्यायां सामभक्तौ अध्यस्य उपास्या या देवता वर्तते; (सा अवश्यं वेद्या) ।

333. **'प्राज्ञेनाऽऽत्मनाऽन्वारूढ उत्सर्जन् याति'** (बृ. उ. 6–3–35) 323

(शकटस्थानीयः अयं शारीरात्मा जीवः) सारथिस्थानीयेन सर्वज्ञेन परमात्मना सम्बन्धविशेषं प्राप्तः सन् शरीरमुत्सृज्य याति ।

334. I **'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद, नाऽऽन्तरम्'** (बृ. उ. 6–3–21) 16, 323, 379

II **'प्राज्ञेना....ष्वक्तः'** 17

परमप्रियेण सर्वज्ञेन परमात्मना सम्परिष्वक्तः—सम्यक् संश्लिष्टः अयं जीवः, बाह्यमान्तरं वा किमपि स्वेतरत् सर्वं वस्तु नैव जानाति ।

335. **'प्राणं च हाऽस्मै तदाकाशं चोचुः'** (छां. उ. 4–10–5) 170

सत्यकामजाबालान्तेवासिने उपकोसलाय, तदुपासिता अग्नयः, सर्वजगत्प्राणनहेतुत्वेन 'प्राण'शब्दवाच्यं, तथा आनन्दमयत्वेन अपरिच्छिन्नसुखरूपतया आकाशपदाभिधेयं च परमात्मानम् उपदिष्टवन्तः ।

336. **'प्राण इति....व्यपतिष्यत्'** (छां. उ. 1–11–5) [प्र. सं. 164 द्रष्टव्यम्] 101

337. **'प्राणमयः'** (तै. उ. आन. 2–1) 27

अन्नमयादन्यः अन्नमयादन्तरः पञ्चवृत्तिः प्राणः, प्राणनवृत्तिबाहुल्येन प्राणमयशब्दवाच्यः ।

338. **'प्राणस्य प्राणः'** (केन. उ. 1-2) 133

प्राणस्य प्राणनाख्यव्यापारं प्रति हेतुभूतः, प्राणानधीनप्राणनश्च देहिवत् प्राणाख्यवाय्वनधीनसत्ताकः परमात्मा ।

339. I **'प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रम् अन्नस्याऽन्नं मनसो ये मनो विदुः'** (बृ. उ. 6–4–18) 359

II **'प्राणस्य प्राणम्'** 359

III **'प्राणस्य'** 360

प्राणपदवाच्यवाय्वाप्यायितस्पार्शनेन्द्रियस्याऽपि स्पर्श-तदाश्रयग्रहण-शक्त्याधायकम्, चक्षुरिन्द्रियस्याऽपि रूप-तदाश्रयग्रहणशक्त्याधायकम्, श्रोत्रेन्द्रियस्य शब्दग्रहणशक्त्याधायकम्, रसनेन्द्रियस्य रसग्रहणशक्त्या-धायकम्, मनइन्द्रियस्य मननशक्त्याधायकं च वस्तु ये जानन्ति, (ते सर्वेषामुपरि वर्तमानम्, सर्वेभ्यः पूर्वतनं परं ब्रह्म निश्चिनुयुः) ।

340. **'प्राणाधिपः सञ्चरति स्वकर्मभिः ॥
अङ्गुष्ठमात्रो रवितुल्यरूपः सङ्कल्पाहङ्कारसमन्वितो यः ।'**

(श्वे. उ. 5–7, 8) 277

जीवात्मा प्राणसहचरितः सन् स्वीयेन पूर्वपूर्वकर्मपाशेन बद्धः अनिर्दिष्टावधिकं यथा तथा संसारमार्गे निरन्तरं चरति ; स हि जीवात्मा अङ्गुष्ठप्रमाणपरिमितस्वहृदयस्थानावस्थितः, स्वभावतः स्वयंप्रकाशज्ञाना-कारः, बन्धकेन फलसङ्कल्पेन, तथा विद्याभिजनादिकृतेन अहङ्कारेण युक्तो भ्रमति ।

341. I **'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म'** (छां. उ. 4–10–5) 164, 169

II **'प्राणो ब्रह्म'** 164

यः सर्वस्य जगतः प्राणयिता सः ब्रह्म, आनन्दस्वरूपं ब्रह्म, अपरिच्छिन्नस्वरूपं ब्रह्म, (यद्वा) निरतिशयापरिच्छिन्नानन्दस्वरूपं ब्रह्म ।

342. **'प्राणो ब्रह्मेति व्यजानात्'** (तै. उ. भृ. 3–1) 77

(सर्वेषां प्राणिनां जन्मस्थितिलयकारणभूतः ।) प्राण एव ब्रह्मलक्षण-सम्पन्न इति ज्ञातवान् भृगुः ।

343. **'प्राणोऽस्मि प्रज्ञात्मा, तं मामायुरमृतमित्युपास्व'** (कौषी. उ. 3–14) 116

हे प्रतर्दन ! प्रज्ञात्मपदवाच्यजीवशरीरकः अहं प्राणशरीरकोऽस्मि । जीवप्राणशरीरकं माम् 'आयुः' इति 'अमृतम्' इति च उपासनं कुरु (इति इन्द्र उवाच) ।

344. **'प्राणो ह पिता प्राणो ह माता'** (छां. उ. 7–15–1) 227

पितृ-मात्रादिपदाभिधेयोऽप्यर्थः जीव एव खलु !

345. **'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म ।**
**एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्यू ते पुनरेवापियन्ति ॥'**
(मुण्ड. उ. 1–2–7) 191

परमपुरुषाराधनत्वेषतारहितयज्ञादिकर्मप्रधानाः पुरुषाः, जीर्णा नौका इव स्वात्मनः संसारवारिधितारणे असमर्था एव भवन्ति ; तैरनुष्ठीयमानेषु येषु कर्मसु षोडशसङ्ख्याका ऋत्विजः, पत्नी, यजमानश्चेति अष्टादश-संख्याकत्वमुक्तम्, फलाभिसन्धिसत्वेन बन्धकत्वात् कर्मणो निकृष्टता च । ईदृशं बन्धापरपर्यायैहिकामुष्मिकफलसाधनभूतं कर्माऽपि श्रेयस्साधनमिति ये हृष्यन्ति, ते मोहमापन्नाः सन्तः कर्मारब्धसुखानुभवसमाध्यनन्तरं पुनः-पुनः पूर्वानुभूतसदृशजरामरणचक्रे एव प्रविष्टा भवन्ति ; न तु बन्धान्मुक्ता भवन्ति ।

346. **'बहुदायी'** (छां. उ. 4–1–1) 305

(पुत्र नाम्नः क्षत्रियस्य पौत्रः जानश्रुतिनामा स क्षत्रियः) याचकेभ्यः अतीव दानपरायणः याचिताधिकदायी आसीत् ।

347. **'बहुधा जायमानः'** (मुण्ड. उ. 2–2–6) [प्र. सं. 58 द्रष्टव्यः] 218

348. **'बहुपाक्यः'** (छां. उ. 4–1–1) 305

(पौत्रायणः जानश्रुतिनामा क्षत्रियः गृहे अतिथीनामभ्यागतानां च परिवेषणाय) अधिकतया अन्नपाकस्य कारयिता आसीत् ।

349. 'बहु स्याम्' (छां. उ. 6-2-3) [प्र. सं 210 द्रष्टव्यम्] 55, 190, 291

350. I 'बह्वीः प्रजाः सृजमानां सरूपाः' (श्वे. उ. 4-5) 347

II 'बह्वीः प्रजाः सृजमानाम्' [प्र. सं. 12 द्रष्टव्यम्] 348

351. 'बुद्धेरात्मा महान् परः' (कठ. उ. 3-10)

[प्र. सं. 115 द्रष्टव्यम्] 333, 339, 342

352. 'ब्रह्म च क्षत्रं च' (कठ. उ. 2-25) [प्र. सं. 451 द्रष्टव्यम्] 151

353. 'ब्रह्मचारिन् नेदमुपास्महे' (छां. उ. 4-3-7) 306

हे ब्रह्मचारिन् ! वयं न त्वदुक्तस्वरूपं प्रजापतिं संवर्गत्वेन उपास्महे ; (किन्तु परमात्मानमेव संवर्गतया उपासनं कुर्महे) ।

354. 'ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति'

(कठ. उ. 1-17) 155

ब्रह्मणो जातत्वात् ज्ञत्वाच्च ब्रह्मजज्ञपदवाच्यं जीवात्मानं स्वमुपासकम्, उपास्यभूतब्रह्मात्मकत्वेन शास्त्रतोऽवगम्य, पश्चात् उपासनेन स्वात्मानं ब्रह्मात्मकत्वेन साक्षात्कृत्य, एतन्मन्त्रपूर्वार्धप्रतिपादितां जन्म-जरा-मृत्यु-पदाभिधेयसंसारतरणात्मिकां शान्तिं पुनर्भवराहित्येन अवाप्नोति ।

355. 'ब्रह्म ते ब्रवाणि' (कौषी. उ. 4-4) 369, 374 376

(हे अजातशत्रो ! काशीराज !) तुभ्यं ब्रह्म उपदिशामि (इति गार्ग्यो बालाकिरुवाच) ।

356. 'ब्रह्म पुच्छं प्रतिष्ठा' (तै. उ. आन. 5-2) 27, 28, 29

अत्र पुच्छशब्दः पुच्छस्यापि मूलभूतं पृष्ठास्थि ब्रह्मदण्डं विवक्षेत इति भाति ; तस्मिन् पृष्ठास्थन्येव देहगतसर्वव्यापारमूलभूताः अंशाः सम्बद्धा इति आयुर्वेदयोगशास्त्रादितोऽवगम्यते । अतः पुच्छशब्दः आधारपरः । आधारभूतस्यैव ब्रह्मणः प्रकृष्टस्थितिहेतुत्वात् प्रतिष्ठात्वम् । आनन्दप्रचुरे परमात्मनि ब्रह्मत्वेन रूपेण तस्य निरतिशयानन्दाधारत्वम्—इत्यर्थः ।

357. 'ब्रह्म वनं ब्रह्म स वृक्ष आसीत्, यतो द्यावापृथिवी निष्टतक्षुः ।
मनीषिणो मनसा विब्रवीमि वः, ब्रह्माध्यतिष्ठद्भुवनानि धारयन्'
(तै. ब्रा. 2-8-9-16) 409

यदुक्तं मनीषिणां प्रश्नत्रयं तस्य आचार्यः उत्तरं ब्रूते । यस्माद्वनजन्याद्वृक्षात् द्यावापृथिव्यौ निर्मिमीते, तादृशवनस्थानीयं, तादृशवृक्षस्थानीयं च ब्रह्मैव ; तस्य सर्वशक्तित्वात् यस्योत्पाद्यस्य या सामग्री अपेक्षिता, सा सर्वा तस्मिन् ब्रह्मण्येव विद्यते । तदेव ब्रह्म सर्वाणि भुवनानि स्वस्मिन् धारयति, स्वयमेव नियमयति च । हे मनीषिणः! आचार्योऽहं मनसा निश्चित्य युष्मभ्यं विविधमुत्तरं ब्रवीमि ; निश्चिनुतार्थम् ।

358. 'ब्रह्मलोकमभिसम्भवानि' (छां. उ. 8-13-1) [प्र. सं. 66 द्रष्टव्यम्] 321

359. 'ब्रह्मविदाप्नोति परम्' (तै. उ. आन. 1-1) 26, 27, 28, 35

निरतिशयबृहत्त्वाश्रयब्रह्मोपासकः सर्वोत्कृष्टं स्वोपास्यं ब्रह्मैव प्राप्नोति ।

360. I 'भयादग्निः.........पञ्चमः' (कठ. उ. 6-3) 316

II भयादग्निस्तपति' [प्र. सं. 426 द्रष्टव्यम्] 316

361. I 'भीषास्माद्वातः पवते, भीषोदेति सूर्यः ।
भीषास्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चमः' (तै. उ. आन. 8-1) 316

II 'भीषा....पवते' 366

अस्य परमात्मनः शासनातिक्रमणे अत्यन्तं भयेन वायुदेवः स्वीये कर्मणि जागरूकः सन् वाति । सूर्योऽपि भीतः सकले उदयकर्मणि सक्तो भवति । तथा अग्नीन्द्रमृत्यवोऽपि स्वस्वकर्मनिर्वाहार्थं सम्भ्रमेण त्वरितगत्या चलन्ति ।

362. 'भूमा त्वेव विजिज्ञासितव्यः' (छां. उ. 7-23-1) 228, 235

गुणोत्कर्षरूपवैपुल्याश्रयः परमात्मैव (अत्यन्तानुकूलत्वात् चेतनानां) ज्ञातव्यः, परमात्मनि विपुलसुखरूपता ज्ञातव्या इत्यर्थः ।

363. 'भो भोयि भल्लाक्ष! भल्लाक्ष! जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततम् । तन्मा प्रसाङ्क्षीस्तत्त्वा मा प्रधाक्षीत्' (छां. उ. 4-1-2) 303

भो भो अयि भल्लाख्यशस्त्रवत् सूक्ष्मार्थभेदकदृष्टियुक्त! (तात्पर्यतः) मन्दलोचन! पुत्रनाम्नः पुत्रस्य जानश्रुतिनाम्नो राज्ञः तेजः, स्वर्गप्रकाशकेन सूर्यप्रकाशेन सदृशं सर्वत्र प्रसृतं वर्तते। तस्मिंस्तेजसि प्रसक्तो मा भूः। तच्च तेजः त्वां मा दहतु। ('सावधानश्चर' इति एको हंसः अपरं हंसमभिमुखीकृत्य उवाच)।

364. **मघवन्! मर्त्यं वा इदं शरीरम् आत्तं मृत्युना, तदस्यामृतस्यात्मनोऽधिष्ठानम्'** (छां. उ. 8–12–1) 268

हे मघवन्! इदं शरीरमेव हि मरणधर्मि। न केवलं मरणधर्मि; अपि तु मृत्युना व्याप्तमपि (आक्रान्तम्, सततविनाशशीलम्)। एवम्भूतमिदं शरीरं कर्मकृतशरीरराहित्यलक्षणामृतत्वस्वरूपस्यात्मनः भोगाधिष्ठानम्। कर्मवश्येन जीवेन भोगार्थं परिगृहीतम्।

365. **'मतिस्त्वेव विजिज्ञासितव्या'** (छां. उ. 7–18–1) 234

ब्रह्मोपासनोपायभूतं मननमेव सम्पाद्यम्।

366. **'मत्वा धीरो हर्षशोकौ जहाति'** (कठ. उ. 2–12) [प्र. सं. 189 द्रष्टव्यः] 340

367. **'मनो ब्रह्मेति व्यजानात्'** (तै. उ. भृ. 4–1) 77

आदौ उक्तं यत् ब्रह्मलक्षणं, मनसः तद्युक्तत्वज्ञानेन 'मनः ब्रह्म' इति वरुणपुत्रो भृगुः तपसा ज्ञानं प्राप्तवान्।

368. **'मनो.........ब्रह्म'** (छां. उ. 7–3–2) 168

वागाद्यपेक्षया बृहत्त्वात् मनो हि ब्रह्म। (अतः मनोरूपम् इन्द्रियं, 'ब्रह्म' इति बुद्ध्या उपासनं कुर्यात्।)

369. **'मनोमयः'** (तै. उ. आन. 3–2) 27

अन्नमय-प्राणमययोः मनोमय एव आत्मा। वृत्तिप्रचुरं मनः मनोमयः; मनो-बुद्ध्यहङ्कारचित्ताख्यान्तःकरणवृत्तिषु मनोवृत्तेः प्रचुरत्वात्।

370. I **'मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः'**

(छां. उ. 3–14–2) 139, 146

II 'मनोमयः प्राणशरीरः' 129, 131

परमात्मा हि ! विवेकाद्यनुगृहीतोपासननिर्मलीकृतान्तःकरणमात्रग्राह्यः, आधेय-विधेय-शेषभूतप्राणस्वरूपकः, नित्यनिरतिशयदीप्तिमद्दिव्यमङ्गलविग्रहसम्पन्नः, येन केनाऽपि, यदा कदाप्यप्रतिहतस्वसङ्कल्पः, आकाशवत् सूक्ष्मस्वच्छस्वरूपः, अव्याकृताकाशपदवाच्यस्य प्रधानस्यापि आत्मभूतः, सर्वजगन्निर्माता, सर्वकर्मसमाराध्यः, अत्यन्तपरिशुद्धभोग्यभोगोपकरणसमृद्धः, अप्राकृतस्वासाधारणगन्धादिमान् सर्वमपि कल्याणगुणं स्वीकृत्य, अवाप्तसमस्तकामतया गाम्भीर्येण तूष्णीमवस्थितः ।

371. 'मनोमयः प्राणशरीरनेता' (मुण्ड. उ. 2-2-8) 132

परमात्मा रजस्तमोभ्यामस्पृष्टेन सत्त्वप्रचुरेणान्तःकरणेनैव साक्षात्करणीयः, जीवात्मनां जीवनोपयोगिनोः प्राणशरीरयोः संयोजकः । प्राणशरीरकः सन् सर्वप्रभुर्वा ।

372. 'मनो वाव वाचो भूयः' (छां. उ. 7-3-1) 226

मनः वागपेक्षया अतिशयितं वर्तते ; (वागादिप्रवृत्तेः मननलक्षणमनोव्यापाराधीनत्वात् ) ।

373. 'मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा सन्ततानि । तान्याचरत नियतं सत्यकामाः' (मुण्ड. उ. 1-2-1) 191

कविपदवाच्याः अतीन्द्रियार्थदर्शनप्रवणा महर्षयः स्वदृष्टेषु मन्तव्यार्थप्रधानेषु अग्निहोत्र-दर्शपूर्णमासादीनि यादृग्विधानि चेतनहितोद्देशेन विहितानि कर्माणि ज्ञातवन्तः, तानि सर्वाण्यपि वैतानिकाग्निषु नैरन्तर्येण कर्तव्यतया दृष्टानि । तादृशानि कर्माणि यूयं, सत्यशब्दाभिधेयं परं ब्रह्म कामयमाना एव अनुतिष्ठत ; न तु क्षयिष्णुफलकामाः ।

374. 'महः पुच्छं प्रतिष्ठा' (तै. उ. आन. 4-2) 30

श्रद्धा-ऋत-सत्य-योगाद्यात्मकज्ञानविशेषावच्छिन्नस्य आत्मपदवाच्यस्य चेतनस्य, स्वरूपरक्षकतया धारकं, पुच्छपदलक्ष्यमूलाधारवत् स्थितं, महःपदवाच्यं योगानुष्ठानविरोधिनिरसनसामर्थ्यम् ।

375. I 'महतः पर....परा गतिः' (कठ. उ. 3–11) 328
II 'महतः पर....पुरुषः परः' [प्र. सं. 115 द्रष्टव्यम्] 329

376. 'महद्भयं वज्रमुद्यतम्' (कठ. उ. 6–2) [प्र. सं. 426 द्रष्टव्यम्] 316

377. 'महद्भूतमनन्तमपारम्' (बृ. उ. 4–4–12) 387
(तोयस्थविलीनलवणवत्) सर्वेभ्यश्चेतनेभ्योऽचेतनेभ्यश्च अतिशयितं स्वरूपतः स्वभावत(गुणत)श्च अपरिच्छेद्यं परं ब्रह्म, (सर्वात्मकम्)।

378. 'महानव्यक्ते लीयते, अव्यक्तमक्षरे' (सुबा. उ. 2) [प्र. सं. 329 द्रष्टव्यम्] 405

379. 'महान्तं विभुमात्मानं मत्वा धीरो न शोचति' (कठ. उ. 2–22) 152
सर्वातिशायि विस्मयावहवैभवशालिनं निखिलचेतनाचेतनान्तर्यामिणं परमात्मानं साक्षात्कृत्य प्रज्ञाशाली अवस्थितः विद्वान्, निवृत्तसांसारिकदुःखो भवति।

380. 'माम्....उपास्व' (कौषी. उ. 3–14) 114, 118, 119
(जीव-प्राणशरीरकं) माम् (इन्द्ररूपेण तत्र बाह्यचक्षुषो गोचरम्) आयुरिति अमृतमिति बुद्ध्या उपास्व।

381. 'मामेव विजानीहि' (कौषी. उ. 3–8) 116, 119
इन्द्रशरीरकं परमात्मस्वरूपं माम्, निखिलेतरपरित्यागपूर्वकम् उपास्व—अविरतं चिन्तय।

382. I 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्॥' (श्वे. उ. 4–10) 345
II 'मायां तु........महेश्वरम्' 350, 401
ईश्वराधिष्ठितां विचित्रार्थसर्गकरीं प्रकृतिमेव, मायापदाभिधेयां जानीयात्। तदधिष्ठातारं तु महेश्वरं जानीयात्। तदपृथक्सिद्धतया तदंशभूतैरेव जीवैः सर्वमचेतनात्मकं जगत् व्याप्तं वर्तते।

383. 'मृत्युर्यस्योपसेचनम्' (कठ. उ. 2–25) [प्र. सं. 451 द्रष्टव्यम्] 151

384. 'मृषा वै खलु मा संवादयिष्ठाः' (कौषी. उ. 4–25) 374
(हे बालाके! 'ब्रह्म ते ब्रवाणि' इति) अनृतया वाचा अब्रह्मवादात्मकं संवादमेव कारितवानसि खलु इति, (अजातशत्रुरुवाच)।

385. 'यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति, तेन सम्पन्नो महीयते' (छां. उ. 8-2-10) 255

यादृशयादृशं फलमिष्टमभिलषति, तत्सर्वमपि अस्य मुक्तात्मनः सङ्कल्पात्मकेन ज्ञानविशेषेणैव अस्य सिद्धं भवति । तेन चाऽयं मुक्तात्मा समृद्धो भवति, प्रशस्यते च ।

386. 'यं पृथिवी न वेद' (सुबा. उ. 7) [प्र. सं. 43 द्रष्टव्यः] 179

387. यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत, स तेजसि सूर्ये सम्पन्नः । यथा पादोदरस्त्वचा विनिर्मुच्यते, एवं ह वै स पाप्मना विनिर्मुक्तः, स सामभिरुन्नीयते ब्रह्मलोकं, स एतस्मात् जीवघनात् परं पुरिशयं पुरुषमीक्षते' (प्रश्न. उ. 5-5) 247

यः परमपुरुषोपासकः, पूर्वम् अर्वाचीनफलार्थमुपासनायोक्तेन अकारोकारमकारात्मकाक्षरत्रयघटितेनैव 'ओम्' इत्यनेन मात्रात्रयप्रमितेन सता परमात्मानम् आभिमुख्येन निरन्तरं ध्यायति, सः ध्याता तेजोमण्डलात्मके सूर्ये सङ्गतः सन्, जीर्णया प्राक्तनत्वचा विनिर्मुच्यमानः सर्प इव, जन्मजन्मान्तरार्जितेन पापसञ्चयेन विनिर्मुक्तः सन् सामपदवाच्यैः तृतीयस्थानस्थैर्मन्त्रैः ब्रह्मलोकं प्राप्यते, एतत्संसारिमण्डलात्परभूताच्चतुर्मुखादपि सर्वान्तरात्मानं परमात्मानं साक्षात्करोति ।

388. I 'यः पृथिवीमन्तरे सञ्चरन्, यस्य पृथिवी शरीरम् । ........ योऽपोऽन्तरे सञ्चरन्, यस्यापश्शरीरम्' (सुबा. उ. 7) 57

II 'यः पृथिवीमन्तरे....पृथिवी न वेद' 404

यः परमात्मा पृथिवी-जलयोरन्तस्तिष्ठन्, पृथ्वी जले च यं परमात्मानं प्रति आधेयत्व-विधेयत्व-शेषत्ववती, यं च स्वान्तरेवाऽवस्थितमपि पृथिवी नैव वेदितुं शक्नोति ; सः दिव्यो देव एको नारायणः ।

389. I 'यः पृथिव्यां तिष्ठन् पृथिव्यामन्तरो यं पृथिवी न वेद ।
यस्य पृथिवी शरीरम् । यः पृथिवीमन्तरो यमयति ।
एष त आत्मान्तर्याम्यमृतः' (बृ. उ. 5-7-7) 57, 174, 412

II 'यः पृथिव्यां....यमयति' 405

III 'यः पृथिव्यां तिष्ठन्' 177

यः परमात्मा अन्तःपृथिव्यां तिष्ठन्, यस्यैव च पृथिवी आधेयत्व-विधेयत्व-शेषत्ववती, यं च स्वान्तरेवावस्थितमपि पृथिवी नैव वेदितुं शक्नोति, यः पृथिवीमन्तःप्रविश्य तत्प्रवृत्ति-निवृत्तिनियमनं करोति, निरुपाधिकामृतत्वशाली स परमात्मैव तवात्मा ॥

390. I 'य आत्मनि तिष्ठन्, आत्मनोऽन्तरः, यमात्मा न वेद, यस्यात्मा शरीरम्। य आत्मानमन्तरो यमयति। स त आत्मान्तर्याम्यमृतः' (बृ. उ. मा. पा. 5-7-26) 57, 90, 182, 394, 405

II 'य आत्मनि....यमयति' 90, 120, 263

III 'य आत्मनि तिष्ठन्' 35, 175, 332

यादृश आत्मा, सर्वस्मिन् जीवात्मनि स्थितः तदन्तर एव सन्नपि तदवेद्यः, तच्छरीरकश्च सन् तमन्तःप्रविश्य तत्प्रवृत्ति-निवृत्तिरूपव्यवहार-नियमनं करोति, स एव निरुपाधिकामृतत्वशाली परमात्मा, तवान्तर्यामी।

391. 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः, सोऽन्वेष्टव्यः सः विजिज्ञासितव्यः, स सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानाति' (छां. उ. 8-7-1) 267

यः जीवात्मा सुकृत-दुष्कृतात्मकपापसंश्लेषरहितः, जरा-मरणवर्जितः, शोक-तद्धेतुभूतकर्मभ्याम् असम्बद्धः, बुभुक्षा-पिपासाविदूरः, अप्रतिहतेच्छः, अप्रतिहतसङ्कल्पश्च, देहातिरिक्तस्वरूपः सः अन्वेषणीयः, तथा ध्यातव्यश्च। यस्तु चेतनः तं परमात्मानं गुरुमुखाच्छास्त्रजन्येन ज्ञानेन विषयीकृत्य, निरन्तरं ध्यायति, सः मुक्तः सन् कर्मवश्य-त्वातिक्रान्त्या भगवत्सङ्कल्पानुगुणस्वसङ्कल्पायत्तसर्वलोक-सर्वकामावाप्तिमान् भवति।

392. 'य आदित्ये तिष्ठन् आदित्यादन्तरो, यमादित्यो न वेद, यस्यादित्यः शरीरं, य आदित्यमन्तरो यमयति' (बृ. उ. 5-7-13) 90

य: परमात्मा आदित्याख्ये तेजसि तिष्ठन्, आदित्याद्भिन्न:, स्वस्मिन्नेव अन्तस्तिष्ठन्नपि यं परमात्मानम् आदित्य: नैव वेत्तुमर्हति, यं च प्रति आदित्य: आधेयत्व-विधेयत्व-शेषत्ववान्, य एव आदित्येऽन्तरवस्थित एव सन् व्यवस्थितस्वकार्यप्रवृत्तं करोति, (स एव तव अन्तर्यामी) ।

393. **'य इमञ्च लोकं परं च लोकं सर्वाणि च भूतानि, योऽन्तरो यमयति'** (बृ. उ. 5–7–3) 177

य: परमात्मा इन्द्रियग्राह्यम् 'इदं'पदाभिधेयं लोकं, (तथा) इन्द्रियाग्राह्यम् 'अद:'पदाभिधेयं लोकं, तथैव चराचरात्मकानि अखिलानि भूतान्यपि च अन्त:प्रविश्य नियतस्वकार्यप्रवृत्तानि करोति (स एव भवत: अमृतोऽन्तर्यामी) ।

394. **'य एतेषां....कर्ता, यस्य वैतत्कर्म'** (कौषी. उ. 4–26) 375

य: त्वया ब्रह्मत्वेनोपदिष्टानाम् आदित्यादीनां पुरुषाणां कर्ता—एते आदित्यादय: यस्य सृज्यकोटिंप्रविष्टा:, प्रत्यक्षादिभि: प्रमाणै: सन्निधापितं चिदचिदात्मकं समस्तं जगत् यस्य कार्यभूतं, स एव वेद्य: उपास्य: ।

395. **'य एष विज्ञानमय: पुरुष:, क्वैष तदाभूत् कुत एतदागात्'** (बृ. उ. 4–1–16) 380

य: सम्प्रबुध्यमान एव सर्वेन्द्रियार्थविज्ञानमयतयोत्तिष्ठति, स एष पुरुष: । अयं पाणिपेषणोत्थापनात् प्राक्, स्वापदशायां क्व स्थित:? एतस्मिन् काले कुत उद्गत:? इति प्रश्नं कृतवान् ।

396. I **'य एषोऽक्षिणि पुरुषो दृश्यते । एष आत्मेति होवाच, एतदमृतमभयमेतद्ब्रह्म'** (छां. उ. 4–15–1) 160

II **'य........पुरुष:'** 163

अक्षिगोलकान्तरधिष्ठानतया य: पुरुष: ध्यानावस्थितमनस्कैर्योगिभि: साक्षात्क्रियते ; स एव पुरुष: आत्मपदवाच्यो नियन्ता । अयमेव ध्यातु: निरतिशयभोग्यत्वात् अमृतमिति, दु:खासम्भिन्नसुखरूपत्वात् अभयमिति, निरतिशयबृहत्त्वात् ब्रह्म इति चोच्यते ।

397. 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते, हिरण्यश्मश्रुः हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः । 79
तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी, तस्योदिति नाम, स एष सर्वेभ्यः पाप्मभ्य उदितः, उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद ।
तस्यर्क साम च गेष्णौ....इत्यधिदैवतम्' (छां. उ. 1–6–6, 7, 8) 80

ध्यानपरैर्योगिभिः, आदित्यमण्डलात्मकाधिष्ठानस्यान्तरवस्थिततया यः पुरुषः, ध्यानदशायां हितरमणीयाकृतिः उज्ज्वलः साक्षात्क्रियते, सः रमणीयश्मश्रुकेशः, नखमारभ्यशिखान्तं सर्वावयवेषु रमणीयाकृतिः गम्भीराम्भस्समुद्भूतसुमृष्टनालरविकरविकसितपुण्डरीकदलामलायतेक्षणः, 'उत्' इत्ययं शब्दः नामधेयभूतः, (सः'उत्'नामकः); पापशब्दाभिधेयपुण्य-पापात्मकसर्वविधकर्मसम्बन्धराहित्यात् । तं पुरुषम् ईदृशेन निमित्तेन उन्नामकतया उपासनायत्तज्ञानवान् भवति । ऋक्-सामे उभे अपि वैदिकैः अधीयमाने अस्य महापुरुषस्य गुणगानरूपे एव ।

398. 'यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि' (छां. उ. 5–11–5) 199

(हे उद्दालकादयः महाश्रोत्रियाः ब्राह्मणाः! महामहिमवन्तः!) अहम् अचिरेणैव कालेन यागं करिष्यामि (इति केकयोऽश्वपतिरुवाच) ।

399. 'यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥' (तै. ना. उ. 11–5) 20

परिदृश्यमाने जगति इन्द्रियसन्निकृष्टम्, विप्रकृष्टं वा, अत एव दृश्यमानं श्रूयमाणं च यद्यदस्ति तत्सर्वं तदीयान्तर्बाह्यभागानवशेषेण, विशेषेण नियन्तृत्वादिधर्मेण सम्बध्य नारायणः अवस्थितः ।

400. I 'यच्चास्येहास्ति यच्च नास्ति, सर्वं तदस्मिन् समाहितम् ।
तस्मिन् कामाः समाहिताः' (छां. उ. 8–1–3, 5) 19

II 'यच्चा........समाहितम्' 258

उपासकस्य पुरुषस्य इह लोके यत् भोग्यजातमस्ति, यच्च मनोरथमात्रगोचरमिह नाऽस्ति, सर्वं तत् भोग्यजातमस्मिन् दहराकाशे परमात्मनि

सम्यगाहितम् । तस्मिंश्च दहराकाशरूपे परमात्मनि, अत्यन्तं भोग्यत्वेन हेतुना अनुभाव्यतया जीवैः काम्यमानाः सर्वे कल्याणगुणाः परिपूर्णतया अवस्थिताः ।

401. I 'यच्छेद्वाङ्मनसी प्राज्ञः तद्यच्छेत् ज्ञान आत्मनि ।
ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि' (कठ. उ. 3-13) 333
II 'यच्छेद्वाङ्मनसी' 333

प्राज्ञः परमात्मदर्शनाय प्रवृत्तः आत्मपथयात्राशीलः पुरुषः वाचमालम्ब्य बहिर्विकासं प्राप्नुवानानि कर्मज्ञानेन्द्रियाणि सर्वाणि मनसि वशीकृत्य स्थापयेत् । स्वायत्तीकृतकर्मज्ञानेन्द्रियं मनः आत्मगतायाम् अध्यवसायरूपायां बुद्धौ अकम्प्यतया स्थापयेत् । तादृशीं च बुद्धिम् अध्यवसायात्मिकां बुद्ध्यादिप्रवृत्तिहेतुभूतेच्छावति आत्मनि वशीकृत्यावस्थापयेत् । तं च कर्तारं जीवमात्मानं शान्ते परस्मिन् ब्रह्मणि सर्वान्तर्यामिभूते वशीकृत्यावस्थापयेत् ।

402. I 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति ।
यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्म' (तै. उ. भृ. 1-2) 136
II 'यतो वा....जायन्ते....तद्ब्रह्म' 95
III 'यतो वा....जायन्ते' 87, 92
IV 'यतो वा इमानि ....' 2, 126

प्रमाणसिद्धानि सर्वाणि भूतानि निमित्तोपादानभूतात् यस्मादेव वस्तुनः लब्धात्मस्वरूपाणि भवन्ति, स्वात्मतयावस्थितयद्वस्त्वधीनसकलप्रवृत्तिनिवृत्तिमन्ति भवन्ति, कार्यावस्थातः कारणावस्थां प्राप्नुवन्ति च सन्ति, यदेव वस्तु लयाधारतया प्रविशन्ति ; तदेव सर्वभूतसृष्टि-स्थिति-लयकारणं ब्रह्मशब्दवाच्यं वस्तु । (अतः तदेव श्रवण-मनन-निदिध्यासनैः उपास्व ।)

403. I 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' (तै. उ. आन. 9-1) 70
II 'यतो वाचो निवर्तन्ते' 32, 72, 73

अनुभूतस्य ब्रह्मानन्दस्य सम्पूर्णवर्णने प्रवृत्ताः, स्वापेक्षया सूक्ष्मभूत-मनोरूपेन्द्रियसहिताः गिरः, वर्ण्यतयाभिमतस्य ब्रह्मानन्दस्य इयत्तालक्षणं परं पारमलब्ध्वैव, ततस्सकाशात् निवृत्तव्यापाराः तूष्णीभावमाश्रयन्ति ; तादृशम् अपरिमितमानन्दम् अपरिमितत्वेन जानन् उपासकः (कस्मादपि हेतोः न भीतो भवति) ।

404. **'यत्तच्छान्तमजरममृतमभयम्'** (प्रश्न. उ. 5–7) [प्र. सं. 237 द्रष्टव्यम्] 250

405. **'यत्तत्कवयो वेदयन्ते'** (प्रश्न. उ. 5–7) 25

क्रान्तदर्शिनः सूरयः, 'तद्विष्णोः परमं पदम्' इति प्रसिद्धं यत् सर्वोन्नतं स्थानं पश्यन्ति ; (तत् स्थानम् ओङ्काररूपेण मार्गेण विद्वान् प्राप्नोति) ।

406. I **'यत्तदद्रेश्य....धीरः'** (मुण्ड. उ. 1–1–6) 183

II **'यत्तदद्रेश्यमग्राह्यम्'** [प्र. सं. 21 द्रष्टव्यम्] 189, 338

407. **'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्'** (बृ. उ. 6-5–15) 404

यदा तु अस्य जीवस्य निखिलमपि वस्तु परमात्मापृथक्सिद्धम् एकात्मकमेव भासते ; तस्यामवस्थायां भिन्नात्मकेन केन कारणेन, कं वा भिन्नात्मकं विषयं, को वा भिन्नात्मकः कर्ता स्वतन्त्रः साक्षात्कुर्यात्, कथञ्चित् जानीयाद्वा ? सर्वथा अशक्यं तु तत् ।

408. I **'यत्र नाऽन्यत्पश्यति नाऽन्यत् श्रुणोति नाऽन्यद्विजानाति स भूमा।
अथ यत्राऽन्यत्पश्यत्यन्यत् श्रुणोत्यन्यद्विजानाति तदल्पम् ॥'**
(छां. उ. 7–21–1) 224

II **'यत्र....भूमा'** 235

यत्र वस्तुनि अनुभूयमाने ततोऽन्यत् न दृश्यते, नैव श्रूयते, नैव विज्ञायते च स भूमा । यस्मिन् दृश्यमाने ततोऽन्यत् दृश्यते, यस्मिन् श्रूयमाणे ततोऽन्यत् श्रूयते, यस्मिंश्च विज्ञायमाने ततोऽन्यत् विज्ञायते, तत् भूमविपरीतलक्षणम् अल्पम् इत्यर्थः ।

409. **'यत्र हि द्वैतमिव भवति'** (बृ. उ. 6–5–15) 384, 397

यस्यां हि अवस्थायां परमात्मनः पृथक् स्वनिष्ठतयैव भानमस्ति, (तदा परमात्मनः पृथक्सिद्धः, परमात्मनः पृथक्सिद्धं विषयं दृष्टिगोचरं कुर्यात) ।

410. **'यात्राऽन्यत् पश्यति....तदल्पम्'** (छां. उ. 7–24–2) 225

यस्मिन् वस्तुनि अनुभूयमाने, ततोऽन्यदपि द्रष्टुं शक्नोति पुरुषः (अन्यत् श्रोतुं, विज्ञातुं च शक्नोति) तत् स्वानुभवकालिकवस्त्वन्तरानुभवावकाशप्रदं वस्तु अल्पं वेदितव्यम् ।

411. **'यत्रैष एतत्सुप्तोऽभूत् य एष विज्ञानमयः पुरुषः तदैतेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते'**
(बृ. उ. 4–1–17) 380

जाग्रद्दशायां हि मुख्येन मनसा करणेन, उपकरणैश्च चक्षुरादिभिः, विविधान् विषयान् उपसेवमानो विविधाभिमानपूर्णो जीवः विज्ञानमयपुरुषशब्दवाच्यः, सुषुप्तौ उपरतमनःपर्यन्तसर्वकरणः, व्यपगतदेवादिविविधाभिमानः, हृदयान्तःस्थाकाशरूपे परमात्मनि अविभागापत्तिरूपं शयनं गच्छति ।

412. I **'यथाक्रतुरस्मिँल्लोके पुरुषो भवति, तथेतः प्रेत्य भवति'**
(छां. उ. 3–14–1) 12

II **'यथा........पुरुषः'** [प्र. सं. 18 द्रष्टव्यः] 248

413. **'यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥'**
(मुण्ड. उ. 3–2–8) 219, 392

स्वोत्पत्तिस्थानेभ्यः प्रसृताः गङ्गादयो नद्यः, गङ्गादीनि स्वनामानि, शुक्लादीनि स्वीयरूपाणि च परित्यज्य, सागरे यथा एकतामिव भजन्ते तद्वत्, निष्पन्नोपासनः ब्रह्मज्ञोऽपि जीवात्मसु परस्परभेदज्ञापकैः देवदत्तादिनामभिः, देवत्वमनुष्यत्वाद्याकृतिभिश्च विनिर्मुक्तः, उत्कृष्टेभ्यः सर्वेभ्य उत्कृष्टं परमपुरुषं परमसाम्येन प्राप्नोति ।

414. 'यथा पादोदरस्त्वचा विनिर्मुच्यते, एवं ह वै स पाप्मना विनिर्मुक्तः सामभिरुन्नीयते ब्रह्मलोकम्' (प्रश्न. उ. 5–2) [प्र. सं. 387 द्रष्टव्यम्] 251

415. 'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः।
तथाऽक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति ॥'
(मुण्ड. उ. 2–'–1) 391

यथा अयोगोलकादिगतात् हन्यमानाद्वा, वेश्मादिषु सुदीप्ताद्वा पावकात् अनेकशः समानरूपाः अग्निकणाः उत्पद्यन्ते, एवमेव सूक्ष्मचिदचिच्छरीराद्ब्रह्मणः नानाविधस्थूलचिदचिद्रूपाः कार्यवर्गाः उत्पद्यन्ते, तत्रैव लीयन्ते च।

416. 'यथा सोम्यैकेन नखनिकृन्तनेन' (छां. उ. 6–1–6) 402

हे सोम्य! एकस्मिन् कार्ष्णायसपिण्डविशेषे ज्ञाते, तज्ज्ञानमेव हेतूकृत्य (सर्वं कार्ष्णायसं यथा ज्ञातं भवति, तद्वत्)।

417. I 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्'
(छां. उ. 6–1–4) 402

II 'यथा सोम्यैकेन........विज्ञातम्' 41

III 'यथा सोम्यैकेन.........मृत्पिण्डेन' 5

IV 'यथा सोम्य' 41

हे सोम्य! यथा घटोपादानभूतमृत्पिण्डविज्ञानात् तत्कार्यजातं घटशरावादिकं मृदात्मकमिति विज्ञातं भवति। तद्वत् चिदचिच्छरीरकारणभूतपरमात्मविज्ञानात् कार्यभूतचिदचिच्छरीरकपरमात्मविज्ञानं भवति।

418. 'यथा सोम्यैकेन लोहमणिना' (छां. उ. 6–1–5) 402

हे सोम्य! श्वेतकेतो! एकस्मिन् सुवर्णपिण्डविशेषे ज्ञायमाने, तज्ज्ञानमेव निमित्तीकृत्य (यथा सुवर्णविकारजातं ज्ञातं भवेत्, तद्वत्)।

419. I 'यथा ह्येवेह प्रजा अन्वाविशन्ति' (छां. उ. 8–1–5) 26)

अस्मिन् मानुषे लोके यथा प्रजाः यथानुशासनं—राजशासनानुल्लङ्घनेन राजानम् अनुसरन्ति (तथा परलोकेऽपि नियन्तुराज्ञामनुरुध्यैव जीवन्ति जीवाः)।

420. I 'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति ।
यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वम् ।।'
(मुण्ड. उ. 1-1-8) 185

II 'यथोर्ण.... गृह्णते च' 189, 419

यथा ऊर्णनाभिनामा लूताख्यः कीटविशेषः, स्वीयादन्तःप्रदेशात् तन्तून् इतरनैरपेक्ष्येण स्वेच्छया बहिर्निस्सारयति, अन्तःप्रवेशयति च ; यथैव पृथिवीरूपे क्षेत्रे अनन्ताः ओषधयः, पृथिवीस्वरूपम् अनुपमृद्यैव जायन्ते, देहिनि पुरुषे जीवत्येव सति, तस्मात् अचेतनानि नखकेशलोमादीनि च जायन्ते; तथा अक्षरपदवाच्यात् परस्माद्ब्रह्मणो निमित्तान्तरनिरपेक्षात् निर्विकारात् परस्परविलक्षणं चेतनाचेतनात्मकं निखिलं जगत् उत्पन्नं भवति ।

421. 'यदनेन हविषाऽऽशास्ते तदश्यात्तदृध्यात्तदस्मै देवा राधन्ताम्'
(तै. ब्रा. 3-5-10) 282

कृतेनाऽनेन यज्ञेन यत् फलम् अपेक्षते यजमानः ; तत् फलं भुङ्क्ताम्—अनुभवतु । तच्च फलम् अभिवर्धताम् । तं च इष्टार्थं देवाः साधयन्तु ॥

422. 'यदा तमस्तन्न दिवा न रात्रिः' (श्वे. उ. 4-18) 406

यस्मिन् काले सदसच्छब्दितमूर्तामूर्तप्रपञ्चं दिवारात्रविभागं चान्तरेण तमोमात्रम् (भगवतो मायामात्रम्) अवस्थितं, तस्मिन् काले परमात्मैक एवासीत् ।

423. 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ।।'
(मुण्ड. उ. 3-1-3) 219, 274

यस्मिन् काले ब्रह्मदर्शी चेतनः देदीप्यमानदिव्यमङ्गलविग्रहयुक्तं, जगन्नियन्तारं, सङ्कल्पद्वारा उपादानतया च जगदादिकारणभूतं 'पुरुष'-शब्दाभिधेयं वासुदेवं साक्षात्करोति ; तदा विद्वान् सः निरस्तपुण्यपापः

दूरीकृतप्रकृतिलोपश्च सन् अपहतपाप्मत्वादिरूपस्वाभाविकब्राह्मगुणसम्पत्त्या ब्रह्मणा सह अवाप्तपरमसाम्यो भवति ॥

424. **'यदा वै विजानात्यथ सत्यं वदति'** (छां. उ. 7–17–1) 228

चेतनः यदा उपासनप्राप्तसत्यपदाभिधेयब्रह्मसाक्षात्कारवान् भवति ; तदनन्तरमेव सत्यादिवदनशीलो भवति । स्वोपास्यस्य सर्वोत्कृष्टत्ववदन-स्वभावो भवति ।

425. I **'यदा सुप्तः स्वप्नं न कथञ्चन पश्यत्यथास्मिन् प्राण एवैकधा भवति। एतस्मादात्मनः प्राणाः यथाय(थं)तनं विप्रतिष्ठन्ते प्राणेभ्यो देवाः, देवेभ्यो लोकाः'** (कौषी. उ. 4–39, 40) 378

II **'यदा सुप्तः....भवति । ....तस्माद्वा आत्मनः....विप्रतिष्ठन्ते'** 16, 17

III **'यदा....भवति'** 16

IV **'यदा सुप्तः....सहाप्येति'** [प्र. सं. 610 द्रष्टव्यः] 372

426. **'यदिदं किञ्च जगत्सर्वं प्राण एजति निस्सृतम् ।**
**महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ॥**
**भयादस्याग्निस्तपति भयात्तपति सूर्यः ।**
**भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥'** (कठ. उ. 6–2, 3) 315, 316

'प्राण'शब्दनिर्दिष्टे परमात्मनि आधेयतया अवस्थितं कालत्रयसम्बन्धि जङ्गमस्थावरात्मकम् अखिलं विश्वं, तस्मात् प्राणादेव सृष्टं सदपि, तस्मात् उद्यतवज्रादिव परमपुरुषात् सञ्जातेन भयेन कम्पते । ईदृशं सर्वजगत्कम्पनहेतुभूतं जगन्मर्यादापालकं परं ब्रह्म ये उपासनतः साक्षात्कुर्वन्ति, ते प्रकृतिबन्धविनिर्मोकेन अमृतत्वमाप्नुवन्ति । अग्निसूर्येन्द्र-वायुमृत्यवः पञ्च जगद्भयानका अपि, अस्य प्राणस्य परमात्मनो भयात् नैरन्तर्येण स्वस्वव्यापारप्रवृत्ता भवन्ति ।

427. **'यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म'** (छां. उ. 8–1–1)
[प्र. सं. 29 द्रष्टव्यः] 257

428\. I **'यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतश्च भवच्च भविष्यच्चेत्याचक्षते, आकाश एव तदोतं च प्रोतश्च'** (बृ. उ. 5-८-6) 242

II **'यदूर्ध्वं....पृथिव्याः'** 241

हे गार्गि! द्युलोकादुपरिस्थानवर्ति यत् वस्तुजातम्, एवं पृथिवीलोकादधस्तनस्थानवर्ति यद्वस्तुजातम्, उक्तयोः द्युपृथिवीलोकयोः अन्तरालवर्ति च यत् वस्तुजातम्, ये चेमे द्युपृथिव्यौ, तथा कालत्रयपरिच्छिन्नं च यद्यत् व्यवहरन्ति तत्सर्वं सर्वातिशायिनि आकाशाख्ये एव पटः दीर्घ-तिर्यक्प्रसारिततन्तुष्विव अविनाभाववृत्त्या आधेयत्वनियाम्यत्वादिना नियतसम्बद्धम् इति याज्ञवल्क्यः उवाच ।

429\. **'यदेष आकाश आनन्दो न स्यात्'** (तै. उ. आन. 7-1) 97

**'यदेष आकाश आनन्दः'** 76

यदि अयम् अपरिच्छिन्नानन्दरसः परमात्मा न स्यात्, सांसारिकम् आपवर्गिकं वा सुखं कः प्राप्नुयात्? न कोऽपि, [अतः निश्चितमिदम्—यत् परमात्मैव सर्वेषामानन्दयिता इति] ।

430\. **'यद्भूतयोनिं परिपश्यन्ति धीराः'** (मुण्ड. उ. 1-1-6) [प्र. सं. 21 द्रष्टव्यम्] 419

431\. **'यद्वाव कं तदेव खं, यदेव खं तदेव कम्'** (छां. उ. 4-10-5) 170

यदेव वस्तु 'क'पदवाच्यसुखात्मकं; तदेव 'ख'पदवाच्यापरिच्छिन्नात्मकम्, यदेव खपदवाच्यापरिच्छिन्नात्मकं ; तदेव च कपदवाच्यसुखात्मकम् । विशेषण-विशेष्यात्मकत्वात् तयोरभेद एव अपरिछिन्नसुखात्मकं ब्रह्म इति पर्यवसितम् ।

432\. **'यमात्मा न वेद'** (सुबा. उ. 7) [प्र. सं. 390 द्रष्टव्यम्] 180

433\. **'यमेवैष वृणुते तेन लभ्यः'** (मुण्ड. उ. 3-2-3) [प्र. सं. 304 द्रष्टव्यम्] 188

434\. **'यया तदक्षरमधिम्यते'** (मुण्ड. उ. 1-1-5) [प्र. सं. 21 द्रष्टव्यम्] 186, 241

435\. **'यश्चक्षुषि तिष्ठन्'** (बृ. उ. 5-7-22) 162, 174

चक्षुर्नामके इन्द्रिये स्थितः (तदन्तर्गतत्व-तद्वेद्यत्व-तच्छरीरकत्वादिमान् सः अमृत आत्मा अन्तर्यामी)।

436. I **'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते, स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु अन्नमत्ति'** (छां. उ. 5–18–1) 209

II **'यस्त्वेत....मुपास्ते'** 195, 211

III **'यस्त्वेत....विमानम्'** 208

यः पुनर्मुमुक्षुः उपासकसौकर्यार्थं द्युप्रभृतिपृथिव्यन्तप्रदेशसम्बन्धिन्या मात्रया परिच्छिन्नाभिव्यक्तिमत् सर्वत्राभिव्याप्ततया विगतमानम् (अपरिच्छिन्नम्) विश्वेषां नराणां नेतृतया वैश्वानरपदवाच्यम् एतमात्मानमुपास्ते निरन्तरं ध्यायति ; (सः सर्वलोक-सर्वभूत-सर्वात्मवर्ति ब्रह्मरूपमन्नम् अनुभवति)।

437. **'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनःसह प्राणैश्च सर्वैः।**
**तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः॥'**

(मुण्ड. उ. 2–2–5) 215

अक्षरशब्दाभिधेये यस्मिन् वस्तुनि पृथिव्यन्तरिक्षद्युलोकात्मकं लोकत्रयं, तथैव चेतनीयजीवनोपयोगिमनःप्राणादिकं च सर्वं समवेतम् सम्यक् अविनाभावेन सम्बद्धं तम् अक्षरपदाभिधेयमेकमेव स्वेतरसमस्तवस्तुनियन्तृतया व्यापकभूतम् आत्मानं वेदनविषयीकुरुत। तदितरानात्मविषयिण्यो वाचः निश्शेषं दूरीकुरुत। एषोऽक्षरपदाभिलप्यः आत्मा सेतुरिव संसारार्णवपारभूतस्य अमृताख्यस्य कूलस्य प्रतिलम्भकः।

438. I **'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः।**
**तमेवम्मन्य आत्मानं विद्वान् ब्रह्माऽमृतोऽमृतम्॥'** (बृ. उ. 6–4–17) 377

II **'यस्मिन्....प्रतिष्ठितः'** 355, 361

III **यस्मिन्....पञ्चजनाः'** 359

'यस्मिन् अमृते ज्योतिषि, पञ्चजनसंज्ञकानि पञ्चेन्द्रियाणि, (तथा) आकाशादीनि पञ्च भूतानि च दृढामवस्थितिं प्राप्तानि, तादृशम् अमृत-

ज्योतिस्स्वरूपं परं ब्रह्म' इत्येवं प्राप्ताध्यवसायः, पूर्वप्रस्तुतेभ्यो देवेभ्योऽन्यः मनुष्योऽपि अमृतो भवति—संसारादुत्तीर्णो भवति, आविर्भूतामृतत्ववान् भवति ।

439. **'यस्य चक्षुश्शरीरम्'** (बृ. उ. 5-7-22) 413

यस्य वस्तुनः चक्षुर्नामकमिन्द्रियम् आधेयं विधेयं शेषभूतं च (स एव अन्तर्याम्यमृतः परमात्मा) ।

440. **'यस्य चन्द्रतारकं शरीरम्'** (बृ. उ. 5-7-15) 412

यस्य वस्तुनः चन्द्रमाः नक्षत्राणि च आधेय-विधेय-शेषभूतानि (स परमात्मा अन्तर्याम्यमृतः) ।

441. **'यस्य चित्तं शरीरम्'** (सुबा. उ. 7) 414

यस्य वस्तुनः चित्तारूयोऽन्तःकरणविशेषः आधेयो विधेयः शेषभूतश्च स परमात्मा अन्तर्याम्यमृतः ।

442. **'यस्य ज्ञानमयं तपः'** (मुण्ड. उ. 1-1-10) [प्र. सं. 47। द्रष्टव्यः] 190, 415

443. **'यस्य तमः शरीरम्'** (बृ. उ. 5-7-17) 413

यस्य वस्तुनः तमोरूपोऽर्थः आधेयत्व-विधेयत्व शेषत्वानामाश्रयः, स परमात्मा अन्तर्यामिभूतोऽमृतः ।

444. **'यस्य तेजश्शरीरम्'** (बृ. उ. 5-7-18) 61, 413

यस्य वस्तुनः तेजोरूपोऽर्थः, आधेयत्व-विधेयत्व-शेषत्ववान् तत् परमात्मरूपं वस्तु अन्तर्यामित्वामृतत्वाश्रयः ।

445. **'यस्य त्वक् शरीरम्'** (बृ. उ. 5-7-25) 413

'त्वक्'नाम इन्द्रियं यस्य पुरुषस्य आधेयत्व-विधेयत्व-शेषत्ववत्, सः अन्तर्याम्यमृतः परमात्मा ।

446. **'यस्य दिशः शरीरम्'** (बृ. उ. 5-7-14) 412

दिग्रूपोऽर्थः यं पुरुषं प्रति आधेयत्व-विधेयत्व-शेषत्ववान् अन्तर्यामी अमृतः सः परमात्मा ।

447. **'यस्य द्यौः शरीरम्'** (बृ. उ. 5-7-12) 412

द्युलोकरूपोऽर्थः यं प्रति आधेयत्व-विधेयत्व-शेषत्ववान् सः पुरुषः अमृतः अन्तर्यामी परमात्मा ।

448. I 'यस्य पृथिवी शरीरम् । यस्यापश्शरीरम् । यस्य तेजश्शरीरम् । यस्य वायुश्शरीरम् । यस्याकाशश्शरीरम् । यस्याक्षरं शरीरम् । यस्य मृत्युः शरीरम् । एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' (सुबा. उ. 7) 337

II 'यस्य....शरीरम्' 61

यं पुरुषं प्रति पृथिव्यप्तेजोवाय्वाकाशाक्षरमृत्युरूपा अर्थाः आधेयत्व-विधेयत्व-शेषत्ववन्तः स एषः समस्तभूतनियन्ता, निरस्तसमस्तवृजिनः, परमव्योमस्थाने प्रकाशमानः, समाभ्यधिकद्वितीयरहितः भगवान् नारायणः ।

449. 'यस्य प्राणः शरीरम्' (बृ. उ. 5–7–20) 413

प्राणरूपोऽर्थः यं प्रति आधेयत्व-विधेयत्व-शेषत्ववान् स पुरुषः अमृतः अन्तर्यामी परमात्मा ।

450. 'यस्य बुद्धिः शरीरम्' (सुबा. उ. 7) 414

बुद्धिरूपोऽर्थः यं पुरुषं प्रति आधेयत्व-विधेयत्व-शेषत्ववान् स पुरुषः अन्तर्यामी अमृतो नारायणः ।

451. 'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः ।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥' (कठ. उ. 2–25) 149

ब्रह्मक्षत्राख्यवर्णद्वयोपलक्षितं कृत्स्नं चराचरात्मकमिदं विश्वम्, उपसेचनीकृतमृत्योः यस्य पुरुषस्य प्रलयकाले विनाश्यं—स्वान्तः बीजरूपेणावस्थापयितुम् उपसंहार्यं भवति, सः निखिलचराचरात्मकजगदुपसंहर्ता परमात्मा यादृशप्रकाशविशिष्टः, तं प्रकारं स्वेतरसमस्तवस्तुविलक्षणं को वा वेत्तुं समर्थो भवितुमर्हति ; न कोऽपि इत्यर्थः । (उपसेचनत्वम्—स्वयमद्यमानत्वे सति इतरादनसहकारित्वम्, उपदंशादाविव)

452. **'यस्य मनः शरीरम्'** (बृ. उ. 5-7-24) 413

आन्तरसुख-दुःखाद्यनुभवसाधनम् अन्तःकरणापरपर्यायं मनः यं प्रति आधेयत्व-विधेयत्व-शेषत्ववत् सः पुरुषः अन्तर्यामी अमृतः नारायणः ।

453. I **'यस्य मृत्युः शरीरं, यो मृत्युमन्तरे सञ्चरन् यं मृत्युः न वेद, एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः'** (सुबा. उ. 7) 178

II **'यस्य ... शरीरम्'** 61

तमोऽपरपर्यायो मृत्युः यस्य पुरुषस्य आधेयं विधेयं शेषभूतं च, यः पुरुषः मृत्योरन्तरवस्थितः, अथाऽपि यं पुरुषं मृत्युः नैव वेत्तुमर्हति एष मृत्युपदार्थान्तर्यामी पुरुषः सर्वेषां भूतानामन्तर्नियन्ता निरस्तनिखिलदोषः अक्षरपरमव्योमनिलयः स्वयंज्योतिरूपः निरस्तसमाभ्यधिकः परमात्मा नारायणः ।

454. **'यस्य रेतश्शरीरम्'** (बृ. उ. 5-7-26) 413

सर्वचेतनोत्पत्तिबीजभूतं रेतःपदाभिधेयं वस्तु जगद्बीजभूतस्य यस्य पुरुषस्य आधेयत्व-विधेयत्व-शेषत्वैः अधिष्ठेयं वर्तते (स पुरुषः अन्तर्यामी अमृतो नारायणः) ।

455. **'यस्य वाक् शरीरम्'** (बृ. उ. 5-7-21) 413

शब्दोच्चारणहेतुभूतं वाङ्नामकमिन्द्रियम् आधेयत्व-विधेयत्व-शेषत्वैः यदधिष्ठातृकं (स परमपुरुषः अन्तर्यामी नारायणः) ।

456. **'यस्य वायुः शरीरम्'** (बृ. उ. 5– –11) 61, 412

वायुरूपोऽर्थः आधेयत्व-विधेयत्व-शेषत्वैः यदधिष्ठितः (स पुरुषः अन्तर्यामी नारायणः) ।

457. **'यस्य विज्ञानं शरीरम्'** (बृ. उ. 5-7-26) 413

ज्ञानधर्मकः ज्ञानस्वरूपः चेतनापरपर्यायः आत्मा यं प्रति आधेयत्व-विधेयत्व-शेषत्ववान् (स पुरुषः अन्तर्यामी भगवान् नारायणः) ।

468. I 'यस्याव्यक्तं शरीरं.... यस्याक्षरं शरीरं
यस्य मृत्युः शरीरम्....एष सर्वभूतान्तरात्मा' (सुबा. उ. 7) 7

II 'यस्याव्यक्तं शरीरं.... यस्याक्षरं शरीरम्' 243

III 'यस्याव्यक्तं शरीरम्' 414

अव्यक्तशब्दवाच्यं वस्तु यं प्रति आधेयत्व-विधेयत्व-शेषत्ववत्, अक्षरशब्दवाच्यं वस्तु यं प्रति आधेयत्व-विधेयत्व-शेषत्ववत्, मृत्यु-शब्दवाच्यं वस्तु यं प्रति आधेयत्व-विधेयत्व-शेषत्ववत्, एष सर्वभूत-नियन्ता नारायणः ।

469. 'यस्याहङ्कारः शरीरम्' (सुबा. उ. 7) 414

अहङ्कारशब्दवाच्यं वस्तु यं प्रति आधेयत्व-विधेयत्व-शेषत्ववत् (स पुरुषः अन्तर्यामी भगवान् नारायणः) ।

470. 'यस्सत्येनाति वदति' (छां. उ. 7-16-1) [प्र. सं. 143 द्रष्टव्यः] 228

471. I 'यस्सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः ।
तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते ॥' (मुण्ड. उ. 1-1-10) 186, 320

II 'यस्सर्वज्ञः........तपः' (मुण्ड. उ. 1-1-9) 7

III 'यस्सर्वज्ञः सर्ववित्' 185, 190, 218

भूतयोनित्वेन प्रस्तुतो योऽर्थः, असङ्कोचेन सर्ववस्तु-तद्गतसर्वप्रकार-विषयकज्ञानवान्, यस्य सृष्ट्युपकरणतया सङ्कल्पातिरिक्तं यत्किञ्चित् नापेक्षितं सङ्कल्पमात्रेण सृष्ट्युन्मुखात्तस्माद्ब्रह्मणः, अव्याकृताख्यं ब्रह्म, तद्द्वारा नामरूपपरिष्वक्तम् अन्नशब्दनिर्दिष्टभोग्य-भोक्तृरूपं जगच्च जायते ।

172. 'यस्सर्वेषु यज्ञेषु' (बृ. उ. मा. पा. 5-7)

यः परमात्मा देवताराधनात्मकेषु सर्वेषु कर्मसु, शरीरस्य शरीरिवत् अत्यन्तमाराध्यतया प्रधानभूतः सन् अवतिष्ठते ।

473. 'यस्सर्वेषु लोकेषु तिष्ठन्' (बृ. उ. मा. पा. 5-7-?) 175

य: परमात्मा निर्दिष्टानिर्दिष्टस्वरूपेषु सर्वेष्वप्यर्थेषु अन्त:प्रविश्य नियन्ता सन् तेषां धारक: शेषी च, स: अन्तर्यामी परमात्मा ।

474. 'यस्सर्वेषु वेदेषु' (बृ. उ. मा. पा. ?) 175

य: परमात्मा सर्ववेदाभिमानिदेवताविशेषेषु अन्त:प्रविश्य वर्तते तासां धारक: नियन्ता शेषी च, स: अन्तर्यामी परमात्मा ।

475. 'यस्सेतुरीजानानामक्षरं ब्रह्म यत्परम् ।
अभयं तितीर्षतां पारं नाचिकेतं शकेमहि ॥ (कठ. उ. 3-2) 155

श्रुतिविहितयागादिकर्मानुष्ठातॄणां सेतुवदाधारभूत:, सर्वकर्मफलप्रद:, य एव च निर्विकारं परं ब्रह्मेत्युच्यते, य एव च संसारसागरं तर्तुमिच्छतां निर्भयं दृढं तीरम्, तादृशं नाचिकेतपदाभिधेयेनाग्निना प्राप्यं वस्तु उपासितुं वयं शक्ता: स्म: । अत: ब्रह्मणि दुरुपासत्वबुद्ध्या नैव भेतव्यमिति भाव: ॥

476. 'या प्राणेन सम्भवत्यदितिर्देवतामयी ।
गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत ॥' (कठ. उ. 4-7) 154

कर्मफलानुभवनिमित्तत:, अदितिपदाभिधेयजीवरूपा प्राणेन सह सङ्गम्य वर्तमाना, इन्द्रियाधीनभोगा, हृदयपुण्डरीककुहरवर्तिनी, पृथिव्यादिभि: भूतै: साहिता, देवाद्यात्मना विविधा जायते, (तद्रूपम् एतदात्मकं—ब्रह्मात्मकम्) ।

477. 'यावदस्मिन् शरीरे प्राणो वसति तावदायु:' (कौषी. उ. 3-15) 122

उपलभ्यमान: उपनिषत्पाठस्तु 'यावद्धि अस्मिन्' इति ।

परिदृश्यमाने पाञ्चभौतिके शरीरे यावत्कालं प्राणस्य अवस्थिति: ; तावत्पर्यन्तमेव उच्छ्वासादिलक्षणम् आयु: [तस्मात् आयुश्शब्देन प्राण एवोच्यते ; साध्य-साधनयो: अभेदोपचारात् ] ।

478. 'यावदेकैकस्मा ऋत्विजे धनं दास्यामि, तावद्भगवद्भ्यो दास्यामि वसन्तु भवन्त:' (छां. उ. 5-11-5) 199

भोः पूजार्हाः! अस्मिन् यागे यागनिर्वाहकाय एकैकस्मै होत्रध्वर्यादि रूपाय ऋत्विजे यावत्परिमितं धनं दातुं सङ्कल्पितवानस्मि ; तावत्परिमितं धनं पूज्येभ्यो भवद्भ्यः दातुकामोऽस्मि । पूज्या भवन्तः अत्र मदीये आवसथे वासं कुर्वन्तु ।

479. **'यावान्वा अयमाकाशः तावानेषोऽन्तर्हृदय आकाशः'**

(छां. उ. 8-1-3) 255, 258

हृदयपुण्डरीकमध्यवर्ती आकाशशब्दनिर्दिष्टोऽर्थः 'इदं'पदनिर्देश्य-भूताकाशवद्विपुलः ।

480. I **'येनाऽश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातत्'** (छां. उ. 6-1-3) 40

II **'येनाऽश्रुतं श्रुतं भवति'** 38

III **'येनाऽश्रुतं श्रुतम्'** [प्र. सं. 606 द्रष्टव्यः] 8

481. **'येनाऽहं नाऽमृता स्यां किमहं तेन कुर्यां, यदेव भगवान्वेह तदेव मे ब्रूहि'** (बृ. उ. 6-5-4) 385

भवतः सकाशात् लब्धेन येन वित्तेन, अहम् अमृता—सर्वबन्धविनिर्मुक्ता भवितुं नाऽर्हामि ; तेन बाह्येन वित्तेन अहं किं वा कुर्याम् ; न किमपि उत्तमं फलं प्राप्तुमर्हामि । पूज्यस्त्वं, यत् अमृतत्वप्रापकमिति जानासि, तदेव मह्यमप्युपदिश ।

482. **'येनेदं सर्वं विजानाति तं केन विजानीयात्'** (बृ. उ. 4-4-14) 393

प्रसन्नेन येन परमात्मना अनुगृहीतः अयं जीवः सर्वज्ञो भवितुमर्हति ; तं परमात्मानं, केन हेतुभूतेन विज्ञातुं शक्नुयात्, (परमात्मप्रसादमन्तरेण परमात्मा दुरवबोधः इत्यर्थः) ।

483. I **'येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः'** (कठ. उ. 1-20) 157, 340

II **'येयं प्रेते....चैके'** 156

III **'येयं प्रेते'** 156

श्रुत्यादिविहितोपासनादिना मोक्षाधिकारसम्पत्तिमति मनुष्ये, सर्वेभ्यो बन्धेभ्यो विनिर्मोकं प्राप्तवति सति, तदात्मविषयिणी अस्ति-नास्त्यात्मिका वादिनां विमतिनिबन्धना विचिकित्सा (संशयरूपा) या इयं श्लोके स्थिता, तस्याः अपनोदनाय—दूरीकरणाय, तादृशात्मस्वरूपसम्बन्धि याथात्म्यं, त्वया मृत्युना सर्वज्ञेन विविच्य प्राप्तोपदेशः अहं स्पष्टं जानीयाम् । त्वत्तः एतज्ज्ञानसम्पत्तिरेव, मम त्वद्दत्तः तृतीयो वरः ।

484. I **'योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं, यमक्षरं न वेद,**
**यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युः शरीरं, यं मृत्युः न वेद,**
**एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः'**

(सुबा. उ. 7) 90, 394

II **'योऽक्षर….नारायणः'** 57

[इदानीम् उपलभ्यमाने उपनिषत्पुस्तके क्रमवैपरीत्यं दृश्यते]

यः परमात्मा, अक्षराख्ये चिद्गर्भे अचेतनरूपे वस्तु अन्तस्तिष्ठन्, (तथा) मृत्युपदवाच्ये (अचित्समष्टिरूपे)? अचेतने तमोरूपे अन्तस्तिष्ठन् अक्षर-तमसी यस्य आधेयत्व-विधेयत्व-शेषत्ववन्तौ, तथा स्वान्तर्वर्तिनमेव यम् अक्षर-तमसी नैव जानीतः, स एषः सर्वेषां भूतानामन्तःप्रविश्य नियन्ता, सर्वदोषविदूरः अक्षरपरमव्योमनिलयः स्वयंज्योतिः, निःसमाभ्यधिकः नारायणपदवाच्यः ।

485. I **'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै'**

(श्वे. उ. 6-18) 292

II **'यो……पूर्वम्'** 250

यः परमात्मा, सर्वजगत्स्रष्टारं चतुर्मुखमपि, स्वयम् आदौ सृष्ट्वा, तदनन्तरं च तस्मै चतुर्मुखाय, सर्वजगत्सृष्ट्युपयोगिज्ञानाधायकान् सर्वान् वेदानपि स्वयमेव प्रयच्छति, (तम् आदिस्रष्टुरपि स्रष्टारं, सर्वज्ञस्याऽपि ज्ञानप्रदं परमकारणं परमात्मानं, मोक्षमाकाङ्क्षमाणः शरणमुपगतोऽस्मि ।)

486. 'यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युः शरीरं, यं मृत्युर्न वेद, एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः'
(सुबा. उ. 7) [प्र. सं. 484 द्रष्टव्यः] 414

487. 'यो योनियोंनिमधितिष्ठत्येकः' (श्वे. उ. 4-11) 350

यः परमात्मा, स्वयमेक एव सन्, जगद्योनिभूतान् प्रकृतिमहदादीन् विभिन्नानप्यर्थान्, तेषां योनित्वसम्पत्तये स्वाधिष्ठितान् करोति; (तादृशं परमात्मानं स्वीयेनोपासनाख्येन ज्ञानेन साक्षात्कृत्य परमां शान्तिं प्राप्नोति)।

488. 'यो वा एतदक्षरं गार्गि अविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते, बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति, यो वा एतदक्षरं गार्गि अविदित्वास्माल्लोकात्प्रेति स कृपणः, अथ य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात्प्रेति स ब्राह्मणः' (बृ. उ, 5-8-9) 246

यः खलु पुरुषः तवोपदिष्टं सर्वशासितृ अक्षराख्यं परं ब्रह्म अविज्ञाय, अस्मिन् लोके अत्यधिकं महदायुर्लब्ध्वा वर्षसहस्रपर्यन्तं तपो यागादिकं, बहुवित्तव्ययेन आयासेन च साध्यं कर्म अनुतिष्ठति, तथैव लोकान्तरं देहान्तरं वा प्राप्नोति च, तस्य पुरुषस्य तदनुष्ठितं कर्माऽपि शाश्वतफलप्रदं न भवति; सोऽपि च शोच्यः, यतः एतादृशं देहम् आयुश्चोत्तमं लब्ध्वाऽपि अलब्धपरमपुरुषार्थ एव जातः सः।

यस्तु पुरुषः, भक्त्यादिना एतत् प्रशासितृ अक्षरं साक्षात्कृत्य लब्धब्रह्मज्ञानः सन्, प्राप्तं शरीरं विसृजति, स वस्तुतो ब्राह्मणः; सर्वथा न शोच्यः; यतो देहम् आयुश्च अवितथीकृत्य सम्पन्नपरमपुरुषार्थो जातः सः—इति।

489. 'यो विज्ञाने तिष्ठन्' (बृ. उ. 5-7-26) 35, 175, 182

ज्ञानस्वरूपे ज्ञानधर्मके जीवात्मनि अन्तस्तिष्ठन् यः, स एव तव अमृतः अन्तर्यामी।

490. I 'यो वै बालक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्यः'
(कौषी. उ. 4-26) 370

II 'यो वै....तत्कर्म' 371, 374

III 'यो वै बालाके' 374

हे बालाके! त्वया ब्रह्मत्वेनोपदिष्टानाम् आदित्यादीनां पुरुषाणां य एव निर्माता, आदित्यादयः पुरुषाः यत्कार्यभूताः, (तथा) प्रत्यक्षादि-प्रमाणसिद्धं चेतनाचेतनात्मकं समस्तं जगदपि, यस्यैव कार्यभूतं ; स एव आदित्यादिपुरुषाणां चिदचिद्रूपजगतश्च कारणभूतोऽर्थः ज्ञातव्यः, न तु कार्यभूताः अर्थाः।

491. 'योऽव्यक्तमन्तरे सञ्चरन् यस्याव्यक्तं शरीरं, यमव्यक्तं न वेद, योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद'

(सुबा. उ. 7) 405

यः परमात्मा, अव्यक्तशब्दवाच्ये वस्तुनि अन्तस्तिष्ठन्, तथा अक्षराख्ये चिद्गर्भे अचेतनरूपे वस्तुनि अन्तस्तिष्ठन्, अव्यक्तम् अक्षरञ्च यस्य आधेयत्व-विधेयत्व-शेषत्ववन्तौ, तथा स्वान्तर्वर्तिनमेव अव्यक्तम् अक्षरञ्च नैव जानीतः स एष सर्वेषामन्तःप्रविश्य नियन्ता नारायण-पदवाच्यः।

492. 'रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः' (बृ. उ. 7-5-1) 161, 172

एषः—अदित्यपुरुषः रश्मिद्वारा चाक्षुषरूपे प्रतिष्ठितः—चाक्षुष-पुरुषस्योपकारकः (आदित्यरश्मिसम्बन्धाभावे चाक्षुषपुरुषस्य परमात्मनः स्वकार्यकरणासामर्थ्यात्)।

493. 'रसो वै सः। रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति'

(तै. उ. आन. 7-1) 76

'यद्वै तत्सुकृतम्' इति सुकृतशब्देन निर्दिष्टं ब्रह्म रसः—आनन्दः। तं च रसपदवाच्यम् आनन्दरूपिणं परमात्मानं लब्ध्वैव खलु! अयं जीवः आनन्दवान् भवति।

494. 'लोहितशुक्लकृष्णाम्' (श्वे. उ. 4-5) [प्र. सं. 12 द्रष्टव्यः] 353

495. 'वज्रहस्तः पुरन्दरः (तै. ब्रा. 6-2-7-3)　　282

असुरपुराणां विदारयितृत्वात् पुरन्दरपदाभिधेयो देवेन्द्रः, हस्तेन वज्राख्यमायुधं धृतवान् ।

496. 'वरं वृणीष्व' (कौषी. उ. 3-3)　　113

हे प्रतर्दन ! मत्सकाशात् तवात्यन्ताभीष्टतया प्रार्थनीयम् अर्थविशेषं प्रार्थय ।

497. 'वाग्वा नाम्नो भूयसी' (छां. उ. 7-2-1)　　226

वागिन्द्रियमेव खलु ! वाचा उच्चार्यमाणात् नाम्नः अपेक्षया अतिशयितम् ।

498. 'वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति' (तै. सं. 2-1-1-1)　　284

वायुरेव अत्यन्तं वेगशीला देवता, (यो वायुदेवताकम् उक्तं यागमनुतिष्ठति, सः) स्वकीयेन भाग्येन वायुसमीपमेव शीघ्रं गच्छति ; स प्रसन्नो वायुरेव स्वाराधकम् एनं पुरुषं प्राप्तैश्वर्यं करोति ।

499. I 'विकारजननीमज्ञामष्टरूपामजां ध्रुवाम् ।। (मन्त्रि. उ. 1-3)
ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः ।
सूयते पुरुषार्थश्च तेनैवाधिष्ठिता जगत् ।। (मन्त्रि. उ. 1-4)
गौरनाद्यन्तवती सा जनित्री भूतभाविनी ।
सिताऽसिता च रक्ता च सर्वकामदुघा विभोः ।। (मन्त्रि. उ. 1-5)
पिबन्त्येनामविषमामविज्ञाताः कुमारकाः ।
एकस्तु पिबते देवः स्वच्छन्दोऽत्र वशानुगाम् ।। (मन्त्रि. उ. 1-6)
ध्यानक्रियाभ्यां भगवान् भुङ्क्तेऽसौ प्रसभं विभुः ।
सर्वसाधारणीं दोग्ध्रीं पीड्यमानां तु यज्वभिः ।।' (मन्त्रि. उ. 1-7)　　344

II 'विकारजननीं....मजाम्' (मन्त्रि. उ. 1-3)　　400

III 'विकारजननीम्' (मन्त्रि. उ. 1-3)　　404, 405

इन्द्रियैकादशक-पञ्चभूतात्मक-विकारषोडशकस्योत्पादिकाम्, प्रकृति-महदहङ्कार-पञ्चतन्मात्राख्याष्टप्रकृत्यात्मिकाम्, स्वयमचेतनभूताम्, उत्पत्ति-विनाशयोर्विदूराम्, (एनां प्रकृतिम् अल्पप्रज्ञाः चेतनाः भोग्यबुद्ध्या भुञ्जते)।

इयं च प्रकृतिः, परमात्मना सङ्कल्पात्मकेन ज्ञानेन विषयीक्रियते। तेनैव परमात्मना अधिष्ठिता सती, विस्तारपदवाच्यस्थूलावस्थापन्ना क्रियते, तेनैव स्वसङ्कल्पेन प्रवर्तिता सती, तेनैव अधिष्ठात्रा अधिष्ठिता चेतनैर्भोगार्थम् अपेक्षणीयं भोग्य-भोगोपकरण-भोगस्थानात्मकं जगत् प्रसूते।

इयं च प्रकृतिः; भगवतो लीलारसदोग्धृत्वेन 'गो'पदाभिधेया आद्यन्तराहित्यात् नित्या, समष्टिसृष्टेः व्यष्टिसृष्टेश्च कर्त्री, तेजोजल-पृथिवीद्वारा लोहित-शुक्ल-कृष्णाख्यवर्णयुक्ता च वर्तते।

इयं च तत्तत्कर्मानुगुणपरिणामवत्त्वेन अपक्षपातिनी। एनां च प्रकृतिं स्वात्मनः सकाशात् विविच्य अज्ञातवन्तः पुरुषाः, अत एव मन्दप्रज्ञतया कुमारपदवाच्याः कर्मपारवश्येन भोग्यबुद्ध्या भुञ्जते। एकः परमात्मा तु अकर्मपरतन्त्रः सन्, स्वसङ्कल्पाधीनस्वरूपस्थितिप्रवृत्तिकाम् एनां लीलार्थं भुङ्क्ते।

अयं च देवः एनामेव प्रकृतिम्, स्वायत्तीकृत्य, सङ्कल्पसृष्टिव्यापाराभ्यां स्वीयलीलारसावहतया भुङ्क्ते।

इयं च प्रकृतिः सर्वेषामेव बद्धानां जीवानां साधारण्येन फलदोग्ध्री, वत्सैः क्षीरार्थं मातेव कर्मपरतन्त्रैरात्मभिः स्वीयस्वीयकर्मफलानुरूपं परिणम्यमाना सती भोगसाधनी भवति।

500. I 'विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च न विजानामि'

(छां. उ. 4-10-5) 169

II 'विजा....ब्रह्म' 169

यत् 'प्राणो ब्रह्म' इत्युपदिष्टम् तत् जानामि। 'कं ब्रह्म खं ब्रह्म' इति यदुपदिष्टं तत् न ज्ञातुं शक्नोमि, तत् विविच्य उपदेष्टव्यम्॥

501. I 'विज्ञातारमरे केन विजानीयादित्युक्तानुशासनाऽसि मैत्रेय्येतावदरे खल्वमृतत्वम् ॥' (बृ. उ. 6-5-15) 398

II 'विज्ञाता....नीयात्' (बृ. उ. 4-4-15, 6-5-15) 383

तादृशं सर्वज्ञं परमात्मानं प्रक्रमोदितध्यानं विना, केवलेन यज्ञदानादिना केनोपायेन ज्ञातुं शक्नुयात्, न केनाऽपि इति एतावदन्तेनोपदिष्टेन प्राप्तोपदेशाऽसि त्वम्, हे मैत्रेयि ! अमृतत्वं यत् उपदेश्यमिति प्रार्थितं, तत् एतावदेव ; नाऽतोऽधिकमस्ति ।

502. 'विज्ञानं चाविज्ञानं च' (तै. उ. आन. 6-3) 35

चेतनाऽचेतननामरूपभाक् ब्रह्मैवाऽभवत् ।

503. 'विज्ञानं ब्रह्मेति व्यजानात्' (तै. उ. भृ. 5-1) 77

जगत्सृष्टि-स्थिति-लयहेतुत्वात्मकब्रह्मलक्षणसम्पन्नः 'विज्ञान'पदाभिधेयो जीव एवेति, गुरूपदेशेन तपसा च विज्ञातवान् वरुणपुत्रो भृगुः ।

504. I 'विज्ञानं यज्ञं तनुते, कर्माणि तनुतेऽपि च' (तै. उ. आन. 5-1) 34

II 'विज्ञानं....तनुते' 33, 35

स्वप्रकाशतया, ज्ञानैकनिरूपणीयत्वेन च विज्ञानपदाभिधेयो जीवः, शास्त्रविहितं यज्ञादिरूपं कर्म, इतरच्च जीवनोपयोगिरागप्राप्तं च कर्म अनुतिष्ठति ।

505. I 'विज्ञानघन एवैतेभ्यः भूतेभ्यः समुत्थाय तान्येवानुविनश्यति ; न प्रेत्य संज्ञाऽस्ति' (बृ. उ. 4-4-12) 382

II 'विज्ञान....विनश्यति' 397

अपरिच्छेद्यस्वरूपगुणादिकं ब्रह्म, 'विज्ञानघन'शब्दाभिधेयजीवात्मशरीरकं सत्, पृथिव्यादिरूपेषु भूतेषु उत्पद्यमानेषु, तेभ्य एव भूतेभ्यो हेतुभ्यः स्वयमुत्पद्यमानं, तेषु भूतेषु नश्यत्सु, पश्चात् स्वयमपि विनश्यति; परमात्मा जीवद्वारा, जीवगतात्यन्तज्ञानसङ्कोच-विकासप्रादुर्भावभागी भवति । देहोत्पत्तिविनाशानुविधाय्युत्पादविनाशवान् भवति (परमात्मा महद्भूतशब्दाभिधेयः) ।

506. 'विज्ञानमयः' (तै. उ. आन. 4-1) 27

ज्ञानैकाकारो ज्ञानधर्मकश्च जीवः ।

507. 'विज्ञानमानन्दं ब्रह्म' (बृ. उ. 5-9-28) 76, 87

ज्ञानानन्दस्वरूपं ज्ञानानन्दधर्मकं च ब्रह्म ।

508. 'विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः ।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥'

(कठ. उ. 3-9) 155, 338

सारथिवत् सुपथापथविवेचनपूर्वकम् इष्टानिष्टविषयेषु प्रवृत्तिप्रयोजक-समीचीनविज्ञानसम्पन्नः, प्रग्रहवत् सुव्यवस्थितनिरपायप्रवृत्तिनिवृत्तिप्रयोजक-समीचीनमनस्सम्पन्नश्च, यो नरः सः तरितव्यस्य संसाराध्वनः परपारभूतं परमात्मनो विष्णोः स्वरूपं, निरन्तरायम् अनायासेन सम्पन्नो भवति ।

509. 'विधूय पापम्' (छां. उ. 8-13-1) [प्र. सं. 66 द्रष्टव्यः] 320

510. 'विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्'

(ऋ. सं. 10-88-12)

देवाः, परमात्मना जगद्व्यापारनिर्वहणे नियुक्ताः सन्तः, सर्वस्य आनुकूल्यमुद्दिश्य, विश्वेषां नराणाम् अग्रं प्रति नयनशीलं, सर्वस्य विकासहेतुभूतं सूर्यं, दिनाख्यस्य कालस्य आदिभागो ध्वजवत् परिदृश्यमानं निर्ममिरे ॥

511. 'विश्वात्मानं परायणम्' (तै. ना. उ. 11-3) 20

चेतनाचेतनात्मकस्य जगतो धारकः नियामकः, शेषी च तथा परं गम्यस्थानं च परमात्मा नारायण एव उपास्यः । (प्रथमार्थे द्वितीया ।

512. वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसः परस्तात्'

(तै. आर. पु. 3-13-2) 87

पुरुषसूक्तप्रतिपाद्यं सर्वत्रव्याप्तं, तेजसा सूर्यवर्चसम्, प्राकृतात् सर्वस्मात् लोकात् उत्तरस्मिन् स्वासाधारणे परमे व्योम्नि विराजमानम् एतं परमपुरुषम् वेद्मि ।

513. **'वेदाहमेतं पुरुषं महान्तम्। आदित्यवर्णं तमसस्तु पारे'**
(तै. आर. पु. 3-12-16) [प्र. सं. 512 द्रष्टव्यः] 111

514. **'वेदेन रूपे व्याकरोत् सतासती प्रजापतिः'** (तै. ब्रा. 2-6-2-7) 287
भगवता जगत्कार्यनिर्वहणाय नियुक्तः स्रष्टा चतुर्मुखः वेदमेव, भगवत्प्रत्तं साधनतया उपादाय, सदसदात्मके परमात्मसङ्कल्पानुगुणे विविधे रूपे विविक्तं यथा, तथा निर्मितवान्।

515. **'वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः'**
(तै. सं. 1-5-11-8) 197
अग्न्याराधकाः वयं, वैश्वानराख्यस्याग्नेः शोभनायां मतौ विषयी भवेम। स हि अग्निः सर्वेषां रञ्जनात् राजा सन्, अपेक्षितानां सर्वसम्पदां प्रदाता। प्रसिद्धमेतत् 'श्रियमिच्छेद्धुताशनात्' इति।

516. **'व्याधिभिः प्रतिपूर्णोऽस्मि'** (छां. उ. 4-10-3) 165
भगवति! आचार्यजाये! कर्मवश्यजीवसम्बन्धिगर्भवासजन्मजरा-मरणादिविषयकभयरूपाभिः व्याधिभिः मनसि विपरिवर्तमानाभिः पूर्णोऽस्मि इति उपकोसल उवाच।

517. **'व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वा एवमयमन्त-रात्मन् पुरुषो हिरण्मयो यथा ज्योतिरधूमम्'** (अग्नि. 10-10-6) 143
व्रीहि-यव-श्यामाक-श्यामाकतण्डुलाख्यसूक्ष्मधान्यवत् अत्यन्तसूक्ष्मः निर्धूमकोऽग्निरिव प्रकाशमानतेजोमयदिव्यरूपः परमात्मा, शरीरान्तस्थे जीवात्मन्यन्तर्यामितया वर्तते।

518. **'शमीमय्यः स्रुचः'** (तै. ब्रा. 1-1-29) 64
अग्नौ होमसाधनीभूताः 'स्रुक्'पदवाच्याः पात्रविशेषाः शम्याख्य-वृक्षविशेषसम्बन्धिदारुप्रकृतिकाः कार्याः।

519. **'शान्त उपासीत'** (छां. उ. 3-14-1) [प्र. सं. 570 द्रष्टव्यम्] 131

520. **'शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति'** (मुण्ड. उ. 1-1-3) 188

शुनकनाम्नो मुनेः पुत्रः महागृहस्थः (कश्चन) शास्त्रीयेन समित्पाणित्वादिना नियमजातेन सम्पन्नः, अङ्गिरो नामानं ब्रह्मज्ञम् आचार्यतल्लजम्, उपगम्य, भो! सृष्ट्यादिरहस्यवेत्तः! मुने! लोके कस्मिंश्चन यत्किञ्चित्कार्योपादानभूतेऽर्थे ज्ञानविषयीकृते सति तदुपादेयभूतकार्यजातज्ञानं यथा जायते तथा, यस्मिन् वस्तुनि ज्ञानविषयतामापादिते सति चेतनाचेतनात्मकं जङ्गमस्थावरात्मकं च दृश्यादृश्यं जगत् ज्ञानविषयीकृतमेव भवेत्, तादृशं सर्वकार्यजातोपादानभूतं वस्तु किम्। यज्ज्ञानानन्तरं ज्ञातव्यमेव नावशिष्येत तादृशं वस्तु मह्यमुपदिश! इति प्रार्थितवान्।

521. **'श्रद्धा त्वेव विजिज्ञासितव्या'** (छां. उ. 7-19-1) 234

परब्रह्मश्रवणोपायभूता परब्रह्मश्रवणविषयिणी श्रद्धापदवाच्या त्वरैव शीघ्रं सम्पादनीया, (यया सम्पादितया तत्कार्यं श्रवणादिकं शीघ्रमेव सम्पन्नं भवेत्)।

522. **'श्रुतं ह्येवमे(व)भगवद्दृशेभ्यः तरति शोकमात्मवित्'**
(छां. उ. 7-1-3) 226

आत्मज्ञानवान् पुरुषः, शोकार्णवस्य परं पारं गच्छतीति भगवद्दृशेभ्यः सकाशात् श्रुत्वा मयाऽवगतमस्ति।

523. **'संयुक्तमेतत् क्षरमक्षरञ्च व्यक्ताव्यक्तं भरते विश्वमीशः।**
**अनीशश्चात्मा बध्यते भोक्तृभावात् ज्ञात्वा देवं मुच्यते**
**सर्वपाशैः(पैः)॥'** (श्वे. उ. 1-8) 345

सर्वनियन्ता परमात्मा, व्यक्तरूपमचेतनवर्गम् अव्यक्तरूपं चेतनवर्गं च निखिलं देहाख्ये स्थाने मिथः संमिलितमेव स्वयं बिभर्ति। परं स्वयं तादृशे कर्मणि प्रवृत्तोऽपि, नैव बन्धकर्मी भवति; यतः हेयप्रत्यनीकतया अलिप्तकर्मा। यश्च नियन्तृत्वराहित्येन नियाम्यस्वभावो जीवोऽस्ति, स तु कर्मफलभोक्तृतायाः अवर्जनेन लिप्तकर्मेति, संसारबन्धस्य कर्मी भवत्येव। निखिलहेयप्रत्यनीकं स्वयं प्रकाशं परमात्मानम् उपासनतः साक्षात्कृत्य सांसारिकेभ्यः सर्वेभ्यो बन्धेभ्यः निर्मुक्तो भवति।

524. **'स इमान् लोकानसृजत'** (ऐत. उ. 1-2) [प्र. सं. 525 द्रष्टव्यः] 7, 92

525. I 'स ईक्षत लोकान्नु सृजा इति ।
स इमाँल्लोकानसृजत' (ऐत. उ. 1–1, 2) 7

II 'स ईक्षत....इति' 7, 100

पूर्वं प्रस्तुतः परमात्मा, 'लोकान् सृजानि' इति सङ्कल्पमकरोत् । (स परमात्मा) सङ्कल्पानुसारेण अम्भोमरीच्यादिलोकान् असृजत ।

526. 'स ईक्षाश्चक्रे....स प्राणमसृजत' (प्रश्न. उ. 6–3, 4) 7

स जीवात्मा पर्यालोचितवान्....स्वोत्क्रामन्ति प्रतिष्ठासहभूतोत्क्रान्ति-प्रतिष्ठाद्याश्रयभूतवस्तुविषयकपर्यालोचनसम्पन्नः स जीवः तादृशं मुख्य-प्राणं सृष्टवान् ।

527. 'स उत्तमः पुरुषः । स तत्र पर्येति जक्षत्क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरम्' (छां. उ. 8–12–3) 269

सम्प्रसादपदवाच्येन जीवेन उपसम्पदनीयो यः परज्योतीरूपः परमात्मा, सः उत्तमः पुरुषः । उपसम्पत्ता च जीवः, परमात्माविनाभावेन तत्सांनिध्य-तदनुभवादिमान् भवति । परमात्मभोगानुगुणादन-क्रीडादिमान्, तादृश-स्वभावस्त्री-यान-ज्ञात्यादिप्रयोज्यसङ्कल्पानुगुणभोगसम्पन्नश्च भवति । अस्य कर्माधीनदेहसम्बन्ध-तदायत्तप्राक्तनदुःखानुभवस्मरणादिः, आनन्दमयेन परमात्मना सायुज्यमापन्नस्य नैव सम्भवति ।

528. 'स एको मानुष आनन्दः' (तै. उ. आन. 8–1) 67

युवत्व-दृढगात्रत्व-सौन्दर्य-ज्ञान-बलैश्वर्यादयः सम्भूय यत्र भवन्ति ; स एकः संमिलितः आनन्दः मानुषैः अभिलषितुं सम्भावनीयः आनन्दः ।

529. 'स एनान् ब्रह्म गमयति । एष देवपथो ब्रह्मपथः । एतेन प्रतिपद्य-माना इमं मानवमावर्तं नावर्तन्ते' (छां. उ. 4–15–6)

[प्र. सं. 182 द्रष्टव्यम्] 171

530. 'स एवाधस्तात्' (छां. उ. 7–25–1) 238

सर्वाधारः स्वं प्रति आधाररहितः परमात्मैव 'अधः' (ऊर्ध्वं) इत्यादि-सर्वत्र प्रतिष्ठितः ।

531. **'स एवेदं सर्वम्'** (छां. उ. 7-25-1) 238

स परमात्मा चेतनाचेतनात्मकसर्वजगच्छरीरकः ।

532. I **'स एष इह प्रविष्ट आनखाग्रेभ्यः ....पश्यंश्चक्षुः, शृण्वन् श्रोत्रं, मन्वानो मनः, ....आत्मेत्येवोपासीत'** (बृ. उ. 3-4-7) 367

II **'स एषः'** 367

अव्याकृतपदवाच्यनामरूपविशिष्टतया अनभिव्यक्ताचेतनशरीरकः, पूर्वमात्मशब्दितः परमात्मा, कार्यवर्गेऽस्मिन् स्वसृष्टे नखाग्रपरिमितं स्थानमपि अविहाय, सर्वत्र परिपूर्णतया अन्तर्यामित्वेन प्रविष्टो वर्तते। ....दर्शनक्रियां कुर्वन् चक्षुर्नामा भवति। श्रवणक्रियां कुर्वन् श्रोत्रनामा भवति। मननं कुर्वन् मनोनामा भवति।....नाम-रूपात्मकचिदचित्प्रपञ्चापृथक्सिद्धविशेष्यत्वेनैव परमात्मानम् उपासीत।

533. **'स एष नेति नेति'** (बृ. उ. 6-5-15) 398

पूर्वप्रकान्तः एष परमात्मा चेतनसलक्षणोऽपि न भवति, तथा अचेतनसलक्षणोऽपि न भवति, स्वेतरसमस्तचिदचिद्वस्तुविलक्षणस्वरूपः ।

534. **'स एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृतः'** (कौषी. उ. 3-(2)

[प्र. सं. 218 द्रष्टव्यम्] 115, 117, 118

535. **'स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते'** (प्रश्न. उ. 1-7) 197

यः प्राक् प्रस्तुतः प्रजापतिशब्दितः विश्वेषां नराणां नेतृत्वेन वैश्वानरशब्दवाच्यः, सर्वशरीरतया विश्वरूपशब्दितः, अग्रनेतृत्वादिगुणयोगेन अग्निशब्दितः परमात्मा प्राणशब्दितभोक्तृरूपः सन् उदयते।

536. **'स एष सर्वेभ्यः पाप्मभ्य उदितः'** (छां. उ. 1-6-7) 84

'उत्' इति नाम्ना निर्दिष्टः परमात्मा, सुकृत-दुष्कृताख्यसर्वविधपापसम्बन्धविदूरः ।

537. I **'स एषोऽग्निर्वैश्वानरो यत्पुरुषः'** (अग्नि. 10-5-6-11) 206

II **'स एषो....नरः'** 204

'सहस्रशीर्षा पुरुषः' इत्यादिवेदान्तवाक्येषु प्रसिद्धो यः पुरुषः, स एष वैश्वानरः अग्निशरीरकः परमात्मा ।

538. 'स एषोऽन्तश्चरते बहुधा जायमानः' (मुण्ड. उ. 2-2-5)
[प्र. सं. 58 द्रष्टव्यः] 216

539. 'स कारणं करणाधिपाधिपो न चाऽस्य कश्चिज्जनिता न चाधिपः'
(श्वे. उ. 6-9) [प्र. सं. 288 द्रष्टव्यः] 87, 137

540. 'स क्रतुं कुर्वीत' (छां. उ. 3-14-1) [प्र. सं 18 द्रष्टव्यः] 131, 134, 146

541. 'स चाऽनन्त्याय कल्पते' (श्वे. उ. 5-9) 135

वालाग्रशतशतांशतुल्य एव जीवः, मोक्षे धर्मभूतज्ञानविकासेन-विभुत्वलक्षणानन्त्याय प्रभवति ।

542. 'स त आगम्य न विदुः, स त आगच्छामह इति' (छां. उ. 6-10-2) 262

सुषुप्तिकाले सद्वस्तुनि अप्ययं प्राप्य, सुषुप्तेरुत्थाय जाग्रद्दशां प्राप्ताः चेतनाः, सद्वस्तुनः सकाशादागता एव सन्तोऽपि 'सतः सकाशादागता वयम्' इति नैव जानन्ति ।

543. I 'स त आत्मान्तर्याम्यमृतः' (बृ. उ. 5-7-23) 175

II 'स त आत्मा' 180

यः अन्तःप्रविश्य प्रवृत्ति-निवृत्तिलक्षणनियमनं करोति, सः अन्तर्यामी, तत्र निरुपाधिकामृतत्वशाली आत्मा ।

544. 'स तत्र पर्येति जक्षत्क्रीडन्' (छां. उ. 8-12-3)
[प्र. सं. 527 द्रष्टव्यः] 272

545. I 'सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति'
(छां. उ. 6-8-1) 16

II 'सता .... भवति' [प्र. सं. 607 द्रष्टव्यः] 379

546. 'सत्यं चानृतं च सत्यमभवत्' (तै. उ. आन. 6-3) 417

सत्यशब्दवाच्यचेतनगतानि (तथा) जातिगुणाद्याश्रयचेतनाश्रितजड-अनृत-शब्दवाच्याचेतनगतानि च यानि यानि नाम-रूपाणि, तेषाम् अन्ततः स्वयमेवाश्रयभूतो भवन्नपि, निर्विकारत्वात्मकस्वकीयस्वभावा-प्रहाणेन सत्यमेवाऽभवत् ।

547. **'सत्यं ज्ञानमनन्तं ब्रह्म'** (तै॰ उ॰ आन॰ 1–1) 26, 28, 31, 87, 122, 231, 365, 410, 415

निरुपाधिकसत्तायोगि, नित्यासङ्कुचितज्ञानैकाकारं, त्रिविधपरिच्छेदातीतं च ब्रह्म (यो मुमुक्षुरुपास्ते, स ब्रह्म तद्गुणांश्च अनुभवति)।

548. **'सत्यं त्वेव विजिज्ञासितव्यम्'** (छां॰ उ॰ 7–16–1) 232, 234

सततैकरूपत्वेन निर्विकारम्, अत एव 'सत्य'पदवाच्यं ब्रह्मैव उपास्यम्।

549. **'स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम्।**
**स्वर्गलोका अमृतत्वं भजन्त एतद्द्वितीयेन वृणे वरेण ॥'**
(कठ॰ उ॰ 1–13) 339

हे मृत्यो! पुराणादिप्रसिद्धसार्वज्ञ्यः त्वम्, (उपासनद्वारा) स्वर्ग (मोक्ष)प्रयोजनकम् अग्निं सम्यक् ज्ञातवानसि खलु। तमग्निं संसारबन्धान्मोक्षप्राप्तौ श्रद्धावते मह्यं स्पष्टमुपदिश। स्वर्गपदाभिधेयं परमानन्दस्थानं (परमपदं) प्राप्ताः जनाः, स्वस्वरूपाविर्भावलक्षणमोक्षशब्दितम् अमृतत्वं प्राप्नुवन्ति। अतः एतादृशाग्न्युपदेशनं त्वया मह्यं दातुमभ्युपगतेन द्वितीयेन वरेण प्राप्तुं याचे।

550. I **'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्'** (छां॰ उ॰ 6–2–1) 2, 4, 41
II **'सदेव....मेव'** 4, 404
III **'सदेव....आसीत्'** 39, 87, 92, 95, 98, 281, 363
IV **'सदेव सोम्य'** 100

इदं बहुत्वावस्थं, विभक्तनामरूपं, प्रत्यक्षतया दृश्यमानं जगत् सृष्टेः प्राक् निमित्तान्तरशून्यम्, अविभक्तनामरूपतया एकं सच्छब्दितं ब्रह्मैवाऽऽसीत्।

551. **'स न साधुना....प्रव्रजन्ति'** (बृ॰ उ॰ 6–4–22) [प्र॰ सं॰ 576 द्रष्टव्यः] 324

552. **'सन्ततं सिराभिस्तु लम्बत्याकोशसन्निभम्'** (तै॰ ना॰ उ॰ 11–8) 218

(पूर्ववाक्यैरुक्तं हृदयाख्यं भगवदुपासनस्थानं) सर्वाभिर्नाडीभिः सम्यग्व्याप्तम् (समन्ताद्विधृतं वा) ईषन्मुकुलितपुण्डरीकसदृशं सत् लम्बते॥

553. 'सन्मूलाः सोम्येमास्सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः'
(छां. उ. 6-8-7) 19, 42

सर्वमचित्संसृष्टं चेतनजातं, सच्छब्दवाच्यब्रह्माधीनोत्पत्तिमत् ब्रह्मैकधार्यं ब्रह्मण्येव लीयमानं च ।

554. 'सप्त प्राणाः प्रभवन्ति तस्मात्' (तै. ना. उ. 10-2) 349

ज्ञानेन्द्रियाणि चक्षुः-श्रोत्र-घ्राण-रसना-त्वगाख्यानि, तथा मनः बुद्धिश्चेति सप्तसंख्याकाः प्राणाः, सर्वगुहानिहितात्, अणोरणीयसः महतो महीयसश्च सप्तसंख्याकाः प्राणाः, सर्वगुहानिहितात्, अणोरणीयसः, महतो महीयसश्च परमात्मन एव प्रभवन्ति—जायन्ते ।

555. 'स प्राणमसृजत' (प्रश्न. उ. 6-4) [प्र. सं. 526 द्रष्टव्यः] 7

556. 'स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह'
(मुण्ड. उ. 1-1-1) 187

सृष्टेः आदौ सम्भूतः जगत्सृष्टि-रक्षणपरो ब्रह्मा, सर्वासां विद्यानामाश्रयभूतां ब्रह्मविद्याम्, अथर्वनाम्ने ज्येष्ठपुत्राय उपदिष्टवान् ।

557. 'स भूरिति व्याहरत्, स भूमिमसृजत....स भुव इति व्याहरत् । सोऽन्तरिक्षमसृजत' (तै. ब्रा. 2-2-4) 288

स्रष्टा प्रजापतिः 'भूः' इतीमं शब्दम् उच्चारितवान् । उच्चारितनामानुगुण्येन तदर्थभूतां पृथिवीं सृष्टवान् । स एव च अनन्तरं 'भुवः' इतीमं शब्दम् उच्चारितवान् । ततश्च तस्य नाम्नः अर्थभूतम् अन्तरिक्षं सृष्टवान् ।

558. 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥'
(श्वे. उ. 4-7) (मुण्ड. उ. 3-1-2) 221

वृक्षवत् छेदनार्हे—अत्यन्तं नश्वरे, अस्मिन्नेकस्मिन् देहे परमात्मना सहैव विद्यमानः अनादिभगवन्मायातिरोहितस्वस्वरूपो जीवः, अचित्संसर्गेण अचिदर्थतादाम्यं स्वस्मिन् चिन्तयन्, तदायत्तं दुःखानुभवं करोति ।

यदा च दैवात् स्वस्माद्विलक्षणं स्वेन सहैव सन्तं परमात्मानं, तदाज्ञासिद्धैः स्वानुष्ठितैः कर्मज्ञानादिभिः प्रीतं, तदीयया करुणया साक्षात्करोति तदीयमैश्वर्यं च अनुसन्धत्ते, तदा निरस्तशोकः सम्पद्यते ।

559. **'स य इदमविद्वानग्निहोत्रं जुहोति, यथाङ्गारानपोह्य**
**भस्मनि जुहुयात्तादृक् तत्स्यात् ।**
**अथ य एतदेवं विद्वानग्निहोत्रं जुहोति, तस्य सर्वेषु लोकेषु सर्वेषु**
**भूतेषु सर्वेष्वात्मसु हुतं भवति ।**
**तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते ॥'**
(छां. उ. 5-24-1, 2, 3) 210

यः पुरुषः, उरःप्रभृतिस्वावयवानाम् अग्निहोत्रोपकरणवेद्यादिरूपताम् अजानन्, प्राणाग्निहोत्रम् अनुतिष्ठति, सः होमाधिकरणतया शास्त्रसिद्धम् अङ्गारान् यज्ञवेदिकातो दूरीकृत्य कश्चन अङ्गारभस्मनि हविःप्रक्षेपं कुर्याच्चेत् यथा स्यात् तद्वत्, निष्फलं भवेत् । यस्तु उक्तमिममर्थं सम्यग्जानन् अग्निहोत्रमनुतिष्ठेत्; तदीयो होमः सर्वलोक-सर्वभूत-सर्वात्म-प्रीतिकरी भवति । एवं विद्यापूर्वकप्राणाग्निहोत्रानुष्ठातुः सर्वाण्यपि पापानि अग्निप्रक्षिप्तेषीकतूलमिव क्षणमात्रेण दग्धानि भवन्ति ।

560. **'स य एतदेवममृतं वेद, वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति'** (छां. उ. 3-6-3) 296

यः खलु पुरुषः, उक्तया रीत्या वसुतृप्त्याधायकदर्शनगोचरत्वलक्षण-वसूपजीव्यत्वादिना रोहितामृतं यो वेद, स उपासिता वसुत्वं प्राप्य अग्न्यात्मकेन मुखेन रोहिताख्यामृतस्य दर्शनं प्राप्य दर्शनमात्रेण तृप्तो भवति ।

561. **'स य एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः ।**
**अमृतो हिरण्मयः'** (तै. उ. शी. 6-1) 132

हृदयाख्यस्य देहान्तःप्रदेशस्य अन्तः यः आकाशो वर्तते, तत्र अयं पुरुषविशेषो विराजते; यः असंसारी दिव्यकमनीयविग्रहः विशुद्धेनैव मनसा ग्राह्यः । स च उपासितव्यः ।

562. **'स यथा प्रयोग्य आचरणे युक्त एवमस्मिन् शरीरे प्राणो युक्तः'** (छां. उ. 8–12–3) 269

यथा—शकटे युग्यः अश्वः बलीवर्दो वा पाशेन युक्तो भवति, एवमेवाऽयं प्राणसहचरः प्रत्यगात्मा, संसारदशायां कर्मपाशेन युक्तो भवति।

563. **'स यथाऽऽर्द्रैधाग्नेः'** (बृ. उ. 4–4–10) 396

आर्द्रेन्धनविशिष्टात् अग्नेः, (सम्यक् प्रज्वलितात् पृथग्विधाः धूमाः विनिश्चरन्ति, एवमेव जगदभिन्ननिमित्तोपादानभूतात् परमात्मनोऽपि, ऋगादयः सर्वे वेदाः तदङ्गानि च अनायासेनैव आविर्भवन्ति)।

564. **'स यथा सर्वासामपां समुद्र एकायनम्'** (बृ. उ. 4–4–11) 396

यथा समुद्रः सर्वाः भूयसीः अपः, बहुधा स्वस्मिन् विशतीः गृह्णाति; ताभिः कदाचिदपि न पूर्यते च, (तथा करणग्रामाः सर्वे उपासनीये परे ब्रह्मणि नियन्तव्यः)।

565. **'स यथा सैन्धवघनः'** (बृ. उ. 6–5–13) 396

यथा वा लवणखण्डः अन्तर्बाह्यावयवानवशेषेण सर्वोऽप्यवयवः (रसघन एव अनुभूयते ; एवमेव अयं परमात्माऽपि, स्वरूपतो धर्मतश्चेति सर्वांशेन ज्ञानमयो जीवः तच्छरीरक एवाऽस्ति)।

566. **'स यदा....लोकाः'** (कौषी. उ. 4–40) [प्र. सं. 610 द्रष्टव्यः] 372

567. **'स यदा प्रतिबुध्यते'** (कौषी. उ. 4-40) [प्र. सं. 610 द्रष्टव्यः] 372

568. **'स यो ह वै तद्भगवन् मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत, कतमं वाव स तेन लोकं जयति'** (प्रश्न. उ. 5–1) 204

हे पूजार्ह ! मनुष्याणां मध्ये यः अधिकारी मरणान्तमोङ्कारमभिध्यायति, सः तेनोङ्कारेण कतमं लोकं प्राप्नोति ।

569. **'स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद'** (अग्निर. 10-5-6-11) 204

यः खलु चेतनः द्युप्रभृतिमूर्धादिमत्त्वेन हेतुना पुरुषसदृशं, पुरुषान्तः-

प्रतिष्ठितजाठराग्निशरीरकं च परमात्मानं वैश्वानराग्नितया उपास्ते ; (सः मृत्युञ्जय-सर्वायुरास्यादिफलभाग्भवति) ।

570. I 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' (छां. उ. 3-14-1) 134, 146

II 'सर्वं....तज्जलान्' 324

III 'सर्वं....ब्रह्म' 131, 136 404

सर्वस्य जगतः ब्रह्मणो जातत्वात्, ब्रह्मणि लीयमानत्वात्, ब्रह्माधीन-जीवनत्वाच्च 'इदं ब्रह्म सर्वात्मकम्' इति शान्तः सन् उपासीत ।

571. I 'सर्वं तं परादाद्योऽन्यत्राऽऽत्मनः सर्वं वेद' (बृ. उ. 6-5-7) 386, 404

II 'सर्वं तं परादात्' 384

यश्चेतनः सर्वमिदं जगत् 'अब्रह्मात्मकं—स्वनिष्ठम्' इति जानीयात्, तं सर्वमपि जगत् अभिभवेत् ।

572. 'सर्वकर्मा....नादरः' (छां. उ. 3-14-4) [प्र. सं. 147 द्रष्टव्यम्] 147

573. 'सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' (मुण्ड. उ. 1-1-6) [प्र. सं. 21 द्रष्टव्यः] 145

574. 'सर्वत एवमेतदन्नमत्स्यन्ति' (छां. उ. 4-1-1) 305

('सर्वत एव मेऽन्नमत्स्यन्ति' इति उपनिषत्पाठः)

सः जानश्रुतिः, 'सर्वत एव एत्य अतिथयः एतत् ममाऽन्नं भोक्ष्यन्ते' (इत्यभिप्रायेण सर्वासु दिक्षु ग्रामनगरमार्गारण्यादिषु पान्थानामनाथानां शीतवात-वर्षातपवारणान्नोदकशयनाच्छादनादिपूर्णाः शालाःकारितवान्) ।

575. 'सर्वस्य वशी सर्वस्येशानः' (बृ. उ. 6-4-22) [प्र. सं. 576 द्रष्टव्यः] 324

576. 'सर्वस्याधिपतिः, सर्वस्य वशी सर्वस्येशानः। स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्। एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय। तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति....एतमेव विदित्वा मुनिर्भवति । एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' (बृ. उ. 6-4-22) 323, 324

('सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः' इति उपनिषत्पाठः दृश्यते) सर्वशेषित्वरूपसर्वात्मत्ववान्, सर्वधारकत्वरूपसर्वात्मत्ववान्, सर्वनियन्तृत्वरूपसर्वात्मत्ववान्; साध्वसाधुकर्मकृतोत्कर्षापकर्षशून्यः, एष परमात्मैव सर्वनिरूपितेश्वरत्व(प्रभुत्व)वान् निःश्वासोच्छ्वासाधीनजीवनवतां सर्वेषां शेषिभूतः, सर्वेषां भूतानां रक्षकः, सर्वलोकमर्यादाया असाङ्कर्याय धारकः सेतुः, ईदृशमेनं परमात्मानं वेदाध्ययनेन, (ज्योतिष्टोमाद्यात्मकेन यज्ञेन, अनशनलक्षणेन तपसा, फलाभिसन्धिरहितेन तपसा वा) वेत्तुम्—प्राप्तुम् इच्छन्ति ब्राह्मणाः।........निरन्तरं मननशीलः, मननेन एतमेवात्मानं विदित्वा, योगिपदवाच्यो भवति। साक्षात्क्रियमाणम् एतमेव च परमात्मानं प्रेप्सवः, संन्यासाश्रमिणो भवन्ति।

577. I **'सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच'** (छां. उ. 8–12–6) 270

II **'सर्वांश्च....कामान्'** 272

यश्चेतनः प्रजापतिविद्योक्तम् आत्मानं गुरुमुखात् श्रवणादिपूर्वकं श्रुत्वा उपास्ते, सः सर्वान् लोकान् सर्वांश्च कामान् भोगादींश्च लब्ध्वा आनन्दी भवति।

578. **'सर्वाणि रूपाणि विचित्य धीरः। नामानि कृत्वाऽभिवदन् यदास्ते'** (तै. आर. पु. 3–12–16) 20, 87, 320

संनिहित-व्यवहितसर्वगोचरज्ञानवान् यः परमात्मा, स्वेन सृष्टानां चराचरात्मकानां वस्तूनां स्वकृतानि तत्तद्गतानि रूपाणि स्वीयज्ञानेन धृत्वा, तदनुगुणानि नामानि च तेषां निवेश्य, लोके शब्दार्थव्यवहारसम्प्रदायप्रवर्तनाय तत्तद्वस्त्वाभिमुख्येन तत्तन्नाम वदन्, यः भगवान् वर्तते (तं दिव्यतेजोमयविग्रहं परमव्योमनिलयं परमात्मानम् अहं साक्षात्कृतवानस्मि)।

579. **'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते'** (छां. उ. 1–11–5) 102, 133

सृष्टानि सर्वाणि च भूतानि प्राणे एव लीयन्ते, प्राणादेव उत्पत्ति-भाञ्जि भवन्ति ।

580. I **'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते'** (छां. उ. 1–9–1) 95, 96, 98, 265

II **'सर्वाणि....भूतानि'** [प्र. सं. 80 द्रष्टव्यः] 100

581. **'सर्वान् पाप्मनोऽपहत्य सर्वेषाञ्च भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति स एवं वेद'** (कौषी. उ. 4–45) 376

उपासकः, अशनाया-पिपासे, शोक-मोहौ, जरा-मृत्यू इत्येवमादीनि सर्वाणि पापानि निरङ्कुरं विनाश्य, अकर्मवश्यतां प्राप्य, तदात्मकं श्रैष्ठ्यम्, सर्वाधिपतौ परमात्मनि विद्यमानगुणाष्टकाविर्भावलक्षणमाधिपत्यं लब्ध्वा आनन्दी भवति, यश्च एवमर्थम् एवं जानाति, सोऽपि ईदृशमा-नन्दमाप्नोति ।

582. **'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि'** (तै. ना. उ. 1–8) 88

विद्युद्वर्णतेजोमयविग्रहसम्पन्नात् परमपुरुषादेव स्थूल-सूक्ष्माद्यात्मकाः काल-तदवयवाः अजायन्त ।

583. **'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति, तत्ते पदं सङ्ग्रहेण ब्रवीम्यो-मित्येतत् ॥'** (कठ. उ. 2–15) 341

ऋगादयः सर्वे एव वेदाः साङ्गाः यागादिकर्मभिराराध्यं यत्स्वरूपं सर्वचेतनप्राप्यतया प्रतिपादयन्ति, तपःप्रधाना वेदोपरितनभागाश्च उपासनद्वारा आराध्यं यत्स्वरूपमेव चेतनप्राप्यं वदन्ति, ब्रह्मचारिणः यच्च भगवतः स्वरूपं प्राप्तुकामा एव गुरुकुलवासादिकं नियमव्रतादि अनुतिष्ठन्ति तादृशं भगवतः स्वरूपं सङ्क्षिप्ते 'ओम्' इत्यनेन प्रणवात्मकेन शब्देनोपदिशामि ।

584. I **'सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति'** (छां. उ. 5–18–1) 200

II **'सर्वेषु लोकेषु'** [प्र. सं. 436 द्रष्टव्यः] 212

585. 'स वा एष एतेन दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके' (छां. उ. 8-12-5) 270

स एषः शरीरात् इन्द्रियेभ्यश्च सर्वेभ्यो विलक्षणः आत्मा, विधूतकर्मनिमित्तशरीरेन्द्रियः पुरुषः मनःपदवाच्येन स्वस्वरूपस्वभावान्तर्गतेन (स्वाभाविकेन) धर्मभूतज्ञानाख्येन चक्षुषा पूर्वोक्तान् ब्रह्मलोकशब्दितदहराकाशनिष्ठान् सर्वान् अपहतपाप्मत्वादिसत्यसङ्कल्पत्वान्तान् गुणान् अनुभवन् आनन्दी विराजते ।

586. 'स वा एष एवं पश्यन् , एवं मन्वान एवं विजानन् आत्मरतिरात्मक्रीडः आत्ममिथुनः आत्मानन्दः स स्वराड्भवति, तस्य सर्वेषु लोकेषु कामचारो भवति, अथ येऽन्यथाऽतो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति तेषां सर्वेषु लोकेष्वकामचारो भवति'

(छां. उ. 7-25-2) 237

य एष उपासकश्चेतनः, श्रवणेन मननेन निदिध्यासनेन च पूर्वोक्तभूमात्मविषयकेन, भूमाख्यमात्मानं साक्षात्कृतवान् सः विविधभोग्यभोगोपकरण-भोगस्थानादिनिबन्धनसर्वविधानन्दभागी भवति ; तस्मिन्नानन्दे सर्वस्याप्यानन्दस्य अन्तर्भूतत्वात् । अकर्मवश्यो भवति सः, अकर्मप्रतिहतज्ञानः स मुक्तः विकारलोकान् ब्रह्मविभूतिभूतान् अनुभूय यथाकामं तृप्यति । ये तु उक्तादन्येन प्रकारेणोपासते ; ते विधिनिषेधकिङ्करा भवन्ति । तथा क्षय्यलोकाश्च भवन्ति । तेषां भगवद्विभूतिभूतेषु अन्यान्येषु विकारलोकेषु अप्रतिहतसञ्चारता च न भवति ।

587. 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति'

(छां. उ. 5-15-4) 230, 233

पूर्वस्मिन् वाक्ये प्राणशब्दनिर्दिष्टः जीवः, स्वात्मानं पूर्वोक्तप्रकारेण मननविषयीकुर्वन्, उपासकश्च सन् तेन प्रकारेण साक्षात्कुर्वन्, स्वोपास्यवस्तुनः सर्वोत्कृष्टत्ववादी भवति । बृहस्पतिसमप्रत्यर्थिजनप्रतिभाधायकस्वोपास्यदेवतापारम्यशीलत्वं अतिवादित्वम् । तच्च उपास्यदेवतातिशये पर्यवस्यति ।

588. **'स वा एष पुरुषोऽन्नरसमयः'** (तै. उ. आन. 1–3) 23, 35
'आत्मन आकाशः सम्भूतः' इत्यादिक्रमेण सृष्टः अयं देहः, अन्नरसस्य परिणामभूतः ।

589. **'स वा एष महानज आत्माऽजरोऽमरः'** (बृ. उ. 6–4–25) 400, 410
पूर्वप्रस्तुत एष परमात्मा जन्म-जरा-मरणशून्यः, (असंसारी) ।

590. **'स वा एष महानज आत्माऽन्नादो वसुदानः'** (बृ. उ. 6–4–24) 324
पूर्वप्रस्तुत एष परमात्मा जन्म-तदुपलक्षितजरामरणादिविदूरः, देहधारणोपयुक्तान्नप्रदः, जीवनसम्बन्धिवसनाच्छादनादिसम्पादनौपयिकधनप्रदश्च ।

591. **'स वै वेदितव्यः'** (कौषी. उ. 4–26) [प्र. सं. 490 द्रष्टव्यः] 370

592. **'स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति'** (छां. उ. 5–18–1) [प्र. सं. 436 द्रष्टव्यः] 200

593. **'स ह सञ्जिहान एव क्षत्तारमुवाच'** (छां. उ. 4–1–5) 305
जानश्रुतिः पौत्रायणः कथमपि निशाम् अतिवाह्य, तल्पं त्यजन्नेव राजान्तःपुररक्षकं प्रतिलोमजातिविशेषजनितं क्षत्तारमुद्दिश्य एवमवदत् ।

594. **'सहस्रशीर्षा पुरुषः'** (तै. आर. पु. 3–12–1) 206
असङ्ख्यातानां शिरसामाश्रयः, सर्ववेत्ता, सर्वत्रपूर्णः पुराणो वा, पुरि देहाख्ये शयितवान् वा परमात्मा ।

595. **'स होवाच प्राणोऽस्मि प्रज्ञात्मा, तं मामायुरमृतमित्युपास्व'** (कौषी. उ. 3–14) 113
हे प्रतर्दन ! जीवशरीरकोऽहम्, प्राणशरीरकश्चाऽस्मि। तादृशं माम् 'आयुः' इति, 'अमृतम्' इति च उपास्व ।

596. **'स होवाचैतद्वैतदक्षरं गार्गि ब्राह्मणा अभिवदन्ति, अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायम्'** (बृ. उ. 5–8–7) 240
हे गार्गि ! मया तुभ्यमुपदिष्टं यत् अक्षरपदाभिधेयं वस्तु तत्, स्थूलत्व-अणुत्व-ह्रस्वत्व-दीर्घत्वादिमूर्तधर्मरहितं लोहितादिवर्ण-स्नेह-

च्छायादिरहितं च। एतदेव च अक्षराख्यं (परं ब्रह्म) ब्रह्मविदः सर्वत्र एवमेव अभितः वदन्ति। इति गार्गिं प्रति याज्ञवल्क्य उवाच।

597. 'सुखं त्वेव विजिज्ञासितव्यम्' (छां. उ. 7–22–1) 235

श्रोतव्ये ब्रह्मणि अत्यन्तानुकूल्यं ज्ञातव्यम्।

598. I 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्। दिवञ्च पृथिवीञ्चान्तरिक्षमथो सुवः' (तै. ना. उ. 1–44) 416

II 'सूर्या....मकल्पयत्' 351

(लब्धसत्ताकस्य जगतो नियन्ता) चतुर्मुखः (अहोरात्रविधानाय) पूर्वकल्पे इव अस्मिन्नपि कल्पे सूर्या-चन्द्रौ पृथिव्यन्तरिक्षद्युलोकान् सुवश्च लोकं सृष्टवान्।

599. 'सैषा चतुष्पदा' (छां. उ. 3–12–5) 110

पूर्वोक्तेयमेव भूत-पृथिवी-शरीर-हृदयाख्यपादचतुष्टयवती, गायत्रीगत-धर्मसदृशधर्मत्वात् गायत्रीपदाभिधेया ब्रह्मरूपा।

600. 'सैषाऽऽनन्दस्य मींमांसा भवति' (तै. उ. आन. 8–1) 32

सोऽयं वक्ष्यमाणः, आनन्दविषयको विचारो भवति।

601. I 'सोऽकामयत बहु स्यां प्रजायेयेति, स तपो तप्यत, स तपस्तप्त्वा, इदं सर्वमसृजत, यदिदं किञ्च, तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य। सच्च त्यच्चाभवत् निरुक्तं चाऽनिरुक्तं च, निलयनं चाऽनिलयनं च। विज्ञानं चाऽविज्ञानं च, सत्यश्चाऽनृतश्च सत्यमभवत्'

(तै. उ. आन. 6–2, 3) 415

II 'सोऽ....प्रजायेयेति' 84, 408

III सोऽ....प्रजायेय' 75, 98, 100, 409

IV 'सोऽकामयत' 74

आनन्दमयः परमात्मा 'देव-मनुष्यादिरूपेण बहु स्याम्, तदर्थम् आकाशादिरूपेण प्रजायेय' इति व्यष्टि-समष्टिरूपचेतनाचेतनविषयकसृष्टि-सङ्कल्पमकरोत्। स परमात्मा स्रष्टव्यालोचनरूपं तपः कृतवान्। तपश्च

कृत्वा, चेतनाचेतनात्मकमखिलं जगत् सृष्टवान्। स्थूल-सूक्ष्मात्मकं चराचरात्मकं चेतनाचेतनरूपं जगत् उत्पाद्य, तत्र सर्वत्र अनुवृत्ततया अनुप्रविष्टवान्। तथा प्रविश्य च निर्विकारचेतनरूपं, सविकाराचेतनरूपं च ब्रह्मैव अभवत्। तदेव च ब्रह्म जातिगुणाद्यनाश्रय-अचेतनवर्गाधार-अजड-सत्यशब्दवाच्यचेतनगतानि, जातिगुणाद्याश्रय-चेतनाश्रित-जड-अनृतशब्दवाच्याचेतनगतानि यानि यानि नामरूपाणि, तेषाम् अन्ततः स्वयमेवाश्रयभूतो भवन्नपि, निर्विकारत्वात्मकस्वीयस्वभावाप्रहाणेन सत्यमेवाऽभवत्।

602. **'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्'** (कठ. उ. 3–9)
[प्र. सं. 506 द्रष्टव्यः] 151, 159, 330

603. **'सोऽविद्याग्रन्थिं विकिरतीह सोम्य'** (मुण्ड. उ. 2–1–10) 192

हे सोम्य! इहैव लोके पूर्वोक्ताक्षरपुरुषाख्यब्रह्मस्वरूपसाक्षात्कारवान् चेतनः, ग्रन्थिवत् दुर्मोचामविद्याम् निरस्यति।

604. **'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता'**
(तै. उ. आन. 1–2) 365

सत्यज्ञानानन्तस्वरूपस्य परस्य ब्रह्मणः हृदयगुहानिहितस्य साक्षात्कर्ता उपासकः, उपासितं परं ब्रह्म, तद्गतान् अनवधिकातिशयासङ्ख्येयकल्याणगुणांश्च दिव्ये धामनि अनुभवति।

605. **'सोऽहं भगवः सत्येनातिवदानि'** (छां. उ. 7–16–1) 232, 233

'सृष्ट्यादितत्त्ववेत्तः भो महर्षे! शान्तिलाभार्थं तत्त्वोपदेशलाभाय त्वामुपसन्नः अहम्, सत्यशब्दितब्रह्मनिमित्तकम् अतिवादमभिलषामि' (इति शिष्यो नारदः सनत्कुमारं प्रार्थयामास)।

606. **'स्तब्धोऽस्युत तमादेशमप्राक्ष्यः येनाऽश्रुतं श्रुतं भवति, अमतं मतमविज्ञातं विज्ञातम्'** (छां. उ. 6–1–3) 402

हे श्वेतकेतो! गुरुकुलान्निवृत्तस्त्वम्, ज्ञानार्जवविषये निर्व्यापारः सन् जडीकृतमना असि। श्रवणविषयीकृतेन येनैकेन वस्तुना, श्रवणविषयीकृतं सर्वमपि श्रवणगोचरतापन्नमेव भवेत्, मननविषयीकृतेन येनैकेन

वस्तुना, मननाविषयीकृतं सर्वमपि मननगोचरतापन्नमेव भवेत्, निदिध्यासनविषयीकृतेन येनैकेन वस्तुना, निदिध्यासनाविषयीकृतं सर्वमपि निदिध्यासनगोचरतापन्नमेव भवेत्, तादृशं सर्वप्रशासितृ परं वस्तु आदेशपदाभिधेयं गुरुसन्निधौ प्रश्नपूर्वकं किं ज्ञातवानसि? तस्मिन् वस्तुनि ज्ञाते सत्येव, इयं स्तब्धता पूर्णत्वनिमित्ता युज्येत।

607. **'स्वप्नान्तं मे सोम्य विजानीहीति। यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति, स्वमपीतो भवति, तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति'** (छां. उ. 6-8-1) 16

हे सोम्य! श्वेतकेतो! सुषुप्तिमधिकृत्य भवते वक्तुं प्रवृत्तोऽस्मि; तमर्थं मद्वाक्यात् विवेकेन जानीहि। यदा खलु पुरुषस्य कस्यचन स्वापाख्यो दशाविशेषः भवति, तदा—स्वापकाले, सत्पदाभिधेयेन सम्पत्तिरूपं लयं सम्पन्नो भवति स पुरुषः। स्वशरीरकः देवादिनामरूपाद्यायत्ताभिमानकालुष्यरहितजीवशरीरको यः परमात्मा, तम् अपीतः—सम्पन्नो भवति; तत एव हेतोः सुषुप्तं पुरुषं जनाः 'स्वपिति' इति वदन्ति; यतः स्वशरीरकत्वात् स्वशब्दवाच्यं परमात्मानं प्राप्य लीनवान्।

608. **'स्वे महिम्नि'** (छां. उ. 7-24-1) 238

विपुलसुखाख्यभूमपदाभिधेयः परमात्मा, स्वात्ममात्राधारः; न तु इतरवस्तुवत् स्वेतराधारः।

609. **'हन्ताऽहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नाम-रूपे व्याकरवाणि'** (छां. उ. 6-3-2) 11, 41

'अहं स्वस्वाभिमानिदेवताधिष्ठितानि तेजो-जल-पृथिवीरूपाणि त्रीणि भूतानि, मदात्मकेन जीवेन अनुप्रविष्टाः कृत्वा, नाम्नां रूपाणां च व्याकर्ता भवेयम्' (इति सच्छब्दितायाः परस्या देवतायाः सङ्कल्पः)।

610. **'हिता नाम....नाड्यः....तासु तदा भवति।**
**यदा सुप्तः स्वप्नं न कथञ्चन पश्यत्यस्मिन् प्राण एवैकधा भवति,**
**तदैनं वाक् सर्वैर्नामभिः सहाप्येति....मनः सर्वैर्ध्यानैः सहाप्येति।**

**स यदा प्रतिबुध्यते यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्, एवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते, प्राणेभ्यो देवाः देवेभ्यो लोकाः'** (कौषी. उ. 4–38, 39, 40) 372

आत्मनो हितावहाः अतः हितपदाभिधेयाः काश्चन हृदयसम्बन्धिन्यो नाड्यो भवन्ति। तासु अतिसूक्ष्मासु नाडीषु आश्रितो भवति स्वप्नकाले जीवः।

अयं च जीवः यदा जागरावस्थां विहायान्तःप्रविष्टः सन् सुप्तो भवति, उपरतस्वप्नदर्शनश्च भवति, तदा स्वप्नानन्तरम् अयं जीवः प्राणशरीरके परमात्मनि एकधाभूतो भवति; जाग्रदाद्यवस्थाजनितदेहात्माभिमानादि-लक्षणकालुष्यरहिततया अवस्थितो भवति। तदनन्तरमेव परमात्मनि लीयमानम् एनं जीवात्मानं, वागिन्द्रियं स्वकार्यैः नामाभिलपनैः सह अप्येति। चक्षुरिन्द्रियं स्वकार्यभूतरूपज्ञानौपयिकेन व्यापारेण सह अप्येति। श्रोत्रमिन्द्रियं स्वकार्येण शब्दज्ञानौपयिकेन व्यापारेण सह अप्येति। मनोऽपि ध्यानाद्यौपयिकैः स्वकार्यैः सह अप्येति।

यदा च अयं जीवः जाग्रद्दशामाप्नोति; तदा लयाधारभूतादेतस्मा-त्परमात्मनः सकाशात्, 'प्राण'शब्दिताः जीवाः अग्नेः सकाशात् अग्निकणा इव यथास्थानं प्रस्थिता भवन्ति। एवं जीवसकाशादिन्द्रि-याणि, इन्द्रियसकाशात् तज्ज्ञानानि च पूर्ववदेव स्वकार्योऽन्मुखा भवन्ति।

611. **'हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः'**

(छां. उ. 5–18–2) 204

वैश्वानरोपासकस्य हृदयकमलावच्छिन्नजाठराग्निः गार्हपत्यः, मन इन्द्रियावच्छिन्नजाठराग्निः दक्षिणाग्निः, आस्यावच्छिन्नजाठरः आहवनीयः।

612. **'हृदा मनीषा मनसाभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति'**

(तै. ना. उ. 1–11) 133

चक्षुराद्यग्राह्योऽयं परमात्मा, भक्त्या धृत्या च सहितेन मनसैव ग्राह्यः। ईदृशं च परमात्मानं ये उपासनतः साक्षात्कुर्वन्ति; ते सर्वबन्धविनिर्मुक्ताः (आनन्दिनो भवन्ति)।

613. 'अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रपूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीरभेदः' (गौ. ध. सू. 2-12-3) 310

वेदाख्यमक्षरराशिं ब्राह्मणादिभिः अधीयमानं श्रोतुम् उद्युक्तस्य अस्य शूद्रस्य श्रवणप्रायश्चित्तं सीसक-लाक्षाभ्यां श्रोत्रकुहरपूरणम् । तेन वेदे उच्चारिते उच्चारणसाधनस्य जिह्वेन्द्रियस्य च्छेदनमेव प्रायश्चित्तम् । यदि श्रुत्वा हृदये ध्रियेत ; तदा शरीरभेदनमेव तत्प्रायश्चित्तम्—इति ।

614. 'अदृश्यत्वादिगुणको धर्मोक्तेः' (ब्र. सू. 1-2-22) 222, 275

'अद्रेश्यम्' इत्यादिनोक्तानाम् अदृश्यत्वादिगुणानां धर्मिभूतोऽर्थः परं ब्रह्मैव ; परब्रह्मासाधारणानां सर्वज्ञत्वादीनां धर्माणां, 'यः सर्वज्ञः सर्ववित्' इत्यादिना तत्रैवोक्तत्वात् ।

615. 'अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रसूतयः ।।' (म. स्मृ. 1-21) 288

स्वयम्भुपदाभिधेयेन स्रष्ट्रा, सृष्टेरारम्भसमये वेदरूपा उत्पत्तिविनाशरहितेयं दैवी वाक् प्रादुर्भावितैव ; न उत्पादिता । यस्या वेदमय्या वाच एव इमाः सर्वाः विविधाः सृष्टयः सम्पन्नाः ।

616. 'अनुकृतेस्तस्य च' (ब्र. सू. 1-3-21) [273 तमे पृष्ठे अर्थो द्रष्टव्यः] 274

617. 'अपि स्मर्यते' (ब्र. सू 1-3-22) [274 तमे पृष्ठे अर्थो द्रष्टव्यः] 274

618. अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात्'
(पू. मी. सू. 3-1-12) 48, 49

ज्योतिष्टोमप्रकरणश्रुते 'अरुणया पिङ्गाक्ष्यैकहायन्या गवा सोमं क्रीणति' इति वाक्ये, एकस्या एव क्रयभावनायाः 'क्रीणाति' इत्यनेन श्रवणात्, एकहायनीरूपस्य द्रव्यस्य आरुण्यरूपगुणस्य च परस्परान्वयमुखेन एकस्यामेव क्रयभावनायामन्वयः ; 'न तु एकहायन्याः क्रयभावनायाम्, आरुण्यस्य तु द्रव्यान्तरेष्वन्वयमुखेन तत्तद्भावनासु' इति अन्वयवैषम्यम् । 'क्री'धात्वर्थस्य एकत्वे सति, एकवाक्यताभङ्गाश्रयणस्य अयुक्तत्वात् ।

619. 'आनन्दमयोऽभ्यासात्' (ब्र. सू. 1-1-12) 237

तैत्तिरीयानन्दवल्लीगतानन्दमयपदाभिधेयोऽर्थः परं ब्रह्मैव ; (न तु तदितरो जीवः) अभ्यस्यमाननिरतिशयानन्दवत्तायोग्यत्वात् ।

620. I 'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥' (म. स्मृ. 1-5) 407

II 'आसीदिदं तमोभूतम्' 292

परिदृश्यमानमिदं जगत्, सृष्टेः प्राक् प्रलयकाले सूक्ष्मरूपतया प्रकृतितामापन्नं लीनमासीत् । प्रकृतिरपि ब्रह्मात्मना (स्थिता) अव्याकृता (नामरूपविभागमनापन्ना) आसीत् । अत एव अप्रत्यक्षम् अनुमेयं तर्कितुमप्यशक्यं शब्दतोऽप्यविज्ञेयं सुप्तमिव स्वकार्याक्षमं सत् अवर्तत ।

621. 'कृत्यल्युटो बहुलम्' (पा. सू. 3-3-113) 33

कृत्यसंज्ञकाः प्रत्ययाः, ल्युट् च बहुलमर्थेषु भवन्ति । यत्र विहिताः, ततोऽन्यत्राऽपि भवन्ति । भावकर्मणोः कृत्याः विहिताः कारकान्तरेऽपि भवन्ति । 'स्नानीयं चूर्णम्, दानीयो ब्राह्मणः' । करणाधिकरणयोः भावे च ल्युट् ; अन्यत्राऽपि भवति, 'उपसेचनम्, अवस्रावणम्, राजभोजनाः शालयः, राजाच्छादनानि वासांसि, प्रस्कन्दनम्, प्रपतनम्' । बहुलग्रहणात् अन्येऽपि कृतः, यथाप्राप्तम् अभिधेयं व्यभिचरन्ति । 'पादाभ्यां ह्रियते—पादहारकः । गले चोप्यते—गले चोपकः' । (काशिकावृत्तिः) ।

622. 'चतुर्थो वर्ण एकजातिर्न च संस्कारमर्हति' ( ? ) 308

त्रैवर्णिकेभ्योऽतिरिक्तः शूद्रः मातृगर्भाद् बहिर्निगमनरूपैकजन्माश्रय एव ; न तु त्रैवर्णिकवत् द्वितीयादिजन्मवत्तया श्रुति-स्मृतिसिद्धः ; अतः त्रैवर्णिकगतानां संस्काराणाम् अर्हो न भवति सः ।

623. 'जगद्व्यापारवर्जम्' (ब्र. सू. 4-4-17) 37, 138, 271

निरस्तनिखिलतिरोधानस्य मुक्तस्य निर्व्याजब्रह्मानुभवरूपमैश्वर्यं निखिल-चेतनाचेतनस्वरूपस्थिति-प्रवृत्तिभेदनियमनं वर्जयित्वैव । (कुतः ? निखिल-

जगन्नियमनं हि परब्रह्मप्रकरणे एव आम्नायते 'यतो वा इमानि' इत्यादिना ; न तु जीवप्रकरणे । तथा एतेषु निखिलजगन्नियमन-प्रसङ्गेषु तत्तत्प्रकरणपठितेषु मुक्तसान्निध्यमपि यतो न दृश्यते) ।

624. **'जन्माद्यस्य यतः'** (ब्र. सू. 1–1–2) 364

विविधविचित्रभोक्तृभोग्यपूर्णस्य परिदृश्यमानस्य जगतः, सृष्टि-स्थिति-लयाः आत्यन्तिकलयरूपो मोक्षश्च, यस्माद्वस्तुनो भवन्ति, तदेव जिज्ञास्यं परं ब्रह्म ।

625. **'ज्योतिश्चरणाभिधानात्'** (ब्र. सू. 1–1–25)

[103 तमे पृष्ठे अर्थो द्रष्टव्यः] 275

626. **'तत्प्रकृतवचने मयट्'** (पा. सू. 5–4–21) 63

प्राचुर्येण प्रस्तुतेऽर्थे वर्तमानात् समर्थात् प्रथमान्तात्, मयट्प्रत्ययो भवति । (अन्नमयम्—अन्नं प्रकृतम् । अन्नमयो यज्ञः—अन्नं प्रकृत-मस्मिन्) ।

627. **'तदण्ड ...पितामहः'** (म. स्मृ. 1–9) [प्र. सं. 650 द्रष्टव्यः] 292

628. **'तदनन्यत्वमारम्भणशब्दादिभ्यः'** (ब्र. सू. 2–1–15) 41

कार्यस्यास्य जगतः, परमकारणात् तस्मात् परस्माद्ब्रह्मणः सकाशात् अन्यत्वाभावः ; 'वाचारम्भणं विकारः' इत्येवम् आरम्भणपदघटितश्रुति-वाक्याद्यात्मकेभ्यः प्रमाणेभ्यः सिध्यति ।

629. **'दिक्सङ्ख्ये संज्ञायाम्'** (पा. सू. 2–1–50) 358

दिग्वाचिनः शब्दाः, सङ्ख्या च समानाधिकरणेन सुबन्तेन सह समस्यन्ते ; तत्पुरुषश्च समासो भवति, संज्ञायां विषये । 'पूर्वेषु कामशमी, अपरेषु कामशमी' । सङ्ख्या—'पञ्चाम्राः, सप्तर्षयः' । संज्ञायां किम् ? 'उत्तरा वृक्षाः, पञ्च ब्राह्मणाः' (का. वृ.) ।

630. **'द्युभ्वाद्यायतनं स्वशब्दात्'** (ब्र. सू. 1–3–1)

[215 तमे पृष्ठे अर्थो द्रष्टव्यः] 275

631. 'न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च' (ब्र. सू. 2-1-35) 415

'सृष्टेः प्राक्काले जीवस्य ब्रह्मणा सह अविभागश्रुतेः, विषमसृष्टि-प्रयोजकं तत्तज्जीवीयं कर्म तस्मिन् काले न स्थातुमर्हति' इत्येवं शङ्कनं सङ्गतं न भवति । वैषम्यहेतुभूतानां जीवानां तत्कर्मणां च सृष्टेः प्राक् सत्वेऽपि, नाम-रूप-विभागाभावमात्रादेव अविभागश्रुतेः युक्तत्वात् । जीवात्मनां, तदीयानां कर्मणां च अनिदंप्रथमत्वेन, 'न जायते म्रियते वा विपश्चित्' इत्यादिश्रुतिभिः, जीवानामनादित्वमपि स्पष्टं ज्ञायत एव ।

632. I 'न चाऽस्योपदिशेद्धर्मं न चाऽस्य व्रतमादिशेत्' (म. स्मृ. 4-80) 310

II 'न....धर्मम्' 311

चतुर्थवर्णीयं शूद्रमुद्दिश्य विशिष्टधर्मोपदेशादिकं न कार्यम्; सर्ववर्ण-सामान्यस्य अद्रोहाऽहिंसा-दयादेरेव उपदेश्यत्वात् । तथा त्रैवर्णिका-साधारणव्रतादिकं च नैव उपदिशेत्, कृच्छ्रचान्द्रायणादिकम् ।

633. 'नन्दिग्रहि....' (पा. सू. 3-1-134) 33

'नन्दिग्रहिपचादिभ्योल्युणिन्यचः' इति पूर्णं सूत्रम् ।

नन्द्यादिभ्यो ल्युः, ग्रहादिभ्यो णिनिः, पचादिभ्योऽच् (प्रत्ययाः यथासङ्ख्यं भवन्ति) । नन्दि-ग्रहि-पचादयश्च न धातुपाठतः सन्निविष्टाः गृह्यन्ते । किं तर्हि ! नन्द-रमणेत्येवमादिषु प्रातिपदिकगणेषु अपोद्धृत्य प्रकृतयो निर्दिश्यन्ते । 'नन्दनः, दूषणः, ग्राही, उत्साही, श्वपचः' ।

634. 'न विलक्षणत्वात्' (ब्र. सू. 2-1-4) 8

'न विलक्षणत्वादस्य तथात्वं च शब्दात्' इति पूर्णं सूत्रम् ।

जगतः ब्रह्मोपादानकत्वं न सम्भवति; ब्रह्मापेक्षया विलक्षणत्वात् । ब्रह्म हेयप्रत्यनीकं, जगच्च हेयम् । ब्रह्म निरतिशयानन्दरूपं पुरुषार्थ-भूतम्, जगच्च दुःखप्रचुरतया अपुरुषार्थभूतम् । ब्रह्म सर्वज्ञम्, जगच्च जडत्वादज्ञम् इति । जगतः ब्रह्मविलक्षणत्वं च 'विज्ञानं चाऽविज्ञानं च' इति श्रुतिरूपात् शब्दात् अवगम्यते ।

635. 'न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति' (म. स्मृ. 10–126) 308

शूद्रे सन्ध्यावन्दनाद्यभावनिमित्तं पापं नास्ति; यतः उपनयनादि-संस्कारानर्हत्वात्।

636. 'निचाय्यत्वादेवम्' (ब्र. सू. 1-2-7) [144 तमे पृष्ठे अर्थो द्रष्टव्यः] 273

637. 'नित्यं वृद्धशरादिभ्यः' (पा. सू. 4–3–144) 63

वृद्धसंज्ञकेभ्यः प्रातिपदिकेभ्यः (वृद्धिः यस्य प्रातिपदिकस्य अचामादिः अच् तद्वृद्धम्) शरादिगणीयेभ्यश्च प्रातिपदिकेभ्यश्च अभक्ष्याच्छादनयोः, विकारावयवयोः भाषायां विषये 'मयट्'प्रत्ययो भवति। वृद्धेभ्यस्तावत्—आम्रमयम्। (शरादिभ्यः—शरमयं बर्हिः)। (का. वृ.)

638. 'परात्तु तच्छ्रुतेः' (ब्र. सू. 2–3–40) 331

जीवात्मगतं कर्तृत्वं, नियन्तृभूतात् परस्माद्ब्रह्मण एव—परमात्मायत्तमेव; न स्वमात्रायत्तम्, 'अन्तः प्रविष्टः शास्ता जनानाम्' इति परस्यैव सर्वशासितृत्वावगमात्।

639. 'पृथ्वादिभ्य इमनिज्वा' (पा. सू. 5–1–122) 225

'पृथु' इत्येवमादिभ्यः प्रातिपदिकेभ्यः 'इमनिच्'प्रत्ययो भवति वा; 'तस्य भावः' इत्येतस्मिन्नर्थे। 'वा'वचनम् अणादेः समावेशार्थम्। पृथोर्भावः—प्रथिमा। (पार्थवम्, पृथुत्वम्, पृथुता)। (का. वृ.)

640. 'बहोर्लोपो भू च बहोः' (पा. सू. 6-4-158) 225

बहोः उत्तरेषाम् इष्ठ-इम-ईयसां लोपो भवति। तस्य च बहोः स्थाने 'भू' इत्ययम् आदेशो भवति। भूयान्—भूमा। (का. वृ.)

641. 'भेदव्यपदेशात्' (ब्र. सू. 1–1–18) [90 तमे पृष्ठे अर्थो द्रष्टव्यः] 36

642. 'भोगमात्रसाम्यलिङ्गात्' (ब्र. सू. 4–4–21) 37

मुक्तस्य जीवात्मनः, ब्रह्मानुभवरूपभोगे एव ब्रह्मसाम्यं, 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा' इति श्रुत्या उच्यते, इत्येतस्मादपि ज्ञापकात् 'निरञ्जनः परमं साम्यमुपैति' इत्युक्तं परमं साम्यं, जगद्व्यापारादिकं वर्जयित्वैव; न तु सर्वांशे इति निश्चीयते।

643. 'मनसा तु विशुद्धेन (व्या. स्मृ.) 133

ध्यानयोगनिर्मलेन मनसैव परमात्मा अपरोक्षीकर्तुं शक्यते ।

644. 'मन्त्रकृतो वृणीते' (आप. श्रौ. सू. 2-16-6) 289

मन्त्रद्रष्टॄन् ऋषीन् यज्ञादेर्धर्मस्य निर्वाहार्थं वृणीते । (तेनैव च प्रवर्षीणां सिद्धिः) ।

645. 'मयड्वैतयोः' (पा. सू 4-3-143) 63

'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः' इति पूर्णं सूत्रम् ।

प्रकृतिमात्रात् वा 'मयट्'प्रत्ययो भवति ; भक्ष्याच्छादनवर्जितयोः विकारावयवयोरर्थयोः, भाषायां विषये ; यथायथं प्रत्ययेषु प्राप्तेषु । अश्ममयम्—आश्मनम् । (का. वृ.)

646. 'लोकवत्तु लीलाकैवल्यम्' (ब्र. सू. 2-1-33) 417

परमात्मनः केवलाया एव लीलायाः सृष्टिप्रयोजनरूपता, लोकदृष्टे राजनि पूर्णकामेऽपि, कन्दुकक्रीडाद्यारम्भे इव युज्यते इति अवाप्तसमस्तकामे परमात्मनि सृष्टेः न निष्प्रयोजनता ।

647. 'सम्पद्याविर्भावः स्वेन शब्दात्' (ब्र. सू. 4-4-1) 394

निष्पन्नोपासनो जीवः, ज्योतीरूपं परं ब्रह्म संश्लिष्य, यादृशं दशाविशेषं सम्पन्नो भवति, स दशाविशेषः, आविर्भावपदवाच्यस्वस्वरूपाभिव्यक्तिः ; न तु अपूर्वाकारोत्पत्तिः । 'स्वेन रूपेणाऽभिनिष्पद्यते' इति श्रुतौ, रूपांशे स्वाभाविकत्वावबोधकात् 'स्वेन' इति शब्दरूपात् ज्ञापकात् ।

648. 'सर्वेषां तु स नामानि कर्माणि च पृथक्पृथक् ।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥' (म. स्मृ. 1-21) 288

स्रष्टृत्वेन परमात्मना नियुक्तश्चतुर्मुखः, भगवन्नियमनमनुरुध्य स्वेन सृष्टानां चराचरात्मकानां वस्तूनां, विभक्तान्विविक्तांश्चाकारान्, तथा असाधारण्यः संज्ञाः, विलक्षणाः क्रियाश्च, यथायोग्यं प्राक्कल्पगत तत्तदसाधारण्यज्ञापकान् वैदिकान् शब्दानेव संस्मृत्य स्वीयसृष्ट्यारम्भे निर्मितवान् ।

649. 'सुपां सुलक्' (पा. सू. 7-1-39) 334

'सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजालः' इति पूर्णं सूत्रम्।

छन्दसि विषये सुपां स्थाने सु, लुक्, पूर्वसवर्ण, आ, आत्, शे, या, डा, ड्या, याच्, आल्, इत्येते आदेशा भवन्ति।

'अनृक्षरा ऋजवः सन्तु पन्थानः'। 'पन्थानः' इति बहुवचने प्राप्ते, (सु आदेशे एकवचने 'पन्थाः' इति)। 'आर्द्रे चर्मन्' 'चर्माणि' इति प्राप्ते (सप्तम्याः लुकि 'चर्मन्' इति। (का. वृ.)

650. I 'सोऽभिध्याय शरीरात् स्वात्सिसृक्षुर्विविधाः प्रजाः।
अप एव ससर्जादौ तासु वीर्यमपासृजत्॥
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्।
तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः॥' (म. स्मृ. 1-8, 9) 292

II 'सोऽभिध्याय....सृजत्' 418

परमात्मा सनातनः, जगत्सृष्ट्युपयोगि सङ्कल्पं कृत्वा, स्वकीयात् तनोः, विविधविचित्रानन्तप्रकाराः प्रजाः स्रष्टुमिच्छुः सन्, प्रथमतः अप्तत्त्वमेव सृष्टवान्; तत्र च स्वीयं वीर्यं विमुक्तवान्। अप्सु विसृष्टं परमात्मनो वीर्यं सूर्यसमप्रकाशं सौवर्णम् अण्डं सञ्जातम्। तस्मिंश्च सौवर्णे अण्डे सर्वलोकपितामहो ब्रह्मा स्वयं सञ्जातवान्।

651. 'स्थानादिव्यपदेशाच्च' (ब्र. सू. 1-2-14)
[162 तमे पृष्ठे अर्थो द्रष्टव्य] 174

652. 'अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः॥'
(भा. मो. 222-55) 288

अनन्याधीनसत्ताकेन परमात्मना सृष्टेरारम्भसमये या केवलं श्रवणमात्रसमधिगम्या तादृशी, उत्पत्ति-विनाशाभ्यामसंस्पृष्टा अतीन्द्रियतत्त्वार्थावेदनैकस्वभावशब्दमात्रप्रचुरा अपौरुषेयी वागेव निःश्वासरूपेण स्वस्य अन्तरङ्गाद्बहिः प्रकटतां प्रापिता। तामवलम्ब्यैव लौकिक्यः सर्वा सृष्टयः प्रवृत्ताः॥

653. **'अव्यक्तं पुरुषे ब्रह्मन् निष्क्रिये सम्प्रलीयते'** (भा. शां. 8–14) 406
अव्यक्ताख्यं वस्तु, सञ्जिहीर्षासङ्कल्पेन क्रियारहितेन ब्रह्मणि पुरुषे सम्यक् प्रलीनम् अविभक्तनाम-रूपतावस्थापन्नं भवति। (हे ब्रह्मन्! इति सम्बोधनं वा)।

654. **'अव्यक्तादिविशेषान्तं परिणामर्द्धिसंयुतम्।**
**क्रीडा हरेरिदं सर्वं क्षरमित्युपधार्यताम्॥'** (भा. शां. 206–58) 417
महत्तत्त्वमारभ्य विशेषपर्यन्तं वृद्धि-क्षयादिरूपभावविकाराश्रयभूतं यद्यत् तत्सर्वमिदं, भगवल्लीलया सृष्टं 'क्षर'पदवाच्यमिति निर्णीयताम्।

655. **'आगमोत्थं....च्यते'** (वि. पु. 6–5–61) [प्र. सं. 659 द्रष्टव्यः] 189

656. **'आदिसर्गमहं वक्ष्ये'** (वाराहे. 2–5) 292
प्राथमिकीं सृष्टिं वक्ष्यामि।

657. **'क्रीडतो बालकस्येव चेष्टां तस्य निशामय'** (वि. पु. 1–2–18) 417
रममाणस्य शिशोः लीलासदृशीं परमात्मनः लीलां शृणु।

658. **'जगतामुपकाराय न सा कर्मनिमित्तजा'** (वि. पु. 6–7–72) 89
देवाद्याकारस्वीकरणपूर्वकम् आविर्भावरूपा या भगवतः चेष्टा, सा जीवस्येव कर्मरूपेण हेतुना न जाता। किन्तु अवाङ्मनसगोचरस्य भगवतः तत्तद्वस्तु-देश काल-सन्निवेशव्यापिनी अप्रतिहतस्वरूपा लोकोपकारमात्रप्रयोजनिका अवताराद्यात्मिकैव।

659. **'तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने।**
**आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथोच्यते॥'**
(वि. पु. 6–5–60, 61) 189
हे महामुने! ब्रह्म प्राप्तौ साक्षाद्धेतुभूतम् उपासनात्मकं ज्ञानं, तथा तादृशोपासनाङ्गतया हेतुभूतं वर्णाश्रमादिविहितम् अग्निहोत्रादिकर्म च सम्यक् पूर्वं प्रतिपादितम्। तत्राद्यं ज्ञानं तावत् द्विविधम्—शास्त्रश्रवणजन्यं परोक्षात्मकं, विवेकादिसाधनसप्तकसहकृतोपासनात्मकं चाऽपरं ज्ञानम्।

660. 'तत्र सुप्तस्य देवस्य नाभौ पद्ममजायत ।
तस्मिन् पद्मे महाभाग! वेदवेदाङ्गपारगः ।।
ब्रह्मोत्पन्नः स तेनोक्तः प्रजास्सृज महामुने ।।' (नारसिंह. 3-1) 292

हे महाभाग्यसम्पन्न! क्षीराब्धौ योगनिद्रया निद्रितस्य परमात्मनो विष्णोः नाभिस्थाने किञ्चित् कमलम् उत्पन्नम् । नाभिस्थानस्थे कमले वेद-तदङ्गेषु स्वयमेव परिपूर्णज्ञानवान् ब्रह्मा—चतुर्मुखो जातः, स च ब्रह्मा भगवता उक्तः ; 'हे महामननशील! प्रजानां सृष्टिं कुरु' इति ।

661. तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते ।
तदेव कोपाय यतः प्रसादाय च जायते ।
तस्माद्दुःखात्मकं नाऽस्ति न च किञ्चित्सुखात्मकम् ।।'
(वि. पु. 2-6-48) 389

यतः एकमेव वस्तु, काल-देश-व्यक्त्यादिवैलक्षण्यानुरोधेन प्रीति-दुःखोभयस्यापि जनकं भवति, कोप-प्रसादयोरुभयोरपि हेतुर्भवति ; तस्मात् किमप्येकं वस्तु, सुखात्मकमिति वा दुःखात्मकमिति वा निरूपयितुं न शक्यते ।

662. 'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम' (भा. शां. 8-13) 406

अव्याकृतात् नाम-रूपविभागानर्हात् तमोरूपादर्थात् सत्त्वरजस्तमो-लक्षणत्रैगुण्याश्रयभूतं विभक्तं तमः अजायत ।

663. 'द्यां मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे ।
दिशश्श्रोत्रे विद्धि पादौ क्षितिं च सोऽचिन्त्यात्मा सर्वभूतप्रणेता ।।' 201

यस्य परमात्मनः द्युलोकमेव शिरस्त्वेन, आकाशमेव नाभिस्थानापन्न-त्वेन, शशि दिवाकरौ नेत्रत्वेन, प्राची-प्रतीच्यादिदिशः श्रोत्रत्वेन, (तथा) भूमिं च पादस्थानापन्नां ज्ञानिनः आमनन्ति । समस्तचराचरात्मक-जगत्स्रष्टा सः विराड्रूपः परमात्मा अपरिच्छेद्यस्वरूप इति जानीहि ।

664. 'न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः' (म. भा. शां. 206-60) 89

लोके अवतारं प्राप्तस्याऽप्यस्य उक्तवैभवस्य परमात्मनः अवतारकालीनो देहः, न पृथिव्यादिपञ्चभूतसमुदायावयवकः ।

665. 'नाम रूपं च भूतानां कृत्यानां च प्रपञ्चनम् ।
वेदशब्देभ्य एवादौ देवादीनां चकार सः ॥' (वि. पु. 1-5-63) 288

सुर-नर-तिर्यक्-स्थावराख्यानां चतुर्विधानामपि देहिनां, देव-मनुष्य-मृग-वृक्षादिजात्यभिधानं नाम, एवम् अनिमेषत्व-द्विपात्त्व-चतुष्पात्त्व-शाखित्वादिकं रूपम्, हविर्भागयज्ञाद्यनुष्ठानादिरूपाणां कर्तव्यानां विस्तरणं च (तथा स्रुक् स्फ्यादेः शमीमयत्वादिकम्, अग्न्याधानादेः ब्राह्मणादि-कर्तृकत्वादिकं, यूपादेः खदिरप्रकृतिकत्वादिकम् इत्यादिसर्वं वेदगतेभ्यः शब्देभ्य एव ज्ञापकभूतेभ्यः सृष्ट्यारम्भे निर्मितवान् स्रष्टृत्वेन नियुक्तो ब्रह्मा।

666. 'परो नारायणो देवस्तस्माज्जातश्चतुर्मुखः' (वाराहे. 2) 292

स्वयंज्योतिःस्वरूपो नारायण एव सर्वस्मात्परः परमकारणभूतः । तस्मादेव च नारायणात् स्रष्टा चतुर्मुखोऽपि जातः ।

667. 'प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी ।
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥
परमात्मा च सर्वेषामाधारः परमेश्वरः ॥' (वि. पु. 6-4-39, 40) 337

हे मैत्रेय ! मया (पराशरेण) स्थूल-सूक्ष्मरूपा तमश्शब्दवाच्या या प्रकृतिः पूर्वं प्रतिपादिता, सा (तथा) समष्टि-व्यष्ट्यात्मकः चेतनश्चेति एतानुभावपि प्रकृति-पुरुषौ प्रलयकाले परब्रह्मणि अविभागेन तिष्ठेते । स च परब्रह्मभूतः परमात्मा, सर्वेषामाधारभूतः सर्वेषां नियन्ता च ।

668. 'बालः क्रीडनकैरिव' (वा. पु. उ. 36-39) 417

बाल्यावस्थापन्नो नरः यथा क्रीडोपकरणैः क्रीडति, तथा क्रीडंश्च केवलं मोदते, तथा जगत्सृष्टि-स्थिति-लयव्यापारैरपि परमात्मा लीला-विनोदी भवति ॥

669. 'यथर्तृष्वृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥' (वि. पु. 1-5-65) 416

वसन्तादीनां संवत्सरावयवानामृतूनां ज्ञापकानि वृक्षादिगतपत्र-पुष्प-फलादीनि, ऋतूनां वत्सरान्तरे परिवर्ते सति यथा पुनःपुनः तत्तज्जातीया-

न्येव जायन्ते ; तथा ब्रह्मकल्पादिरूपमहाकालावयवानां कल्पादि-युगाद्यादीनां परिवर्तेऽपि पूर्वकल्प-पूर्वयुगादिगतार्थजातीया एवार्थाः पुनः पुनर्जायन्ते ।

670. **यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः ।**
**सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नमः ॥'** (म. भा. शां. 46–7 ) 201

विराड्रूपस्य यस्य परमात्मनः अग्निरेव मुखं, द्युलोक एव शिरः, आकाश एव नाभिः, पृथिव्येव पादौ, सूर्य एव नेत्रम्, दिश एव श्रोत्रे तादृशाचिन्त्यवैभवसम्पन्नाय सर्वलोकशरीरकाय परमात्मने नमः ।

671. **'वर्षेण बीजं प्रतिसञ्जहर्ष'** (वा. रा. सु. 29–6) 9

धान्योत्पत्तिहेतुभूतं बीजं वृष्टेः वर्षणेन अङ्कुरपूर्वभाव्यवस्थाविशेष-विशिष्टमासीत् ।

672. **'वृष्टिप्रतीक्षाः शालयः'** (लौकिकः प्रयोगः) 9

व्रीहिरूपा धान्यविशेषाः वृष्टिलम्भनीयवृद्धिकाः ।

673. **'व्यक्तं विष्णुस्तथाऽव्यक्तं पुरुषः काल एव च'** (वि. पु. 1–2–20) 337

अव्यक्तपदाभिधेयं प्रधानं, व्यक्तपदाभिधेयं महदादिविशेषान्तं, पुरुष-पदवाच्यो जीवः, तथा सर्वेषां कलनहेतुभूतः कालः इत्येते सर्वे, परम-पुरुषाधीनस्वरूपस्थितिप्रवृत्तिकाः, परमपुरुषशरीरभूताश्चेति, तच्छरीरकस्य परमात्मनः कारणत्वं नाऽनुपपन्नम् ।

674. **'श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः'** (म. भा. शां. 314–45) 301

आदिवर्णं ब्राह्मणं मुखमूतं कृत्वा, सर्वेषां वर्णानामपि तत्त्वहितपुरुषार्थ प्रतिपादकान् इतिहासपुराणादीन् श्रावयेत् ; तद्द्वारा सर्वानपि बहुश्रुतान् कुर्यात् ।

675. **'समस्तशक्तिरूपाणि तत्करोति जनेश्वर ।**
**देवतिर्यङ्मनुष्याख्य चेष्टावन्ति स्वलीलया ॥'** (वि. पु. 6–7–71) 89

हे राजन् ! स भगवान् स्वप्रीत्यर्थानन्यप्रेरितस्वव्यापाररूपया लीलयैव ;

न हेत्वन्तरेण, तथा जगदनुग्रहायैव ; न तु कर्मफलभोगाय, देवादिसदृशाकारक्रियाद्याश्रयीभूतानि सर्वशक्तिसम्पूर्णानि दिव्यशरीराणि स्वीकरोति ।

676. **'समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः ।**
**तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ।।'** (वि. पु. 6–7–70) 89

हे राजन् ! यस्मिन् भगवद्रूपे पूर्वोक्ताः बद्ध-मुक्त-कर्मरूपाऽविद्याख्याः सर्वाः शक्तयः तत्तदभिमानिदेवताद्वारेण सुप्रतिष्ठिताः, तत् जगद्विलक्षण-सन्निवेशं भगवतः शरीरम् 'आदित्यवर्णम्' इत्यादिश्रुतिसिद्धं गुणतः, स्वरूपतश्च अपरिच्छेद्यं द्रव्यान्तरम् ।

677. **'सर्वगत्वादनन्तस्य स एवाहमवस्थितः ।**
**मत्तः सर्वमहं सर्वं मयि सर्वं सनातने ।।'** (वि. पु. 1-19-85) 121

देशतः कालतो वस्तुतश्चापरिच्छिन्नस्य महाविष्णोः परमात्मनः, सर्वत्र व्याप्य वर्तमानत्वात् , सर्वं प्रति आत्मभावेन अवस्थितत्वात् , तदात्मक एवाऽहमिति हेतोः, मदात्मभूतात् परमात्मन एव सर्वं जायते, अवतिष्ठते, लीयते चेति, सर्वं जगत् मदात्मभूतः परमात्मैव ; सर्वमपि मदात्मभूत-सनातनपरमात्माधारकमेव, नाऽत्र मम संशयः ।

678. **'सृष्ट्वा नारं तोयमन्तःस्थितोऽहं येन स्यान्मे नाम नारायणेति ।**
**कल्पे कल्पे तत्र शयामि भूयस्सुप्तस्य मे नाभिजं स्याद्यथाऽब्जम् ।।**
**एवम्भूतस्य मे देवि नाभि पद्मे चतुर्मुखः ।**
**उत्पन्नः स मया चोक्तः प्रजाः सृज महामते ।।'** (वाराहे. 2) 292

हे देवि ! लक्ष्मि ! नारपदाभिधेयं जलतत्त्वम् आदौ सृष्ट्वा, तस्य जलतत्त्वान्तः अहमवस्थितो भवामि । नाराख्यजलतत्त्वान्तरवस्थानेनैव च मम नारायणनाम सम्पन्नम् । प्रतिकल्पं पुनः पुनः तत्र नाराख्ये जले सुप्तो भवाम्यहम् । तथा स्वापमाश्रितस्य मम नाभौ कमलमेकं जायते । नाभिपद्ममाश्रित्य शयानस्य मम तस्मिन् नाभिकमले चतुराननो ब्रह्मा जातः । तस्य च प्रजास्रष्टृत्वं विहितवानहम् ।

679. 'अजोऽपि सन्नव्ययात्मा भूतनामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ।।' (भ. गी. 4-6) 88, 219

अजत्वाव्ययत्वसर्वेश्वरत्वादि, अपहतपाप्मत्वादिसमस्तकल्याणगुणात्मकत्वं च सर्वं पारमेश्वरं स्वभावमजहदेव, स्वमेव स्वभावमधिष्ठाय, स्वमेव रूपं देवमनुष्यादिसजातीयसंस्थानं कुर्वन्, आत्मसङ्कल्पेन देवादिरूपः सम्भवामि ।

680. 'अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधा च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ।।' (भ. गी. 18-14) 332

शास्त्रसिद्धे तत्प्रतिषिद्धे वा शारीरे वाचिके मानसे च सर्वस्मिन् कर्मणि, वक्ष्यमाणा एते पञ्च हेतवः—1) जीवात्मनोऽधिष्ठानभूतं महाभूतसङ्घातरूपं शरीरम्, 2) ज्ञातृत्व-कर्तृत्वाश्रयो जीवात्मा, 3) कर्मणां निष्पत्तौ पृथग्व्यापारं वाक्पाणिपादादिपञ्चकं समनस्कं कर्मेन्द्रियम्, 4) शरीरेन्द्रियधारणस्य प्राणापानादिभेदभिन्नस्य पञ्चात्मनो वायोः विविधा च वृत्तिः, 5) कर्महेतुकालापे प्रधानहेतुभूतः अन्तर्यामी परमात्मा चेति ।

681. 'अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ।।' (भ. गी. 7-5) 337

पूर्वमुक्ता भूम्यादिः अष्टविधाऽपि प्रकृतिः मदीया प्रधाना प्रकृतिः । उक्तायाः अचेतनायाः चेतनभोग्यभूतायाः प्रकृतेः विसजातीयामेव भोक्तृत्वेन प्रधानभूतां चेतनात्मिकां मदीयां प्रकृतिं जानीहि । चेतनाख्यया प्रकृत्या अचेतनात्मकं कृत्स्नं स्वरूपेणावस्थाप्यते ।

682. I 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ।।' (भ. गी. 15-14) 205

II 'अहं....माश्रितः' 106

हे अर्जुन ! अहमेव सर्वप्राणिनां जठरान्तर्वृत्तिः जाठरानलो भूत्वा, तैः भुक्तं खाद्य-चोष्य-लेह्य-पेयात्मकं चतुर्विधमन्नं प्राणापानादिवृत्तिभेद-समायुक्तः पचामि ।

683. 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥' (भ. गी. 14–2) 274

वक्ष्यमाणं ज्ञानं साधनतया अवलम्ब्य मत्साम्यं प्राप्ताः उपासितारः सर्वेषां भूतानां सृष्टावपि स्वयं नैव सृष्टिं भजन्ते । सर्वेषां भूतानाम् अचित्कल्पतापादके प्रलयेऽपि नैव शोच्या भवन्ति ॥

684. 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥
तमेव शरणं गच्छ' (भ. गी. 18–61, 62) 144, 332

चेतनाचेतनात्मकनिखिलजगन्नियमनशीलो वासुदेवः, स्वेनैव निर्मितं देहेन्द्रियावस्थं प्रकृत्याख्यं यन्त्रमारूढानि सर्वभूतानि स्वकीयया सत्त्वादिगुणमय्या मायया गुणानुगुणं प्रवर्तयन् (सर्वभूतानां हृद्देशे) सकलप्रवृत्ति-निवृत्तिमूलज्ञानोदयप्रदेशे तिष्ठति । तमेव रक्षकं जानीहि ।

685. 'एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥' (भ. गी. 7–6) 337

हे अर्जुन ! पूर्वोक्तचेतनाचेतनसमष्टिरूपमदीयप्रकृतिद्वययोनीनि ब्रह्मादि-स्तम्बपर्यन्तानि उच्चावचभावेनावस्थितानि चिदचिन्मिश्राणि मदीयानि सर्वाणि भूतानि—इत्युपधारय । अतः समस्तस्य जगतः अहमेव प्रभवः, अहमेव च प्रलयः अहमेव च शेषी—इत्युपधारय ।

686. 'कार्य-कारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुख-दुःखानां भोक्तृत्वे हेतुरुच्यते ॥' (भ. गी. 13–20) 346

शरीरस्य, (तथा) मनःसहितानां ज्ञानकर्मेन्द्रियाणां च स्वस्वकार्यकरत्वे हेतुः—पुरुषाधिष्ठिता प्रकृतिः । भोगसाधनभूताः सर्वा अपि क्रियाः, पुरुषाधिष्ठितक्षेत्राकारपरिणतप्रकृत्याश्रयाः । पुरुषः केवलमधिष्ठातैव । प्रकृतिसंसृष्टः पुरुषः सुखदुःखानुभवाश्रयः ।

687. 'क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते' (भ. गी. 15–16) 243

क्षरणस्वभावेन अचिता संसृष्टानि ब्रह्मादिस्तम्बपर्यन्तानि जीवशब्दाभि-

लपनीयानि 'क्षरः पुरुषः' इत्युच्यते। यस्तु अचित्संसर्गवियुक्तः स्वेन रूपेणावस्थितः मुक्तात्मा सः 'अक्षरः पुरुषः' इत्युच्यते।

688. **'परित्राणाय साधूनां विनाशाय च दुष्कृताम्'** (भ. गी. 4-8) 88

उपासकानां मद्दिव्यरूपादिप्रदर्शनेन तदनिष्टनिवृत्तिपूर्वकम् इष्ट-सम्पादनाय, तद्विपरीतानां विनाशाय च (युगनियमं विहाय देव मनुष्यादि-रूपमाश्रितः सन् मर्त्यलोके अवतरामि)।

689. **पुरुषः प्रकृतिस्थोऽपि भुङ्क्ते प्रकृतिजान् गुणान्।**
**कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु॥'** (भ. गी. 13-21) 346

प्रकृतिसंसृष्टश्चेतनः प्रकृतिसंसर्गोपाधिकान् सत्त्वादिगुणकार्यभूतान् सुख-दुःखादीन् अनुभवति। अस्य चेतनस्य सम्भाव्यमानानि साध्व-साधुयोनिषु जन्मानि प्रति गुणसङ्ग एव कारणम्; स चैवम् अयं हि पूर्वपूर्वदेवमनुष्यादितत्तद्योनिसम्बन्धप्रयुक्तसत्त्वादिगुणमयेषु सुखादिषु सक्तः तत्साधनभूतेषु पुण्य-पापकर्मसु प्रवर्तते। ततः तत्पुण्यपापफलानु-भवाय साध्वसाधुषु योनिषु जायते। कर्मारभते—जायते—इत्यादि।

690. **'प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि।**
**विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान्॥'** (भ. गी. 13-19) 346

प्रकृति-पुरुषावुभावपि अन्योन्यसंसृष्टौ आदिरहितौ इत्येव जानीहि। बन्धहेतुभूतान् इच्छाद्वेषादीन् विकारान्, मोक्षहेतुभूतान् अमानित्वादि-कान् गुणांश्च प्रकृत्यैव सम्भूतान् जानीहि।

691. **'प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः।**
**भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात्॥'** (भ. गी. 9-8) 346

पूर्वोक्तां स्वकीयां विचित्रपरिणामिनीं प्रकृतिं, पृथिव्याद्यात्मना अष्टधा परिणमय्य, देवतिर्यङ्मनुष्यस्थावरात्मकं भूतग्रामं, मदीयायाः मोहिन्या गुणमय्याः प्रकृतेर्वशात् अवशं, पुनः पुनः कालेकाले विसृजामि—विचित्रनामरूपदेशकालभोगादियुक्तं करोमि।

692. **'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥'** (भ. गी. 7-4) 337

अस्य विविधविचित्रानन्तप्रकारस्य जगतः प्रसूतिकारणभूता मूलप्रकृतिः, अष्टप्रकारभेदभिन्ना—गन्धतन्मात्रयुता पृथिवी, रसतन्मात्रयुताः आपः, रूपतन्मात्रयुतं तेजः, स्पर्शतन्मात्रयुतो वायुः शब्दतन्मात्रयुतः आकाशः, पञ्चभिः ज्ञानेन्द्रियैः, पञ्चभिश्च कर्मेन्द्रियैः सहितं मनः, महत्तत्त्वं बुद्ध्यपरपर्यायमहङ्कारतत्त्वं चेति इयं मदीया (अपरा) प्रकृतिः ।

693. **'मत्तः परतरं नाऽन्यत् किञ्चिदस्ति धनञ्जय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥'** (भ. गी. 7-7) 337

हे धनञ्जय ! सर्वकारणत्वेन, सर्वशेषित्वेन च यथा अहं परतरः ; तथा ज्ञानबलादिगुणयोगेन च अहमेव परतरः । मदपेक्षया परतरं किञ्चिदपि नैवास्ति । ईदृशे सर्वकारणे सर्वशेषिणि सर्वोत्कृष्टगुणयोगिनि सर्वं प्रति सूत्रवत् धारकतया शरीरतया च अवस्थिते मयि मच्छरीरभूतं सर्वं कार्य-कारणावस्थं, मणिगणवत् धार्यतया नियाम्यतया शेषतया च अवस्थितम् ।

694. I **'मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनाऽनेन कौन्तेय जगद्धि परिवर्तते ॥'** (भ. गी. 9-10) 346

II **'मया.... चरम्'** 401

हे कौन्तेय ! सत्यसङ्कल्पेन सर्वसाक्षात्कारक्षमेण सृज्यस्य सर्वस्य नाभिस्थानापन्नेन मया ईक्षिता, इयं मदीया प्रकृतिः क्षेत्रज्ञकर्मानुगुणं सचराचरं जगत् सृजति । क्षेत्रज्ञकर्मानुगुणमदीक्षणरूपेण हेतुना खलु इदं जगत् परिवर्तनशीलं वर्तते ।

695. **'यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्'** (भ. गी. 15-19) 144

यः खलूपासकः मां क्षरपदवाच्यसर्वभूतात्मकपुरुषात्, अक्षरशब्दवाच्यकूटस्थपुरुषाच्च अव्ययस्वभावत्व व्यापनभरणैश्वर्यादिगुणयोगनिबन्धनविसजातीयत्ववत्तया पुरुषोत्तमत्वाश्रयं जानाति ; (सः मत्प्राप्त्युपायतया यत् वेदितव्यं, तत्सर्वं जानाति) ।

696. 'सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥' (भ. गी. 14-5) 346

सत्त्वरजस्तमांसि त्रयो गुणाः, प्रकृतेः स्वरूपानुबन्धिनः स्वभावविशेषाः (प्रकाशादिकार्यैकनिरूपणीयाः) महदादिविशेषान्तैरारब्धदेवमनुष्यादिदेहसम्बन्धिनम् एनं—देहिनम् अव्ययम्—स्वतो गुणसम्बन्धानर्हं देहे वर्तमानत्वेनोपाधिना निबध्नन्ति ।

697. 'सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥' (भ. गी. 9-7) 346

हे कौन्तेय! स्थावरजङ्गमात्मकानि सर्वाणि भूतानि अन्तिमब्रह्मदिवसावसाने तमश्शब्दवाच्यां नामरूपविभागानर्हां मच्छरीरभूतां प्रकृतिं मत्सङ्कल्पादेव पृथक्स्थितिप्रतिपत्त्यनर्हतया प्राप्नुवन्ति । पुनः कल्पारम्भे तानि सर्वाण्यपि भूतानि स्वसङ्कल्पेनैव अहमेव उत्पादयामि ।

698. 'सर्वस्य चाऽहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च'
(भ. गी. 15-15) 144, 332

सर्वस्यापि भूतजातस्य सकलप्रवृत्तिनिवृत्तिमूलभूतज्ञानोदयदेशे हृदयाख्यस्थाने, अहम् अन्तर्यामितया सन्निविष्टः । अतः मत्त एव सर्वेषां, पूर्वानुभूतविषयानुभवसंस्कारमात्रजज्ञानरूपा स्मृतिः, इन्द्रियलिङ्गागमयोगजवस्तुनिश्चयात्मकं ज्ञानम्, तथा ज्ञाननिवृत्त्यात्मकम् ऊहात्मकं वाऽपोहनमपि मत्त एव-मदायत्तमेव ।

699. 'अस्ति हि मध्वादिषु सम्भवो ब्रह्मण एव सर्वत्र निचाय्यत्वात्'
(बो. वृ.) 298

मधुविद्यादिषु विद्याविशेषेषु, वस्वादिपदं प्राप्तानामपि उपासनाधिकारस्य सम्भवः अस्त्येव खलु!; यतः सर्वत्राऽपि विद्यासु, सर्वत्र देहभेदे वा ब्रह्मैव उपासनेन साक्षात्करणीयम्; तस्य चोपासनस्य तेष्वपि अबाधितत्वादिति ।

700. 'तस्मिन् यदन्तरिति कामव्यपदेशः' (ब्र. नं. वा.) 261

दहरविद्यावाक्ये 'तस्मिन् यदन्तस्तदन्वेष्टव्यम्, तद्वाव विजिज्ञासितव्यम्' इत्यनेनांशेन, काम्यमानानां भगवतः कल्याणगुणानामेव अन्वेष्टव्यतया स्पष्टं निर्देशः।

701. 'पद्यु ह वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यम्' (व. स्मृ. 11–9) 309

'शूद्रः चतुर्थवर्णः' इति यदस्ति, एतत् सञ्चारि श्मशानम् — अत्यन्त विविधाशुच्यास्पदम् ; ततो हेतोः तादृशस्य अशुचेः शूद्रस्य निकटवर्तिनि प्रदेशे वेदानामध्ययनाख्यं कर्म निषिद्धम्। ['श्म'शब्देन शवः प्रोक्तः शानं शयनमुच्यते। पृषोदरादित्वात् निष्पत्तिः।]

702. 'भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्' (कै. वृ. आ.) 45, 50

विशेषणतो भिन्नार्थत्वे सति, विशेष्यत एकार्थत्वम्, पदद्वयप्रवृत्तिनिमित्तयोः एकाश्रयवृत्तित्वम्—सामानाधिकरण्यम्। [वृत्तिः—विशेष्यीभूतप्रधानार्थविषयः शब्दव्यापारः। निमित्तम्—प्रवृत्तिनिमित्तं जातिगुणादिकम्। समानम्—एकम्। अधिकरणम्—विशेषणानामाधारभूतं विशेष्यम्। एकविशेष्यगतधर्मद्वयप्रवृत्तिनिमित्तकसमानविभक्तिकपदद्वयत्वम्।]

703. 'भूमा त्वेवेति भूमा ब्रह्म ; नामादिपरम्परया आत्मन ऊर्ध्वमस्योपदेशात्' (बो. वृ.) 229

'भूमा त्वेव विजिज्ञासितव्यः' इति वाक्योक्तः 'भूम'शब्दार्थः, स्वरूपेण गुणैश्चानवधिकातिशयं परं ब्रह्म। नाम-वाङ्-मनः-सङ्कल्प-चित्त-ध्यान विज्ञान-बल-अन्न अप्-तेज-आकाश-स्मर-आशा-प्राणान्तान् उत्तरोत्तरातिशयितत्वेनोपदिश्य, उक्तार्थतत्त्वज्ञानवतः अतिवादित्वप्राप्तिमुक्त्वा, सत्याख्यपरमात्मातिवादस्य वस्तुतोऽतिवादतामुक्त्वा, तदुपयोगितया विज्ञान-मति-श्रद्धा-निष्ठा-कृति-सुखानां विजिज्ञास्यतामुक्त्वा, सुखात्मकत्वेनैव भूम्नः विजिज्ञास्यताम्, अनल्पसुखरूपस्य भूम्नः अनुभूयमानस्य

स्वेतरदर्शनश्रवणाद्यनवकाशाधायकापरिच्छिन्नानन्दरूपतायाः प्राणशब्द-वाच्यात् जीवात्मनः अनन्तरम् उपदिष्टत्वात् ।

704. **'माया वयुनं ज्ञानम्'** (या. नि. 3-9) 89

इमे पर्यायशब्दाः माया-वयुन-ज्ञानेति । अतः सृष्टिप्रसङ्गेषु, विचित्रार्थ-सृष्ट्युपयोगिनः अप्रतिहतस्य भगवत्सङ्कल्पस्य वाचको 'माया'शब्दः ।

705. **'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।**
**षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥'** (सां. का. 3) 357

प्रकृत्यादिपुरुषान्तानि पञ्चविंशतितत्त्वानि । तत्र प्राथमिकी प्रकृतिः, सृज्यानि सर्वाणि प्रति मूलत्वात् मूलप्रकृतिनाम्नी । अत एव च सा न कस्याऽपि कार्यरूपा । तत उपरि—महान्, अहङ्कारः, शब्द-स्पर्श-रूप-रस-गन्ध-तन्मात्राः इति सप्ततत्त्वानि मूलप्रकृतिपरिणामरूपत्वात् विकृतयः; मनआदिषोडशकं प्रति कारणत्वात् प्रकृतयश्चेति, 'प्रकृतिविकृतयः' इत्युच्यन्ते । मनः, चक्षुः-श्रोत्र-घ्राण-रसन-त्वङ्, ज्ञानेन्द्रियाणि नामानि (तथा) वाक्-पाणि-पाद-पायु-उपस्थाख्यानि कर्मेन्द्रियाणि, पृथिव्यादि-पञ्चभूतानि च, आहत्य षोडशतत्त्वानि, महदादिपरिणतिरूपत्वात् केवलं विकाररूपाण्येव । पुरुषपदाभिधेयो जीवस्तु अकारणत्वात् अकार्यत्वाच्च न प्रकृतिः, न च विकृतिः इति ।

706. **'शुचेर्दश्च'** (उ. सू. 176) 302

'शुच शोके' इति शोकार्थकात् 'शुच्'धातोः परः 'रक्' प्रत्ययो भवति, दश्च अन्तादेशो भवति ।

707. **'सता सोम्य तदा सम्पन्नो भवति इति, सम्पत्त्यसम्पत्तिभ्याम् एतदध्यसीयते; प्राज्ञेनात्मना सम्परिष्वक्तः—इति चाऽऽह'**
(बो. वृ.) 17

'जीवः सुषुप्तिकाले सच्छब्दाभिधेयेन वस्तुना सह सम्पत्तिमान् भवति' इत्येतदर्थकोपनिषद्वाक्यप्रतिपन्नाभ्यां सत्सम्पत्ति-सद्भिन्नासम्पत्तिभ्यां ज्ञापकभूताभ्यां (कारणे एव सम्पत्तेः युक्तिश्रुतिसिद्धतया) जगतः परब्रह्म-

कारणकत्वं निश्चीयते। तथा श्रुतिरेव—जीवः सुषुप्तिकाले 'प्राज्ञ'पदाभिधेयेन परमात्मना सह सम्परिष्वङ्गपदवाच्यलयविशिष्टो भवति-इति स्पष्टं वदति ।

708. 'सर्वं खल्विति सर्वात्मा ब्रह्मेशः' (बो. वृ.) 138

'सर्वं खल्विदं, ब्रह्म' इति श्रुतिवाक्यप्रतिपन्नः सर्वतादात्म्यवान् अर्थः, चेतनाचेतनात्मकसर्वजगन्नियन्तृ निरवधिकातिशयबृहत्त्ववत् ब्रह्म ।

क्रतुनाथार्यवंश्येन रामभद्रविपश्चिता ।
श्रीभाष्य आदिमेऽध्याये प्रमाणविवृतिः कृता ॥

—o—

# अनुबन्धः—३

१. पदार्थकोशः (श्रीभाष्यप्रथमाध्यायान्तभागस्थः)

२. ,, (श्रीभाष्यव्याख्यादिषु सङ्गृहीतः)

३. ब्रह्मसूत्रस्थविशिष्टपदार्थकोषः (प्रथमाध्यायमात्रस्य)

४. सिद्धान्तोक्ति-लोकोक्तिरूपाणि वाक्यानि (द्वितीयसम्पुटस्थानि)

५. श्रीभाष्ये प्रमाणत्वेनोदाहृताः ग्रन्थाः (द्वितीयसम्पुटस्थाः)

६. श्रीभाष्ये भागेऽस्मिन् उल्लिखितानि नामानि (ऋष्यादिनामानि ग्रन्थनामानि च)

७. प्रमाणस्थानबोधकसङ्केताक्षरसूचनी सङ्ख्याविवरणी च

८. विद्याः शारीरकीयानि तत्तदधिकरणानि च (द्वितीयसम्पुटगतानि)

९. शारीरकाधिकरणानि, तत्र विचारिताः विद्याः तत्स्थानानि च सविषयवाक्यखण्डानि

१०. अकाराद्यनुक्रमणिका: (अधिकरण-सूत्र-शारीरकन्यायकलापसङ्ग्रहादिश्लोकानाम्)

११. शोधनिका

॥ श्रीः ॥

# १. द्वितीयसम्पुटस्थमूलभागे सङ्गृहीतः पदार्थकोषः

| पदानि तदर्थाश्च | पृ. सं. |
|---|---|
| **अभिध्या**—सङ्कल्पः । | 408 |
| **अभिमुखीकृत्य**—प्रतिपाद्यतया परिगृह्य । | 69 |
| **अभिविमानः**—कृत्स्नमभिव्याप्तवान् विगतमानः । | 209 |
| **अभ्यात्तः**—स्वीकृतवान् । | 140 |
| **अमृतत्वम्**—ब्रह्मप्राप्तिः । | 398 |
| **अम्बरम्**—आकाशः । | 242 |
| **अम्बरान्तः**—आकाशस्य पारभूतम् अव्याकृतम् । | ,, |
| **अर्थवादाः**—गुणसद्भावं बोधयन्त एव कर्म प्ररोचयन्तः (वेदभागाः) । | 283 |
| **अर्भकौकस्त्वम्**—अल्पायतनत्वम् । | 145 |
| **अवाकी**—[वाकः-उक्तिः स अस्य नाऽस्ति इति] अजल्पाकः, जोषमासीनः । | 140 |
| **अविद्या**—कर्म । | 236 |
| **अव्यक्तम्**—शरीरावस्थं भूतसूक्ष्मम् । | 335 |
| „ —प्रधानम् । | 363 |
| **अव्याकृतम्**—[नामरूपाभ्यां न व्याक्रियते—न व्यज्यते इति] अव्यक्तम्, प्रधानम् । | 363 |
| „ —अव्याकृतशरीरं ब्रह्म । | 367 |
| **अशब्दम्**—यस्मिन् शब्द एव प्रमाणं न भवति तत्, आनुमानिकं—प्रधानम् । | 5 |
| **अहम्**—प्रत्यगात्मशरीरकः परमात्मा । | 238 |
| **आकाशः**—[आकाशते, आकाशयति च इति] प्रकाशः । | 98 |
| ,, —भूतसूक्ष्मम् । | 242 |
| **आकाशात्मा**—[आकाशवत् सूक्ष्मस्वच्छस्वरूपः, सकलेतरकारणभूतस्य आकाशस्यापि आत्मभूतः, स्वयं च प्रकाशते अन्यानपि प्रकाशयति इति वा] (परमात्मा) । | 139 |
| **आत्ममायया**—स्वसङ्कल्परूपेण ज्ञानेन । | 89 |
| **आत्मा**—[आप्नोति इति] | 95 |
| ,, —शरीरप्रतिसम्बन्धी चेतनः । | 99 |
| ,, —नियमनार्थव्यापित्ववान् । | 368 |
| **आदेशः**—[आदिश्यते प्रशिष्यते अनेन इति] आदेष्टा । | 403 |
| **आनुमानम्**—अनुमानप्रमितं प्रधानम् । | 220 |

| पदानि तदार्थाश्च | पृ. सं. |
|---|---|
| **ज्योतिः**—परं ब्रह्म । ( द्योतते इति ) | 296 |
| **ज्योतिरुपक्रमा**—ब्रह्मकारणिका । | 349 |
| ,, — कार्यावस्था (प्रकृतिः) | 351 |
| **तत्क्षमत्वम्**—तत्सामर्थ्यम् । | 22 |
| **तत्प्रचुरत्वम्**—तत्प्रभूतत्वम् । | 66 |
| **तदनुकारः**—तत्साम्यम् । | 274 |
| **तपः**—ज्ञानम् । | 190 |
| ,, —प्राचीनजगदाकारपर्यालोचनरूपं ज्ञानम् | 415 |
| **तमस एकीभावः**—तमोऽभिधानातिसूक्ष्माचित्प्रकारस्य ब्रह्मणः अविभक्तनामरूपतया अवस्थानम् । | 406 |
| **तिरोधानम्**—वस्तुस्वरूपे विद्यमाने तत्प्रकाशनिवृत्तिः । | 394 |
| **दर्शनम्**—रूपसाक्षात्कारः । | 179 |
| **दृष्टिः**—उपासनम् । | 205 |
| **देवतामयी**—इन्द्रियाधीनभोगा । | 154 |
| **न विन्दन्ति**—न लभन्ते । | 263 |
| **नाचिकेतम्**—नाचिकेतस्य कर्मणः प्राप्यम् । | 155 |
| **नानाभावः**—पृथग्भावः । | 357 |
| **नामरूपे अन्तरा**—नामरूपाभ्यामस्पृष्टः । | 321 |
| **निगम्यते** (इति निगमः)—उपदिश्यते । | 108 |
| **निचाय्यत्वेन**—द्रष्टव्यत्वेन, उपास्यत्वेन (चायृदर्शने) | 145 |
| **निदिध्यासनम्**—ब्रह्मात्मभावाभिधायिवाक्यं यदर्थप्रतिपादनयोग्यम् , तदर्थभावना । | 312 |
| **निरञ्जनाः**—नाम-रूपाभ्यां विनिर्मुक्ताः । | 219 |
| **पञ्चजनाः**—प्राणादयः पञ्च, स्पर्शन-चक्षुः-श्रोत्र-अन्न-(घ्राण-रसन)मनांसि । | 359 |
| **परब्रह्मानुकारः**—ब्रह्मणा परमसाम्यापत्तिः । | 274 |
| **परमात्मनि कार्यत्वम्**—तदवस्थ(कार्यावस्थ)योः तयोः (चिदचितोः) नियन्तृत्वेनाऽऽत्मत्वम् । | 417 |
| **परायणत्वम्**—(चेतनानां) परमप्राप्यत्वम् । | 97 |

॥ श्रीः ॥

॥ श्रीः ॥

# २. व्याख्यानादिषु सङ्गृहीताः पदार्थाः

पदानि तदर्थाश्च | पृ. सं.

| पदानि तदर्थाश्च | पृ. सं. |
|---|---|
| एकायनम्—एकं गम्यस्थानम् । | 396 |
| ऐकात्म्यम्—एकेनात्मना व्याप्तत्वम्—एकं प्रति शरीरता । | 384 |
| ऐकार्थ्यम्—समानार्थप्रतिपत्तिजनकत्वम् । | 384 |
| ऐतिह्यम्—उपदेशपारम्पर्यम् (श. क.) । | 267 |
| ओतम्—समवेतम् । | 215 |
| औदार्यम्—दातृ-प्रतिगृहीतृविभागबुद्धिरहितं दातृत्वम् । | 86 |
| कटकम्—वलयादिरूपः सुवर्णाभरणविशेषः । | 402 |
| कन्दस्थानम्—मूलस्थानम् । | 172 |
| कपिः—१) आदित्यः । [कम्-जलं पिबति इति] । | 80 |
| २) नालम् । [ ,, ,, ,, ] । | ,, |
| कप्यासम्—ईषद्विकसितम् पद्मम् । [कं पिबतीति कपिः, तेन आस्यते क्षिप्यते विकस्यते इति] (कं पिबतीति कपिः, तस्मिन् अस्ति इति वा) । | 80 |
| कम्पनम्—प्रत्यवायभयात् स्वस्वकार्येषु प्रवृत्तिः । | 316 |
| करणग्रामः—इन्द्रियसमूहः । | 396 |
| करणायत्तम्—इन्द्रियाधीनम् । | 176 |
| कर्मतन्त्रम्—कर्माधीनम् । | 269 |
| कल्पान्तरम्—अन्यः कल्पः । [कल्पः—ब्राह्ममेकं दिनम् दैवद्विसहस्रयुगपरिमितं ससन्धिकालयुक्तः चतुर्दशसङ्ख्याकमन्वधिकारयुक्तः कालः] । | 297 |
| कवयः—क्रान्तदर्शिनः । | 251 |
| काण्डकृत्त्वम्—प्राजापत्य-सौम्य-आग्नेय-वैश्वदेवादिरूपेण वेदेषु काण्डविभागकृत्त्वम् । | 289 |
| कापिलतन्त्रम्—कपिलप्रवर्तितं निरीश्वरसाङ्ख्यशास्त्रम् । | 328 |
| कारकम्—क्रियानिर्वर्तकम् । | 52 |
| कारुण्यम्—परदुःखासहिष्णुत्वम् । | 86 |
| काष्ठागतः—पुष्कलः । | 208 |
| किञ्चित्करत्वम्—सप्रयोजनता । | 283 |
| कूटस्थः—[कूटवत् तिष्ठति इति] निर्विकारः । | 313 |
| कृत्स्नोपसंहारः—सम्पूर्णः किञ्चिदनवशेषेण प्रलयः । | 291 |

**चेतनगतम्**—चेतनत्वानुगुणम् । 9
**चेतनैकान्तत्वम्**—नियमेन चेतनमात्रप्रतिपादकत्वम् । 95
**चोद्यम्**—अनुपपत्त्युद्धाटनेन अर्थाक्षेपपूर्वकं परिहारबुभुत्साख्यापनम् । 258
**छन्दोगाः**—सामशाखाध्यायिनः । 253
**जनित्री**—समष्टिसृष्टिकरी । 400
**जरद्गवादिवाक्यम्**—'जरद्गवः कम्बलपादुकाभ्यां द्वारिस्थितो गायति भद्रकाणि' (जरद्गवो गायति मत्तकानि) (पू. मी. शा. भा. 1-1-32) । 73
**जवनः**—झटिति दूरस्थसम्बन्धक्षमः । 179
**जातिः**—मिथो विरुद्धाकारेषु बहुषु प्रत्येकं पूर्णवृत्तिराकारः ।
**जिज्ञास्यम्**—प्रामाणिकतया परीक्ष्यम् । 2
**जीवघनः**—क्षेत्रज्ञसामान्यम् , कर्माधीनशरीरसम्बन्धवान् चेतनः । 249
**जोषम्**—तूष्णीम् । 141
**ज्ञेयत्वम्**—उपास्यत्वम् । 337
**ज्योक्**—उज्ज्वलः । 165
**ज्योतिः**—दीप्तिः । 317
**(तत्क्रतुन्यायः**—यथोपासनं प्राप्यसिद्धिः) 146
**तत्त्वभावः**—तत्त्वाविर्भावः । 346
**तदितिकर्तव्यता**—तदङ्गम् । 125
**तन्यते**—विस्तार्यते, स्थूलावस्थं क्रियते । 344
**तपस्विनी**—शोचनीया, देश-काल-व्रताद्यनेकनियमवती । 313
**तमः**—चेतनस्य ज्ञानसुखप्रकाशादिविरोधी मोहालस्यनिद्रादिहेतुः प्राकृतो गुणविशेषः । 346
**तर्कः**—१) अर्थस्वभावविषयेण वा सामग्रीविषयेण वा निरूपणेन अर्थविशेषे प्रमाणं व्यवस्थापयत् तदितिकर्तव्यतारूपम् ऊहापरपर्यायं ज्ञानम् ) ।
२) व्याप्यारोपेण व्यापकारोपः । 312
**तान्त्रिकाः**—सांख्याः, कापिलाः । 338
**तापत्रयम्**—आध्यात्मिकाधिदैविकाधिभौतिकाख्याः त्रयः तापाः । 13
**तुच्छत्वम्**—प्रमाणसम्बन्धानर्हत्वम् । 72

**निष्प्रमाणकत्वम्**—स्वपरव्यवहारयोग्यतापादनाभावः । 22

**नेमिः**—रथचक्राग्रस्थं वृत्ताकारं दारु । 118

**नैघण्टुकाः**—वेदनिघण्टुकाराः । 89

**नैमित्तिकः प्रलयः**—ब्राह्मो नैमित्तिको नाम कल्पान्ते यो भविष्यति । 290
त्रैलोक्यस्यास्य कथितः प्रतिसर्गो मनीषिभिः ॥ (श. क)

**पञ्चवृत्तिः प्राणः**—प्राणापानव्यानोदानसमानाख्यवृत्तिपञ्चकवान् देहान्तःस्थः प्राणवायुः । 27

**पतिः**—शेषी । 324

**पदम्**—[पद्यते इति] प्राप्यम् । 341

**पद्यु**—पादयुक्तम्, सञ्चारि, जङ्गमम् । 309

**परमं व्योम**—अप्राकृतं वैकुण्ठाख्यं भगवतः स्थानम् । 193

**परमसाम्यम्**—(जीवस्य परमात्मना सह) येन गुणेन साम्यं तस्य अपरिच्छिन्नत्वम् । 219

**परमार्थः**—तत्त्वावेदकप्रमाणविषयः । 311

**परविद्या**—परब्रह्मविषया विद्या । 188

**परश्वथः**—कुठारः । 402

**परा भक्तिः**—अनन्यप्रयोजना अनवरता निरतिशयप्रिया विशदतमप्रत्यक्षतापन्नानुध्यानरूपा मोक्षाव्यवहितप्राक्कालिकी परमात्मविषयिणी भक्तिः । 193

**परामृश्यते**—उपस्थाप्यते । 77

**परावरात्मतत्त्वम्**—परमात्मनः जीवात्मनश्च वास्तविकं स्वरूपम् । 157

**परिजिहीर्षा**—परिहर्तुमिच्छा । 39

**परिनिष्पन्नं वस्तु**—सिद्धं वस्तु । 125

**परिविष्यमाणः**—(सूदेन) भोज्यमानः । 306

**परिशेषः**—तदितरविशेषाभाववत्त्वे सति तद्वत्त्वम् । 332

**परिष्वङ्गः**—सम्बन्धः । 16

,, —संश्लेषः, लयः । 323

**परीचिक्षिषा**—परीक्षितुमिच्छा । 268

**पर्यवसानम्**—पूर्वं क्वचिदव्यापृतस्य तत्रानुपरम्य तदन्वयिन्यन्यत्र व्यापारः । 58

**पर्याप्तम्**—इतरानपेक्षम् पूर्णम् । 263

**शरीरस्य नियमनम्**—योगाद्युत्पादनकाले सम्पाद्यं सात्त्विकाहारेण शरीरस्य परिशोधनम् । 332

**शरीरान्तर्वर्तित्वम्**—हृदयवर्तित्वम् । 147

**शाखाचन्द्रन्यायः**—बालानां चन्द्रदर्शनं कारयितुं, वस्तुतः शाखाग्रे अनवस्थितेऽपि चन्द्रे 'शाखाग्रे चन्द्रः' इत्युक्त्वा क्रमेण तद्दृष्टेः चन्द्रस्पर्शितापादनम् । 26

**शान्त आत्मनि, महत आत्मनो नियमनम्**—स्वत ऊर्मिशङ्करहिते परमात्मनि जीवस्य निरन्तरशेषतापत्तिः । 334

**शास्ति**—उपदिशति । 76

**शुद्धम्**—कर्म-तत्फलान्वयरहितम् । 70

**शेषत्वम्**—अङ्गत्वम्, उपकारकत्वं, शेष्यतिशयाधायकत्वम् । 139

**श्रद्धा**—त्वरा । 228

**संयद्वामः**—सर्वकल्याणगुणाश्रयः, सत्यसङ्कल्पो वा । 167

**संवर्गविद्या**—छान्दोग्यतुर्याध्याये तृतीयखण्डे जानश्रुतिं प्रति रैक्वेणोपदिष्टा विद्या । 301

**संशब्दनम्**—निर्देशः । 387

**संसारः**—कर्मकृताचित्सम्बन्धः । 13

**संस्थानम्**—अवयवसंनिवेशविशेषः, तत्तदसाधारणधर्मो वा जात्याकृत्यादिः । 291

**सङ्गच्छते**—सम्भवति, युज्यते । 218

**सञ्जिहानः**—तल्पं त्यजन् । 305

**सतासती**—चिदचिती रूपे, (सच्च असच्च) । 287

**सत्त्वम्**—चेतनस्य ज्ञान-सुखादिहेतुभूतप्राकृतो गुणविशेषः । 346

**सत्यम्**—भोक्तृवर्गः । 190

**सनाथा**—सहिता । 265

**सन्देहः**—मध्यम् । (कायस्य) इदं देहस्य पूर्वापरांशसाधारणत्वात् कुत्र अनुप्रविष्टम् ? इति सन्दिह्यते । 202

**सन्धिः**—(परमात्मोपासनेन) सम्बन्धः । 340

**सन्निरुद्धः**—तिरोहितस्वरूपस्वभावः । 345

**समं दिवा**—स्वर्गेण समम् । 303

**समञ्जसः**—स्वारसिकः [सम्यक् अञ्ज-औचित्यं यत्र सः ('असच्' प्रत्ययः)] (श.क) । 385

**समन्वयः**—प्रतिपाद्यप्रतिपादकभावेन सम्यगन्वयः । 126

**समष्टिपुरुषः**—हिरण्यगर्भः । 249

**समाकृष्यते**—पूर्वम् उक्त एवार्थः अनुवर्त्य परामृश्यते । 366

**समानाधिरणवृत्ताः**—एकविभक्त्यन्ताः शब्दाः । 43

**समाहारः**—एकाधिकानाम् अर्थानां बाह्यव्यापारेण बुद्ध्या वा राशीकरणम् (श.क) । 356
तन्नामा व्याकरणानुशासनसिद्धः संहतिप्राधान्यवान् द्वन्द्वसमासविशेषः ।

**सम्पत्तिः**—सम्पादनम्, अतस्मिन् तत्कल्पनम् । 210

**सम्प्रसन्नः**—अपगतसांसारिककालुष्यतया सम्प्रसादपदाभिधेयतामापादितो जीवः । 379

**सम्प्रसादः**—जीवात्मा । [भगवदाज्ञानुरोधेन कृतकृत्येऽस्मिन् सम्यक् प्रसीदति परमात्मा इति, भगवत्प्रसादेनाऽयं सम्प्रसन्नः-सांसारिकसकलकालुष्यविनिर्मुक्तो भवति इति वा] । 271

**सम्भावना**—१) 'इदम् एवं भवेद्वा ?' इत्येवंरूपा अनिर्णयात्मिका मतिः, क्रियासु योग्यताध्यवसायः, उत्कटकोटिकः संशयो वा (श.क) । 127

,, —२) अर्हत्वचिन्ता । 278

**सर्गः**—सृष्टिव्यापारः । 10

**सर्वबन्धविनिर्मोक्षः**—शरीरबन्धात् संसारप्रयोजकात्कर्मबन्धाच्च दूरीभावः । 157

**सर्वविद्याप्रतिष्ठात्वम्**—सर्वविद्याश्रयत्वम् । 188

**सर्ववेदसम्**—सर्वस्वम् । 156

**सर्वेन्द्रियकन्दस्थानम्**—हृत् । 172

**सर्वेशः**—सर्वनियन्ता । 118

**साक्षित्वम्**—साक्षाद्दीक्षितृत्वे सति निर्विकारत्वम् । 21

**साक्षित्वेन**—स्वोक्तार्थोपोद्बलकत्वेन विषयावभासकत्वम् । 366

**सामग्री**—समग्र(एककार्योन्मुखसकल)कारणसम्पत्तिः । 310

**सामर्थ्यम्**—सफलप्रवृत्तिमत्ता । 280

**सामानाधिकरण्यम्**—(शब्दे) समानविभक्तिकत्वम् । 25

**साम्प्रतिकी**—नामरूपविमोक्षानन्तरकालभाविनी ।

**साहचर्यम्**—सामीप्यम् । 9

॥ श्रीः ॥

# ३. ब्रह्मसूत्रस्थविशिष्टपदार्थकोषः

## (प्रथमाध्यायः १-१२५ पदानि)

| पदानि तदर्थाश्च | अ. | पा. | सू. |
|---|---|---|---|
| **अक्षरम्**—क्षरणरहितं परं ब्रह्म । | 1 | 3 | 9 |
| **अतच्छब्दः**—तद्वाचकशब्दाभावः । | 1 | 3 | 3 |
| **अतिरेकः**—पृथङ्निर्देशः । | 1 | 4 | 11 |
| **अत्ता**—संहर्ता । | 1 | 2 | 9 |
| **अदनम्**—कर्मफलभोगः । | 1 | 3 | 6 |
| **अधिदैवाधिलोकादिः**—तत्तत्पदचिह्नितश्रुतिवाक्यसन्दर्भः । | 1 | 2 | 19 |
| **अध्यात्मसम्बन्धभूमा**—आत्मासाधारणधर्मसम्बन्धबहुत्वम् । | 1 | 1 | 30 |
| **अध्युपदेशः**—अधिकत्वेन उपदेशः । | 1 | 3 | 7 |
| **अनवस्थितिः**—स्थितेः नैयत्याभावः । | 1 | 2 | 18 |
| **अनुकृतिः**—साम्यापत्तिरूपम् अनुकरणम् । | 1 | 3 | 21 |
| **अनुगमः**—पूर्ववाक्यप्रकृतस्य उत्तरवाक्यसबन्धः । | 1 | 1 | 29 |
| **अनुपरोधः**—अबाधः । | 1 | 4 | 23 |
| **अनुमानम्**—लिङ्गम्, ज्ञापकम् । | 1 | 2 | 26 |
| ,, —प्रधानम्, प्रकृतिः । | 1 | 1 | 19 |
| **अनुस्मृतिः**—उपासनसम्पत्तिः । | 1 | 2 | 31 |
| **अनेकप्रतिपत्तिः**—अनेकशरीरपरिग्रहः । | 1 | 3 | 26 |
| **अन्नम्**—पार्थिवं घ्राणेन्द्रियम्, अदनकरणं रसनेन्द्रियं च । | 1 | 4 | 13 |
| **अन्यभावः**—अन्यत्वम्, भेदः । | 1 | 3 | 11 |
| **अभिधानम्**—प्रतिपादनम् । | 1 | 1 | 25 |
| **अभिध्या**—सङ्कल्पः । | 1 | 4 | 24 |
| **अभिलापः**—कथनम् । | 1 | 2 | 20 |
| **अभिव्यक्तिः**—(उपासकानां) बुद्धिसौकर्यम् । | 1 | 2 | 30 |
| **अभ्यासः**—उत्तरोत्तरम् अधिकगुणतया आवर्त्यमानः । | 1 | 1 | 19 |

| पदानि तदर्थाश्च | अ. | पा. | सू. |
|---|---|---|---|
| **अम्बरम्**—वायुमानाकाशः । | 1 | 3 | 9 |
| **अम्बरान्तः**—अव्याकृताकाशः, आकाशस्य पारभूतं प्रधानम् । | 1 | 3 | 9 |
| **अर्भकौकस्त्वम्**—अल्पायतनत्वम् । | 1 | 2 | 7 |
| **अवस्थितिः**—परमात्मनः सर्वत्र अन्तरात्मतया स्थितिः । | 1 | 4 | 22 |
| **अशब्दम्**—प्रधानम्, मूलप्रकृतिः । | 1 | 1 | 5 |
| **असम्भवः**—बाधः । | 1 | 2 | 18 |
| **आत्मकृतिः**—स्वस्यैव जगदात्मना करणम् । | 1 | 4 | 26 |
| **आद्रवणम्**—आभिमुख्येन धावनम् । | 1 | 3 | 33 |
| **आनुमानम्**—अनुमानगम्यतया साङ्ख्योक्तं प्रधानम् । | 1 | 3 | 3 |
| **आनुमानिकम्** ,, ,, ,, | 1 | 4 | 1 |
| **आमनन्ति**—वदन्ति । | 1 | 2 | 33 |
| **आम्नानम्**—श्रुत्या कथनम् । | 1 | 4 | 25 |
| **आयतनम्**—आधारः, आश्रयः । | 1 | 3 | 1 |
| **आवृत्तिः**—प्रलयकालसमनन्तरं पुनः सर्गः । | 1 | 3 | 29 |
| **इतरौ**—प्रधान-पुरुषौ । | 1 | 2 | 23 |
| **ईक्षतिः**—ईक्षधातुः दर्शनार्थकः । | 1 | 1 | 5 |
| **उत्क्रान्तिः**—जीवस्य देहादुत्क्रमणम् । | 1 | 3 | 43 |
| **उपक्रमः**—कारणम् । | 1 | 4 | 9 |
| **उपदेशः**—अज्ञातस्यार्थस्य ज्ञापनम् । | 1 | 4 | 24 |
| **उपन्यासः**—कथनम् । | 1 | 2 | 24 |
| ,, —प्रतिवचनम् । | 1 | 4 | 6 |
| **उपपत्तिः**—अबाधेन सम्भवः । | 1 | 2 | 13 |
| **उपरि**—ऊर्ध्वलोकवासिषु देवेषु । | 1 | 3 | 7 |
| **उपलब्धिः**—श्रुतौ दर्शनम् । | 1 | 3 | 15 |
| **उपसङ्ग्रहः**—बोधकतास्वीकारः । | 1 | 4 | 11 |
| **उपसृप्यः**—प्राप्यः । | 1 | 3 | 2 |

| पदानि तदर्थाश्च | अ. | पा. | सू. |
|---|---|---|---|
| **उपासात्रैविध्यम्**—त्रिविधमुपासनम् (१ चेतनशरीरकस्य, २ अचेतनशरीरकस्य ३ स्वरूपेण च परमात्मन उपासनम् । | 1 | 1 | 32 |
| **कम्पनम्**—कम्पनहेतुभूतभयजननयोग्यता । | 1 | 3 | 40 |
| **कल्पनम्**—क्लृप्तिः, सृष्टिः । | 1 | 4 | 10 |
| **कामः**—कामना, सङ्कल्पः । | 1 | 1 | 19 |
| **गतिः**—अर्थबोधनस्वाभाव्यम् (शब्दस्य) । | 1 | 1 | 11 |
| ,, —प्राप्तिः । | 1 | 3 | 14 |
| ,, —अवगतिः । | 1 | 3 | 34 |
| **गीयते**—प्रतिपाद्यते । | 1 | 1 | 16 |
| **गुहा**—हृदयकुहरम् । | 1 | 2 | 11 |
| **गौणः**—गुणयोगकृतः, औपचारिकः । | 1 | 1 | 6 |
| **चमसः**—यज्ञपात्रविशेषः । | 1 | 4 | 8 |
| **चेतोऽर्पणनिगमः**—उपासनोपदेशः । | 1 | 1 | 26 |
| **जिज्ञासा**—इच्छाविषयीभूतं तर्कापरपर्यायम् । | 1 | 1 | 1 |
| **ज्योतिः**—परं ब्रह्म । | 1 | 3 | 31 |
| **ज्योतिरुपक्रमा**—परब्रह्मकारणिका । | 1 | 4 | 9 |
| **दर्शनम्**—श्रुतिः । | 1 | 2 | 11 |
| **दहरः**—हृदयाकाशस्थः परमात्मा । | 1 | 3 | 13 |
| **दृष्टम्**—श्रुतिप्रतिपन्नम् । | 1 | 3 | 14 |
| **दृष्ट्युपदेशः**—उपासनविधानम् । | 1 | 2 | 27 |
| **धर्मोपपत्तिः**—अबाधेन धर्मयोगः । | 1 | 3 | 8 |
| **धृतिः**—परमात्मकर्तृकं धारणम्, जगद्विधरणम् । | 1 | 3 | 15 |
| **निचाय्यत्वम्**—उपास्यत्वम् । | 1 | 2 | 7 |
| **निर्धारणम्**—निश्चयः । | 1 | 3 | 37 |
| **परामर्शः**—प्रतिपादनम्, प्रस्तावः । | 1 | 3 | 17 |
| ,, —उपस्थितिः । | 1 | 3 | 36 |
| **परिणामः**—स्वस्वरूपापरित्यागेन अवस्थान्तरप्राप्तिः । | 1 | 4 | 27 |

| पदानि तदर्थाश्च | अ. | पा. | सू. |
|---|---|---|---|
| **प्रकरणम्**—प्रक्रमः आरम्भः । | 1 | 2 | 10 |
| ,, —प्रकृतत्वम्, प्रस्तुतत्वम् । | 1 | 3 | 5 |
| **प्रकृतिः**—उपादानकारणम् । | 1 | 4 | 23 |
| **प्रत्यक्षानुमाने**—श्रुतिस्मृती । | 1 | 3 | 27 |
| **प्रभवः**—सृष्टिः । | 1 | 3 | 27 |
| **प्रमितः**—प्रमाणविशेषवत्तया निश्चितः (प्रमाणम्—परिमाणम्) । | 1 | 3 | 23 |
| **प्रशासनम्**—प्रकृष्टं शासनम्, अप्रतिहताज्ञा । | 1 | 3 | 10 |
| **प्राज्ञः**—परमात्मा । | 1 | 4 | 5 |
| **प्राणभृत्**—जीवात्मा । | 1 | 3 | 3 |
| **ब्रह्म**—परं ब्रह्म सर्वेश्वराभिधानम् । | 1 | 1 | 1 |
| **भूमा**—बहुत्व(महत्त्व)गुणविशिष्टः । | 1 | 3 | 7 |
| **मनुष्याधिकारत्वम्**—उपासनानुष्ठानार्हं मनुष्यमधिकृत्य प्रवृत्तत्वम् । | 1 | 3 | 24 |
| **मान्त्रवर्णिकम्**—मन्त्राक्षरैरेव स्पष्टं प्रतिपाद्यम् । | 1 | 1 | 16 |
| **योगः**—अबाधेनान्वयः । | 1 | 1 | 32 |
| **योनिः**—प्रमाणम् । | 1 | 1 | 3 |
| ,, —कारणम् । | 1 | 4 | 28 |
| **रूपकविन्यस्तः**—सादृश्यं निमित्तीकृत्य धर्म्यन्तरात्मना निर्दिष्टः । | 1 | 4 | 1 |
| **लिङ्गम्**—ज्ञापको हेतुः, अनुमानम् । | 1 | 1 | 23 |
| **वाक्यशेषः**—प्रधानवाक्योपकारकं पश्चात्तनं वाक्यम् । | 1 | 4 | 12 |
| **विकारशब्दः**—मयट्प्रत्ययः । | 1 | 1 | 14 |
| **विशेषः**—वैलक्षण्यम् । | 1 | 2 | 5 |
| ,, —विशेष्यमाणता । | 1 | 2 | 6 |
| **विशेषणम्**—असाधारणधर्मोक्तिः । | 1 | 2 | 12 |
| ,, —विशिष्य कथनम् । | 1 | 2 | 23 |
| **वैशेष्यम्**—विशेषसद्भावः, वैलक्षण्यम् । | 1 | 2 | 8 |
| **वैश्वानरः**—विश्वेषां नराणां नेता परमात्मा । | 1 | 2 | 25 |
| **व्यपदेशः**—स्पष्टतया उपदेशः । व्यवहारः । | 1 | 1 | 22 |

| पदानि तदर्थाश्च | अ. | पा. | सू. |
|---|---|---|---|
| व्याख्यानम्—प्रतिवचनम् । | 1 | 4 | 18 |
| व्यावृत्तिः—निवारणम् । | 1 | 3 | 11 |
| शारीरः—कर्मायत्तशरीरसम्बन्धार्हो जीवः । | 1 | 2 | 3 |
| शास्ति—उपदिशति, बोधयति । | 1 | 1 | 20 |
| शास्त्रयोनित्वम्—शास्त्रैकप्रमाणकत्वम् । | 1 | 1 | 3 |
| शुक्—शोकः । | 1 | 3 | 33 |
| श्रुतोपनिषत्कः—अधिगतपरमपुरुषयाथात्म्यः (विद्वान्) । | 1 | 2 | 17 |
| समन्वयः—सम्यगन्वयः, पुरुषार्थतया सम्बन्धः । | 1 | 1 | 4 |
| समाकर्षः—उक्तस्यैवार्थस्य (अनुवर्त्य) परामर्शः । | 1 | 4 | 15 |
| सम्पत्तिः—सम्पादनम्, सिद्धिः । | 1 | 2 | 32 |
| सम्प्रसादः—प्रत्यगात्मा, जीवः । (सम्प्रसीदति अस्मिन् परमात्मा) । | 1 | 3 | 7 |
| सम्भोगः—सुखदुःखाद्यनुभवः । | 1 | 2 | 8 |
| संस्कारः—उपनयनादिः अध्ययनादियोग्यत्वापादकः । | 1 | 3 | 36 |
| साक्षात्—अद्वारकतया, अव्यवधानेन । | 1 | 2 | 29 |
| साधारणशब्दः—बहुष्वर्थेषु सामान्यतः प्रयोगार्हः शब्दः । | 1 | 2 | 25 |
| सामान्यम्—समानरूपता । | 1 | 1 | 11 |
| सुषुप्तिः—गाढनिद्रावस्था । | 1 | 3 | 43 |
| सूक्ष्मम्—भूतसूक्ष्मम्, प्रधानम् अव्यक्तपदवाच्यम् । | 1 | 4 | 2 |
| स्थितिः—भोगराहित्येनावस्थानम् । | 1 | 3 | 6 |
| स्मर्यमाणम्—प्रत्यभिज्ञायमानम् । | 1 | 2 | 26 |
| स्मार्तम्—साङ्ख्यस्मृत्युक्तं प्रधानम् । | 1 | 2 | 20 |
| स्वशब्दः—असाधारणधर्मतः स्ववाचकः शब्दः । | 1 | 3 | 1 |
| स्वाप्ययः—स्वकारणे लयः । | 1 | 1 | 10 |
| हेयत्वम्—पुरुषार्थविरोधिताप्रयुक्तं त्याज्यत्वम् । | 1 | 1 | 8 |
| हृत्—हृदयाख्यः शरीरगतः स्थानविशेषः । | 1 | 3 | 24 |

—o—

## ४. सिद्धान्तोक्ति-लोकोक्तिरूपाणि वाक्यानि (द्वितीयसम्पुटस्थानि)

क्र. सं. | पृ. सं.

क्र. सं. पृ. सं.

35 अतश्च आनन्दयितव्यात् जीवात्, आनन्दयिता अयमन्यः आनन्दमयः परमात्मा इति विज्ञायते। 68

36 'रस'शब्दाभिधेयानन्दमयलाभात्, अयं 'जीव'शब्दाभिलपनीयः, आनन्दी भवति—इत्युच्यमाने, 'यल्लाभात् यः आनन्दी भवति, सः स एव' इति अनुन्मत्तः को ब्रवीति? 76

37 अतः 'प्रधान'शब्दाभिलप्यात्, अर्थान्तरभूतस्य परस्य ब्रह्मणः, 'जीव'-शब्दाभिलपनीयादपि वस्तुनः, अर्थान्तरत्वं सिद्धम्। 78

38 परस्यैव ब्रह्मणः, निखिलहेयप्रत्यनीकानन्तज्ञानानन्दैकरूपतया सकलेतरविलक्षणस्य, स्वाभाविकानवधिकातिशयासङ्ख्येयकल्याणगुणाश्च सन्ति। तद्वदेव, स्वाभिमतानुरूपैकरूपाचिन्त्यदिव्याद्भुतनिरतिशयौज्ज्वल्य-सौन्दर्य-सौगन्ध्य-सौकुमार्य-लावण्य-यौवनाद्यनन्तगुणगणनिधिदिव्यरूपमपि स्वाभाविकम्, अस्ति। तदेव, उपासकानुग्रहेण तत्तत्प्रतिपत्त्यनुरूपसंस्थानं करोति; अपारकारुण्य-सौशील्य-वात्सल्यौदार्यजलनिधिः, निरस्तनिखिलहेयगन्धः, अपहतपाप्मा, परमात्मा, परं ब्रह्म, पुरुषोत्तमो नारायणः। 85, 86

39 अतः 'सर्वेभ्यो हिरण्यगर्भादिजीवेभ्यः, अन्य एव परमात्मा' इति सिद्धम्। 91

40 सत्यमुक्तम्; अयुक्तं तु तत्। 95

41 एवं वाक्यशेषावधारितानेकापूर्वार्थविशिष्टं, निखिलजगदेककारणं, 'सदेव सोम्ये' त्यादिवाक्यसिद्धं ब्रह्मैव, प्रसिद्धवत्, 'सर्वाणि ह वा इमानि भूतानि' इत्यादिवाक्येन निर्दिश्यते—इति सिद्धम्। 100

42 तस्मात्, परमपुरुष एव निरतिशयतेजस्कः, 'दिवः परो ज्योतिर्दीप्यते' इति प्रतिपाद्यते। 110

43 तदेतत् चेतनाचेतनात्मककृत्स्नवस्त्वाधारत्वम्, जीवात् अर्थान्तरभूते अस्मिन् परमात्मन्येव उपपद्यते। 117

44 यत्र—हिरण्यगर्भादिजीवविशेषाणां प्रकृत्याद्यचेतनविशेषाणां च परमात्मासाधारण-धर्मयोगः, तदभिधायिनां शब्दानां परमात्मवाचिशब्दैः सामानाधिकरण्यं वा दृश्यते; तत्र—परमात्मनः, तत्तच्चिदचिद्विशेषान्तरात्मत्वानुसन्धानं प्रतिपिपादयिषितम्। 123

| क्र. सं. | | पृ. सं. |
|---|---|---|
| 57 | अतः एवम्भूतद्युमूर्धत्वादिविशिष्टं परमपुरुषस्यैव रूपमिति, वैश्वानरः परमपुरुष एव । | 202 |
| 58 | परमात्मन एव हि ! निरुपाधिकं पुरुषत्वम् । | 206 |
| 59 | नद्यादिषु सेतुर्हि ! कूलस्य प्रतिलम्भकः । | 217 |
| 60 | 'आत्म'शब्दश्च निरुपाधिकः, परस्मिन् ब्रह्मणि मुख्यवृत्तः । 'आप्नोति' इति हि ! आत्मा । स्वेतरसमस्तस्य नियन्तृत्वेन व्याप्तिः, तस्यैव सम्भवति । | 218 |
| 61 | संसारबन्धनाद्विमुक्ता एव हि ! विधूतपुण्यपापाः निरञ्जनाः नामरूपाभ्यां विनिर्मुक्ताश्च पुण्यपापनिबन्धनाचित्संसर्गप्रयुक्तनाम-रूपभाक्त्वमेव हि ! संसारः । अतः विधूतपुण्यपापैः निरञ्जनैः प्रकृतिसंसर्गरहितैः परेण ब्रह्मणा परमं साम्यमापन्नैः, प्राप्यतया निर्दिष्टः द्यु-पृथिव्याद्यायतनभूतः पुरुषः, परं ब्रह्मैव । | 219, 220 |
| 62 | ['द्वा सुपर्णा' इत्यादिना] एकस्य कर्मफलादनम्; अन्यस्य च कर्मफलम् अनश्नत एव दीप्यमानतया शरीरान्तःस्थितिमात्रं प्रतिपाद्यते । तत्र कर्म-फलमनश्नन् दीप्यमान एव सर्वज्ञः अमृतसेतुः द्युभ्वाद्यायतनं भवितुमर्हति; न पुनः कर्मफलमदन् शोचन् प्रत्यगात्मा । अतः द्युभ्वाद्यायतनं परमात्मा इति सिद्धम् । | 223 |
| 63 | यथा—पित्तोपहतेन पीयमानं पयः, पित्ततारतम्येन अल्पसुखं, विपरीतं च भवति; तदेव पयः, पित्तानुपहतस्य सुखायैव भवति । यथैव राजपुत्रस्य, पितुर्लीलोपकरणम् अतथात्वेन अनुसन्धीयमानं, प्रियत्वम् अनुपगतं, तथात्वानुसन्धाने प्रियतमं भवति ; तथा—निरतिशयानन्दस्वरूपस्य ब्रह्मणः अनवधिकातिशयासङ्ख्येयकल्याणगुणाकरस्य, लीलोपकरणं, तदात्मकं च अनुसन्धीयमानं जगत्, निरतिशयप्रीतये भवत्येव । अतः जगदैश्वर्य-विशिष्टम् अनवधिकातिशयसुखरूपं ब्रह्म अनुभवन्, ततोऽन्यत् किमपि न पश्यति ; दुःखं च न पश्यति । | 236 |
| 64 | अतः 'प्राण'शब्दनिर्दिष्टात् प्रत्यगात्मनोऽर्थान्तरभूतस्य 'सत्य'शब्दाभिधेयस्य ब्रह्मणः 'भूमा' इत्युपदेशात्, भूमा—परं ब्रह्म । | 237 |

क्र. सं. पृ. सं.

क्र. सं. | पृ. सं.

77 एतदेव वेदस्य अपौरुषेयत्वं नित्यत्वं च ; यत् पूर्वपूर्वोच्चारणक्रमजनितसंस्कारेण तमेव क्रमविशेषं स्मृत्वा, तेनैव क्रमेण उच्चार्यत्वम्। तत् अस्मासु सर्वेश्वरेऽपि समानम्। इयांस्तु विशेषः—संस्कारानपेक्षमेव स्वयमेव अनुसन्धत्ते पुरुषोत्तमः। 291

78 अतः अध्ययनविधिसिद्धस्वाध्यायाधिगत[स्य]ज्ञानस्यैव ब्रह्मोपासनोपायत्वात्, शूद्रस्य ब्रह्मोपासनसामर्थ्यासम्भवः।....विदुरादयस्तु भवान्तराधिगतज्ञाना-प्रमोषात् ज्ञानवन्तः, प्रारब्धकर्मवशाच्च ईदृशजन्मयोगिनः इति, तेषां ब्रह्मनिष्ठत्वम्। 301, 302

79 अतः 'शूद्र'शब्देन, विद्योपदेशयोग्यताख्यापनार्थं शोक एवाऽस्य सूचितः न चतुर्थवर्णत्वम्। 305

80 उपनिषच्च तपस्विनी दत्तजलाञ्जलिः स्यात्। 313

81 अतः निर्वाह्यनामरूपात् प्रत्यगात्मनः, नाम-रूपनिर्वोढा अयम् आकाशः अर्थान्तरभूतः परमेव ब्रह्म। 320, 321

82 निरुपाधिकबृहत्त्वादयो हि! परमात्मन एव सम्भवन्ति। 321

83 ऐक्योपदेशस्तु, सर्वस्य चिदचिदात्मकस्य ब्रह्मकार्यत्वेन तदात्मकत्वायत्तः इति। 324

84 'दैवम्' अत्र पुरुषोत्तम एव....। तस्य च वशीकरणं तच्छरणागतिरेव। 332

85 तदानीं [सृष्टेः प्राक्] नामरूपविभागाभावेन, तत्सम्बन्धितया अस्तित्वाभावात्। ['असद्वा इदमग्र आसीत्' इत्यादौ] ब्रह्मैव 'असत्'शब्देनोच्यते। 366

86 जगदुत्पत्तेः जीवकर्मनिबन्धनत्वेऽपि, न जीवः स्वभोग्य-भोगोपकरणादेः स्वयमुत्पादकः। अपि तु स्वकर्मानुगुण्येन ईश्वरसृष्टं सर्वं भुङ्क्ते। अतः न तस्य पुरुषान् प्रति कर्तृत्वमुपपद्यते। अतः सर्ववेदान्तेषु परमकारणतया प्रसिद्धं परं ब्रह्मैव, अत्र वेदितव्यतया उपदिश्यते। 375

87 सुषुप्तस्य हि जीवस्य यत्र उषितस्य, जागरितस्वप्नदशासम्बन्धि विचित्रसुख-दुःखानुभवकालुष्यविरहेण सम्प्रसन्नस्य स्वस्थतापत्तिः, पुनरपि अस्य, यस्मात् भोगाय निष्क्रमणम्, सोऽयं परमात्मा। 379

88 परमपुरुषविभूतिभूतस्य प्राप्तुः आत्मनः, स्वरूपयाथात्म्यम्, अपवर्गसाधन-परमपुरुषवेदनोपयोगितया अवगन्तव्यम्; न स्वत एवोपायत्वेन। अतोऽत्र परमात्मैव अमृतत्वोपायतया, 'द्रष्टव्यः' इत्यादिना उपदिश्यते। 385

क्र. सं. पृ. सं.

[ईक्षत्यधिकरणप्रभृति प्रथमाध्यायपूर्ति यावत् श्रीभाष्यस्थाः काश्चन सिद्धान्तोक्तयः लोकोक्तयश्च]

आद्याध्यायगतावाचः प्रायः सिद्धान्तबोधकाः ।
बुभुत्सूनां धारणाय सङ्गृहीता विशेषतः ॥

—o—

॥ श्रीः ॥

# ५. श्रीभाष्ये प्रमाणत्वेनोदाहृताः ग्रन्थाः

(द्वितीयसम्पुटस्थाः)

अग्निरहस्यब्राह्मणम्
आपस्तम्बीयं श्रौतसूत्रम्
उणादिसूत्रम्
ऋक्संहिता
ऐतरेयोपनिषत्
कठोपनिषत्
केनोपनिषत्
कैयटव्याख्या (महाभाष्यस्य)
कौषीतक्युपनिषत्
गर्भोपनिषत्
गौतमधर्मसूत्रम्
छान्दोग्योपनिषत्
ताण्ड्यमहाब्राह्मणम्
तैत्तिरीयनारायणोपनिषत्
तैत्तिरीयब्राह्मणम्
तैत्तिरीयसंहिता
तैत्तिरीयारण्यकम्
तैत्तिरीयोपनिषत् शीक्षावल्ली
,, ,, आनन्दवल्ली
,, ,, भृगुवल्ली
नारसिंहपुराणम्
पाणिनिसूत्रम् (अष्टाध्यायी)
पूर्वमीमांसासूत्रम्
प्रश्नोपनिषत्
बृहदारण्यकोपनिषत् (काण्वपाठः)
,, ,, (माध्यन्दिनपाठः)
बोधायनवृत्तिः
ब्रह्मनन्दिवार्तिकम्
ब्रह्मसूत्रम्
भगवद्गीता
मनुस्मृतिः
मन्त्रिकोपनिषत्
महाभारतम्
महोपनिषत्
मुण्डकोपनिषत्
यास्कनिरुक्तम्
वसिष्ठस्मृतिः
वायुपुराणम्
वाराहपुराणम्
वाल्मीकिरामायणम्
विष्णुपुराणम्
व्यासस्मृतिः
श्वेताश्वतरोपनिषत्
साङ्ख्यकारिका
सुबालोपनिषत् ।

—o—

॥ श्रीः ॥

# ६. श्रीभाष्ये भागोऽस्मिन् उल्लिखितानि

## (ऋष्यादिनामानि ग्रन्थनामानि च)

महर्षिः कपिलः
श्वेतकेतुः
वृत्तिकारः
सूत्रकारः
आदित्यः
इन्द्रः
प्रजापतिः
सिद्धाः
गन्धर्वाः
पितरः
देवाः
देवर्षयः
ब्रह्मादयः
नारायणः
भगवान् पराशरः
हिरण्यगर्भादयः
प्रतर्दनः
ऋषिर्वामदेवः
मनुसूर्यादयः
कक्षीवान् ऋषिः
त्रिशीर्षा त्वाष्ट्रः
प्रह्लादः
तिर्यञ्चः
मनुष्याः
स्थावराः
विष्णुः
नचिकेताः
यमः
उपकोसलः
उद्दालकः
चतुर्मुखः
अथर्वा
शौनकः
अङ्गिराः
औपमन्यवादयः
अश्वपतिः केकयः
सत्ययज्ञादयः
भगवान्
आचार्यो जैमिनिः
आश्मरथ्य आचार्यः
बादरिः आचार्यः
नारदः
गार्गी
सत्यकामः
वाक्यकारः
बादरायणः
देवासुराः
विरोचनः

ऐतिह्यम्
मानवी स्मृतिः
पौराणिकी
मधुविद्या
ब्रह्मोपनिषत्
ऊर्णनाभिः
आख्यायिका
वाजसनेयकम्
कापिलतन्त्रम्
भगवद्गीता
नाचिकेताग्निविद्या
श्वेताश्वतरोपनिषत्
बृहदारण्यकम्
मैत्रेयीब्राह्मणम्
मानवं वचः
प्रधानकारणवादिनः
निर्विशेषवस्तुवादिनः
तैत्तिरीयाः
नैघण्टुकाः
त्रय्यन्तनिष्णाताः
छन्दोगाः
काण्वाः
माध्यन्दिनाः
वाजसनेयिनः
आथर्वणिकाः
वर्णाश्रमाः
ऋत्विजः
महर्षयः

मुनयः
वाजिनः
मन्त्रकृतः
काण्डकृतः
सूक्तकृतः
त्रैवर्णिकाः
प्रव्राजिनः
तान्त्रिकः
श्वेताश्वतराः
साङ्ख्यः
निरीश्वरसाङ्ख्यः
सेश्वरसाङ्ख्यः
निर्विशेषचिन्मात्रब्रह्मवादः
निर्विशेषवादः
निर्विशेषप्रकाशमात्रब्रह्मवादः
निर्विशेषवस्तुवादः
परोक्षं ज्ञानम्
अपरोक्षं ज्ञानम्
ब्रह्मसाक्षात्कारः
प्राणाग्निहोत्रम्
अण्डाधिपतिः
जीवव्यष्टिपुरुषः
समष्टिपुरुषः
युग्यशकटयोगः
चतुर्विधा सृष्टिः
चतुर्दशलोकः
नैमित्तिकः प्रलयः
प्राकृतः प्रलयः

| | |
|---|---|
| कल्पान्तरम् | गायत्र्याख्यं छन्दः |
| भवान्तरम् | चतुष्पदा गायत्री |
| जनपदाधिपत्यम् | विराट् |
| क्षत्रपतिः | गार्हपत्यः |
| नैसर्गिकलोकव्यवहारः | अन्वाहार्यपचनः |
| शासनातिवृत्तिः | आहवनीयः |
| पुरुषार्थसाधनप्रवृत्तिः | अग्निहोत्रम् |
| शरणागतिः | वेदिः |
| स्वस्थता | जागरितम् |
| निरङ्कुशैश्वर्यम् | स्वप्नस्थानम् |
| वेदवित्सम्प्रदायः | सुषुप्तिस्थानम् |
| आचार्योपसदनम् | अध्यक्षः |

—o—

॥ श्रीः ॥

# ७. प्रमाणस्थानबोधकसङ्केताक्षरसूचनी

(अग्नि.) अग्निरहस्यब्राह्मणम् [तिसृभिः सङ्ख्याभिः काण्ड-अध्याय-ब्राह्मणानां निर्देशः]
(आप. श्रौ. सू) आपस्तम्बीयं श्रौतसूत्रम् [तिसृभिः सङ्ख्याभिः प्रश्न-खण्ड-सूत्राणाम् निर्देशः]
(उ. रं. भा) उत्तमूर् रङ्गरामानुजभाष्यम्
(उ. सू) उणादिसूत्रम् [एकया सङ्ख्यया सूत्रस्य निर्देशः]
(ऋ. सं) ऋक्संहिता [तिसृभिः सङ्ख्याभिः मण्डल-सूक्त-मन्त्राणां निर्देशः]
(ऐत. उ) ऐतरेयोपनिषत् [द्वाभ्यां सङ्ख्याभ्यां खण्ड-मन्त्रयोः ,, ]
(कठ. उ) कठोपनिषत् [ ,, ,, वल्ली-मन्त्रयोः ,, ]
(का. वृ) काशिकावृत्तिः (पाणिनीयसूत्रस्य)
(केन. उ) केनोपनिषत् [द्वाभ्यां सङ्ख्याभ्यां खण्ड-मन्त्रयोः ,, ]
(कै. वृ) कैयटवृत्तिः (महाभाष्यव्याख्या)
(कौषी. उ) कौषीतक्युपनिषत् [द्वाभ्यां सङ्ख्याभ्यां अध्याय-मन्त्रयोः ,, ]
(गर्भोप) गर्भोपनिषत्
(गू. सं) गूढार्थसङ्ग्रहः
(गौ. ध. सू) गौतमधर्मसूत्रम्
(छां. उ) छान्दोग्योपनिषत् [तिसृभिः सङ्ख्याभिः अध्याय-खण्ड-मन्त्राणां निर्देशः]
(ता. म. ब्रा) ताण्ड्यमहाब्राह्मणम्
(तै. आर) तैत्तिरीयारण्यकम् [ ,, ,, प्रश्न-अनुवाक-मन्त्राणां ,, ]
(तै. आर. पु) तैत्तिरीयारण्यकेपुरुषसूक्तम् [ ,, ,, ,, ,, ,, ,, ]
(तै. उ. आन) तैत्तिरीयोपनिषत् आनन्दवल्ली [द्वाभ्यां सङ्ख्याभ्यां अनुवाक-मन्त्रयोः ,, ]
(तै उ. भृ) ,, भृगुवल्ली [ ,, ,, ,, ,, ]
(तै. उ. शी) ,, शीक्षावल्ली [ ,, ,, ,, ,, ]
(तै. का) तैत्तिरीयकाठकम् [ ,, ,, ,, ,, ]
(तै. ना. उ) तैत्तिरीयनारायणोपनिषत् [ ,, ,, ,, ,, ]
(तै. ब्रा) तैत्तिरीयब्राह्मणम् [चतसृभिः सङ्ख्याभिः अष्टक-प्रश्न-अनुवाक-मन्त्राणां ,, ]
(तै. सं) तैत्तिरीयसंहिता [ ,, ,, ,, ,, ]

(पा. धा) पाणिनिधातुपाठः [एकया सङ्ख्यया धातुनिर्देशः]

(पा. सू.) पाणिनिसूत्रम् (अष्टाध्यायी) [तिसृभिः सङ्ख्याभिः अध्याय-पाद-सूत्राणां निर्देशः]

(पू. मी. अ) पूर्वमीमांसाधिकरणम् [ ,, ,, ,, ,, अधिकरणानां ,, ]

(पू. मी. शा. भा) पूर्वमीमांसा शाबरभाष्यम्

(पू. मी. सू.) पूर्वमीमांसासूत्रम् [ ,, ,, अध्याय-पाद-सूत्राणां ,, ]

(प्रश्न. उ) प्रश्नोपनिषत् [द्वाभ्यां सङ्ख्याभ्यां प्रश्न-मन्त्रयोः ,, ]

(बृ. उ) बृहदारण्यकोपनिषत् [तिसृभिः सङ्ख्याभिः अध्याय-ब्राह्मण-मन्त्राणां ,, ]

(बृ. उ. मा. पा) बृहदारण्यकोपनिषत्
माध्यन्दिनपाठः [ ,, ,, ,, ,, ,, ,, ]

(बो. वृ) बोधायनवृत्तिः

(ब्र. नं. वा) ब्रह्मनन्दिवार्तिकम्

(ब्र. प. मा) ब्रह्मसूत्रार्थपद्यमालिका

(ब्र. सू.) ब्रह्मसूत्रम् [तिसृभिः सङ्ख्याभिः अध्याय-पाद-सूत्राणां निर्देशः]

(भ. गी) भगवद्गीता [द्वाभ्यां सङ्ख्याभ्यां अध्याय-श्लोकयोः ,, ]

(भा. द) भाष्यार्थदर्पणः (श्रीभाष्यव्याख्या)

(भा. प्र) भावप्रकाशिका (श्रुतप्रकाशिकाव्याख्या)

(म. स्मृ) मनुस्मृतिः [ ,, ,, ,, ,, ,, ]

(मन्त्रि. उ) मन्त्रिकोपनिषत् [ ,, ,, खण्ड-मन्त्रयोः ,, ]

(म. भा. उ) महाभारतम् उद्योगपर्व [ ,, ,, अध्याय-श्लोकयोः ,, ]

(म. भा. शा) ,, शान्तिपर्व [ ,, ,, ,, ,, ,, ]

(मुण्ड. उ) मुण्डकोपनिषत् [तिसृभिः सङ्ख्याभिः मुण्डक-खण्ड-मन्त्राणां ,, ]

(या. नि) यास्कनिरुक्तम्

(रघु) रघुवंशमहाकाव्यम् [द्वाभ्यां सङ्ख्याभ्यां अध्याय-श्लोकयोः ,, ]

(व. स्मृ) वसिष्ठस्मृतिः

(वायु. पु) वायुपुराणम्

(वरा. पु) वराहपुराणम्

(वा. रा) वाल्मीकिरामायणम् [ ,, ,, सर्ग-श्लोकयोः ,, ]

(वि. पु) विष्णुपुराणम् [तिसृभिः सङ्ख्याभिः अंश-अध्याय-श्लोकानां ,, ]

(वृ. र) वृत्तरत्नाकरः

(व्या. स्मृ) व्यासस्मृतिः

(श. ब्रा) शतपथब्राह्मणम् [तिसृभिः सङ्ख्याभिः अंश-अध्याय-श्लोकानां निर्देशः]

(श्रु. दी) श्रुतप्रदीपिका (श्रीभाष्यव्याख्या)

(श्रु. प्र) श्रुतप्रकाशिका ( ,, )

(श्वे. उ) श्वेताश्वतरोपनिषत् [द्वाभ्यां सङ्ख्याभ्यां अध्याय-मन्त्रयोः निर्देशः]

(सां. का) साङ्ख्यकारिका [एकया सङ्ख्यया कारिकासङ्ख्यानिर्देशः]

(सुबा. उ) सुबालोपनिषत् [द्वाभ्यां सङ्ख्याभ्यां खण्ड-मन्त्रयोः निर्देशः]

—o—

# एतत्संस्करणोपयुक्तप्रमाणसंख्याविवरणी

अस्मिन् ईक्षत्यधिकरणमारभ्य प्रथमाध्यायान्तं सम्पादिते द्वितीये संस्करणे प्रमाणतया उदाहृतानां श्रुति-स्मृतीतिहासपुराणानां स्थानोपलब्धिसौकर्याय स्वीकृते सङ्ख्यानिर्देशे उपयुक्तानि पुस्तकानि अधोनिर्दिष्टया रीत्या ज्ञेयानि—

१. केन-कठ-प्रश्न-मुण्डक-ऐतरेय-छान्दोग्येषु, (तथा) श्वेताश्वतर-सौबाल-कौषीतकी-मन्त्रिका-महोपनिषत्सु च, श्रीमद्भिः तमिलुनाडुप्रान्तीयैः शिरोमणि-तर्कार्ण-वादिबिरुदभूषितैः उत्तमूर् श्री.उ.वे. वीरराघवाचार्यस्वामिमहोदयैः परिष्कृत्य सम्पादितेषु, तैरेव मुद्रापितेषु च सभाष्येषु पुस्तकेषु उपात्ता एव सङ्ख्याः प्रमाणतया स्वीकृताः।

२. बृहदारण्यकोपनिषदि तैरेव श्री वीरराघवाचार्यैः परिष्कृत्य सम्पादिते तिरुमलै तिरुपतिदेवस्थानतः मुद्रापिते सभाष्ये पुस्तके उपात्ता एव सङ्ख्याः प्रमाणतया स्वीकृताः।

३. तैत्तिरीयसम्बन्धिनीषु शिक्षा-आनन्दवल्ली-भृगुवल्ली-नारायणोपनिषत्सु च काञ्ची-पुर्यां सुदर्शनमुद्रणालये श्री.उ.वे.प्र. अनन्ताचार्यस्वामिमहोदयैः शास्त्रमुक्तावल्यां मुद्रापितं कूरनारायणीयव्याख्यायुतं तैत्तिरीयोपनिषत्पुस्तकं स्वीकृतम्।

४. तैत्तिरीयारण्यके—भट्टभास्करभाष्येण सह महीशूरनगरप्राच्यविद्यासंशोधनालयेन (ओरियण्टल् लैब्रेरि) मुद्रापितं पुस्तकं स्वीकृतम् ।

५. श्रीविष्णुपुराणे—स्वप्रकाशिका-श्रीविष्णुचित्तीयव्याख्यानाभ्यां तेलुगुलिप्यां मुद्रितं पुस्तकं स्वीकृतम् ।

—o—

## ८. विद्याः शरीरकीयानि तत्तदधिकरणानि च

(द्वितीयसम्पुटगतानि)

| | | | | | | |
|---|---|---|---|---|---|---|
| 1 | अक्षरविद्या | मुण्ड. 1, 2 | अदृश्यत्वादिगुणकाधिकरणम् | 1 | 2 | 5 |
| 2 | अक्षरपरब्रह्मविद्या | ,, ,, | द्युभ्वाद्यधिकरणम् | 1 | 3 | 1 |
| 3 | अक्षिविद्या | छां. 1–7–5 | अन्तरधिकरणम् | 1 | 1 | 7 |
| 4 | अङ्गुष्ठप्रमितविद्या | कठ. 4–12, 13<br>,, 6–17 | प्रमिताधिकरणम् | 1 | 3 | 6 |
| 5 | अजाशरीरकब्रह्मविद्या | श्वे. 4–5<br>तै.ना. 10–5 | चमसाधिकरणम् | 1 | 4 | 2 |
| 6 | अन्तरादित्यविद्या | छां. 1–6–6,7,8 | अन्तरधिकरणम् | 1 | 1 | 7 |
| 7 | अन्तर्यामिविद्या | बृ. 5–7–1....27 | अन्तर्याम्यधिकरणम् | 1 | 2 | 4 |
| 8 | अव्याकृतब्रह्मविद्या | बृ. 3–4–7....9 | कारणत्वाधिकरणम् | 1 | 4 | 4 |
| 9 | आकाशविद्या | छां. 1–9–1....4 | आकाशाधिकरणम् | 1 | 1 | 8 |
| 10 | आनन्दमयविद्या | तै. आन. | आनन्दमयाधिकरणम् | 1 | 1 | 6 |
| 11 | उपकोसलविद्या | छां. 4–10....15 | अन्तराधिकरणम् | 1 | 2 | 3 |
| 12 | कौक्षेयज्योतिर्विद्या | छां. 3–13–7, 8 | ज्योतिरधिकरणम् | 1 | 1 | 10 |
| 13 | गायत्रीविद्या | छां. 3–12–1....5 | ,, | 1 | 1 | 10 |
| 14 | गार्ग्यक्षरविद्या | बृ. 5–8 | अक्षराधिकरणम् | 1 | 3 | 3 |
| 15 | ज्योतिषां ज्योतिर्विद्या | बृ. 6–4–16,17,18 | मध्वधिकरणम् | 1 | 3 | 8 |
| 16 | त्रिमात्रप्रणवपुरुषविद्या | प्रश्न. 5 | ईक्षतिकर्माधिकरणम् | 1 | 3 | 4 |
| 17 | दहरविद्या | छां. 8–1....15 | दहराधिकरणम् | 1 | 3 | 5 |
| | | | अत्त्रधिकरणम् | 1 | 2 | 2 |
| 18 | नाचिकेतविद्या | कठ. सम्पूर्णा | प्रमिताधिकरणम् | 1 | 3 | 6 |
| | | | आनुमानिकाधिकरणम् | 1 | 4 | 1 |

| | | | | | | |
|---|---|---|---|---|---|---|
| 19 | परञ्ज्योतिर्विद्या | छां. 3–13–7,8 | ज्योतिरधिकरणम् | 1 | 1 | 10 |
| 20 | प्रतर्दनविद्या | कौषी. 3–1....67 | इन्द्रप्राणाधिकरणम् | 1 | 1 | 11 |
| 21 | प्राणविद्या | छां. 1–10, 11 | प्राणाधिकरणम् | 1 | 1 | 9 |
| 22 | बालाकिविद्या | कौषी. 4–1....45 | जगद्वाचित्वाधिकरणम् | 1 | 4 | 5 |
| 23 | भूमविद्या | छां. 7 सम्पूर्णा | भूमाधिकरणम् | 1 | 3 | 2 |
| 24 | मधुविद्या | छां. 3–1....10 | मध्वधिकरणम् | 1 | 3 | 8 |
| 25 | मैत्रेयीविद्या | बृ. 6–5–1...15 | वाक्यान्वयाधिकरणम् | 1 | 4 | 6 |
| 26 | वैश्वानरविद्या | छां. 5–11—24 | वैश्वानराधिकरणम् | 1 | 2 | 6 |
| 27 | शाण्डिल्यविद्या | छां. 3–14–1....4<br>अग्नि. 10–10–6 | सर्वत्रप्रसिद्ध्यधिकरणम् | 1 | 2 | 1 |
| 28 | संवर्गविद्या | छां. 4–1,2,3 | अपशूद्राधिकरणम् | 1 | 3 | 9 |
| 29 | सद्विद्या | छां. 6 सम्पूर्णा | ईक्षत्यधिकरणम् | 1 | 1 | 5 |
| | ,, | ,, ,, ,, | प्रकृत्यधिकरणम् | 1 | 4 | 7 |

—o—

## १. शारीरकाधिकरणानि, तत्र विचारिताः विद्याः,

| क्र. सं. | अधिकरणानि | स्थानानि | विद्यानामानि | विद्यासम्बन्धिश्रुतिभागाः |
|---|---|---|---|---|
| 1 | ईक्षत्यधिकरणम् | 1–1–5 | सद्विद्या | 'श्वेतकेतुर्हा .... विजज्ञाविति' |
| 2 | आनन्दमयाधिकरणम् | 1–1–6 | आनन्दमयविद्या | 'ब्रह्मविदाप्नोति .... इत्युपनिषत्' |
| 3 | अन्तरधिकरणम् | 1–1–7 | अन्तरादित्यविद्या, | 'अथ य एषो .... दैवतम्' |
| | | | अक्षिविद्या च | 'अथ य एषोऽक्षिणि .... तन्नाम' |
| 4 | आकाशाधिकरणम् | 1–1–8 | आकाशविद्या | 'अस्य लोकस्य .... लोक इति' |
| 5 | प्राणाधिकरणम् | 1–1–9 | प्राणविद्या | 'मटचीहतेषु .... तथोक्तस्य मयेति' |
| 6 | ज्योतिरधिकरणम् | 1–1–10 | कौक्षेयज्योतिर्विद्या (परंज्योतिर्विद्या) | 'अथ यदतः .... य एवं वेद' |
| | | | गायत्रीविद्या च | 'गायत्री वा .... ऋचाऽभ्यनूक्तम्' |
| 7 | इन्द्रप्राणाधिकरणम् | 1–1–11 | प्रतर्दनविद्या | 'प्रतर्दनो हवै .... आत्मेति विद्यात्' |
| 8 | सर्वत्रप्रसिद्ध्यधिकरणम् | 1–2–1 | शाण्डिल्यविद्या | 'सर्वं खल्विदं .... शाण्डिल्यः' |
| | | | | 'सत्यं ब्रह्म .... एवमेतदिति' |
| | | | | 'मनोमयोऽयं .... यदिदं किञ्च' |
| 9 | अत्त्रधिकरणम् | 1–2–2 | नाचिकेतविद्या | 'उशन् हवै .... त्वमेव' |
| 10 | अन्तराधिकरणम् | 1–2–3 | उपकोसलविद्या | 'उपकोसलो ह वै .... नावर्तन्ते' |
| 11 | अन्तर्याम्यधिकरणम् | 1–2–4 | अन्तर्यामिविद्या | 'अथ हैनं .... रुपरराम' |
| 12 | अदृश्यत्वादिगुणकाधिकरणम् | 1–2–5 | अक्षरविद्या | 'ब्रह्मा देवानां .... वरिष्ठम्' |
| 13 | वैश्वानराधिकरणम् | 1–2–6 | वैश्वानरविद्या | 'प्राचीनशाल .... मुपासत इति' |
| 14 | द्युभ्वाद्यधिकरणम् | 1–3–1 | अक्षरपरब्रह्मविद्या | 'ब्रह्मा देवानां .... वरिष्ठम्' |
| 15 | भूमाधिकरणम् | 1–3–2 | भूमविद्या | 'अधीहि .... स्कन्द इत्याचक्षते' |
| 16 | अक्षराधिकरणम् | 1–3–3 | गार्ग्यक्षरविद्या | 'अथ वाचक्नव्युवाच .... व्युपरराम' |
| 17 | ईक्षतिकर्माधिकरणम् | 1–3–4 | त्रिमात्रप्रणवपुरुषविद्या | 'अथ हैनं .... परं चेति' |

# तत्स्थानानि च सविषयवाक्यखण्डानि

| स्थानानि | विषयवाक्यानि | स्थानानि |
|---|---|---|
| छां. 6 सम्पूर्णा | 'सदेव सोम्येदमग्र....तत्तेजोऽसृजत' | छां. 6-2-1 |
| तै. उ. आनन्दवल्ली | 'स वा एष....आनन्दमयः' | तै. आन. 1 |
| छां. 1-6-6, 7, 8 | 'य एषो....इत्यधिदैवतम्' | छां. 1-6-6, 7, 8 |
| छां. 1-7-5 | 'अथाध्यात्मम्....यन्नाम तन्नाम' | छां 1-7-5 |
| छां. 1-9-1....4 | 'अस्य लोकस्य....परायणम्' | छां. 1-9-1 |
| छां. 1-10, 11 | 'कतमा सा....व्यपतिष्यत्' | छां. 1-11-4, 5 |
| छां. 3-13-7, 8 | 'अथ यदतः....पुरुषो ज्योतिः' | छां. 3-13-7 |
| | | |
| छां. 3-12-1....6 | 'गायत्री वा इदं सर्वम्' | छां. 3-12-1 |
| कौषी. 3-1....67 | 'स होवाच....मित्युपास्व' | कौषी. 3-14 |
| छां. 3-14-1....4 | 'अथ खलु क्रतुमयः....भारूपः' | छां. 3-14-1, 2 |
| अग्निर. 10-10-6 | | |
| बृ. 7-6 | | |
| कठ. सम्पूर्णा | 'यस्य ब्रह्म च....यत्र सः' | कठ. 2-25 |
| छां. 4-10....15 | य एषोऽक्षिणि....एतद्ब्रह्म' | छां. 4-15-1 |
| बृ. 5-7-1....27 | 'यः पृथिव्यां....म्यमृतः' | बृ. 5-7-7 |
| मुण्ड. 1, 2 | 'अथ परा यया....धीराः' | मुण्ड. 1-1-5, 6 |
| | | |
| छां. 5-11....24 | 'आत्मानमेवेमं....वैश्वानरमुपास्ते' | छां. 5-11-6 तः 5-18-1 |
| मुण्ड. 1, 2 | 'यस्मिन् द्यौः....सेतुः' | मुण्ड. 2-2-5 |
| छां. 7 सम्पूर्णा | 'यत्र नाऽन्यत्....स भूमा' | छां. 7-24-1 |
| बृ. 5-8 | 'स होवाचैत....मच्छायम्' इत्यादि | बृ. 5-8-7 |
| प्रश्न. 5 | 'यः पुनरेतं....पुरुषमीक्षते' | प्रश्न. 5-5 |

| क्र. सं. | अधिकरणानि | स्थानानि | विद्यानामानि | विद्यासम्बन्धिश्रुतिभागाः |
|---|---|---|---|---|
| 18 | दहराधिकरणम् | 1-3-5 | दहरविद्या | 'अथ यदिदमस्मिन्....मयि सन्तु' 'दहं विपापं....तदुपासितव्यम्' 'तस्याः शिखाया....व्यवस्थितः' |
| 19 | प्रमिताधिकरणम् | 1-3-6 | अङ्गुष्ठप्रमित-विद्या | 'अङ्गुष्ठमात्रः....एतद्वैतत्'* 'अङ्गुष्ठमात्रः....शुक्रममृतमिति'* 'अङ्गुष्ठमात्रो....समन्वितो यः' |
| 20 | देवताधिकरणम् | 1-3-7 | विद्यासामान्य-सम्बन्धि | |
| 21 | मध्वधिकरणम् | 1-3-8 | मधुविद्या, ज्योतिषां ज्योति-र्विद्या वा | 'असौ....ततो भूय इति' 'यस्मादर्वाक्....पुराणमग्र्यम्' |
| 22 | अपशूद्राधिकरणम् | 1-3-9 | संवर्गविद्या | 'जानश्रुतिर्ह....य एवं वेद' |
| 23 | अर्थान्तरत्वादिव्यप-देशाधिकरणम् | 1-3-10 | दहरविद्याशेषः | |
| 24 | आनुमानिकाधिकरणम् | 1-4-1 | नाचिकेतविद्या | 'उशन् ह वै....त्वमेव' |
| 25 | चमसाधिकरणम् | 1-4-2 | अजाशरीरकब्रह्म-विद्या | 'अजामेकां....मजोऽन्यः' 'अजामेकां....मजोऽन्यः' |
| 26 | सङ्ख्योपसङ्ग्रहाधिकरणम् | 1-4-3 | ज्योतिषां ज्योतिर्विद्या | 'यस्मादर्वाक्....पुराणमग्र्यम्' |
| 27 | कारणत्वाधिकरणम् | 1-4-4 | अव्याकृतब्रह्मविद्या | 'तद्धेदं....सर्वमभवदिति' |
| 28 | जगद्वाचित्वाधिकरणम् | 1-4-5 | बालाकिविद्या | 'गार्ग्यो ह वै....य एवं वेद' |
| 29 | वाक्यान्वयाधिकरणम् | 1-4-6 | मैत्रेयीविद्या | 'अथ ह याज्ञवल्क्यस्य....विजहार' |
| 30 | प्रकृत्यधिकरणम् | 1-4-7 | सद्विद्या | 'श्वेतकेतुः....विजज्ञाविति' |
| 31 | सर्वव्याख्यानाधिकरणम् | 1-4-8 | सर्वविद्यासम्बन्धि | |

* केचन दहरविद्यासम्बन्धि इत्यपि वदन्ति ।

| स्थानानि | विषयवाक्यानि | स्थानानि |
|---|---|---|
| छां. 8-1....15 | 'अथ यदिदं.... विजिज्ञासितव्यम्' | छां. 8-1-1 |
| तै. ना. 10-23 | | |
| तै. ना. 11-11 | | |
| कठ. 4-12, 13 | 'अङ्गुष्ठमात्रः.... एतद्वैतत्' | कठ. 4-12, 13 |
| कठ. 6-17 | 'अङ्गुष्ठमात्रः.... ममृतम्' | कठ. 6-17 |
| श्वे. 5-8 | | |
| | 'तद्धोभये देवासुरा अनुबुबुधिरे' | छां. 8-7-2 |
| छां. 3-1....10 | 'असौ वा.... तृप्यति' | छां. 3-1-1 |
| बृ. 6-4-16 ,17, 18 | | |
| छां. 4-1, 2, 3 | 'आजहारेमाः.... आलापयिष्यथाः' | छां. 4-2-5 |
| | 'आकाशो ह वै.... तदमृतं स आत्मा' | छां. 8-14-1 |
| कठ. सम्पूर्णा | 'इन्द्रियेभ्यः.... परा गतिः' | कठ. 3-10-1 |
| श्वे. 4-5 | 'अजामेकां.... मजोऽन्यः' | श्वे. 4-5 |
| तै. ना. 10-5 | | |
| बृ. उ. 6-4-16,17,18 | 'यस्मिन् पञ्च.... ऽमृतम्' | बृ. 6-4-17 |
| बृ. 3-4-7, 8, 9 | 'सदेव सोम्येदम्' इत्यादीनि कारणवाक्यानि । | छां. 6-2-1 |
| कौषी. 4-1....45 | 'ब्रह्म ते.... स वै वेदितव्यः' | कौषी. 4-4....26 |
| बृ. 6-5-1....15 | 'न वा अरे.... सर्वं विदितम्' | बृ. 6-5-6 |
| छां. 6 सपूर्णा | 'सोऽकामयत.... मसृजत' | तै. आन. 6-2 |
| | 'मायान्तु.... महेश्वरम्' सर्वाणि वेदान्तवाक्यानि । | श्वे. 4-10 |

# १०. द्वितीयसम्पुटगतानां सूत्राणां अकाराद्यनुक्रमेण सूचनी

—o—

## द्वितीयसम्पुटगतानाम् अधिकरणानाम् सूचनी

—o—

## शारीरकन्यायकलापसङ्ग्रहे

—o—

## तत्त्वसारे

—o—

## अधिकरणसारावल्याम्

—o—

## नयसङ्गतिमालिकायाम्

—o—

## शोधनिका

| शुद्धम् | पु.सं. | पं.सं. | शुद्धम् | पु.सं. | पं.सं. |
|---|---|---|---|---|---|
| तस्माद्वा एतस्मादात्मन | 18 | 7 | प्रह्लादः | 120 | 25 |
| जगदेक | 20 | 15 | मुखान् | 122 | 1 |
| सामर्थ्यगुण | 22 | 1 | शारीरक | 123 | 14 |
| विशेषैक | ,, | 6 | चायृ | 145 | 19 |
| सम्बन्धि | 42 | 10 | पुरुषार्थ | 157 | 6 |
| हृदि | 43 | 24 | विचिकित्सा | ,, | 11 |
| नवगतार्थान्तरकल्पनात् | 44 | 24 | नीकानन्त | 158 | 6 |
| तत्र तेषु | ,, | ,, | फलत्वेन | 166 | 2 |
| पदेनैव विशेषेण | 50 | 1 | उत किम् ? | 184 | 12 |
| शुद्धयशुद्धुभ | 54 | 6 | चेतनानधि | 185 | 23 |
| अनुग्राह्यश्च | ,, | 19 | वैश्वानरः | 200 | 24 |
| शुद्धयशुद्ध्युभ | ,, | 20 | हेत्वोरुभयोः | 204 | 18 |
| देवादीति | 55 | 16 | अङ्गारानपोह्य | 210 | 10 |
| यस्याऽऽत्मा | 57 | 6 | चायमिति | 225 | 19 |
| योऽन्तरे | ,, | 11 | द्रष्ट्रादि | 245 | 11 |
| ऽऽनन्दस्य | 62 | 24 | पृथिव्या | 255 | 17 |
| वर्णैरेव | 69 | 20 | विन्दन्त्यनृतेन | 261 | 9 |
| उपासक | 70 | 23 | औष्ण्यं | 264 | 21 |
| विपश्चित्त्वम् | 72 | 20 | कथनार्थं | 271 | 25 |
| आनुमानिक | 75 | 4 | अङ्गुष्ठ | 277 | 9 |
| निर्दिश्यते इति सिद्धम् । | 100 | 7 | परत्वाभ्यां | 283 | 11 |
| आनन्दामृत | 112 | 24 | सामर्थ्यात् | 284 | 20 |
| वज्रिणः | 119 | 24 | च्छेदपादः | 327 | 2 |
| तद्व्यावृत्त्यर्थम् | 120 | 19 | प्येकेषा | ,, | 9 |

